**ब्रह्मानन्दाः (A.D. 1700)**

ब्रह्मानन्दसरस्वत्यः नव्यन्यायशैल्या वेदान्तार्थपरिष्करे अतीव चतुराः लघुचन्द्रिका गुरुचन्द्रिकेति अद्वैतसिद्धिव्याख्याद्वयं व्यलिखन् । न्यायरत्नावलीति सिद्धान्तबिन्दौ टीकां अद्वैतसिद्धान्तविद्योतनमिति स्वतन्त्रप्रकरणं सूत्रमुक्तावलीति प्रसिद्धां सूत्रवृत्तिं च निर्मापयामासुः । वेदान्तप्रक्रियापरिज्ञाने अमूल्यमुपकारं सन्तनोति एतेषां ग्रन्थनिकरः । चन्द्रिका रामाचार्यकृताद्वैतसिद्धिदूषणनिरासपरा, स्वमतव्युत्पादनपरा च । इतः परं तथा प्रसिद्धानि अद्वैतदूषणानि नाभूवन् । सर्वेपि इतरोद्भाविता दोषाः एतैः दूरीकृता एव । परं तु शतवर्षेभ्यः पूर्वं मैसूर्प्रान्ते दक्षिणकलावैष्णवकुले प्रसूताः अनन्ताचार्याः चन्द्रिकायाः किञ्चिद्भागस्य खण्डनपरं ग्रन्थं व्यदधुः । तस्यापि समाधानं पूज्यपादैः प्रातः स्मरणीयैः मन्नार्गुडिराजुशास्त्रिभिः मैसूर् लक्ष्मीनरसिंहशास्त्रिभिश्च स्वीये न्यायेन्दुशेखरे दत्तमेव ।

इत्येते अद्वैतग्रन्थाकर्तृषु प्रसिद्धाः अनुक्रान्ताः साधारणास्तु बहवः अवकाशाभावान्नानुक्रम्यन्ते ।

## आभोगः

इदानीं मुद्रणार्थं स्वीकृतो ग्रन्थः कल्पतर्वाभोगो नाम नारायणेन्द्रसरस्वतीनां अन्तेवासिभिः कोण्डुभट्टात्मजैः लक्ष्मीनृसिंहशास्त्रिभिः प्रणीतः। आभोगो नाम विस्तारः । एते च आन्ध्राः तत्रापि गोदावरीतीरवासिनः इति प्रतीयते यतः पुण्यक्षेत्रवर्णनावसरे तृतीयाध्यायचतुर्थपादद्वितीयाधिकरणे गोदावरी परसरवर्तिपुण्यभूमिं विशेषतो वर्णयन्ति । यथा एतैरेव ब्रह्मविद्विशेषवर्णने शास्त्रान्त्याधिकरणे स्वगुरव एवानुकीर्त्यन्ते तथा देशोऽपि स्वीय एव स्यादिति तर्कयामः। एते च कल्पतरुं परिमलानुसारेण पठित्वा स्वयं विशेषतः परिशील्येमां टीकां कर्तुं प्रारभन्त इति ग्रन्थादौ एतैरेवाभ्यधायि ।

परिमलाख्यव्याख्यानसत्वे किं व्याख्यानान्तरनिर्माणक्लेशेन ? इति चेत् । अत्र ब्रूमः ।

अयमभिपायः ग्रन्थकर्तुः ।

परिमलं क्लिष्टं मीमांसाप्रक्रियाबहुलं च वर्तते तत्सर्वं परित्यज्य लघुभूता व्याख्या निर्मातव्येत्येकोऽभिप्रायः । अपि च परिमलं क्वचित्क्वचिदेव कल्पतरोः

उपलभ्यते अस्माभिस्तु कल्पतरुः समग्रतया व्याख्येयः भामती च कल्पतरुत्यक्त-स्थलेषु व्याख्यातव्या किं बहुना भाष्यमपि तथाभूतप्रदेशेषु व्याख्येयमिति द्वितीयः। किं च परिमलं खण्डनीयं सति संभवे इति तृतीयः। अपि च यत्र यत्र भामती-कल्पतरुकारौ भाष्य विरोधेन जल्पन्ति तत्र परिमलकाराः तौ खण्डयित्वा भाष्य-मतमेव प्रतिष्ठापयन्ति। सर्वात्मना भामतीकारान् नानुरुन्धते मयातु भामतीकल्प-तर्वभिप्रायः प्रतिष्ठापनीय इत्यन्य आशयः।

## परिमलकाराः आभोगकाराश्च

परिमलकाराः मीमांसाप्रभृतिषु सकलशास्त्रेषु स्वतन्त्रप्रज्ञाः। यानधि-कृत्य मीमांसाग्रन्थकारः खण्डदेवोपि 'तदुक्तं मीमांसकमूर्धन्येन विधिरसायन-कृता' इति मीमांसाकौस्तुभे ब्रुवन्तः तेषां अनितरसाधारणं पाण्डित्यमङ्गी-कुर्वन्ति। अतिसंक्षिप्तकल्पतरुगूढार्थप्रकाशने एतेषां व्याख्यैव गतिः। परं तु एतेषां भगवत्पादेषु अचञ्चला भक्तिः भगवत्पादवचनानां वेदतुल्यत्वेन ग्राह्यत्व-मिति श्रद्धा च दरीदृश्यते। अत एव 'नहि प्रामादिकं संपातायातं पाठं भगवत्पादा लिखन्ति' इति स्वभक्तिं दर्शयन्ति न्यायरक्षामणौ वैश्वानराधिकरणे। अतः भाष्यदूषणं न सहन्ते अपि वाचस्पतिना। अत एव तदिन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् (२-४-१७) इत्यधिकरणे यदा भामतीकारैः वृत्तिं-कृद्व्याख्यानं युक्तमिति प्रशस्य भाष्यकृद्व्याख्यानं अन्यत्र नेयमिति अभिमन्यते तदा एते वृत्तिकृद्व्याख्यां दूषयित्वा भाष्यकृद्व्याख्यानमेव साधीयः इति साटोपं स्थापयन्ति। यत्र तु अशुद्धमिति चेन्न शब्दादित्यधिकरणे मीमांसकाभिमतं न हिंस्यादिति निषेधस्य पुरुषार्थहिंसापरत्वमुल्लङ्घ्य क्रत्वर्थहिंसायाः उत्सर्गा-पवादन्यायविषयत्वं भाष्यकारैरुच्यते तत्र परिमलकारैः मीमांसकमतमेव पृष्ठतः कृत्वा भाष्याभिमतः उत्सर्गापवादन्यायः अत्र साध्यते। एवं वेधाद्यर्थभेदादित्यत्र बृहस्पतिसवस्य वाजपेयाङ्गस्य कर्मान्तरत्वमिति मीमांसकाभिप्राये स्थिते भाष्य-कारैः मीमांसामुद्रामुल्लङ्घ्य वाजपेयसन्निधिपठितस्य बृहस्पतिसवस्य प्रसिद्ध-बृहस्पतिसवाभिन्नत्वमुक्तम्। तत्रापि परिमलकारैः भाष्यसमर्थनमेव कृतम्, मीमांसकव्यवस्था च दूरीकृता। कल्पतरुकारास्तु भामतीमेवानुरुन्धन्ति।

आभोगकारास्तु कल्पतरुवाक्ये बद्धश्रद्धाः परिमलकारैः स्थापितं पक्षं निरस्य कल्पतरुं भामतीं च उपोद्बलयन्ति न भाष्यम्। भामतीनिबन्धः कल्पत-

रूक्तरीत्या न केवलं व्याख्यारूपः अपि तु वार्तिकम् यत्र दुरुक्तचिन्ता अनुमन्यते इति मन्यन्ते । किञ्च स्वातन्त्र्येणापि बहुषु स्थलेषु परिमलं खण्डयन्ति । चतुर्थाध्याये प्रथमपादीयप्रथमाधिकरणे आभोगकाराः स्वकृतं परिमलखण्डनं युक्तं न वा इति पण्डितैः परिमले प्राचीनत्वकृतं पक्षपातं परित्यज्य विचारणीयम् इति पण्डितान् प्रार्थयन्ते । सत्यं पण्डितैरेव सकलशास्त्रनिष्णातैः अयं निर्णयः कर्तव्यः । विषयस्य दुरूहत्वात् । परंतु केषु चित्स्थलेषु परिमलखण्डनमपरिमलमिव भासत एव । तदप्यस्माभिः टिप्पणेषु योजितम् ।

इदमपूर्वं व्याख्यानं मुद्रापणेन प्रकाश्य लोकोपकारिणां राजकीयप्राच्यकोशाध्यक्षाणां कृत्स्नं पण्डितकुलमधमर्णमिति तु निर्विवादमेव । अस्य ग्रन्थस्य मुद्रापणे हि भामतीकल्पतर्वोः गभीरोऽभिप्रायः सर्वेषां पुरतो निक्षिप्तः न केवलं, अपि तु भामतीकल्पतर्वोः शुद्ध पाठः अयं, अशुत पाठः अयं, इत्यपि सुखेन ज्ञातुं शक्यते । एवं वेदान्तार्थावबुभुत्सूनां उपकाराय श्रीरामशास्त्रिभिः रचिता तत्तत्पुटाधोभागे निक्षिप्ता टिप्पणी तथैवोपकुर्यादिति मन्यामहे ।

अत्र च लिखितपुस्तककोशाध्यक्षाः श्रीचन्द्रशेखरदीक्षिताः विशेषतः धन्यवादमर्हन्ति । यैः किल महता उत्साहेन अपूर्वाः अपेक्षिताश्च संस्कृतग्रन्थाः भाषाग्रन्थाश्च तत्तच्छास्त्रेषु निष्णातानां पण्डितानां सहायेन मुद्राप्य प्रकाश्यन्ते । तत्तत्स्थलेषु गृहेषु वा मठेषु वा स्थितान् ताळपत्रमयान् कोशानानीय प्रतिकृतिं कारयित्वा लोकोपकाराय शालायां च स्थाप्यते । मुद्रापणं च समीचीनया रीत्या अल्पेनैव कालेन समाप्यते ।

विशेषतश्च अस्मिन् आभोगग्रन्थ संस्करणविषये अवकाशप्रदानेन कृतं तदीयमुपकारं स्मृत्वा तेभ्यः विशेषतः धन्यवादानर्पयामः ।

सुब्रह्मण्यशास्त्री

# अधिकरणसूचिका

## अधिकरणनामानि

### प्रथमाध्याये प्रथमः पादः


| अधि. संख्या | | पृष्ठम् |
|---|---|---|
| १ | जिज्ञासाधिकरणम् | ५९ |
| २ | जन्माद्यधिकरणम् | १०६ |
| ३ | शास्त्रयोनित्वाधिकरणम् | १२७ |
| ४ | समन्वयाधिकरणम् | १३५ |
| ५ | ईक्षत्यधिकरणम् | २२० |
| ६ | आनन्दमयाधिकरणम् | २३४ |
| ७ | अन्तरधिकरणम् | २४३ |
| ८ | आकाशाधिकरणम् | २४७ |
| ९ | प्राणाधिकरणम् | २५१ |
| १० | ज्योतिरधिकरणम् | २५४ |
| ११ | प्रतर्दनाधिकरणम् | २६०' |

### प्रथमाध्याये द्वितीयः पादः

| अधि. संख्या | | पृष्ठम् |
|---|---|---|
| १२ | सर्वत्रप्रसिद्धाधिकरणम् | २६८ |
| १३ | अत्त्रधिकरणम् | २७६ |
| १४ | गुहाधिकरणम् | २८० |
| १५ | अन्तराधिकरणम् | २८३ |
| १६ | अन्तर्याम्यधिकरणम् | २८७ |
| १७ | अदृश्यत्वाधिकरणम् | २९० |
| १८ | वैश्वानराधिकरणम् | २९५ |

### प्रथमाध्याये तृतीयः पादः

| अधि. संख्या | | पृष्ठम् |
|---|---|---|
| १९ | द्युभ्वाद्यधिकरणम् | २९९ |
| २० | भूमाधिकरणम् | ३०६ |
| २१ | अक्षराधिकरणम् | ३१० |
| २२ | ईक्षतिकर्माधिकरणम् | ३१३ |
| २३ | दहराधिकरणम् | ३१५ |
| २४ | अनुकृत्यधिकरणम् | ३२७ |
| २५ | प्रमिताधिकरणम् | ३३० |
| २६ | देवताधिकरणम् | ३३१ |
| २७ | अपशूद्राधिकरणम् | ३५२ |
| २८ | कम्पनाधिकरणम् | ३५७ |
| २९ | ज्योतिर्दर्शनाधिकरणम् | ३५९ |
| ३० | आकाशार्थान्तरत्वाधिकरणम् | ३६३ |
| ३१ | सुषुप्त्युत्क्रान्त्यधिकरणम् | ३६४ |

### प्रथमाध्याये चतुर्थः पादः

| अधि. संख्या | | पृष्ठम् |
|---|---|---|
| ३२ | आनुमानिकाधिकरणम् | ३६६ |
| ३३ | चमसाधिकरणम् | ३७५ |
| ३४ | न संख्योपसंग्रहाधिकरणम् | ३७७ |

| अधि. संख्या | | पृष्ठम् |
|---|---|---|
| ३५ | कारणत्वाधिकरणम् | ३८५ |
| ३६ | जगद्वाचित्वाधिकरणम् | ३९० |
| ३७ | वाक्यान्वयाधिकरणम् | ३९६ |
| ३८ | प्रकृत्यधिकरणम् | ४०६ |
| ३९ | सर्वव्याख्यानाधिकरणम् | ४१० |

द्वितीयाध्याये प्रथमः पादः

| अधि. संख्या | | पृष्ठम् |
|---|---|---|
| ४० | स्मृत्यधिकरणम् | ४१२ |
| ४१ | योगप्रत्युक्त्यधिकरणम् | ४१७ |
| ४२ | न विलक्षणत्वाधिकरणम् | ४१९ |
| ४३ | शिष्टापरिग्रहाधिकरणम् | ४२७ |
| ४४ | भोक्त्रापत्त्यधिकरणम् | ४२९ |
| ४५ | आरम्भणाधिकरणम् | ४३० |
| ४६ | इतरव्यपदेशाधिकरणम् | ४४४ |
| ४७ | उपसंहारदर्शनाधिकरणम् | ४४५ |
| ४८ | कृत्स्नप्रसक्त्यधिकरणम् | ४४६ |
| ४९ | सर्वोपेताधिकरणम् | ४४९ |
| ५० | न प्रयोजनवत्त्वाधिकरणम् | ४५० |
| ५१ | वैषम्यनैर्घृण्याधिकरणम् | ४५३ |
| ५२ | सर्वधर्मोपपत्त्यधिकरणम् | ४५५ |

द्वितीयाध्याये द्वितीयः पादः

| अधि. संख्या | | पृष्ठम् |
|---|---|---|
| ५३ | रचनानुपपत्त्यधिकरणम् | ४५७ |
| ५४ | महद्दीर्घाधिकरणम् | ४६९ |
| ५५ | उभयथापिनकर्माधिकरणम् | ४७७ |
| ५६ | समुदायाधिकरणम् | ४८८ |
| ५७ | अभावाधिकरणम् | ५०३ |
| ५८ | नैकस्मिन्नसंभवाधिकरणम् | ५२० |
| ५९ | पाशुपताधिकरणम् | ५२५ |
| ६० | पाञ्चरात्राधिकरणम् | ५३३ |

द्वितीयाध्याये तृतीयः पादः

| अधि. संख्या | | पृष्ठम् |
|---|---|---|
| ६१ | वियदधिकरणम् | ५३७ |
| ६२ | मातरिश्वाधिकरणम् | ५४५ |
| ६३ | असंभवाधिकरणम् | ५४६ |
| ६४ | तेजोऽधिकरणम् | ५४८ |
| ६५ | अबधिकरणम् | ५४९ |
| ६६ | पृथिव्यधिकरणम् | ५५० |
| ६७ | तदभिध्यानाधिकरणम् | ५५१ |
| ६८ | विपर्ययाधिकरणम् | ५५४ |
| ६९ | अन्तराविज्ञानाधिकरणम् | ५५६ |
| ७० | चराचरव्यपाश्रयाधिकरणम् | ५५८ |
| ७१ | आत्माधिकरणम् | ५५९ |
| ७२ | ज्ञाधिकरणम् | ५६० |
| ७३ | उत्क्रान्त्यधिकरणम् | ५६१ |
| ७४ | कर्त्रधिकरणम् | ५६६ |
| ७५ | तक्षाधिकरणम् | ५६८ |
| ७६ | परायत्ताधिकरणम् | ५७० |
| ७७ | अंशाधिकरणम् | ५७१ |

| अधि. संख्या | | पृष्ठम् |
|---|---|---|

## द्वितीयाध्याये चतुर्थः पादः

| | | |
|---|---|---|
| ७८ | प्राणोत्पत्त्यधिकरणम् | ५७५ |
| ७९ | सप्तगत्यधिकरणम् | ५७७ |
| ८० | प्राणाणुत्वाधिकरणम् | ५७९ |
| ८१ | प्राणश्रैष्ठ्याधिकरणम् | ५८० |
| ८२ | न वायुक्रियाधिकरणम् | ५८० |
| ८३ | श्रेष्ठाणुत्वाधिकरणम् | ५८२ |
| ८४ | ज्योतिराद्यधिकरणम् | ५८३ |
| ८५ | इन्द्रियाधिकरणम् | ५८६ |
| ८६ | संज्ञामूर्तिक्लृप्त्यधिकरणम् | ५९५ |

## तृतीयाध्याये प्रथमः पादः

| | | |
|---|---|---|
| ८७ | तदन्तरप्रतिपत्त्यधिकरणम् | ५९९ |
| ८८ | कृतात्ययाधिकरणम् | ६११ |
| ८९ | अनिष्टादिकार्यधिकरणम् | ६१५ |
| ९० | साभाव्याधिकरणम् | ६१७ |
| ९१ | नातिचिराधिकरणम् | ६१८ |
| ९२ | अन्याधिष्ठिताधिकरणम् | ६१९ |

## तृतीयाध्याये द्वितीयः पादः

| | | |
|---|---|---|
| ९३ | सन्ध्याधिकरणम् | ६२७ |
| ९४ | तदभावाधिकरणम् | ६३३ |
| ९५ | कर्मानुस्मृतिशब्दविध्यधिकरणम् | ६३७ |
| ९६ | मुग्धाधिकरणम् | ६३९ |
| ९७ | उभयलिङ्गाधिकरणम् | ६३९ |
| ९८ | प्रकृतैतावत्त्वाधिकरणम् | ६४४ |
| ९९ | पराधिकरणम् | ६५२ |
| १०० | फलाधिकरणम् | ६५४ |

## तृतीयाध्याये तृतीयः पादः

| | | |
|---|---|---|
| १०१ | सर्ववेदान्तप्रत्ययाधिकरणम् | ६५९ |
| १०२ | उपसंहाराधिकरणम् | ६७२ |
| १०३ | अन्यथात्वाधिकरणम् | ६७४ |
| १०४ | व्याप्त्यधिकरणम् | ६७९ |
| १०५ | सर्वाभेदाधिकरणम् | ६८१ |
| १०६ | आनन्दाद्यधिकरणम् | ६८२ |
| १०७ | आध्यानाधिकरणम् | ६८३ |
| १०८ | आत्मगृहीत्यधिकरणम् | ६८५ |
| १०९ | कार्याख्यानाधिकरणम् | ६८८ |
| ११० | समानाधिकरणम् | ६९० |
| १११ | संबन्धाधिकरणम् | ६९२ |
| ११२ | संभृत्यधिकरणम् | ६९३ |
| ११३ | पुरुषविद्याधिकरणम् | ६९४ |
| ११४ | वेधाद्यधिकरणम् | ६९६ |
| ११५ | हान्यधिकरणम् | ७११ |
| ११६ | सांपरायाधिकरणम् | ७१७ |
| ११७ | गतेरर्थवत्त्वाधिकरणम् | ७१८ |
| ११८ | अनियमाधिकरणम् | ७१८ |
| ११९ | यावदधिकाराधिकरणम् | ७२१ |
| १२० | अक्षरध्यधिकरणम् | ७२२ |
| १२१ | इयदधिकरणम् | ७२४ |
| १२२ | अन्तराभूतग्रामाधिकरणं | ७२५ |
| १२३ | व्यतिहाराधिकरणम् | ७२६ |
| १२४ | सत्याद्यधिकरणम् | ७२६ |

| अधि. संख्या | | पृष्ठम् |
|---|---|---|
| १२५ | कामाद्यधिकरणम् | ७२९ |
| १२६ | आदराधिकरणम् | ७३० |
| १२७ | तन्निर्धारणाधिकरणम् | ७३४ |
| १२८ | प्रदानाधिकरणम् | ७३६ |
| १२९ | लिङ्गभूयस्त्वाधिकरणम् | ७३९ |
| १३० | आत्मशरीरातिरेकाधिकरणम् | ७४६ |
| १३१ | अङ्गावबद्धाधिकरणम् | ७५१ |
| १३२ | भूमज्यायस्त्वाधिकरणम् | ७५३ |
| १३३ | शब्दादिभेदाधिकरणम् | ७५५ |
| १३४ | विकल्पाधिकरणम् | ७५६ |
| १३५ | काम्याधिकरणम् | ७५७ |
| १३६ | यथाश्रयभावाधिकरणम् | ७५८ |

**तृतीयाध्याये चतुर्थः पादः**

| | | |
|---|---|---|
| १३७ | पुरुषार्थाधिकरणम् | ७६१ |
| १३८ | परामर्शाधिकरणम् | ७६६ |
| १३९ | स्तुतिमात्राधिकरणम् | ७७९ |
| १४० | पारिप्लवाधिकरणम् | ७८५ |
| १४१ | अग्नीन्धनाधिकरणम् | ७८७ |
| १४२ | सर्वापेक्षाधिकरणम् | ७८८ |
| १४३ | सर्वान्नानुमत्यधिकरणम् | ७९१ |
| १४४ | आश्रमकर्माधिकरणम् | ७९३ |
| १४५ | विधुराधिकरणम् | ७९७ |
| १४६ | तद्भूताधिकरणम् | ७९८ |
| १४७ | आधिकारिकाधिकरणम् | ७९९ |
| १४८ | बहिरधिकरणम् | ८०० |
| १४९ | स्वाम्यधिकरणम् | ८०१ |

| अधि. संख्या | | पृष्ठम् |
|---|---|---|
| १५० | सहकार्यन्तरविध्यधिकरणम् | ८०८ |
| १५१ | अनाविष्काराधिकरणम् | ८१२ |
| १५२ | ऐहिकाधिकरणम् | ८१३ |
| १५३ | मुक्तिफलानियमाधिकरणम् | ८१५ |

**चतुर्थाध्याये प्रथमः पादः**

| | | |
|---|---|---|
| १५४ | आवृत्त्यधिकरणम् | ८१७ |
| १५५ | आत्मत्वोपासनाधिकरणम् | ८३२ |
| १५६ | प्रतीकाधिकरणम् | ८३३ |
| १५७ | ब्रह्मदृष्ट्यधिकरणम् | ८३७ |
| १५८ | आदित्यादिमत्यधिकरणम् | ८३८ |
| १५९ | आसीनाधिकरणम् | ८४५ |
| १६० | एकाग्रताधिकरणम् | ८४७ |
| १६१ | आप्रायणाधिकरणम् | ८४८ |
| १६२ | तदधिगमाधिकरणम् | ८५० |
| १६३ | इतरासंश्लेषाधिकरणम् | ८५२ |
| १६४ | अनारब्धकर्याधिकरणम् | ८५४ |
| १६५ | अग्निहोत्राद्यधिकरणम् | ८५८ |
| १६६ | विद्यायुक्तकर्मवीर्यवत्तरत्वाधिकरणम् | ८६१ |
| १६७ | इतरक्षेपणाधिकरणम् | ८६३ |

**चतुर्थाध्याये द्वितीयः पादः**

| | | |
|---|---|---|
| १६८ | वागधिकरणम् | ८६५ |
| १६९ | मनोऽधिकरणम् | ८६६ |

| अधि. संख्या | | पृष्ठम् |
|---|---|---|
| १७० | अध्यक्षाधिकरणम् | ८६७ |
| १७१ | आसृत्युपक्रमाधिकरणम् | ८७० |
| १७२ | आपीतेस्संसारयपदेशाधिकरणम् | ८७३ |
| १७३ | प्रतिषेधाधिकरणम् | ८७६ |
| १७४ | कलाप्रलयाधिकरणम् | ८७८ |
| १७५ | कलाऽविभागाधिकरणम् | ८८० |
| १७६ | तदोकोऽधिकरणम् | ८८० |
| १७७ | रश्म्यधिकरणम् | ८८२ |
| १७८ | दक्षिणायनाधिकरणम् | ८८३ |

**चतुर्थाध्याये तृतीयः पादः**

| अधि. संख्या | | पृष्ठम् |
|---|---|---|
| १७९ | अर्चिराद्यधिकरणम् | ८८५ |
| १८० | वाय्वधिकरणम् | ८८७ |
| १८१ | तडिदधिकरणम् | ८९१ |
| १८२ | आतिवाहिकाधिकरणम् | ८९२ |
| १८३ | कार्याधिकरणम् | ८९५ |
| १८४ | अप्रतीकालम्बनाधिकरणम् | ९१० |

**चतुर्थाध्याये चतुर्थः पादः**

| अधि. संख्या | | पृष्ठम् |
|---|---|---|
| १८५ | संपद्याविर्भावाधिकरणम् | ९१६ |
| १८६ | अविभागेन दृष्टत्वाधिकरणम् | ९२० |
| १८७ | ब्राह्माधिकरणम् | ९२२ |
| १८८ | संकल्पाधिकरणम् | ९२५ |
| १८९ | अभावाधिकरणम् | ९३० |
| १९० | प्रदीपाधिकरणम् | ९३२ |
| १९१ | जगद्व्यापाराधिकरणम् | ९३७ |


॥ अधिकरणसूचिका समाप्ता ॥

---

॥ श्रीः ॥

श्रीलक्ष्मीनृसिंहविरचितः

# आभोगः

## ( कल्पतरुव्याख्या )



### प्रथमाध्यायः

### प्रथमः पादः

॥ श्रीलक्ष्मीनृसिंहाय मङ्गलम् ॥



दैत्येन्द्रं वरदर्पितं सरभसं भित्वाऽट्टहासे कृते
 दृष्ट्वा यं कमलालया कुशलिनं जैत्रश्रियाऽलङ्कृतम् ।
संहृष्टा परिषस्वजे सुरगणैस्संस्तूयमानं विभुं
 तं लक्ष्मीकुचकुङ्कुमाङ्किततनुं लक्ष्मीनृसिंहं नुमः ॥ १ ॥

महीधरकुलोत्तंसो रामाम्बागर्भसंभवः ।
लक्ष्मीनृसिंहस्तनुते कल्पवृक्षप्रदीपिकाम् ॥ २ ॥

क कल्पकतरुर्दिव्यो दुरालोको दुरासदः ।
मादृशैश्चर्मचक्षुर्भिर्मन्दप्रज्ञैस्तथापि तु ॥ ३ ॥

आसाद्य कल्पकतरुं दिशा परिमलोक्तया ।
आलोक्य भक्तिचक्षुर्भ्यां आभोगोऽयं प्रकाश्यते ॥ ४ ॥

आचार्यश्चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तये शिष्टाचारपरिपालनाय च कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नतस्य शास्त्रस्य विषयादिकं दर्शयति—यदज्ञातमिति - तत्परमं ब्रह्म प्रत्यग्रूपेण वर्तमानं नमस्याम इत्यन्वयः । P. I

---

अत्र दत्ताः सङ्ख्यास्सर्वाः निर्णयसागरमुद्रणालयमुद्रितभामतीकल्पतरुपरिमळोपेत-ब्रह्मसूत्रशाङ्करभाष्यपुस्तकपुटसङ्ख्या इत्यवगन्तव्यम् ।

ननु सकलप्रपञ्चाश्रयस्य ब्रह्मणः कथं तद्विरुद्धकर्तृभोक्तृजीवरूपतेत्याशङ्क्य, विरुद्धधर्माणां मिथ्यात्वं **बहुविधे**त्यादिना दर्शितम्। **बहुविधस्य** नानारूपस्य वियदादेः साधारणस्य, कर्तृत्वादेः तत्तज्जीवासाधारणस्य च **जगतो विभ्रमस्य** विभ्रममात्रसिद्धस्य। **धरं** धारकं **कलितं** जीवैरित्यर्थः।

प्रकाशमाने ब्रह्मणि कथं जगदारोप इत्यतः उक्तम्—**अज्ञातमिति**। एवमपि नीरूपे ब्रह्मणि कथं जगदारोप इत्यत उक्तम्—**वियदिति**। **यद्वत्** यथा **वियत् अज्ञातं सत्, बालैस्तत्स्वरूपमजानानैः तलमलिनतायोगि कलितं** अवाङ्मुखश्याममहाकटाहत्वेन ज्ञातं, तद्वत् **ब्रह्माप्यज्ञातं** जीवनिष्ठाज्ञानविषयीकृतं सज्जगदधिष्ठानत्वेन ज्ञातमित्यर्थः।

P. 1-2 प्रत्यग्रूपस्य ब्रह्मणः सदादिरूपेण ज्ञायमानत्वादज्ञातत्वमसिद्धमित्यत उक्तम्—**उन्मुद्रेति**। **उन्मुद्रं** विषयविशेषानवच्छिन्नं **ज्ञानं प्रततं** अपरिच्छिन्नं **सुखं** तद्रूपं **सद्रूपं** चेत्यर्थः। तथा च ब्रह्मणः सदादिरूपेण ज्ञानेऽपि यथोक्तरूपेणाज्ञातत्वमविरुद्धमिति भावः।

उक्तरूपे ब्रह्मणि प्रमाणं दर्शयितुं **श्रुतिशते**त्याद्युक्तम्। **श्रुतीनां** यानि **शतानि** अपरिमितानि **शिरांसि** वेदान्ताः, तैः **प्रकटितं** प्रकाशितमित्यर्थः। नमस्कारश्च प्रत्यगभेदानुसन्धानं, निर्विशेषब्रह्मणि नमस्कारक्रियाकर्मत्वानुपपत्तेः।

अत्र पूर्वार्धे अज्ञातत्वविपर्यस्तत्वाभ्यां ब्रह्म शास्त्रस्य विषयो निर्दिष्टः। जगत्कारणत्वं च तल्लक्षणमुक्तम्। प्रपञ्चस्य कल्पितत्वेन मिथ्यात्वात् जीवब्रह्माभेदाविरोधश्च दर्शितः। उत्तरार्धे अखण्डानन्दस्फूर्तिः प्रयोजनं, ब्रह्मणि वेदान्ताः प्रमाणम्, वेदान्तानां ब्रह्मण्येव समन्वय इति च दर्शितम्॥ १॥

प्रतीचो यथोक्तब्रह्मरूपस्फूर्तिरपि दक्षिणामूर्त्युपासनाधीना

'अजात इत्येवं कश्चित् भीरुः प्रपद्यते।
रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्॥'

इति [1]श्वेताश्वतरोपनिषच्छ्रुतेरिति मनसि निधाय,

---

१. श्वे. उ. ३-४-२१.

'नान्दीश्लोको विधातव्यः चन्द्रनामाङ्क एव सः ।'

इति शास्त्रानुरोधेन चन्द्रत्वेन रूपयन् दक्षिणामूर्तिं नमस्करोति—**बोधेति** । P. 2-1

अत्र **शङ्कर**मित्यनेन मुक्तिसुखप्रदत्वं दर्शितम् । **संसारे**त्यादिविशेषणेन च मुक्त्युपपादकतया अनर्थनिवृत्तिर्दर्शिता । तदर्थश्च—**संसारो**ऽहंममाध्यासलक्षणः, स एव **सहस्ररश्मिः** तापकत्वसाम्यात् । तज्जनिताः **क्लेशाः** अविद्याऽस्मितारागद्वेषाभिनिवेशाख्याः । तन्निवर्तकमिति ।

**सोम** इति श्लिष्टरूपकेणोमासहायत्वापरित्यागेनैव चन्द्रत्वेन च रूपणं कृतम् । उमाया ब्रह्मविद्याप्रदत्वस्य 'स[1] तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम्' इति तलवकाराणामुपनिषदि प्रसिद्धत्वात् । 'उमासहायं'[2] इति श्रुत्या तत्सहितस्यैव ध्येयत्वश्रवणाच्च ।

प्रसिद्धे चन्द्रे किरणसहस्रैः व्योमगततिमिरनिवर्तकत्वं समुद्रवृद्धिहेतुत्वं च प्रसिद्धम् । योगिचिन्त्यत्वं च तस्य द्विजराजतया तदुपास्यत्वात्, अर्चिरादिमार्गमध्यवर्तिचन्द्रलोकाधिपतित्वेन तत्रत्यैर्योगिभिः उपास्यत्वाच्च । अतश्चन्द्रत्वरूपणोपयोगितया शङ्करेऽपि तद्धर्मान् दर्शयितुं **बोधे**त्यादिविशेषणानि ।

**बोधैः**—तत्तद्वेदान्तवाक्यश्रवणजन्यैः तत्तदन्तःकरणवृत्त्यवच्छेदकृतभेदैः चित्स्वरूपैरेवाभीशुशतैः-किरणशतैः-हृदेव-**व्योम, तद्गतं अबोधतिमिरं** स्वरूपाज्ञानान्धकारं **दारयन्** । अनेन श्रवणमुक्तम् ।

**प्रज्ञा**—ऊहापोहकुशला बुद्धिः, सैव **वारिधिः, तमुन्नतिं गमयन्** प्रापयन्नित्यर्थः । अनेन मननमुक्तम् । **सदोदेती**त्यनेन प्रसिद्धचन्द्राद्विशेषोक्त्या व्यतिरेकोऽपि दर्शितः । **निर्मलयोगिचिन्त्ये**त्यनेन निदिध्यासनमुक्तम् । तदनेन मुमुक्षुणा श्रवणादिभिः दक्षिणामूर्तिरूपमुपास्यमित्युक्तं भवति ॥ २ ॥

श्रीनृसिंहस्य बन्धनिवर्तकत्वं 'स्वात्मबन्धहरं'[3] इत्यादिश्रुतिसिद्धमिति मोहनिवर्तनेन तस्यैव प्रत्यग्रूपेणाविर्भावं प्रार्थयते—**माद्यदिति** । **माद्यन्**-प्रपञ्चरूपेणोज्जृम्भमाणो यो **मोहः** मूलाविद्या स एव **महेभः** । तस्य **कुंभौ** आवरण- P. 2-3

१. केन, उ. ३-१२.   २. कैव. उ. १-७.   ३. नृ. उ. २.

विक्षेपांशौ । तयोर्द्दलनं-सम्यगनुष्ठितैः श्रवणादिभिरसंभावनाविपरीतभावना-निवृत्त्या शिथिलीकरणं, तेन प्रोद्भूतः सञ्जातः [सन्मौक्तिकः] निर्दुष्टमुक्ता-फलसदृशः ।

अथवा, सन् सत्यवस्तुविषयकत्वात्, मौक्तिकः—मुक्तिप्रयोजनकः यो द्योतः अखण्डाकारवृत्तिरूपः भक्तजनसमवेतः । तेनालङ्कृतं—सविलासा-विद्यानिवृत्त्या अभिव्यक्तं सत्सुखाढ्यं, वपुः स्वरूपं यस्येत्यर्थः ।

इतरदेवतापेक्षया श्रीनृसिंहस्य भक्तजनवात्सल्यं सर्वान्तर्यामित्वप्रकटनं च

P. 2-3 विशेषं दर्शयितुमाह—प्रह्लादेति । प्रह्लादोक्ता या गीः—' त्वय्यस्ति भगवान् विष्णुः मयि चान्यत्र चास्ति सः' इत्यादिरूपा, तस्याः प्रमाणनं—प्रामाण्य-संपादनम् । तदेव विधिः—कार्यं तदर्थमित्यर्थः । ' चर्मणि द्वीपिनं हन्ति,' इत्यादिवन्निमित्तसप्तमी ।

श्रीनृसिंहस्यैव जीवरूपेण प्रविष्टत्वात् प्रकटीभवनं सिद्धमिति कथं तत्प्रार्थ-नमित्याशङ्क्य, सदादिरूपेण प्रकटने सिद्धेऽपि निष्प्रपञ्चाखण्डसच्चिदानन्दरूपेण प्रकटनं प्रार्थ्यत इत्यखण्डितमिति क्रियाविशेषणेन दर्शितम् ॥ ३ ॥

P. 2-5 ग्रन्थनिर्माणसामर्थ्याय सरस्वतीं नमस्करोति—ललितैरिति । अत्र वर्णसमूहरूपपदविन्यासानां पदविन्यासैरित्यनेन निर्दिष्टानां पुनरावृत्तेन तेनैव पदेन चरणविन्यासत्वेन, विद्वद्वदनानां रङ्गस्थलत्वेन, वेदाविरुद्धानां शास्त्राणां वेदानां च वाद्यत्वेन रूपणाच्च सरस्वत्या नर्तकीरूपत्वं गम्यम् ॥ ४ ॥

स्वाभिलषितसर्वार्थसिद्धये सर्वाभीष्टप्रदत्वेन प्रसिद्धं गणेशमपि नम-

P. 3-1 स्करोति—भजमानेति । भजमानानां—सेवमानानां तत्तत्कार्येषु प्रसक्ता विघ्ना एव भित्तयः । तासां प्रभित्तिः—प्रभेदनसाधनं कुद्दालः । करणे क्तिन्प्रत्ययः । न तु भावे । ' विदारणे भिदाऽन्यत्र भित्तिः' इति शाब्दिक-संकेतात् । तमिवेत्यर्थः ।

महागणेशमिति—महत्त्वविशेषणेन दशभुजस्य महागणपतेः वामाधः-करेण स्वविषाणधारणस्य शुण्डाग्रधृतकलशस्थितरत्नवर्षेण भक्तेभ्यः सकलसंप-त्प्रदानस्य च मन्त्रशास्त्रप्रसिद्धत्वात् स एवोपास्य इति सूचितम् ॥ ५ ॥

---

१. वि. पु. १-१९-३८.

चिकीर्षितग्रन्थप्रतिपाद्यतत्त्वनिश्चयाय व्यासाचार्यौ श्लोकद्वयेन नमस्करोति—**यन्न्यायेति** । **यस्य**—व्यासस्य । **न्यायसूत्रैः ग्रथिता आत्मबोध एव सौरभ्यं तद्गर्भा** वेदान्तवाक्यपद्ममालेत्यर्थः ॥ ६ ॥ P. 3-2

**भगवत्पादः**—श्रीशङ्कराचार्यः ॥ ७ ॥

'यस्य देवे परा भक्तिः,'[1] इति शास्त्रमनुसरन् गुरुपरमगुरुविद्यागुरून् क्रमेण नमस्करोति—**स्वयंप्रभेत्यादिना** । स्वप्रकाशसुखरूपं ब्रह्मैव भक्तानुग्रहाय दयया स्वीकृतशरीरं सत् अन्वर्थानुभवानन्दपदप्रतिपाद्यमित्यर्थः ॥ ८ ॥ P. 3-4

**विद्येति** । **विद्या**—ब्रह्मविद्या । तदुपायः **प्रश्रयः**—विनयः, **संयमश्च** धारणाध्यानसमाधित्रयमेकवस्तुविषयं संयमः । तथा च योगसूत्रम्—'त्रयमेकत्र संयमः'[2] इति । **शुभफलाः** परमपुरुषार्थफलाः ॥ ९ ॥ P. 3-5

**ग्रन्थेति** । **सुखप्रकाशाख्यं**[3] **शशिनं विद्यागुरुं नौमीत्यन्वयः**। प्रसिद्धे चन्द्रे उदयमात्रेण कुमुदमुकुलविकासकत्वं, ततो बहिर्निर्गमनेन स्वरूपप्रकाशनाख्यव्याक्रियामात्रेण तमोनिवर्तकत्वम्, ततः सकलकिरणपरिपूर्णस्य गोशब्दवाच्यैः स्वकिरणैः तारकशब्दवाच्यप्रोद्यन्नक्षत्रदीप्तिमदखण्डाकाशप्रकाशकत्वं च प्रसिद्धम् ॥

तान् धर्मान् शशित्वरूपणोपयोगितया गुरौ दर्शयति—**ग्रन्थेत्यादिना** । **ग्रन्थानां ग्रन्थयः** कठिनभागाः, तन्नामका **मुकुलाः**, अनभिव्यक्तत्वसाम्यात् । **यस्य गुरोरुदये** सन्निधाने सति **स्फुटीभवन्ति** । **यत्र गुरौ व्याकुर्वत्यपि** व्याख्यानमारभमाणेऽपि । **लोकस्य मोहाख्यं तिमिरं संशाम्यति** ।

**यस्य गोभिः** वाग्भिः **परमं व्योम** ब्रह्म **नीराज्यते**—शिष्येभ्यः प्रकाश्यते । कथमिव ? **प्रोद्यत्तारकदिव्यदीप्ति** यथातथा । दिवि हार्दाकाशे भवा **दिव्या दीप्तिः** अखण्डाकारवृत्तिः सैव **तारिकेति** कर्मधारयः । [4]'पुंवत्कर्मधारये'ति सूत्रेण पुंवद्भावः । ततः **प्रोद्यन्ती**—सविलासाविद्यानिवर्तनेनोज्जृम्भमाणा **तारकदिव्यदीप्तिः** यस्मिन् कर्मणीति बहुव्रीहिः । तथा च शिष्याणामुपदेशकाल एव तन्महिम्ना विनैव मननादिकमुदेति साक्षात्कार इति भावः ॥

---

१. श्वे. उ. ६-२३. २. यो. सू. ३-४. ३. अयं सुखप्रकाशः चित्सुखमुनिशिष्यः चित्सुखप्रणीततत्त्वप्रदीपिकाटीकाकृत् - इति विमर्शकाः ॥ ४. पा. सू. ६-३-४२.

P. 3-9 स्वव्याख्येयग्रन्थगौरवप्रकटनाय तत्कर्तारं स्तौति—**वैदिकेति** । **नयैः** न्यायैः **विजिताः** प्रतिवादिनः **दैत्या** येनेत्यर्थः ।

[1]"असुर्या नाम ते लोका अन्धेन तमसावृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥"

इति श्रुतिप्रसिद्धं सकलवेदान्तप्रतिपाद्यसच्चिदानन्दाद्वितीयब्रह्मप्रद्वेषिणां वाद्यन्तराणां दैत्यत्वम् । **विबुधेश्वराः** विद्वच्छ्रेष्ठाः तेषामाचार्यैः स्वकृतग्रन्थ-व्याजेन तत्त्वोपदेशात् । पूर्वाचार्यैः सुरक्षितं **वैदिकमार्गं** तत्कालसमुद्यदुद्दाम-दुर्वादिदैत्यविजयेन वेद्युपजीविनां सुराणां मार्गं विबुधेश्वरस्य देवेन्द्रस्याचार्यो बृहस्पतिरिव **सन् योऽपि**[2] **सुरक्षितं चक्रे सः जयती**त्यर्थः ॥ ११ ॥

अपेक्षितसकलार्थप्रदत्वेन कल्पवृक्षतया रूपयन् चिकीर्षितं ग्रन्थं प्रतिजा-
P. 3-10 नीते—**रूढोऽयमिति** । **वेद एव काण्डः** जलधिजलं तस्माद्रूढः उत्पन्नः ।

**नयमयाः**—न्यायमयाः **विटपाः**—शाखाः यस्य सः । वृक्षे बहुषु विटपेषु **वीनां**—पक्षिणां, **चारेण**—सञ्चारेण **भूरिशाखाविचारत्वं** प्रसि-द्धम् । तदत्रापि दर्शयति—**भूरीति** । **भूरि** याः **शाखाः**—वेदभागाः तेषां **विचारो**—मीमांसा यस्य सः । **सन्तः**—शोभनाः असाधुत्वादिदोषरहिताः **वर्णाः** पदादिरूपा **अनन्तानि पर्णानि** यस्य सः । **समुदितः**—समुत्पन्नः **परमब्रह्मबोधः** अखण्डाकारवृत्तिरेव **प्रसूनं** यस्य सः ।

ब्रह्मभावस्य **अमृतफलस्य हस्तप्राप्यत्वं** स्वरूपत्वेन सन्निहितत्वात् । **जीवविश्वेशौ**—जीवपरमात्मानौ, **वीन्द्रौ**—पक्षीन्द्रौ प्रतिपाद्यौ यस्य सः । **संसार एवार्कः, तदुत्पन्नास्तापाः**—आध्यात्मिकादिदुःखानि । **तदुपशमन-समर्थः** । तादृशः **कल्पवृक्षः तन्यत** इत्यर्थः ॥ १२ ॥[3]

P. 3-14 **श्रीमदिति**—शरीरमेव शरीरकं कुत्सितार्थे कप्रत्ययः । तन्निवासी **शारीरकः** जीवः, तमधिकृत्य प्रवृत्तो विचारो **मीमांसा** । तस्याः **श्रीमत्वं**—

---

१. ईश. ३. २. अपिर्विरोधे, वाचस्पतेः लोकायतमतप्रवर्तकस्य वैदिकमार्गरक्ष-कत्वं विरुद्धमिति द्योत्यते इत्यपि वक्तुं शक्यम् ॥ ३. 'कीर्त्या' इति त्रयोदशः श्लोकः कल्पतरौ दाक्षिणात्यकोशेषु न दृश्यते । अत एव दाक्षिणात्याभ्यां परिमलाभोगकाराभ्यां न व्याख्यातः इति ज्ञायते ॥

शब्दसारल्यमर्थगांभीर्यं न्यायदाढर्चं श्रुतिस्मृतीतिहासपुराणानां ऐककण्ठयं च। तच्च श्रीशङ्करभगवत्पादकृतभाष्यरूपाया एव, नान्यासामिति तेन विशेषेणेन तासामनुपादेयत्वं सूचितम्। **तद्व्याख्यायाः** इत्यर्थः।

**समाप्त्यादी**त्यादिपदेन प्रचयगमनमुक्तम्। प्रतिजीवमविद्याभेदाभ्युपगमात् **टीकायाम**विद्याद्वित्वोक्तिः अयुक्तेत्याशङ्कय प्रत्येकजीवाभिप्रायेणेत्याशयेनाह—**एकेति**।

ननु ब्रह्मणो वियदाद्याकारेण विवर्तमानत्वे स्वरूपविलयापत्तिरित्यत आह— **अतत्वत इति**। मृत्पिण्डादेरिव तत्वतोऽन्यथाभाव एव स्वरूपविलयः। न तु रज्ज्वादेः सर्पादिभाववत् अतत्वतोऽन्यथाभावेऽपीति भावः। P. 4-1

**तत्प्रतिबिम्बत्वेन**—ब्रह्मप्रतिबिम्बत्वेन। यद्यपि टीकाकारेण जीवानां प्रतिबिंबत्वं नेष्यते, अवच्छिन्नस्यैव जीवत्वसमर्थनात्। तथापि प्रतिबिंबपक्षोऽपि संभवतीति सूचयितुं तथा व्याख्यातम्।

जीवानां ब्रह्मविवर्तत्वे मिथ्यात्वापत्त्या मोक्षानुपपत्तिरित्यरुचेराह—**अथवेति**। श्रुत्यादिषु भौतिकानां हिरण्यगर्भस्रष्टृत्वकीर्तनात् तस्य स्वातन्त्र्येणैव तत्स्रष्टृत्वमिति भ्रमव्युदासाय ब्रह्मण एव चराचरस्रष्टृत्वं '[2]इदं सर्वमसृजत यदिदं किञ्च' इत्यादिश्रुतिसिद्धं विशिष्य कीर्तितमित्यर्थः।

**अज्ञातत्वेति**। अविद्यासाचिव्यस्य तद्विषयतारूपत्वेन तत एवाज्ञातत्वकथनादिति भावः। **ज्ञानपदसूचितमिति**, अपरिमितत्वस्य सुख इव ज्ञानेऽप्यन्वयादिति भावः। शास्त्रयोनित्वाधिकरणन्यायेन वेदकर्तृत्वेनैव सर्वज्ञत्वसिद्धेरितरत् व्यर्थमित्यरुचेराह—**यद्वेति**। **सर्वज्ञतेति**। नित्यमित्यस्य **सर्वज्ञता**दावप्यन्वयः। **आत्मनः** स्वरूपस्य **सम्यक्** सामस्त्येन **बोधः**—स्फूर्तिः। **अधिष्ठातृत्वं**—नियन्तृत्वम्। **निरुक्तादीनी**त्यादिपदेन छन्दोज्योतिषशिक्षाकल्पव्याकरणानि गृह्यन्ते। P. 4-3 P. 4-6 P. 4-9

**ईश्वरायेति**। ऐश्वर्यमत्र सार्वज्ञ्यं विवक्षितम्। एवञ्च सर्वज्ञायेति तदर्थः। तथा च निघण्टुः। 'वेधास्त्रिषु स्यात् सर्वज्ञे नरि विष्णुविरिञ्चयोः।' इति। व्यासस्य सर्वज्ञत्वे हेतुकथनार्थं ज्ञानशक्तीत्युत्तरार्धमित्याशयेनाह—**हरेरिति**। P. 4-13

१. प्रथमश्लोके. २. तै. उ. २-६.

'तॄ प्लवनतरणयोः' इत्यस्माद्धातोः भावे 'ऋृदोरप्' इत्यपि कृते, तर इति रूपम्। ततः स्वार्थिके अण्प्रत्यये कृते तर एव तारः। ततः अवेत्यनेन योगे अवमतस्तारः प्राप्तिः। प्राप्तेरवमतत्वं च लीलापरिगृहीतदिव्यमङ्गलविग्रहान्निकृष्टशरीरप्राप्तित्वात्।

**स यस्मिन्निति** बहुव्रीहिप्रदर्शनम्। व्यधिकरणबहुव्रीहिरप्यभियुक्तसंमत एव। 'न धातुलोप आर्धधातुके[2]', इति पाणिनिसूत्रे धातोर्लोपो यस्मिन्निति बहुव्रीह्याश्रयणात्। 'सच्छास्त्रजन्मा हि विवेकलाभः' इत्यादिप्रयोगाच्च।

एतेन—भावे 'ऋृदोरप्' इत्यपि कृते अवतर इति प्रसङ्गात्, करणाधिकरणयोः 'अवेतॄस्त्रोर्घञ्' इत्यनेन सूत्रेण घञि कृते अवतार इति रूपम्। एवं च ज्ञानशक्तेरवतार इति षष्ठीतत्पुरुष एव, प्राप्तिर्यस्मिन् सः अवतार इत्यवतारपदार्थप्रदर्शनमेव ग्रन्थे कृतम्। न तु बहुव्रीहिप्रदर्शनम्, इति परिमळोक्तं चिन्त्यम्।[3]

**ज्ञानशक्तेरवतारः प्राप्तिर्यस्मिन् स तथोक्त** इति कृत्स्नपदव्याख्यानस्यैव स्वरसतो दर्शनात्। 'अवतारान् करोत्येषा' 'कृतधरणितलापूर्वहंसावतारः' इत्यादिप्रयोगदर्शनेन अवतारशब्दस्य भावेऽपि घञन्तत्वं आश्रित्य प्राप्त्यर्थकत्वस्यावश्यमभ्युपगन्तव्यत्वाच्च।

व्यासे विष्णुशक्तिसद्भावं विष्णुपुराणवचनेन[4] द्रढयति—**तथा चाहेति**। विष्णोर्व्यासरूपत्वं च स्वकीयाया ज्ञानशक्तेः तत्रावतारणादिति ध्येयम्। **हितमिति** क्रियाविशेषणम्।

अत्र सूत्रे ब्रह्मविचारकर्तव्यता दृश्यते। तद्व्याख्यानार्थं प्रवृत्ते **भाष्ये** अध्यासाक्षेपसमाधाने। **टीकायां** विषयप्रयोजनाक्षेपः। ततश्च कथमिदं सङ्गच्छतामित्याशङ्क्य, सूत्रसूचितयोः विषयप्रयोजनयोः अध्यासाधीनत्वादाक्षेपसमाधानाभ्यामध्याससमर्थनेन विषयप्रयोजने साधयितुमेव भाष्यं प्रवृत्तमिति कथयितुमथे-

P- 4-14 त्यादिटीकेत्याह—**इह भगवतेति**।

---

१. पा. सू. ३-३-५. २. पा. १-४. ३. वस्तुतस्तु निरर्थकप्रायस्य स्वार्थेऽण्प्रत्ययस्य स्वीकारो नोचित इति परिमलाभिप्रायः. ४. वि. पु. ३-३-५.

सूत्रे अथशब्देन साधनचतुष्टयसंपत्त्यानन्तर्यकथनात् साधनचतुष्टये च मुमुक्षुत्वमनुप्रविष्टमिति तेन पदेन सप्रयोजनत्वम्, ब्रह्मजिज्ञासापदेन ब्रह्मणो जिज्ञास्यत्वकथनात् सन्दिग्धत्वं च सूचितमित्यर्थः।

'आह कोऽयं' इत्यादेरपि भाष्यस्याध्यासविषयत्वात् तदपि भाष्यमध्यासाक्षेपादिपरतया व्याख्यातुमथेत्यादिटीकेति भ्रमः स्यात्। न च तद्भाष्यमध्यासाक्षेपादिपरं. लक्षणादिपरत्वादित्यत उक्तम्—आह कोऽयमित्यतः प्राक्तनेति। बहुग्रन्थव्यवधानादुत्तरावधिं दर्शयति—आशयवानिति।

अथ यदसन्दिग्धमिति अथशब्दो न मङ्गलार्थः। तस्यादावेव कृतत्वात्। नानन्तर्यार्थः। अवधेरलाभात्। नापि प्रश्नार्थः। तथात्वे, तदवसाने 'इति चेत्' इति भवितव्यतया इत्याशयवानिति कथनायोगादित्यत आह—अथशब्द इति।

P. 5-1

प्रतिग्रन्थेति। शास्त्रीयविषयप्रदर्शनपरेण मङ्गलश्लोकेनैव जगत्कारणे निर्विशेषे ब्रह्मणि भाष्यतात्पर्यस्य वर्णितत्वात् प्रतिवाक्यव्याख्यानप्रारंभस्य स्फुटीकरणार्थमथशब्द इत्यर्थः। एवं च टीकायामथेति नोत्तरपदैरन्वितम्। किन्तु विच्छिन्नम्। योग्यतया च भाष्यविभजनं प्रारभ्यत इति तदर्थ इति ध्येयम्।

ननु युष्मदस्मदित्यादिभाष्यस्य विषयप्रयोजनाक्षेपसमाधानपरतामाचक्षाणेन टीकाकृता तद्भाष्यमेवं व्याख्यातम्—शास्त्रमिदमनारंभणीयम्, विषयप्रयोजनशून्यत्वात्। न तावत् ब्रह्म विषयः, तस्य प्रत्यगात्मतया अहमनुभवेनैव निश्चितत्वात्। ततोऽधिकस्य वेदान्तप्रतिपाद्यस्यासिद्धेः। नाप्यनर्थनिवृत्तिः प्रयोजनम्, सत्यस्य निवृत्त्ययोगात्, निवर्तकासंभवाच्च।

न चाहंप्रत्ययस्य देहेन्द्रियादितादात्म्याध्यस्तमिथ्यात्मविषयकत्वात्, तद्व्यतिरिक्तस्याकर्तृभोक्तृरूपस्य नाहंप्रत्ययगम्यत्वमिति विषयसिद्धिः, अनर्थतद्धे-

---

१. निर्णयसागरमुद्रितपुस्तके कल्पतरौ आशयवानिति प्रतीकं न दृश्यते 'अथेत्यादि परिहरतीत्यन्तेन' इत्येव तत्र मुद्रणात्। श्रीरङ्गमुद्रितपुस्तके तु 'अथेत्यादिना आशयवानाशङ्क्य परिहरतीत्यन्तेन' इति मुद्रितम्। आभोगे आशयवानिति प्रतीकधारणात् स एव कल्पतरुपाठ इति ज्ञायते। निर्णयसागरमुद्रितपुस्तके कल्पतरौ अशुद्धिबाहुल्यं दृश्यते। अतः एतादृशस्थलेषु आभोगानुसारेण कल्पतरुपाठशुद्धिर्वेदितव्या पाठकमहाशयैः॥

त्वोर्मिथ्यात्वात् सम्यग्ज्ञानेन तन्निवृत्तिरिति प्रयोजनसिद्धिरपीति वाच्यम् । अध्यासस्यैवासंभवात् । न हि विविक्तत्वेन भासमानयोरध्यासः संभवतीति ।

एवं सति **तत्पुनर्ब्रह्मेत्यादिभाष्येण** पुनरुक्तमिदं भाष्यं—निश्चितत्वेन विषयत्वाक्षेपपरत्वात् उभयोरपि भाष्ययोः—इत्यत आह—**इहेति** ।

ननु **यदसन्दिग्धमित्यादि टीकया**—ब्रह्म न जिज्ञास्यम्; असन्दिग्धत्वादप्रयोजनत्वाच्चेत्यनुमानं सूचितम् । तत्र व्यापकमजिज्ञास्यत्वं तद्विरुद्धस्य जिज्ञास्यत्वस्योपलब्धिरिति विरुद्धमापद्यत इति कथं **व्यापकविरुद्धोपलब्धिरिति टीकया** सिद्धान्त्यनिष्टापादनमित्याशङ्क्य, यथोक्तानुमाने हेत्वोरप्रयोजकत्वशङ्कायां, जिज्ञास्यत्वव्यापकत्वात् सन्दिग्धत्वसप्रयोजनत्वयोः व्यापकाभावे व्याप्याभावो युक्त इति नाप्रयोजकत्वमित्येवमभिप्राया टीकेत्याह-**जिज्ञास्यत्वेति** । P. 5-3

**मुमुक्षुणेति** । अत्र, ब्रह्म न विचार्यम्, असन्दिग्धत्वादित्येवानुमानशरीरम् । यद्रूपं यं प्रत्यसन्दिग्धं तत्तेन न विचार्यमिति सामान्यव्याप्तिमभिप्रेत्य प्रकृताभिप्रायेण मुमुक्षुकीर्तनम् । न तु, साध्याद्यन्तर्भावेन । मुमुक्षुणेति साध्यैकदेशनिर्देशः, तदनन्तरं ब्रह्मेति पक्षनिर्देशः, ततो न विचार्यमिति साध्यैकदेशान्तरनिर्देश इत्यापत्त्या ग्रन्थकृतोऽचातुर्यापत्तेः । सामान्यव्याप्त्याश्रयणस्यावश्यकतया तत एव यथोक्तसाध्यलाभे विशिष्य तत्कीर्तनवैफल्याच्च ।

एवं च **परिमिले**, मुमुक्षुणेत्यादेः साध्याद्यनुप्रवेशमाश्रित्य विवक्षया[2] क्लेशेन ग्रन्थव्याख्यानं चिन्त्यम्[3] । यथाश्रुतस्यैव स्वरसत्वात् ।

"बृहबृहि वृद्धौ" इति स्मरणेन बृंहतेरपि बृहति [बर्हति] समानार्थत्वात् पौनरुक्त्यमाशङ्क्य णिजर्थो विवक्षितः इति परिहरति—**देहादीनामिति** । **टीकोक्तं देहालंबनत्वं** न देहमात्रालम्बनत्वम् । तथात्वे अहं जानामीति ज्ञानाश्रयत्वप्रतीत्ययोगादित्यत आह—**आत्मैक्येति** । P. 5-7

ननु **तदालंबनत्वे हीत्यादिटीकया** कथं परिहारः? उक्तप्रतिसन्धानस्य देहतादात्म्याध्यासाविरोधित्वादित्याशङ्क्य, आत्मा देहादिभ्यो भिद्यते, तेषु

---

१. अत्र आदिपदेन तं प्रतीत्यस्य, साध्यादीत्यादिपदेन हेतोश्च ग्रहणम् ॥
२. विवक्षया अर्थविशेषविवक्षया । ३. एवं सति परिमलोक्तस्य पक्षदृष्टान्तयोः साध्यहेतुवैकल्यादेः कथं परिहार इति तु चिन्त्यम् ।

व्यावर्तमानेष्वपि अनुवर्तमानत्वात्। न चासिद्धिः, उक्तानुसन्धानादिति युक्तिसहकृतेनाहंप्रत्ययेन भेदग्रहान्नाध्यास इत्यभिप्रायमाह—**देहादिति**।

**देहैक्यं मन्वानमिति**। तदेवेदं शरीरमिति प्रत्यभिज्ञानादिति भावः। P. 6-2 **टीकायां स्वप्नान्ते**—स्वप्ने। योगमहिमनिर्मितत्वेन व्याघ्रशरीरस्य कृत्रिमत्वम्। **टीकायां बुद्धिमनसोरिति**—अहं मनसा सन्दिहे, बुद्ध्या निश्चिनोमीति कर्तृकरणभावावगमादिति भावः। **यथाश्रुत इति**। आरोपित इति न व्याख्येयमिति भावः।

P. 6-5

**टीकायां संसारश्चेति**। अहंममाध्यासादिरूपः संसार आत्मयाथात्म्यानुभवेन तदननुभवनिवर्तनेन निवर्तनीय इत्यर्थः। स चानुभवः किमनादिः, उत आगन्तुकः? नाद्य इत्याह—**टीकायां स चेदिति**। द्वितीयेऽपि, किं सर्वजनीनप्रत्ययगात्मविषयक एव सः, उताकर्तृभोक्तृब्रह्माभिन्नविषयक इति विकल्प्य, प्रथमकल्पे अननुभवस्य निवर्तनीयस्यासिद्धिरित्याह—**टीकायां कुतश्चेति**।

द्वितीयं शङ्कते—**नन्विति**। **टीकायां-अन्यथयितुं** अन्यथाकर्तुं। अकर्तृभोक्तृरूपं कर्तुं इत्यर्थः। **युक्तमिति निर्देशादिति**। भाष्य इति शेषः। **पुरुषान्तरवचन इति**। आत्ममात्रवाचकत्वेऽपि संबोध्यत्वं प्रयोगोपाधिमाश्रित्य पुरुषान्तरे प्रयोगात्तत्प्रतिपादक इत्यर्थः। **तथा त्वङ्कारेति**। त्वमहमिति गौणं सामानाधिकरण्यमित्यर्थः। P. 6-9

**दृश्यते चेति**। पटः शुक्ल इति शुक्लशब्दो गुणवाचको गुणिनि निरूढलक्षणया प्रयुक्तः। रथाङ्गशब्दस्तु चक्रवाकशब्दैकदेशचक्रशब्दपर्यायतया तद्वाच्ये चक्रवाके सांप्रतिक्या संप्रतिभवया लक्षणया प्रयुक्त इत्यर्थः। एवं गौणत्वाविशेषेऽपि निरूढसांप्रतिकते युक्ते इति, [१]भेदस्फुटीकरणार्थं सांप्रतिकीं गौणीमाश्रित्य, **भाष्ये युष्मच्छब्दप्रयोग** इति भावः। P. 7-2

---

१. भाष्ये युष्मच्छब्दः त्वमहमित्यादिवत् सांप्रतिकगौणवृत्तिमाश्रित्य न प्रयुक्तः, युष्मदस्मत्प्रत्ययगोचरयोरित्युक्ते तयोर्भेदः स्फुटो भाति। अभेदबोधकस्य त्वमहमिति गौणसामानाधिकरण्यप्रयोगस्य संभवेऽपि, तस्य निरूढत्वाभावेन सांप्रतिकत्वस्यैवाश्रयणात् भेदातिरोधानात्। न तथा इदमस्मत्प्रत्ययगोचरयोरित्युक्ते तयोः भेदः स्फुटो भाति। इमे वयमिति गौणसामानाधिकरण्यप्रयोगस्य निरूढत्वेन मुख्यायमानत्वेन भेदतिरोधानात् इत्येव भाष्याशयः। एवञ्च आभोगवाक्यस्य त्वमहमिति सामानाधिकरण्यप्रयोगे युष्मच्छब्दे भेदातिरोधायकसांप्रतिकगौणवृत्तेरेव संभवमाश्रित्य भेदस्फुटीकरणार्थं भाष्ये युष्मच्छब्दप्रयोग इत्यर्थः॥

इदमस्मत्प्रत्ययगोचरयोरिति वक्तव्ये इति टीकायां युष्मदस्मच्छब्दयोः पराक्प्रत्यक्त्वलक्षकत्वकथनेन, युष्मदस्मत्प्रत्ययगोचरयोरिति पराक्प्रत्यक्प्रत्ययगोचरयोरित्येवं व्याख्यातम्। [1]स्फुटसामानाधिकरण्यप्रत्यययोग्यपराक्त्वविलक्षणपराक्त्वप्रतिपत्त्यर्थं च युष्मच्छब्देन तन्निर्देशः।

अत एव '[2]प्रत्ययोत्तरपदयोश्च' इति सूत्रेण प्रत्यये उत्तरपदे च परतः युष्मदस्मदोर्मपर्यन्तस्य यथाक्रमं, त्व-म-इत्यादेशयोर्विधानात्, त्वदीयं मदीयं, त्वत्पुत्रो मत्पुत्र, इत्यादिवत् त्वन्मत्प्रत्ययगोचरयोरिति भवितव्यम्, 'त्यदादीनि सर्वैर्नित्यम्[3]' इत्येकशेषविधानात् अस्मच्छब्दस्यैव शेषत्वमिति च शङ्काद्वयं निरस्तम्।

अत्र युष्मदस्मच्छब्दयोर्लाक्षणिकतया सर्वनामसंज्ञावैधुर्येण यथोक्तकार्याप्रसक्तेः। मुख्ययोरेव सर्वादिगणपठितत्वेन तत्रैव तत्कार्यप्रवृत्त्यौचित्यात्। यूयं वयमिति प्रत्ययगोचरयोरिति बहुवचनान्तस्यैव प्रयोगाभ्युपगमेन, 'प्रत्ययोत्तरपदयोश्च' इति सूत्रेण च 'त्वमावेकवचने' इत्यधिकारबलादेकार्थवाचिनोरेव युष्मदस्मदोर्मपर्यन्तस्य त्वमादेशविधानान्न प्रकृते तत्प्रसक्तिरित्यप्याहुः।

विषयविषयिणोरिति भाष्यव्याख्यानार्थं चित्स्वभाव इत्यादि टीका। तत्र बुद्धिरन्तःकरणम्। इन्द्रियाणि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च। विषयाः वियदादयः शब्दादयश्च। एतेषां विषयशब्दवाच्यत्वं अवयवव्युत्पत्त्या दर्शयितुमेते हीत्यादिटीका अवबध्नन्तीति, 'षिञ् बन्धने' इति स्मरणात् इति भावः, सहानवस्थानमिति। विरुद्धस्वभावयोरिति पदनिर्देश्यमिति भावः।

P. 7-4

---

१. स्फुटं - सामानाधिकरण्यप्रत्यययोग्यपराक्त्वविलक्षणं च यत् पराक्त्वं तत्प्रतिपत्त्यर्थमित्यर्थः। इदंशब्दापेक्षया युष्मच्छब्देन पराक्त्वं स्फुटं प्रतीयते। इमे वयमिति बहुलं प्रयोगात् इदंशब्दोक्तं पराक्त्वं सामानाधिकरण्यप्रत्यययोग्यं अत एवास्फुटं, त्वमहमिति बहुलं प्रयोगाभावात् युष्मच्छब्दोक्तं पराक्त्वं सामानाधिकरण्यप्रत्ययायोग्यं अत एव स्फुटं इत्यर्थः। यद्वा-स्फुटं सामानाधिकरण्यमित्येवान्वयः। स्फुटत्वं च सामानाधिकरण्ये पदार्थभेदतिरोधायकत्वम्। तादृशसामानाधिकरण्यप्रत्यययोग्यं पराक्त्वं इदंशब्दात् प्रतीयते। इमे वयमिति बहुलं प्रयोगात् तयोर्भेदतिरोधानात्। त्वमहमिति बहुलप्रयोगाभावात् तयोर्भेदातिरोधानात् युष्मच्छब्दात् पूर्वोक्तपराक्त्वविलक्षणं पराक्त्वं प्रतीयते।
२. पा. सू. ७-२-९८, ३. पा. सू. १-१-७४.

दृष्टान्ते परस्परात्मत्वेनास्फुरणमसिद्धमिति शङ्कते—**नन्विति**। यस्य भेदग्रहः, तस्य तदस्तीति परिहरति-**तत्राहेति**। **वृत्तिशब्दव्याख्यानार्थं—वर्तन इति**। स्वरूपे इत्यर्थः। **अविवेकादिति**। भेदाग्रहादित्यर्थः। P. 7-6 **तन्मात्रेति**। विरोधेन यथाभाष्यं इतरेतरभावानुपपत्तिमात्रसाधने वास्तवतादात्म्याभावस्य सिद्धान्तिनाप्यङ्गीकृतत्वेन सिद्धसाधनापत्तेरित्यर्थः। **धर्मिणोरपीति**। धर्मिधर्मयोरिव धर्मिणोः संसर्गाध्यासानभ्युपगमादिति भावः। P. 7-8

**टीकायां तद्धर्माणां त्विति**। तथा च चिदात्माध्यस्तकर्तृत्वभोक्तृत्वाद्यनर्थनिवृत्तिरेव शास्त्रस्य प्रयोजनमिति भावः। धर्माध्यासस्यापि विवेकाग्रहपूर्वकत्वात् कथं बुद्धिपूर्वकपरिवर्तनवाची विनिमयशब्दः इत्यतो व्याचष्टे—**व्यत्यास इति**। तथा च व्यत्यासमात्रे लक्षणया प्रयुक्त इति भावः। P. 7-5

नीरूपस्यापि गगनस्य कूपादौ प्रतिबिंबदर्शनात् व्यभिचार इत्यत आह—**गगनस्य त्विति**। नन्वात्मनो वस्तुतः प्रतिबिंबासंभवेऽपि गगनस्येव प्रतिबिंबितत्वभ्रमोऽस्तु। तावतापि तदेकलोलीभूते देहादौ धर्माध्याससंभवात् इत्याशङ्क्य, युज्यते गगनैकलोलीभूतालोकप्रतिबिंबे गगनप्रतिबिंबत्वभ्रमेण गगनस्य सलिले प्रतिबिंबितत्वभ्रमः। प्रकृते तु नात्मैकलोलीभूतं देहादौ प्रतिबिंबयोग्यं किञ्चिदस्ति। येन तत्प्रतिबिंबे आत्मप्रतिबिंबत्वारोपेण तद्द्वारा देहादावात्मप्रतिबिंबभ्रमः स्यात् इत्याह—**आत्मनस्त्विति**। पारिशेष्यमुपपादयन्नाह—**धर्माध्यासो हीति**। P. 7-9 P. 8-1

ननु अत इत्यादिभाष्ये इतरेतरभावानुपपत्त्या अध्यासाभावसाधनं दृश्यते, तदनुपपन्नम्। तस्याः इतरेतरभावप्रतीत्यनुपपत्तिरूपाया अध्यासाभावत्वेन साध्याविशेषादित्याशङ्क्य, अनुपपत्तिः—उपपत्त्यभावः। ततश्च विवेकाग्रहरूपाध्यासोपपत्त्यभावेन हेतुना अध्यासाभावः साध्यत इति न साध्याविशेष इत्याशयेनाह—**अध्यासानुपपत्तिमिति**।

अथवेत्यादिग्रन्थः केषुचित् कोशेषु दृश्यते। स प्रौढिवादः। भाष्ये विषयविषयिणोरध्यासानुपपत्तेरेव प्रदर्शनेन, विषयविषयिप्रतीतेरध्यासलक्षणाभावप्रदर्शनपरत्वायोगात्, **एतदुक्तं भवतीत्युत्तरटीकाविरोधाच्चेति** ध्येयम्।

---

१. "अथवा 'अहं मनुष्य' इत्यादिप्रतीतौ अतस्मिंस्तत्प्रतीतित्वस्याध्यासलक्षणस्याभाव उक्तः। लक्ष्याध्यासरूपत्वस्याभावप्रदर्शनार्थं 'अतोऽस्मत्प्रत्यय' इत्यादि भाष्यम्" इत्यादिग्रन्थः इत्यर्थः॥

P. 8-5 इत्थंभावमेव दर्शयति—**चिदात्मन इति**। चिदात्मनो यदैक्यं तस्य विषये आरोप इत्यर्थः। **भाष्यसूचितामिति**। **इतरेतराविवेकेने**त्यंशेनेत्यर्थः। **टीकायां अभिदधतीति** शत्रन्तं बहुवचनान्तं पदम्। **दर्शनीये**त्यस्य विशेष्य-
P. 9-1 माह—**सुन्दरीति**। **अज्ञातत्वं सूचितमिति**। ततश्च विषयत्वसिद्धिरिति भावः। इदमुपलक्षणम्। **कथं चानुपप्लव** इत्यनेन विपर्यासविरोधिना श्रवणादिजन्येन शुद्धात्मसाक्षात्कारेण अनर्थनिवृत्तिसंभवात् प्रयोजनमपि सूचितमिति द्रष्टव्यम्।

**टीकायां ज्येष्ठत्वं** प्रथमप्रवृत्तत्वम्। न तूपजीव्यत्वम्। अतः **उप-जीव्यविरोधादित्यस्य** प्रथमप्रवृत्तप्रत्यक्षविरोधादित्यर्थः। अन्यथा ज्येष्ठ-स्यापीत्युत्तरशङ्कानुत्थितेः। **पौर्वापर्यन्यायेन** अनुपदमेव **टीकायां** प्रदर्शयिष्यमाणेनेति शेषः।

ननु **टीकायां प्रमितावनपेक्षत्वेऽपि उत्पत्तौ प्रत्यक्षापेक्षत्वात्** इत्यादिशङ्का न युक्ता। आगमज्ञानस्यैव प्रत्यक्षतया आगमस्य तज्ज्ञानस्य वा तत उत्पत्त्ययोगेन तदपेक्षत्वाभावात्। तज्जन्यप्रमित्युत्पत्तेः तदपेक्षत्वेऽपि तस्य
P. 9-2 कल्पस्य पूर्वटीकयैव निरस्तत्वादित्याशङ्क्य कल्पयोर्भेदं दर्शयन्नाह—**आगमस्येति**। अनेन, **स्वकार्ये प्रमितौ** यत् प्रमितित्वं भ्रमत्वशङ्कानिरासो विषय-परिच्छेदकत्वं वा, **तत्रानपेक्षत्वात्**, इति टीका योजिता।

**आद्यद्वयं निरस्येति**। **अपौरुषेयतये**त्यादिविशेषणद्वयेनेति शेषः। **टीकायां तद्विरोधादिति**। आगमजन्यप्रमित्यपेक्षितागमप्रत्यक्षजातीयाहमनु-भवविरोधादागमेन तत्वज्ञानस्यानुत्पत्तिलक्षणमेवाप्रामाण्यमित्यर्थः।

P. 9-4 **आगमस्य किंप्रत्यक्षेति**। वेदान्तवाक्यजन्यस्य तत्तात्पर्यविषयतत्त्व-ज्ञानस्येत्यर्थः। **व्यावहारिकेति**। व्यवहारप्रयोजनकेन प्रवृत्त्यादिव्यवहारपर्यन्तं
P 10-1 विद्यमानविषयकत्वलक्षणेन प्रामाण्येनेत्यर्थः। **टीकायां—अन्यधर्मा इति**। ध्वनिधर्मा इत्यर्थः।

**न चानन्यपरमिति टीकायाः** अभ्यासे हि भूयस्त्वमर्थस्य भवति
P. 10-2 इत्यादिटीकया पौनरुक्त्यमाशङ्क्य, प्रयोजनभेदादपौनरुक्त्यमाह—**पूर्वमिति**।

विधिवाक्यगतस्य शब्दस्य लाक्षणिकार्थासंभवेऽपि वेदान्तानां किमायतं? तेषामविधित्वादित्यत आह— **तत्तुल्यमिति**। तौल्ये हेतुः—**अनधिगतेति**।

'न विधौ परश्शब्दार्थ' इति नायमागमः। किन्त्वनुवादस्य पुरोवादानुरोधितया लाक्षणिकत्वसंभवेऽपि विधावत्यन्तानधिगतार्थज्ञापके यथाश्रुत्यैव तदर्थः प्रतिपत्तव्य इति न्यायः। स च वेदान्तेष्वपि तुल्यः इति भावः। यद्यपि 'सोमेन यजेत' इत्यादौ मत्वर्थलक्षणाभ्युपगमान्नायं नियमः समस्ति, तथापि बलवद्बाधके सत्येवान्यपरत्वं, नान्यथेति भावः।

किमुपजीव्यत्वं प्रत्यक्षस्य प्राबल्ये तन्त्रं? उत ज्येष्ठत्वमिति विकल्प्य, प्रथमं निराकृत्य, द्वितीयं निराकरोति इत्याह—**एवं तावदिति**। अनपेक्षितस्य पूर्वस्यापि बाध्यत्वे जैमिनिसूत्रसंवादमाह—**टीकायां**—**तथाचेति**।

**ज्योतिष्टोम इति**। **यज्ञशालातो** हविर्धानात् **निर्गच्छतां ऋत्विजां**, 'अध्वर्युं प्रस्तोतान्वारभते, प्रस्तोतारमुद्गातोद्गातारं प्रतिहर्ता, प्रतिहर्तारं ब्रह्मा, ब्रह्माणं यजमानो, यजमानं प्रशास्ता' इति श्रुतानामृत्विग्यजमानानां इत्यर्थः। **अपच्छिन्द्यात्** विच्छिन्नसंबन्धो भवेदित्यर्थः। **किं पूर्वमिति**। पूर्वोत्पन्ननिमित्तकं प्रायश्चित्तमित्यर्थः। **पूर्वस्य नैमित्तिकस्येति**। निमित्ते सति कर्तव्यमिति अवगमपूर्वकस्य पूर्वस्य प्रायश्चित्तस्येत्यर्थः।

P. 10-6
P. 11-1

सौत्रप्रतिज्ञासूचितं हेतुमाह—**उत्तरस्येति**। **तद्बाधकतयेति**। पूर्वोत्पन्ननिमित्तकप्रायश्चित्तकर्तव्यतावगमबाधनद्वारा तत्प्रायश्चित्तबाधकतयेत्यर्थः। पूर्वस्यैव परबाधकतयोदयः किं न स्यादित्यत आह—**पूर्वोदयेति**। **श्लोके पूर्वमिति** प्रथमान्तं पदम्। पूर्वोत्पन्नं ज्ञानमित्यर्थः। **अनन्यथोत्पादादिति**। पूर्वबाधात्मताव्यतिरिक्तेन प्रकारेणोत्पादानर्हत्वादित्यर्थः।

P. 11-2

दुर्बलप्रमाणेनातिदेशेन कुशानां कथं प्रथमतः प्राप्तिरित्यत आह—**उपकाराकाङ्क्षिण्यामिति**। विकृतिभावनया प्रथममुपकारस्यैवाकाङ्क्षितत्वेन शराणां अक्लृप्तोपकारकतया तत्प्रापकेण प्रत्यक्षेणापि शरशास्त्रेण न विकृतिभावनापेक्षितोपकारसमर्पणमिति दुर्बलेनाप्यतिदेशेनैव क्लृप्तोपकारकुशविषयेणोपकारमुखेन कुशा एव प्रथमं प्राप्ता इत्यर्थः।

**निरपेक्षैरिति।** यद्यपि शरशास्त्रं चोदकापेक्षम्, 'शरमयं बर्हिर्भवति' इति बर्हिःकार्ये शरविधानात्। तथापि न स्वबाध्ये कुशांशे तदपेक्षेति भावः। ततश्च यथा चरमभाव्यपच्छेदनिमित्तकप्रायश्चित्तकर्तव्यताबुद्ध्या पूर्वापच्छेदनिमित्त-कप्रायश्चित्तकर्तव्यताबुद्धेः तस्मिन् प्रयोगे भ्रमत्वापादनं बाधः, तथैव वेदान्त-वाक्यजन्यया चरमभाविन्यापि सच्चिदानन्दब्रह्माभेदबुद्ध्या निरपेक्षया कर्तृत्वादि-विशिष्टविषयिणी प्रत्यक्षबुद्धिर्बाध्यते इत्यर्थः।

ननु निरवकाशस्य प्रत्यक्षस्य कथं बाधः?। नच व्यावहारिकविषये सावकाशम्। तस्यापि कालान्तरे बाध्यत्वात्। प्रातीतिकप्रामाण्यवत् व्यावहारिक-प्रामाण्यस्याप्यप्रामाण्यत्वात्। न च निरवकाशस्यापि शुक्तिरजतज्ञानवदत्यन्त-बाधे को दोष इति वाच्यम्। तस्य दोषमूलकत्वेन वैषम्यादित्याशङ्क्य, प्रत्यक्ष-स्यापि तुल्यं दोषमूलकत्वम् वादिसंप्रतिपत्तेरिति दर्शयितुमपि चेत्यादिटीके-

P. 11-4 त्याह—**एवं तावदिति।**

अहमिहेत्यादिप्रतीतेः देहप्रादेशिकत्वमेव विषय इति वदन् प्रष्टव्यः— किं देहगतत्वेनैव प्रादेशिकत्वं विषयः उत आत्मगतत्वेन। आद्येऽपि किं शुद्धस्यैव देहस्य धर्मः, किं वा शबलस्य, आहो उपचरितात्मभावस्य? इति विकल्प्य, तत्र कल्पद्वयं निराकर्तुं—**न हि तदेवमिति टीका।** तत्र शुद्धदेहविषयत्वे अहमिति सामानाधिकरण्यं न स्यात्, इति प्रथमकल्पनिराकरणं सिद्धवत्कृत्य, द्वितीयकल्पनिराकरणं स्फोरयति—**तव मत इति।** अध्यासमाक्षिपतस्तव मत इत्यर्थः।

P. 11-7 तृतीयं शङ्कते—**नन्विति।** अस्मिन् कल्पे ज्ञातृत्वं मुख्यमुपचरितं वा? द्वयमपि निराकर्तुं—**गौणत्वे वेति टीका।** तत्र यथा उपचरिताग्निभावे माणवके दग्धृत्वानुल्लेखः, तथैव जानान इति देहे ज्ञातृत्वोल्लेखो न स्यादित्येवं प्रथमकल्प-निराकरणपरतया टीकां योजयति—**उपचरितेति।** द्वितीये जानान इति व्यर्थं स्यात। वक्त्रा स्वज्ञानाप्रकाशनादित्येवं टीकां योजयन् तं कल्पं आशङ्क्य

---

१. किं त्वया अयं विषयो ज्ञात इति प्रश्नानन्तरं उक्ते—'अहमिहैवास्मि सदने जानानः' इति वक्तुः स्वज्ञानप्रकाशनपरे वाक्ये अज्ञातरि देहे ज्ञातृत्वोपचारे वक्त्रा स्वज्ञानं प्रकाशितं न स्यात्। तथा च जानान इति व्यर्थं इति भावः॥

निराकरोति—**न चेति।** इदानीमात्मगतत्वेनैव प्रादेशिकत्वं विषय इति कल्पमुत्थापयति—**अथेति।** **प्रादेशिकत्वं** प्रदेशवर्तित्वम्। P. 11-9

अग्निहोत्रशब्दस्य नैयमिकाग्निहोत्रवचनत्वमधिकरणानुक्रमेण दर्शयति—**प्रमाणेति। यदग्नये चेति।** नच प्राप्ते कर्मण्यग्निप्रजापत्योरुभयोरपि विधौ वाक्यभेदः स्यादिति वाच्यम्। चशब्दनिर्दिष्टस्य समुच्चयस्यैव विधानेन तद्द्वारा देवतयोः कर्मान्वयात्। स्पष्टं चैतन्न्यायसुधायाम्। **प्रख्यापनादिति।** अनेन P. 11-14 तस्य विधित्सितस्य गुणस्य प्रख्यं प्रख्यापकमन्यत् शास्त्रं यस्मिन्नग्निहोत्रादिपदे तन्नामधेयमिति नामधेयपदस्य यस्मिन्निति पदस्य चानुषङ्गेण सूत्रव्याख्या सूचिता।

ननु पूर्वपक्षसिद्धान्तयोः व्यधिकरणबहुव्रीहिरेव किमर्थमिष्यते। होत्रशब्दस्य भावे त्रन्प्रत्ययान्तताश्रयणे अग्नये होत्रं होम इति चतुर्थीसमासस्यापि संभवादित्यत आह—**न चात्रेति।** तादर्थ्यप्रकृतिविकारभावयोरभावादित्यर्थः। P. 12-1 'चतुर्थी तदर्थे'ति[1] सूत्रे 'तदर्थेन प्रकृतिविकारभावे समास इष्यत' इति वार्तिकेन प्रकृतिविकारभावस्थल एव यूपाय दार्वित्यादौ समासस्य नियमितत्वादिति भावः।

**कुण्डपायिनामिति।** कुण्डपायिनामयनाख्ये सत्रे 'मासमग्निहोत्रं जुहोति' P. 12-3 इति श्रुतं यद्वाक्यं, तत्रेत्यर्थः। किं मासस्य स्वरूपेणैव विधेयत्वम्, उत तात्पर्यगत्या 'सायं जुहोती'त्यादौ सायंकालादेरिव? नाद्य इत्याह—**न तावदिति।** P. 12-5 न द्वितीय इत्याह—**नापीति।** किं स्वरूपेणैव नित्याग्निहोत्रस्य सन्निधिरुत नाम्ना?। आद्य आह—**तस्येति।** सायमादिवाक्यस्थले तु स्वरूपेणैव सन्निधेर्वैषम्यमिति भावः।

द्वितीयमाशङ्क्य निराकरोति—**न चेति। अन्यत्रेति।** नित्याग्निहोत्रवाक्य इत्यर्थः। ततश्च तादृशस्यैव विधानार्हत्वान्नाम्ना च तद्रूपानुपस्थितेराख्यातपरतन्त्रमेव नामेति तत्स्वारस्यावगतं कर्मान्तरत्वमप्रतिहतमिति भावः। **तस्मादिति।** P. 13-1 अवच्छेदकधात्वर्थभेदादित्यर्थः। सूत्रगतप्रयोजनपदेन प्रयुज्यते विधीयते इति व्युत्पत्त्या भावनोच्यत इति दर्शयति—**विधेयेति।**

---

१. पा. सू. २-१-३६.

साध्यसादृश्यमेव दर्शयति—**सप्तमे स्थितमिति**। अग्निहोत्रशब्दो मासाग्निहोत्रे गौणो वा न वेति तदर्थसंशयं सिद्धवत्कृत्य पूर्वपक्षमाह—**तत्रेति**। उद्भिदादिवत् सामानाधिकरण्यादेव नामत्वमवगम्यत इत्यर्थः। अवयवार्थानुगमा- P. 13-5 भावान्न नामत्वमित्यनुशयेन गुणविधित्वपक्षमालम्बते पूर्वपक्षी—**अग्नीति**।

न तावच्चतुर्थीतत्पुरुषः। प्रकृतिविकारभावाभावात्। नापि बहुव्रीहिः। व्यधिकरणबहुव्रीहिस्वीकारस्य प्रमाणान्तरायत्तत्वेन तत्प्रख्यशास्त्रबलेन नित्याग्निहोत्रवाक्ये तथाभ्युपगमेऽपि प्रकृते तदभ्युपगमायोगात्। एतदपेक्षया नित्ये रूढस्य गौणत्वौचित्याच्च। तदेतदाह—**न तावदिति**। सामानाधिकरण्यमात्रमकिञ्चित्करम्। अनेकार्थत्वापत्तेः। विनिगमकसद्भावेन नित्ये मुख्यत्वाच्चेत्याह—**तत्सिद्ध इति**। **तत्** तस्मात् कारणात्, **सिद्धे** कर्मणि गुणविधानासंभवात्, P. 13-6 कर्मण एव विधेयत्वेन, **सिद्धे कर्मभेदे** इत्यर्थः।

परशब्दस्य परत्र मुख्यसादृश्यमुपादाय प्रवृत्तावपि कथं धर्मातिदेशकत्वमित्यत आह—**तच्च सादृश्यमिति**। **तत्सिद्ध्यर्थमिति**। विहितसादृश्य- P. 13-10 निर्वाहार्थमित्यर्थः। सूत्रं व्याचष्टे—**क्रियाया इति**। विधिशब्दस्य विधीयत इति विधिरिति, कर्मव्युत्पत्तिमाश्रित्याह—**विधेयेति**। उदाहरणान्तरस्य प्रयोजनं P. 13-11 दर्शयन्नाह—**लोकसिद्धेति**।

**टीकायां—सिंहादनुभवसिद्धभेदे माणवक इत्यन्वयः। न त्वहङ्कारस्येति टीकायामहङ्कारोऽहंशब्दः। तत्त्वेति**। निर्लुठितगर्भतयेत्यर्थः। P. 13-13 **वादीति**। वादिनां देहतदतिरिक्तत्वादिविवादो न स्यादित्यर्थः। द्वितीयं कल्पं निराकरोतीत्याह—**एवमिति**। **भेदे सिद्ध इति टीकायां** सिद्धिर्निश्चयः। फलितमाह—**निरूढेऽपीति**। **नार्थयोस्तादात्म्यं प्रतीयते**। भेदनिश्चयादिति शेषः। अन्यथा इदमपि तैलशब्दवाच्यमित्यभिमानो न स्यादिति भावः। **टीकायां—अभेदाध्यवसायः** इत्यनन्तरं, प्रकृते तु सोऽस्तीति, शेषमभिप्रेत्याह—**प्रतीयते त्विति**। **सिद्धं गौणत्वमि**त्यन्वयं व्यावर्तयति— P. 13-15 **तत्तस्मादिति**।

किमभिज्ञारूपाहंप्रत्ययादात्मनो देहादिभ्यो भेदनिश्चयः, किं वा प्रत्यभिज्ञारूपादिति विकल्प्य, प्रथमं **न त्वहंकारस्येत्यादिना** निराकृत्य, मम देहो

मम चक्षुरहं जानामीत्यादिप्रत्ययानां, ममात्मा ममान्तःकरणमित्यादिप्रत्ययानामिव शबलिताशबलितभेदग्राहकाणां स्पष्टं भेदावभासकत्वाभावेऽपि योऽहं बाल्ये पितरावन्वभूवं, स एवाहं स्थाविरे प्रणप्तॄननुभवामीत्यादिप्रत्यभिज्ञानानां बालस्थविरशरीरभेदावभासकानां तदुभयानुसन्धातुरेकस्यात्मनः ताभ्यां भेदावभासकत्वाद्वस्तु प्रत्यभिज्ञारूपाहंप्रत्ययात् भेदनिश्चय इति द्वितीयं कल्पमाशङ्क्य निराकरोतीत्याह्—**अभिज्ञारूपेति** ।

किमयं भेदानुभवः सर्वेषामपि, ? अथवा परीक्षकाणामेवेति विकल्प्य, प्रथमं निराकर्तुं **परीक्षकाणामित्यादिटीका** । सा न युक्ता । प्रत्यभिज्ञाप्रत्यक्षस्य सर्वसाधारणत्वादित्याशङ्क्य, किमत्र लौकिकानां प्रत्यक्षेणैव भेदो भासते, उत तत्पूर्वकेणानुमानेनेति विकल्प्य, प्रथमं निराकरोति—**आत्मैक्यमिति** । योऽहं सोऽहमित्यहंपदार्थस्य तत्तेदन्तास्पदत्वेन भानवत् बालस्थविरशरीरप्रतियोगिकभेदास्पदत्वेनानवभासनादात्मैक्यमेव प्रत्यभिज्ञाविषयो न देहाद्भेद इत्यर्थः ।

द्वितीयमनुजानाति—**भिन्नाभ्यामिति** । बालस्थविरशरीरे भिन्ने भिन्नपरिमाणत्वात् । न चाप्रयोजकत्वम् । भिन्नयोः परिमाणयोरवयवोपचयापचयाधीनत्वेन, तदुपचये पूर्वावयविनोऽवान्तरकार्यरूपतया, तत्सहितानामागन्तुकावयवानामवयव्यन्तरारंभकत्वावश्यम्भावात् । तदपचये च कतिपयावयवनाशेऽपि, अवयविनाशावश्यंभावेन शिष्टानामवयवानामवयव्यन्तरारम्भकत्वस्यावश्यकत्वाच्चेत्यनुमानेनैव शरीरयोः परस्परभेदोऽपि निश्चेतव्यः । न तु प्रत्यक्षेण । तयोर्भिन्नकालतया तद्भेदस्य प्रत्यक्षायोगात् । योऽयं मदीयो देहः पूर्वं पुष्ट आसीत्, स एवेदानीं कृश इत्यभेदप्रत्यभिज्ञाया अपि दर्शनेन यथोक्तानुमानोपोद्बलनमन्तरा प्रत्यक्षेण तन्निश्चयायोगाच्च । ततश्च शरीरयोरेवं भेदं प्रसाध्य,

P. 14.1

---

१. 'मम देहः, मम चक्षुः, मम मनः' इति देहत्वाद्याकारेण भेदग्रहः 'स्थूलोऽह'मिति स्थूलत्वाद्याकारेणाभेदाध्यासाविरोधी, रूपान्तरेण भेदग्रहस्य रूपान्तरेणाभेदग्रहाविरोधित्वात्, 'न स्थूलोऽहम्, न मनुष्योऽहम्, नाहमन्धः' इत्यादिरूपेण तु लोके न कस्यापि भेदग्रहस्समस्ति, येन 'स्थूलोह'मित्यादिरध्यासो न स्यात् । अपि चायं 'मम देह' इत्यादिः संबन्धग्रहः न साक्षाद्भेदग्रहः । सच 'शिलापुत्रस्य शरीरम्' 'घटस्य स्वरूपमित्यभेदेऽपि दृश्यत इति, कथं ततो भेदनिश्चयः ? तथा चाभिज्ञारूपाहंप्रत्ययस्य न स्पष्टं भेदावभासकत्वमिति भावः ।

तदनन्तरं शरीरात्मानौ भिन्नौ, एकत्वनानात्वविरुद्धधर्माश्रयत्वादित्यनुमानान्तरादात्मनि शरीरभेदः साधनीय इत्यर्थः।

निराकरोति—**तच्चेति**। तद्यथोक्तमनुमानं व्याप्त्यादिप्रतिसन्धानसापेक्षतया व्याप्त्यादिनिश्चायकशास्त्रपरिचयमन्तरा न लौकिकैर्ज्ञातुं शक्यमित्यर्थः। लोकप्रसिद्धकार्यकारणभाववद्धूमवह्न्यादिव्याप्तेः शास्त्रेण विना गृहीतुं शक्यत्वेऽपि परिमाणभेदाधीनद्रव्यभेदादिस्थलीयव्याप्त्यादिस्वरूपं न शास्त्रेण विना सुग्रहमिति भावः।

द्वितीयमाशङ्कते—**तर्हीति। गौण इति**। ततश्च न सर्वसाधारण्येन विषयसिद्धिरिति भावः। परीक्षकाणामपि किं सर्वदा भेदग्रहसत्वादध्यासायोगः उत विचारसमये? आद्यं **टीकया** निराकरोति—**नेत्याहेति। टीकायां—लोकसामान्यं** लोकसाम्यम्। प्रवृत्त्यादिलक्षणव्यवहारसमये विदुषामपि पश्वादिभिरविशेषादिति **टीकोदाहृतभाष्यफक्किकार्थः**।

P. 14 3 **टीकायां—शास्त्रचिन्तका** इति। शास्त्रचिन्तकाः सन्तः खल्वेवं विवेचयन्ति; न प्रतिपत्तारः सन्त इत्यर्थः। ततश्च शास्त्रचिन्तनदशायामेव विवेकग्रहो न प्रतिपत्तिदशायामिति भावः। द्वितीयं निराकरोति—**अपरोक्षेति**। दिङ्मोहादौ तथा दर्शनात् इति भावः।

**टीकायां घटशब्देन** सेचनघट उच्यते। **मणिकादिशब्दैः** तदधिकपरिमाणा विस्तीर्णमुखा मार्तिका उच्यन्ते। तथा चापस्तम्बगृह्यं—'मणिकं प्रतिष्ठाप्य तस्मिंश्चतुर उदकुंभानानयति' इति।

P. 14 3 **आत्मावयवानामिति**। आत्मशब्दवाच्यानामवयवानामित्यर्थः। **काकतालीया वेति**। आगच्छतः काकस्य पततस्तालफलस्य च यथा यादृच्छिकस्समागमः, तथा समुदायापत्तिरपि यादृच्छिकी वेत्यर्थः। **आद्यं निरस्येति**। किं शरीरावयवे वृक्णे सत्यात्मावयवोऽपि वृक्णः, उत न? नान्त्यः। तस्य शरीरव्यतिरिक्तप्रदेशे वर्तमानस्य शरीरोपाधिकसमुदायभावापत्त्ययोगेन व्यर्थत्वात्, अवयवान्तरेषु निबिडेषु प्रवेशायोगाच्च। नाद्यः। व्यासक्तस्य चैतन्यस्य कतिपयसमुदायिनाशे अयोगादित्येवं **समुदायस्य त्वित्यादिटीकया** निरस्येत्यर्थः।

शीर्णत्वे हेतुमाह—**यादृच्छिकेति**। मूर्च्छादिदशायां अचैतन्याभ्युपगमादिष्टापत्तिं वारयति—**स्वस्थानामिति**। **विवेकासिद्धाविति**। 'माणवको न सिंह' इतिवन्नाहं कृशो नाहमन्धो, नाहं गच्छामि इति निर्विचिकित्सभेदप्रत्यक्षादर्शनादिति भावः। **विषयसिद्धिमिति**। अहंप्रत्ययाविषयीभूताकर्तृभोक्तृस्वरूपस्यैव विषयत्वलाभादिति भावः। **प्रयोजनसिद्धिमिति**। अध्यासात्मकाहमनुभवप्रसञ्जितकर्तृत्वभोक्तृत्वदुःखशोकाद्यनर्थनिवृत्तेरौपनिषदात्मसाक्षात्कारजन्यायाः प्रयोजनत्वसंभवादित्यर्थः। P. 15-1

**टीकायां—उपन्याख्यानमिति**। **तथापीति भाष्ये** संग्रहेण व्याख्यातस्याहंप्रत्ययस्य स्वरूपादिभिः प्रपञ्चनम्। तथाच—**तस्योपव्याख्यानमिति छान्दोग्यवाक्यव्याख्यानंभाष्यम्**—एवमुपासनमेवंविभूत्येवंफलमित्यादिकथनमुपव्याख्यानमिति। **स्वरूपशब्देन** धर्म्यध्यासस्वरूपं धर्माध्यासस्वरूपं च गृह्यते इत्याह—**स्वरूपमिति**। P. 15-4

व्यवहारे इदमभिलापो वार्यते, इदंविषयकत्वं वा? आद्यं **न प्रतीतित इति टीकांशेन** परिहरति—**आशङ्क्याहेति**। द्वितीयं **वस्तुत इति टीकाभिप्रायकथनेन** परिहरति—**अहमिति प्रतीतेऽपीति**। ततश्च तद्गतेदंमंशद्योतनाय **भाष्ये इदंशब्दप्रयोग** इति भावः। P. 15-5

**एकस्येति**। अध्यासे देवदत्तादेः कर्तृत्वात्, **व्यवहार** इत्यत्र गम्यमानास्तिधातुनिर्दिष्टभवनक्रियायां च व्यवहारस्यैव कर्तृत्वादित्यर्थः। कृतेरिव धात्वर्थस्यापि कर्त्राक्षेपकत्वात् 'भुक्त्वा गमनम्' इत्यादिवदविरोध इत्याह—**व्यवहारेति**। P. 16-1

**उपसंहारभाष्ये**। **'एवमयमनादिरनन्त' इत्यादिभाष्ये**। **अध्यास एवेति**। उपक्रमस्थस्यापि व्यवहारशब्दस्याभिज्ञाभिलापसाधारणस्योपसंहारस्थेन विशेषवाचकेनाध्यासपदेनार्थनिर्णयो युक्त इति भावः। **अध्यस्य व्यवहार इति** स्ववाक्यगतोपपदादेव निर्णयसिद्धेरार्थिकार्थस्य पश्चादुपसंहारसंभवाच्च न दोष इति परिहरति—**उच्यते इति**। P. 16-3 P. 16-5

पौर्वापर्यायोगे हेतुमाह—**चित इति**। अध्यासाधीनबुद्धितादात्म्याभावे शुद्धायाः चित आश्रयत्वानर्हतया, निराश्रयक्रियाया एवासंभवे कुतः

पौर्वापर्यमित्यर्थः। आद्यं दोषं स्वयं परिहरति—**तन्नेति**। पौर्वापर्यमात्रेऽपि क्त्वाप्रत्ययदर्शनात् अस्पष्टत्वप्रसक्तिरित्याह—**सुप्त्वेति**।

P. 16-5 **टीकायां–अथाविवेक एवेति**। जातिव्यक्त्योरिव वस्तुसत्तादात्म्यमेवेत्यर्थः। धर्मधर्म्यध्यासयोरेव द्विविधव्यवहारहेतुत्वं युक्तम्, न तु मिथुनीकरणमात्रस्य। ततश्च योग्यताविरहात् आनन्तर्यमात्रमकिञ्चित्करमित्याशयेनाह—**मिथुनीकरणादिति**। युगळीकरणं न तादात्म्यम्, किन्तु साहित्यं एकबुद्धिविषयत्वलक्षणम्, तावतापि भेदाग्रहसिद्धेरित्याशयेनाह—**युगळीकरणं नामेति**। **किमिति नोक्तमिति**। सुबोधत्वादिति भावः। **टीकायां**—संवृतिसच्छब्देन प्रतीतिमात्रसिद्धमुच्यते। **च्विप्रत्ययो भवतीति**। कृभ्वस्तियोगे सति संपत्तिकर्तरि च्विप्रत्ययो भवतीत्यर्थः। सत्यानृतयोर्मिथुनभावमप्राप्तयोरेव मिथुनभावस्य विवक्षितत्वादिति भावः। P. 17-3 **अस्य च्वाविति**। च्वेर्लुप्तत्वेऽपि 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति शास्त्रादकारस्य च्वौ परत ईकार इत्यर्थः।

P. 17-4 **नैसर्गिक इति** भाष्यस्य तात्पर्यवर्णने बीजमाह—**समारोपेति**। **पूर्वपूर्वमिथ्याज्ञानोपदर्शितस्येति टीकायां** मिथ्याज्ञानशब्देन तत्संस्कारो विवक्षितः। उत्तरोत्तराध्यासहेतुधर्मिज्ञानादिकाले पूर्वपूर्वमिथ्याज्ञानस्य नष्टत्वेन तस्य बुद्धीन्द्रियादिविषयोपदर्शनद्वारा उत्तरोत्तराध्यासहेतुत्वायोगात्। ततश्च, **अनादित्वादिति टीकायामनादित्वमपि** पूर्वपूर्वमिथ्याज्ञानसंस्काराणामुत्तरोत्तरमिथ्याज्ञानानां चोक्तम्। एवं च तदनादित्वं, किं व्यक्त्योर्जात्योः समुदाययोर्वेति विकल्प्य कैश्चिद्दूषितमित्याह—**अत्रैक इति**।

बीजत्वाङ्कुरत्वजात्यवच्छिन्नयोरिव भ्रमत्वतत्संस्कारत्वजात्यवच्छिन्नयोरपि निमित्तनैमित्तिकभावो युज्यत एवेति परिहरति—**तत्र ब्रूम इति**।

ननु टीकाकृता किमित्यध्यासव्यवहारयोरेवानादित्वमुक्तम्। भ्रमोपादानस्य मूलाज्ञानस्यापि वक्तव्यत्वात्। अतएव **मिथ्याज्ञाननिमित्त इति भाष्येण** मिथ्याभूतमज्ञानं निमित्तमुपादानं यस्येति तदुपादानमुक्तमिति [1]केचित् व्याचक्षत इत्याशङ्क्य, **शङ्काभाष्ये**—विवेकाग्रहविरहेणैवाध्यासाक्षेपात्, तत्सद्भाव एवाध्यासोपयोगितया समर्थनीयः। अध्यासस्य दुरपह्नवत्वाय तत्फलकीर्तनम्।

---

१. पञ्चपादिकाकारादयः॥

विवेकाग्रहोपयोगितया च मिथुनीकरणमुक्तम्। तत्र च परस्पराश्रयपरिहाराय निमित्तनैमित्तिकयोः अध्यासव्यवहारयोरेवानादित्वमुक्तम्। न तु भ्रमोपादानस्यापि, अनुपयोगात्। अत एव न भाष्यस्य मूलाज्ञानपरत्वं। निमित्तशब्दविरोधाच्च। तदनादित्वं तु देवताधिकरण एव संगतमिति तत्रैव वक्ष्यत इत्याशयेन परिहरति—**अत्र चेति**। P. 17-8

ननु **प्रकाशमानतैव सत्ते**त्युत्तरग्रन्थपर्यालोचनया शङ्कावादिना प्रतीयमानस्यापारमार्थिकत्वं नेष्यते। ततश्च **न तु प्रतीयमानस्य** इति **टीका**नुपपत्तिरित्याशङ्क्य, 'प्रतीतिमात्रमारोपे तन्त्रम्, नतु प्रतीयमानस्य परमार्थसत्तापि' इति त्वयोक्तं सत्यमिति सिद्धान्त्युक्तानुवादेन तन्निराकरणपरतया टीकायोजनामभिप्रेत्य व्याचष्टे—**सत्यानृते इति**। अनेन **परमार्थसत्ते**त्यनन्तरं इतिशब्दाध्याहारेण, इति यत् त्वयोक्तं, **तदद्धा** सत्यमित्येवं **टीका** व्याख्याता। P. 17-10

ननु अनृतस्य प्रतीत्यसंभवे विवेकग्रहस्य दूरापास्तत्वात् कथं युष्मदस्मदित्यादिना विवेकग्रहादध्यासाक्षेप इत्याशङ्क्य, प्रतीत्यभ्युपगमेन स ग्रन्थः प्रवृत्त इत्याशयेनाह—**युष्मदस्मदिति**।

देहादि किमत्यन्तमसत् उतानिर्वचनीयमिति विकल्प्य, प्रथमं निरस्तम् **प्रतीतिरेव त्विति टीकया**। तत्र प्रतीतिं व्याचष्टे—**अपरोक्षेति**। **अनुवादायोगः स्यात् इति**। अत्यन्तासत इति पदेन प्रतीतिनिषेधार्थमनुवादायोगः स्यादित्यर्थः। द्वितीयं **शङ्कते—नन्विति**। प्रकाशमानत्वस्यैव परमार्थसत्तारूपत्वान्नानिर्वचनीयतेति परिहरति—**अत आहेति**। **टीकायां—नासन्त** इत्यसत्त्वानिर्वाच्यत्वयोरुभयोरपि निषेधः। लक्षणवाक्ये यथोक्तशङ्कापरिहारादर्शनात् **आचक्षाण एव परिहरती**त्ययुक्तमित्यत आह—**दृष्टग्रहणेनेति**। एतच्च **'तस्य च दृष्टत्वमात्रमुपयुज्यत'** इति टीकायां स्पष्टमिति भावः। P. 18-1 P. 18-3

**संक्षिप्तमिति**। एकपदनिर्दिष्टत्वादिति भावः। **उच्छेदो** बाधकप्रत्ययानन्तरमननुवृत्तिः, **तिरस्कारः** प्रवृत्त्यादिकार्याक्षमत्वम्। अनयोः प्रत्ययान्तरेण विषयापहारलक्षणे बाधे सत्येव संभवात् स एव **टीकायामवसादा**दित्वेनोक्तः। P. 18-4

नन्ववभासपदस्य विस्तृतलक्षणान्तर्भावे शेषवैयर्थ्यम् । अनन्तर्भावे लक्षणासंभव इत्यत आह—**अवभासपदस्येति** । **भाष्यवाक्यार्थत्वेनेति** । ततश्च लक्षणवाक्यगतावभासपदसूचितम् संक्षिप्तं लक्षणं **टीकाकारेण** कल्पितमिति भावः ।

लक्षणप्रयोजनयोर्व्यावृत्तिव्यवहारयोः संग्रहलक्षणेनैव सिद्धेः विस्तृतं व्यर्थमित्याशङ्क्य, मतान्तरनिरासस्तस्य फलमित्याह—**परत्रेत्यादीति** । **स्वरूपेण सदपीत्यनेनारोपणीयस्य** देशान्तरसत्वाभ्युपगमे अन्यथाख्यात्यापत्तिरित्यत आह—**अपिशब्देनेति** । पूर्वदृष्टपदस्य स्मृतिरूपपदसमभिव्याहारलब्धमनृतार्थकत्वम् । नान्यथा । ततश्च युक्ता शङ्केति गूढाभिसन्धिराह—**स्मृतिरूपविशेषणेति** । उदाहरणद्वयप्रदर्शनस्य फलमाह—**पूर्वदृष्टस्येत्यादिना** ।

P. 18-5

लक्षणवाक्यार्थे **पूर्वदृष्टस्य** परस्य परत्र तादात्म्यावभास इति यो धर्म्यध्यासांशः **तमभिप्रेत्येति** योजना । एवमुत्तरत्रापि । **टीकायां—स्वस्तिमत्यां**—स्वस्तिकचिह्नवत्याम् ।

ननु गोत्वप्रत्यभिज्ञायां नातिव्याप्तिः । अवभासपदेनैव तद्वारणात्, तस्य मिथ्याज्ञानार्थकत्वात् । अन्यथा नानार्थत्वापत्तेरित्याशङ्क्य, न तावदवयवार्थस्वीकारप्रयुक्तो दोष इत्याह—**अवभासपदस्येति** । अलङ्कारत्वादेव नानार्थत्वं न दोषायेत्याह—**सकृच्छ्रुतेति** । अन्यथा श्लेषादिवैफल्यापत्तेरिति भावः । गूढमभिसन्धिं शङ्कापूर्वकं प्रकटयति—**नन्वित्यादिना** । स्मृतिसादृश्यं संस्कारजन्यत्वरूपमेव किमिति न स्वीकृतमित्यत आह— **प्रत्यभिज्ञाया अपीति** ।

P. 18-9

P. 19-2

**परत्रेति** विशेषणव्यावर्त्यमाह—**स्मृतिरूपेति** । ननु न स्मृतावतिव्याप्तिः । **स्मृतिरूपपदेनैव** तद्वारणात् । **असन्निहितविषयत्वं हि स्मृतिरूपत्वमुक्तम्** । तच्चाधिष्ठाने आरोप्यस्य परमार्थतोऽसत्वमिति वक्ष्यते । स्मृतिविषयश्च परमार्थसन्निति कथं तत्रातिव्याप्तिरित्याशङ्क्य, यथाश्रुताभिप्रायेण तत्कथनमित्याह—**असन्निहितविषयत्वे विवक्षित इति** । **तन्निवृत्तय इति** । स्मृतिविषयस्य स्वदेशान्यदेशे अनवभासनात् परत्रेति विशेषणेन स्मृतिव्यावृत्तिरिति भावः ।

P. 19-4

नन्वनेन भाष्येण कीदृशमध्यासलक्षणमुक्तम्? न तावद्यथाश्रुतम्। प्रत्यभिज्ञायामतिव्याप्तेः। अनिर्वचनीयरजतस्य विलक्षणस्यैव शुक्त्यादावुत्पत्त्यभ्युपगमेन तस्य पूर्वदृष्टत्वाभावाच्च। न चारोप्यतावच्छेदकधर्मेण पूर्वदृष्टसजातीयत्वं विवक्षितमिति वाच्यम्। अपूर्वव्यक्तिविशेषाध्यासस्थले तस्य पूर्वदृष्टसजातीयत्वे मानाभावात्। अनुभूयमानारोपाव्याप्तेश्च। नापि परत्र सत्ये पूर्वदृष्टस्यानृतस्य स्मृतिरूपः(स्मर्यमाणसदृशः) स्मृतिसदृशः असन्निहितविषयोऽवभासोऽध्यासः, आरोप्यरजतादेरसन्निहितत्वासिद्धेः। आत्माध्यासाधिष्ठानस्य देहादेस्सत्यत्वाभावात्। वंशोरगादौ करालत्वाद्यध्यासाव्याप्तेश्च।

परिमले तु "अधिष्ठानासमानसत्ताकस्यावभासोऽध्यास" इति लक्षणमभिमतम्। यद्गतमवभास्यं तदधिष्ठानम्। तथा च न गोत्वप्रत्यभिज्ञायामतिव्याप्तिः। गोत्वादेर्गोव्यक्त्यादिरूपाधिष्ठानसमसत्ताकत्वात्। ब्रह्मणि तु वियदादीनामध्यस्तत्वमेवेति सर्वाध्यासानुगतं लक्षणमित्युक्तम्।

तच्चिन्त्यम्[1]। प्रत्यभिज्ञायामतिव्याप्तेः। गोव्यक्तेरचिरप्रध्वंसित्वेन सादित्वेन च गोत्वस्य तद्विलक्षणत्वेन तत्सत्तयोरपि चिराचिरकालभावित्वेन साद्यनादित्वेन च भेदावश्यंभावात्। प्रातीतिकव्यावहारिकपारमार्थिकरूपेण सत्तात्रैविध्यनियमस्य स्वपरिभाषामात्रत्वेन परं प्रत्युपन्यासानर्हत्वात्। किञ्च स्वाप्निके गजे गजत्वप्रत्यभिज्ञायामतिव्याप्तिः। अधिष्ठानस्य प्रातीतिकत्वात्। तस्मिन् गजे गजत्वस्य बाधाभावेन तस्य व्यावहारिकत्वात्। प्रातीतिके प्रातीतिकाध्यासाव्याप्तेश्च। तस्मादसङ्गतं लक्षणमित्याशङ्क्य, निष्कृष्टं लक्षणमाह—**अनेनेति**। P. 19-5

---

१. इदं तु बोध्यम्। गोत्वगोव्यक्त्योः चिराचिरकालभावित्वेन परस्परवैलक्षण्येपि तत्सत्तयोः न वैलक्षण्यम्। ब्रह्मज्ञानेतराबाध्यत्वरूपव्यावहारिकसत्वस्य उभयत्र एकरूपत्वात्। गोत्वस्य जीवेशादिषडनादिव्यतिरेके तस्यापि सादित्वात्। वस्तुतस्तु गोव्यक्त्यवच्छिन्नं ब्रह्मैव गोत्वमित्यन्यत्र विस्तरः। तथा च न प्रत्यभिज्ञायामतिव्याप्तिः। इदं च लक्षणं शुक्तिरूप्यादेः प्रातीतिकत्वं प्रसाध्यैव लक्ष्येषु सङ्गमनीयम्। अन्यथा सत्येऽनृतावभास इति स्वेन वक्ष्यमाणलक्षणस्यापि अन्यथाख्यात्यादिमते असिद्धेः। ततश्च शुक्त्यादेः सत्यत्वस्य रूप्यादेश्चानृतत्वेन तदसमसत्ताकत्वस्य संभवदुक्तिकत्वात् परिमलोक्तं लक्षणमपि साधु संगच्छते। स्वप्ने गजे गजत्वप्रत्यभिज्ञायां तु गजत्वमपि प्रातीतिकं अतो न दोषः। तस्य व्यावहारिकत्वे तु तदधिष्ठानं साक्षिचैतन्यं, न गजः। तन्निवर्तकज्ञानंविषयस्यैव तदधिष्ठानत्वात्। सर्वत्र चैतन्यस्यैवाधिष्ठानत्वात् न प्रातीतिके प्रातीतिकाध्यासः॥

असन्निधानस्य देशान्तरावस्थानरूपत्वे अन्यथाख्यात्यापत्तिरित्यत आह—

P. 19-6 **असन्निधानं चेति ।** अयमाशयः—सत्ये अनृतावभास इत्येव लक्षणम् । अधिष्ठानस्य सत्यत्वं च बाधाधिष्ठानत्वम् । यस्मिन् बाध्यमानेऽपि यत्तिष्ठति, तस्य तदपेक्षया सत्यत्वात् । स्वरूपेण सतोऽप्यारोप्यस्य समारोपणीयत्वेनानृतत्वं स्पष्टमेव—**टीकायामुक्तम्** । ततश्च नात्माध्यासाव्याप्तिः । देहादावात्मतादात्म्ये बाध्यमानेऽपि तदानीं देहादेरबाध्यमानत्वात् । एवं करालत्वादिबाधाधिष्ठानत्वेन वंशोरगादेः सत्यत्वावश्यंभावात् न तत्राप्यव्याप्तिः । स्वाप्निकगजादौ च गजत्वादेर्बाधाभावान्नातिव्याप्तिरपीति सर्वमनवद्यम् ।

नन्वेवमप्यारोप्यानृतत्वफलकं स्मृतिरूपत्वविशेषणं व्यर्थम्, पूर्वदृष्टपदेनैव तत्सिद्धेरित्याशङ्क्य, मतान्तरनिरासद्वारा तदर्थस्फोरणाय तदुपादानम् । पूर्वदृष्टत्वमात्रेण तदनिरासादित्याशयेनाह—**अथवेति** । नापसिद्धान्तपरिहाराय तदुपादानम्, किंतु सत्ख्यातिनिरासायेति—**अथवाशब्दार्थः** ।

**श्लोके-असन्निधानेनेति** छेदः । **सत्ख्यातिरिति** । अधिष्ठाने परमार्थतो विद्यमानार्थविषयिणी ख्यातिरित्यर्थः । **असत्ख्यातिरिति** । पुरोवर्तिन्यविद्यमानार्थविषयिणी ख्यातिरित्यर्थः । अनेनाख्यात्यन्यथाख्यात्यात्मख्यात्यसत्ख्यातयश्चतस्रोऽपि निर्दिष्टाः । ता अवभासपदेन वारिताः । असदादेः स्पष्टं पुरोऽवस्थितत्वेनावभासायोगादित्यर्थः ।

P. 20-1 नन्वेवं पूर्वदृष्टपदं व्यर्थमित्यत आह—**असन्निहितस्येति** । **उक्तमेवेति** । **टीकायामिति** शेषः । सत्याधिष्ठानाभावेन स्वप्नभ्रमे अव्याप्तिं प्रसञ्जयति—**स्वप्नज्ञान इति** । किमियमव्याप्तिः सिद्धान्तरीत्या, उत लोकरीत्या ? नाद्यः—अन्तःकरणतद्धर्माणामिव स्वप्नप्रपञ्चस्यापि साक्ष्यधिष्ठानकत्वादित्येवमभिप्रायेण **नाप्यव्याप्तिरित्यनेन** निराकृत्य, द्वितीयं **स्वप्नज्ञानस्यापीत्यनेन टीकायां** निराकृतम् ।

तत्र—**स्मृतिविभ्रमस्येति** न कर्मधारयः । सिद्धान्ते स्वप्नभ्रमस्यान्तरप्रत्यक्षरूपतया स्मृतिरूपत्वाभावादित्यत आह—**स्मृताविति** । स्मृतिशब्दं
P. 20-3 कर्मव्युत्पन्नमाश्रित्याह—**स्मर्यमाण इति** । पूर्वदृष्टत्वमुपपादयति—**अनुभूयमान इति** । **पूर्वमिति** शेषः । एतच्च प्रौढ्योक्तम् । आरोप्यस्य तदधिष्ठाने

पूर्वदृष्टत्वोपपादनवैफल्यात्[1]। तन्निष्ठस्य सन्निहितदेशकालत्वस्यारोपणीयतयाऽप्य- नृतत्वाभावेन तदध्यासे लक्षणाव्याप्तेश्च। अत एव **टीकाग्रन्थेषु तत्र तत्र पूर्वदृष्टस्येत्यपि** क्वचित्[2] **पाठो** दृश्यत इति ध्येयम्।

**एवं 'पीतः शङ्ख'** इत्याद्यतिदेशोऽपि लोकरीतिमनुसृत्यैव। सिद्धान्ते पूर्वदृष्टत्वानपेक्षणात्। पीततादेः स्वरूपेणापि आरोप्यतया सामानाधि- करण्यपर्यन्तधावनायोगाच्चेत्याशयेनाह—**अन्यार्थमिति**। पूर्वप्रमितत्वव्यावर्तनार्थ- P. 20-4 मित्यर्थः। **टीकायां-पित्तद्रव्यस्य वेगेन निर्गच्छदत्यच्छनयनरश्म्येक- लोलीभावोक्तिः** तस्य परकीयचक्षुरयोग्यत्वप्रदर्शनाय। P. 21-2

ननु पीतिमतपनीययोः कथमसंसर्गाग्रहणम्? तयोरसंसर्गस्यैवाभावात्। प्रत्युत संसर्गसत्वेन तस्यैव ग्रहणादित्याशङ्क्य, दृष्टान्तदार्ष्टान्तिकयोरसंसर्गस्य विद्यमानाविद्यमानत्वेन भेदेऽपि तदग्रहणमविशिष्टमिति सारूप्यमुपपादयति— **पीतिमतपनीययोरिति**। P. 21-2

**टीकायां—सामानाधिकरण्यं तादात्म्यम्**। तच्च पीतिमतपनीययोः प्रसिद्धमनुभूयमानयोः पीतिमशङ्खयोरारोप्यत इत्यर्थः। एतच्च तादात्म्यस्यारोप्य- त्वमभ्युपगम्योक्तम्, शङ्खे पीतिम्न एवारोपसंभवादिति ध्येयम्।

प्रतिबिंबविभ्रमस्थले पूर्ववैषम्येण शङ्कां दर्शयति—**आदर्शादिष्विति**। आदर्शे मुखं नारोप्यते। किन्तु मुख एव दर्पणाभिमुख्ययोरारोपः इति परिहरति—**आशङ्क्याहेति**। **टीकायां—सौरेण तेजसा प्रातिलोम्येन प्रवर्तितं मुखसंयुक्तं चाक्षुषं तेजो मुखं ग्राहयत्**—इत्यन्वयः। मुखे अधिकरणत्वेन दर्पणस्यैवारोपात् पूर्वदृष्टत्वं न आदर्शोदकदेशताविशेषणमित्या- शयेन व्याचष्टे—**पूर्वदृष्टयोरिति**[3]। **तयोरेवेति**। आदर्शोदकयोरेव विद्य- मानमाभिमुख्यं चेत्यर्थः। P. 21-4

---

१. अनुभूयमाने पित्रादौ प्रागनुभूतस्य सन्निहितदेशकालत्वस्य इदानीं स्मर्यमाणे तत्र पित्रादौ तात्कालिकत्वेनारोपः इति परिमलरीत्या वर्णने नाव्याप्तिरिति बोध्यम्।

२. तत्र तत्रेति पाठेपि तस्य पित्रादावित्यनेन सामानाधिकरण्ये तद्दोषतादवस्थ्यात् तस्य पित्रादिव्यतिरिक्ते इत्यर्थ इति ज्ञेयम्।

३. कल्पतरौ 'पूर्वदृष्टाभिमुखादर्शोदकदेशता'मिति टीकापदविग्रहप्रदर्शने 'पूर्वदृष्टयोरभिमुखयोरादर्शोदकयोर्देश एव देशो यस्य तस्य भावस्तत्ता' इत्युक्तम्, तत्र

उल्मुकज्वालासु, शकटाक्षादिषु पूर्वदृष्टचक्राकारताया आरोपे शीघ्रभ्रमणं दोष इति दर्शयितुं **शीघ्रभ्रमितेत्युक्तम्** । गन्धर्वनगरभ्रमं व्याचष्टे—**अभ्रेष्विति । वैसावर्णेषु चेति** । नायनरश्मिसहनिर्गतवसावयवगतेषु, चक्षुषा गृह्यमाणेष्वित्यर्थः । अत्रापि सामानाधिकरण्यं तादात्म्यम् । भङ्गशब्दस्यापि तरङ्गवाचित्वे पौनरुक्त्यमित्यत आह—**तरङ्गविच्छेदानामिति** ।

P. 22-1 P. 22-3

**टीकायां**—असतः प्रकाशनं न संभवतीति वदन् प्रष्टव्यः—किं सत एव भानं ? उत रूपान्तरेण सतोऽसता रूपान्तरेण भानमिति विकल्प्य, प्रथमं मरीचितोयस्यापि प्रकाशमानस्य परमार्थसत्वे तत्कार्यं पिपासोपशमनादिकं स्यादिति, **तथा सतीत्यादिना** निराकृत्य, द्वितीयं निराकरोति—**न चेति** ।

P. 22-3

किं मरीचीनां तोयस्य च स्वरूपेणैव भानं ? उत तादात्म्येन । नाद्यः । 'मरीचयस्तोयम्' इति च प्रतीत्यापत्तौ मरीचिषु तोयार्थिप्रवृत्त्यनापत्तेः । द्वितीये, किं मरीचीनां तोयात्मकत्वमसत् ? उत सत्, नाद्यः । असतो भानानभ्युपगमादित्याह—**यत इति । तोयाद्यात्मना असतां इत्यन्वयः** । द्वितीयं निराकरोति—**न चेति** । तथात्वे तोयकार्यापत्तेरिति **टीकार्थः** ।

मरीचीनां तोयात्मत्वमसदेव । न चासतो भानायोगः । अत्यन्तासत्त्वं हि भानविरोधि[2] । तोयतादात्म्यासत्वं तु मरीचीनां स्वरूपमेव ।

---

आदर्शोदकयोः देशः मध्यप्रदेशः देशः अधिकरणं यस्येत्यर्थः । नतु आदर्शोदकयोः देशः अधिकरणं यस्याधिकरणमित्यर्थः । आदर्शादेरेव अधिकरणतया मुखे आरोपाङ्गीकारात् । आदर्शाद्यधिकरणस्य मुखे अधिकरणतया आरोपानङ्गीकारात् । एवञ्च देशपदद्वयं भिन्नार्थकम्, एतदपेक्षया 'पूर्वदृष्टे अभिमुखे आदर्शोदके एव देशो यस्य' इति पाठसत्वे न क्लेशः । एकस्यैव देशपदस्य अधिकरणार्थकस्य तदा सद्भावात् । तत्स्थले टीकायां 'दोषवशात् तद्देशतामनभिमुखतां च मुखस्याग्राहयत्' इत्यत्र तत्पदेन प्रकृतमुखस्य ग्रहणात् मुखस्य देश एव अधिकरणमेव देशः अधिकरणं यस्येत्यर्थः । न तु मुखमेव देशः अधिकरणं यस्येत्यर्थः। तद्देशतामित्यस्य स्थाने 'देहगततां' इति क्वचित् पाठो दृश्यते । परिमलेऽपि स पाठोऽनूदितः ॥

१. वंशवर्णेषु चेत्यपि पाठः परिमलादृतः ।

२. तोयतादात्म्यासत्वं तोयतादात्म्यसत्वाभावः, तादात्म्यसत्वं च सत्वधर्मितादात्म्यरूपं, तथा च तादात्म्यसत्वाभावः तादात्म्याभावरूपः पर्यवस्यति, तोयतादात्म्याभावश्च तोयात्मना अभाव एव, स च मरीचिरूपः, भाव एव भावान्तरात्मना अभाव इत्युक्तेः । इति भावः ।

असत्त्वस्य सत्त्वाभावतया, सत्वस्य च धर्म्यभेदेन, तोयात्मना असत्त्वस्य तोयतादात्म्याभावरूपतया, तस्य मरीचिरूपत्वादिति प्रथमकल्पाभ्युपगमेन[1] यद्युच्येत, इत्यादिशङ्का[2]। अतो न तट्टीकाऽसाङ्गत्यमित्यवतारयति—मरीचीनामिति। टीकायां—ततश्च भावात्मनेति। असतोऽपि तोयात्म-[3] P. 22-3 त्वस्य मरीचिरूपभावान्तरात्मना—उपाख्येयतया व्यवहारयोग्यतयेत्यर्थः।

[4]स्वस्य प्रत्यय इति षष्ठीतत्पुरुषे स्वानन्तरभाविप्रत्ययसामर्थ्यात् असत्प्रकाशनसामर्थ्यं स्वस्येति स्यात्, अतो व्याचष्टे—स्वसमानेति। शून्य- P. 22-6 वादिमते ज्ञानस्याप्यसत्त्वात् पूर्वज्ञानाधीनत्वमुत्तरज्ञानस्य सत्वं नाधिकमिति दर्शयितुं स्वप्रत्ययेति विशेषणमिति भावः।

---

१. प्रथमकल्पः, 'किं मरीचीनां तोयात्मत्वमसत् उत सत्' इति पूर्वोक्तविकल्पे प्रथमकल्पः।

२. "मरीचीनां तोयात्मत्वं न सदित्युक्ते, यन्मरीचीनां तोयरूपेणासत्वं तन्मरीचय एव अतो नासत्ख्यातिरिति शङ्कते-यद्युच्येतेति" इति कल्पतरौ अवतारितायां 'यद्युच्येत' इत्यादिटीकायां असाङ्गत्यं परिमले आशङ्कितम्—"ननु न प्रकाशमानता सत्ता, मरीचिषु तोयात्मत्वस्यासतः प्रकाशात्, इत्युक्ते, कथं तेषु तोयानात्मत्वस्य सद्रूपत्वप्रतिपादनेन, असत्ख्यात्यभावशङ्का" इति ग्रन्थेन। एवमाशङ्क्य असाङ्गत्याभ्युपगमेनैव परिमल एव समाहितञ्च —"सत्यं, इदमेव दूषणं 'अत्र ब्रूमः' इत्यादिटीकया प्रतिपादयिष्यते। ननु स्फुटे वैयधिकरण्यदूषणे कथमनालम्बना शङ्का? व्यधिकरणोत्तरेणैव सत्ख्यातिवाद-निर्वाह इत्युपहासार्थं तदीयशङ्का उद्भाविता" इति ग्रन्थेन। अत्र तु आभोगे 'अतो न तट्टीकाऽसाङ्गत्यं' इति ग्रन्थे टीकाऽसाङ्गत्यं परिहृतमिव सूच्यते। नच परिह्रियते। यत् भ्रमे भासते मरीचीनां तोयात्मत्वं तदसदेव, यच्च तोयतादात्म्यासत्वं मरीचीनां, मरीचिस्वरूपतया सद्रूपं, न तत् भ्रमे प्रकाशते, अतः असत्ख्यात्यभावशङ्कापरटीकाग्रन्थासाङ्गत्यं तदवस्थमेवेति चिन्त्यमिदम्।

३. 'असतोऽपि तोयात्मत्वस्य' इत्यस्य तोयात्मना असत्वस्येत्यर्थः। तथा सत्येव मरीचिरूपभावान्तरात्मना उपाख्येयत्वं भवितुमर्हति-तोयात्मना असत्वस्य मरीचिरूपत्वात्। तोयात्मत्वस्य तु असतः, मरीचिरूपत्वाभावात् यथाश्रुतासङ्गतेः।

४. स्वस्य प्रत्यय इति षष्ठीतत्पुरुषे षष्ठ्याः आनन्तर्यरूपस्संबन्धोऽर्थः। तथा च स्वानन्तरभाविप्रत्यय इत्यर्थलाभः। सिद्धान्ते स्वश्चासौ प्रत्ययश्चेति कर्मधारय-समासो विवक्षितः- स्वपदं स्वीयवाचकं, स्वीयत्वं च स्वसमानाकारत्वेन, तथा च स्वसमानाकारः व्यवहितपूर्वप्रत्यय इत्यर्थलाभ इति भावः। वस्तुतस्तु प्रत्ययपदं कारणपरं; बौद्धग्रन्थेषु तथैव व्यवहारात्। तथा च स्वप्रत्ययसामर्थ्यादित्यस्य स्वकारणीभूतपूर्वप्रत्ययसामर्थ्यादित्यर्थः। अतएव न्यायवार्तिकतात्पर्यटीकायां द्वितीयसूत्रविवरणे

शङ्केरपि विज्ञानरूपत्वान्न दोष इति परिहरति—**अत आहेति** ।

P. 22.1 **अनवस्थापाताच्चेति** हेतुः पक्षान्तर इति व्याचष्टे—**उपलब्धौ चेति** । असतः प्रत्ययजन्योपकाराधारत्ववत् प्रत्ययोपकारकत्वाधारत्वस्याप्ययोगात् कथं तदभ्युपगम इत्यत आह—**इत्युपहास इति** । असत्यपीत्यनेन तदप्युद्घाटितमिति भावः ।

**कः पुनरेष सदसतोः संबन्ध इति** संबन्धस्य पृष्टत्वात् स्वभावकथनमयुक्तमित्याशङ्क्य, असता साकं प्रत्ययस्य **स्वभावः**, स्वाभाविकसंबन्ध इति

P. 22-11 **टीकार्थ** इत्याशयेनाह—**असत इति** । **स्वभावश्चेति** । तादात्म्यमित्यर्थः ।

अत्र **टीकायां** निस्तत्वस्यानुभवगोचरत्वाभावे मरीचितोयप्रत्ययस्य किं मरीचीनां तोयात्मना सत्वं विषयः । उत तदात्मना असत्वम्? आद्ये प्रवृत्तिसंवादापत्तिरिति दूषितम्—**तत्किमिदानीमिति** । द्वितीयमाशङ्कत इत्याशये-

P. 23 1 नाह—**पूर्वपक्ष्याहेति** । तोयात्मना असत्वस्यैव साध्यत्वेन **तदात्मनेति** हेतोः साध्याविशेषमाशङ्क्याह—**तदात्मनेति** । तदात्मना असत्वस्य सर्वसंप्रतिपन्नत्वं हेतुरिति भावः[2] ।

असत्वमतिरिक्तमिति मन्वानः शङ्कते—**तर्हीति** । यत्प्रतियोगिनिरूप-

P 23-3 णाधीननिरूपणकं यत्स्वरूपं तदेव तदसत्वमिति न दोष इत्याह—**तोयसपेक्ष्येति** । यदिदं मरीचीनां तोयरूपेणासत्वं स्वरूपं, तत्किं तेनैव रूपेण भ्रमो विषयीकरोति? उत रूपान्तरेण तोयात्मना? नाद्यः । भ्रमत्वव्याघातादिति **तत्किमित्यादिटीका**भिप्रायकथनेन निराकुर्वन् द्वितीयमाशङ्कत इत्याह—

P 23-4 **तोयरूपेणेत्यादिना** ।

---

'स्वकारणाधीनः सामर्थ्यातिशयः स तादृशः ज्ञानस्य, येन सन्तमिवासन्तमपि गोचरयति' इति पठितं श्रीवाचस्पतिमिश्रैरेव ॥

१. असत्प्रकाशनसामर्थ्यमेव मिथ्याज्ञानानामविद्यात्वमिति तात्पर्यटीकायामुक्तं, तथा च विज्ञानमेव अविद्या, तन्निष्ठासत्प्रकाशनशक्तिरपि शक्तिशक्तिमतोरभेदात् तद्रूपा, एवं च अविद्यया, विज्ञानेन, शक्त्या वा असत्प्रकाशनमित्युक्ते नार्थभेदः ॥

२. इदं 'तदात्मना असत्वस्य ममापीष्टत्वादित्यर्थः' इति कल्पतरुपाठमभिप्रेत्य । 'ममाभीष्टत्वा'दिति पाठान्तरम् । 'ममापीष्टत्वादिति सर्वसंप्रतिपत्त्यर्थः शुद्धः पाठः' इति परिमलेऽपि अयमेव पाठः आदृतः । 'सर्वसंप्रतिपत्त्यर्हः' इति परिमले अशुद्धं कोशेषु दृश्यते तत् शोधनीयम् ॥

वस्त्वन्तरमपि किं मरीचितोयोभयभिन्नं, एतदन्यतररूपं वेति विकल्प्य, प्रथमं निराकर्तुं, **नचारोपितमिति टीका**, तदभिप्रायं दर्शयन्नेवोत्तरटीकाभिप्रायमाह—**अस्मिन् भ्रमे इत्यादिना** । P. 23-8

**एवं मरीचितोयतादात्म्यमनिर्वाच्यं प्रसाध्येति** । अनेन मरीचिषु तोयमारोपणीयं सदनिर्वाच्यमास्थेयमिति टीकार्थो वर्णितः । **तथेति** । **स्वरूपेणापीत्यन्वयः** । मरीचितोयमनिर्वाच्यं, बाध्यत्वे सति पुरोऽवस्थितत्वेन भासमानत्वात् तत्तादात्म्यवदिति भावः ।

**मुधा अमुष्येति** । स्पष्टं पुरोऽवस्थितत्वेनावभासमानत्वात्, नेदं रजतमिति इदम्येव रजतबाधदर्शनात्, पूर्वानुभूतविलक्षणस्यैव रजतस्यानुभूयमानत्वात्, स्वाप्निकगजादाविव, विलक्षणरजताद्युत्पत्तिसामग्र्या अपि कल्पनीयत्वात् ' न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ रथान् रथयोगान् पथस्सृजत " इति प्रातीतिकसृष्टेरपि श्रुतिसिद्धत्वात्, नात्मनि देशान्तरे वा सत्वकल्पना युक्तेत्यर्थः । P. 23-12

पूर्वदृष्टमित्यनेन कथं परिहार इत्याशङ्क्य, पूर्वदृष्टसाजात्यप्रतिपादनद्वारा पूर्वप्रमितत्वव्यावर्तनफलं पूर्वदृष्टग्रहणमित्याशयमाह—**अभिनवत्वेऽपीति** । P. 24-1
**मृषेति मतमिति इतिशब्दाध्याहारेण श्लोकार्थो योज्यः** । **देहादि सदिति** । P. 24-3
**नासन्त इति** पूर्वपक्ष्युक्तसाध्यस्य पर्यवसितमेतत् साध्यम् । तच्च प्रमितिविषयत्वम् । न त्वबाध्यत्वम् । तस्यैवोपाधित्वात् । **उपाधिः** प्रयोजकः । एतावत् सिद्धवत्कृत्य, साधनव्यापकत्वशङ्कानिरासाय **टीकेत्याह—न चेति** । P. 24-5

नन्वबाध्यत्वं बाध्यभिन्नत्वम् । ततश्च प्रपञ्चमात्रस्य बाध्यतया पक्षमात्रव्यावर्तकं बाध्यत्वविशेषणमित्यबाध्यत्वोपाधेः पक्षेतरता स्यादित्याशङ्क्य, व्यावहारिकस्यैव विवादास्पदस्य पक्षतया बाध्यत्वविशेषणस्य विपक्षमरीचितोयादिव्यावर्तकत्वान्न दोष इत्याह—**विपक्षस्येति** ।

ननु देहादि न बाध्यम् । प्रमाणप्रमितत्वात्, आत्मवत् । ततश्च न मिथ्यात्वम् । अन्यथा आत्मनोऽपि मिथ्यात्वापत्तेः इति शङ्कते—**नन्विति** । P. 24-6
तत्त्वावेदकप्रमाणप्रमितत्वमुपाधिरिति परिहरति—**तत्राहेति** । टीकागतं सत्ता-

१. बृ. उ. ४-३-१०.

P. 25-2 निर्वचनं प्रकृते संगमयति—**यदुक्तमिति । चिदात्मनोऽपि सत्त्वमिति ।** ततश्च प्रकाशमानत्वाविशेषात् उभयोरपि देहादिचिदात्मनोः सत्वमसत्वं वा स्यात् । ततश्च तद्वदेव बाध्यत्वं अबाध्यत्वं वा प्रसज्येत । न वैषम्यम् । एवं च सति अबाध्यत्वोपाधेः साध्याव्यापकत्वं साधनव्यापकत्वं वा स्यादित्यर्थः ।

**विशेषेति ।** प्रकाशमानत्वापेक्षया स्वयं प्रकाशमानत्वस्य विशेषत्वादित्यर्थः । ततश्चोपाधेः साध्यव्यापकत्वसाधनाव्यापकत्वे सिद्धे इत्युपपादयति—

P. 25-3 **स्वयंप्रकाशमानत्वादित्यादिना । दृग्दृश्येति ।** अधिष्ठानारोप्यभावव्यतिरेकेण तयोः संबन्धान्तरानिरूपणादित्यर्थः ।

P. 25-5 **संसारस्येति ।** देहादिप्रपञ्चरूपस्येत्यर्थः । **शास्त्रप्रामाण्यादिति ।** [1]'भिद्यते हृदयग्रन्थिः' इत्यादिशास्त्रप्रामाण्यादित्यर्थः । ब्रह्मज्ञाननिबर्हणीयत्वाय

P. 25-7 प्रपञ्चमिथ्यात्ववर्णनमिति तावत् परिहरति—**तन्नेति ।** प्रपञ्चो न ज्ञाननिवर्त्यः सत्यत्वात् आत्मवत्, इत्यनुमानं ज्योतिष्टोमो न स्वर्गफलः इत्यनुमानवदागमविरोधादमानं इति शङ्कते—**यत्त्विति ।**

क्रियात्मन एव सतो ज्योतिष्टोमस्य स्वर्गफलकत्वबोधकागमवदिहापि सत्यस्य सतः प्रपञ्चस्य ज्ञाननिवर्त्यत्वबोधक आगमो यथोक्तानुमानबाधकत्वेनेष्यते, ज्ञाननिवर्त्यत्वमात्रबोधको वा? नाद्य इत्याह—**तन्नेति ।** द्वितीये मिथ्यात्वमेवायातीत्याह—**प्रत्युतेति ।** क्षणिकस्य यागस्य श्रुतस्वर्गसाधनत्वान्यथानुपपत्त्या, लोकरीतिमनुसृत्य, व्यापारकल्पनवदिहापि श्रुतज्ञाननिवर्त्यत्वसिद्ध्यर्थं बन्धमिथ्यात्वस्यैव सिद्धेः । अन्यथा यागस्य नष्टस्यापि शास्त्रबलेन स्वर्गसाधनत्वोपपत्तेः अपूर्वकल्पनं न स्यादिति भावः ।

P. 25-9 [2]अनुमानस्य व्यभिचारमाशङ्कते—**यदपीति ।** आदिपदाभ्यां विषयेषु दोषदर्शनम्, तन्निवर्त्यो रागश्च गृह्यते । स्वमतेन तावत् प्रौढ्या परिहरति—**विषादेरिति ।** प्रमारूपज्ञानानिवर्त्यत्वं साध्यम्; ध्यानं च मानसी क्रिया । अतो न दोष इति परिहरति—**ध्यानस्य चेति ।** अदृष्टान्तत्वात् अतुल्यत्वात् । असत्यप्रपञ्चनिवर्तकब्रह्मप्रमित्यतुल्यत्वात् इत्यर्थः । रागस्यापि दोषपरिभावनयैव निवृत्तिः । न तु दोषज्ञानमात्रेणेति भावः ।

---

१. मु. उ. २-२-८. २. 'प्रपञ्चो न ज्ञाननिवर्त्यः सत्यत्वात् आत्मवत्' इत्यनुमानस्येत्यर्थः॥

एवमपि सेतुदर्शननिवर्त्यपापे व्यभिचारः। सेतुभ्रममात्रेण पापानिवृत्त्या तस्य प्रमात्वेनैव तन्निवर्तकत्वादित्यत आह—**सेतुदर्शनं चेति। न प्रमित्यात्मनेति।** ततश्च प्रमात्वमात्रप्रयुक्तनिवर्तकताशालिज्ञानानिवर्त्यत्वं साध्यमिति, साध्यस्यापि सत्वान्न व्यभिचारः इत्यर्थः। P. 25-10

न च रजतभ्रमस्य रङ्गभ्रमेणापि निवृत्तिदर्शनात् न प्रमात्वप्रयुक्तं ज्ञानस्य भ्रमनिवर्तकत्वमिति वाच्यम्। तदधिष्ठानकसकलभ्रमनिवृत्तौ तत्प्रमात्वस्य तन्त्रत्वाभ्युपगमात्। तत्रापि नान्तरीयकस्य नेदं रजतमिति ज्ञानस्यैव निवर्तकत्वाच्च।

ननु सेतुदर्शनवदात्मज्ञानस्यापि द्रष्टव्य इति विध्यायत्तमेव बन्धनिवर्तकत्वम्। ततश्च सिद्धसाधनमित्यत आह—**आत्मप्रमा त्विति।** अधिष्ठानतत्वसाक्षात्कारस्य सकलतदध्यस्तनिवर्तकत्वस्य लोके दृष्टत्वेन—[1]"ब्रह्म वेद ब्रह्मैव भवति" [2]'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यादिश्रुतिषु ब्रह्मतत्वसाक्षात्कारानन्तरं बन्धनिवृत्तौ विळम्बाभावावगमेन च तस्य प्रमात्वेनैव निवर्तकत्वादित्यर्थः। P. 25-11

नन्वेवं विधिवैयर्थ्यमत आह—**तद्विधेरिति।** जीवस्य ब्रह्मैकत्वसिद्ध्यर्थमपि बन्धमिथ्यात्ववर्णनमित्याह—**यत्त्विति। अविद्यादिति।** उपाधेर्मिथ्यात्वे तत्परिणामस्य संसारस्यापि मिथ्यात्वादिति भावः। **विप्रतिपत्तेरिति।** लक्षणानां विरुद्धत्वादित्यर्थः। मतिसंवादायैव तदुपन्यास इति परिहरति—**अत आहेति।** तर्हि मतान्तराभिमतख्यातिस्वीकारापत्तिरित्याशङ्क्य, प्रकारान्तरेण यथोक्तलक्षणानिर्वाहात् अर्थादनिर्वचनीयतासिद्धिरित्याह—**एवंलक्षणकत्वं चेति।** तर्हि कथं मतभेद इत्यत आह—**विप्रतिपत्तिस्त्विति।** सोऽप्यंशो बलादङ्गीकारयितव्य इति भावः। P. 25-13 P. 25-17

अन्यथाख्यात्यनुवादशङ्कां व्यावर्तयति—**अन्यत्रेति।** तन्मते शुक्त्यादौ रजतादेर्धर्मिण एवारोपादिति भावः। **आत्मख्यातीति।** आत्मनो ज्ञानस्याकारो यो रजतादिः तस्य बाह्ये ख्यातिरित्यर्थः। **मतभेदेनेति।** बाह्यास्तित्ववादिमते तु बाह्यमलीकमेव तदधिष्ठानमिति विशेषमाहेत्यर्थः। P. 26-1

---

१. मु. उ. ३-२-९. २. मु. उ. २-२-८.

अधिष्ठानज्ञानाभावे कथमारोप इत्याशङ्क्य, तत्प्रत्यक्षाभावेऽपि तदनुमानं

P. 26-1 संभवतीत्याह—**यद्यपीत्यादिना** । **अधिष्ठानमिति** । तज्ज्ञानमित्यर्थः । अधिष्ठानवदाकारोऽपि बाह्यः किमिति न भवेदित्यत आह—**आरोप्यं त्विति** । तैस्तथानभ्युपगमादिति भावः ।

P. 26-3 **उपपत्तिस्त्वित्यादिटीकाया** एषोऽर्थः । रजतस्य सत्वे तस्य ज्ञानाकारत्वे च किं प्रमाणमित्यत आह—**उपपत्तिस्त्विति** । न तावत्प्रमाणाभावाद्रजतस्यासत्वमित्याह—**यद्यादृशमिति** । नापि बाधकादित्याह—**नेदमिति** । एवं रजतस्य सत्वं प्रसाध्य तस्य ज्ञानाकारत्वमर्थापत्या साधयति—**तथाचेति** ।

अनुमानादिति पक्षं निराकर्तुं **तत्रानुमानमिति टीका** । तदभिप्राय-

P. 26-3 माह—**सहोपलंभेति** । 'सहोपलंभनियमादभेदो नीलतद्धियोः' इत्यादिबौद्धकारिकोक्तं, यद्येन नियतसहोपलंभं तत्ततो न भिद्यते, यथा एकस्माच्चन्द्रमसः द्वितीयश्चन्द्रमाः इत्याद्यनुमानं साहित्यस्य भेदाविनाभावान्नाभेदसिद्धिरिति निराकरिष्यत इत्यर्थः ।

प्रतिपत्तुः प्रत्ययाभेदेऽपि रजतस्याहमित्युल्लेखापादने को हेतुरित्यत

P. 26-4 आह—**प्रतिपत्तुरिति** । एते पञ्चम्यन्ते । ते च समानाधिकरणे इत्यर्थः । **ज्ञानात्मकादिति** । ततश्च तादृशप्रतिपत्त्यपेक्षया रजतस्यानतिरेकादिति टीकार्थ इति भावः ।

रजतानुभवः किमान्तरं रजतमान्तरत्वेनैवावगाहते ? उत बाह्यत्वेनेति विकल्प्य, प्रथमं निराकृत्य, द्वितीयं शङ्कत इत्याह—**वस्तुतस्त्विति** । तर्हि सविकल्पकानुभवस्य भ्रान्तित्वात् कथमनेन रजतसिद्धिरित्यत आह—

P. 26-5 **भ्रान्तिरूपेति** । [1]सविकल्पकस्य द्वौ विषयौ ग्राह्यः अध्यवसेयश्च । तत्राद्यः अबाधितः स्वलक्षणत्वात् द्वितीयस्तु बाधितो बाह्यत्वादित्यर्थः ।

---

१. द्विविधो हि विषयः प्रमाणानां ग्राह्यश्चाध्यवसेयश्च, तत्र स्वाकारो ग्राह्यः तस्य तु बाह्यत्वमध्यवसेयं, यथाऽऽह—'स्वप्रतिभासेऽर्थे अर्थाध्यवसायेन प्रवृत्तिरिति ।' इति विधिविवेकटीकायां न्यायकणिकायां श्रीवाचस्पतिमिश्राः ॥

एवमपि रजतमात्रं सिद्ध्येत्। तस्य ज्ञानाकारता कुत इति शङ्कते—**सिद्ध इति। प्रागुक्तेति। बहिर्बाधितमर्थादान्तरे** इत्यादिनेत्यर्थः। P. 26-6 आन्तरत्वप्रतिपत्तिप्रकारस्य दर्शितत्वादसन्निधानेत्यादिपरिहारासामञ्जस्यमाशङ्क्य, यदिदं इदन्त्वं प्रतिषिध्यते नेदं रजतमिति, तत् किं पुरोवर्तित्वं बहिष्ट्वं वा? नाद्य इत्याह—**इदन्तेति।** न द्वितीयः। इदन्त्वस्य सन्निहितत्वरूपत्वेन बहिष्ट्वरूपत्वाभावादित्याशयेनाह—**अख्यातिमते हीति।** व्यवहारस्यैव P 26 9 बाध इत्यत्र नियामकमाह—**सर्वसंमतस्येति।**

रजतज्ञानस्य शुक्तिकायां रजतप्रसञ्जकत्वं शुक्तिविषयकत्वे सत्येव भवति नान्यथा। ततश्च किं तत्र भासमानत्वात् शुक्तिका तदालंबनं? उत पुरोवर्तित्वेन? अथवा तत्कारणत्वेनेति विकल्प्य, प्रथमं **न हीत्यादिटीकया** निराकृत्य, द्वितीयं शङ्कते—**ननु मा भात्विति।** रजतज्ञानस्य शुक्तिविशेष्यक- P. 26-13 त्वानभ्युपगमेन तत्प्रत्यक्षत्वाभावे शुक्तेस्तत्र साक्षात्कारणत्वाभावात् परंपरया तदुपपादयन् तृतीयं कल्पमाशङ्कते—**अथेति।**

अगृहीतभेदज्ञानद्वयादेव मिथ्याव्यवहारसिद्धेः न विशिष्टज्ञानावश्यंभाव इति परिहरति—**तत्राहेति। अर्थमारोपितं प्रतिषिध्येति।** रजतज्ञानेन P. 27-2 शुक्तिकायां प्रसञ्जितं देशान्तरस्थमेव रजतमारोपितमिति नैयायिकमतसिद्धमारोपितं प्रतिषिध्येत्यर्थः।

किं सामग्रीबलात् व्यधिकरणप्रकारकज्ञानाभ्युपगमः? विसंवादिप्रवृत्त्यन्यथानुपपत्त्या वेति विकल्प्य, प्रथमं **अपि चेत्यादिटीकया** निराकृत्य द्वितीयं शङ्कते—**ननु मिथ्येति।** भेदाग्रहादेव प्रवृत्तिसिद्धेः न तदर्थं विपर्ययाङ्गीकार इति परिहरति—**तत्राहेति।** शुक्तित्वस्य विशेषत्वोपपादनार्थं सामान्यग्रहणमित्याशयेन व्याचष्टे—**शुक्तित्वरूपस्येति। गृहीतमिदमितीति।** पूर्वानुभूतत्व- P. 27-3 रूपतत्ताप्रकाशनस्वभावेत्यर्थः। सत्यरजतज्ञानसारूप्यमुपपादयति—**सन्निहितेति। न गृहीत इति** विद्यमानस्यापि भेदस्य दोषादग्रहणमिति भावः।

व्यवहारनिवृत्तेः स्वकारणभेदाग्रहाभावादेव सिद्धेः, न बाधकज्ञानफलत्वमित्याशङ्क्य, परंपरया तदित्याह—**इतरेतरेति। इतरेतराभावो** भेदः। P. 27-8 तथा च नेदं रजतमिति बाधकज्ञानेन पुरोवर्तिरजतयोर्भेदबोधनादित्यर्थः।

P. 27-8 विप्रतिपन्ना इति विशेषणवैफल्यमाशङ्क्याह—सर्व इति । सन्देहाश्च विभ्रमाश्चेत्यर्थः । ननु ग्रहणस्मरणयोः विशिष्टज्ञानस्य वा पक्षत्वे अन्यतरमते आश्रयासिद्धिरित्यत आह—अयथार्थेति । नाश्रयासिद्धिरिति । इदमुपलक्षणम् । साध्यमपि सर्वविषयावच्छेदेन याथार्थ्यं विवक्षितमिति, धर्म्यंशयाथार्थ्यमादाय न सिद्धसाधनमित्यपि द्रष्टव्यम् ।

P. 27-17 टीकायाम्—किन्तु गृहीतस्य रजतादेरिति । तथा च तद्विवेकेति भाष्यगततच्छब्देन, यदध्यास इति यच्छब्दनिर्दिष्टस्य रजतादेरध्यासशब्दोपस्थापितस्याध्यासस्थले मतद्वयसंमतस्य रजतस्मरणस्य च ग्रहणम् । विवेकप्रतियोगितया च पुरोऽवस्थितद्रव्यतज्ज्ञानयोरुपस्थितिः । विवेकाग्रहोपयोगितया च पूर्वगृहीते रजते तत्तांशप्रमोषः उक्तः । ततश्च तयोः रजततत्स्मरणयोः शुक्तितज्ज्ञानाभ्यां भेदाग्रहनिबन्धन इति भाष्यार्थ इति भावः ।

प्रवृत्तिव्यपदेशयोरिदं रजतमिति विशिष्टज्ञानाधीनत्वानभ्युपगमादस्तीति सिद्धवन्निर्देशायोगमाशङ्क्य, [1]साध्यत्वाभिप्रायेण योजयति—पुरोवर्तिनीति । टीकायां-तौ कथमग्रहणमात्रादिति । सुषुप्तावपि तदापत्तेरिति भावः ।

स्वरूपतो विषयतश्चागृहीतभेदज्ञानमात्रस्य प्रवर्तकत्वे, [2]रजते 'नेदं रजतं' इति ज्ञानादपि प्रवृत्यापत्तिरित्यत उक्तं—टीकायाम्-स[3]मीचीनपुरस्स्थतेति । टीकायां—तस्मात् सत्तामात्रेण भेदाग्रहे इति । पुरोवर्त्यगृहीता-

P. 27-70

---

१. वस्तुतः "रजतमिदमिति प्रत्ययात्" इति टीकावाक्यस्य विशिष्टज्ञानपरत्व एवायं क्लेशः, 'रजतं' इति, 'इदं' इति च प्रत्ययद्वयाभिप्रायकत्ववर्णने न प्रसाध्यत्वं भवतीति बोध्यम् ।

२. पुरोवर्तिनि रजते इष्टरजतभेदग्रहे, अख्यातिवादिनोऽनभिमतस्य मिथ्याज्ञानस्य प्रसङ्गात्, तत्र 'इदं' इति, 'न रजतं' इति च ज्ञानद्वयस्य कल्पनीयत्वेन पुरोवर्तिनि रजते इष्टभेदाग्रहसत्वात् प्रवृत्त्यापत्तिरिति भावः ।

३. समीचीनेत्यादिटीकया. रजते 'नेदं रजतं' इति ज्ञानस्थले प्रवृत्त्यापत्तिः कथं परिहृतेति चेत् समीचीनपुरस्स्थितरजतविज्ञानसादृश्येन भ्रमस्थलीयग्रहणस्मरणयोः प्रवर्तकत्वं, तच्च सादृश्यं स्वरूपतो विषयतश्च भेदाग्रह एव, प्रमास्थले अविद्यमानस्य भ्रमस्थले तु विद्यमानस्य भेदस्याग्रह इति तु विशेषः । स च भेदाग्रहः अगृहीतः सत्तामात्रेण प्रवर्तक इति उपरि टीकायामेव उक्तम् । स च भेदाग्रहः रजते नेदं रजतमिति भ्रमस्थले नास्ति । रजते रजतभेदग्रहे मिथ्याज्ञानप्रसङ्गेन अस्त्येवेति चेत्

संसर्गकभेदप्रतियोगित्वेनानुपस्थितेष्टज्ञानस्य पुरोवर्तिज्ञानात् भेदाग्रह इत्यर्थः। **टीकायां—चेतनव्यवहारस्येति** । प्रेक्षावत्प्रवृत्तेरिष्टतावच्छेदकप्रकारकप्रवृत्तिविषयविशेष्यकज्ञानमन्तरेणानुपपत्तेरित्यर्थः ।

आशयमजानानः शङ्कते **टीकायां—ननु सत्यमिति** । आशयमुद्घाटयति **टीकायां-मैवमिति**—नन्वगृहीतभेदयोर्ग्रहणस्मरणयोरपीष्टतावच्छेदकप्रकारकत्वात्, प्रवृत्तिविषयविशेष्यकत्वाच्च, तत एव प्रवृत्त्युपपत्तेः न विशिष्टज्ञानकल्पने प्रमाणमित्यत आह—**किमगृहीतेति** । रजतस्मरणस्य प्रवृत्तिविषयविषयकत्वाभावात्, तद्विषयकेच्छाजनकत्वाभावाच्च न तत्र प्रवर्तकत्वमिति परिहरति—**न द्वितीय इत्याहेति** । P. 28-2

**ग्रहणेऽपि तुल्यमिति** । रजतस्मरणस्य पुरोवर्त्यविषयकत्वे तद्विषयकप्रवृत्त्यनुपपत्तिवच्छुक्तिज्ञानस्यापि रजताविषयकत्वे तदिच्छाविरहेण तदर्थिप्रवृत्त्यनुपपत्तेस्तुल्यत्वादित्यर्थः । व्यतिरेकमुखेन सूचितमिच्छायाः पुरोवर्तिन्यावश्यकत्वमन्वयमुखेनाह—**यदि तदिच्छेदिति** । **टीकायां—यद्यतथात्वेनेति** । पुरोवर्तिनः अरजतत्वेनाग्रहणाद्रजतार्थिनः पुरोवर्तिनीच्छा जायते इत्यर्थः। **टीकायां—अपक्षधर्मत्वादिति** । इदं पुरोवर्तिरजतार्थीष्टसाधनं रजतत्वादिति हेतोः पक्षीभूते शुक्तिकाशकले अविद्यमानत्वादित्यर्थः ।

**टीकायां—एकदेशदर्शनमिति** । एकदेशविशिष्टतया तद्धर्मिदर्शनमित्यर्थः। **टीकायां अनुमानं ज्ञातसंबन्धस्यैकदेशदर्शनात् एकदेशान्तरे असन्निकृष्टेऽर्थे बुद्धिरिति** शबरस्वामिवाक्यमुदाहृतम् । तद्व्याचष्टे—**ज्ञातसंबन्धस्येति** । लिङ्गलिङ्ग्युभयविशिष्टस्य धर्मिणः तदन्यतरविशिष्टवेषेणैकदेशत्वं बोध्यम् । P. 28-3

समारोपवादिनोऽपि पुरोवर्तिनि रजतत्वाभावात् अपक्षधर्मत्वं तुल्यमित्याशङ्क्य, असता वैशिष्ट्येन तत्र तत्सत्वाभ्युपगमान्न दोष इत्याह—**समारोपे-** P. 28-4

---

तदर्थमेव आभोगकारैः उपरि 'पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वेनानुपस्थितेष्टज्ञानस्य पुरोवर्तिज्ञानात् भेदाग्रह इति परिष्कृतम् । नेदं रजतमिति भ्रमस्थले च पुरोवर्तिरजते रजतभेदासंसर्गस्य विद्यमानत्वेऽपि तदग्रहणात् रजतभेदः पुरोवर्त्यगृहीतासंसर्गकस्संपन्नः, तादृशरजतभेदप्रतियोगित्वेन इष्टस्य उपस्थितत्वात् तथा अनुपस्थितेष्टज्ञानस्य तत्राभावात् न प्रवृत्त्यनुपपत्तिरिति अवधेयम् ।

त्विति। फलज्ञानस्य प्रवर्तकत्वमभ्युपेत्य हेतुविशेषणस्य प्रयोजनमाह—**पुरोवर्तिनीति।**

नन्वेवं हेतोरसिद्धिः। उपायानां नानात्वेन तज्ज्ञानस्यापि नियमेन पुरोवर्तिनि प्रवर्तकत्वाभावादित्याशङ्क्य, **टीकायां** पूर्वग्रन्थोक्तस्य 'इष्टसाधनत्वव्याप्यरजतत्ववदिदं' इत्येवंरूपस्य रजतज्ञानस्य पक्षत्वात्, तस्य च तत्र नियमेन प्रवर्तकत्वात् नासिद्धिः। फलस्य तु रजतजन्योपकारस्य रजतप्रतिग्रहादिनापि सिद्धेः न तज्ज्ञानस्य नियमेन पुरोवर्तिनि प्रवर्तकत्वमिति वैषम्यमभिप्रेत्याह—**फलस्य हीति। स्मरण इति।** इष्टसाधनत्वेनानुसन्धीयमानगेहगतरजतस्मरण इत्यर्थः।

P. 30-1

प्रवर्तकत्वमित्यत्र प्रवृत्तिर्न यत्नः। किन्तु शरीरचेष्टेत्यभिप्रेत्याह—**वाय्वादाविति।** इच्छाद्वारा प्रवर्तकत्वं विवक्षितं, अतो न दोष इति परिहारतात्पर्यमाह—**वाय्वादिर्हीति।** सत्यरजतज्ञाने पुरोवर्तिशुक्तिविषयकत्वाभावेन दृष्टान्ते साध्यवैकल्यमित्यतः सामान्यव्याप्तिरुपन्यस्ता **टीकायामिति** मन्तव्यम्।

P. 30 2

**दृष्टं चेत्यादे**रनाकांक्षिताभिधानतां परिहरति—**यच्चोक्तमिति।** अनाश्वासः किं प्रवृत्त्यभावः, उत प्रामाण्यानिश्चयः। नाद्यः—प्रामाण्यनिश्चयादेव प्रवृत्त्युपपत्तौ अर्थाव्यभिचारनिश्चयस्य तदहेतुत्वात्। नान्त्यः। अव्यभिचारनिश्चयानधीनत्वात् प्रामाण्यनिश्चयस्येत्युक्तं **टीकायाम्।** तद्विशदयति—**एवं हीत्यादिना।**

किमर्थाव्यभिचारापेक्षा करणप्रामाण्येऽपि उत ज्ञानप्रामाण्यमात्रे? नाद्य इत्याह—**व्यभिचारिणामपीति।** अन्वयव्यभिचारमप्याह—**अव्यभिचारिणामपीति। कुतश्चिन्निमित्तादिति।** बाधसत्प्रतिपक्षादिना प्रमानुत्पादकत्वे फलोपहितप्रामाण्याभावादित्यर्थः। एतच्च प्रथमकल्पमात्रे दूषणम्। हेतोरपि सहकारिविरहे कार्याजनकत्वसंभवेन व्यापकव्यभिचारस्यादोषत्वेन च द्वितीयतृतीययोः कल्पयोरदूषणत्वादिति ध्येयम्।

P. 31-7

द्वितीयं शङ्कते—**भवत्विति।** अव्यभिचार एव ज्ञानस्य प्रामाण्यमिति भावः। **जन्मनैवेति।** जातस्य ज्ञानस्य ज्ञेयानवभासकत्वादर्शनेन तस्य

ज्ञेयावभासे अन्यानपेक्षत्वादित्यर्थः। द्वितीये च सत्यमर्थाव्यभिचार एव प्रामाण्यम्, तन्निश्चयश्च प्रवृत्तावुपयुज्यते, किन्तु स्वप्रकाशत्वात् ज्ञानस्य स्वगतं प्रामाण्यं स्वत एव निश्चीयते इत्युत्सर्गः। क्वचित्तु बाधकवशादपोद्यते, ततश्च स्वारसिक आश्वासः। बाधकवशात्त्वनाश्वासः। त्वन्मते सर्वप्रत्यययाथार्थ्येऽपि क्वचिद्विशिष्टज्ञानं क्वचिदगृहीतभेदं ज्ञानद्वयमित्यभ्युपगमेनानाश्वासतौल्ये, उक्तप्रकारस्यैवानुसरणीयत्वादिति वक्तुं प्रामाण्यस्य परतस्त्वं निराकरोति—**अव्यभिचारेति**। P. 31-2

घटज्ञानगतप्रामाण्यानुमितिजनकीभूतं यत् संवादिप्रवृत्तिजनकत्वादिज्ञानं, तत्किं ज्ञानान्तरेण निश्चितप्रामाण्यं सत् स्वविषयं निश्चाययति? उत अनिश्चितप्रामाण्यं? अथवा स्वत एव निश्चितप्रामाण्यम्? नाद्य इत्याह—**ज्ञानान्तरादिति**। तत्रापि परतस्त्वावश्यंभावादिति भावः।

न द्वितीय इत्याह—**अनिश्चये चेति**। जनकज्ञाने अप्रामाण्यशङ्कया तत्रापि तदापत्तेरित्यर्थः। तृतीयं निराकरोति—**स्वत इति**। अवश्याश्रयणीयत्वादिति भावः। एवं [1]**न्यायकणिकोक्तं** प्रदर्श्य, तत्र समर्थितं स्वतस्त्वं लक्षणप्रमाणाभ्यां प्रपञ्चयितुमाह—**नन्विति**।

स्मृतेर्यथार्थत्वेऽपि प्रमाणव्यवहाराभावात् तद्व्यावृत्त्यर्थं **स्मृतित्वानधिकरणेत्युक्तम्**। **बाधात्यन्ताभावः** विषयव्यभिचाराभावः। **द्वयोरपीति**। P. 31 5 इदमुपलक्षणम्। ज्ञानग्राहकसामग्रीमात्रग्राह्यत्वं ज्ञप्तौ स्वतस्त्वमित्यप्यनुपपन्नम्, तदतिरिक्तानुमितिग्राह्यत्वस्यापि सर्वसंप्रतिपन्नत्वादित्यपि द्रष्टव्यम्।

भ्रमप्रमासाधारणकारणातिरिक्तकारणजन्यत्वाभावः प्रमाया उत्पत्तौ स्वतस्त्वम्, ज्ञानग्राहकसामग्र्यतिरिक्तकारणानपेक्षग्राह्यत्वम्, यावद्ज्ञानग्राहकसामग्री-

---

१. न्यायकणिका मण्डनमिश्रकृतविधिविवेकस्य टीका वाचस्पतिमिश्रप्रणीता। 'मिथ्याप्रत्ययस्य व्यभिचारे सर्वप्रमाणेष्वनाश्वास' इत्याक्षेपः वाचस्पतिमिश्रैः न्यायकणिकायामिव, न्यायवार्तिकतात्पर्यटीकायाम्, ब्रह्मसिद्धिव्याख्यानात्मिकायां ब्रह्मतत्वसमीक्षायाञ्च परिहृतः। अत एव तात्पर्यटीकायाम्—"यथा च प्रमाणाभासव्यभिचारेऽपि प्रमाणे आश्वासः तथा 'प्रमाणतोऽर्थप्रतिपत्तौ' (न्यायवार्तिकम्) इत्यत्र उपदर्शितम्। दिङ्मात्रमत्र दर्शितम्, प्रपञ्चस्तत्वसमीक्षायामस्माभिः कृत इत्युपरम्यते" इत्युक्तम् आदितो द्वितीयसूत्रविवरणावसरे। अत्रापि भामत्यां ब्रह्मतत्वसमीक्षायां विस्तरोऽवगन्तव्य इत्युक्तम्॥

ग्राह्यत्वं वा ज्ञप्तौ स्वतस्त्वमित्यर्थाल्लक्षणसिद्धिमभिप्रेत्य प्रमाणमाह—उच्यत इति। रूपप्रमायाः संयुक्तसमवायान्तर्गतचक्षुस्संयोगजन्यत्वात् रूपजन्यत्वाच्च

P. 32-1 बाधवारणाय—अर्थसंप्रयोगत्वानधिकरणेति चक्षुर्गतेति च साध्यविशेषणे।

ऐतच्चानुमानं चक्षुरादिगतदोषाभाव एव प्रमाहेतुरिति मतमाश्रित्य। भूयोऽवयवेन्द्रियसन्निकर्षादिकमेव प्रमाहेतुरिति मते तु देवदत्तीयरूपप्रमा देवदत्तीयभ्रमप्रमासाधारणरूपज्ञानकारणातिरिक्तरूपज्ञानकारणजन्या न भवति देवदत्तीयप्रमात्वात् श्रोत्रजप्रमावदिति अनुमानं द्रष्टव्यम्। न च दोषाभावस्याहेतुत्वे दोषदशायामपि प्रमोत्पत्त्यापत्तिः। असति प्रतिबन्धके सामग्र्याः कार्यजनकत्वात्। प्रतिबन्धकाभावकारणत्वस्य च निष्प्रमाणकत्वादिति भावः।

P. 33-1 **एषा प्रमेति।** अगृहीतप्रामाण्या प्रमेत्यर्थः। अनेन स्वतस्त्ववादेऽपि गुणज्ञानेन द्वितीयवारं प्रामाण्यग्रहाभ्युपगमात् बाधो वारितः। **तथाविधेति।** गुणज्ञानस्य प्रवृत्तिहेतुत्वं च प्रामाण्यनिश्चयद्वारा बोध्यम्।

**टीकायां—स्मृतिप्रमोषभङ्गस्येति।** भ्रमस्थले रजतमित्यादिस्मृतेः तत्तांशे प्रमोष इति यन्मतं तद्भङ्गस्येत्यर्थः। **टीकायां—विस्तरस्त्विति।** नेदं

P. 34-2 रजतमिति निषेधानुपपत्त्यादिप्रपञ्चस्त्वित्यर्थः। **सर्वतन्त्रसिद्धोऽर्थ इति।** तथा च सिद्धान्त इत्यन्तशब्दोऽर्थपर इति भावः।

P. 34-4 **मिथ्यात्वं विवक्षितमिति।** शुक्तिकादेर्मिथ्यारजतात्मत्वावभासविवक्षायामपि 'रजतवदवभासत' इत्यादिव्यवहारदर्शनेन सादृश्यमिव मिथ्यात्वमपि वतेरर्थ इति भावः। **वस्तुतस्तु स्वार्थिको वतिः 'नित्यवच्छ्रवणविरोधात्'** इत्यादि-

---

१. परतस्त्ववादिमते केचित् चक्षुरादिगतपित्तादिदोषाभावरूपगुणः प्रमाहेतुरिति वदन्ति। अन्ये भूयोऽवयवेन्द्रियसन्निकर्षादिरूपगुणः प्रमाहेतुरिति वदन्ति, प्रथमानुमानं प्रथममतं निराकरोति - चक्षुर्गतदोषाभावस्य अर्थसंप्रयोगत्वाभावात् चक्षुर्गतगुणत्वाच्च तज्जन्यत्वनिरासात्। प्रथमानुमानेन द्वितीयमतं न निराकर्तुं शक्यते, भूयोऽवयवेन्द्रियसन्निकर्षादिरूपगुणस्य अर्थसंप्रयोगरूपत्वेन तज्जन्यत्ववादिनां मतेऽपि अर्थसंप्रयोगत्वानधिकरणचक्षुर्गतगुणजन्यत्वाभावस्य रूपप्रमायां संभवात्। अतः द्वितीयानुमानं सर्वविधपरतस्त्ववादिमतनिरासकमाश्रितमिति ध्येयम्॥

प्रयोगदर्शनेन स्वार्थिकस्यापि प्रामाणिकत्वात्। ततश्च शुक्तिका रजतमभादिति शुक्तिज्ञानेन रजततादात्म्यावगाहनात् मिथ्यात्वसिद्धिरिति ध्येयम्।

'आह कोऽयम्' इत्यादिभाष्येण 'कथं पुनः' इत्यादिभाष्यस्य पौनरुक्त्यं परिहर्तुं **टीकायां पुनरपीत्युक्तम्।** तत्तात्पर्यं प्रकटयन्नाह—**एवमिति।** प्रकाशत इति पक्षेऽपि किं ज्ञानविषयतया प्रकाशते, उत घटादिसंविदाश्रयत्वेन? अथवा स्वप्रकाशत्वेन? आद्येऽपि किं स्वसमवेतज्ञानविषयतया स्वग्राह्यत्वम्, परात्मग्राह्यत्वं वा? नाद्यः—आत्मनः स्वसमवेतज्ञानक्रियाजन्यफलशालित्वे कर्मलक्षणाभावेन कर्मत्वाभावे, विषयत्वायोगादिति वक्तुं **न खलु स एवेत्यादिटीकेत्याह—नाद्य इत्याहेति।** P. 34-5

न चैकस्याप्यात्मनः औपाधिकभेदाश्रयणेन कर्मत्वनिर्वाहः, कर्तृकर्मभावे स्वरूपभेदस्यैव तन्त्रत्वात्। अन्यथा देवदत्तो देवदत्तं गच्छतीत्यप्यापत्तेः। अत एव मामहं जानामीत्यादावात्मान्तःकरणयोरेव कर्तृकर्मभाव इत्यभिप्रेत्य, **टीकायां न च तदेव स्वं च परं च विरोधादित्युक्तम्।** आत्मान्तरसमवेतज्ञानकर्मत्वे च तदात्मान्तरं ज्ञेयम्, उत न? नान्त्यः? यो न ज्ञेयः तस्यैवात्मत्वापत्त्या ज्ञेयस्यानात्मत्वप्रसङ्गात्। आद्ये तस्याप्यात्मान्तरग्राह्यत्वमित्यनवस्थापत्त्या कस्याप्यात्मत्वं न सिद्ध्येदिति द्वितीयं दूषयतीत्याह—**न द्वितीय इत्याहेति।**

द्वितीयं कल्पमुत्थापयतीत्याह—**संविदाश्रयत्वेनेति।** ननु **टीकाया-** P. 34-6 मात्मनः न संविदाश्रयत्वं संभवति? **चिद्रूपत्वप्रतिपादकश्रुतिविरोधादि-** त्युक्त्वा तत्रापि ज्ञानाश्रयत्वमेवोच्यते, इत्याशिशङ्काव्युदासाय चिद्रूप एव ब्रह्मणि श्रुतीनां तात्पर्यमिति दर्शयितुमुक्तमुपपद्यते चेति। **तथाहीत्यादिना** च संवित्स्वप्रकाशत्वादिकमन्यदेवोच्यते नात्मनः चिद्रूपत्वमित्याशङ्क्य, संविदःप्रकाशत्वं प्रसाध्य ततो भिन्नस्य जडस्य कथंचिदपि प्रकाशानुपपत्त्या तद्विवर्ततया तदभेदेनैव प्रकाशावश्यंभावेन सकलजगद्विवर्ताधिष्ठानतया श्रूयमाणस्य ब्रह्मणो युक्तमेव जन्मादिविकाररहिताभिन्नस्वप्रकाशसंविद्रूपत्वमिति वक्तुं स्वप्रकाशत्वाद्युपपादन-

---

१. 'शुक्तिका' इति शुक्तित्वज्ञानपूर्वकम्, शुक्तित्वेन ज्ञातायां व्यक्तौ 'रजतमभात्' इति रजततादात्म्यावगाहनात् रजततादात्म्यावगाहिप्रत्ययस्य अन्यस्य अन्यतादात्म्यावगाहित्वेन भ्रमत्वाविष्करणात् तद्विषयस्य मिथ्यात्वसिद्धिरिति भावः॥

P. 35-1 मित्याह—**स्वप्रकाशफलस्येति**। स्वप्रकाशस्य फलस्य स्फुरणस्येत्यर्थः। वृत्तिरूपस्य तु ज्ञानस्य जडत्वमेवेति भावः।

प्रकाशो जड इति पक्षेपि किमर्थात्मनोस्तस्मादेव प्रकाशात् स्फुरणमुत
P. 35-4 तज्जनितात् ज्ञानात्? नाद्य इत्याह—**टीकायां—जडश्चेदिति**। ननु जडत्वाविशेषेऽपि स्वच्छत्वास्वच्छत्वादिविशेषवत् प्रकाशकत्वतदभावविशेषोऽपि स्यादित्याशङ्क्य प्रकाशैकलोलीभावेन विना कस्यापि प्रकाशादर्शनान्नैवमित्याह—**टीकायां-अविशेषादिति**। अस्तु, ततः किम्? तत्राह—**टीकायां—प्राप्तमिति**। [1]ततश्चेति शेषः। **आभाणकः** लोकगाथा। नान्त्य इत्याह—**टीकायां—न च निलीनमेवेति**।

अथानवस्थापरिहाराय दूरे गत्वा ज्ञानं स्वप्रकाशमिष्यते, तदादावे-
P. 35-7 वास्त्वित्याशयेनाह—**टीकायां—तस्मादिति**। **तथापीत्यादिटीकाग्रन्थस्य** परिहारग्रन्थत्वात् तद्व्यावर्त्यां शङ्कामाह—**नन्वभ्युपेयत इति**। **टीकायां—किमायातमिति**। अन्यस्य स्वयंप्रकाशत्वमात्रेणान्यस्य प्रकाशे अतिप्रसङ्गादिति भावः।

P. 36-1 संबन्धो नियामक इति शङ्कते—**टीकायां—एतदायातमिति**। किं सापेक्षत्वमात्रं संबन्धः? उत नित्यसापेक्षत्वम्? अथवा तद्धर्माविनाभूतधर्मकत्वम्? आद्यं निराकर्तुं **तत्किमित्यादिटीका**। तदभिप्रायं प्रकटयन्नेव
P. 35-2 द्वितीयमुत्थापयति — **अर्थात्मसंबन्धिन्यामित्यादिना**। वैषम्यमेवाह—**आश्रयेति**। पितापुत्रयोः स्वरूपेण नित्यसापेक्षत्वाभावेऽपि पितृत्वादिवेषेण
P. 36-2 तदस्तीति परिहारतात्पर्यमाह—**पुत्रगतेति**।

**टीकायां—सह्यार्थात्मेत्यादिना** अर्थात्मप्रकाशाविनाभूतप्रकाशशालित्वं संबन्ध इति तृतीयं कल्पमाशङ्क्य **तत्किमित्यादिना** स निराकृतः। तत्र संविदर्थात्मनां त्रित्वात् प्रकाशाविति द्विवचनायोगमाशङ्क्य, द्वयोरप्यर्थात्मनोर्जडत्वेनैकीकारान्न दोष इति दर्शयन् किंशब्दसूचितं विकल्पं विशदयति—
P. 36-3 **अर्थात्मनोरिति**। **तथाचेत्यादिटीकोक्तं** दोषद्वयं विशदयन्ननिष्टपर्यवसायि-

---

१. टीकायां 'इति प्राप्तम्' इति पाठो दृश्यते, तत्र ततश्चेति शेषपूरणमनावश्यकम्। इतिपदरहितपाठं दृष्ट्वा शेषपूरणं कृतमिति ज्ञायते॥

तामाह—**संविद इति**। द्वितीयं शङ्कत इत्याह—**अभेदमाशङ्कत इति**। टीकोक्तां विवक्षितार्थासिद्धिं उपपादयति—**संविदतिरिक्तेति**। **अनुपयोग उक्त इति**। अर्थस्य प्रकाशमानतायां सहभावस्यानुपयोग उक्त इत्यर्थः। P. 36-7

उत्तरत्र हानादिबुद्धीनां अतीतादिविषयत्वाशङ्कनादिह तद्विषयत्वं बुद्धिविशेषणमित्याशयेनाह—**तद्विषयाश्च ताः इति**। **हेताविति**। साध्ये तु बाधः स्फुट इति भावः। **तां परिहरतीति**। विशेषणासिद्धिं परिहरति शङ्कादृढीकरणायेत्यर्थः। P. 36-10

किं तद्विषयकहानादिप्रवृत्तिजनकत्वमात्रं तत्प्रकाशकत्वे तन्त्रं? उत प्रकाशत्वविशेषितम्, अथवा, तदभिन्नप्रकाशत्वम्? नाद्यः। प्रयत्नवदात्मशरीरसंयोगस्यापि तद्विषयहानादिप्रवृत्तिजनकत्वेन तद्विषयतया तत्प्रकाशत्वापत्तेरित्युक्तम् **टीकायां—तत्किमित्यादिना**। तत्रैतद्दोषभिया तद्विषयकहानादिजनकत्वं न हानादिबुद्धीनां तद्विषयत्वे तन्त्रं, हानादीनामपि तद्विषयत्वासिद्धेरिति यद्युच्येत, तर्हि, विशेषणासिद्धिरिति **टीका**भिप्राय इत्याह—**अर्थविषयेति**। P. 36-12

द्वितीयतृतीयनिराकरणपरतया **नन्वयमित्यादिटीकां** व्याकरोति—**प्रयत्नवदिति**। **अर्थे त्विति**। स्वभिन्ने अर्थे जडरूपैव संवित्, संविदः प्रकाशरूपतायां संविदभेदस्यैव तन्त्रत्वादिति भावः। **टीका**सूचितं तृतीयकल्पनिराकरणं प्रकटीकुर्वन्नाह—**अर्थस्यापीति**। अध्यासाक्षेपवादिना **तस्मादित्यादिना** प्रपञ्चानिर्वचनीयत्ववर्णनमयुक्तमित्यत आह—**सिद्धान्त्यभिमतामिति**। प्रकाशभेदनिरसनस्य फलं दर्शयन्नाह—**एवमिति**। P. 36-14

**टीकायां**—किं प्रकाशस्य स्वतो भेदः? उतोपाधितः? नाद्यः। सर्वेषामपि पुरुषाणामनुभवामीत्यनुभवांशे एकाकारतावभासनेन भेदाप्रतीतेः। न

---

१. अस्य कल्पतरुवाक्यस्यायमर्थः—संवित्प्रकाशस्य अर्थात्मप्रकाशस्य च संविदनतिरेके 'सहार्थात्मप्रकाशेन संवित्प्रकाशः' इति वाक्ये संविदः प्रकाश इति षष्ठ्यर्थस्य, सहपदार्थसाहित्यस्य च बाधः। 'राहोश्शिर' इतिवत् षष्ठ्युपपत्तावपि साहित्यबाधापरिहार एव। यदि साहित्यबाधपरिहाराय अर्थात्मप्रकाशपदेन प्रकाशमानार्थात्मविवक्षा, तदा 'सहार्थात्मप्रकाशेन संवित्प्रकाश' इति वाक्येन संविदर्थात्मनां साहित्यमुक्तं स्यात् तथाच पुत्रपाण्डित्यतुल्यतेत्यर्थः इति। अत्र टीकायां 'संविदात्मार्थौ' इतिपदे आत्मसहितोऽर्थः आत्मार्थः संविच्च आत्मार्थश्च संविदात्मार्थौ इति विग्रहात् द्विवचनोपपत्तिः।

चायमेकाकारप्रत्ययो जात्यैक्यनिबन्धनः। लाघवेन व्यक्त्यैक्यविषयकत्वस्यैव कल्पनौचित्यात्। न चैवमिच्छामीत्याद्यनुगतप्रत्ययादिच्छादीनामप्येकत्वापत्तिः। मम तदिच्छा नष्टा इदानीमेतदिच्छा समुत्पन्ना, इत्युत्पत्तिविनाशानुभवेन वैषम्यात्। ज्ञाने उत्पत्तिविनाशानुभवस्य तदवच्छेदकवृत्तिविषयत्वात्। न चैवमिच्छायामप्युत्पत्तिविनाशानुभवस्य वृत्तिविषयत्वम्। तत्र वृत्त्यभावात्। ज्ञानस्य सच्चिदानन्दाद्वितीयात्मरूपतया, तदुत्पत्तिविनाशनानात्वानुभवनिर्वाहार्थमवच्छेदकवृत्त्यभ्युपगमेऽपि स्वरूपेणैवोत्पत्तिविनाशाद्यनुभवयोग्यायामिच्छायामवच्छेदकवृत्ति-
P. 37-2 कल्पनस्य निष्प्रमाणकत्वादित्याशयेनाह— **टीकायां—न चास्येति।**

द्वितीये स उपाधिः किं मिथ्या? उत सत्यः? नाद्यः। अध्यस्तरङ्ग-रजतादिभेदेऽपि शुक्तिभेदादर्शनेन मिथ्योपाधेरधिष्ठानाभेदकत्वादित्याह— **टीकायां न चेति।** नान्त्यः— प्रपञ्चसत्यत्वस्य निराकरिष्यमाणत्वादित्याह— **टीकायां—न चेति।**

कालमात्रस्य पक्षत्वे जागृत्स्वप्नयोर्वृत्तिसाक्षात्कारेण सिद्धसाधनं स्यादित्यत उक्तम्— **सुषुप्तिकाल इति।** न च सुषुप्तावपि तमादायार्थान्तरम्। तत्र मनसो लयश्रवणेन तदानीमहंवृत्त्ययोगात्। न च 'सुखमहमस्वाप्सम्' इति परामर्शानुपपत्तिः। सुषुप्तिकालसाक्षात्कृतप्रत्यगात्मगोचरे परामर्शे तत्कालसमुद्भूतसाक्ष्यध्य-
P. 37-3 स्ताहमर्थानुरागसंभवादित्याशयेनाह— **न च सुषुप्ताविति।**

साक्षात्कारपदप्रयोजनमाह— **न च पुरुषान्तरमिति। विशेषणीयमिति।** अयोग्यनीश्वरसाक्षात्कारवानिति विशेषणीयमित्यर्थः। **तदेवेति**—
P. 37-6 प्रातिलोम्यमेवेत्यर्थः। कथंशब्दे किंशब्दसद्भावं प्रकटयति— **कथमिति। थमुप्रत्ययान्तस्येति।** 'किमश्च' इति सूत्रेण किंशब्दात् थमुप्रत्यये, 'किमः कः' इति सूत्रेण किंशब्दस्य कादेशे च कथमिति रूपमित्यर्थः।

ननु **टीकायां—सर्वो हीति** भाष्यमुपात्तम्। तदप्रकाशत्वपक्षे दूषणाभिधानसमर्थम्। **एतदुक्तं भवतीत्यादिना** च स्वयंप्रकाशत्वपक्षे दूषणमुच्यते, ततश्च भाष्यविरोध इत्याशङ्क्य, **पूर्वभाष्ये प्रत्यगात्मनीति विशेषणसूचितं** स्वप्रकाशत्वपक्षे दूषणं विशदीकुर्वन् **सर्वो हीति** भाष्योक्तं अप्रकाशत्वपक्षे दूषणं **सदातनेऽपीत्यादिना** दर्शयतीत्याशयेनाह— **अप्रथ-**
P. 37-7 **मानत्वपक्ष इति।**

ननु स्वप्रकाशत्वरूपमत्यन्तग्रहणं सर्वदा प्रकाशराहित्यरूपमत्यन्ताग्रहणं च नेष्यते। किंतु तद्विषयकेण ज्ञानेन प्रकाशमानत्वमेव। ततश्च नाध्यासविरोध इति शङ्कते—**टीकायां—स्यादेतदिति।** आत्मनो ज्ञानविषयत्वे दृश्यत्वेनेदंकारास्पदत्वेन च मिथ्यात्वादनात्मत्वापत्तेः, तस्यापि ज्ञानस्य ज्ञानान्तरविषयत्वे अनवस्थापत्तेश्च कस्यचित् स्वप्रकाशत्वावश्यंभावे आत्मन एव तद्युक्तमिति परिहारभाष्याभिप्रायमाह—**टीकायां—विषयत्वे हीति।**

'उच्यत' इत्यादिभाष्यव्याख्याने वीजं दर्शयति—**भाष्यकारेणेति।** P. 38.1 सतोऽविषयत्वमित्यत्र अविषयत्वमिति छेदः। **स्वत एवेति।** ततश्च विषयत्वाविषयत्वे उभे अप्यंशभेदेन स्वत एव स्तामिति भावः। **चिद्रूपे भातीति** सप्तम्यन्तम्।

किमानन्दादिभाने प्रमाणाभाव इति आशयः, उत तद्भाने तदुल्लेखोऽपि स्यादिति? अथवा तदुल्लेखरहिते तद्भानं दृष्टविरुद्धमिति? नाद्यः। आनन्दादेश्चिद्रूपाभेदेन तद्भाने भानावश्यंभावात्। न हि संभवति घटत्वं भासते, कलशत्वं न भासते, इतीत्याशयेनाह—**नेत्याहेति।** द्वितीयमाशङ्क्य निराकरोति—**तर्हीति।** न तृतीय इत्याह—**यथा खल्विति।** P. 38-6

पूर्वेद्युर्दृष्टस्य देवदत्तादेः पुनर्दर्शने 'अयं देवदत्त' इत्यादौ तदैक्यमपि विषयः, उत्तरकालं स वा अन्यो वेति संशयादर्शनात्। अथापि सोऽयमित्येवं तत्ताद्युल्लेखेन स्पष्टं न भासत इव। तथैव स्वरूपानन्दस्फूर्तावपि संसारदशायां दुःखसंमिश्रतया तत्प्रत्यनीकत्वेनाग्रहणात् [1]अध्यस्तापकर्षयोगाच्च न तदुल्लेखः। तद्ग्रहणदशायां तु भवत्येव कथञ्चिदुल्लेखः 'सुखं वर्ते' 'सुखमहमस्वाप्सं' इति चेति भावः। **तत्र विद्यमानत्वादिति।** तदात्मना विद्यमानत्वादित्यर्थः।

ननु बुद्ध्यादिभेदस्य कथमनिर्वचनीयत्वम्? अबाध्यत्वादित्याशङ्क्य, तस्यापि ब्रह्मज्ञानबाध्यत्वात् नैवमित्यानन्दादिवैषम्येणाह—**आनन्दादीनामिति।** P. 38-9

---

१. "निरतिशये स्वरूपानन्दे संसारदशायां अविद्यान्तःकरणोपधानदोषात् अस्त्यध्यस्तोऽपकर्षः, तथा च अध्यस्तापकर्षयुक्ततया गृहीतोऽप्यानन्दो मेघावरणकृतापकर्षसौरालोकवदगृहीत इव भाति" इति परिमलोक्तिमनुसृत्य 'अध्यस्तापकर्षयोगाच्च' इत्युक्तम्॥

आदिशब्देन नित्यत्वविभुत्वादीनां ग्रहणम्? चिदात्मनश्चैतन्यकर्मत्वलक्षणं विषयत्वमसिद्धमिति परिहरति—**तत्राहेति**। कथं तर्हि चिदात्मनोऽहं इति विषयत्वानुभवः। तदभावे वा कथं तद्व्यवहारः। ततश्च विषयत्वे युष्मत्प्रत्ययविषयत्वादनात्मत्वे अहमित्यस्मदुल्लेखश्च न स्यादित्याशङ्क्य योऽयमहमर्थे इदमंशः अन्तःकरणं-तदात्मना विषयत्वानुभवः। ततश्च न व्यवहारानुपपत्तिः। अनिदमात्मकचिद्रूपत्वेनास्मदुल्लेखश्चोपपद्यत इत्याह—**इदमात्मकत्वेनेति**। ततश्च **टीकोक्तमनिदमात्मनो विषयत्वं**, अस्मत्प्रत्ययाधीनव्यवहारयोग्यत्वमिति भावः।

P. 38-11

**तद्धर्मान्वयेति**। इदमंशधर्मः कर्तृत्वादिः अनिदमंशधर्मश्चौदासीन्यमित्यर्थः। नन्वहंप्रत्यये किमित्यंशद्वयं कल्प्यते? जीवब्रह्मणोर्भेदेन कर्तृत्वादिरहंप्रत्ययविषयस्य जीवस्य धर्मः। औदासीन्यं तु वेदान्तप्रतिपाद्यस्य ब्रह्मण एव धर्मः इति कुतो न भवेदिति शङ्कते—**नन्विति**। ब्रह्मणा 'अनेन जीवेनात्मने' ति जीवस्य स्वस्वरूपत्वेन कीर्तितत्वात् 'तत्त्वमसी'त्यादिश्रुतिशतेभ्यश्च न जीवब्रह्मभेदोऽभ्युपगन्तुं युक्त इति परिहरति—**तत्राहेति**। **टीकायां**—गृहीतभाष्यभाववर्णनं **जीवो हीति**। **अविषय इति** छेदः।

ननु **स्यादेतदित्यादिशङ्कायां** 'किंतु प्रत्यगात्मा न स्वतः नापि परतः प्रथत' **इत्युक्तम्**। तदयुक्तम्। स्वप्रकाशत्वाभ्युपगमविरोधादित्याशङ्क्य, मतभेदान्न दोष इत्याशयेनाह—**स्वप्रकाश इति**। **अप्रकाशसमर्थनेनेति**। **अखण्डानन्दादिस्वरूपस्येति** शेषः। सर्वथा अप्रकाशमानत्वे, प्रत्यगात्मनि कुतोऽध्यास इत्यध्यासाक्षेपायोगमाशङ्क्याह—**अपरोक्षत्वेति**। प्रकाशमानमात्रे किमित्यध्यासो न भवेदित्यत आह—**अपरोक्षेति**। शुक्त्यादौ तथा दर्शनादिति भावः।

P. 39-3

P. 39-5

**रूपस्पर्शविरहादिति हेतौ** रूपस्पर्शपदयोरन्यतरवैयर्थ्यमाशङ्क्याह—**रूपरहितेति**। **द्वितीय एवेति**। प्रथमहेतोस्तत्र व्यभिचारादिति भावः। **टीकायामविवेकिन इत्यस्य** व्याख्यानं परदर्शितेति। **टीकायां पार्थिवच्छाया** तमः **तद्गतां श्यामतां** इत्यर्थः। **मलिनतादीत्यादिशब्दनिर्दिष्टस्य** शुक्लरूपस्याप्यध्यासं दर्शयति—**टीकायां-कदाचिदिति**। उभयत्राप्यध्यासलक्षणयोगादध्यस्यन्तीति भाष्यमुपपन्नमित्याशयेनाह—**टीकायां—तत्रापीति**। तलत्वाध्यासं विशदयति—**तदेवेति**। नभ एव **तलरूपमध्यस्यन्तीत्यर्थः**।

आत्माध्यासस्यैव प्राधान्येन निरूपणे **अविद्यारूपत्वं हेतुरुक्तो भाष्ये**। तत्र हेतोरप्रयोजकत्वं निराकरोति **टीकायां-अविद्या हीति**। रज्जुसर्पादिविभ्रमाणामपि अनर्थहेतुत्वेनाविद्यात्वात् अविशेषमाशङ्क्य, तेषां अनर्थहेतुत्वमात्मनि अनात्माध्यासाधीनमिति तस्यैव सर्वानर्थहेतुत्वमित्याशयेनाह— **टीकायां-प्रत्यगात्मनीति**। तर्ह्यनर्थहेतुत्वादेव तन्निरूपणं वृथेत्यत आह— **तत्स्वरूपं त्विति**। P. 40-4

**एवंलक्षणमिति भाष्ये एवंशब्देन** जीवानुभवपरामर्शादनर्थहेतुतोक्तेति दर्शयति—**टीकायां-यस्मादिति**। **अशनाया बुभुक्षा आदिशब्देन** पिपासादिकं गृह्यते। **दुःखाकरोतीति**। '[1]दुःखात् प्रातिलोम्ये' इति सूत्रेण अभूततद्भावे डाच्प्रत्यये रूपम्। ततश्चादुःखिनं दुःखिनं **करोतीति तदर्थः**। तत्र प्रत्यगात्मनि दुःखस्य सर्वानुभवसिद्धत्वात् अदुःखिनमित्ययुक्तमित्यतः व्याचष्टे— **वस्तुवृत्तत इति**। **टीकायां—अत इति**। पृथग्जनैरध्यासत्वेनामननादित्यर्थः। P. 40-8

**तद्विवेकेनेति** भाष्येण प्रत्यगात्मनः बुद्ध्यादिभ्यो भेदग्रहस्य वस्तुस्वरूपावधारणे उपयोग उक्तः। तत्र विवेकग्रहे सामग्रीं दर्शयन् उपयोगप्रकारं दर्शयति—**टीकायां—प्रत्यगात्मनीत्यादिना**। **बुद्ध्यादिभ्यो विविक्त इत्यन्वयः**।

**ननु टीकायां विद्यायाश्चिदात्मरूपत्वमुक्तमयुक्तम्**। भाष्यविरोधात्। स्वरूपस्य सदातनत्वेनाविद्यानिवर्तकत्वायोगाच्चेत्यत आह—**वस्तुस्वरूपं च तदिति**। **अभिव्यक्तमिति**। अखण्डाकारवृत्त्यभिव्यक्तमित्यर्थः। ततश्च स्वरूपमात्रस्याविद्यानिवर्तकत्वाभावेऽपि सूर्यकान्तलग्नस्य सौरतेजस इव वृत्त्याऽभिव्यक्तस्य दाहकत्वमुपपद्यत इति भावः।

**तत्कृतेनेति भाष्ये** तच्छब्देनाधिष्ठानारोप्ययोरुभयोरपि ग्रहणमभिप्रेत्य व्याचष्टे **टीकायां—अन्तःकरणादित्यादिना**। एवमपि [2]वासनावशात् पुनरुद्भ-

---

१. पा. सू. ५-४-६४.

२. वासनावशात् मिथ्याप्रत्ययस्य पुनरुद्भवमाशङ्क्य न्यायवार्तिकतात्पर्यटीकायामपि इत्थमेव परिहृतम्—"तावदेव पुंसां बुद्धयोऽस्थिराः भ्राम्यन्ति स्वोचितं संस्कारजातमातन्वते च, न यावत् भूतमर्थं साक्षात् कुर्वन्ति। अथ साक्षात्कृते तत्र स्थिरपदा

विष्यतीत्यस्य कः परिहार इत्याशङ्क्य, भाष्ये अणुमात्रेणापीत्यनेन वासनाया P. 40-16 अपि निवृत्तिरुक्तेति दर्शयति **टीकायां-एतदुक्तं भवतीत्यादिना ।**

ननु मिथ्याप्रत्यय एव तत्वावधारणं किमिति नापनयेदित्यत आह— **टीकायां–तत्वपक्षपातो हीति ।** वस्तुतत्वपक्षपात इत्यर्थः । **हिशब्देन** धियां वस्तुतत्वविषय एव दृढकार्यजनकत्वेन तत्प्रावण्यलक्षणः पक्षपातः लोकसिद्ध इति दर्शितम् । वस्तुतो निरुपद्रवस्यापि भूतार्थस्य तदनिर्णये विपर्ययैः बाधो दृश्यत इत्यत आह—**भावनाप्रकर्षादिति ।**

बाह्याः खल्वेवमाहुः 'सर्वमिदं क्षणिकं' इति भावनाया अनादित्वकल्पना निवर्तते । 'शुद्धस्वलक्षणं' इति भावनया द्रव्यगुणशब्दकर्मविशेषणविशेष्य-कल्पना विनश्यन्ति । 'दुःख'मिति भावनया रागादिदोषप्रवृत्तिसुखदुःखोपप्लवाः क्षीयन्ते । 'शून्यम्' इति भावनया विषयोपप्लवविगमः। ततश्च भावनाभेदैः चतुर्भिः चतुर्विधसंस्कारविरोधिभिः चतुर्विधेषूपप्लवेषु क्रमेण मन्दीकृतेषु भावनाप्रकर्ष-पर्यन्तात् समनन्तरप्रत्ययात् सर्वोपप्लवविरहितं चरमं विज्ञानमुत्पद्यत इति । तदेतदाह—**भावनाप्रकर्षाद्विशदाभमिति ।** विशदा स्फुटा आभा स्फूर्तिः यस्य तदित्यर्थः । **सर्वविषयमिति ।** सामस्त्येन नैरात्म्यविषयमित्यर्थः ।

ननु ज्ञानस्य यथाभूतकृत्स्नवस्तुविषयकत्वे भवेत्प्राबल्यम् । तदेव तु नास्ति । तथाहि—ज्ञानं न सर्वविषयम्, सातिशयत्वात् । न च हेत्वसिद्धिः । भावनाजन्यत्वेन तत्सिद्धेः । नैरात्म्यादिभावना सातिशयकार्यजनिका, अभ्यास-P. 40-4 त्वात्, लङ्घनाभ्यासवत् इत्याशयेन शङ्कते—**नन्विति ।** सातिशयप्रयत्नजन्य-त्वमुपाधिरित्याशयेन परिहरति—**इति शङ्कामिति ।** उपाधेः साध्यव्यापकत्व-साधनाव्यापकत्वे दर्शयति—**लङ्घनाभ्यासे हीत्यादिना ।**

किञ्च नैरात्म्याद्यभ्यासः निरतिशयोत्कर्षशालिकार्यजनकः अभ्यस्यमाने पूर्वकार्यजनकप्रयत्नाधिकप्रयत्नानपेक्षत्वे सति उत्कृष्टकार्यजनकाभ्यासत्वात् सुवर्ण-P. 40-7 पुटपाकाभ्यासवदित्यनुमानादपि ज्ञानस्य सर्वविषयत्वसिद्धिरित्याह—**वैशद्याधि-क्यं चेत्यादिना ।**

---

भवन्ति । क्षिण्वन्ति च सवासनान् मिथ्याप्रत्ययान् । भूतार्थपक्षपातो हि बुद्धेः स्वभावः यदाहुर्बाह्या अपि—निरुपद्रव-पक्षपाततः । इति । तस्मात् मिथ्याज्ञानस्य न पुनरुत्पाद" इति ॥

ननु पौनरुक्त्यपरिहारार्थं अहमिदं शरीरादीत्याद्यभिलपनलक्षणव्यवहार एव तत्रोक्त इत्यभ्युपगमे, प्रवृत्तिलक्षणव्यवहारस्याप्यध्यासाधीनतया, तदनुक्तौ न्यूनतापत्तिरित्याशङ्क्य, अहंममाध्यासाभिलापस्य सर्वलोकप्रसिद्धत्वात् प्राथमिकत्वाच्च स एव तत्र कण्ठरवेणोक्तः, प्रवृत्तिलक्षणव्यवहारस्तु तत्र सूचित इति नानुक्तिदोष इत्याशयेनाह—**टीकायां—इतिशब्दसूचितमिति।** **टीकायां—निगदव्याख्यानमिति।** निगदो निगदनमुच्चारणं तदेव व्याख्यानं यस्येत्यर्थः। स्पष्टार्थमेतदिति भावः।

ननु '**तत्वपरिच्छेदो हि**' इत्यादिटीकायां '**कथं पुन**'रित्यादिभाष्यस्य विद्याविद्ययोर्विरोधात् नाविद्यावद्विषयत्वं प्रमाणानामित्याक्षेपाभिप्रायो वर्ण्यते। तदयुक्तं; '**उच्यते**' इत्यादिपरिहारभाष्ये अविद्यायाः प्रमाणप्रवृत्तावुपयोगकथनेन शङ्काया अनुपयोगपरत्वौचित्यादित्याशङ्क्य विरोधानुपयोगोभयाभिप्रायतया भाष्यं व्याख्यातुं इयं **टीके**त्यभिप्रेत्य विभज्य व्याचष्टे—**प्रमाकरणानीत्यादिना। विरोधाभिप्रायमिति। विद्याया अविद्याविरोधित्वादित्येवमाक्षेपाभिप्रायमित्यर्थः।** P. 40-10

अत एव वक्ष्यति[1]—'अनेन **नाविद्यावन्तमिति** ग्रन्थस्य आक्षेपः परिहृतः' इति। '**अहंममाभिमानहीनस्य**' इति भाष्यपदम्, तत्र अहमभिमानहीनस्येत्यंशं व्याचष्टे—**तादात्म्याध्यासहीनस्येत्यंशेनेत्यर्थः।** P. 41-1 **टीकायां-प्रयोजनीयमिति।** प्रेरणीयमित्यर्थः। **प्रमाणप्रवृत्त्यनुपपत्तेरिति** भाष्ये **अविद्यावद्विषयाणि प्रमाणानी**त्यनुषङ्गमभिप्रेत्याह **टीकायां—भवत्यविद्यावत्पुरुषविषयत्वमिति।** अत्र च विषयत्वमाश्रयत्वं विवक्षितमित्याशयेनाह—**टीकायां-अविद्यावत्पुरुषाश्रयत्वमिति।** P. 41-6

प्रमाणानामविद्यावत्पुरुषविषयत्वमाक्षिपता आत्माधिष्ठितानां प्रमाणानां प्रवृत्तिरित्यभ्युपगम्यते, उत प्रवृत्तिरेव नेति? अथवा अनधिष्ठितानामेव प्रवृत्तिरिति विकल्पं मनसि निधाय, प्रथमं **देहेन्द्रियादिष्वित्यादि**भाष्यव्याख्यानेन निराकृत्य, द्वितीयमुत्थापयति—**टीकायां-अथेति। अनुपादाय** अप्रवर्त्य।

---

[1] कल्पतरौ इति शेषः॥

इन्द्रियादीनामप्रेरणेपि अभिलपनलक्षणव्यवहारसंभवात् भाष्यायोगमा- P. 41-3 शङ्क्य, **व्यवहारशब्देन** प्रमितिरुच्यत, इत्याह—**टीकायां-व्यवह्रियते इति**। 'दण्डिनो गच्छन्ती'त्यत्र कस्य पदस्य कुत्र लक्षणा? अन्वयानुपपत्त्य- P. 41-4 भावाच्च किमर्थं लक्षणेत्यतः तद्विशदयति—**यथेति**। तथा च दण्डिशब्दस्य दण्डवदण्डिपरतया प्रयुक्तत्वात् तात्पर्यानुपपत्त्या लक्षणेति भावः। दण्डिशब्द- स्थले समुदाय इव प्रकृते प्रमाणत्वं लक्ष्यतावच्छेदकं इत्याशयेन प्रमाणपदं प्रयुक्तमिति ध्येयम्।

किं कर्त्रभावेन क्त्वाप्रत्ययानुपपत्तिः? उत तस्य समानत्वाभावेन? नाद्य P. 41-5 इत्याह—**अर्थाक्षिप्तेति**। द्वितीयं शङ्कते—**अनुपादायेति**। अव्यवहितेन व्यव- हारेणैवानुपादयेत्यस्य संबन्धो न व्यवहितेनासंभवेनेति परिहारटीकाभिप्रायमाह— **नैवमिहेति**।

तृतीयेऽपि, किं प्रमाणानामधिष्ठितत्वमात्रं व्यावर्त्यम्? उतात्माधिष्ठितत्व- मिति विकल्प्य, प्रथममुत्थापयितुं [1]**किमिति पुनरित्यादिटीका**। तां मतद्वयपरतया विभज्य व्याकरोति—**किमिति पुनरिति**।

P. 41-9 **सांख्यस्य शङ्केति**। उपादत्त इत्यात्मनेपदात् क्रियाफलस्य कर्तृ- गामित्वावगमेन स्वप्रयोजनार्थं प्रमाता प्रमाणानि किमित्युपादत्ते—प्रमाणान्येव प्रमात्रर्थं प्रवर्तन्तामिति शङ्कातात्पर्यपर्यवसानादिति भावः। एवंच सति 'अथ स्वयमेवे'ति न तदुपपादनपरो ग्रन्थः। ऐवकारस्वारस्यबलेन प्रयोजनानुद्देशेन

---

१. "किमिति पुनः प्रमाता उपादत्ते प्रमाणानि, अथ स्वयमेव कस्मात् न प्रवर्तन्ते" इति टीकायां प्रवर्तन्ते इत्येव बहुवचनान्तः पाठः। तत्र च प्रमाणानां कर्तृत्वं इति कल्पतरुग्रन्थतः परिमलाभोगानुसारेण च ज्ञायते, प्रायशः टीकाग्रन्थेषु न प्रवर्तते इत्येव एकवचनान्तः पाठः दृश्यते। तत्र च पाठे प्रमाता किमिति प्रमाणानि उपादत्ते? स्वयमेव, प्रमाणानि विहायैव, कस्मात् न प्रवर्तते इत्यर्थभ्रमोऽपि भवति, अतः टीकाग्रन्थः शोधनीय इति प्रार्थ्यते॥

२. "वत्सविवृद्ध्यर्थं क्षीरमिव पुरुषभोगापवर्गार्थं प्रधानं स्वयमेव प्रवर्तत इति वदतः साङ्ख्यस्य शङ्काया विवरणार्थत्वेन योजयितुं शक्यत्वेऽपि, सांख्यमते पुरुषसन्निधान- मात्रस्यापेक्षितत्वात् तस्याप्यपेक्षामवदतः स्वभाववादिनो मते स्वयमेवेत्येवकारस्य स्वारस्य- मस्तीति स्वभाववादिमतपरतया योजितम्" इति परिमले उक्तम्॥

स्वत एव प्रवर्तन्तामित्येवंपरत्वात् तस्य। तथा च स्वभाववादिनः शङ्केत्याशयेनाह—**अथेति**। P. 41 9

**टीकायां—माभूदिति**। कुविन्दरहितेभ्यो वेमादिभ्यः पटोत्पत्तिः P. 41-12 माभूत् नासीत् इति अतः हेतोः न व्याप्रियन्त इत्यन्वयः। द्वितीयमुत्थापयितुं—अथ देह एवेति टीका। तां देहातिरिक्तमात्मानमनङ्गीकुर्वतश्चार्वाकस्य मतमुत्थापयतीत्येवंपरतया योजयति **अथेति**। P. 41-9

**टीकायां—कृतमत्रेति**। इन्द्रियाद्यधिष्ठातृत्वसिद्ध्यर्थं देहे आत्मनः तादात्म्याध्यासेनालमित्यर्थः। इदानीमात्मनो देहाद्यधिष्ठातृत्वेऽपि न तत्तादात्म्याध्यासापेक्षेति नैयायिकमतमुत्थापयति—**टीकायां—स्यादेतदिति**। देहादेः प्रेर्यत्वसिद्ध्यर्थं आत्माध्यासानपेक्षणेऽपि असङ्गस्यात्मनः प्रेरकत्वसिद्ध्यर्थं व्यापारवत्त्वाय तदपेक्षेति परिहारभाष्याभिप्रायमाह—**टीकायां—व्यापारवन्तो हीति**।

**न च प्रमातृत्वमन्तरेणेति** भाष्यं यद्यपि पूर्वभाष्यशेषत्वेन प्रतीयते, तथापि प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेरिति भाष्येण पौनरुक्त्यं परिहर्तुं युक्त्यन्तरपरतया व्याख्यायते इत्याह—**एवं प्रमाणेति**। व्यति- P. 42-1 रेकमुखेन सूचितमध्यासावश्यकत्वमन्वयमुखेनाह—**यदि चिदात्मेति**। P. 42-5

**प्रमाश्रयत्वं हीति**। यद्यपि प्रमातृत्वानुपपत्ताविति भाष्यव्याख्यानावसरे प्रमाकर्तृत्वं प्रमातृत्वमित्युक्तं टीकायाम्, तथापि प्रमाणप्रेरकत्वेनाध्याससमर्थनार्थं तत्र तथोक्तम्। इह तु चिदचित्संवलनरूपप्रमाया एकैकाश्रयत्वानुपपत्त्या मिळिताश्रयत्वावश्यंभावेनाध्याससमर्थनार्थं एवं व्याख्यातम्। अत एव **टीकायां—पूर्ववाक्ये चिदात्मकर्तृस्थमिति** प्रमाश्रयत्वमेवोक्तमिति भावः।

**तामेव चेति** टीकाया वैयर्थ्यमाशङ्क्य, पूर्वोत्तरटीकयोः[1] प्रयोजनभेदमाह—**अनेनेत्यादिना**। नाविद्यावन्तमित्यादिग्रन्थेन यो विद्याविद्ययो- P. 42.6 र्विरोध उक्तः, स चिदचित्संवलनोक्त्या विरोधाभावेन निरस्तः। तत्त्वपरिच्छेदो हीत्यादिनोक्तश्चानुपयोगः तदुपयोगकथनेन निरस्त इत्यर्थः।

---

१. "तामेव च प्रमामुररीकृत्य प्रमाणस्य प्रवृत्तिः" इति टीकाग्रन्थः अनुपयोगपरिहारार्थः, अध्याससमपेक्ष्य प्रमाणप्रवृत्तेः तेन प्रमोपयोगकथनात्" इति परिमलोक्तम् अत्र संगृहीतम्।

न च प्रमातृत्वमन्तरेणेत्यादिभाष्यस्य प्रमातृत्वानुपपत्ताविति
P. 42-5 भाष्येणापुनरुक्तमर्थं दर्शयितुं—**प्रमातृत्वेन चेति टीका**। तत्र व्याख्याबीज-
P. 42-7 माह—**अनुपलक्षणे हीति**। अत्रत्येन प्रमातृत्वेन यदि प्रमाणप्रेरकत्वमुच्येत, तर्हि स्पष्टमेव पौनरुक्त्यम्। अथ तदनुकूला शक्तिः, तर्हि तस्या अतीन्द्रि-यायाः प्रेरणानुमेयतया प्रथमोपस्थितप्रेरणस्यैवाध्यासकल्पकत्वे पौनरुक्त्यताद-वस्थ्यमित्यर्थः। प्रमापरत्वे तु नायं दोष इत्याह—**प्रमा त्विति**।

भाष्ये अविद्यावद्विषयाण्येवेत्येवकारानुपपत्तिरिति शङ्कते—टीकायां—**स्यादेतदिति**। किं विद्वद्व्यवहारमात्रे अयमध्यासहेतुकत्वाक्षेपः? उत तदीये कर्मज्ञानकाण्डव्यवहारे? पक्षद्वयेऽपि किं देहादिव्यतिरिक्तात्मज्ञाने तत्तादात्म्या-ध्यासासंभवादिति हेतुरभिमतः? उत तदध्यासपूर्वकत्वे मानाभावादिति। नाद्यः। तस्यापातज्ञानत्वेन तदध्यासनिवर्तनाक्षमत्वादित्याह—टीकायां **विद्वन्तु-**
P. 42-8 **नामेति**।

न द्वितीयः। देहघातार्थसमागच्छत्खड्गिदर्शनजनितपलायनानुमितमरण-भयवत्त्वेन पश्वादिवत्तदध्यासानुमानादित्याह—टीकायां—**प्रमाणप्रमेयव्यवहारे त्विति**। शास्त्रीयव्यवहारे पारलौकिकफलभोक्तृनिश्चयावश्यंभावेऽपि तस्य स्पष्टं देहादिभेदाविषयकतया तत्तादात्म्याध्यासानिवर्तकत्वात्, देहधर्मब्राह्मणत्वादिमत एवात्मनः अधिकारश्रवणाच्च, सिद्धं तस्याप्यध्यासपूर्वकत्वमित्येवं द्वितीयं पक्षं
P. 43-1 निराकर्तुं तं पक्षमुत्थापयति—टीकायां—**स्यादेतदिति**।

P. 42-10 **उद्देशत्यागात्मकेति**। स्वत्वत्यागस्य स्वामिनैव कर्तव्यत्वादिति भावः। इदमुपलक्षणम्। फलप्रतिग्रहयोग्यतापादकतपःप्रभृतीनामपि यजमानकर्तृकत्वा-
P. 43-3 दिति द्रष्टव्यम्। **भावनाक्षिप्तेति**। यद्यपि 'पचन्ति पाचका' इत्यादौ न भावनाक्षिप्तेषु पाचकेषु फलम्। तथापि तत्रोत्सर्गप्राप्तकर्तृगामित्वस्य परस्मै-पदबलेन बाधेऽपि न प्रकृते उत्सर्गबाध इति भावः।

न केवलमुत्सर्गत एव फलस्य कर्तृगामिता। किन्तु 'स्वरितञितः कर्त्रभिप्राये क्रियाफले[1]' इति स्वरितेतो यज्यादेः कर्तृगामिनि क्रियाफले
P. 43-6 आत्मनेपदविधानादपीत्याह—**आत्मनेपदेन चेति**। **अनर्थकं स्यादिति**।

---

१. पा. सू. १-३-७२.

परिक्रयस्य स्वकीयकार्यकरणार्थत्वेन लोके दृष्टत्वात् सर्वस्यापि स्वेनैवानुष्ठाने तदनर्थकं स्यादित्यर्थः। तर्हि परिक्रयोऽपि स्वस्यैवास्त्वित्याशङ्क्य, '**विप्रतिषेधात् प्रत्यगात्मनी**'ति सूत्रावयवं व्याचष्टे—**स्वस्मिंश्चेति**। आध्वर्यवादिसमाख्याबलादपि त एव कर्तार इत्याशयेनाह—**आध्वर्यवादिकमिति**। P.43-6

ननु यजमानस्य साङ्गप्रधानकर्तृताबोधके प्रयोगविधौ सति कथं समाख्या प्रभवेदित्याशङ्क्य, तस्य स्वतन्त्रप्रयोजकरूपकर्तृद्वयसाधारणत्वान्न समाख्याबाधकत्वमित्याशयेनाह—**तस्मिंश्चेति**। **अकर्ता कथं प्रयोक्ता स्यादित्यत्र** विपर्ययपर्यवसाने, अतः कर्तैव प्रयोक्तेति स्यात्, ततश्चाभेद इत्यतो व्याचष्टे—**कर्तृत्वशक्तिरहित इति**।

नन्वेवमपि शास्त्रव्यवहारो नाविद्याधीनः, विदितपदपदार्थसङ्गतिकस्य न्यायाभिज्ञस्योपक्रमोपसंहाराभ्यासापूर्वतादितात्पर्यग्राहकप्राहिताद्वितीयब्रह्मतात्पर्यकात् तत्त्वमस्यादिवाक्यादुत्पद्यमानस्याशनायाद्यतीतब्रह्मावगमस्यापेक्षाभावमात्रेण वारयितुं अशक्यत्वेन व्यवहारस्यैवासंभवेन तत्राविद्याधीनत्वस्य दूरोत्सारितत्वात्। किञ्चैवं कृत्स्नो वेदः प्रमाणं न स्यात्, अविद्याधीनः कर्मव्यवहार इति तदुपघातिका च विद्येत्येवंरूपपरस्परव्याहतार्थद्वयप्रतिपादकत्वादिति शङ्कते—**टीकायां—स्यादेतदिति**। P.44-1

यथोक्तब्रह्मावगमस्य दुर्लभतया तत्पूर्वभाविनः शास्त्रव्यवहारस्य न कोऽपि विरोध इति प्रथमशङ्कानिराकरणाभिप्रायमाह—**टीकायां—सत्यमिति**। द्वितीयशङ्कानिराकरणपरतया **न च परस्परेत्यादिटीका**मवतारयति—**ननु ब्रह्मज्ञानेनेति**। P.43-10

**टीकायां साध्यांशनिषेधेऽपीति** श्येनादिसाध्यशत्रुवधादेः निषेधेऽपीत्यर्थः। **टीकायां-कस्य हेतोरिति**। केन हेतुनेत्यर्थः। पुरुषभेदमेव दर्शयति—**अपजितेति**। क्रोध एवारातिः शत्रु सः अपजितो यैरित्यर्थः। P.44-5

'**राजा राजसूयेने**'त्यत्र राजपदस्य क्षत्रियवाचकत्वात् **वर्णाध्यासः**। **गृहस्थो** भविष्यन् **सदृशीं भार्या** लभेतेत्यर्थः। **कृष्णकेशत्वेन** वयोविशेषलक्षणाद्वयोऽध्यासः। **जलादीत्यादिपदेन** महागर्तादिकं गृह्यते। **प्राणत्याग इत्यादिरित्यादिपदेन** 'महारोगेण वाभितप्तः प्राश्नीयादन्यतरां गतिं गच्छती'ति

व्याधिनिवृत्तिशरीरपतनान्यतरफलकत्वेन विहितं पिण्डपितृयज्ञगतप्रथमतृतीयपिण्ड-प्राशनादिकं गृह्यते।

**टीकागतेन पातकशब्देन** महापातकमतिपातकं समपातकं चेति त्रयं गृह्यते इत्यभिप्रायेणाह—**पातकं ब्रह्मवधादीति**। महापातकभिन्नं—महापातकत्वेनोक्तं, अतिपातकम्। महापातकसमत्वेनोक्तं समपातकम्, अतिदेशाविशेषेऽपि महापातकप्रायश्चित्तं पादोनमतिपातके। अर्धं समपातक इति भेदः। महापातकादीनि च मनुनोक्तानि—

"[1]ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः।
महान्ति पातकान्याहुः संसर्गश्चापि तैस्सह ॥" इति।

स्तेयं ब्रह्मस्वर्णहरणम्। गुर्वङ्गना माता। संसर्गः संवत्सरकालपरिमितः।

[2]हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत्।
राजन्यवैश्यावीजानावात्रेयीमेव च स्त्रियम्[3] ॥

उक्त्वा चैवानृतं साक्ष्ये प्रतिरुध्य गुरुं तथा।
अपहृत्य च निक्षेपं कृत्वा च स्त्रीसुहृद्वधम् ॥ इति।

गर्भस्याविज्ञातत्वं स्त्रीपुंनपुंसकत्वेन बोध्यम्। एतदेव व्रतम्, महापातकप्रायश्चित्तमेव। ईजानौ यज्ञं कुर्वाणौ, दीक्षिताविति यावत्। आत्रेयीं, अत्रिगोत्रोद्भवाम्। साक्ष्ये सत्यनृतभाषणम्, गुरोः पित्रादेरुपरोधः बन्दीगृहप्रवेशनम्। स्त्रीशब्देन भार्यादिरुच्यते।

[4]अनृतं च समुत्कर्षे राजगामि च पैशुनम्।
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ इति।

P. 44-1 समुत्कर्षे पूजने, अलीकनिर्बन्धः अव्याजपीडा। **उपपातकं गोवधादीति**। तथा च मनुः—

[5]गोवधोऽयाज्यसंयाज्यपारदार्यात्मविक्रयाः।
गुरुमातृपितृत्यागः स्वाध्यायाग्न्योस्सुतस्य च ॥ इति।

---

१. मनु. ११-५४. २. मनु. ११-८७-८८. ३. 'आत्रेयी च रजस्वला ऋतुस्नातोच्यते।' 'रजस्वलामृतुस्नातामात्रेयीम्' इति 'वसिष्ठस्मरणात्' इति कुल्लूकभट्टः ॥ ४. मनु. ११-५५. ५. मनु. ११-५९.

अयाज्याः—याजयितुमनर्हाः। तेषां संयाज्यं याजनम्। पारदार्यं—परदारगमनम्। स्वाध्यायस्य वेदस्य, अग्नेरौपासनादेः, निर्दुष्टस्य सुतस्य च त्याग इत्यर्थः। **अविको** मेषः।

यद्यपि सङ्करीकरणानन्तरपापं मलिनीकरणं तदनन्तरपापमपात्रीकरणम्। अनेनैव क्रमेण प्रायश्चित्ततारतम्यस्मृतेः। तथापि क्रमानादरेण **टीकायामुक्त**मिति, स्वयमपि तथैवोदाहरति—**निन्दितेभ्य इति**। P. 44-3

**वाणिज्यं**—वृद्धिजीवनम्। **असभ्यः** सभायामसाधुः। सभानर्ह इति यावत्। **कृमयः**—व्रणाद्युत्पन्नाः जन्तवः। **कीटाः** वृश्चिकादयः। **वयांसि**—पक्षिणः। **मद्यं**—मदकरं वस्तु नारिकेलासवादि। **तत्संपृक्तभोजन**मित्यर्थः। अधैर्यं अवश्यकर्तव्येष्वित्यर्थः। **मलावहमिति**। मलं पापं, तत्संपादकमित्यर्थः। मलिनीकरणमिति यावत्। **ब्राह्मणस्येति**। तदीयस्य मनसः देहस्य वा रुजः पीडायाः करणमित्यर्थः। **अघ्रेयं**—तालफलादि। **जैह्म्यं**—कौटिल्याचरणम्। **जातिभ्रंशकरादीत्यादिपदेन** प्रकीर्णकं गृह्यते। तच्च प्रागुदाहृताष्टविधभिन्नं पापं ताडनादि। P. 44-5

**अभ्यर्हितत्वादिति**। उपजीव्यत्वादभ्यर्हितत्वम्। नन्वात्मनि पुत्रादिस्वामित्वस्य साक्षादेवाध्याससंभवे मध्ये किमर्थं देहतादात्म्याध्यासवर्णनमित्यत आह—**गृहीतविवेकत्वादिति**। **देहगतस्वामित्वस्येति**। यद्यपि पुत्रादिस्वामित्वं पुत्राद्यधीनभोगभाक्त्वं न देहे संभवति। तथापि तदधीनपोषणादिभाक्त्वमिह स्वामित्वं विवक्षितमिति न दोषः। P. 44-5

**टीकायां—स्वस्य खल्विति**। स्वभूतस्य पुत्रादेः साकल्येन तन्निरूपितस्य स्वाम्यस्य साकल्यादित्यर्थः। **कथं बाह्यग्रहणमिति**। देहगतस्वामित्वधर्मत्वेन बाह्यधर्मत्वाभावादिति भावः। बाह्यपुत्रादिधर्माणामेव शरीरे आत्मनि चारोपात्र दोष इति परिहृति—**तत्राहेति**।

पुत्रादिगतानामपि साकल्यवैकल्यादीनां स्वाम्यद्वारा शरीरे सञ्चारितानां शरीरधर्माणामेव सतामात्मन्यारोपस्य पूर्वमुक्तत्वात् **तथा देहधर्मानिति** भाष्यायोगमाशङ्क्याह—**टीकायां—यदा चेति**। अत्यन्तविविक्तपुत्राद्यपेक्षे

स्वाम्ये तद्गतेषु साकल्यादिषु च यदा इयं गतिः, पूर्वपूर्वाध्यासवशादात्मन्यध्याससंभवः, तदा निरुपाधिकेषु कृशत्वादिष्वात्मन्यध्याससंभवे का चिन्तेत्यर्थः ।

कर्मेन्द्रियधर्माणां मूकत्वादीनां, ज्ञानेन्द्रियधर्माणां काणत्वादीनां; अन्तःकरणधर्माणां कामसंकल्पादीनामप्यध्यासो धर्म्यध्यासपूर्वक एवेति दर्शयन्नध्यस्यतीति पदानुषङ्गेण भाष्यं योजयति **टीकायां—देहादपीति** ।[1] **अहंप्रत्ययिनमिति पदे** इनिप्रत्ययस्यार्थमाह—**टीकायां यस्मिन्नन्तःकरणादाविति** । इन्द्रियदेहावादिशब्देन गृह्येते । **अन्तःकरणप्रचारेति टीकायामप्यन्तःकरणादिव्यापारसाक्षिणीति** द्रष्टव्यम् ।

P. 44-19

**साक्षिशब्दार्थमिति** । 'साक्षाद्द्रष्टरि संज्ञायाम्'[2]इति सूत्रेण व्यवहारफलासंस्पर्शिन्युदासीने तद्द्रष्टरि, इनिप्रत्यये टिलोपे च साक्षिशब्दनिष्पत्तेरिति भावः । आत्मन्यन्तःकरणाध्यासस्य कर्तृत्वभोक्तृत्वोपपादकत्वमुक्तं तदनेनेति **टीकायां** ; तद्विशदयति— **सक्रियोपाधेरिति** ।

P. 45-1

**भ्रममपनयतीति** । पूर्वपूर्वाध्यासावगते अवच्छिन्नरूप एव साक्षिण्यन्तःकरणादीनामध्यासो, न शुद्धे । तस्यारोपाधिष्ठानत्वायोग्यत्वादिति भावः । भाष्ये विषयप्रयोजनयोः पूर्वमनिर्देशात् कथं **प्रकृतमिति टीके**त्यत आह—**उपोद्घातेति** । **विद्याशब्देन** साक्षात्कारस्य निर्दिष्टत्वात् **प्रतिपत्तिशब्दो** निरर्थक इत्यत आह—**टीकायां—प्रतिपत्तिः प्राप्तिरिति** । **टीकायां—नापि कर्मसु प्रवृत्तये इति** । कर्तुः स्तावकत्वेनेति शेषः ।

P. 45-3

P. 45-10

**टीकायामात्मैकत्वनिर्वचन**महंप्रत्ययागम्यत्वाय । नन्वात्मैकत्वसाक्षात्काराय **वेदान्ता आरभ्यन्त** इत्ययुक्तम् । साक्षात्कारस्य शब्दाजन्यत्वादित्यत आह—**टीकायां—आनन्दरूपस्येति** । तथा च निर्विचिकित्सपरोक्षनिश्चयजनन-

---

१. टीकायां 'अहमिति प्रत्ययो वृत्तिर्यस्मिन्नन्तःकरणादौ सोऽयमहंप्रत्ययी' इत्यत्र आदिपदेन इन्द्रियदेहयोः ग्राह्यत्वात्, वृत्त्याश्रयत्वस्य च अन्तःकरणमात्रे संभवेन त्रिष्वसंभवात्, इनिप्रत्ययार्थः विषयत्वमेवेति बोध्यं, तथा च अहमिति प्रत्यये कार्यकरणसंघातस्य भानात् अन्तःकरणशरीरेन्द्रियाणां त्रयाणामहंप्रत्ययित्वमुपपद्यते । एवञ्च टीकायामुपरि स्वप्रचारपदस्य अन्तःकरणप्रचारेत्यर्थकरणमवयुत्यानुवादः, स्वप्रचारपदेन च अन्तःकरणधर्माः कामादयः, इन्द्रियधर्माः द्रष्टृत्वादयः अन्धत्वादयश्च, शरीरधर्माः गन्तृत्वादयश्च ग्राह्याः ॥ २. पा. सू.

द्वारा साक्षात्कारजनकान्तःकरणसहकारितया वेदान्तानामध्यासनिवृत्त्युपयोगित्वमुपपन्नमिति भावः ।

**प्रहाणायेति** भाष्यस्थप्रशब्दार्थकथनं-समूलघातमिति । मूलाविद्यासहितमध्यासं उपघ्नन्तीति तदर्थः । **एतदुक्तमित्यादिटीकायां** अजिज्ञास्यत्वनिरसनमनवसरदुस्स्थमित्याशङ्क्याह—**एवमिति । प्रसिद्धत्वादिति** । एतच्चोपलक्षणम् । निष्प्रयोजनत्वादित्यपि द्रष्टव्यम् । आरंभस्य प्रागनिष्पन्ननिष्पादनरूपत्वान्नित्यसिद्धेषु वेदान्तेषु तदसंभवमाशङ्क्य व्याचष्टे-इत्याशयेनाह—**पठ्येरन्निताति** । P. 45-11 P. 45-4

**एतदुक्तमित्यादिटीकाया** अयमर्थः । अहमित्यात्मप्रत्ययस्य समीचीनत्वे, तदभिन्नस्य ब्रह्मणोऽपि ज्ञातत्वेन, प्रत्यक्षविरुद्धैश्च वेदान्तैः अन्यपरैः अशनायाद्यतीतस्य ब्रह्मणः अनवगमात्, अहं कर्तेत्यादिप्रत्ययस्य च समीचीनत्वे, संसारस्य सत्यतया निवर्त्यत्वायोगेन, विषयप्रयोजनाभावान्न ब्रह्मजिज्ञासा स्यात् । तदभावे च वेदान्तज्ञाप्यस्य कस्यचिदज्ञातस्याभावान्न वेदान्ताध्ययनं ब्रह्मज्ञानफलकं भवेत् । किन्त्वविवक्षितार्था जपादावुपयुज्येरन् । न त्वेतदस्तीत्यर्थः । P. 45-11

तत्र हेतुः—**न हीति** । तदा अविवक्षितार्थत्वे । तथा चोपक्रमोपसंहाराभ्यासापूर्वतादितात्पर्यग्राहकप्राहिताद्वितीयब्रह्मतात्पर्यकानन्यथासिद्धस्वतःप्रमाण—वेदान्तवाक्यजनितस्य सर्वसंसारनिवर्तकस्य ब्रह्मात्मप्रत्ययस्य प्रामाण्यान्यथानुपपत्त्या अहंप्रत्ययस्य मिथ्यात्वमास्थेयम् । ततश्च तद्विषयस्य संपिण्डितात्मस्वरूपस्य, संसारस्य च मिथ्यात्वसिद्धिः । अप्रमाणज्ञानस्य सत्यनिवर्तकत्वादर्शनादिति भावः । P. 45-13

केवलस्य तदनिवर्तकत्वेपि अभ्यस्तस्य तन्निवर्तकत्वमस्त्विति तटस्थशङ्कायामाह—**न चासाविति** । अदर्शनादेवेति परिहरति—**आरोपितं हीति । सर्पधाराप्रत्यया इति** । सर्पप्रत्यया धाराप्रत्यया वेत्यर्थः ।

अनादेः संसारस्य कथमनादिना तत्वज्ञानेन निवृत्तिरविरोधादिति यदुक्तमाक्षेपावसरे, तन्निरस्यति—**मिथ्याज्ञानसंस्कारश्चेति । आदरः**—श्रद्धादिसाचिव्यं, **नैरन्तर्यं**—अनुस्यूतता । तथाच प्रबलसहकारिसमवहितनिदिध्यासनजन्येनागन्तुकेनैव साक्षात्कारेण तन्निवृत्तिरिति भावः । **जन्मनेति** । शक्योऽपवदितुमित्यनुषङ्गः । P. 45-16

**टीकायां**–प्राणादीत्यादिपदेनोद्गीथादीनां ग्रहणम्। उपासनानां चित्तैकाग्र्यद्वारा आत्मैकत्वसाक्षात्कारार्थत्वात् तद्वाक्यानामपि महातात्पर्यमैक्य एवेति न दोष इति परिहरति—**टीकायां-अत आहेति**।

प्रपञ्चितार्थस्य संक्षेपेण कथनं व्यर्थमित्यत आह—**अधिकरणमिति**।
P. 45-6 संशयतद्बीजसंगती: स्वयं दर्शयति—**वेदान्तशास्त्रमिति**। श्रुत्यर्थविचारात्मकत्वाभावादस्याधिकरणस्य कथं श्रुतिसंगतिरित्याशङ्क्य, श्रुत्याक्षिप्तत्वाच्छ्रुतिसंगतिरित्याह—**वेदान्तैरिति**। एवमपि शास्त्रप्रतिपाद्यसमन्वयाविरोधसाधनफलान्यतमप्रतिपादकत्वाभावात् कथं शास्त्रसंगतिरित्याशङ्क्य, शास्त्रार्थविचारोपोद्घातत्वात्
P. 45-8 शास्त्रादिसंगतय इत्याह—**समन्वयादीति**।

संशयादिकथनेनैव वेदान्तानां विषयत्वं सुज्ञानमिति न पृथगुक्तम्। **आशङ्कापनयनपूर्वकमिति**—सिद्धान्तिशङ्कापनयपूर्वकमित्यर्थः। पूर्वपक्ष्यभिमतार्थनिरासपूर्विकां सिद्धान्तिशङ्कां दर्शयति—**अविवक्षितार्थत्वमिति**। किं वेदान्तानामर्थपरत्वे प्रमाणाभावादविवक्षितार्थत्वं? उत सिद्धपरत्वासंभवात्? अथवा प्रमानुत्पादकत्वात्? तत्राद्यं **यद्यपीत्यादिटीका**भिप्रायकथनेन निरा-
P. 46-1 करोति—**अध्ययनेति**। **तुल्यत्वादिति**। विधिनिषेधभागयोरिव वेदान्तभागेऽपि तुल्यत्वादित्यर्थः।

द्वितीयमाशङ्क्य, **यद्यपि चाविशिष्ट इति टीका**व्याख्यया परिहरति—**न च कार्येति**। **सिद्धरूप इति**। तथा च **टीकायामर्थपरत्वं** सिद्धार्थपरत्वं बोध्यम्। तृतीयं **यद्यपि चेति टीका**व्याख्यया निराकरोति—**नापीति**। **परिहरतीति**। सिद्धान्तिशङ्कां परिहरति पूर्वपक्षीत्यर्थः। **न च सर्वजनीनेति टीकां**
P. 46-3 युक्त्यन्तरपरत्वेन व्याचष्टे—**प्रमाणेति**।

**टीकायां–तस्य तूक्तेन क्रमेणेति**। **तथापीत्यादिभाष्यभाववर्णनासरे इदमत्राकूतमित्यादिटीकोक्तेन** प्रकारेण अहंप्रत्ययस्य प्रामाण्याभावेन श्रुतिस्मृतीतिहासपुराणबाधकत्वानुपपत्तेरित्यर्थः।

हेत्वन्तरमाह—**टीकायां–श्रुत्यादिभिश्चेति**। अहंप्रत्ययसिद्धजीवस्वरूपमनूद्य, तस्य कर्तृत्वभोक्तृत्वादिरहितब्रह्मभावबोधनपरैः साक्षादेव कर्तृत्वादि-

निषेधपरैश्च, '[1]तत्त्वमसि', 'न कर्ता, नाकर्ता' '[2]क्षेत्रज्ञं चापि मां विद्धि' '[3]अहंकारविमूढात्मा कर्ताहमिति मन्यते'—

'अहमेवाव्ययो नित्यः परमात्मात्मसंश्रयः।'
'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदं असन्तं कः करिष्यति॥'

इत्यादिभिः श्रुतिस्मृतीतिहासपुराणैः, तत्तात्पर्याभिज्ञैः समस्तैः शास्त्रकारैश्च प्रामाण्यानभ्युपगमादध्यासत्वमित्यर्थः।

टीकायां—किं तूक्तलक्षण इति। चैतन्यानन्दघन इत्यादिटीकोक्तः प्रत्यगात्मैव वेदान्तानां मुख्यार्थस्तात्पर्येण प्रतिपादनादिति भावः॥ P. 46-9

सू० ॥ अथातो ब्रह्मजिज्ञासा ॥ १ ॥

ननु स्वरूपज्ञानमिदानीमपि विद्यमानत्वान्न प्रयोजनम्। वृत्तिज्ञानं त्वनानन्दरूपतया न पुरुषार्थः। तथा च कथं ब्रह्मज्ञानं प्रयोजनमिति टीकेत्यत आह—वृत्तिव्यक्तमिति। अनेन, साक्षात् अव्यवधानेन इच्छाव्याप्यत्वात् ब्रह्मरूपं यत् ज्ञानं वृत्तिव्यक्तं स्वरूपं कण्ठोक्तं सूत्रगतब्रह्मपदजिज्ञासापदप्रकृतिभ्यामुक्तम्, तदेव साक्षात् प्रयोजनं [4]परमप्रयोजनमित्येवं टीका व्याख्याता। P. 46-5

कर्मज्ञानवत् ब्रह्मज्ञानमपि न साक्षात् प्रयोजनमित्याशङ्कां निराकरोति—टीकायां—न चेत्यादिना। पूजितविचारवचनेन मीमांसाशब्देन [5] न्यायकलाप P. 46-12

---

१. छा. उ. ६-८-७. २. भ. गी. १३-२. ३. भ. गी. ३-२८.

४. अनेन टीकायां साक्षादिति पदस्य आवृत्तिः द्योत्यते - साक्षादिच्छाव्याप्यत्वात् इति, साक्षात् प्रयोजनमिति च। आवृत्तपदद्वयस्य च क्रमेण अव्यवधानेन इति, परमं इति चार्थद्वयम्। परमप्रयोजनत्वे अव्यवधानेनेष्यमाणत्वं हेतुः। अवान्तरप्रयोजनस्य परमप्रयोजनेच्छाव्यवधानेन इष्यमाणत्वेन साक्षादिष्यमाणत्वाभावादिति ध्येयम्॥ ब्रह्मपदजिज्ञासापदप्रकृतिभ्यां एकस्य ब्रह्मस्वरूपभूतज्ञानस्योक्तौ ब्रह्मणो जिज्ञासेति विग्रहे 'राहोःशिर' इतिवत् षष्ठ्यर्थोपचार इति परिमलोक्तमनुसन्धेयम्॥ जिज्ञासापदप्रकृत्या च वृत्तिज्ञानमपि विवक्षितम्, तथा सत्येव निर्णयात्मकवृत्तिज्ञानेच्छारूपा जिज्ञासा स्वकारणीभूतसंशयसूचिका सती मीमांसारंभं प्रयुञ्ज्यात् इत्यपि परिमलादवधेयम्॥

५. "पूजितविचारवाचिमीमांसाशब्दस्य तदुपयोगिन्यायेषु लक्षणा" इति श्रीकण्ठविरचितब्रह्मसूत्रभाष्यस्य टीकायां शिवार्कमणिदीपिकायां श्रीमदप्पय्यदीक्षितैरुक्तम्।

एवोच्यत इत्याशयेनाह—**सा न्यायात्मिकेति । प्रतिज्ञानादिति ।** ब्रह्मज्ञाने-च्छोपदेशो अर्थाद्विषयादीनां प्रतिज्ञानादिति भावः ।

P. 47-1 **स्वल्पाक्षरपदानीति** पृथगुपादानात् लघुत्वमन्यथा दर्शयति—**लघू-नीति ।** मुख्यार्थद्वारकसूचितार्थबाहुल्येन स्वोक्ते सूत्राणां बह्वर्थत्वे कथमयं श्लोकः संमतित्वेन लिखितः[1] इत्यत आह—**सूचितार्थत्वे हीति । बहूनां अप्रस्तु-तत्वादिति । आदिमं सूत्रमिति** सूत्रस्यैकस्यैव प्रस्तुतत्वादिति भावः ।

**अथशब्दस्तेष्वानन्तर्यार्थ** इत्यन्वये, तेषु सूत्रपदेषु विषये यदानन्तर्यं

P. 47-3 तदर्थ इति सूत्रपदानन्तर्यमथशब्दार्थ इति स्यात् । तद्व्युदासायाह—**टीकायां—तेषु सूत्रपदेषु मध्ये इति । विधास्यमानेति ।** 'अथैष ज्योतिरथैष विश्व-ज्योतिरथैष सर्वज्योतिः' इत्येतदनन्तरं पठितेन 'एतेन सहस्रदक्षिणेन यजेत' इति वाक्येन विधास्यमानेत्यर्थः ।

अधिकारार्थत्वं वदन् प्रष्टव्यः । किं जिज्ञासाप्रारंभार्थत्वं ? उत ब्रह्मतज्ज्ञान-प्रारंभार्थत्वम् ? नाद्यः । ज्योतिरादिसंज्ञकानां कर्मणामिव शब्दानुशासनयोगानु-शासनपरसूत्रसन्दर्भयोरिव च जिज्ञासाया उत्तरत्राकथनादित्युक्तम् **टीकायाम् ।**

P. 47-4 द्वितीयं शङ्कते—**प्रधानस्येति । ब्रह्मतज्ज्ञानेति ।** चतुर्णामप्यध्यायानां सपरिकर-ब्रह्मज्ञानप्रतिपादनमुखेन प्राप्तव्यब्रह्मस्वरूपप्रतिपादनपरत्वादिति भावः ।

किमिच्छाया अविवक्षितत्वेन ब्रह्मतज्ज्ञानयोरेव प्रधानयोः अथशब्देन संबन्धः, उत तद्विशेषणीभूतयोः ? नाद्यः—इच्छाया अवश्यविवक्षणीयत्वादि-

P. 47-5 त्युक्तं **टीकायां—ब्रह्ममीमांसेत्यादिना ।** तत्र दृष्टान्तवैषम्यं दर्शयति—**दण्डीति । प्रैषानुवचने** प्रैषे अनुवचने चेत्यर्थः ।

सूत्रे निर्देशमात्रेणैव ब्रह्मतज्ज्ञानयोर्विषयप्रयोजनत्वसिद्धिरिति वदन् प्रष्टव्यः। किं बाधकाभावेन वेदान्तानां ब्रह्मप्रतिपादनपरत्वात् तत्सिद्धिः ? वेदान्तानां अर्थपरत्वप्रतिपादनपरस्वाध्यायाध्ययनविधिबलाद्वेति ? नाद्यः। प्रबलाहंप्रत्ययविरो-

---

तथा च न्यायकलाप एव उच्यते—लक्ष्यत इत्यर्थः । मीमांसापदेन लक्षणया न्यायकलापा-परिग्रहे, मीमांसा अनेन शास्त्रेण शिष्यत इति टीका अनुपपन्ना स्यात् । शास्त्रे विचाराप्रति-पादनात्, न्यायानामेव प्रतिपादनादिति ज्ञेयम् ॥

१. श्लोके सूचितार्थत्वमेव सूत्राणामुक्तं बह्वर्थत्वं नोक्तं यत इति भावः ॥

धेन वेदान्तानां ब्रह्मात्मैक्यपरत्वासिद्धेः। नान्त्यः। अर्थपरत्वाभावेऽप्यध्ययनविधि-परिग्रहसंभवात् इति परिहरति—तत्राहेति। P. 47 8

[1]तस्मात् प्राधान्येन ब्रह्मनिर्णयेच्छासूत्रण एव प्रागुक्तरीत्या अहंप्रत्ययस्य दौर्बल्यहेतुन्यायसूचने प्रबलविरोधाभावेन वेदान्तसंभावितस्य ब्रह्मणः प्रागनिर्णीततया सन्दिग्धत्वेन विषयत्वसिद्धिः। [2]तन्निर्णयस्य फलत्वसिद्धिश्च नान्यथा। अतस्तस्यैव सूत्रे प्रधानमित्याह—टीकायां तस्मादिति। P. 47-11

ब्रह्मज्ञानेच्छाया उत्तरसूत्रेष्वनुवर्तमानत्वादप्रस्तूयमानत्वमसिद्धमित्यत आह—प्रत्यधिकरणमिति। इच्छाविशेषणीभूतयोरेवाथशब्देन संबन्धः इति, P. 47-8 द्वितीयं निराकरोति—टीकायां—जिज्ञासाविशेषणं त्विति। जिज्ञासाशब्द- P. 48-1 निर्दिष्टेच्छाविशेषणं ब्रह्मज्ञानम्। इदमुपलक्षणम्। ब्रह्म चेत्यपि द्रष्टव्यम्।

जिज्ञासाया मीमांसात्वात् तस्याश्च न्यायरूपाया उत्तरत्र [3]प्रतिपादनाद्युक्तमधिकारार्थत्वमित्याशङ्क्य, किं जिज्ञासापदस्य मुख्योऽर्थो मीमांसा? उत लाक्षणिकः? नाद्यः। जिज्ञासामीमांसापदयोः भिन्नार्थकत्वादित्युक्तं, टीकायाम्। तत्र व्याकरणसूत्रार्थं विशदयितुमाह—'मान्बधे'त्यादिना। माङो ङकारस्थाने तत उपरि वा नकारे मीमांसत इत्यात्मनेपदं न सिद्ध्येदित्यत आह—सानुबन्धस्य धातो- P. 47-9 रिति। प्रसिद्धिबलादिति। लोकप्रसिद्धिबलादित्यर्थः।

---

१. अत्र ब्रह्मनिर्णयेच्छासूत्रण एवेत्युक्त्या जिज्ञासापदप्रकृत्या निर्णयात्मकं वृत्तिज्ञानं विवक्षितमिति सूच्यते, स्वरूपज्ञानं विवक्षितमिति च पूर्वमेवोक्तं आभोगे।

२. तन्निर्णयस्य फलत्वसिद्धिरिति अवान्तरप्रयोजनमभिप्रेत्य। परमप्रयोजनं तु वृत्तिव्यक्तं स्वरूपज्ञानमेव तच्च पूर्वमेव उक्तमिति बोध्यम्॥

३. प्रतिपादनाद्युक्तमधिकारार्थत्वमिति। अनेन प्रतिपाद्यत्वमेव आरभ्यत्वमिति सूच्यते। अन्यथा यथाश्रुतार्थे ब्रह्मतज्ज्ञानप्रारंभार्थोऽथशब्दो भवतु इत्यादिशङ्का निर्विषया स्यात्। तयोरारंभायोगात्। प्रतिपादनं तु संभवति तयोः। अत एव ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति भाष्यव्याख्यानसमये 'नच तस्या अधिकार्यत्वं अप्रस्तूयमानत्वात्' इति भामती। 'अप्रस्तूयमानत्वात्—प्रत्यधिकरणमप्रतिपाद्यमानत्वात्' इति च कल्पतरुः॥ यथाश्रुतारभ्यत्वासंभवादेव च 'सर्वे वेदान्ता आरभ्यन्ते' इति भाष्यस्थस्य आरभ्यन्ते इति पदस्य पर्यालोच्यन्ते इति टीकायां व्याख्या इति कल्पतरावुक्तम्॥

**स्मृतिसिद्धमिति।** 'मान पूजाया'मिति धातुपाठात् 'मानेर्जिज्ञासाया' मिति विचारार्थे वर्तमानादेव सन्विधानाच्च सिद्धमित्यर्थः। इदानीं सूत्रपदानि योजयति—**मानित्यादीति।** विचारादिष्वर्थेषु वर्तमानेभ्य इत्यर्थः। (P. 48-1)

(P. 48-4) इतोऽपि जिज्ञासामीमांसयोर्भेद इत्याह—**टीकायां—प्रवर्तिका हीति।** द्वितीयं शङ्कते—**लक्षितेति।** किमन्वयानुपपत्त्या लक्षणा? विचारे प्रवृत्तिसिद्ध्यर्थं तत्परत्वावश्यंभावेन तात्पर्यानुपपत्त्या वा? नाद्यः इत्याह—**नेत्याहेति।** द्वितीयं निराकरोति—**अधिगतेति। प्रवर्त्स्यतीति।** प्रवर्तिष्यत इत्यर्थः। (P. 48-3)

**टीकायां—मङ्गलप्रयोजनो भवतीति**[1]। तथा च तत्प्रयोजनकत्वमात्रेण तादर्थ्यमौपचारिकमादाय, 'मङ्गलानन्तरारंभप्रश्नकार्त्स्न्येष्वथो अथ' इति निघण्टुप्रवृत्तिरिति, न तद्विरोध इति भावः।

(P. 48-14) **टीकायां—पूर्वप्रकृतापेक्षः अथशब्द इति।** ततश्च पूर्वप्रकृतादर्थान्तरं ब्रह्मजिज्ञासेति सूत्रार्थ इति भावः। **टीकायां—अधिकारे इति।** आनन्तर्ये वर्तमानादथशब्दादन्य एव किमधिकारार्थे वर्तत इत्यर्थः। एतदेवाह—**टीकायां—अत्र विमर्शवाक्य इत्यादिना।**

(P. 48-4) **किं पूर्वप्रकृतादिति।** '**किमयमथशब्दः आनन्तर्ये**' इति प्रथमविकल्पोपन्यासपरे पूर्ववाक्ये विकल्पधर्मित्वेन **प्रकृतादथशब्दादानन्तर्यम्,** उताव्यवहितात्तद्विकल्पादित्यर्थः। **किं पूर्वप्रकृतमथशब्दमप्यपेक्ष्य ब्रूयात्, उतानपेक्ष्येति योजना।**

(P. 48-7) असमानविषयत्वे विकल्पानुपपत्तिं प्रकटयति—**एकधर्मीति। आनन्तर्यरूपत्वपक्षे विकल्पाप्रतिभानादिति।** यत्र विकल्पप्रतिभानं तत्रैव पूर्वविकल्पधर्म्यपेक्षया अर्थान्तरे अथशब्दस्य प्रसिद्धेरिति भावः। **पूर्वप्रकृतस्य सिद्धिर्निश्चयः।**

---

१. अत्र "अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति" इति भाष्ये एवशब्दस्वारस्यमनुरुन्धानाः केचित् मङ्गलार्थतया प्रयुक्तोऽथशब्दः न मङ्गलप्रयोजनो भवतीति वदन्ति। सोर्थोऽसांप्रदायिकः। एवशब्दः अपिशब्दसमानार्थकोऽत्र। अर्थान्तरे प्रयुक्तोऽपि अथशब्दः मङ्गलप्रयोजनो भवति। मङ्गलप्रयोजनत्वाय मङ्गलार्थत्वमेव वक्तव्यमिति न निर्बन्धः। इति तु सांप्रदायिकोऽर्थः। इति ज्ञेयम्॥

**भवन्ती भवत्येवेति** पौनरुक्त्यं परिहरन् व्याचष्टे—**अन्यदपीति** । P. 49-2
**योग्यत्वादित्यस्य, स्वाध्यायाध्ययनानन्तर्यमित्यस्य** चापेक्षितं पूरयन् व्याचष्टे—**स्वाध्यायेति**[1] । प्रतीकमनुपादायापि व्याख्यानं व्याख्यानेनैव व्याख्येयग्रन्थस्य ज्ञातुं शक्यत्वेन लाघवार्थमिति ध्येयम् ।

**धर्मवदित्यस्य** वाक्यादित्वेऽपि तस्य दृष्टान्तत्वात् तत्परित्यज्य **ब्रह्मणोपीति** प्रतीको गृहीतः । लक्षणायां बीजं दर्शयन् **अत्र चेत्यादिटीकां** व्याचष्टे—**स्वाध्यायस्येति । ब्रह्मानुपादानादिति** । प्रमाणस्वरूपसाधनफलैः साभासैः P. 49-4
धर्मस्यैव तत्र जिज्ञास्यत्वकथनादिति भावः ।

धर्मजिज्ञासासूत्रे धर्मग्रहणं वेदार्थमात्रोपलक्षणम् । अन्यथा निषेधवाक्यार्थविचारासंग्रहापत्तेः । ततश्च तस्मिन्नेव सूत्रे वेदार्थविचारमात्रस्य वेदाध्ययनानन्तर्ये बोधिते, कर्मविरोधितया जैमिनिपरित्यक्तब्रह्मविचारमात्रप्रवृत्तेनापि बादरायणेन तद्व्युत्पादितशेषशेषिभावादिन्यायानामिव प्रथमसूत्रबोधितवेदाध्ययनानन्तर्यस्याप्युपजीवनसंभवेन पुनस्तत्सूत्रणं व्यर्थमेव ।

अत एव **'एक आत्मनश्शरीरे भावा'** दित्यधिकरणे, देहातिरिक्तात्मास्तित्वस्य शास्त्रप्रथमपादे व्यवस्थापनादत्र तद्व्यवस्थापनं पुनरुक्तमिति शङ्कामुद्भाव्य **शबरस्वामिना** तत्र तत्कृतं, न सूत्रारूढमिति समाधानं **भाष्यकृता** करिष्यत इत्याशयेन परिहरति—**तत्राहेति** । P. 51-1

ननु कथं यज्ञादीनां ब्रह्मज्ञाने विनियोगः? इच्छायाः प्रत्ययार्थत्वेन प्रधानत्वात् । न च 'प्रत्ययार्थः प्रधान'मिति सामान्यन्यायादिच्छेष्यमाणसमभिव्याहृताविष्यमाणं प्रधानमिति स्वर्गकामपदादिषु क्लृप्तो विशेषन्यायो बलवानिति वाच्यम् । तस्य प्रत्ययभिन्नकमिपदादिविषयकतया सावकाशत्वेन विशेषन्यायत्वासिद्धेरित्यभिप्रेत्य शङ्कते—**नन्विति** ।

इष्टस्य सर्वापेक्षया प्रधानत्वेन तच्छेषत्वमेव युक्तमिति परिहरति—**तत्राहेति । साक्षात्कारोपयोगमिति** । ततश्च श्रवणादिकालेऽपि साक्षात्कारार्थ- P. 52-1

---

१. 'स्वाध्यायाध्ययनानन्तर'मित्यादिः 'युक्तमित्यर्थः' इत्यन्तो ग्रन्थः कल्पतरुस्थः 'धर्मजिज्ञासाया इव' इत्यादेः 'स्वाध्यायाध्ययनानन्तर्यम्' इत्यन्तस्य टीकाग्रन्थस्य व्याख्यारूपः । स च टीकाग्रन्थप्रतीकमनुपादायैव प्रवृत्तः । कथं तस्य टीकाग्रन्थव्याख्यानरूपत्वं ज्ञायेतेत्याशङ्क्य इदमुक्तमिति ज्ञेयम् ॥

मनुष्ठेयानि कर्माणि इति तदवबोधस्यावश्यकतया तदानन्तर्यमेवाथशब्दार्थ इति भावः ।

**टीकायां** निर्विचिकित्सवाक्यार्थज्ञानजनने वाक्यस्य कर्मापेक्षेत्याशङ्कय, किं वैदिकवाक्यार्थज्ञाने सर्वत्र तदपेक्षा ? उत वेदान्तवाक्यार्थज्ञानमात्रे ? नाद्यः । शक्तिग्रहे, शाब्दबोधहेतुन्यायपरिज्ञाने, आकाङ्क्षाद्यनुसन्धाने च सति कर्मानुष्ठानेन विना निर्विचिकित्सवाक्यार्थज्ञानोत्पत्तौ विलंबादर्शनादित्याह—**अकृतकर्मणामित्यादिना** । विपक्षे दण्डमप्याह—**टीकायां—अनुत्पत्तौ वेति** । P. 52-2

द्वितीयमाशङ्कय निराकरोति—**टीकायां—न च वेदान्तेति** । **असिद्ध इत्याहेति** । प्रत्यक्षादिप्रमाणसिद्धकर्तृभोक्तृरूपस्य जीवस्य तद्रूपप्रहाणेन तद्विलक्षणब्रह्मभावबोधकत्वस्य विशेषहेतोः सत्वात् तदभावोऽसिद्ध इति शङ्कावाद्याहेत्यर्थः । झटिति प्रतिपत्तुं अशक्यत्वे हेतुमाह—**टीकायां—आपातत इति** । **अशुद्धसत्वैरापाततो योग्यताविरहनिश्चयादित्यन्वयः** । P. 52-2 P. 52-8

**टीकायां यज्ञदानेति** । **यज्ञेन, दानेन, अनाशकेन** शरीराशोषकेण **तपसा च निराकृतान्तर्मलाः** अत एव **विशुद्धसत्वा** इत्यर्थः । '[2]ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति श्रुतेरिति भावः ।

योग्यतावधारणे किं कारणतया कर्मणां उपयोगः ? उत सहकारितयेति विकल्प्य, प्रथमं निराकर्तुं—**तत्किमित्यादिटीका** । तां विकल्पमुखेन योजयति—**योग्यतेत्यादिना** । योग्यतावधारणप्रतिबन्धककल्मषनिबर्हणद्वारा P. 52-2

---

१. अत्र अनाशकेन-नाशकभिन्नेन इत्यर्थमादाय शरीराशोषकेण इति विवृतम् । भामत्यान्तु उपरि "एवं तपसोऽनाशकस्य (इच्छासाधनतया विधानं) । कामानशनमेव तपः, हितमितमेध्याशिनो हि ब्रह्मणि विविदिषा भवति । न तु सर्वथा अनश्नतो, मरणात्, नापि चान्द्रायणादितपश्शीलस्य, धातुवैषम्यापत्तेः ।" इति ग्रन्थेन आशः अशनं स्वार्थे कप्रत्ययः, अल्पार्थे नञ्, मिताशनं इति विवृतम् । वस्तुतस्तु यज्ञदानतपोऽनाशकेति टीकायां प्रयोगात् अनाशकमिति न तपोविशेषणं, तथा सति अनाशकतप इति प्रयोगप्रसंगात् । तस्मात् तप इति अनशनव्यतिरिक्तं तपः विवक्षितं - अनाशकं तु हितमितमेध्याशनं इति ज्ञायते ॥ अत एव वार्तिके "नियमाद्द्वन्द्वसंपातसहनं तप उच्यते । अनाशकं चानशनं कामानशनलक्षणम् ॥" इति अर्थभेदः उक्तः ॥

२. मु. उ. ३-१-८.

कर्मणां सहकारित्वमिति द्वितीयं कल्पं निराकरोति—**टीकायां—वेदान्ता-विरुद्धेति** । P. 52-10

ततश्च परिशेषात् साक्षात्कार एव कर्मणामुपयोग इत्युपसंहरति—**टीकायां—तस्मादिति । श्रुतमयेन**—श्रुतिजन्येन । **टीकायां—तर्कोपकरणेन** P. 52-14 **शब्देन विज्ञायेत्यन्वयः । अस्यां श्रुतौ 'धीर'** इत्यनेन फलाभिसन्धिमन्तरेणानुष्ठितयज्ञादिनिर्मलीकृतान्तःकरणत्वलक्षणं धैर्यं प्रज्ञाहेतुत्वेनोक्तमिति कर्मणामुपयोग उक्त इति द्रष्टव्यम् ।

**टीकायां—श्रेयःपरिपन्थीति ।** ब्रह्मात्मैक्यसाक्षात्कारपरिपन्थीत्यर्थः । **टीकायां—पुरुषसंस्कारेति ।** साक्षात्कारजननयोग्यताधानलक्षणसंस्कारेत्यर्थः । **ब्रह्मभावनामासेवमान इत्यन्वयः । महायज्ञैः**—ब्रह्मयज्ञादिभिः पञ्चभिः, P. 52-17 इतरैः ज्योतिष्टोमादियज्ञैश्च जीवस्य **ब्रह्मभावस्फूर्तियोग्या तनुः क्रियत** इत्यर्थः । सप्त पाकयज्ञाः, सप्त हविर्यज्ञाः, सप्त सोमसंस्थाः निषेकादिश्मशानान्तानि षोडश कर्माणि, त्रीणि व्रतानि इति **चत्वारिंशत्संस्काराः । ऋणत्रयं** देवर्षिपितृसंबन्धि ऋणत्रयम् ।

**संस्कारद्वारेति ।** ऋणत्रयापाकरणकल्मषनिबर्हणयोरपि संस्कारत्वेन P. 52-5 त्रयाणामपि पक्षाणां भावाभावसंस्कारद्वारा कर्मोपयोगप्रतिपादकत्वादिति भावः । **संयोगपृथक्त्वेनेति** संयोगशब्दार्थमाह—**संयोग इति । किं काम्यैवेति ।** P. 53-2 **काम्यैव सती खादिरता नित्येऽपि किं स्यात्** नित्यार्थापि स्यात् । **उत न नित्यार्था, किंतु** काम्यैवेति संशय इत्यर्थः ।

**न युक्तेति ।** नित्यानित्यसंयोगविरोधादिति भावः । क्रत्वङ्गताबोधकप्रमाणसत्वान्न विरोध इति शङ्कते—**यत्त्विति ।** वचनमन्यार्थमिति परिहरति—**तदिति । नित्येऽपि** प्रयोगे **खादिरत्वस्य श्रवणमस्तीति** यत् त्वयेष्यते, **तत् काम्यस्यैव** खादिरत्वस्य **यूपरूपाश्रयदानार्थमित्यर्थः ।** सिद्धस्य यूपस्य कथं खादिरत्वाश्रयत्वम्, तदसाध्यस्य तद्द्वारत्वायोगादित्याशङ्क्य, क्रियाविष्ट- P. 53-3 वेषेण साध्यतां दर्शयितुं **पशुबन्धनयुक्तेत्युक्तम् ।**

**एकस्योभयशेषत्वे संयोगपृथक्त्वं** कारणमिति सूत्रयोजनामभिप्रेत्य फलितमर्थं दर्शयन् द्वयोरपि प्रमाणयोः परस्परनैरपेक्ष्येण उभयार्थत्वबोधकत्वात्[1] न नित्यानित्यसंयोगविरोध इत्याशयेन सिद्धान्तमाह—**एकस्य, खादिरत्वस्येत्यादिना** ।

P. 53-4

**सन्निधानादेवेति**[2] । 'दध्नेन्द्रियकामस्य' इत्यादाविन्द्रियाद्यर्थतया विधीयमानस्य दध्यादेरिव सन्निधानादेवाश्रयलाभान्न तदर्थं वाक्यान्तरापेक्षेति भावः ।

सूत्रगतसर्वशब्दार्थं दर्शयन् सर्वापेक्षेति पदं योजयति—**टीकायां यज्ञेति** । विशेषणत्रयशब्देन आदरनैरन्तर्यदीर्घकालैरिति टीकोक्तं गृह्यत इत्याह—**आदरेति** । **टीकायां अविद्यातद्वासनयोः समुच्छेदः** शिथिलीकरणम् । अभिव्यक्तस्वरूपस्यैव मोक्षत्वात्—**मोक्षापरनाम्ने साक्षात्कारायेत्युक्तम्** ।

P. 53-4

P. 53-6

**शेषलक्षणादारभ्येति** । **शेषलक्षणं**—तृतीयाध्यायः । तत आरभ्य चतुर्भिरध्यायैः शेषत्वप्रयुक्तिक्रमाधिकारनिरूपणार्थैरुपदेशविचारः । सप्तमाद्यैश्चतुर्भिः सामान्यातिदेशविशेषातिदेशोहबाधनिरूपणार्थैः अतिदेशविचारः । एकादशद्वादशाभ्यामुपदेशातिदेशसाधारणतन्त्रप्रसङ्गविचार इति विवेकः ।

P. 53-12

**सहितेत्यनेन** कथं चातुर्थिकन्यायसंग्रह इत्याशङ्क्य, प्रयोज्यप्रयोजकसंबन्धरूपस्य साहित्यस्य, किं केन प्रयुज्यते अनुष्ठाप्यत इति प्रयुक्तिविचाराधीनत्वात्, तेन तद्धेतुसंग्रह इत्याशयेनाह—**प्रयोज्येति** ।

P. 54-1

---

१. एकस्यैव वचनस्य क्रतुशेषत्वफलशेषत्वरूपार्थद्वयबोधकत्वाभ्युपगमप्रयुक्तप्रमाणविरोधस्य वाक्यद्वयबोधकत्वाभ्युपगमेन परिहारेऽपि, एकस्यैव नित्यत्वप्रयुक्तावश्यकत्वकाम्यत्वप्रयुक्तानावश्यकत्वरूपविरुद्धधर्मद्वयासंभवेन प्रमेयविरोधस्य कः परिहार इति चेत्—इत्थम्—उपाधिभेदेन विरुद्धधर्मद्वयमेकत्र संभवति । खादिरत्वादीनां क्रतूपकारार्थत्वेन क्रतावावश्यकत्वं, कामार्थत्वेनानावश्यकत्वं इति । इदं 'विहितत्वाच्चाश्रमकर्मापि' इति सूत्रे परिमले व्यक्तम् ।

२. 'दध्नेन्द्रियकामस्य जुहुयात्' इति वाक्ये सन्निहितः होमः यथा दध्यादेराश्रयो लभ्यते, ततश्च होमाश्रितदध्ना इन्द्रियं भावयेदिति वाक्यार्थः, तथा 'खादिरं वीर्यकामस्य यूपं कुर्वीत' इति वाक्येऽपि सन्निहितस्य यूपस्य खादिरत्वाश्रयस्य लाभः, ततश्च यूपाश्रितेन खादिरत्वेन वीर्यं भावयेदिति वाक्यार्थलाभसंभवेन 'खादिरे पशुं बध्नाति' इति नित्यवाक्यं अनपेक्षितमिति भावः ।

**संस्कारकर्मत्वेति**। यद्यपि संस्कारकर्मणोऽपि स्रुक्संमार्गादेर्गुणकर्मत्वमस्ति, तथापि दृष्टप्रयोजनाभावेन प्रसिद्धगुणकर्मवैधर्म्यात् पृथग्ग्रहणम्। P. 54-2

ननु "यदाग्नेयोऽष्टाकपाल" इत्यादिवाक्यबलात् कृत्स्नस्यापि पुरोडाशस्य यागीयत्वावगमात् कथं ध्यवदानमात्रापेक्षा **टीकायामुक्ता**, (चतुरवत्तं) 'ध्यवदानं जुहोती'ति वाक्यस्य त्यक्तपुरोडाशैकदेशप्रतिपत्तिप्रक्षेपमात्रविधिपरत्वादित्याशङ्क्य, वार्तिककारमते तथात्वेऽपि, भाष्यकारमते 'यदाग्नेय' इत्यादिवाक्यावगतं पुरोडाशस्य यागसाधनत्वं ध्यवदानद्वारैव। (चतुरवत्त) ध्यवदानवाक्येन 'द्विर्हविषोऽवद्यति' इति वाक्यविहितध्यवदानमात्रस्यैव यागसाधनत्वेन विधानात्। ततश्च तन्मतानुरोधेन टीकेत्याशयेनाह—**आग्नेयेति**। P. 54-3

**टीकायां विकल्पासहत्वादित्यनन्तरं**[2] उत्कटानुत्कटकोटिकतया विकल्पं अप्रदर्श्यैव क्रमेण कल्पद्वयं निराकृतम्। स्वयं तं विकल्पं विशदयन्नाह—**भावनासाध्ये इति**। संयवनशब्दार्थमाह—**मिश्रणस्येति**। **टीकायां-प्रोक्षणस्योलूखलादयः इति**। 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ती'ति वचनादिति भावः। P. 54-7

**प्राप्यं पय इति**, 'गां दोग्धि पय' इत्यादौ गां रिक्तीकरोति पयः प्राप्तुमिति वाक्यार्थः। अत एव 'दुह प्रपूरणे' इत्यत्र प्रपूरणं रिक्तीकरणम्, प्रस्मर्त- P. 54 5

---

१. प्रसिद्धं गुणकर्म उत्पत्त्याप्तिविकृतिफलकतया दृष्टप्रयोजनं त्रिविधं, तद्यथा— 'पिष्टं संयौति' 'गां दोग्धि' 'व्रीहीनवहन्ति' इति। संयवनं मिश्रणं तस्य पिण्ड उत्पाद्यः। दोहनस्य प्राप्यं पयः। अवघातस्य व्रीहयः विकार्याः। एतानि दृष्टप्रयोजनानि गुणकर्माणि। 'व्रीहीन् प्रोक्षति' इति विहितं प्रोक्षणादिरूपं संस्कारकर्म तु अदृष्टप्रयोजनकं गुणकर्म। २. टीकायां विकल्पो न प्रदर्शितः। स च विकल्पः कल्पतरौ 'स च भावनासाध्यस्साक्षात्कारः ब्रह्मस्वरूपं, अन्यो वा' इति विशदीकृतः। टीकायामप्रदर्शितोऽपि स विकल्पः टीकायां क्रमेण निराकृत एव। टीकायां विकल्पस्याप्रदर्शने को हेतुरिति चेत्, स उच्यते आभोगकारेण 'उत्कटानुत्कटकोटिकतये'ति। तस्य कोऽर्थ इति चेत्-उच्यते— साक्षात्कारः ब्रह्मस्वरूप इति प्रथमकोटिः उत्कटा प्रबला। अत एव महता संरंभेण आदावन्ते च तस्या निरासः। साक्षात्कारः ब्रह्मभिन्न इति द्वितीयकोटिस्तु अनुत्कटा। अत एव 'ततो भिन्नस्य वा' इत्यादिना मध्ये तान्निरस्य पुनरपि पूर्वकोटेरेव निरासारंभः। उत्कटानुत्कटकोटिकविकल्पस्तु फल्गुः समकोटिकविकल्पवत् न दृढः। अत एव स न टीकाकारेण प्रदर्शितः, इति भावो भाति। तस्य औचित्यानौचित्यविषये पण्डिताः प्रमाणम्।

P. 54-9 व्यमित्यादाविव प्रशब्दस्य नञर्थत्वादिति भावः । **टीकायां-इन्द्रियाद्याधेय इत्यस्य पूर्वेणान्वयः । जडं स्यादिति ।** दृग्भिन्नस्य दृश्यध्यस्तत्वेनैव प्रकाशावश्यंभावात्, अध्यस्तस्य जडत्वनियमादिति भावः ।

ननु **ततो भिन्नस्येत्यादिटीकायां** अप्रामाण्यायोगादित्युक्तमयुक्तम्, P. 54-6 इन्द्रियशब्दादिप्रमाणजन्यत्वेन तदुपपत्तेरित्यतः तदभिप्रायमाह—**तथेति**[1] । 'न चक्षुषा गृह्यते नापि वाचा[2]' 'यन्मनसा न मनुते[3]' इति च श्रुतेरिति भावः । **टीकायां—उपासनाया उत्पाद्यादिरूपो मा भूदित्यन्वयः ।**

P. 54-15 **टीकायां—रङ्गव्यापृतेन संस्कार्या नर्तकीवेत्युक्तम् ।** तत्र रङ्ग-P. 51-9 व्यापृतशब्दार्थमाह—**नट इति । शब्दज्ञानमात्रेति** मात्रशब्देन निश्चयत्वा-P. 55-5 नधिकरणत्वं विवक्षितमिति दर्शयन्नाह—**उपासना किमिति । साक्षात्काररूपो हीत्यादिटीकायां** जीवे कर्तृत्वाद्यध्यासः तद्विरुद्धाकर्त्रभोक्तृब्रह्मात्मत्वसाक्षात्कारनिवर्त्यः, साक्षात्कारविपर्यासत्वात्, इत्यनुमानं सूचितम् । तस्य व्यभिचारं P. 55-2 शङ्कते—**नन्विति ।**

हेतौ सोपाधिकत्वं विशेषणम् । तथा च निरुपाधिकेषु रज्जुसर्पादिभ्रमेषु न व्यभिचारः । अन्तःकरणोपाधिकेषु कर्तृत्वाद्यध्यासेषु च नासिद्धिरिति परि-P. 55-4 हरति—**सत्यमिति । तथाविधमिति ।** दिङ्मोहादावप्यपरिशीलितप्रदेशविशेषप्रासत्यादिरुपाधिरिति भावः ।

शब्दस्य साक्षात्कारजनकत्वे हेतुं सूचयितुं **अपरोक्षे ब्रह्मणीत्युक्तम् ।** तस्यायमभिप्रायः—ज्ञानस्यापरोक्षत्वं अपरोक्षार्थव्यवहारानुकूलज्ञानत्वम् । अर्थस्य त्वभिव्यक्तचैतन्याभिन्नत्वम्, तच्च क्वचित् स्वाभाविकम् । क्वचिदाध्यासिकम् । न त्विन्द्रियत्वेन इन्द्रियजन्यत्वादिकं ज्ञानापरोक्ष्यं, अपरोक्षज्ञानविषयत्वं चार्थापरोक्ष्यमिति युक्तम् । साक्षिण्यव्याप्तेः, 'सोऽयं देवदत्त' इति तत्तांशातिव्याप्तेः, गौरवाच्च । ततश्च शब्दजन्यमप्यपरोक्षब्रह्मज्ञानमपरोक्षमिति । P. 55-5 **शब्द एवेति ।** 'तन्त्वौपनिषद'मिति श्रुतेरिति भावः । **भ्रमत्वापातादिति ।** वेदान्तवाक्यजन्यस्य च ज्ञानस्य भ्रमत्वमयुक्तमिति भावः ।

---

१. कल्पतरौ तथा तथेति पाठः. २. मु. ३-१-७. ३. केन. १-५.

**टीकायां**–तस्यैव तत्फलत्वनियमादित्यादिना प्रमाणविशेषजन्यत्वादेव ज्ञानस्यापरोक्षत्वं, तद्विषयत्वं चार्थस्य, शब्दश्च प्रत्यक्षप्रमायामयोग्य इत्युक्तम्। तदभिप्रायमाह—**अयमभिसन्धिरिति**। किमभिव्यक्तचैतन्याभिन्नत्वमात्रमर्थस्यापरोक्ष्यम्? उत तदपरोक्षव्यवहारानुकूलाभिव्यक्तिमच्चैतन्याभिन्नत्वम्? नाद्यः। यत्किञ्चिद्वृत्त्यभिव्यक्तचैतन्याभिन्नतया सर्वस्यापि प्रपञ्चस्य तदापत्तेः। न द्वितीय इत्याह—**स्वत इति**। अत एव निरतिशयानन्दरूपं ब्रह्म ममापरोक्षं न प्रकाशत इति व्यवहार इति भावः।[1] P. 57-1 P. 55 4

ततश्च ज्ञानभिन्नभावकरणकत्वमेव ज्ञानस्यापरोक्ष्यम्। तद्विषयत्वं चार्थस्य। यथोक्तकरणकत्वं च ज्ञानस्य यद्विषयावच्छेदेन तस्यैवापरोक्षत्वमिति न तत्तांशस्यापरोक्षत्वम्। साक्षिण्यप्यन्तःकरणजन्यसूक्ष्मान्तःकरणवृत्त्यभ्युपगमान्नाव्याप्तिः। यद्वा, ज्ञानतदभावकरणकज्ञानान्यानुभवत्वं ज्ञानस्यापरोक्ष्यं, तज्जन्यव्यवहारयोग्यत्वमर्थस्येति न कोऽपि दोष इत्यभिप्रायेणाह—**तत्रेति**। P. 55-5

नन्वेवमपि **तस्यैव तत्फलत्वनियमादिति** हेतुरयुक्तः; ब्रह्मात्मैक्यसाक्षात्कारे वेदान्तवाक्यस्य हेतुत्वावगमादिति चेत्, तत्र वक्तव्यम्—(१)किमन्तःकरणस्य निर्विशेषब्रह्मसाक्षात्कारजननसामर्थ्ये नास्ति प्रमाणमिति ब्रवीषि? (२) किं वा सति सामर्थ्ये इदानीमपि तं जनयेदिति? (३) उत शब्दोऽपि तज्जननसमर्थ इति? (४) अथवा इदानीन्तनाहंप्रत्ययवत्तदानीन्तनस्याप्यन्तःकरणजन्यत्वाविशेषेण भ्रमत्वं स्यादिति? (५)अपिवा तत्प्रमात्वसिद्ध्यर्थं अन्यापेक्षणे परतस्त्वापात इति? (६) आहो ब्रह्मणो मनोगोचरत्वनिषेधकश्रुतिविरोध इति? (७) यद्वा वेदान्तवाक्यसहकृत-

---

१. "यदि ब्रह्म स्वतोऽपरोक्षमिति, तद्विषयं शब्दजन्यमपि ज्ञानमपरोक्षं भवेत्, तदा श्रवणजन्यज्ञानमप्यपरोक्षमिति श्रुतवेदान्तस्य पुंसः तस्मिन् पारोक्ष्यभ्रमानुवृत्तिर्न स्यात्। अनुवर्तते च तदनन्तरमपि भ्रमगृहीतं ब्रह्मणि पारोक्ष्यमिति, न शब्दादपरोक्षज्ञानं, तस्मादपरोक्षज्ञानजननसमर्थादन्यत एव तदेष्टव्यम्" इति परिमलोक्तमत्रानुसन्धेयम्॥.

२. व्याप्तिज्ञानादिकरणकानुमित्यादेः अनुपलब्धिरूपाभावकरणकाभावज्ञानस्य च आपरोक्ष्यवारणाय ज्ञानभिन्नेति, भावेति च पदम्। उपरि यद्वेत्यादिपरिष्कारेऽपि तद्वारणायैव ज्ञानतदभावकरणकज्ञानान्यत्वनिवेशः। संस्कारजननोपक्षीणत्वादनुभवस्य तदकरणिकां संस्काररूपभावकरणिकां स्मृतिं वारयितुमनुभवपदमिति बोध्यम्॥

स्यान्तःकरणस्य साक्षात्कारजनकत्वाभ्युपगमे शब्दस्य परोक्षज्ञानजनकत्वस्वाभाव्यात् अपरोक्षे च ब्रह्मणि शब्दजन्यस्य परोक्षज्ञानस्य भ्रमत्वापत्तौ वेदान्तवाक्यस्य प्रमाणत्वभङ्ग इति ? (८) अथवा 'तन्त्वौपनिषद'मित्यादिश्रुतिबलाच्चरमसाक्षात्कारे वेदान्तवाक्यस्यैव हेतुत्वमवगम्यत इति ।

**नाद्यः** । सोपाधिकसाक्षात्कारे [सामर्थ्यस्य] क्लृप्तत्वेन निरुपाधिकसाक्षात्कारेऽपि तत्कल्पनादित्याह—**अन्तःकरणं चेति** । **न द्वितीयः** । सहकारिविरहात् इदानीं तदजनकत्वेऽपि यथोक्तसहकारिसमवधानेन तदानीं ब्रह्मात्मैक्यसाक्षात्कारजनकत्वसंभवात् इत्याह—**तत्त्विति** । **न तृतीयः** । क्वचिदप्यक्लृप्तेरित्याह—**शब्दस्त्विति** । **अन्धादेरिति** । [1]त्वगिन्द्रियविकलः अन्ध इह अन्धादिशब्देनोच्यते । तस्य दशमोऽहमिति ज्ञानं शरीरांशे परोक्षमेव । बाह्येन्द्रियस्य तत्प्रत्यक्षजनकस्याभावात्, अन्तःकरणस्य सन्निकर्षविरहेण तत्रासामर्थ्यात् । ज्ञानस्य प्रत्यासत्तित्वानङ्गीकारात् । अत एव प्रत्यभिज्ञायाः तत्तांशे नापरोक्ष्यमिति भावः ।

**न चतुर्थः** । स्वतःप्रमाणवेदान्तवाक्यजन्यभावनाया अपि तत्र हेतुत्वाभ्युपगमेन वैषम्यादित्याह—**अपिचेति** । अन्तःकरणजन्या **अपरोक्षधीः वेदान्तवाक्यजज्ञानभावनाजा** यतः, अतो वेदान्तवाक्यरूपमूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यत इत्यर्थः । **न पञ्चम** इत्याह—**न चेति**। **अपवादः** अप्रामाण्यबुद्धिः । **मूलशुद्धिः** मूलप्रमाणदार्ढ्यम् ।

**न षष्ठ** इत्याह—**दृश्यते त्विति** । ननु 'यन्मनसा न मनुते' इत्यपि श्रुतिः दृश्यते ? अत आह—**नयबृंहितेति** । दृश्यत इत्यादिश्रुतेरैकाग्र्यादिविशिष्टमनोविषयतया विशेषश्रुतित्वेन विशेषशास्त्रप्राबल्यन्याये[2]योपबृंहिततया प्राबल्यादिति भावः । **न सप्तमः** । ब्रह्मणि परोक्षत्वानवगाहनात् इत्याह—

---

१. "अभ्युपेत्यायं परिहारः, 'दशमोऽहमस्मि' इत्यपरोक्षज्ञानं अन्तःकरणेन संभवति, शरीरविषयं चेत् स्पर्शनेन्द्रियेण वा ज्ञानान्तरोपनयसहितान्तःकरणेन वा संभवति" इति परिमलोक्तदूषणस्य समाधानमिदम् ॥ परं तु त्वगिन्द्रियविकलः प्रसिद्धो वेति विचारणीयम् ।

२. 'प्रागुपन्यस्तन्यायोपबृंहितायां' इति परिमलानुसारात्, अन्तःकरणस्यापरोक्षधीहेतुत्वव्यवस्थापककल्पतरूक्तन्यायोपि गृहीतुं शक्यते ।

P. 55-6
P. 56-2
P. 56-2

**यत्साक्षादिति ।** प्रत्यक्षार्थविषयकानुमितिवदिति भावः । **न चरमः ।** शब्दसा- दन्तःकरणादेव चरमसाक्षात्कारसंभवे तदानीमपि तत्त्वमस्यादिवाक्यानुसन्धान- कल्पने प्रमाणाभावेन, 'यतो वाचो निवर्तन्ते' 'यद्वाचानभ्युदितं,' 'न चक्षुषा गृह्यते नापि वाचे' त्यादिश्रुतिभिः शब्दस्य साक्षात्कारजनकत्वनिषेधेन च 'तन्त्वौपनिषद'मित्यादिश्रुतेः परोक्षज्ञानजनकत्वपरत्वादित्याशयेनाह—**इति सर्वमवदातमिति ।** P. 56·4 P. 56·5

**स्वरूपप्रकाशस्येति ।** जीवस्वरूपप्रकाशस्य ब्रह्माभेदसाक्षात्कारेण तदभिव्यक्ति(तदभेद)तिरोधायकाविद्यानिवृत्तिरूपामभिव्यक्तिं संस्कारमुपपाद्य, व्यञ्जकान्तःकरणवृत्तेः उत्पाद्यतां 'न चासावनुत्पादिते'त्यादिटीकया प्रागुपक्षिप्तामुपपादयतीत्यर्थः । **असमुच्चयमतेपीति ।** चित्तशुद्धिद्वारैव कर्मणामुप- योगः, न तु भावनासमुच्चितानां तेषां ब्रह्मात्मत्वसाक्षात्कारे हेतुत्वमिति सिद्धान्तिमतेऽपीत्यर्थः । P. 57·1

न हीत्यादिटीकायाः शाब्दज्ञानप्रकाश्यं ब्रह्म कालान्तरे स्वयंप्र- काशं न भवतीति नहीति योजनां निराकरोति—**स्वप्रकाशस्यैवेति**[२] । **परिहारसाम्यमिति ।** वृत्तिविषयत्वं स्वप्रकाशत्वं च विरुद्धमिति शङ्कायां[३], स्वरूपेण ब्रह्म स्वयंप्रकाशं, उपहितरूपेण तु वृत्तिविषयः न स्वप्रकाशमिति परि- हारसाम्यमित्यर्थः । P. 57·4 P. 57·2

**ननु निरुपाधीति ।** अन्यथा तस्य सर्वोपाधिनिवर्तकत्वायोगादिति भावः । **कथं तस्योपहिततेति ।** यदुपाध्युपहितब्रह्मसाक्षात्कारः संसारनिवर्तकः, तदुपाधिनिवर्तकसाक्षात्कारेऽपि उपाध्यन्तरगवेषणायामनवस्थापातादिति भावः ।

---

१. प्रत्यक्षस्पर्शाश्रयत्वादिलिङ्गजन्या वायोः प्रत्यक्षत्वानुमितिः स्वयं परोक्षापि स्पार्शनप्रत्यक्षविषये वायौ प्रत्यक्षत्वाभावानवगाहनात् यथा न भ्रमः तद्वदिति भावः परिम- लादनुसंबन्धेयः ।

२. एवकारेण स्वप्रकाशत्वकाल एव शाब्दज्ञानविषयत्वमित्यर्थबोधनादिति भावः ।

३. टीकायां परिहारसाम्यकथनपरायां 'न तावदयमेकान्तेनाविषयः' इति भाष्य- संमतिः प्रदर्शिता । तस्यापि भाष्यस्य, आत्मा सर्वथा अविषयो न, किन्तु अनुपहितरूपेणा- विषयः स्वयंप्रकाशः, उपहितरूपेण तु विषयः न स्वप्रकाश इत्यर्थ इति बोध्यम् ।

P. 57-6 **टीकायां—तस्यैवेति ।** अन्ततः तस्यैवेत्यर्थः। तदानीमुपाध्यन्तराणामपि सत्त्वात् । अत एवाह—**स्वपरोपाधिविरोधिन इति ।**

ननु कथं ब्रह्मसाक्षात्कारस्य स्वपरोपाधिविरोधित्वम् । न च तस्य 'निरुपाधि ब्रह्मे'त्याकारस्य निरुपाधित्वेन वेषेण सकलोपाधिव्यतिरेकविषयतया सकलोपाधिविरोधित्वमिति वाच्यम् । उपाधौ सति तदाकारत्वस्यैवायोगादित्याशङ्क्य, मिथ्याभूतोपाधिसद्भावो न वास्तवनिरुपाधित्वसाक्षात्कारविरोधीत्यभिप्रायमाह—

P. 57-3 **निरुपाधीति—**

---

१. अत्र कल्पतरौ 'निरुपाधिकं ब्रह्मेति विषयीकुर्वाणा वृत्तिः' इति ग्रन्थे वृत्तिरूपसाक्षात्कारे निरुपाधिकत्वं विषय इति भाति । परिमलेपि 'ब्रह्म शुद्धं निरुपाधिकं' इति हि वृत्तिरूपसाक्षात्कारस्याकार इष्यते' इत्युक्तम् । 'निरुपाधिकत्वाकारसाक्षात्कारोदयः' इति चोक्तम् । आभोगकारेणापि 'निरुपाधि ब्रह्मे'त्याकारस्य ब्रह्मसाक्षात्कारस्य' इत्युक्तम् । 'न च तत्तदुपाधिविरहोपि ततोऽतिरिच्यते' इति टीकायां 'न चोपाध्यभावस्ततोऽन्यः' इति कल्पतरौ च ब्रह्मस्वरूप एव उपाध्यभावः साक्षात्कारे भासते इत्युक्तम्। उपाध्यभावस्य स्वरूपानतिरेकेऽपि, निरुपाधिकं ब्रह्मेति तद्वत्त्वव्यपदेशश्च समर्थितः कल्पतरौ । 'निरतिशयानन्दत्वं स्वरूपाभिन्नमेव मुक्त्यानन्दानुभवे प्रकारः, महावाक्यजन्यब्रह्माभिन्नस्वस्वरूपसाक्षात्कार इवाभेदप्रतियोगिब्रह्मस्वरूपम्' इति परिमलोक्तरीत्या स्वरूपस्यापि प्रकारत्वमुपपद्यते । 'अन्तःकरणाद्यभावस्य ब्रह्मस्वरूपानतिरिक्ततया वास्तवत्वेनैव शुद्धत्वाद्यवगाहिब्रह्मसाक्षात्कारविषयत्वं समर्थयिष्यते टीकाकारैराचार्यैश्च सौत्राथशब्दविचारप्रस्तावे' इति च परिमल एवोक्तम् । एवं च भामतीकल्पतरुपरिमलाभोगग्रन्थानुसारेण वृत्तिरूपसाक्षात्कारे निरुपाधिकत्वात्मकशुद्धत्वं विषय इति स्पष्टमेवावगम्यते । अद्वैतसिद्धिटीकायां लघुचन्द्रिकायां तदीयव्याख्याने विट्ठलेशीये च शुद्धत्वं न विषय इत्युक्तम्—तथाहि चन्द्रिका—'शुद्धं ब्रह्मेतीति । इतिशब्दोऽत्र वृत्तिविषयसमाप्तौ' इति । विट्ठलेशीयम्—'शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्ति'रित्यत्र इतिपदविषयीकुर्वाणपदयोरन्यतरत् व्यर्थं, तदर्थस्य इत्याकारकत्वस्य तदन्यतरेणापि बोधनसंभवात् । किं च अर्थोऽप्यसङ्गतः, शुद्धत्वे वृत्तिविषयत्वानङ्गीकारात्, इत्यत आह टीकायां-इतिशब्द इति ।' इति । एवं कल्पतरुवाक्यविवरणार्थमेव प्रवृत्ते चन्द्रिकादिग्रन्थे तद्विरुद्धोऽर्थः उक्तः । कथमिदं संगच्छत इति चेत्, उच्यते—उपाध्यभावः वास्तवः ब्रह्मस्वरूप इति पक्षमभिप्रेत्य पूर्वोक्तटीकाकल्पतरुपरिमलाभोगग्रन्थप्रवृत्तिः । "न च आत्मनो बुद्ध्यादिभ्यो भेदस्तात्त्विकः, येन चिदात्मनि गृह्यमाणे सोऽपि गृहीत एव भवेत् । बुद्ध्यादीनामनिर्वाच्यत्वेन तद्भेदस्याप्यनिर्वचनीयत्वात् ।" इति अध्यासभाष्यटीकायां उक्तत्वेन तं पक्षमवलम्ब्य, प्रमाभूते वृत्तिरूपसाक्षात्कारे बाधितं व्यावहारिकं उपाध्यभावरूपं शुद्धत्वं न विषयीभवितुमर्हति । उपाधीनामिव तदभावस्यापि बाधितत्वात्, इत्यभिप्रायेण लघुचन्द्रिकादिग्रन्थप्रवृत्तेः। पक्षद्वयमिदं अध्यासभाष्यविवरणस्थले परिमले विशदमुक्तं, तत एवावगन्तव्यम्—इत्यलमतिविस्तरेण ।

ननु साक्षात्कारेण सर्वोपाधिनिवृत्तौ तदनन्तरं निरुपाधिकमेव तद्विषयः स्यादित्याशङ्कां, उपाधिनिवृत्त्यनन्तरं नास्त्येव साक्षात्कारः, तत्सत्तायामुपाधीनां विनश्यत्त्वैव,[1] न तु विनाश इति निराकर्तुं **विनश्यदवस्थस्येति टीकेत्याशयेनाह—ततः स्वसत्तायामिति।** P. 54-4

वृत्त्युपहितं विषय इति वदन् प्रष्टव्यः।[2] किं वृत्तिविशिष्टं? उत वृत्त्यवच्छिन्नं? किं वा वृत्त्युपलक्षितम्? इति। नाद्य इत्याह—**वृत्तिविशिष्टस्येति।** P. 57-5 द्वितीये, किं वृत्तेर्ज्ञायमानतया अवच्छेदकत्वं? उताज्ञायमानतया? नाद्य इत्याह—**वृत्त्यवच्छिन्नेति।** न द्वितीय इत्याह—**विशेषणेति।** विशेषणस्यावच्छेदकस्याग्रहे तद्विशेषितस्याग्रहादित्यर्थः। ततश्च शुद्धात्मविषयकत्वमेव स्यादिति भावः। तृतीयं दूषयति—**उपलक्षितस्य त्विति।** अविद्यमानस्याप्युपलक्षणत्वसंभवादिति भावः।

द्वितीयद्वितीयमादाय परिहरति—**उच्यत इति।** तत्पक्षोक्तं दोषमुद्धरति—**अतो वृत्तीति।** P. 57-6 उपाधिसंसर्गे सति शुद्धस्यैव विषयता, तत्संसर्गपृथक्कृतं तु स्वप्रकाशं इत्यभ्युपगमान्न दोष इति भावः।

ननु ब्रह्मण उपाधिसंबन्धः उपाधिप्रतिबिंबितत्वम्। तच्च विषयविषयिभावनिमित्तकम्। स चोपाधिसंबन्धाधीन इति परस्पराश्रय इति शङ्कते—**नन्विति। विषयविषयित्वलक्षण इति।** विषयविषयित्वं लक्षणं निमित्तं यस्येत्यर्थः। **टीकायां—चैतन्यच्छायापत्तेरावश्यकत्वमुक्तम्,** तावता कथमुक्तदोषपरिहार इत्यत आह—**न ब्रह्मेति। चैतन्यप्रतिबिंबितत्वमिति।** P. 57-8 प्रतिबिंबितचैतन्यकत्वमित्यर्थः। आहिताग्न्यादेराकृतिगणत्वान्निष्ठान्तस्य न पूर्वनिपातनियमः। स्वत इत्यत्र हेतुमाह—**घटादीति।** तासां ब्रह्माविषयकत्वेऽपि प्रतिबिंबितचैतन्यकत्वदर्शनादिति भावः। चैतन्यस्य ब्रह्मभेदभ्रान्तिं वारयन्नाह—**चैतन्यं चेति।** P. 57-9

---

१. विनश्यत्त्वं विनश्यदवस्थत्वं समनन्तरोत्पत्स्यमानविनाशप्रतियोगित्वम्, इत्यर्थः।

२. अत्र कल्पतरौ वृत्त्यवच्छिन्नपदेन वृत्तिविशिष्टमेवोच्यते, इति मत्वा परिमले 'वृत्त्युपहितं वृत्त्या विशिष्टं तदुपलक्षितं वा' इति कोटिद्वयमेव प्रदर्शितम्। कोटिद्वयविलक्षणं प्रकारमादाय समाहितम्। आभोगे तु कोटित्रयं प्रदर्श्य मध्यमप्रकारमादाय समाहितमिति विशेषः।

P. 58-1 **भ्रमत्वमिति।** संसारदशायामप्रकाशमानं ब्रह्म परोक्षमिति तत्रापरोक्ष्यावगाहित्वादिति भावः। किं स्वरूपस्य पारोक्ष्यम्, उत शुद्धानन्दात्मत्वादेः, किं वा उपाधिविरहस्य? नाद्य इत्याह—**तत्राहेति।** द्वितीयं शङ्कते—**जीवेति।**
P. 58-2 **पारोक्ष्यादिति।** जीवाभिन्ने ब्रह्मणि भासमानेऽप्यभानात् [1]तेषां ततो भेदः। [2]इतरथा स्वरूपस्याप्यभानापत्तौ जीवब्रह्माभेद एव न सिद्ध्येदिति भावः।

P. 58-3 शुद्ध्यादीनां स्वरूपाभेदेऽप्यभानमुपपद्यत इत्याह—**शुद्ध्यादीनामिति।** न च शुद्ध्यादेस्तिरोधाने तदभिन्नस्य स्वरूपस्यापि तिरोधानापत्तिः। एकस्यापि स्वरूपस्य कर्तृत्वभोक्तृत्वजडत्वाद्यशुद्धिराहित्यव्यवहारानुकूलस्फुरणांशे अघटनघटनापटीयस्या अविद्यया तिरोधानेऽप्यसत्वाप्रियत्वादिराहित्यव्यवहारानुकूलस्फुरणांशे तदभावादिति भावः।

[3]तर्हि साक्षात्कारदशायामपि सतामुपाधीनां कथं तेन निवृत्तिरित्याशङ्कायां सहकारिसाचिव्यादिति प्रागुक्तं स्मारयन् तृतीयं शङ्कते—**वेदान्तेति।** **वेदान्तजज्ञानेन** वेदान्तजन्यज्ञानमूलकभावनापरिपाकसहकृतान्तःकरणजन्यज्ञानेनेत्यर्थः।

ननूपाध्यभावस्य स्वरूपानतिरेके निरुपाधिकं ब्रह्मेति कथं तद्धत्त्वव्यवहार
P. 58-4 इत्याशङ्क्यां दृष्टान्तेन निराकरोति—**यथेति।** **तस्मादित्यादिटीकाव्यावर्त्यां**

---

१. अभानादिति—ब्रह्मसाक्षात्कारात् पूर्वमिति शेषः। अन्यथा ब्रह्मसाक्षात्कारे शुद्धत्वादीनां भानाङ्गीकारेण अभानादित्यसङ्गतेः॥

२. इतरथा—तेषां ब्रह्मस्वरूपादभेदे—ब्रह्मस्वरूपस्यापि अभानापत्तिः, अभासमानशुद्धानन्दात्मत्वाद्यभेदात्। ततश्च जीवब्रह्माभेदः न सिद्ध्येत्। भासमानस्य जीवस्य अभासमानब्रह्मस्वरूपाभेदायोगादिति भावः भाति॥

३. तर्हि—शुद्ध्यादीनां स्वभावत्वेऽप्युपाधितिरोधानात्, पूर्वमविभावने—उपाध्यपगमात् शुद्धत्वादिरूपेण यथावत् ब्रह्माभिन्नजीवाभिव्यक्तिर्वक्तव्या, उपाध्यपगमः कथं भवति, त्वंपदार्थसाक्षात्कारकालेऽपि विद्यमानानां अन्तःकरणाद्युपाधीनां तेन निवृत्तिर्न भवति। ब्रह्मसाक्षात्कारकालेऽपि च अन्तःकरणाद्युपाधिर्वर्तते—अतः तेनापि न निवृत्तिरिति शङ्काशयः। सहकारिसाचिव्यात् वेदान्तजन्यज्ञानमूलकभावनापरिपाकरूपसहकारिवशात् अन्तःकरणं त्वंपदार्थस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामाविर्भावयतीति टीकायां पूर्वमुक्तत्वेन मिथ्याभूतेषु उपाधिषु विद्यमानेष्वपि वास्तवनिरुपाधिकत्वाकारसाक्षात्कारोदयाविरोधात् शुद्धत्वादिरूपेण जीवाभिव्यक्तिर्भवितुमर्हतीति समाधानाशयः॥

शङ्कामाह—**नन्विति**। **तद्रूपेणेति**। षड्जादीनां षड्जत्वादीनां च योग्यतया श्रोत्रेन्द्रियेण ग्रहणेऽपि, नायं मध्यमः किन्तु षड्ज इति व्यवहारानुकूलेन रूपेण न व्यज्यन्ते। गान्धर्वशास्त्रजन्यज्ञानमूलकभावनापरिपाकसहितेन तु श्रोत्रेण व्यज्यन्त इत्यर्थः। P. 58-6

**निषादेति**। शरीरे वीणादिषु च प्रथमं श्रूयमाणाःश्रुतिसंज्ञकाः तत्तत्स्थान-भेदभिन्ना नादा द्वाविंशतिः। तत्र चतुस्त्रिद्विसंख्याकश्रुत्यवयवशालिनस्तदनन्तर-भाविनो घण्टानादानुरणनसदृशाः अनुरणनात्मका निषादादयः सप्त स्वतो रञ्जकत्वात् स्वराः। तत्र षड्जमध्यमपञ्चमाश्चतुश्चतुश्श्रुतिकाः। ऋषभधैवतौ त्रिस्त्रिःश्रुतिकौ। निषादगान्धारौ द्विर्द्विःश्रुतिकाविति विवेकः। तेषां स्वराणां समुदायाः षड्जमध्यमगान्धारस्वरप्रभवाः नन्द्यावर्तजीमूतसुभद्राख्यास्त्रिविधा ग्रामाः। तेषु ग्रामेषु क्रमेण स्वराणामारोहावरोहाभ्यां निवेशाः प्रतिग्रामं सप्तधा भिन्ना एकविंशतिमूर्च्छनाः। तदुक्तम्—

प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः।
सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा॥

श्रुत्यनन्तरभावी यः शब्दोऽनुरणनात्मकः।
स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते॥

श्रुतिभ्यः स्युस्स्वराः षड्जर्षभगान्धारमध्यमाः।
पञ्चमो धैवतश्चाथ निषाद इति सप्तमः॥

यथा कुटुंबिनस्सर्वेऽप्येकीभूता भवन्ति वै।
तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते॥

षड्जग्रामो भवेदादौ मध्यमग्राम एव च।
गान्धारग्राम इत्येतत् ग्रामत्रयमुदाहृतम्॥

नन्द्यावर्तोऽथ जीमूतः सुभद्रो ग्रामकास्त्रयः।
षड्जमध्यमगान्धारास्त्रयाणां जन्महेतवः॥

क्रमात् स्वराणां सप्तानां आरोहश्चावरोहणम्।
मूर्च्छनेत्युच्यते ग्रामस्था एतास्सप्त सप्त च॥ इति॥

**अत्रोच्यत** इत्यादिनापि समुच्चयनिराकरणादस्य ततो भेदं दर्शयति—

P. 58-10 **समुच्चयपक्षमिति**। समुच्चयस्य सामान्येन निराकरणमिह। उत्तरत्र तु तद्विशेषनिराकरणमिति भावः। अत एव विकल्पयति—**तत्र किमिति**।

P. 58-7 **टीकायां-निश्चितेऽपि तत्त्व इति**। औपाधिकभ्रमस्योपाधिनिवृत्तिमन्तरा निवृत्त्यभावेन विपर्यासानुवृत्तिसंभवादिति भावः। **टीकायां—तेनेति**—**विद्यासहकृतेन तेन** कर्मणा अविद्यातत्कार्यसमुच्छेदश्चोपपद्यत इत्यर्थः।

P. 58-13 **सजातीयाश्चेति**। स्वपरविरोधिन इति द्वन्द्वगर्भे षष्ठीतत्पुरुषे, ततः

P. 58-15 सजातीयपदस्य कर्मधारय इति भावः। **टीकायाम्—अनाद्यविद्येति**। अविद्यारूपं यत् **परिणाम्युपादानं, यच्च देहादि, तद्व्यतिरिक्तेत्यर्थः**। **टीकायां-व्यवहारप्रत्ययानिति**। व्यवहारान् प्रत्ययांश्चेत्यर्थः। **टीकायां-मिथ्येति मन्यमान इति**। दोषनिमित्तकान्मन्यमानस्तद्विषयस्य वास्तवत्वं नाध्यवस्यतीत्यर्थः।

P. 58-15 **वास्तव इति निश्चयवत इति**। अन्यथा बहुवित्तव्ययायाससाध्येषु कर्मसु प्रवृत्त्यनुपपत्तेरिति भावः। प्रमारूप एव निश्चय उक्त इति मत्वा शङ्कते—**नन्विति**। भ्रमप्रमासाधारणनिश्चयमात्रेणैव निष्कंपप्रवृत्तिसिद्धेः न

P. 59-1 प्रमात्वं विवक्षितं, इत्याशयेन परिहरति—**इत्याशङ्क्याहेति**।

**क्यषन्तस्य रूपमिति**। लोहितादेराकृतिगणत्वादिति भावः। लोहितादिभ्यो डाजन्तेभ्यश्च क्यष्प्रत्ययो भवतीति सूत्रार्थः। अभूततद्भावे क्यषो

P. 59-1 विधानात् प्रकृते तमर्थं दर्शयति—**अविद्वानेवेति**। शास्त्रसिद्धेन मिथ्यात्वेन क्रियाकर्त्रादिविभागं **अविद्वानेव** सन् यः सत्यत्वेन वेत्ति स **विद्वान् विद्वदाभास इत्यर्थः**।

नन्वभूततद्भावस्थले पूर्वावस्थोपमर्दो नियतः, यं प्रकारं अप्राप्तः तत्प्राप्ताविति तदर्थात्। न च 'मृदं घटीकरोती'त्यादौ तदभावः। तत्राप्यघटावस्थायाः प्रागभावरूपायाः सूक्ष्मतारूपाया वा उपमर्दसत्वात्। प्रकृते च मिथ्यात्वेनाविदुषः तेन रूपेण विद्वत्तानभ्युगमे कथं तस्मिन्नर्थे प्रत्यय इति चेन्न।

अविद्वदवस्थोपमर्दस्य प्रकृतेऽपि सत्वात्। तावतैव विधित्सितप्रत्ययार्थसंपत्त्या विशेषणांशेऽपि तदनपेक्षणात्। अत एव जलरूपेणासमुद्रोऽपि समुद्रीभवति प्रभुरयं गंभीरतयेत्यादिव्यवहारः। न च **लोहितादिसूत्रभाष्ये** 'नायं

हलन्ताद्विधीयते' इति निषेधात्, कथं प्रकृते विद्वस्शब्दात् क्यषिति वाच्यम्। सूत्रकारमतानुरोधेन क्यषाश्रयणात्। अन्यथा '**लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणी**'ति **वार्तिकेन** लोहितशब्दादन्यतः क्यषो निषिद्धतया भाष्यपर्यन्तधावनवैफल्यात्।

न चैतदपेक्षया 'श्येनायते काक' इत्यादिवत्, '**कर्तुः क्यङ् सलोपश्चे**'ति सूत्रविहितक्यङन्तत्वमेव युक्तमिति वाच्यम्। तथात्वे मिथ्याभूतं क्रियाकर्त्रादिविभागं सत्यत्वेन विद्वान्-विद्वदाभास इत्यर्थालाभात्। विद्वानिवाचरतीत्यस्य तन्निष्ठडम्भादिगुणयोगेनाप्युपपत्तेः। अत एव 'श्येनायते काक' इत्यादौ श्येनाभासः काक इति न प्रतीयते। अत एव च सौमनस्यलेशरहितेपि शोकिनि व्यवहारगुणयोगेन सुमनायत इति व्यपदेश इति ध्येयम्।

अतश्शब्दार्थं दर्शयन् अत एवेत्यादिटीकाभिप्रायमाह—**अत एवेति**। P. 59-2
इतिर्हेतौ। 'अविद्वान् कर्मकाण्डे अधिकार्यभिमत इत्यत एव हेतोरविद्वद्विषयत्वं प्राक्चेत्यादिभाष्येण वर्णयांबभूवेत्यर्थः। अनधिकारिकृते वैदिके कर्मणि फलाभावे, लौकिकेपि कर्मणि न प्रवर्तेतेत्याशङ्क्य, वैदिके कर्मणि श्रद्धाया अप्यङ्गत्वेन तदभावे फलाभावेऽपि, लौकिके यथोचितफललाभसंभवान्न प्रवृत्त्यनुपपत्तिरित्युक्तम्—**टीकायां-तेन दृष्टार्थेष्विति**। P. 59-5

**प्रतीयमानेति**। प्रत्यक्षादिभिः प्रमाणैः **प्रतीयमानस्य कर्माधिकारनिमित्तस्य ब्राह्मण्यादेरित्यर्थः**। **इतरथेति**। न चेष्टापत्तिः। नास्तिकविषये प्रत्यवायाधिक्येन प्रायश्चित्ताधिक्यस्मरणादिति भावः। **भक्तिरूपेति**। यक्ष्यमाणदेवताभक्तिरूपेत्यर्थः। **विश्वासात्मिकेति**। वेदबोधितत्वादिदमित्थमेवेत्येवंरूपेत्यर्थः। P. 59-3 P. 59 6 P. 59-8 P. 60-1

**न श्रद्धान इति**। नञ्समासे '**नलोपो नञः**' इति नकारलोपे अश्रद्धान इति स्यात्, अत आह—**नकारोऽयमिति**।

**प्रतिषेधवाचीति**। 'अमानोनाः प्रतिषेधे' इति स्मरणादभावप्रवृत्तिनिमित्तकोऽयं नशब्दो भिन्नवाचीत्यर्थः। ततश्च 'गमिकर्मीकृतनैकनीवृत्ते'त्यादाविव नशब्दस्यायं समासो न नञ इति भावः।

---

१. 'पर्युदासवाचित्वे समासनियमस्य वार्तिककारेणोक्तत्वात् इह च नञः समासाभावात् प्रतिषेधवाच्येवायम्। ततश्च प्रतिषेध्यक्रियायाः यत्तदोश्चाध्याहारेण यः श्रद्धानो

P. 60-1 **अतश्शब्दो** न पूर्वोक्तपरामर्शी, किन्तु वक्ष्यमाणपरामर्शीत्याह—**यत एवेति**। **एतदिति**। अतश्शब्दोक्तमेव विभजत इत्यर्थः। **न कर्मणे**-त्यादिश्रुतेरर्थमाह—**पितृमनुष्येति**। **धनशब्दलक्षिता अपरविद्या** सगुणविद्या। धनशब्दस्य देवलोकाप्तिहेत्वपरविद्यापरत्वे किं प्रमाणमित्याशङ्क्य,
P. 60-4 **श्रुत्यन्तरमेव** प्रमाणमित्याशयेनाह—**तथाहि श्रुत्यन्तरमिति**।

ज्ञानोत्पत्त्युपयोगिनां कर्मणां न प्रयाजादिवदारादुपकारकत्वं संभवतीत्यत आह—**आराद्दूर इति**। तथा च साक्षात्कारापेक्षया व्यवहितामिच्छां चित्तशुद्धिद्वारेणोत्पादयतामेव कर्मणां ज्ञानोत्पत्तावुपकारकत्वादिति **टीकार्थ इति भावः**।

P. 61-1 **प्रधानेन प्रत्ययार्थेनेति**। ननु 'ये प्रतितिष्ठासन्ति, त एता रात्रीरुपेयु'रित्यादौ सन्प्रत्ययवाच्येच्छाविषयीभूतायाः प्रतिष्ठाया एव फलत्वावगमात् इष्यमाणस्य वेदनस्यैव प्रकृतेऽपि फलत्वं युक्तमित्याशङ्क्य, धात्वर्थस्य समानपदोपात्तस्यापि कष्टात्मकत्वेन तदुल्लङ्घनेन भावनाया अन्यत्र पदान्तरोपात्तस्वतस्सुन्दरप्रतिष्ठादिभाव्यकत्वेऽपि, प्रकृते सन्निहितसन्प्रत्ययोपात्तायाः ज्ञानवत्फलशिरस्कत्वेन फलभूताया इच्छाया एव साधनचतुष्टयसंपन्नया बुद्ध्या जिज्ञासेतेत्यादिप्रयोग इव यज्ञादिकरणकभावनाभाव्यत्वमिति टीकाभिप्रायमाह—**आख्यातेति**।

न च विषयसौन्दर्यलभ्यत्वादिच्छायाः, तत्र कर्मवैफल्यम्। ब्रह्मविचारप्रवृत्तिपर्यन्तायाः तस्याः तत्प्रतिबन्धकदुरितनिबर्हणाधीनत्वेन तद्द्वारा कर्मणा-
P. 61-7 मिच्छोपयोगसंभवादित्याशयेन दुरितनिबर्हकत्वं कर्मणामुक्तम्—**टीकायां—एतानि चेत्यादिना**।

---

न भवति स नाधिक्रियत इति वाक्यं पूरणीयमित्याशयः' इति परिमले व्याख्यातम्। ततश्च "न श्रद्दधान" इत्यत्र नकारोऽयं नञ्रूपः प्रतिषेधवाची न पर्युदासवाची अतः समासो न, अत एव नञः नकारलोपो न भवति इति कल्पतर्वाशयः परिमलरीत्या। आभोगरीत्या तु, नश्रद्दधान इत्यत्र नकारोऽयं न नञ्-अपितु नशब्दः, स च प्रतिषेधवाची भेदरूपाभावप्रवृत्तिनिमित्तकस्सन् भिन्नवाची, अतश्च नात्र नञ्समासः अपितु नशब्दसमासः अतो नलोपो न, इति कल्पतर्वाशयः। एवं च एकस्यैव कल्पतरुवाक्यस्य समासाभावपरत्वं समासपरत्वं च वर्णितं ग्रन्थद्वयेपि इति, विच्छित्तिविशेषोऽत्र।

तत्र **शतपथश्रुतौ वेदेत्यस्य** वेदनपूर्वकमाचरणमित्यर्थः। अत एव तस्यात्मयाजित्वमित्याशयेनाह—**यो विदित्वेति**। **स हेति** हशब्देन पूर्ववाक्योपात्तदेवयाज्यपेक्षया आत्मयाजिन आधिक्यं प्रदर्शयत इत्याशयेनाह—**स च देवयाजिन इति**। पञ्चम्यन्तं पदद्वयम्। यज्ञादेः प्रकृतत्वं **'स च देवयाजी'** त्यादिवाक्य इत्याह—**स च देवयाजीत्यत्रेति**[२]। P. 61-3 P. 61-4

श्रुतिस्मृत्योरुदाहृतत्वात् पुनस्तदुदाहरणं व्यर्थमित्याशङ्क्य, कर्मणां दुरितनिबर्हकत्वे श्रुतिस्मृती उदाहृत्य, तद्द्वारा ज्ञानोपयोगेऽपि श्रुत्यन्तरं सोपस्कारमाहेत्याशयेनाह—**श्रुत्यन्तरमाहेति**।

कर्मणां मोक्षोपयोगस्य पूर्वमेव निराकृतत्वात् **क्लृप्तेनेत्यादिटीका**वैयर्थ्यमाशङ्क्य, ज्ञानानन्तरं कर्मानुष्ठानासंभवात् तेषां मोक्षोपयोगः पूर्वं वारितः, इदानीं ज्ञानात् पूर्वभाविनामेव नित्यानामिव काम्यानामपि कर्मणां विविदिषाद्वारा ज्ञाने समुच्चयं निराकर्तुं इयं टीकेत्याह—**नित्यानामिति**। **तत्राहेति**। कर्मणां मोक्षोपयोगो न कर्मणेत्यादिश्रुतिविरुद्धत्वात् शङ्कितुमेव नार्हः। अथ काम्यानामपि ज्ञानहेतुत्वमस्त्विति, तत्राहेत्यर्थः। किं काम्यानां कर्मणां क्लृप्तेनैव द्वारेण ज्ञानोपयोगः? उत कल्प्येन? नाद्यः। अनाकाङ्क्षितत्वादित्याह—**नित्यानां फलमिति**। P. 62-1 P. 62-1

द्वितीयं निराकरोति—**तत्र यथेति**। 'समानमितरत् श्येनेन' 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इत्यादिवाचनिकातिदेशस्थले **प्राकृतोपकारविलक्षणो नोपकारः कल्प्यते**। क्लृप्तेन प्राकृतेनैव वचनस्य चारितार्थ्यात्। एवमिहापीत्यर्थः। न च यज्ञेनेत्यादिश्रुत्यसंकोचाय द्वारान्तरकल्पनं युक्तम्। स्वर्गकामश्रुतेः क्लृप्ताग्निविद्यत्रैवर्णिकविषय इव **यज्ञेनेत्यादिश्रुतेरपि** क्लृप्तपापक्षयद्वारकनित्यकर्मविषये संकोचसंभवादिति भावः।

तर्हि पापक्षयफलकत्वेन क्लृप्तानां पवित्रेष्ट्यादीनां काम्यकर्मणामप्यस्तु विविदिषावाक्येन विनियोग इत्याशङ्कां निराकर्तुं—**नित्यफलेत्युक्तम्**। तथा चावश्यकर्तव्यनित्यानुष्ठानजन्यं पापक्षयमादाय चरितार्थो विविदिषन्तीति विधिर्नपापक्षयाय नियमेन पवित्रेष्ट्याद्यनुष्ठानमपि प्रयोजयति। अत एव द्रव्यार्जनप्रवृत्त- P. 62-3

---

१. देवयाजिनः काम्यकर्तुरिति पदद्वयं समानाधिकरणम्। २. कल्पतरुपाठः एवमेव.

ब्राह्मणलाभेन चरितार्थत्वात् 'ऋत्विजो वृणीते' इति विधिर्न क्षत्रियादेरार्त्विज्यं प्रयोजयतीति भावः ।

ननु नित्यकर्मणां पापक्षयद्वारकल्पनावसरे नित्यकाम्यसाधारण्येनैव यत्किञ्चिद्द्वारकल्पनं युक्तमित्यत आह—**पापक्षयस्य चेति**। '**ततस्तु तं**' इत्यत्र **ततश्शब्देन विशुद्धसत्व** इति पूर्वनिर्दिष्टचित्तशुद्धिपरामर्शादिति भावः । P. 62-3

ननु नित्यकर्मणामेव विविदिषाद्वारा ज्ञाने विनियोगे, विविदिषावाक्यमनर्थकम्। नित्यानां पापक्षयफलकत्वस्य तत्तद्विधिभिरेव सिद्धेः। तद्द्वारा ज्ञानोपयोगस्य च **ततस्तु तमि**त्यादिश्रुतित एव सिद्धेः। ततश्च तदानर्थक्याद्वरं काम्यसाधारण्येन द्वारान्तरकल्पनमित्याशङ्क्य, निराकरोति—**न च वाच्यमिति**। **विशेषत इति**। नित्यविधिबलान्नित्यानां सामान्यतः पापक्षयफलकत्वं सिद्ध्येत्। तच्च यत्किञ्चित्पापक्षयमादायापि पर्यवस्यति, न तु ज्ञानोत्पत्तिप्रतिबन्धकपापक्षयमेवेत्यर्थः । P. 62-4

ननु ज्ञानोद्देशेनानुष्ठीयमानैः नित्यकर्मभिः अर्थात् तत्प्रतिबन्धकपापक्षय एव सिद्ध्येदित्याशङ्क्य, तदुद्देशेनानुष्ठानमेवैतद्वचनलभ्यविनियोगाधीनमित्याशयेनाह—**अस्मिंश्चेति**। **इतरथेति**। ज्ञानमनुद्दिश्य, कर्तव्यमित्येव नित्यान्यनुतिष्ठतः प्रत्यवायपरिहारमात्रमित्यर्थः। **अनियतेति**। पूर्वस्मिन् जन्मनि ज्ञानोद्देशेनानुष्ठितैः कर्मभिः ज्ञानोत्पत्तिप्रतिबन्धकदुरितक्षये सति ज्ञानोत्पत्तिः, इतरथा नेति न नियतेत्यर्थः । P. 64-6

तर्हि स्मृतिबलादेव विनियोगोऽस्तु, किं विविदिषावाक्येनेत्यत आह—**ज्ञानमुत्पद्यत इति**। एवमपि **ततस्तु त**मित्यादिशास्त्रादेव विनियोगसिद्धेः विविदिषावाक्यं व्यर्थमित्यत आह—**श्रुतिस्त्विति**। **तुल्यत्वादिति**। कल्प्यविधिकत्वेन तुल्यत्वादित्यर्थः। **नित्यकाम्येति**। नित्यानामपि फलवत्त्वेन काम्यत्वादिति भावः। **नित्येहितेनेत्युक्तमिति**। ततश्च **शास्त्र**नियतेच्छाविषयफलकत्वं नित्यत्वम्, अनियतकामनाविषयफलकत्वं काम्यत्वमिति विवेक इति भावः। P. 63-1

**स्यादेतदित्यतः प्राक्तनटीकाया** एषोऽर्थः। नित्यकर्मणां परम्परया ज्ञानोपयोगमुपपादयति—**तथा हीति**। पाप्मनो निवर्त्यत्वाय तस्यानर्थहेतुत्वं दर्शयति—**स हीति**। **संसारे शरीरादौ**। **अनभिरतिः**—अनासक्तिः। **आरु-** P. 62-3

**रुरुक्षोरिति । योगं** ज्ञानयोगं ससंन्यासं आरुरुक्षोः वैराग्यहेतुभूतं **कर्म** ज्ञान- P. 63-4
**कारणम्, आरूढस्य तु; शम एव कारणम्** । न कर्मेत्यर्थः । एवं च कर्माव-
बोधस्य तस्मिन् जन्मनि पूर्वभावनियमाभावान्न तदानन्तर्यं अथशब्दार्थ इत्याह—
**एवं चेति** । प्राग्भवीयकर्मानुष्ठानादेव चित्तशुद्धिद्वारा वैराग्यसिद्धौ प्रमाणमाह—
**इममेवेति** । P. 63-6

'ब्रह्मचर्यं समाप्य गृही भवे'दित्यादिक्रमपक्षात् पक्षान्तरपरिग्रहार्थो **यदि वेति** शब्दः । **इतरथेति** । वैराग्ये सतीत्यर्थः । **अत एवेति** । उक्तश्रुति-
विरोधादेवेत्यर्थः । **ब्रह्मचारिण इति** । संपन्नवैराग्यस्येति शेषः । ऋणापा-
करणफलस्य चित्तशुद्धेः सिद्धत्वादपि न ब्रह्मचारिणः ऋणापाकरणं कर्तव्यमित्या-
शयेनाह—**गृहस्थस्यापीति** । P. 63-10

ननु 'जरामर्यं वा एतत्सत्रं यदग्निहोत्र'मित्यादिश्रुत्या जरामरणपर्यन्तं, शरीरस्य भस्मतापर्यन्तं च कर्मणोऽनुष्ठेयत्वावगमात् कथं कर्मत्याग इत्याशङ्क्य, पूर्वोदाहृतविधिश्रुतिबलादनयोः अर्थवादयोः अविद्वद्विषयत्वमित्याह—**जरामर्येति** ।
**न चेत्थमिति** । ब्रह्मजिज्ञासान्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकप्रतियोगीत्यर्थ इति । P. 63-2

**हेतुहेतुमद्भावाभावेऽपीति** । ननु पूर्वतन्त्रव्युत्पादितवेदप्रामाण्यकर्म- P. 64-1
भेदशेषशेषिभावादिविचारस्य प्रकृतेऽप्यपेक्षणात् कथं हेतुहेतुमद्भावाभाव इत्या-
शङ्कां निराकर्तुं—**धर्मब्रह्मावबोधयोरित्युक्तम्** । अनुष्ठानोपयोगिनः कृत्स्नकर्माव-
बोधस्य ब्रह्मविचारं प्रति हेतुत्वं वार्यते । तदेकदेशस्य कोशव्याकरणतर्कपातञ्जला-
दीनामिव सत्यप्युपयोगे न तदानन्तर्यमथशब्दार्थः, ब्रह्मविचारे प्रवृत्तस्यापि यदा
यदपेक्षितं, तदा तदवबोधसंपादनसंभवात् । अन्यथा कोशाद्यवबोधानन्तर्यमप्यथ-
शब्दार्थः स्यादिति भावः ।

**आरादुपकारकत्वादिति** । तत्संभवादित्यर्थः । **नियामकश्रुत्यभावा-** P. 64-3
**दिति** पूर्वपक्षहेतुरसिद्धः, प्रयोगविधेरेव न्यायसहकृतस्य क्रमविशेषनियामकत्वा-
दित्याशयेनाह—**पदार्थेति** । अग्निहोत्रहोमस्य किं प्रयोजकं द्रव्यम्, पाकस्य च
किं प्रयोजनमित्येवं पदार्थयोः प्रयोजकप्रयोजनापेक्ष[1] इत्यर्थः । न्यायमाह—
**न चेति** । P. 64-5

---

१. प्रयोजनपदं प्रयोजकप्रयोजनोभयार्थमिति सूचितमनेन ॥

**अनुष्ठानापेक्षितेति** । ततश्च प्रयोगविधिरनुष्ठानापेक्षितक्रमपरत्वमपि समिदादिवाक्यानां गमयतीति भावः । नन्वनुष्ठानकालीनस्मरणानां मन्त्रैरेव संपाद्यत्वान्न विधिवाक्यानि तदर्थानीत्याशङ्क्य, यत्र मन्त्रा न पठिताः, यत्र वा कर्मणि प्रतिशाखं ऐकैकश्येन पठिताः, तत्र विधिपाठक्रमोऽपि दृष्टार्थत्वायानुष्ठानक्रमनियामकत्वेनेष्यत इत्याशयेनाह—**एवं क्रमपाठो (पाठक्रमो)ऽपीति** । P. 65-4

P. 65-8 **तद्विधानाच्चेति** । सहत्वविधानात् **प्रकृतितः प्राप्तः प्रथमं** सोमप्रणयनानन्तरं **अग्नीषोमीयः, ततः सवनीयः, ततोऽवभृथानन्तरं अनूबन्ध्य** इत्येवंरूपः **क्रमः निवर्तत** इत्यर्थः । **त्रिवृता यूपमिति** । त्रिगुणया रशनयेत्यर्थः । सूत्रव्याख्यानेन सिद्धान्तमाह—**स्थानादिति** । **ततः प्रथममिति** । P. 65-5
आश्विनग्रहग्रहणोत्तरकालं बद्धक्रमेण तेनैव सवनीयस्योपस्थापितत्वात् तदीयमेवोपाकरणमादौ कर्तव्यमित्यर्थः ।

P. 65-22 **प्रधानार्थत्वादङ्गानामिति** । अङ्गानामशास्त्रीयविप्रकर्षरहितानामेव प्रधानोपकारकत्वादित्यर्थः । मुख्यक्रमादङ्गानां क्रमानादरे, अशास्त्रीयं विप्रकर्षं दर्शयितुं प्रधानसन्निकर्षस्य शास्त्रीयत्वमाह—**प्रधानस्य हीति** । ततश्च प्रयोगविध्यवगतमङ्गानां प्रधानसाहित्यं नैकक्षणानुष्ठेयत्वरूपं संभवतीति, तत्सन्निकर्षरूपं पर्यवस्यति । एवं च यस्याङ्गस्य यावद्भिः स्वप्रधानाङ्गैः प्रधानान्तराङ्गैश्च व्यवधानमन्तरा स्वप्रधानसन्निकर्षो न संभवति, ततोऽधिकं व्यवधानमशास्त्रीयमित्याह—
P. 65-24 **स चेति** ।

ततश्च, सरस्वद्यागस्य निर्वापं प्रथममनुष्ठाय, तदनन्तरं सरस्वतीयागस्य निर्वापानुष्ठाने, सरस्वद्यागनिर्वापस्य सरस्वतीयागतन्निर्वापाभ्यां उभाभ्यामपि व्यवधानं स्यात् । मुख्यक्रमेण तदनुष्ठाने तु सरस्वतीयागनिर्वापस्य सरस्वद्यागनिर्वापेण, तस्य च सरस्वतीयागेनेत्येकेनैव व्यवधानमिति, नाशास्त्रीयव्यवधानप्रसक्तिरित्याह—[1]**यदि त्विति** । **प्रधानान्तरस्य** प्रथमप्रधानस्य **सन्निधौ यदि**

---

१. 'यदि तु प्रधानान्तरसन्निधावन्याङ्गानुष्ठानं, तदा तेनैव स्वप्रधानादङ्गानि विप्रकृष्येरन्' इति कल्पतरुवाक्यस्य वास्तवार्थः आभोगकारेणात्र प्रदर्शितः । आपाततः प्रतीयमानोऽन्योऽर्थः परिमले दूषितः । अन्योऽर्थः तस्य दूषणप्रकारश्च तत एवावगन्तव्यः । अन्याङ्गानुष्ठानमित्यत्र अन्यपदार्थः पूर्वोक्तप्रधानान्तरमेव । अत एव तदङ्गेति

**अन्याङ्गानुष्ठानं तदङ्गानुष्ठानं, तदा** ततः पूर्वं अनुष्ठितानि द्वितीयप्रधानाङ्गानि **तेनैव** प्रथमप्रधानाङ्गेन शास्त्राननुमतेन व्यवधायकेन **स्वप्रधानाद्विप्रकृष्येरन्नित्यर्थः** ।

यद्यपि प्रवृत्तिक्रमोऽप्यत्र संभवति । याज्यानुवाक्याप्रवृत्तिक्रमेण पश्चाद्भाविनापि, न्यायतौल्येन निर्वापादिक्रमनियमसंभवात् । तथाप्यसंकीर्णोदाहरणे क्वचित्क्लृप्तो मुख्यक्रमोऽपि प्रकृते भवतीत्युदाहृतम् ।

**प्रोक्षणादिधर्मा इति** । पशुस्नपनादिधर्मा इत्यर्थः । उपाकरणानन्तरभावित्वेन प्रोक्षणस्य प्राथमिकत्वाभावादिति द्रष्टव्यम् । **प्रधानस्याङ्गैर्विप्रकर्षः स्यादिति** । एकैकस्मिन् पशौ उपाकरणादीनां सर्वेषामप्यङ्गानामनुष्ठाने प्रथमपशावनुष्ठितस्य प्रकृतौ प्रधानाव्यवहितपूर्ववर्तितया तथैव चोदकेन प्रापितस्याङ्गस्य शास्त्राननुमतबहुव्यवधानाद्विप्रकर्षः स्यात् । एकैकस्य पदार्थस्य सर्वेषु पशु- P. 66-4 P. 66-5

---

व्याख्यातम् । तेनैवेत्यनेन अन्याङ्गानुष्ठानमिति पदेन पूर्वप्रकृतस्य अन्याङ्गस्य तदङ्गेति व्याख्यातस्य परामर्शः । एवकारः अपिशब्दसमानार्थकः । तेनापि, प्रधानान्तराङ्गेनापि । अपिना - प्रधानान्तरेणापीत्यर्थलाभः । इति बोध्यम् ॥

१. 'पूर्वपदार्थप्रवृत्त्या उत्तरेषां नियमः, नोत्तरप्रवृत्त्या पूर्वेषामिति चेत्, न प्रत्यासत्त्यनुग्रहाविशेषात् तन्निबन्धनत्वाच्च क्रमनियमस्य' इति शास्त्रदीपिकायामुक्ताक्षेपसमाधाने विवक्षित्वा 'पश्चाद्भाविनापि' इति, 'न्यायतौल्येन' इति च उक्तमत्र इति बोध्यम् । शास्त्रदीपिकावाक्याशयस्तु सोमनाथीयटीकानुरोधेन अवगन्तव्यः ॥

२. कल्पतरौ प्रोक्षणाद्यङ्गानामिति शाबरभाष्यानुरोधेनोक्तत्वेपि उपाकरणादीनामिति शास्त्रदीपिकाद्यनुरोधेनोक्तम् ॥

३. एकैकस्मिन् पशौ सर्वाङ्गानुष्ठाने आपादितः प्रथमपशौ प्रधानस्याङ्गैर्विप्रकर्षः एकैकस्य पदार्थस्य सर्वेषु पशुष्वनुष्ठानेपि वर्तत एव, यतः प्राजापत्यपशवः एकदेवताकाः, वचनबलात् तन्त्रेण तेषां प्रधानमनुष्ठेयं, ततः पूर्वं तेषां सर्वाण्यङ्गान्यनुष्ठेयानि । तत्र प्रथमपशौ अनुष्ठितानामङ्गानां सर्वेषु पशुषु सर्वाङ्गानुष्ठानानन्तरं कर्तव्यप्रधानेन विप्रकर्षः अवर्जनीय एव । तथापि साङ्गानां पशूनामेककालकर्तव्यत्वं वचनबलादवगतम् । सर्वपशुषूपाकरणादेरेकदा करणासंभवेन च क्रमेण कर्तव्यत्वमापतितम् । एवञ्च एकैकस्मिन् पशौ उपकरणात्परत्वं नियोजनस्य षोडशक्षणव्यवहितम् । तच्च व्यवधानं सर्वपश्वङ्गसाहित्यविधायकवचनबलसिद्धं सह्यमेव । एकैकस्मिन् पशौ सर्वाङ्गानुष्ठानप्रयुक्तं प्रथमपशौ प्रधानस्याङ्गव्यवधानं तु सर्वपश्वङ्गसाहित्यविधायकवचनविरुद्धमसह्यम् । इति तात्पर्यम् । तस्य - एकैकपदार्थस्य - स्वानन्तरपदार्थेन साकं षोडशभिरेव व्यवधानमित्यर्थः । न तु प्रधानेन साकं, असङ्गतेरिति ध्येयम् ॥

ष्वनुष्ठाने तु तस्य षोडशभिरेव व्यवधानमिति न विप्रकर्षः स्यादित्यर्थः। श्रुत्यादीत्यादिशब्दादर्थपठनस्थानमुख्यक्रमा गृह्यन्ते।

P. 66-13 **अतः प्रयोगवचनेति**। अङ्गानां परस्परसाहित्यस्यापि प्रयोगवचनावगतस्य न्यायत ऐकरूप्यावगमात् [1]तद्भेदे प्रयोगवचनस्य कोपः स्यादिति भावः।

P. 66-15 **त्रय इति**। 'यदाग्नेयोऽष्टाकपाल' इत्यादिवाक्यविहितौ द्वावाग्नेयौ। ततश्चाग्नेयोपांशुयाजाग्नीषोमीयास्त्रयः **पौर्णमास्यया संबद्धाः**। आग्नेयपयोदधियागास्त्रयोऽमावास्यया संबद्धा इत्यर्थः।

P. 66-17 **आख्याते कर्त्रैक्यस्येति**। तथा चाधिकार्यवस्थापन्नपुरुषबोधके स्वर्गकामपदे उद्देश्यगतत्वेनैकत्वाविवक्षणेऽपि, तस्यैव कर्तृत्वावस्थापन्नस्योपादेयतया आख्यातेन तद्गतैकत्वविवक्षणादर्थादधिकारिणोऽप्येकत्वं सिद्धमिति भावः। **एकश्चासाविति**। सर्वैरप्यङ्गैरेकस्यैव प्रधानगतस्य फलजननसामर्थ्योद्बोधरूपस्य स्वस्वासाधारणदृष्टादृष्टावान्तरोपकारद्वारा जननाभ्युपगमादिति भावः।[2]

P. 66-19 **समुच्चित्येति**। साधनत्वेन तस्मिन् समुच्चित्योपनिबद्धा इत्यर्थः। न तु समुच्चित्य साधनत्वमिति। तदानीं विकृतावेकाङ्गपुनःश्रवणे तस्या विकृतेरुपकाराकाङ्क्षायाः क्लृप्तोपकारप्राकृताङ्गेनैव शान्त्या न तत्र चोदकप्रवृत्तिरिति सिद्धान्तभङ्गापत्तेः। समिदादिवाक्यैः प्रत्येकमेव समिदादीनां उपकारे विनियोगाच्चेति ध्येयम्।

धर्मब्रह्मविचारयोः शेषशेषिभावाभावात् एकप्रयोगवचनपरिग्रहाभावेऽपि पाठक्रमात् क्रमः कुतो न भवेदित्याशङ्कां निराकर्तुं—**यत्र त्वित्यादिटीका**। तत्रार्यमदेवताकमार्यमणं कर्म। तां **टीकां** अधिकरणप्रदर्शनेन व्याकरोति—

P. 67-1 **एकादश इति**।

---

१. प्रवृत्तिक्रमानादरे 'प्रथमपदार्थानुष्ठाने यः प्रथमः तस्य पशोः सर्वान्ते द्वितीयपदार्थानुष्ठाने द्वात्रिंशता व्यवधानं, द्वितीयपशोः सर्वान्ते द्वितीयपदार्थानुष्ठाने एकत्रिंशता व्यवधानं, तृतीयपशोः सर्वान्ते द्वितीयपदार्थानुष्ठाने त्रिंशतेत्येवं अतिव्यवधानं स्यात्' इति शास्त्रदीपिकाव्याख्योक्तदिशा समापतिते अङ्गानां परस्परसाहित्यस्य वैषम्ये, इति 'तद्भेदे' इत्यस्यार्थः। न्यायतः, प्रवृत्तिक्रमव्यवस्थापकयुक्तितः, ऐकरूप्यावगमात्, प्रतिपदार्थं षोडशभिरेव व्यवधानेन ऐकरूप्यस्य निर्णयादित्यर्थः॥

२. अयमर्थः पूर्वमीमांसायां (११-१-२) सिद्धान्तितः।

यद्यप्येतदधिकरणं पञ्चमाध्यायतृतीयपादस्थं, तथाप्येकप्रयोगान्तर्गताङ्ग-प्रधानक्रमविचारपरे पञ्चमे नायं विचारो युक्तः। अत एव 'प्रयोज्यगोचरः क्रमस्त्वतः परं निरूप्यते' इति पञ्चमाध्यायारंभे उक्तम्[1]। ततश्च सौर्यादिकं किं पूर्वपूर्वमनुष्ठायैवानुष्ठेयं? उत पुरुषेच्छानुरोधेनेत्येवं प्रयोगविशेषविचारात्मक एवायं विचारः। एवं च सत्येकादशे योग्यमपि संगतिलोभात् पञ्चमे स्थित-मिति ग्रन्थार्थो बोध्यः[2]।

उदाहृतं पूर्वपक्षसूत्रं व्याख्याय, '**न वा असंबन्धा**'दिति सिद्धान्तसूत्रं व्याचष्टे—**अङ्गेष्विति। किन्तु पुरुषस्येति।** कदाचित् बहुष्वपि कामनासंभ-भवादस्ति क्रमाकाङ्क्षेत्यर्थः। अनुक्रान्तमधिकरणं—**इतिशब्देन** समाप्य, **टीकागतमवर्जनीयतये**त्यादिवाक्यं व्याचष्टे—**युगपदिति।** P. 67-6 P. 67-7

**क्रत्वर्थत्वेति।** किं क्रत्वर्थत्वमपि? उत पुरुषार्थत्वमेवेति सन्देह इत्यर्थः। वाक्यलिङ्गाभ्यामुभयार्थत्वमिति पूर्वपक्षमाह—**पशुकामस्येति। वाक्येनेति।** न च '**गोदोहनेने**'ति तृतीयाश्रुत्या, '**पशुकामस्ये**'ति षष्ठी-श्रुत्या वा पुरुषार्थत्वसंभवात् कथं वाक्येन पुरुषार्थत्वमिति वाच्यम्। '**गोदोहनेने**'ति तृतीयाया अप्प्रणयनक्रियाकरणताबोधित्वात्। **पशुकामस्येति** षष्ठ्याश्च संबन्धसामान्यबोधकतया शेषशेषिभावबोधनासामर्थ्यात्। एवं च '**पशुकामस्ये**'त्यनन्तरं **श्रुत्येति** केषुचित्कोशेषु **पाठः** प्रामादिकः। अत एव **वाक्यात् पुरुषार्थत्वमित्येवोपसंहृतम्।** अथवा वाक्यतः प्रबलेन लिङ्गेन क्रत्व-र्थत्वमेव स्यात्, न तु पुरुषार्थत्वमपीत्याशङ्क्य, वाक्योपोद्बलनाय सामान्य-संबन्धबोधकषष्ठीश्रुतिसमभिव्याहारो वर्णित इति योज्यम्[3]। P. 67-9

---

१. शास्त्रदीपिकायाम्। प्रयुक्तिलक्षणे स्थितः प्रयोज्यवर्गनिर्णयः। इति अस्य पूर्वार्धम्।

२. परिमले तु 'एकादशे इति प्रामादिकं, अथ वा पञ्चमाध्यायतृतीयपादगतमेका-दशमिदमधिकरणमित्यभिप्रायकम्। यद्वा एकादशे अतीते इति अतीतपदरूपशेषा-ध्याहारेण द्वादशाधिकरणे स्थितमित्यर्थकं' इति बहुधा व्याख्यातम्।

३. शास्त्रदीपिकायां 'तत्र षष्ठीश्रुत्या पुरुषार्थं, क्रतूपकारकत्वाच्च क्रत्वर्थमित्यु-भयार्थत्वम्' इति पूर्वपक्षो लिखितः। 'षष्ठ्याः संबन्धमात्रार्थत्वेऽपि प्रकृते कर्मिसमभि-व्याहारात् शेषित्वार्थकत्वमिति भावः' इति सोमनाथीयटीकायाम्।

P.67.11 **किन्तु तादर्थ्यमिति।** तदुद्देश्यकक्कृतिसाध्यत्वमेव तच्छेषत्वम्।[1] न तु तदुपकारकत्वमात्रम्, दध्यानयनस्य वाजिनशेषत्वापत्तेरित्यर्थः। तर्हि पुरुषार्थेन गोदोहनेन चमसबाधे अङ्गविकलः क्रतुस्स्यात् इत्यत आह—**अङ्गापेक्षा चेति।**[2] अन्यार्थेन क्रतूपकारसिद्धावपि चमसनियमादृष्टवैगुण्यं तदवस्थमेवेत्याशङ्क्य, प्रयोगविध्यनुमतत्वान्न विरोध इत्याशयेनाह—**अन्यार्थस्यापीति। अर्थलक्षणेति** सौत्रपदस्य व्याख्या-**फलप्रयुक्तेति। अर्थलक्षणे**-

P. 68-2 त्यत्र सावधारणत्वमभिप्रेत्याह—**न विधित इति।**

P. 68 5 **यथा वेति।** यद्यपि **नो खल्वित्यादिटीकातः** प्राचीनोऽयं प्रतीकः, तथापि सौकर्याय गोदोहनविषयाधिकरणानुबन्धिनीं टीकां व्याख्याय, तदनन्तरं **श्रुतिनिराकरणेन चेति टीकां**[3] व्याख्यातुमधिकरणानुक्रमणाय पुनस्तट्टीकोपादानमिति वेदितव्यम्। **क्त्वाश्रुतेरङ्गस्येति।** विधायकमित्यर्थः।

P. 68-7 **तच्चेति।** विधिविभक्तिप्रत्यासन्नेन यजिना सोमयागस्यैव विधेयत्वावगमात् तस्यैव दर्शपूर्णमासाङ्गत्वमित्यर्थः। **तत्कार्यस्येति।** सोमयागकार्यस्य फलस्येत्यर्थः। ततश्च फलवतस्सोमयागस्य प्रत्यभिज्ञाने, तस्य प्रयोजनाकाङ्क्षाराहित्यादङ्गत्वेन विधिर्न भवेत्। कर्ममात्रप्रत्यभिज्ञाने तु नाङ्गत्वेन विधेर्विरोध इति भावः। **तद्रूपेणेति।** द्रव्यदेवताभ्यां कर्म रूप्यते-निरूप्यत इति द्रव्यदेवते कर्मणो रूपम्। **तेन भाव्यमित्यर्थः।**

P. 68-12 **अव्यक्तत्वेनेति।** यागप्रतिसंबन्धितया देवतानुपादानरूपमव्यक्तत्वं

P. 68-13 सोमयागसादृश्यं, तेनेत्यर्थः। **न विधिसंभव इति।** विहितस्य विधानायोगादिति

---

१. 'प्रधानस्यापि अङ्गानुष्ठापनेन तदुपकारकस्य तच्छेषत्वप्रसङ्गात्' इति परिमले।

२. 'अङ्गं ह्युपकारायापेक्ष्यते, अङ्गसाध्योपकारस्यानङ्गेनापि सिद्धौ किमङ्गवैकल्येन हीयते' इति परिमलम्। तथाचाङ्गवैकल्यं न दोष इति भावः।

३. नो खल्विति टीकातः पश्चात् श्रुतिनिराकरणेनेति टीकाग्रन्थः। तत्र टीकायां इष्टिसोमक्रमवदिति उक्तं, तच्च तद्विषयाधिकरणज्ञानसापेक्षम्। अतस्तदधिकरणानुक्रमणाय प्राचीनस्यापि प्रतीकस्य इदानीं ग्रहणं, तस्य च ग्रन्थस्य गोदोहनविषयटीकाग्रन्थमध्यवर्तित्वात् सौकर्याय पूर्वोत्तरगोदोहनविषयटीकाग्रन्थव्याख्यानानन्तरं व्याख्या। इति भावः। यद्यपि श्रुतिनिराकरणेनेति टीका कल्पतरौ न व्याख्याता स्पष्टार्थत्वात्, तथापि तद्व्याख्या एतदधिकरणानुक्रमणसापेक्षेति भावः।

भावः। बृहस्पतिसवपदं तु धर्मलक्षणार्थतया सप्रयोजनत्वान्न प्रत्यभिज्ञैकप्रयोजनकमिति न प्रकरणान्तरन्यायप्राप्तकर्मान्तरविधिस्वारस्यहानमिति वैषम्यमाह—बृहस्पतिसवस्त्विति। P. 68-7

उत भेदेनेति। तथा च षडपि यागाः साङ्गाः पृथक्प्रयोज्या इति षट् प्रयोगाः। तन्त्रतायां द्वावेव प्रयोगाविति फलभेदः। प्रतिप्रधानमिति। P. 69-1 विहितानां पुनर्विधानायोगेन फलवाक्ये कर्मोद्देशेन फलस्यैव विधानादिति भावः। फले विधीयन्त इति। स्वरूपेण विहितानामपि फलसंबन्धितया पुनर्विधानं, न तु फलस्य, अनुपादेयत्वात्। ततश्च विवक्षितं साहित्यमुपादेयगतत्वादिति भावः। P. 69-4

संग्रहे इति। फलजिज्ञास्यभेदाच्चेति भाष्ये धर्मब्रह्मजिज्ञासयोरित्यस्यानुषङ्गादिति भावः। ननु जिज्ञासाया ज्ञानतन्त्रत्वं ज्ञानविषयकत्वं ज्ञानजन्यत्वं वा, उभयथापि न तत्फलं जिज्ञासाफलं, अन्यफलस्यान्यफलत्वायोगात्। न च गौणोऽयं व्यवहारः। धर्मब्रह्मजिज्ञासयोः पौर्वापर्यनियमपरिहाराय पारमार्थिकतयैव फलभेदस्य वक्तव्यत्वादित्याशङ्क्य, तत्तन्त्रत्वं तत्पराधीनत्वं तदङ्गत्वरूपं, इच्छाया इष्यमाणार्थतया तदङ्गत्वात्। तथाच प्रधानफलमेवाङ्गस्यापि फलमिति भाष्ये ज्ञानफलमिच्छाफलमित्युक्तमिति टीकाभिप्रायमाह—इच्छाया इति। P. 69-7 P. 69-8

ननु भाष्ये तच्चानुष्ठानापेक्षमित्यादिना अभ्युदयनिःश्रेयसफलयोरनुष्ठानापेक्षतदनपेक्षकर्मज्ञानाधीनत्वमुक्तम्। तत्र कर्मणोऽनुष्ठानापेक्षायां ज्ञानस्य तदनपेक्षायां च को हेतुः? फलस्य च साध्यत्वनियमेन साधनानुष्ठानेन विना

---

१. 'आमावास्याः पौर्णमास्याश्च त्रयस्त्रयो यागाः स्वस्वकालयोरेकप्रयोगाः कर्तव्याः' इति परिमलोक्त्या द्वौ प्रयोगाविति बोध्यम्।

२. तथा च आग्नेयादीनां कर्मणामुद्देश्यत्वेन, उद्देश्यगतविशेषणस्य चाविवक्षितत्वेन, दर्शपूर्णमासाभ्यामिति एकशब्दोपात्तत्वेऽपि साहित्यमविवक्षितं, उद्देश्यत्वाच्च कर्मणः प्राधान्यमिति भावः।

३. अत्र कल्पतरौ 'अनुलेपनादेः संस्कारत्वात् दृष्टार्थत्वाच्च प्रतिसंस्कार्यमावृत्तिः' इत्युक्तम्, तस्य भावः इत्थम्—संस्कारस्य गुणकर्मत्वात् पुरुषस्य च प्रधानत्वात् प्रतिप्रधानं गुणावृत्तिरिति न्यायादावृत्तिः। तथा अनुलेपनस्य दृष्टार्थत्वात् गणायानुलेपनस्यानावृत्तौ अदृष्टार्थत्वापातादावृत्तिरिति।

कथं तदुत्पत्तिरित्याशङ्क्य, कर्मणः क्रियात्वेन विधेयत्वात् अनुष्ठानापेक्षा, ज्ञानस्य
P. 69-9 तु नैवं, निःश्रेयसस्य च फलत्वं व्यङ्ग्यत्वमात्रेणेत्याह—**विधेयेति** ।

**जिज्ञास्यभेदस्य टीकोक्तमात्यन्तिकत्वं स्फुटत्वमुपपादयितुं फलभे-**
P. 69-11 **दस्यास्फुटत्वमाह—क्वचिदिति । साध्यत्वेन प्रतीतमिति ।** आप्तेः संयोगरूप-
त्वादिति भावः । कृतकत्वे अनित्यत्वं स्यादिति **न्यायः** । '**ब्रह्मैव सन् ब्रह्मा-
प्येती'त्यादि वचनान्तरम्** ।

**ननु भवतेरिति** । **अकर्मकत्वेन** न कर्मणि यत्प्रत्ययः । भावे च
**यत्प्रत्यये नपुंसकलिङ्गता स्यात्**, भव्यमनेनेत्यादौ दृष्टत्वात् । कर्तरि च न
यत्प्रत्ययविधानमस्ति । अतः कथमखण्डेन निरर्थकेन (वा) भव्यशब्देन जिज्ञा-
P. 69-13 **स्यविशेषलाभ इत्यर्थः** । '**भव्यगेये'त्यादिसूत्रमदृष्ट्वा शङ्कते—नन्विति । तयो-
रिति । तयोर्भावकर्मणोरर्थयोः कृत्याः** कृत्यसंज्ञकास्तव्यदादयः, **क्तप्रत्ययः,
खल्प्रत्ययसमानार्थकाश्च** प्रत्यया भवन्तीति सूत्रार्थः । **अचो यदिति** । अजन्ता-
द्धातोः यत्प्रत्ययो भवतीति **विहितकृत्यसंज्ञकयत्प्रत्ययान्तस्येत्यर्थः** ।

ननु कर्त्रर्थक एवायं यत्प्रत्ययः, न भावकर्मार्थिक इत्यत्र किं नियामकमिति
P. 70-2 पृच्छन्तं मन्दं प्रति तद्विशदयति—**अस्य च भवतेरिति** । ' सुखमनुभवती 'त्यादौ
सोपसर्गत्वे, 'वर्षा भवते मण्डूक' इत्यादौ वर्षाः प्राप्नोतीति प्राप्त्यर्थकत्वे च
P. 70-3 सकर्मकत्वादिति भावः । कर्त्रर्थक एवेत्यत्र[1] हेत्वन्तरमाह—**उत्पाद्येति** । भाष्ये

---

१. कर्त्रर्थक एवेत्यत्र हेत्वन्तरसमुच्चयार्थकः 'उत्पाद्यधर्मापेक्षणाच्चे'ति चशब्दः। कल्पतरौ 'अस्य च भवते'रित्यारभ्य 'पुंलिङ्गनिर्देशा' दित्यन्तग्रन्थेन भावकर्मार्थकत्व-निरासेन कर्त्रर्थकत्वं साधितं, भावकर्मार्थकत्वनिरास एव च उत्पाद्यधर्मापेक्षणादित्यपि हेतुः । एवञ्च परिमलोक्तरीत्या भावार्थकत्वमात्रनिरासकं पुंलिङ्गनिर्देशादिति हेत्वपेक्षया हेत्वन्तरं, इति वा, 'नेह सः' इति कल्पतरुवाक्यमावर्त्य, नेह भावार्थ इति तदर्थे, पुंलिङ्ग-निर्देशादिति हेतुयोजना, नेह प्राप्त्यर्थ इति तदर्थे, उत्पाद्यधर्मापेक्षणादिति हेतुयोजना, अर्थभेदेऽपि नेह स इति वाक्यस्यार्थे हेतुद्वयान्वयात् चशब्दस्य कथंचिदुपपत्तिः, इति वा, अर्थवर्णनक्लेशः परिहृतो भवतीति, उत्पाद्यधर्मापेक्षणादित्यत्र उत्पाद्येति भागेन प्राप्त्यर्थकत्वनिरसनद्वारा कर्मार्थकत्वस्य, अपेक्षणादिति विशेष्यतया अपेक्षणबोधकभागेन भावार्थकत्वस्य च, निरासात् भावकर्मोभयार्थनिरास एव पदस्वारस्यमिति च, आभोगा-शयो भाति ।

निर्दिष्टो धर्म उत्पाद्य एव असिद्धत्वात्। ततश्च भूधातोर्न प्राप्त्यर्थकत्वम्। एवं च न कर्मणि यत्प्रत्ययः। भव्यशब्दार्थेन विशेष्यतया धर्मापेक्षणाच्च न भावे यत्प्रत्यय इति भावः।

भाष्योक्तमसत्वमाक्षिपति—**ननु भवितुरिति**। **ननु कर्तुः कारकतया** P. 70 4 क्रियातः पूर्वं सत्वावश्यंभावात् कथं भवितुः भावयितृव्यापारनिर्वर्त्यत्वमित्याशङ्क्य, क्रियाद्वैविध्यकथनपूर्वकं, कर्तुरसिद्धस्यापि बुद्धिस्थत्वेन सिद्धतामाश्रित्य, कारकत्वं घटं करोतीत्यादौ कर्मण इवेत्यभिप्रायमाह—**भवतिर्हीति। करोत्यर्थस्येति।** घटं करोतीत्यादौ घटं भवन्तं भावयतीत्यर्थावगमात् भावयिता देवदत्तादिर्भवितुर्घटस्य प्रयोजकः, भव्यस्तु घटः प्रयोज्य इत्यर्थः।

चोदनाशब्दस्य विधायकवैदिकशब्दवाचित्वात्, ब्रह्मकाण्डे तदभावात् कथं काण्डद्वयसाधारण्येन **भाष्ये चोदनाशब्द** इत्यत उक्तम् **टीकायां-चोदनेति वैदिकं शब्दमाहेति। कथं वेदे इति।** अपौरुषेयत्वादिति भावः। P. 70-1 आज्ञादिस्वरूपकथनपूर्वकं तदसंभवं वेदे प्रकटयन्नुपदेशशब्द इष्टोपायताबोधकशब्दपर इत्याह—**उत्कृष्टेति। 'तस्य ज्ञानमुपदेश'** इति सूत्रावयवं व्याचष्टे—**तस्य धर्मस्येति।**

**'तद्विषये च यागादा'विति टीकया 'स्वविषये' इति भाष्य**मावृत्त्या योज्यत इत्यभिप्रेत्याह—**धर्मस्येति। 'या हि चोदना धर्मस्ये'ति भाष्ये धर्मशब्दनिर्दिष्टा भावना, शब्दतश्चोदनापेक्षया उपसर्जनभूतापि प्रतिपाद्यतया चोदनापेक्षया प्रधानं स्वशब्दार्थः** इत्यर्थः। यागादेर्भावनाविषयत्वमुपपादयति—**टीकायां—स हीति। विषयपदव्युत्पत्तेरिति।** P. 70-4 तथा च यागादिरपि भावनां विषिणोति-बध्नाति-स्वाधीननिरूपणां करोतीति विषय इति भावः। **अवबोधयतीति। सा चोदनेत्यन्वयः।**

**भावनाधात्वर्थयोरिति**—सप्तम्यन्तम्। **नियुञ्जाना चोदनेति।** P. 70-16 नियोगं पुरुषप्रवृत्तिं कर्तुकामेत्यर्थः। शानच्प्रत्ययेन बोधनियोगयोः हेतुहेतुमद्भावावगमादिति ध्येयम्। अत एव वक्ष्यति—**प्रवृत्तिहेतुं बोधमिति।** [1]अध्या-

---

१. कल्पतरौ 'अवबोधस्य चोदनाजन्यत्वात्' इति भाष्यवाक्यस्यार्थ उक्तः—ब्रह्मचोदनयेत्यादिग्रन्थेन। तत्र अर्थमात्रावबोधस्येति पदं अर्थावबोधमात्रस्येत्यर्थे पर्यवसन्नम्।

मात्रपदं प्रवृत्तिं व्यावर्तयति। तद्विवरणायैव प्रवृत्त्यहेतुत्वं अवबोधे उक्तम्। प्रवृत्त्यहेतुत्वं अवबोधस्य सिद्धवस्तुविषयस्येति विशेषणेन साध्यते। 'अवबोधस्य प्रवृत्तिरहितस्य चोदनाजन्यत्वात्' इति टीकया प्रवृत्तिरहितस्येति पदस्याध्याहारो भाष्ये सूचितः। अवबोधस्य प्रवृत्तिराहित्यञ्च प्रवृत्त्यहेतुत्वमिति सूचनपूर्वकं टीकासूचिताध्याहारसाहित्येन भाष्यवाक्यार्थः कल्पतरौ कथित इति भावः॥

भाष्ये 'अवबोधस्य चोदनाजन्यत्वात्' इति वाक्यात्पूर्वं विद्यमानस्य केवलमिति पदस्य केवलमवबोधस्येति योजने तेनैव प्रवृत्तिराहित्यस्यावबोधे लाभात् अध्याहार एव भाष्येऽनावश्यक इति भाति। भाष्ये हि 'ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलम्। अवबोधस्य चोदनाजन्यत्वात्। न पुरुषोऽवबोधे नियुज्यते।' इति वाक्यानुपूर्वी दृश्यते। तच्च भाष्यं बहुभिर्बहुधा व्याख्यातम्—'पुरुषं स्वमर्थं, केवलं अप्रपञ्चं ब्रह्म तादृशब्रह्मरूपं, बोधयति इति, रामानन्दीये आनन्दगिरीये च पुरुषपदं केवलपदञ्च प्रतिपादनविषयपरतया योजितम्।

केश्चित् 'नियुञ्जानैव पुरुषमवबोधयती' त्यत्रैव अत्रापि पुरुषपदं बोधनीयश्रोतृपरतया योजितम्—पुरुषं प्रति स्वविषयमवबोधयतीत्युक्त्या। अवबोधयत्येव केवलं न पुनस्तत्र पुरुषं प्रवर्तयतीत्युक्त्या च केवलपदं प्रवर्तकत्वव्यवच्छेदपरतया योजितम्। एवकारेणैव प्रवर्तकत्वव्यवच्छेदलाभेपि तस्यैव स्फुटीकरणाय केवलपदमपि। यद्वा, अयोगान्ययोगव्यवच्छेदयोर्लाभाय पदद्वयमिति नेयम्।

अवबोधस्य चोदनाजन्यत्वदित्येतत्, पूर्वत्र हेतुतया भामत्यां योजितम्। अन्यासु टीकासु उत्तरत्र हेतुतया योजितम्। पूर्वत्र हेतुतया योजने च अध्याहारोऽपेक्षितः। अवबोधयत्येव केवलं, न प्रवर्तयतीत्यस्मिन् पूर्ववाक्यार्थे अध्याहारं विना अवबोधस्य चोदनाजन्यत्वादित्येतावन्मात्रस्य हेतुत्वायोगात्। प्रवृत्त्यहेतोः अवबोधस्य चोदनाजन्यत्वादित्यस्य तु साध्याहारवाक्यार्थस्य हेतुत्वं युज्यते। 'न पुरुषोऽवबोधे नियुज्यते' इत्यत्र तु भामतीदृष्ट्या हेतुर्भाष्ये नोक्तः। 'अवबोधनिर्देश एव भाष्ये विध्यविषयत्वे हेतुगर्भः' इति कल्पतरूक्तरीत्या अवबोधपदेन हेतुस्सूचितः। स च 'अयमभिसंधिः' इत्यादिना टीकायां विवृतः।

अवबोधस्य चोदनाजन्यत्वादित्येतत् उत्तरत्र हेतुतया योजयतां मते अध्याहारोऽनपेक्षितः। अवबोधस्य चोदनया प्रमाणेनैव जातत्वात्, जाते च विध्ययोगात्, ज्ञानस्य यथाप्रमाणं जन्यस्य पुरुषेच्छानुवर्तनात् न पुरुषोऽवबोधे नियुज्यते इति अध्याहारं विनैव उत्तरत्र हेतुत्वेनान्वयात्। चोदनाशब्दस्य प्रेरणार्थकत्वं स्वीकृत्य अजन्यत्वादिति अकारप्रश्लेषं च कृत्वा अवबोधस्य प्रेरणया अजन्यत्वात् न पुरुषोऽवबोधे नियुज्यते, इत्यपि केचिदर्थं स्वीकृत्य उत्तरत्र हेतुत्वेन योजयन्ति।

उत्तरत्र हेतुत्वेन योजने ब्रह्मचोदना अवबोधयत्येव केवलं न प्रवर्तयतीति पूर्ववाक्यार्थे हेतुर्नोक्त इति चेत्, आर्थिकस्सः। कथमिति चेत्। धर्मस्य चोदना स्वविषये नियुञ्जानैवावबोधयति स्वविषयं, ब्रह्मचोदना स्वविषयं अवबोधयत्येव, न स्वविषये नियुञ्जाना भवति इत्युक्ते, धर्मस्य साध्यत्वेन विधियोग्यत्वं ब्रह्मणः नित्यसिद्धत्वेन, विध्य-

हारेण भाष्यं योजयति—**ब्रह्मचोदनयेति**। तथा च **टीकायां—अवबोधस्य प्रवृत्तिराहित्यं** प्रवृत्त्यहेतुत्वमिति भावः।

वेदान्तानां ब्रह्मविधिपरत्वाभावेऽपि तज्ज्ञानविधिपरत्वमस्त्विति शङ्कत इत्याह **नन्वु सा नामेति**। 'आत्मा ज्ञातव्य' इत्यादीनां ब्रह्मज्ञानविधिपरत्वेऽपि, तत्त्वमसीत्यादीनां सिद्धब्रह्मबोधमात्रविश्रान्तत्वमावश्यकमित्याशङ्कां निराकर्तुं **तदेकवाक्यतयेति** टीकावाक्यं विधेयज्ञानस्तुत्यालंबनतया सिद्धब्रह्मबोधनान्न तत्र विश्रान्तिरित्यभिप्रायमिति व्याचष्टे—**विध्येकवाक्यत्वेनेति**। विध्येकवाक्यत्वेन हेतुना स्तुत्यर्थं सिद्धवस्तुबोधनादित्यर्थः। P. 70-19 P. 71-1

**अभिसन्धिं भाष्यरूढं करोति—भाष्य इति**। किं स्वरूपसाक्षात्कारे पुरुषो नियोक्तव्यः? उत वृत्तिसाक्षात्कारे? नाद्य इत्याह—**टीकायां—तस्येति**। न द्वितीय इत्याह—**अकार्यत्वादिति**। साक्षात्कारस्य प्रमाणाधी- P. 71-3

---

योग्यत्वं च हेतुरर्थाद्गम्यतएव। एवं व्याख्यातृमतिकौशलेन बहुधा प्रसन्नगम्भीरस्य भाष्यस्यार्थः प्रकाशते।

भामतीरीत्या पूर्वत्र हेतुत्वेनान्वयेऽपि अध्याहारं विनैव केवलमित्यस्य केवलमवबोधस्येति उपरि योजनेन वाक्यार्थो वर्णयितुं शक्यते। एवकारकेवलपदयोः एकत्र वाक्ये अनपेक्षितत्वात्। अत एव रामानन्दादयः केवलमिति पुरुषविशेषणतया योजयन्ति। भामत्यामपि 'ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलं न तु प्रवर्तयन्त्यवबोधयति। कुतः? अवबोधस्य प्रवृत्तिरहितस्य चोदनाजन्यत्वात्' इति विद्यमानपाठे केवलमिति पदं तत्स्थानात् निष्कास्य 'केवलमवबोधस्य प्रवृत्तिरहितस्य' इति स्थापने प्रवृत्तिरहितस्येत्येतत् नाध्याहाराभिप्रायेण पठितं, किन्तु केवलमिति पदस्य भाष्यस्थस्य विवरणाभिप्रायेण पठितमिति ज्ञानसंभवात् भामतीकाराणामध्याहाराभिप्रायो न वर्णनीयः। कल्पतरावपि अध्याहार इति कण्ठतः नोक्तम्।

'अध्याहारेण भाष्यं योजयती' ति लिखन् आभोगकारः परं अध्याहारमभिप्रैति। तत्तु अध्याहाराशयं विनैव भामत्यादिग्रन्थयोजनसंभवे नोचितम्। किञ्च अध्याहारं विना पूर्ववाक्यार्थहेतूभवनाक्षमस्य 'अवबोधस्य चोदनाजन्यत्वा' दित्यस्य हेतुत्वेन उक्तिः भाष्यस्य न्यूनतामावहति, अतः तस्य उत्तरत्रान्वयोऽध्याहारानपेक्षः, केवलमिति पदयोजनेन अध्याहारं विनैव पूर्वत्रान्वयो वा भाष्याशयस्थः, इति अवगम्यते, इत्यलमतिविस्तरेणेत्युपरम्यते। भाष्यस्य प्रसन्नगम्भीरताविष्करणाय परं किंचिद्विचारितमित्यवगन्तव्यं भगवत्पादभक्ततल्लजैः॥

१. टीकायां नित्यत्वसाधकतया अकार्यत्वस्य अकार्यत्वसाधकतया नित्यत्वस्य वा उक्तिरिति यद्यपि वक्तुं शक्यते, तथापि वृत्तिसाक्षात्कारे नियोगस्यापि खण्डनलाभाय आभोगे अन्यथा व्याख्यातम्।

P. 71-5 नत्वेन कृत्यसाध्यत्वादित्यर्थः। टीकायां—अत्रैवेति। प्रमाणाधीने बोधे पुरुषस्य नियोगायोगे इत्यर्थः।

P. 71-3 यथा विशिष्टविधाविति। 'सोमेन यजेते'ति विशिष्टविधेर्न विशेषणे सोमनियमेपि तात्पर्यं, यागेन[इष्टं]भावयेत्, तं च यागं सोमेनेति वाक्यभेदापत्तेः। किन्त्वार्थिकविधिविधेयत्वमेवेत्यर्थः। विषयविशिष्टप्रतिपत्तिविधिसामर्थ्यात् प्रतिपत्तिविषयमात्रसिद्धावपि तस्य पारमार्थिकत्वं न सिद्ध्यतीति वैषम्यमाह—विशिष्टक्रियेत्यादिना। वास्तवत्वादिति। क्रियाविधिस्थले नियमेन तथैव दृष्टत्वादिति भावः।

P. 75-6 धीविषयत्वादिति। उपासनाया धीविशेषत्वादिति भावः। तत्क्रमे इति। तयोर्ब्रह्मधीधर्मबुद्ध्योः क्रमे एकस्मिन्नेव जन्मनि पौर्वापर्ये, मानाभावात् [1]स्नानभुज्यादिधीरिव ब्रह्मधीरपि नियोगेन धर्मबुद्धेः अनन्तरा

P. 75-8 न भवतीत्यर्थः। [2]अनित्यात् ब्रह्मण इत्यत्र ब्रह्मण इति षष्ठी। शास्त्रश्रवण इति। विवेको भ्रमश्चेत् प्रपञ्चस्य नित्यत्वं, ब्रह्मणः अनित्यत्वं च निश्चितं भवेत्। ततश्च वैराग्याभावेन श्रवणे प्रवृत्तिर्न स्यादित्यर्थः।

ननु नित्यानित्यशब्दनिर्दिष्टयोः धर्मिणोः वस्तुशब्दनिर्दिष्टानां नित्यत्वसुखत्वादीनां च विवेको नित्यानित्यवस्तुविवेक इति व्याख्यानेऽपि, जिज्ञासावैफल्यं तदवस्थमेवेत्याशङ्क्य, विशेषरूपेणानिश्चयान्न दोष इत्युक्तं—एतदुक्तं

P. 79-14 भवतीत्यादिटीकया। तत्र तर्हि केन रूपेण निश्चयः इत्यतः तद्रूपमाह—

P. 75-.0 आत्मानात्मेत्यादिना। टीकायां—निश्चिनोत्येवेति। [3]संपादयत्येवेत्यर्थः।

नित्यत्वानित्यत्वनिश्चयमात्रेण न वैराग्यं भवितुमर्हति। अनित्यस्यापि सुखरूपत्वे, तत्परित्यज्य सुखेतरस्य नित्यस्यानुपादेयत्वादित्याशङ्क्य, तप्तपरशुदृष्टान्तेन सत्याभिसन्धस्य मोक्षः अनृताभिसन्धस्य बन्ध इति प्रतिपादनात्, 'यो

---

१. स्नानेत्यादिः व्यतिरेके दृष्टान्तः इति परिमले।

२. 'अनित्यात् ब्रह्मणो विवेकः किं निश्चयः' इति कल्पतरुवाक्ये निश्चयपदं प्रमापरं, उपरि विपर्ययस्य विकल्पनात्।

३. टीकायां विवेकं इत्यस्य भेदग्रहं इत्यर्थमादाय संपादयतीति व्याख्या। भेदं इत्यर्थस्वीकारे यथाश्रुतार्थ एव।

वै भूमा तत्सुखं, अथ यदल्पं तन्मर्त्यं ।' 'नाल्पे सुखमस्ती'ति च सत्यासत्ययोः सुखदुःखरूपत्वावगमाच्च, नित्यत्वानित्यत्वनिश्चयः तत्समनियतसत्यत्वासत्यत्व-सुखत्वदुःखत्वनिश्चयमुखेनैव वैराग्यहेतुरिति स्फोरयितुं **टीकायां—नित्यत्वं सत्यत्वमित्युक्तम्** ।　P. 71-15

तत्र च नाभेदो ग्रन्थार्थः । भेदस्य लोकसिद्धत्वात् । रज्जुसर्पाद्यपेक्षया सत्यरज्ज्वाद्यव्यापनाच्च । अन्यथा सत्यासत्यवस्तुविवेक इत्येव वक्तुं शक्ये व्याख्यानसापेक्षनित्यानित्यशब्दप्रयोगो भाष्ये असंगतः स्यात् । अत एव रंहतिपादादिषु वैराग्याय कर्मफलाद्यनित्यत्वप्रतिपादनम् । अतश्शब्दव्याख्यानावसरे कर्मफलानित्यत्वबोधकश्रुतिप्राबल्यवर्णनं च । तस्मात् समनियतत्वाभिप्राया टीकेत्याह—**नित्यत्वस्य व्याख्यानमिति** । **नित्यत्वस्य विशेषेण** सत्यत्व-सामानाधिकरण्येन **आख्यानं** कथनमित्यर्थः । न च क्लिष्टयोजना, श्रुतिलोक-सूत्रभाष्यटीकास्वारस्यानुरोधेन तथैव योजनात् । अत एव **यद्यपि घटादेरनित्यताऽवधारितेति** पूर्ववाक्यमपीति ध्येयम् ।　P. 71-12

ननूपादानपरित्यागनिमित्तसत्यत्वासत्यत्वादिनिश्चयशिरस्को नित्यानित्यवस्तु-विवेकः कथमेतावन्तमनेहसमजायमान इदानीं जायेतेत्याशङ्कां निराकर्तुं **सोऽय-मित्यादिटीका** । तत्र **अनुभवोपपत्ती** विभजते—**दृष्ट इति**[2] । **अदृष्टे** स्वप्नप्रपञ्चादौ सदधिष्ठानकत्वेनास्फुट इत्यर्थः । उपपत्तिमेवाह—**विगीतमिति** । गन्धर्वपुर्यास्सौरालोकोऽधिष्ठानमिति न दृष्टान्ते साध्यवैकल्यम् । **आदिशब्देन** विमतं नित्यमूलकं अनित्यत्वात् शब्दवदित्यादिकं गृह्यते ।　P. 71-13

**व्याप्त्यसिद्धिमिति** । हेतोरप्रयोजकत्वेनेति शेषः । अनृतं सर्वं सद-धिष्ठानकं दृष्टम् । विगीतमप्यनृतं दृश्यत्वादनित्यत्वाच्च । ततश्च हेतूच्छित्तिरेव विपक्षे बाधकस्तर्क इति परिहरतीत्याशयेनाह—**आशङ्क्याहेति** । **किन्तु तदभ्यास इति** । जननमरणपरिवृत्त्यादिरूपसंसारबन्धानित्यत्वादिदृढनिश्चयपर्यन्त इति शेषः ।　P. 72-1

---

१. घटादेरनित्यताऽवधारितेत्यत्र अनित्यता असत्यता भवितुं नार्हति, घटादेर-सत्यत्वानवधारणात्, इति भावः । परिमले तु 'वल्मीकादिषु भ्रमविषयस्य घटादेरित्यर्थः' इति व्याख्यातम् ॥

२. 'दृष्टे शुक्तिरजतादौ सदधिष्ठानकत्वानुभवः' इति परिमले ॥

**क्रियासमभिहारे इति।** 'क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमो'रिति सूत्रेण पौनःपुन्याख्ये क्रियासमभिहारे सर्वलकारापवादेन लोटः तस्य परस्मैपदात्मनेपदयोर्यथाक्रमं हिस्वादेशयोश्च विधानेन प्रकृते स्वादेशस्य च विधानादित्यर्थः।

P. 73-2 **आभोगशब्दार्थमुक्त्वा** नञ्साहित्येन फलितमर्थमाह—**अतदात्मिकेति।** अनादरात्मिकेत्यर्थः। ज्वाला एव जटा अस्य सन्तीति मत्वर्थे इलच्-प्रत्यय इति दर्शयति—**ज्वाला जटाकारा इति।** श्रद्धावित्त इत्यत्र सावधारणत्वं दर्शयन्नाह—**श्रद्धैवेति।** P. 73-3 **तथाभिहितमिति।** श्रद्धावित्त इत्यभिहितमित्यर्थः।

P. 73-5 **अथशब्दादिति।** तस्य हेत्वानन्तर्यपरत्वादिति भावः। **तत्स्वरूपासिद्धिः** तत्स्वरूपासंभवः। **टीकायां—सैव त्विति।** साधनसंपत्तिरेव त्वित्यर्थः। P. 73-6 **नरशिरःकपालशौचानुमानवदिति** दृष्टान्तं विशदयति—**शुचि नरशिरः इति।** **नारं**—नरसंबन्धि। **सस्नेहं** वसादियुक्तम्। **टीकायां—विषसंपृक्तं मधु अन्नं वेत्यर्थः**[1]।

**न्यायहीनमिति।** 'फलस्य कर्मनिष्पत्तेः तेषां लोकवत्परिमाणतः फलविशेषः स्या'दिति परिमितफलकत्वस्यैव न्याय्यत्वेन कर्मणामनन्तफलकत्वस्य न्यायहीनत्वादिति भावः। P. 74-1 **आपेक्षिकेति।** महाभूतप्रलयपर्यन्तावस्थानरूपेत्यर्थः।

P. 74-3 **अत एव चेति।** अप्रकृतत्वादेव चेत्यर्थः। **तर्हीति।** ब्रह्मप्रमाणत्वाविशेषादिति भावः। नित्यानित्यविवेकादेरप्रकृतत्वं परिहरति—**हेतुमदिति।** धर्मजिज्ञासया वेदाध्ययनस्येव, प्रकृतेऽपि हेतुमत्या ब्रह्मजिज्ञासया तदुपस्थापनान्न दोष इत्यर्थः।

**कात्यायनोक्तम्** तादर्थ्यसमासस्य प्रकृतिविकृतिनियममुपपादयति—P. 74-5 **पाणिनिः किलेति।** सूत्रे चतुर्थीशब्दस्य चतुर्थ्यन्तशब्दपरतया तदर्थेत्यत्र

---

१. 'नहि मधुविषसंपृक्तमन्नं विषं परित्यज्य शक्यं शिल्पिवरेणापि भोक्तुम्' इति पाठमभिप्रेत्य एवं व्याख्यातम्, 'विषं परित्यज्य मधुमिश्रं शक्यम्' इति मधुमिश्रं इति पदमपि टीकायामुपलभ्यते। एवं च मधुविषसंपृक्तमिति एकं पदम्, उभयसंपृक्तमन्नं विषं परित्यज्य केवलमधुमिश्रमापाद्य न भोक्तुं शक्यमित्यर्थः॥

तच्छब्देन चतुर्थ्यन्तशब्दस्य परामर्शे सति चतुर्थ्यन्तं चतुर्थ्यन्तवाचकेन समस्यत इति सूत्रार्थः स्यादत आह—**चतुर्थ्यन्तशब्दार्थ इति**। योग्यत्वादित्यर्थः। तस्मा **इदमिति**। ततश्च चतुर्थ्यन्तः शब्दः तदर्थहेतुभूतार्थवाचकेन समस्यत इति सूत्रार्थ इति भावः। P. 74-7

**अर्थशब्दादिनापीति**। अर्थबलिहितसुखरक्षितशब्दैरपि चतुर्थ्यन्तशब्दः समस्यते। ब्राह्मणार्थं पयः, कुबेरबलिः, गोहितं, गोसुखं, अश्वसुखं अश्वरक्षितमित्यपि द्रष्टव्यमित्यर्थः। **सर्वप्रसङ्ग इति**। 'रन्धनाय स्थाली' इत्यादावपि तादर्थ्याविशेषात् समासप्रसङ्ग इत्यर्थः। 'विकृतिः प्रकृत्येति चे'दिति वार्तिकमर्थतः पठति—**प्रकृतिविकृत्योरिति चेदिति**। **एवं चार्थादिति**। अस्यैव सिद्धान्तवार्तिकत्वादिति भावः। P. 74-8

ननु कात्यायनमतेन चतुर्थीसमासासंभवेऽपि, पाणिनिमतेन संभवत्येव। तेन तादर्थ्यमात्रे समासानुशासनात्। अन्यथा, अश्वाय घासोऽश्वघास इत्यादिसमासासिद्धिप्रसङ्गात्। अत एव पूर्वतन्त्रे धर्माय जिज्ञासेति चतुर्थीसमासः समाश्रित इति शङ्कते—**नन्विति**। P. 75-2

पाणिनेरपि प्रकृतिविकारभावस्थल एव तादर्थ्यसमासोऽभिमतः। अन्यथा तस्मिन् सूत्रे, बलिरक्षितग्रहणवैयर्थ्यात्। कुबेराय बलिरित्यादावपि तादर्थ्यमात्रस्य सत्त्वात्। एवं सूत्राभिप्रायं वर्णयता भाष्यकारेण अश्वघासादीनां षष्ठीसमासत्वाश्रयणात्। अत एव पूर्वतन्त्रेऽपि भट्टपादैः'धर्माय जिज्ञासेति शबरस्वामिवचनं षष्ठीसमासलब्धार्थिकार्थप्रदर्शनपरम्। न तु विग्रहप्रदर्शनपरम्। तस्य ज्ञातुमिच्छेति निगमनवाक्ये षष्ठीसमासविभावना'दिति व्याख्यातमित्यभिप्रेत्य परिहरति—**कात्यायनेनैव त्विति**। P. 75-3

कात्यायनकृतसूत्रव्याख्याननिराकरणेन स्वयमेव सूत्रव्याख्यानात् भाष्यकार एव कात्यायनस्थानापत्त्या कात्यायनग्रहणेन गृहीतः। एतदर्थसूचनार्थमेव भाष्यकारेणेति वक्तव्ये कात्यायनेनैवेत्युक्तमिति ध्येयम्। **उपसंख्यातमिति**। 'षष्ठी' इति सूत्रविहितं समासान्तरमङ्गीकृतमित्यर्थः।

**प्रतिपत्त्यनुबन्ध इति** टीकापदं व्याचष्टे—**प्रतिपत्ताविति**। जिज्ञासा प्रथमं कर्मैवापेक्षत इत्यत्र कथं प्रतिपत्त्यनुबन्धत्वं हेतुरित्यतः तदुपपादयति— P. 75-5

**स्वरूपेणेति**। स्वरूपसिद्ध्यनन्तरभावित्वादन्यापेक्षाया इति भावः। जिज्ञास्यान्तरं दर्शयन् भाष्यगतानिर्देशपदसूचितं परिहारं च प्रकटीकुर्वन्नाह—

P. 76-3 **नन्वित्यादिना**। निगूढाभिप्रायत्वे[1] हेतुमाह—**ननु श्रुतेति**।

ननु स्वरूपनिरूपणानन्तरभावित्वात् संबन्ध्यपेक्षायाः कथं ब्रह्मसंबन्धिनी जिज्ञासेति प्रथमं संबन्धः? असंबन्धे वा कथं संबन्धसामान्यस्य विशेषपर्यवसानमिति शङ्कते—**नन्विति**। कर्माकाङ्क्षिण्या अपि जिज्ञासाया आहत्य कर्मत्वेन प्रतीयमानसंबन्धालाभे संबन्धित्वेन प्रतीयमानसंबन्धोऽपि अविरुद्धः।

P. 76-5 तस्य कर्मत्वेनान्वयायोग्यत्वानिश्चयादिति परिहरति—**नेत्याहेति**। सुव्याहृतं

P. 76-8 **न्यायतत्त्वमिति** काक्का लब्धमर्थमाह—**व्याहतमित्यर्थ इति**।

ननु कथं कर्मत्वस्य वाच्यत्वम्? 'षष्ठी शेष' इति सूत्रेण संबन्धमात्रे षष्ठीसरणात्। 'कर्तृकर्मणोः कृती'ति सूत्रविहितषष्ठ्याश्च समासप्रतिषेधा-

P. 76-9 दित्यत आह—**कर्तृकर्मणोरिति**। **अकारप्रत्ययान्तत्वादिति**। 'अ प्रत्यया'-दिति पाणिनिसूत्रम्। तत्र अ-इति लुप्तविभक्तिकं पदम्। प्रत्ययान्ताद्धातोरकारप्रत्ययो भवतीति सूत्रार्थः। ततश्च प्रकृते सन्प्रत्ययान्तात् (जिज्ञास) ज्ञाधातोरुक्तसूत्रादकारप्रत्यये सति तस्य कृत्संज्ञकत्वात् कृद्योग इत्यर्थः।

ननु 'कृद्योगलक्षणा षष्ठी समस्यते' इति समासाभ्यनुज्ञानेन 'प्रतिपदविधाना षष्ठी न समस्यते' इति निषेधाप्राप्तावपि 'कर्मणि चे'ति सूत्रेण समास-

P. 76-9 निषेधः प्राप्नोत्येव। तथा च शेषषष्ठ्येव युक्तेत्यत आह—**यस्त्विति**। ननु प्रकृतेऽपि साधनचतुष्टयसंपन्नः कर्ता विद्यते। अत इहाप्युभयप्राप्तिरस्तीति तेनैव सूत्रेण षष्ठी स्यात्, ततश्च समासो न स्यादित्याशङ्क्य, यत्र[2] कर्तुरतिशय-

---

१. श्रुतकर्मत्यागायोगे स्थिते शेषषष्ठीशङ्कैव नोदेति, अथापि शङ्कते, अतः शङ्कितुः कोप्यभिप्रायःनिगूढोऽस्तीति ज्ञायते। अतः शङ्कैव निगूढाभिप्रायत्वज्ञापकहेतुः इत्यर्थः। प्रमाणादिवहुविचारप्रतिज्ञाश्रौततत्वसिद्धिरित्यभिप्रायो निगूढः॥

२. कर्तुरतिशयद्योतनार्थतयेति उपलक्षणं, कर्मणोप्यतिशयद्योतनार्थतया प्रयोग इत्यपि बोध्यम्। अत एव आश्चर्यशब्दसूचितकर्तृकर्मगतातिशयोपपादनोपयोगितया दुर्दोहत्वरूपाजादिवैलक्षण्यसूचनाय गोत्वेन दोहकर्मणां, तद्दोहासामर्थ्यसंभावनासूचनायाशिक्षितत्वादिना दोहकर्तुश्चोपादानमपेक्षितं कृतम्। इति परिमले उक्तम्। ब्रह्मणोऽपि कर्मणः ब्रह्मजिज्ञासेत्यत्रोपादानं किञ्चिदतिशयविवक्षया न कृतम्। किन्तु विषयनिर्देशार्थमेव॥ इति ध्येयम्॥

द्योतनार्थतया प्रयोगः, तत्रैव 'उभयप्राप्तौ कर्मणी'ति सूत्रप्रवृत्तिः। न त्वप्रयोगस्थलेऽपीत्याशयेनाह—यथेति[1]। P. 77-1

**प्रतियोगित्वाद्व्याख्यातमिति** चरमत्वास्फुटत्वपरतयेति शेषः। अन्यथा प्राथम्यपरोक्षत्वयोः अविरोधात् कर्मत्वसंबन्धिमात्रत्वयोरत्यन्तवैषम्यं न प्रतिपादितं स्यादिति भावः। ननु प्राथम्यचारम्याभ्यामेव परिग्रहपरित्यागयोः सिद्धेः स्फुटत्वास्फुटत्वाभिधानं व्यर्थमित्यत आह—**परमते इति**। **लाक्षणिकत्वं अस्फुटत्वम्**। इदमुपलक्षणम्। स्फुटत्वं श्रौतत्वं प्रथमान्वयप्रसञ्जनार्थमित्यपि द्रष्टव्यम्। P. 77-4

**सौत्रेति**। सूत्रकारोपदेशबलादिति भावः। सूत्रकारस्य परमाप्तत्वेऽपि न तत्र विश्वासः, न्यायसूत्रत्वादित्याशयेन परिहरति—**नेति**। **व्यधिकरणत्वादिति**। फलविषयत्वस्य तदुपायाविषयत्व एव हेतुत्वादित्यर्थः। उक्तहेतोः फलपर्यन्तोपायविषयकत्वसाधकत्वान्न दोष इति परिहरति—**तत्राहेति**। P. 77-6

एवमपि कथं फलेच्छाया उपायांशविषयकत्वं ? अन्यविषयाया अन्यविषयत्वायोगादित्यत आह—**फलेच्छाया इति**। उपायेच्छायाः फलेच्छाजन्यत्वात् औपचारिकं फलेच्छात्वं इति भावः।[4] P. 76-7

---

१. कल्पतरौ 'आश्चर्यो गवां दोहोऽशिक्षितेनागोपालकेन' इत्यत्र अशिक्षितेन अगोपालकेन इत्यनयोरन्यतरेणालम्। अत एव 'आश्चर्यो गवां दोहोऽगोपेन' इत्येव वैयाकरणा उदाहरन्ति। अगोपालकपदसूचितार्थकथनमशिक्षितेनेति॥

२. अत एव न्यायशास्त्रे महर्षिप्रणीतग्रन्थेष्वपि न विश्वासः। अतएव च 'भाष्यस्य आर्षत्वमाशङ्क्य मणिकृतां संमतिमाह' इति न्यायसिद्धान्तमुक्तावलीटीकायां दिनकरोक्तिः।

३. ज्ञानं पक्षीकृत्य इच्छाविषयत्वसाधकतया प्रयुक्तस्य 'फलविषयत्वादिच्छायाः' इति हेतोः पक्षावृत्तित्वात् साध्यं प्रति व्यधिकरणत्वं, फलगतमिच्छाविषयत्वं, इच्छागतं फलविषयकत्वं वा उभयमपि यतः ज्ञानावृत्ति, इत्याक्षेपस्य, इच्छा ज्ञानरूपोपायविषयिणी, तत्फलविषयकत्वात् इति इच्छापक्षीकरणेन परिहारसंभवेऽपि, उपायाविषयकत्वसाधकस्य फलविषयकत्वहेतोः उपायविषयकत्वसाधनार्थं प्रयुक्तत्वात् विरुद्धत्वदोषान्न निस्तार इति भावः। तथा च व्यधिकरणत्वादित्यस्य विरुद्धत्वादित्यर्थः।

४. उपायेच्छा उपायं फलसाधनत्वोपाधिना विषयीकरोति, इदं फलसाधनं मे भूयादिति हीष्यते। एवञ्च उपायेच्छा फलमपि विषयीकरोतीति, उपायेच्छायाः फलेच्छात्वं मुख्यमेव भवति। अतः फलेच्छाजन्यत्वप्रयुक्तमौपचारिकं फलेच्छात्वं न कल्पनीयम्। इति परिमलात् ज्ञायते। एकस्यामेव इच्छायां फलेच्छात्वं उपायेच्छात्वञ्च उभयं संपादनीय-

ननु टीकायां—भवतु ब्रह्मविषया अवगतिरित्यत्र स्वरूपसाक्षात्कार एवावगतिरित्युक्तम् । वृत्तेरपुरुषार्थत्वात् । अतः कथं तस्या ब्रह्मविषयत्वोक्तिरि-

P. 77-7 त्यत आह—स्वरूपावगतिरिति । स्वरूपावगतेः सुखरूपत्वात् कथमिष्टेति टीकाया अयोगमाशङ्क्य, ब्रह्म न सुखं जिज्ञास्यत्वात् धर्मवदिति शङ्काभिप्राय-माह—ब्रह्मणोऽपीति । श्रुत्यनुभवबाधितमनुमानमित्याह—श्रुतीति ।

P. 77-9 प्रतिभानिति शत्रन्तश्शब्द इति दर्शयति—प्रतिभासमान इति । प्राप्यमाणत्वादिति । तथा च पुरुषेण श्रवणादिव्यापारेण कण्ठचामीकरन्यायेन प्राप्यमाणत्वात् ब्रह्मणोऽपि पुरुषार्थत्वमिति भावः ।

ननु टीकायां—न च तदुच्छेदमन्तरेणेत्यादिना अविद्यानिवृत्त्यान-न्तर्यं साक्षात्कारस्योक्तम् । तदयुक्तम् । साक्षात्कारजन्यत्वादविद्योच्छेदस्येत्यत

P. 78-2 आह—विगलितदुःखेति । वृत्तिव्यक्तेति । ततश्च जीवस्य यथोक्तब्रह्मात्मत्वेन साक्षात्कारे आविर्भावो व्यक्तता, न तदुच्छेदमन्तरेणेति टीकार्थो बोध्यः ।

सूत्रस्यानुवादत्वेति । सूत्रार्थकथनपरे वाक्ये तव्यप्रत्ययाध्याहारेण सूत्रे कर्तव्येति पदाध्याहारसूचनादिति भावः । किं तत्कर्तव्यतेति । इच्छायाः कृत्ययोग्यत्वादिति भावः । ननु टीकायामिच्छामुखेन ब्रह्ममीमांसायां प्रवर्त्यत इत्यनेन विचारगतं कर्तव्यत्वं तन्मुखभूतायामिच्छायामुपचर्यत इत्युक्तम् । तत्र

P. 78-5 कथं इच्छाया विचारमुखत्वं ? इत्यतस्तदुपपादयति—ज्ञातुमिच्छा इति ।

---

मित्यभिप्रेत्य, फलेच्छाया उपायेच्छात्वाभावेपि उपायेच्छायाः फलसाधनत्वोपाधिना उपायविषयिण्याः फलेच्छात्वं मुख्यमेव संभवतीति परिमले ,फलेच्छाजन्यत्वेन औपचा-रिकं तत् संभवतीति आभोगे च उक्तम् ।

'फलेच्छाया एव उपायपर्यन्तं प्रसरः' इति कल्पतरुवाक्यस्य फलेच्छा उपायमपि विषयीकरोतीति परिमलरीत्या, फलेच्छा उपायेच्छामादधातीति आभोगरीत्या च अर्थः । वस्तुतस्तु फलस्येष्यमाणत्वात् तत्साधनं ज्ञानमपि इष्यमाणं भवति । इत्येतावत् विवक्षितं, एकस्या एव इच्छायाः फलतदुपायोभयविषयकेच्छात्वमस्तु, मा वा। न तत्र निर्भरः भाष्यादेः ॥

१. 'विगलितनिखिलदुःखानुषङ्गानन्दघनब्रह्मात्मतासाक्षात्काराविर्भावः' इति टीकायां साक्षात्कारपदेन स्वरूपसाक्षात्कार उक्तः । तत्र जीवस्य वास्तवस्वरूपाविर्भावो व्यक्तता, सा च अविद्योच्छेदाद्भवति । अविद्योच्छेदश्च वृत्तिसाक्षात्काराद्भवति । इति टीकाभिप्राय इति भावः ॥

ननु सूत्रे जिज्ञासापदस्य विचारार्थकत्वाङ्गीकारसंभवात् कर्तव्येति पदस्य किमित्यार्थिकविचारकर्तव्यतापरत्वाश्रयणमित्यत आह—आर्थिके चेति। P. 78-6 इत्युपपादनेनेति। ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति भाष्यव्याख्यानावसर इत्यर्थः।[1]

तद्विचारप्रतिज्ञापीति। अथातो धर्मजिज्ञासेत्यस्य वेदाध्ययनानन्तरं P. 78-8 वेदस्य विवक्षितार्थत्वात् वेदार्थविचारः कर्तव्य इत्यर्थः। तत्र सिद्धवद्धेतूपदेशेन वेदार्थो विवक्षित इति, वेदार्थविचारः कर्तव्य इति च, द्वे प्रतिज्ञे दृश्येते। तत्र द्वयोरपि प्रतिज्ञयोः सामान्यतः वेदार्थमात्रविषयकत्वेऽपि यथा अर्थविवक्षाप्रतिज्ञाया विशिष्य ब्रह्मकाण्डसाधारण्यमाश्रीयते, तथा विचारप्रतिज्ञाया अपि विशिष्य ब्रह्मविचारपरत्वं कुतो नाश्रीयते इत्यर्थः। अनन्तरकृतयावद्विशेषपरत्वात् सामान्यशब्दस्य ब्रह्मविचारस्य च षोडशलक्षण्यां पूर्वमीमांसायामकृतत्वात् न तत्परत्वमिति परिहरति—उपरीति। P. 78-9

---

१. अत्र टीकायां 'इच्छामुखेन ब्रह्ममीमांसायां प्रवर्त्यते' इत्यनन्तरं, 'न तु वेदान्तेषु, तदर्थविवक्षायां वा, तत्र.... प्रवर्तितत्वात्' इत्युक्तम्। तदर्थस्तु—नतु वेदान्तेषु, वेदान्ताध्ययने, प्रवर्त्यते पुरुषः ब्रह्मजिज्ञासासूत्रेण। वेदान्ताध्ययने प्रवृत्तेरध्ययनविधिना सिद्धत्वात्, इति हेतुः। स च स्पष्टत्वात् न प्रदर्शितः। तदर्थविवक्षायां वा, तेन सूत्रेण न प्रवर्त्यते पुरुषः, तत्र हेतुरुक्तः तत्रेत्यादिग्रन्थेन। अर्थविवक्षायां, फलवदर्थावबोधपरतामध्ययनविधेस्सूत्रयता धर्मजिज्ञासासूत्रेणैव प्रवर्तितत्वात् - इति।

वेदान्तार्थविवक्षायां प्रवर्तितत्वात्, इत्यस्य कोऽर्थ इति चेत्, उच्यते—धर्मजिज्ञासासूत्रेण न साक्षात् अर्थविवक्षायां पुरुषः प्रवर्त्यते - अयोग्यत्वात्, अपि तु-अर्थविवक्षोपपादनमुखेन धर्मविचारे प्रवर्त्यते, वेदस्याविवक्षितार्थत्वे तदर्थविचारे प्रवृत्त्ययोगात्। स च वेदार्थः धर्मवत् ब्रह्मापि। अतः धर्मब्रह्मसाधारण्येन कृत्स्नवेदार्थस्य विवक्षितत्वमुपपाद्य धर्मविचारे पुरुषं प्रवर्तयता धर्मजिज्ञासासूत्रेण वेदान्तार्थविवक्षायां पुरुषः प्रवर्तित इत्युच्यते। पुरुषस्य अर्थविवक्षायां प्रवर्तितत्वं नाम धर्मविचारप्रवृत्त्युपयोगिभूतार्थविवक्षाबोधवत्तया आपादितत्वमेव नान्यत्।

२. पूर्वमीमांसा यद्यपि द्वादशलक्षणी, तथापि संकर्षकाण्ड इति देवताकाण्ड इति च व्यवह्रियमाणा चतुर्लक्षणी जैमिनिनैव प्रणीता द्वादशलक्षण्यविचारितनानाविषयन्यायविचारात्मिका द्वादशलक्षणीपरिशिष्टरूपा तन्त्रप्रसङ्गवदुपदेशातिदेशसाधारण्येन प्रकीर्णकरूपेण प्रवर्तिता इति परिमलोक्ता या, तामपि मेलयित्वा पूर्वमीमांसा षोडशलक्षणीति कथ्यते इति ज्ञेयम्।

**प्रसिद्धमप्रसिद्धं वेति भाष्यस्य वेदान्तेभ्यः प्रसिद्धमप्रसिद्धं** वेत्येवं
P. 79-1 विशेषपरत्वेन व्याख्याने हेतुमाह—**युष्मदस्मदिति**। **आचिक्षिपे**—आक्षिप्तवान्। **संमुग्धप्रसिद्धस्य संमुग्धं** यथा तथा **प्रसिद्धस्य**—आपाततो ज्ञातस्येत्यर्थः। **टीकायां—साधनन्यायेति**। स्वाधेयविशेषयुक्ततया विषयं साधयत एव साधनत्वमिति न्यायातिपातादित्यर्थः।

वेदान्तानां निश्चायकत्वात् कथमापातज्ञानजनकत्वमित्याशङ्क्य, ज्ञानस्य न सन्देहरूपत्वमापातत्वम्। किन्तु अप्रामाण्यशङ्काकलङ्कितत्वमित्याशयेनाह—**यद्यपीत्यादिना। सामान्यतो दृष्टेति**। वेदे तत्र तत्र विभक्तिव्यत्ययदर्शनात्, विभक्तीनां लुग्दर्शनाच्च, 'तत्त्वमसी'त्यादौ, तस्मात्त्वं जात इति वा, तस्य त्वं स्वमिति वा[1] त्वं ब्राह्मणोऽसीत्यादिवत् त्वं तदसीति शरीरशरीरिभावेन सामानाधिकरण्यं वा वाक्यार्थः स्यादिति **सामान्यतो दृष्टनिबन्धनवचनव्यक्त्याभासप्रतिबद्धो वेदः**[2] तज्जनिते निश्चये अप्रामाण्यशङ्कया फलतः सन्दिग्धार्थः स्यादित्यर्थः।

P. 78 6 **उद्धरतीति**। प्रसिद्धिपक्षावलंबनादिति भावः। **कथं प्रतीतिपरत्व व्याख्येति। अवगमस्तावदस्तीति टीकया** तथा व्याख्यानादिति भावः। **टीकायां—ततस्तु प्राग्देहाद्यभेदेनेति** न भ्रमपरिकल्पिताभेदाभिप्रायम्। तस्य सिद्धान्त्यभिमतत्वेन निराकार्यत्वायोगात्। ततश्च संसारदशायां देहाद्यभेदादशुद्धत्वं मुक्तौ शुद्धत्वं च न भेदवादिमते, नापि चार्वाकमते, तैस्तथानभ्युपगमात्
P. 80.1 इत्यत आह—**भेदाभेदमतेन शङ्केति**।

अनौपाधिकब्रह्मप्रसिद्धिकथनेन शङ्कापरिहारस्य जातत्वात् सोपाधिकब्रह्मप्रसिद्धिकथनं वृथेत्याशङ्क्य, तत्त्वमसिवाक्यार्थज्ञानोपयोगितत्पदलक्ष्यस्वरूपनिर्णयाय तत्कथनमित्याशयेनाह—**तत्त्वमसिवाक्येति। अविद्याविषयीकृतमिति**। जीवस्यैव तदाश्रयत्वादिति भावः। **शक्तिज्ञानाभ्यां कारणत्वलक्षणे**
P. 86-3 शक्यसंबन्धं साहचर्यं दर्शयति—**यो हीति**।

---

१. तेन त्वं तिष्ठसि, तस्मै त्वं समर्पणीयः, तस्मिन् त्वं, तदाश्रितस्त्वमित्यर्थः, अकारप्रश्लेषेण अतत् त्वमसि, इत्याद्यर्था अपि ग्राह्याः॥

२. वचनव्यक्त्याभासः—वाक्ययोजनाभासः। इति परिमलम्।

न केवलमित्युत्तरटीकानुरोधेनावतारयति—सदेवेत्यादिवाक्यादिति। P. 80-3 वाक्यात् प्रसिद्धस्यैवेति। अस्ति तावदित्यादिभाष्यबलादेव वाक्यप्रमाणकत्वसिद्धेरिति भावः। टीकायां—स्वहस्तयतीति। स्वहस्तवन्तं करोति। स्वहस्तगतं करोतीति यावत्। टीकायां—वृद्धिकर्मा हि बृहतिरिति। वृद्धिः कर्म क्रिया वाच्या यस्येत्यर्थः। बृंहतिरिति वक्तव्ये आगमानुशासनमनित्यमिति मत्वा नुमागमो न कृतः।

ननु ब्रह्मपदादनवच्छिन्नमहत्त्वावगतावपि, कथं नित्यत्वादिसिद्धिरित्याशङ्क्य, निरवधिकमहत्त्वस्य देशतः, कालतः, वस्त्वन्तराच्चेति, त्रिविधपरिच्छेदराहित्यरूपत्वात्, अनित्यादिरूपत्वे च तदसिद्धेः, ब्रह्मपदबलादनित्यादिप्रतियोगिरूपसिद्धिरविकलैवेत्याह—उक्तविशेषणानामिति। P. 80-6

षष्ठ्योः सामानाधिकरण्ये हेतुमाह—जीवस्य हीति। ब्रह्माभिन्नस्यैव सतो जीवस्य भ्रान्तिपरिकल्पिताशुद्धत्वादिव्युदासेन शुद्धबुद्धादिस्वरूपसमर्पणे ब्रह्मभावस्यानुक्तसिद्धत्वात् ब्रह्मरूपं जीवात् पदार्थान्तरं सन्न पृथक् समर्पणीयमित्यर्थः।

सर्वस्यात्मत्वादिति भाष्यगतस्य सर्वस्येति पदस्य व्यवहितान्वयेन व्याख्याने बीजमाह—प्रसिद्धिर्हीति। ननु ज्ञानस्य ज्ञात्राकाङ्क्षावद्धर्मस्याप्यस्ति P. 81-1 धर्म्याकाङ्क्षा, सन्निधिस्त्वधिक इत्याशङ्क्य, प्रयोजनाभावात् न तदन्वय इत्याह—तथा सतीत्यादिना। पांसुमन्ताविति। तथा च मत्वर्थीयो लच्प्रत्यय इति P. 81-3 भावः। हालिक इति। तद्वहतीत्यर्थे ठक्प्रत्यय इति भावः।

---

१. तत्पदार्थस्य धर्मिणः शुद्धत्वादेश्च धर्मस्य इति, तत्पदार्थस्य यत् शुद्धत्वादि तस्य इति च, उभयविधमपि वैयधिकरण्यं विहाय तत्पदार्थः शुद्धत्वमिति सामानाधिकरण्यमाश्रितं, तत्र च हेतुः—जीवात् पृथग्भूतः अज्ञातः तत्पदार्थरूपो धर्मी नास्ति। यस्य प्रसिद्धिर्वक्तव्या। किं तु शुद्धत्वादिधर्मा एव अज्ञाताः ज्ञापनीयाः। तत्पदार्थ एव त्वंपदार्थः इत्यभेददृढीकरणमेव - इत्यादि परिमले विशदम्॥

२. कल्पतरौ—हालिकस्यापि ब्रह्मास्तित्वं प्रसिद्धं किमु वक्तव्यमन्यस्य तत् प्रसिद्धमिति, इति कैमुतिकन्यायः॥

81-4 **साध्यहेत्वोरिति।** आत्मत्वहेतोरप्रयोजकत्वाशङ्कायां तद्धेतुत्वसमर्थनार्थत्वात् **सर्वो हीति भाष्यस्येत्यर्थः।** पूर्वभाष्योक्तहेतुसाध्योभयस्फुटीकरणार्थत्वादस्य भाष्यस्य न दोष इति परिहरति—**आशङ्क्याहेति। अस्तित्वं न प्रसिद्ध्येदिति।** अहंपदार्थे अस्तित्वस्याविषयीकरणादिति भावः।[2]

ननु अहमस्मीति ज्ञानमेवात्मज्ञानमिति कथं **मा च ज्ञासीदात्मानमिति टीकेत्यतः** शङ्काभिप्रायमाह—**अहमिति प्रतीतेरिति। नाहमस्मीति प्रतीयादिति भाष्ये नञः प्रतीयादित्यनेन** व्यवहितेनान्वये हेतुमाह—**ऋजुयो-**

P. 81-7 **जनायामिति। सुषुप्ताविति।** प्रसिद्ध्यभावस्य व्याप्यस्य सत्त्वादिति भावः।

**शङ्कितुराशयमिति।** अहमिति प्रतीतेरहंकारमात्रविषयत्वान्नात्मप्रतीतिः सिद्ध्येदित्येवंरूपमित्यर्थः। **समर्थितमिति।** अहङ्कारास्पदे कर्तृत्वचैतन्यादिचिदचिद्धर्मदर्शनादिति भावः। **आत्मप्रसिद्ध्यभावे**—आत्मप्रसिद्ध्यनङ्गीकारे, अहमिति चिदचिदुभयोल्लेखिनी प्रतीतिर्न स्यादित्यर्थः।

ननु ब्रह्मणि वाक्यार्थे **किमायातमिति** शङ्कायास्तत्पदस्य त्वंपदेन **सामानाधिकरण्यादित्यनेन** कथं परिहारः, इत्यतः तत्पदस्य ब्रह्मपरत्वादित्याशय-

P. 81-11 माह—**तत्त्वमसिवाक्य इति। ननु ब्रह्मात्मैक्यस्येति।** ब्रह्मपदार्थाप्रसिद्ध्या जिज्ञासाक्षेपस्य ब्रह्मप्रसिद्धिकथनेन परिहृतत्वात्, **ननु प्रत्येत्विति टीकायां ब्रह्मणि किमायात**मित्याक्षेपो **ब्रह्मणि** वाक्यप्रतिपाद्ये किमायातमित्येवं जीवब्रह्माभेदस्य वाक्यार्थस्याप्रसिद्धत्वेन प्रतिपाद्यत्वाक्षेप एवायमिति भावः।

P. 81-12 **पदद्वयसमभिव्याहारादिति। ताभ्यां** जीवब्रह्मभ्यां **गृहीतसंबन्धं यत्पदद्वयं, तदिति, त्वमिति च, तयोः समभिव्याहाराल्लक्षणया ब्रह्मात्मैक्यलक्षणः**[3]

---

१. आत्मत्वात् इत्यस्यैव हेतुत्वात् सर्वो हीति भाष्यस्य कथं हेतुत्वमित्याशङ्क्य हेतुसमर्थनार्थत्वादित्याह—आत्मत्वहेतोरित्यादि॥

२. 'अस्तित्वं न सिध्येत्, असत्वनिषेधेऽपि अनिर्वाच्यत्वस्यानिवारणात्' इति कल्पतरुः। तत्र, असत्त्वं, सत्त्वं, अनिर्वाच्यत्वमिति धर्मत्रयम्। अहमस्मीति न प्रत्येतीति न, किं तु प्रत्येत्येवेति योजनायां आत्मनः अस्तित्वं सिध्यति, तेन असत्वं अनिर्वाच्यत्वं उभयमपि निवारितं भवति। अहं नास्मीति न प्रत्येतीति योजनायां तु असत्वमात्रं निषिद्धं, तेन सत्त्वं न सिध्यति। अनिर्वचनीयत्वेनाप्युपपत्तेरिति भावः॥

३. लक्षणयेति। वाक्यार्थे लक्षणेति भाट्टमतेनेदम्। यद्वा तत्पदे त्वंपदे च भागत्यागलक्षणेत्यभिप्रायः। तत्त्वंपदलक्ष्ययोरेव शुद्धयोरैक्ययोग्यत्वात्। इति ध्येयम्॥

**अपूर्वो वाक्यार्थः सुज्ञान** इति भावः । तत्त्वमसिवाक्यस्य ब्रह्मात्मैक्यबोधकत्वसमर्थनं संबन्धानुबन्धकथनायेति दर्शयन्, पुनराक्षेपस्य प्रयोजनमाह—**एवं तावदिति । असाधारण्यरूपेति ।** एतच्छास्त्रैकप्रतिपाद्यत्वरूपेत्यर्थः । P. 81-13

**लोकप्रसिद्धीति ।** पण्डितपामरसाधारणपुरुषमात्रप्रसिद्ध्यभावादित्यर्थः । **इत्थंभावार्थत्वमिति । तत्त्वमसीति वाक्याद्यदि ब्रह्मात्मत्वेन प्रसिद्धमस्तीति टीकया** तृतीयाया इत्थंभावार्थकत्वकथनादिति भावः । हेतुतृतीयाव्याख्याने को लाभ इत्यत आह—**तदा हीति । तत्पदार्थमात्रस्येति ।** धर्मिण इति शेषः । शुद्धत्वादेः [ लोके ] अप्रसिद्धत्वेनानुवादायोगादिति ध्येयम् । P. 81-16

अभेदविवक्षयाप्युद्देश्योपादेयभावव्यत्यासे किं प्रयोजनमित्यतस्तद्दर्शयति—**अन्यत्र हीति ।** उद्दिश्य विधानस्थले इति शेषः । **वस्त्वभावसाधिकेति ।** परस्परविषयापहारकत्वेनैव प्रतिपत्तीनां विरुद्धत्वादिति भावः। अप्रामाण्यशङ्काशून्यप्रतिपत्तेरेव स्वविषयनिश्चायकतया, प्रकृते न कापि प्रतिपत्तिर्निश्चायिकेति, तद्बलादुपपन्नः संशय इति तात्पर्यमाह—**न [१]विरुद्धेति ।**

**साधारणाकारदृष्टाविति ।** साधारणधर्मिदृष्टावित्यर्थः । **न त्विहेति** वाक्येऽपि धर्मपदं धर्मिपरम् । विप्रतिपत्तिजन्यसंशये साधारणधर्मदर्शनस्यानपेक्षितत्वात्[२] । केन रूपेण स धर्मी सिद्ध इत्याशङ्क्य, अहंकारास्पदत्वेन इत्याह—**देह आत्मेत्यादीति ।** विप्रतिपत्तीनां भिन्नपुरुषाश्रयत्वात् **भिन्नाश्रया न स्युरिति** कथमित्यत आह—**आश्रयशब्द इति ।** P. 81-23

धर्मिणः सर्वतन्त्रसिद्धत्वस्फोरणाय फलितमर्थं दर्शयति—**अतो विवदमानानामिति ।** धर्मिमात्रस्य सिद्धत्वेऽपि शास्त्रप्रतिपाद्यस्य ब्रह्मात्मैक्यस्यासिद्धत्वात् कथं जिज्ञासेति शङ्कते—**साधारणधर्मीति । न हीति । साधारणो धर्मी** सर्वसंप्रतिपन्नत्वात् न शास्त्रप्रतिपाद्य इत्यर्थः । शास्त्रप्रतिपाद्यमप्यापाततः सिद्धमिति परिहरति—**तत्राहेति ।** P. 82-3 P. 82-6

---

१. अत्र कल्पतरौ 'न विरुद्धप्रतीतिमात्रेणाभावावगमः, किं तु प्रमाणमूलतया' इत्येव सर्वत्र पाठो दृश्यते । 'किं तु प्रमाणमूलया तया' इति युक्तः पाठः । प्रमाणमूलया विरुद्धप्रतीत्या अभावावगम इत्यर्थः ॥

२. 'अग्रे विरुद्धप्रतिपत्त्योः साधारणालंबनस्य धर्मिण एवात्र सद्भावोपपादनदर्शनाच्च' 'साधारणधर्मिस्फुरणेऽपि' इति अग्रिमग्रन्थपाठाच्च' इत्यपि परिमले ।

एवमपि ब्रह्मात्मैक्यस्य कथं प्रसिद्धिः ? लोकतस्तदनवगमात् । वेदान्तानां तद्बोधकत्वस्य परैरनभ्युपगमादित्याशङ्क्य, वेदान्तानां ब्रह्मात्मैक्यपरत्वं निषेधद्भिः परैरपि निषेधप्रतियोगितया ब्रह्मात्मैक्यमङ्गीकृतमिति, तदपि प्रसिद्धमेवेति तात्पर्यमाह—**यस्मादित्यादिना** । P. 82-6

**लौकायतिकादीनामिति** । **लौकायतिकानां देहातिरिक्तात्मप्रतीतिर्भ्रमः** । **आस्तिकानामपि** निरीश्वरभेदवादिनां तत्पदार्थप्रतीतिर्गौणी । सेश्वरभेदवादिनां तु **तत्त्वंपदार्थैक्यप्रतीतिर्गौणी** । आस्तिकशिरोमणीनामद्वैतिनां तु **त्वंपदार्थधीरसङ्गसाक्ष्यालंबना** । तथा च तत्प्रतीतिभ्रमत्वगौणत्वादौ वादिनां विप्रतिपत्तिरित्यर्थः । **चैतन्येत्यनेनापि** पक्षान्तरं निर्दिश्यत इति भ्रान्तिं वारयितुं षष्ठीतत्पुरुषमाह—**देहादीति** । P. 82-10

ननु चैतन्यं चेतनत्वं ज्ञानं, तच्च क्षणिकविज्ञानपक्षे न संभवति । क्षणिकविज्ञाने ज्ञानान्तरानङ्गीकारात् । अत आह—**आत्मत्वमित्यर्थ इति** । **टीकायां—योग्यताविरहादिति** । अनित्याशुद्धजडादिरूपस्य देहादेर्नित्यत्वशुद्धत्वचिद्रूपत्वाद्यन्वयायोग्यत्वादित्यर्थः । **किं विक्रियेति** । परिणामविशेष इत्यर्थः । चैतन्यरूपभोगाभ्युपगमादाह—**सक्रियस्वरूपेति** । **टीकायां—तत्पदार्थासंगतिस्तत्पदार्थैक्याभाव** इत्याह—**अतो न नित्येति** । **तत्पदार्थे विप्रतिपत्तिर्दर्शितेत्येतत्** ब्रह्मात्मैक्यविप्रतिपत्तेरप्युपलक्षणमित्याह—**लौकायतिकादीति** ।[1] P. 82-8 P. 82-12

ब्रह्मणो जीवात्मव्यतिरेकस्सिद्धान्तविरुद्ध इत्यत आह—**कर्तृभोक्तृभ्य इति** । नैयायिकाभिमत**कर्तृभोक्तृरूपेभ्यः** साङ्ख्याभिमत**केवलभोक्तृरूपेभ्यश्च** जीवात्मभ्यः व्यतिरेक उच्यत इति न सिद्धान्तविरोध इति भावः । **टीकायाम्—सर्वस्य जगत ईष्ट इति** । नियमनादिसमर्थ इत्यर्थः । P. 82-15

---

१. अत्र कल्पतरौ 'वाक्यार्थेऽपि विप्रतिपत्तिरर्थाद्युक्तेत्याह' इति पाठो दृश्यते । 'अर्थादुक्तेत्याह' इति शोधनीयम् । 'वेदप्रामाण्यवादिनोऽपि औपचारिकं तत्पदार्थं अविवक्षितं वा मन्यन्ते' इति भामती । तत्र अविवक्षितमित्यस्य हुंफडादिशब्दवदर्थविवक्षा नास्तीति भावः, औपचारिकमित्यस्य अर्थविवक्षायामपि अर्थस्यारोपितत्वमिति भावः ।

सिद्धान्ते सर्वज्ञत्वादेरतात्विकत्वादाह—**नैयायिकेति। टीकायाम्**–**तत्पदार्थ आत्मेति।** स्वरूपमित्यर्थः। पक्षान्तराणामपि युक्तिवाक्यमूलकत्वे कथं तेषामप्रामाणिकत्वमित्यत आह—**आत्मा स भोक्तुरिति पक्षे इति। अनर्थं वेयादिति भाष्ये वाशब्दः चार्थ इति** व्याचष्टे, इत्याशयेनाह—**अनर्थं चेयादिति भाष्यार्थमाहेति**[1]। अनिष्टप्रसञ्जनात्मकत्वाभावात् वेदान्तमीमांसायाः कथं तर्कत्वमित्यत आह—**अर्थापत्तिरिति।**  P. 82-17  P. 83-1

**वेदप्रामाण्येति।** श्रुतिलिङ्गादीनां, श्रुत्यर्थादीनां, वचननामधेयचोदकानां च, शेषशेषिभावक्रमधर्मातिदेशबोधनमुखेन तत्तद्वेदवाक्यप्रामाण्यसमर्थनार्थत्वात् तत्परिशोधकत्वमिति भावः।  P. 83-4

ननु पूर्वमीमांसागतानां तर्काणां वेदान्तप्रामाण्ये तद्बोधितपदार्थानामङ्गाङ्गिभावादौ च भवतु वेदान्तमीमांसाया अपेक्षा, न्यायशास्त्रविचारितप्रत्यक्षादिप्रमाणप्रमेयलक्षणानां कथमपेक्षेत्यत आह—**स्मृत्यादिभिश्चेति।** 'स्मरन्ति च' 'बहिस्तूभयथापि स्मृतेराचाराच्चे'त्यादिसूत्रेषु प्रमाणत्वेन निर्दिष्टानां स्मृत्याचाराणां प्रामाण्याय मूलभूतश्रुत्यनुमाने, 'समाननामरूपत्वा'दित्यादिसूत्रनिर्दिष्टपदपदार्थस्वरूपनिर्णये, वेदस्वरूपनिर्णये चोपयोग इत्यर्थः।

---

१. 'अनर्थं वेयात्' इति भाष्यपाठः। तत्र वाशब्दः चार्थ इति द्योतयितुं 'अनर्थं वेति' इति प्रतीकधारणे कर्तव्येऽपि 'अनर्थं चेति' इति प्रतीकधारणं, अपि चेत्यनेन वाशब्दस्य चार्थकथनं च, कुर्वन् टीकाकारः अनर्थं वेयादिति भाष्यस्य, अनर्थं चेयादिति अर्थमाह—इति कल्पतरुवाक्यार्थः। न तु अनर्थं चेयादिति भाष्यस्य अर्थमाह—इति अर्थः। तस्यावक्तव्यत्वात्, अपिचेत्यादिटीकामवलोकयतां भाष्यार्थं टीकाकारो वदतीति ज्ञानसंभवात्, इति आभोगाशयः।

२. 'वेदप्रामाण्यपरिशोधकाश्च' इति चकारयुक्तः पाठः परिमले अनूदितः अथशब्दार्थविचारप्रकरणे। आभोगे चकाररहितपाठमभिप्रेत्य वेदप्रामाण्यपरिशोधकत्वं पूर्वत्र विशेषणतया योजितम्। अतः परिमले वेदप्रामाण्यपरिशोधकतर्कः स्वतन्त्र इत्यभिप्रायोऽवगम्यते।

३. कल्पतरौ 'तेन वेदविहिते' इत्यत्रत्यं तेनेति पदं व्यवहितस्य 'विचारितानो'त्यस्य परामर्शकम्। तथा च न्यायशास्त्रे विचारितत्वेनेत्यर्थः।

14

P. 83-6 लक्षणानामतर्कत्वात् कथं तर्कशब्देन ग्रहणमित्याशङ्क्य, लाक्षणिकोऽत्र तर्कशब्द इत्याह—सर्वे चैत इति।

॥ इति जिज्ञासाधिकरणम् ॥

---

## ॥ अथ जन्माद्यधिकरणम् ॥

### सू०॥ जन्माद्यस्य यतः ॥ २ ॥

ब्रह्म जिज्ञासितव्यमित्यादिना भाष्यकारेणैव सूत्रावतारणात् स्वयं तदवतारणं व्यर्थमित्याशङ्क्य, प्रथमसूत्रेण कृत्स्नस्यापि शास्त्रस्य सङ्गतिप्रदर्शनपरा P. 83-8 टीकेत्याह—अनन्तरेति। तर्हि कथं जन्मादिसूत्रस्यैव ग्रहणमित्यत आह—सकलशास्त्रमिति। अनया टीकया कः संबन्धो दर्शित इत्यत आह—विषयादीति। आदिपदेन प्रयोजनाधिकारिसंबन्धा गृह्यन्ते।

किंलक्षणं इति भाष्ये किंशब्द आक्षेपार्थक इति टीकाभिप्रायमाविष्करोति—प्रथमसूत्रेणेति। टीकायाम्—प्रधानप्रतिज्ञया तदुपयोगीन्यपि P. 83-11 प्रमाणादीनि प्रतिज्ञातानीत्युक्तम्। तदुपपादयति—मुमुक्षुणेति। अर्थादिति। प्रमाणादिविचारमन्तरेण स्वरूपविचारस्य पर्यवसानाभावादिति भावः।

कथमिति। मानाधीना मेयसिद्धिरिति न्यायेन प्रमाणस्य प्राधान्यात् तदेव प्रथमं विचार्यमिति भावः। लक्षणेन विभ[वि]क्तत्वेन ज्ञाते प्रमेये किमत्र प्रमाणमिति तत्सत्तानिश्चयाय प्रमाणापेक्षा। तथा च लक्षणेन स्वरूपमेव प्रथमं प्रतिपाद्यमिति परिहरति—अत आहेति। टीकासूचितौ विषय-

---

१. अथ-साधनचतुष्टयसंपत्त्यनन्तरं, अतः—स्वर्गादीनां क्षयिताप्रतिपादकात् ब्रह्मज्ञानस्य च परमपुरुषार्थताप्रतिपादकात् आगमात् साधनचतुष्टयसंभवात्, ब्रह्मजिज्ञासा-अखण्डाकारवृत्त्यभिव्यक्तब्रह्मस्वरूपात्मकज्ञानरूमपरमप्रयोजनेच्छा, अखण्डाकारवृत्त्यात्मकब्रह्मविषयकनिर्णयात्मकज्ञानरूपावान्तरप्रयोजनेच्छा च भवति। इति सूत्रस्य श्रौतोऽर्थः। ब्रह्मनिर्णयाय ब्रह्मविचारः कर्तव्य इति, आर्थिकोऽर्थः। इति भामत्यादिपरिशीलनेन लब्धोऽर्थ इत्यवगन्तव्यम्॥

२. 'एतस्य सूत्रस्य पातनिकामाह भाष्यकारः' इति वदन् टीकाकार एव स्वयं कृत्स्नशास्त्रपातनिकां पूर्वं दत्तवानिति सूचयति।

विशयावधिकरणाङ्गभूतौ दर्शयति—यतो वा इत्यादीति । यतो वा इत्यादि- P. 83-11
वाक्यं जगता तटस्थलक्षणेन, नित्यानन्दादिना स्वरूपलक्षणेन च, ब्रह्म लक्षयति, उत नेत्यर्थः ।

इतरव्यावृत्तस्वरूपविशेषज्ञानाय शाखाग्रं चन्द्रः, प्रकृष्टप्रकाशश्चन्द्रः, इतिवल्लक्षणद्वयस्याप्यावश्यकत्वात् । अत एव 'यतो वा' इत्यादिवाक्यस्य स्वरूपलक्षणज्ञापनसामर्थ्यस्फोरणाय भाष्यकारेण 'तस्य च निर्णयवाक्यमानन्दाद्ध्येवे'ति जगत्कारणस्यानन्दरूपताबोधकवाक्यसापेक्षत्वमुक्तम् ।

संशये बीजमाह—लक्षणस्येति । तद्धर्मत्वेन तत्तादात्म्येन वा प्रसिद्धं P. 84-1
हि लोके इतरव्यावृत्तिबुद्धिजनकतया तस्य लक्षणं भवति । जगच्च न तथा, अशुद्धादिरूपस्य तस्य तद्विरुद्धब्रह्मतादात्म्यतद्धर्मत्वयोरयोगात् । नित्यानन्दादेः स्वरूपेणाप्यप्रसिद्धत्वात् । तथाच जगतो लक्षणस्य लक्ष्यव्यावर्तकतावच्छेदकरूपेण प्रसिद्ध्यप्रसिद्धिभ्यां, नित्यानन्दादेश्च स्वरूपेणापि प्रसिद्ध्यप्रसिद्धिभ्यां संशयः इत्यर्थः । अधिकरणाङ्गं प्रयोजनमाह—पूर्वाधिकरणेति ।

आक्षेपे चेति । आक्षेपाधिकरणस्याक्षेप्याधिकरणसिद्धान्तफलेन, अप- P. 84-3
वादाधिकरणस्यापवाद्याधिकरणपूर्वपक्षफलेन, तदर्थचिन्तायाश्च यदर्था सा तत्फलेन

---

१. दिगन्तरगततारकादिव्यावर्तनाय शाखाग्रे चन्द्रः इति प्रथमतः तटस्थलक्षणं, ततः शाखोर्ध्वदेशे चन्द्रसमीपस्थिततारकादिचन्द्रेतरसकलव्यावर्तनाय प्रकृष्टप्रकाशश्चन्द्र इति स्वरूपलक्षणम्, तद्वदेव प्रथमतः असंभावितकारणभावेभ्यः जीवादिभ्यः ब्रह्म व्यावर्तयितुं जगज्जन्मादि तटस्थलक्षणं, ततः संभावितकारणभावप्रधानादिसकलव्यावर्तनाय सत्यज्ञानादिस्वरूपलक्षणं इति लक्षणद्वयस्याप्यावश्यकता इति बोध्यम् । इदञ्च परिमल-ब्रह्मविद्याभरणादिषु विशदमुक्तम् ।

२. लक्ष्यव्यावर्तकतावच्छेदकं रूपं पूर्वोक्तं तद्धर्मत्वं तत्तादात्म्यं वा इति ध्येयम् । परिमले 'स्वरूपलक्षणस्य प्रसिद्ध्यप्रसिद्धिभ्यां, तटस्थलक्षणस्य विरोधाविरोधाभ्यां च ब्रह्मलक्षकत्वालक्षकत्वसंशयः । तत्र स्वरूपलक्षणस्य प्रसिद्ध्यप्रसिद्धिमूलकलक्षकत्वालक्षकत्वसंशय एव कल्पतरौ मुख्यतया उक्तः' इत्युक्त्वा, तन्मुख्यत्वे कारणं च प्रदर्शितम् । आभोगे तु विरोधाविरोधरूपसंशायकमपि प्रसिद्ध्यप्रसिद्धिरूपसंशायकप्रदर्शकपदेनैव क्रोडीकृत्य तदप्रदर्शनप्रयुक्तन्यूनता परिहृता । इति आभोगकारस्य चातुरी । ब्रह्मधर्मत्वब्रह्मतादात्म्याभ्यां जगतोऽप्रसिद्धिप्रसिद्धी एव विरोधाविरोधाविति तत्संग्रहो बोध्यः ।

च, फलवत्त्वात्[1]। लक्षणस्य च लक्ष्यपरिच्छेदव्यतिरिक्तफलाभावात्, कृत्वाचिन्ताया अन्यत्रैव फलनिश्चयेन प्रकृते फलाभावनिश्चयाच्चेत्यर्थः।

ननु 'शाखाग्रं चन्द्रः' इत्यादौ प्रकाशविरुद्धेनापि शाखाग्रेण चन्द्रस्येव, विरुद्धेनापि जगता ब्रह्म लक्ष्यताम्। तथा च कथं टीकेत्यत आह—**सजातीयेति**। व्यावर्तकतावच्छेदकरूपेण ज्ञातस्यैव लक्षणत्वम्। शाखाग्रं च न चन्द्रस्य लक्षणमिति भावः। P. 84-5

तादात्म्येन तद्धर्मत्वेन वा प्रसिद्धस्यैव लक्षणत्वमिति नायमस्ति नियमः। सामीप्यादिसंबन्धेन शाखाग्रादेरपि चन्द्रादिलक्षकत्वेन, जगतोऽपि ब्रह्मजन्यतया तल्लक्षकत्वसंभवात्। इतरव्यावृत्तेरप्यर्थापत्तिविधया तेनैव ज्ञापनात्। यदि च व्यावृत्त्यनुमाने हेतोः पक्षवृत्तित्वेन भवितव्यमित्याग्रहः, तदानीमपि न दोष इत्याशयेनाह—न **जगदिति**[2]। उक्तमर्थं टीकारूढं करोति—**तदुत्पन्नत्वेनेति**। **लक्षणमिति**। व्यावृत्तिबुद्धिजनकमित्यर्थः। P. 84-9

अत्र भाष्यकृता जन्मादीति पदं समाहारान्यपदार्थकत्वेन, तद्गुणसंविज्ञानबहुव्रीहिरिति व्याख्यातम्। तदयुक्तम्। समाहारद्वारा समाह्रियमाणप्रतीतौ मतिक्लेशात्। श्रुतौ जन्मादीनामेव निर्दिष्टत्वाच्च। अथ **जन्मादीति सूत्रपदानुरोधादेवं** व्याख्यानं, **सूत्रकारो** वा किमित्येवं निरदिक्षदिति तत्रापि पर्यनुयोगात्। तथा स्थितिभङ्गरूपान्यपदार्थमात्रेणैव ब्रह्मलक्षणसंभवे समस्यमानपदार्थस्याप्यन्यपदार्थगर्भप्रवेशे नास्ति कारणमित्याशङ्कानिराकरणार्थं—**लाघवायेत्यादिटीका**। P. 85-1

तत्र समाह्रियमाणप्राधान्यविवक्षायां सूत्रे जन्मादयोऽस्य यत, इत्यक्षराधिक्येन गौरवापत्तेः, समुदायसमुदायिनोरनतिभेदेन श्रुतिविरोधाभावाच्च, **सूत्रकृता**

---

१. उदाहरणानि परिमले अवगन्तव्यानि॥

२. लक्षणं हि हेतूभूय लक्ष्ये पक्षे लक्ष्येतरव्यावृत्तिमनुमापयति। हेतुना च पक्षवृत्तिना भवितव्यम्। जगच्च लक्षणं हेतूभवत् यद्यपि जन्यजनकभावसंबन्धेन ब्रह्मणि संबध्नाति। तथापि जन्यजनकभावस्य वृत्त्यनियामकत्वात् तेन संबन्धेन जगत् न ब्रह्मणि वर्तते। अतः जगत्कारणत्वं ब्रह्मनिष्ठं ब्रह्मलक्षणतया आश्रीयते। अतो न दोष इति भावः॥

तथा निर्देशः कृत इति टीकाभिप्रायमाविष्करोति—जन्म आदिर्ययोरिति। P. 85-1
विशेषरूपेणेति। स्थितित्वभङ्गत्वरूपपदार्थतावच्छेदकरूपेणेत्यर्थः[१]।

सामान्यविवक्षयेति। समाहारप्राधान्ये समाह्रियमाणानां पदार्थताव-च्छेदकरूपतिरोधानेन तद्गतसामान्यरूपस्यैकस्यैव विवक्षितत्वादिति भावः[२]। अनेन च विशेषणेन, नपुंसकलिङ्गत्वेऽपि इतरेतरयोगद्वन्द्वे जन्मादीन्यस्येति सूत्र-गौरवं स्यादिति स्फोरयितुं टीकायां—नपुंसकग्रहणं तदेकवचनपरमपीति सूचितम्।

एवमपि स्थितिभङ्गयोरेव समाहारो विवक्ष्यताम्। तदानीमपि सूत्रसा-मञ्जस्याविरोधादित्याशङ्कां निराकर्तुं—तदुपपादनायेति टीका। तया कथमुक्त-शङ्कापरिहार इत्यतः तात्पर्यमाह—तत्रेति। तत्र सूत्रे योऽयं नपुंसकैकवचन- P. 85-3
प्रयोगः, तदर्हमित्यर्थः। अनेन तदुपपादनायेति टीकायां तच्छब्दस्य सूत्र-कृत्कृतनपुंसकैकवचनप्रयोगपरतया तदुपपादनाय योग्यं समाहारमाहेति टीका व्याख्याता। तथा च श्रुत्यर्थग्रन्थनार्थत्वात्सूत्रस्य, श्रुतौ च जन्मादीनां त्रयाणामपि निर्दिष्टत्वात् तदानुगुण्याय सूत्रे तद्गुणसंविज्ञानसमाश्रयणमिति भावः[३]।

---

१. अत्र कल्पतरौ जन्म आदिर्येषां जन्मस्थितिभङ्गानां ते जन्मादयः इत्यन्य-पदार्थो विशेषरूपेण विवक्ष्यते चेत् जन्मादयोऽस्येति निर्देशे गौरवं स्यात् इत्यपि उपलक्ष-णीयम्। स्पष्टत्वात् तत् नोक्तम्।

२. परिमले 'विशेषरूपेण' 'सामान्यविवक्षया' इति कल्पतरुस्थपदयोः 'स्त्रीलिङ्गपुंलिङ्गे लिङ्गविशेषौ, नपुंसकलिङ्गं तदुभयानुगतं सामान्यं न तु तृतीयं लिङ्गान्त-रम्' इति शाब्दिकमर्यादामाश्रित्य अर्थवर्णनं कृतम्। लिङ्गसामान्यविवक्षया नपुंसक-प्रयोगः कृतस्सूत्रे इति चार्थ उक्तः। आभोगे तु, विशेषरूपेण इत्यस्य स्थितित्वभङ्गत्वादि-विशेषधर्मपुरस्कारेणेति, सामान्यविवक्षया इत्यस्य च समाहारप्राधान्यात् स्थितिभङ्गाद्यनु-गतसमुदायत्वरूपधर्मविवक्षया नपुंसकप्रयोगः नपुंसकैकवचनप्रयोगस्सूत्रे कृत इत्यर्थो वर्णितः। नपुंसकप्रयोग इति टीकायां कल्पतरौ च विद्यमानं पदं नपुंसकैकवचनप्रयोग इत्यर्थकम् इत्युक्तमिति विशेषः॥

३. सूत्रे जन्मादिपदे तद्गुणसंविज्ञानो बहुव्रीहिः। जन्म आदिर्यस्य तत् इति विग्रहः, जन्मस्थितिभङ्गं समाहारद्वंद्वघटितं विशेष्यं अन्यपदार्थः, एवं सति श्रुति-निर्दिष्टानां जन्मादीनां त्रयाणां ग्रहणं भवति, जन्माद्यस्येति सूत्रनिर्देशे लाघवं च भवति। जन्म आदिर्येषां ते जन्मस्थितिभङ्गा इति विग्रहे इतरेतरयोगद्वंद्वघटितं विशेष्यं यदि

P. 85-5 सर्वस्य विशेषणत्व इति। अन्यपदार्थस्य सामस्त्येनैव विशेषणत्वे विवक्षिते समस्यमानपदार्थादन्यपदार्थस्य भेदाभावेन समासायोगादित्यर्थः। जन्मनश्चादित्वमित्यादिभाष्यं व्याचष्टे—अनादाविति। प्रतीतिमात्रमिति। 'अस्य महतो भूतस्ये'त्यादिप्रयोगादिति भावः।

'जनिकर्तुः प्रकृति'रित्यनेन सूत्रेण जायमानस्य या प्रकृतिः कारणं तद्वाचिनः अपादानसंज्ञया पञ्चमीविधानेन तादृशस्यैव श्रुतिगतस्य यत इत्यस्य सूत्रे निर्देशात् कारणनिर्देश इत्युक्तं भाष्ये। तच्च भाष्यं कारणत्वमेव लक्षणं, तच्च जीवाविद्याविषयीकृतस्य धर्म इति प्राक्तनग्रन्थेनैवार्थाद्व्याख्यातमि-
P. 85-10 त्याह—व्याख्यातमिति।

P. 85-11 लक्षणातिव्याप्तिरिति। लक्षणस्य ब्रह्मातीत्य, परित्यज्य कालादिषु व्याप्तिः ब्रह्मण्यसंभव इत्यर्थः। अतएव टीकायां प्रसिद्धेषु कालादिषु सत्त्वप्रसिद्धं ब्रह्म कारणमिति कुतः संभावनेत्युक्तम्।

ननु टीकायां क्रियाऽभावशब्दनिर्दिष्टयोरदृष्टशून्ययोः मध्ये यदृच्छा-
P. 85-12 स्वभावौ निर्दिष्टौ। तयोः को भेद इत्यत आह—स्वभाव एवेति। उत्पत्तेः प्रागत्यन्तासत्त्वमसिद्धमिति परिहरति—अत आहेति। बुद्धिसिद्धमित्येत-

---

गृह्येत, तदा जन्मादयोऽस्य इति निर्देशापत्त्या गौरवं, जन्म आदिर्ययोः स्थितिभङ्गयोरिति अतद्गुणसंविज्ञानबहुव्रीह्याश्रयणे त्रयाणामग्रहणात् श्रुत्यननुसरणं जन्मादी अस्येति निर्देशापत्त्या गौरवं च दोषद्वयं, जन्म आदिर्यस्य स्थितिभङ्गस्य इति समाहारद्वंद्वघटितविशेष्याश्रयणे सूत्रलाघवेऽपि त्रयाणामग्रहणात् श्रुत्यननुसरणं दोषः, जन्म आदिर्येषां जन्मस्थितिनिधनानां तानि जन्मादीनि इति विग्रहेऽपि जन्मादीन्यस्येति निर्देशे गौरवं, तस्मात् भाष्योक्ता पूर्वं प्रदर्शिता रीतिरेव साध्वी इति बोध्यम्॥

१. 'अस्य महतो भूतस्ये'ति ब्रह्मणि महाभूतशब्दिते इदंशब्दः प्रयुक्तः श्रुतौ, न च ब्रह्म प्रत्यक्षं, अतः प्रतीतिमात्रं सन्निधिरिति ज्ञेयं, ब्रह्मणश्च पूर्ववाक्ये सन्निधिरस्तीति तत्रेदंशब्दः प्रयुक्तः इति भावः॥

२. अत्र 'बुद्धिसिद्ध'मित्यादिटीकावाक्ये, तद्योजनापरे 'यदस'दित्यादिकल्पतरुवाक्ये च, कस्मिन्नपि कोशे केनाप्यशोधितं, परं शुद्धवद्भासमानं, अवश्यं शोधनीयश्चाशुद्धं लेखकप्रमादागतमस्ति। तद्यथा—टीकायां—'यथाहुः—'बुद्धिसिद्धं तु न तदसत्' इति पाठो दृश्यते, अत्र नञ्पदं लेखकप्रमादादागतम्। 'बुद्धिसिद्धं तु तदसत्' इत्येव शुद्धः पाठः। तद्विवरणरूपकल्पतरुवाक्ये 'सत्कार्यवादिन आहुः' इति पाठो दृश्यते। अत्र नञ्पदं लेखकप्रमादात् गतम्। 'असत्कार्यवादिनः आहुः' इत्येव शुद्धः पाठः।

किं भामत्यां 'न तदसत्' इति लेखकप्रमादागतनञ्सहितपाठं विलोक्य तस्य शुद्धिभ्रान्त्या कल्पतरौ शोधकम्मन्यलेखकेन नञ्पदपरित्यागेन 'सत्कार्यवादिनः' इति शोधनपूर्वकं लिखितम्। किं वा कल्पतरौ लेखकप्रमादगतनञ्रहितपाठं विलोक्य तस्य शुद्धत्वभ्रान्त्या भामत्यां शोधकंमन्यलेखकेन नञ्पदप्रक्षेपेण 'न तदसत्' इति शोधन-पूर्वकं लिखितम्। कस्य प्रथमतो भ्रान्तिरिति न ज्ञायते। एवं परस्परभ्रान्तिमूलया परस्परभ्रान्त्या ग्रन्थद्वयेऽपि अशुद्धः पाठः लेखकाभ्यामापादितः। दुर्निवारतादृशभ्रान्ति-मूलाशुद्धपाठसंशोधने विदुषामपि धैर्यं न भवति। अहो लेखकप्रमादस्य अन्यादृशो महिमा। तदलं प्रकृतमनुसरामः।

'बुद्धिसिद्धं तु तदसत्' इति तु अक्षपादीये न्यायसूत्रे चतुर्थाध्याये प्रथमान्हिके (फलपरीक्षायां) पञ्चाशत्तमं सूत्रम्। तस्य वात्स्यायनीयं भाष्यम्—'यत् पुनरुक्तं प्रागुत्पत्तेः कार्यं नासत् उपादाननियमादिति। इदमस्योत्पत्तये समर्थं न सर्वमिति प्रागुत्पत्तेर्नियत-कारणं कार्यं बुद्ध्या सिद्धं, उत्पत्तिनियमदर्शनात्। तस्मादुपादाननियमस्योपपत्तिः। सति तु कार्ये प्रागुत्पत्तेः, 'उत्पत्तिरेव नास्तीति'। इति।

तत्र न्यायवार्तिकम्—यत् पुनरेतत्—नासदुपादाननियमादिति—बुद्धिसिद्धं तु तदसत्—नायं सत्वादुपादाननियमः - अपि तु सामर्थ्यात्। इदमनेन शक्यं निर्वर्तयितुं नेदमनेनेत्येवं बुद्धिसिद्धं कार्यं कृत्वा यत् यस्योत्पत्तये समर्थं तत् तस्योपादीयते—न सर्वं सर्वस्य - न सर्वस्मात् सर्वमुत्पद्यमानं दृष्टमिति।

भामतीटीकाकृता वाचस्पतिमिश्रेणैव कृतायां न्यायवार्तिकतात्पर्यटीकायां—'यच्चोक्त-मुपादाननियमादिति—तत्र यदि पुरुषस्य उपादाननियमः, पटार्थी तन्तूनेवोपादत्ते न वीर-णम्, कटार्थी वीरणमिति। ततः तदुपादानानां तत्र तत्र कार्ये सामर्थ्यपरिज्ञानात्। तच्च सामर्थ्यमानुमानिकं, तदिदमुच्यते—बुद्धिसिद्धं तु तदसदिति। तदसत् भाविकार्यं अनेनैव कारणेन जन्यते नान्येन इत्यनुमानात् बुद्धिसिद्धमेवेत्यर्थः। अथासत्कार्यपक्षे तन्तव एव पटस्योपादानं न वीरणादीत्ययं नियमः न स्यादिति ब्रूषे, तदयुक्तम्—अस-त्त्वाविशेषेपि स्वकारणादुत्पन्नं किञ्चिदेव किञ्चित् कार्यं जनयितुं समर्थं नान्यदित्ययं स्वभाव-विशेषादुपपद्यत इति।

एवं न्यायसूत्रतद्भाष्यवार्तिकतात्पर्यटीकापर्यालोचनया असत्कार्यवादिनैयायिकसि-द्धान्तानुसारि सूत्रमिदमिति स्पष्टं भासते, तत्र च नञ्पदं प्रक्षिप्तमित्यत्र न संशय-लेशोपि। अस्य च असत्कार्यवादिवाक्यत्वात् असत्कार्यवादिन आहुरित्येव कल्पतरावपि शोधनीयमित्यत्रापि न संशयलेशः। किञ्च 'यदसदिति प्रसिद्धं तत् बुद्ध्यारूढरूपेण सदेव' इति कल्पतरुवाक्यालोचनेऽपि असत्कार्यवादिनामियमुक्तिरिति स्पष्टं भाति, सत्कार्यवादिमते घटादेः बहिरपि मृदादौ सूक्ष्मरूपेण सद्भावात् बुद्ध्यारूढरूपेण सत्त्ववर्णन स्यानावश्यकत्वात्। असत्कार्यवादिमते तु उत्पत्तेः पूर्वं घटादेर्बहिस्सत्वाभावात् तदुपप-द्यते। तुरङ्गशृङ्गस्य तु अत्यंतासंभावितस्य बुद्ध्यारूढरूपेणाप्यसत्वात् न कर्मत्वनिर्देश-योग्यता इति बोध्यम्।

P. 86-3 द्वाक्यं योजयति—यदसदिति। टीकायां–ग्रहा–आदित्यादयः। टीकायाम्–सूदाः–पाककर्तारः।

P. 86-5 इतरथेति। कर्तुः फलाभावे, कष्टात्मके कर्मणि विधिना तस्य प्रेरणानुपपत्तेरित्यर्थः। तथाच न्यायानुगृहीतप्रबलविध्यनुरोधेन, 'यस्मिन् जात' इत्याद्यर्थवादवाक्यं, पुत्रे जाते सति य एतामिष्टिं निर्वपति स पूत, इत्येवंपरतया नेयमिति भावः। सूत्रं योजयन् सिद्धान्तं दर्शयति—यस्मिन् जात इति। प्रीत्युत्पत्तेरिति। पशुहिरण्यादिगतातिशयादिव पुत्रगतातिशयादपि पितुः प्रीत्युत्पत्तेः, तदर्थमेव च प्रेरणासंभवात् न विधिविरोध इति भावः।

भाष्यगतविशेषणबलेन टीकानुक्तमपि पक्षद्वयं निराकृतमित्याह—

P. 86-6 अत्रानेकेत्यादिना। टीकायाम्—इतरेतरद्वन्द्व इति। ततः प्रतिनियतपदेन कर्मधारयः। ततश्चाश्रयपदेन षष्ठीतत्पुरुषश्चेत्यभिप्रेत्य, तद्दर्शितम् देशादीनि चेत्यादिटीकया। शेषमिति। वाक्यशेष इत्यन्तं भाष्यं वाक्यशेष इत्यन्तायां टीकायां विशदमित्यर्थः।

P. 87-1

ननु भाष्यटीकयोः—कथं जगत्कारणत्वं ब्रह्मणो लक्षणमुक्तम्? सजातीयविजातीयव्यवच्छेदकस्यैव लक्षणत्वात्। ब्रह्मसजातीयस्य च कस्य चिदनभ्यु-

---

मण्डनमिश्रप्रणीते विधिविवेकेऽपि असतः कार्यस्य उत्पत्तिनिरूपणप्रसङ्गे असतः कार्यस्य कर्मकारकत्वं कथमित्याक्षिप्य, नास्तीत्युक्त्वा, कथं तर्हि घटं करोतीति प्रयोग इति प्रश्ने, 'उपादेयश्रुत्या उपादाननिर्देशात्' इति घटवाचकपदेन लक्षणया मृदादेरुक्तिरिति प्रथममुक्त्वा, पश्चात् 'बुद्धिस्थस्य वा क्रियासूपयोगात् युक्तो निर्वर्त्यस्य कारकभावः' इति उक्तम्।

लघुमंजूषायामपि भट्टनागेशः—'गौतमोऽपि असत एव उत्पत्तिकर्तृत्वं कथमित्याशङ्क्य, सूत्रितवान् 'बुद्धिसिद्धं तु तदसत्' इति। तत् कार्यं उत्पत्तेः प्राक् नाशोत्तरं च असदपि बुद्धिविषयतया सिद्धमिति तदर्थः। जन्मादिसूत्रे वाचस्पतिरपि आह—चेतनो हि नामरूपे...घटं करोतीति। यथाहुः 'बुद्धिसिद्धं तु तदसत्' इति।' इति प्रकृतभामतीवाक्यमेव नञ्रहितमेव अनूदितवान्। तस्मात् 'बुद्धिसिद्धं तु तदसत्' इति 'असत्कार्यवादिन आहुः' इति च भामतीकल्पतरुवाक्ये शोधनीये इति सिद्धमित्यलम्।

१. 'देशादीनि च तानि प्रतिनियतानि च' इति टीकापाठमभिप्रेत्येदम्। प्रतिनियतानि च तानि देशादीनि च' इति तु शुद्धः टीकापाठः। प्रतिनियतपदस्य विशेषणत्वेन देशादिपदापेक्षया पूर्वत्वात्।

पगमात् । ब्रह्मणि जात्यभावेन तद्विलक्षणजातियोगिनो विजातीयस्याप्यभावात् । अत आह—तदेवमिति । जगत्प्रकृतित्वं कर्तृ, प्रधानादेः सकाशात् ब्रह्म व्यवच्छिनत्तीत्यर्थः । सदृशविसदृशव्यवच्छेदकत्वेनैव लक्षणत्वम् । तच्च पारमार्थिकं भ्रमपरिकल्पितं वेति न कश्चिद्विशेष इत्याशयेनाह—परभ्रमपरिकल्पितेति । ब्रह्मसजातीयत्वं दर्शयितुं—जगद्योनीत्युक्तम् । विजातीयादिति । ब्रह्मणः कारणत्वादेव हेतोः[1] कार्यत्वाभावात् [विजातीयात्] कार्यरूपात् प्रपञ्चादुक्तविधजगत्प्रकृतित्वं ब्रह्म व्यवच्छिनत्तीत्यर्थः । P. 87-2

त्रीणि लक्षणानीति । स्वरूपाणीत्यर्थः । सांख्यप्रक्रियेति । सेश्वरसांख्यानां योगिनां प्रक्रियेत्यर्थः । ननु धर्मिणो हीत्यादिटीकायां धर्मलक्षणः परिणामः कटकमुकुटादिरित्युक्त्वा, तस्योत्पत्तिरित्युक्तम् । तदयुक्तम् । उत्पत्त्युत्पत्तिमतोरभेदायोगादित्यत आह—तत्र निरूप्यमाण इति । ततश्च हाटकादेः धर्मिणो धर्मलक्षणः परिणामः कटकमुकुटादिरिति योऽयं सांख्यव्यवहारस्तत्र हाटकादुत्पन्ने कटकादौ प्रयुज्यमानस्य परिणामशब्दस्य वाच्यस्वरूपे विचार्यमाणे आकृत्यधिकरणन्यायेन तस्य तत उत्पत्तिरेव तत्परिणामशब्दालंबनमिति टीकार्थो बोध्यः । एवं च कटकादिः परिणामः इति प्रयोगो लाक्षणिक इति भावः । P. 87-6

कटकादिकार्यस्येति । अत्रापि कटकादेर्वर्तमानत्वादिरूपो यो लक्षणपरिणामः[2] सांख्याभिमतः । तत्रापि परिणामशब्दालंबनमुत्पत्तिरेवेति टीकार्थो बोध्यः । सोऽपीत्यनेन कटकादेरपीत्यपिशब्दस्य लक्षणपरिणामोऽपीत्यन्वयो दर्शितः । नवपुराणत्वादिरवस्थापरिणामस्सांख्याभिमतः । तस्यापि स्वरूपं प्रकटयति—अतीतादेरेवेति[3] । टीकान्वयः प्राग्वत् । P. 87-7 P. 87-8

---

१. परिमले 'कारणत्वादेव इति पाठे ब्रह्म व्यवच्छिन्नम्—इत्यध्याहारः । कारणत्वमेव इति पाठे ब्रह्म व्यवच्छिनत्ति इत्यनुषङ्गः' इत्युक्तम् । आभोगे कारणत्वादेव इति पाठ एव अध्याहारं विनैव तदपेक्षया लघुभूतेनानुषङ्गेनैव निर्वाहः कृतः । ब्रह्मणः कारणत्वं तस्मात्कार्यस्य विजातीयत्वसाधने हेतूकृतम् ।

२. 'लक्ष्यतेऽनेनेति लक्षणं कालभेदः, तेन हि लक्षितं वस्तु वस्त्वन्तरेभ्यः कालान्तरयुक्तेभ्यः व्यवच्छिद्यते' इति योगवाचस्पत्ये ।

३. योगवाचस्पत्ये 'वर्तमानक्षणापन्नस्य गवादेः बाल्यकौमारयौवनवार्धक्यमवस्थापरिणामः । घटादीनामपि नवपुरातनता अवस्थापरिणामः' इत्युक्तम्, तथा च नवपुराण-

**ननु टीकायां—तच्च न मूलकारणे**त्यादिना नैरुक्तवाक्यस्य मूलकारणब्रह्मप्रतिपादकत्वं प्रतिषिध्यते। तत्र को हेतुरित्याशङ्क्य, पौरुषेयं वाक्यं मूलप्रमाणसापेक्षं सदेव प्रमापकम्, प्रकृते च न 'यतो वा' इत्यादिश्रुतिर्मूलं, तस्या उत्पत्त्यादिविकारत्रयमात्रपरत्वात्। नापि प्रत्यक्षम्। महाभूतेषु ब्रह्मजन्यत्वस्य चक्षुराद्ययोग्यत्वादित्याह—**पुरुषाणामिति**। P. 87-10

तर्हि स्मृत्यधिकरणन्यायेन तन्मूलश्रुत्यनुमानमस्त्वित्याशङ्क्य, निराकरोति—**न चेति**[1]। **अन्यथाप्युपपत्तेरिति**। ततश्च यास्कादीनां वृक्षादिगतषड्भावविकारप्रत्यक्षस्यैव मूलत्वसंभवान्न मूलान्तरानुसन्धानं कल्पयितुं शक्यम्, 'हेतुदर्शनाच्चे'ति न्यायविरोधादिति भावः।

**तन्मा शङ्कीत्यादिभाष्ये योत्पत्तिरि**त्यादिनोत्पत्त्यादीनां प्रसिद्धिरुक्ता, तां प्रकटयति—**परमकारणादिति**। न जगत उत्पत्त्यादयो वक्तव्या इत्यभिप्रेत्य, ते सूत्रेणोच्यन्ते। येनोत्पत्तिमात्रे निर्दिष्टे, उत्पन्नस्य स्थितिभङ्गावश्यंभावेन नान्तरीयकतयैव तत् गम्येत। किन्तु जिज्ञास्यत्वेन निर्दिष्टस्य ब्रह्मणो लक्षणं जगदुपादानत्वं वक्तव्यमिति, तच्च लक्षणं उत्पत्तिमात्रसूत्रणे न सिद्ध्यतीत्युक्तं त्रिभिरित्यादिटीकायाम्। तत्र कारणत्वमात्रस्यैव लक्षणत्वसंभवे किमुपादानत्वेनेत्याशङ्क्य, ब्रह्मव्यतिरेकेण न प्रपञ्चस्य सत्तेति स्फोरयितुं इत्यभिप्रेत्य, टीकाशयमाह—**उत्पादकत्वमिति**। अमुमेवार्थं शङ्कान्तरनिराकरणेन दर्शयति **नन्वेवमपीत्यादिना**। P. 87-12, P. 87-15

---

त्वादिः वर्तमानत्वे, अतीतत्वातीततरत्वादिः अतीतत्वे, अवस्थापरिणाम इति ज्ञायते। कल्पतरौ तु नवपुराणत्वाद्यापत्तिरूपावस्थापरिणामस्य अतीतत्वादिरूपत्वमुक्तं विरुद्धमिव भाति। तत् वर्तमानत्वे यथा नवपुराणत्वाद्यवस्था, तद्वत् अतीतेऽपि अतीतत्वातीततरत्वादिरूपा नवपुराणत्वाद्यवस्था वक्तुं शक्यते इति भावेन उक्तमिति समाधेयमिति भाति।

१. यद्यपि कल्पतरौ न चेत्यादिग्रन्थे मूलकारणद्रष्टृत्वमेव यास्कादीनामनुमेयमित्याशङ्कितम्। न तु तेषां मूलभूतश्रुत्यनुसंधानमाशङ्कितम्। अत एव परिमले 'अतीन्द्रियार्थद्रष्टृत्वमपि पुरुषगौरवादनुमेयमित्याशङ्क्याह—न चेति' इत्येव स ग्रन्थोऽवतारितः। तथापि तमर्थं सिद्धवत्कृत्यैव कल्पतरुग्रन्थस्य उपलक्षणतया यास्कादीनां मूलभूतश्रुत्यनुसंधानशङ्कापरत्वमपीत्यभिप्रेत्य आभोगे अन्यथा स ग्रन्थोऽवतारितः। परिमले तु 'एतेन यास्कवचनस्य स्मृतित्वान्मूलश्रुत्यनुमानमपि निरस्तं, दृष्टमूलाभाव एव तदनुमानादिति भावः' इति स्वातन्त्र्येण सा शङ्का निवारिता॥

श्रौतप्रतिज्ञायां ब्रह्मप्रमितेः फलत्वालाभात् तल्लाभार्थं आर्थिकप्रतिज्ञापरत्वेन व्याचष्टे—**ब्रह्मज्ञानायेति**। लक्षणेनापि ब्रह्मप्रमितिसंभवात् कथं संभावनामात्रमुक्तमित्याशङ्क्य, किं लक्षणविधयैव तत्प्रमापकं? उतानुमानविधयेति, विकल्प्य नाद्य इत्याह— **लक्षणं हीति**। न द्वितीय इत्याह—**कार्येण चेति**। एकत्वासिद्धौ तन्मूलकं सर्वज्ञत्वादिकमपि न सिद्ध्यतीत्याह—**तस्य यदेति**। P. 88-1 P. 88-3

केवलस्यानुमानस्य तन्निश्चायकत्वाभावेऽपि लाघवतर्कानुगृहीतस्य तन्निश्चायकत्वं स्यादित्याशङ्क्य, तदानीमप्युत्कटकोटिकसंशयरूपतदेकत्वसंभावनामात्रहेतुत्वादित्याह—**अयमेवेति**। **[१]संभावनासंभवन्निति**। संभावनारूपो भवन्नित्यर्थः। तर्कस्य प्रमाणानुग्राहकस्य कथं संशायकत्वमित्याशङ्क्य, दृष्टविरुद्धत्वेन लाघवतर्कस्य दौर्बल्यमाह—**विचित्रेति**।

तर्हि दुर्बलेन तर्केण कथं संभावनापीत्यत उक्तम्—**प्रायेणेति**। स्वप्नदृष्टानां मायाविनिर्मितानां च तेषां तददर्शनादिति भावः। तथा च दृष्टविरुद्धत्वादिभिः आकुलीकृतस्तर्कः श्रुतिरूपप्रबलप्रमाणावष्टंभे सत्येव निश्चायक इत्याशयेनाह—**एवं चेति**। तर्हि प्रमाणबलादेव वस्तुनो यावत्स्वरूपप्रमितिसंभवात् लक्षणकथनं व्यर्थमित्येतदधिकरणवैफल्यं प्राप्तमित्याशङ्क्य, संभावनायाः प्रमाणप्रवृत्त्युपजीव्यत्वात् तदर्थं लक्षणमित्याशयेनाह—**टीकाकारः-यथाहुरिति**[२]। न्यायसाम्येन शब्दादीनामपीदं तुल्यमिति भावः। P. 83-5

ननु **एतदेवेति** भाष्ये, संभावनाहेतुत्वेनोक्तमेव जगज्जन्मादिकमनुमानविधयैव कारणस्वरूपज्ञापकमिति **मन्यन्त इत्युक्तम्**। तावता कथं **युक्तीनां संभावनाहेतुत्वदृढीकार** इत्यत **इत्थं नामे**त्यादिटीकाभिप्रायमाह—**नैयायिकैरपीति**। [३]न्यायैकप्रयोजनकानामपि वैशेषिकादीनां जगज्जन्मादिविषयासु युक्तिषु प्रमाणत्वभ्रमदर्शनेन तासां प्रमाणाद्भेदः सूक्ष्म इत्यर्थः। P. 83-6

---

१. 'संभावना समभवत् इत्यपि' कल्पतरौ पाठः दृश्यते॥

२. अत एव 'मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात्' इत्यभियुक्ताः लक्षणेन लक्ष्यवस्तुनि संभावनाबुद्धौ प्रथमतो जातायां पश्चात् प्रमाता प्रमातुमुद्युक्तः प्रमाणेन तदवगच्छति इति वदन्ति। 'लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः' इत्यपि संभावनाबुद्धिजनकस्य लक्षणस्य प्रमाणतः प्राक् निर्देशेन अमुमर्थं सूचयन्ति॥

३. वैशेषिकशैवादीनपि आनुमानिकेश्वरवादिनः सङ्ग्रहीतुं नैयायिकपदव्युत्पत्तिप्रदर्शनम्॥ प्रमाणतदाभासविवेचनकुशलैरपीत्यपिशब्दार्थः॥

**टीकायाम्**—**इच्छन्तीत्यनेन भाष्ये मन्यन्त** इत्यनुमानस्य कारणमात्र-संस्पर्शित्वेऽपि तत्स्वरूपविशेषासंस्पर्शेन तन्निश्चये नास्ति सामर्थ्यमिति सूचित-मित्युक्तम्। अमुमेवार्थं प्रकटयितुं, सूत्रं लक्षणमुखेनानुमानप्रमाणपरमप्यस्त्विति भाष्ये शङ्का। तस्या ब्रह्मणो मानान्तरागोचरत्वप्रतिपादनपरेणोत्तराधिकरणेनैव परिहारादिह तदाशङ्कापरिहारावनवसरदुस्स्थौ, इत्याशङ्कां निराकर्तुं **टीकायां**—

P. 88-8 **सुहृद्भावेनेत्युक्तम्**। तत्र सुहृद्भावेन कथनस्य प्रयोजनमाह—**उत्तराधिकरणेति**। अन्यथा, शङ्काकालुष्यादेतदधिकरणार्थोऽपि न बुद्ध्यारूढो भवेदिति भावः।

ननु ब्रह्मणो वेदान्तैकगम्यत्वे सिद्धे **वेदान्तवाक्यग्रन्थनार्थता सूत्रा-णाम्**। तदभावे तत्र प्रमाणं भवदनुमानमपि ग्रथ्यतां को दोष इत्यतः परिहार-तात्पर्यमाह—**अत्रेति**। **प्रागुक्तयुक्त्या चेति**। **कार्येण च कारणं किञ्चि-दित्यादिकयेत्यर्थः**। **अध्यवसानशब्दस्य** प्रसिद्धार्थपरित्यागेन व्याख्याने

P. 89-1 बीजमाह—**वाक्यार्थेति**। **शाब्दबोध इति**। [1]निदिध्यासनसहितश्रवणमनन-रूप इत्यर्थः। त्रयाणामपि विचाराधीनत्वेन **विचारणाशब्देन** ग्रहणमिति भावः। **परस्तादवगतिरेवेति**। वृत्तिरित्यर्थः[2]।

अवगतिरिह न वृत्तिसाक्षात्कारः। किन्तु स्वरूपाभिव्यक्तिः। ततश्च

P. 89 2 युक्तमविद्याद्वयोच्छेदस्य मध्यवृत्तित्वमित्याशयेनाह—**नायमिति**। नन्ववगतेः स्वरूपावगतिपरत्वे मध्यवर्तिनो वृत्तिसाक्षात्कारस्यैवाध्यवसानशब्दार्थत्वसंभवात्

---

१. उपासनाशब्दो मननस्यापि संग्राहक इति भावः॥

२. अवगतेः वृत्तिरूपत्वात् तत्पूर्वं निदिध्यासनात् परं मध्ये ज्ञानं वा अविद्योच्छेदो वा अध्यवसानशब्दार्थो न संभवतीति भावः॥

३. भाष्ये अवगतिशब्दः न वृत्तिसाक्षात्कारपरः, तस्य अध्यवसाननिर्वृत्तत्वाभावात्। अध्युपसृष्टेऽप्ययमवसानशब्दः समाप्तिवाची न ज्ञानवाची-समाप्तिश्चाविद्यानिवृत्तिः। तया च निर्वृत्तिः अभिव्यक्तिः स्वरूपसाक्षात्कारस्यैव भवति। अतः स एवावगतिशब्दार्थः। आभोगे स्वरूपाभिव्यक्तिरिति अभिव्यक्तस्वरूपमित्यर्थः। तस्यैव अवगतिशब्दार्थत्वात्। अन्यथा निर्वृत्तिशब्दार्थस्य आविर्भावस्य टीकोक्तस्य अभिव्यक्तावनन्वयादिति बोध्यम्॥

४. कल्पतरौ अध्यवसानशब्दः संस्कारसहितलयविक्षेपाविद्यासमाप्तिवचनः इत्युक्तम्। तदर्थः—लयः मूलाज्ञानं, विक्षेपः भ्रान्तिः, तद्रूपा या अविद्याद्वयी संस्कारसहिता-यास्तस्याः समाप्तिवाची - इति। विचारस्याध्यवसानमिति टीकायां षष्ठ्यर्थः संबन्धः वृत्ति-साक्षात्कारद्वारा विचारजन्यत्वरूपः परंपरासंबन्धः॥

किमर्थं अभावपरत्वेन व्याख्यानमित्याशङ्कां निराकर्तुं ततो हीति **टीका**। तया अविद्याद्वयोच्छेदस्य साक्षादेव स्वरूपावगतिनिर्वर्तकत्वात् स एवाध्यवसान-शब्दार्थः, नतु वृत्तिः व्यवधानादित्येवं परिहारो वर्णित इति दर्शयति—**वृत्तिरूपेति**। P. 89-1

ननु केवलस्याप्यनुमानस्य कारणस्वरूपज्ञापने सामर्थ्याभ्युपगमात्, कथं तदुपजीवि चेत्यपि इति **टीका**?—अत आह—**वस्तुविशेषेति**[१]। **टीकायां**-मननस्वरूपकथनमनवसरदुस्स्थमित्यत आह—**यदुक्तमिति**। ननु शब्दसह-कृतयापि युक्त्या यदि मननरूपा प्रमा, तर्हि प्राप्तं ब्रह्मणो मानान्तरगोचरत्व-मित्याशङ्क्य, शब्द एव बोधनसमर्थत्वात् प्रधानम्। युक्तिस्तु सहकारिणी। अतो न दोष इत्याह—**कारणस्येत्यादिना**। P. 89-4 P. 89-9

**स्यादेतदित्यादिटीकायां** ब्रह्म न पुरुषबुद्धिविषयः, वेदतात्पर्यविषयार्थ-त्वात्, धर्मवदित्यभिप्रायेण शङ्का, अनुभवायोग्यत्वमुपाधिरिति परिहारः। **अफल-त्वादिति**। करणस्य फलवत्त्वनियमादिति भावः[२]। **धर्मजिज्ञासायामपि** प्रत्यक्षादीनामस्त्युपयोगः, यतस्तत्सामग्र्यां **व्यापार** इति **टीकान्वयमभिप्रे-त्याह—धर्मजिज्ञासायामिति**। P. 89-12

**अनुभवार्था चेति** चशब्दः किंचार्थ इति व्याचष्टे—**न केवल-मिति**। भाष्ये उपरिश्रुतेन (तस्य) ब्रह्मज्ञानस्ये (त्यस्य) त्यनेन नानु-भवावसानत्वादित्यस्या (नेना) न्वयः, ब्रह्मज्ञाने अनुभवावसानत्वकथन-स्यानवसरत्वात्। अतः प्रस्तुतब्रह्मजिज्ञासान्वय एवेत्यभिप्रेत्य **टीकायां—ब्रह्मजिज्ञा-सेत्युक्तम्**। ततश्च भाष्यमित्थं योजितमासीदित्याशयेनाह—**ब्रह्मजिज्ञासाया-मिति**[३]। अवसानपदसूचितं वैषम्यं प्रकटयति—**धर्मजिज्ञासायां त्विति**। P. 90-1 P-90-2

---

१. कार्यलिङ्गकानुमानेन कारणं किञ्चिदस्तीत्येतावन्मात्रमनुमितम्। तच्च कारणं एकं सर्वज्ञत्वादिधर्मकं प्रत्यगभिन्नं इत्यादिवस्तुस्वरूपविशेषनिर्धारणं वेदान्तोपजीवि। इति भावः॥ २. अत्र टीकायां 'प्रमाणफल'मिति 'प्रमाणस्य फल'मिति शोधनीयं, तस्य प्रमाणस्य इत्यन्वयः। अन्यथा अनन्वयात्। भाष्ये श्रुत्यादय इत्यादिपदेन इति-हासादिः गृह्यते इति भामती। लिङ्गादिरिति तु पञ्चपादिका।

३. पञ्चपादिकादिटीकासु तु अनुभवावसानत्वादित्यस्य ब्रह्मज्ञानस्येत्यनेनान्वय उक्तः। भूतवस्त्वित्यत्र भूतपदं सिद्धत्वपरं सत् सिद्धे वस्तुनि अनुभवसंभवसमर्थकं, चशब्दः समुच्चयार्थकः इति च उक्तम्।

वृत्तेरवसानत्वायोगमाशङ्क्य, **टीकायां—अनुभव इत्यादिना** स्वरूपाभि-
P. 90-3 व्यक्तिरनुभव उच्यत इत्याशयेनाह—**इहानुभव इति**। **तदनुभव एव त्वित्यत्र** स्वरूपानुभवः प्रस्तुतोऽपि न विवक्षितः। ब्रह्मणस्तद्विषयत्वनिराकरणसमर्थनयोरसङ्गतत्वापत्तेः। अतः वृत्तिद्वारा स्वरूपानुभवाशक्यत्वप्रतिपादनपरा **टीकेत्याह—तदनुभव एव त्वित्यत्रेति**।

**टीकायाम्—अयोग्यत्वादिति**। असङ्गोदासीनस्वभावस्येति शेषः। ब्रह्मज्ञानस्य भूतवस्तुविषयत्वसंभवाद्वृत्तेः शक्यत्वे तद्द्वारा स्वरूपानुभवोऽपि शक्य एव। ततश्च युक्तमनुभवावसानत्वं जिज्ञासाया इत्येवमभिप्रायेण **भाष्येणैव** परिहृतमित्युक्तमत **आहेति टीकया**। तत्र भाष्ये ब्रह्मणो विषयत्वमात्रे वक्तव्ये तस्य **भूतत्वकथनं** फलत्वसूचनाय। तदपि जिज्ञासायाः स्वरूपानुभवावसानत्व-
P. 90-5 समर्थनार्थमित्याशयेनाह—**भाष्य इति**। परमपुरुषार्थवचन इत्यर्थः। अस्य हेतोः शङ्कोत्तरत्वेन चशब्दस्य समुच्चयार्थत्वासंभवादाह—**चशब्द इति**।

असङ्गोदासीनस्यापि कल्पितं विषयत्वं संभवतीत्युक्तं **टीकायाम्—व्यतिरेकेत्यादिना**। तत्र व्यतिरेकमात्रविषयकः साक्षात्कार इति भ्रमं वारयति—
P. 90-6 **व्यतिरेक इति**। **विकल्परूप इति**। कल्पितरूप इत्यर्थः[1]। **टीकायाम्—न त्वेवं धर्मज्ञानमिति**। धर्मजिज्ञासेत्यर्थः। न केवलं धर्मानुभवस्यापुरुषार्थत्वम्। अपि तु तदनुपयोगोऽपीत्याह—**टीकायाम्—अनुष्ठानसाध्यत्वादिति**। न केवलमनुपयोगः, अशक्यश्चेत्याह—**टीकायां—न चार्यमिति**।

**टीकायां—कर्तुमन्यथा वा कर्तुं इत्यस्योदाहरणमाहेत्यनेन भाष्ये अन्यथा कर्तुमित्यत्र कर्तुमित्यस्य** अनुषङ्गो दर्शितः। तत्र हेतुमाह—

---

१. कल्पितत्वमेवोपपादयितुं कल्पतरौ, वृत्त्युपहितस्यैव वृत्तिविषयत्वं न निरुपाधिकस्येति प्रथमसूत्रे टीकोक्तं स्मारितम्। तेन धर्मिण एव उपहितस्य कल्पितत्वे तद्धर्मस्य विषयत्वस्य कल्पितत्वं किमु वक्तव्यमिति उपपादितमिति बोध्यम्। अन्यथा विषयत्वस्य पूर्वं कल्पितत्वानुक्तेरसंगत्यापातात्॥

२. टीकायां 'अवर्तमानत्वानवस्थितत्वात्' इत्यत्र अनवस्थितत्वं अव्यवस्थितत्वं, अन्यथा साध्यहेत्वोरभेदापत्तेः। कर्तुमकर्तुमन्यथा वा कर्तुं शक्यत्वेनाव्यवस्थितत्वं, अव्यवस्थितत्वात् पुरुषाधीनत्वं, पुरुषाधीनत्वादवर्तमानत्वं, अवर्तमानत्वात् साक्षात्कारायोग्यत्वम्॥

अन्यथा वा कर्तुमित्यत्रेत्यादिना[1]। विकल्पोत्सर्गापवादाश्चेति हेतुभाष्ये उत्सर्गापवादयोरपि कथितत्वात् तदनुगुणतया विधिप्रतिषेधान्तरमपि टीकाया-मुदाहृतं—एवं नारास्थीति। तत्प्रकटयति—नारमित्यादिना। नारास्थ्नो P. 90 9 ध्वजत्वेनेति। ततश्च शिरःकपाली ध्वजवान् इत्यत्र सन्निहितत्वाच्छिरः- P. 90 11 कपालस्यैव ध्वजत्वेनान्वय इति भावः[2]।

भाष्ये प्रतिज्ञैव भातीति। स्यादेतदित्यादिटीकायामानर्थक्यं द्वेधा शङ्कितम्। अबोधकत्वादभिधेयशून्यत्वमित्येकं, प्रयोजनशून्यत्वमित्यपरम्। तत्राद्ये कर्तव्ये इत्यनेन हेतुः सूच्यते। विधिना कर्तव्यत्वेन चोदिते निषेधेन तदकर्तव्यत्वं कथं बोधयितुं शक्यत इत्यबोधकत्वसूचनात्। द्वितीये च पुरुष-स्वातन्त्र्यादिति स्पष्टो हेतुः। तदुत्तरत्वेनावतारिते विधिप्रतिषेधाश्चेति भाष्ये अर्थवत्त्वमपि बोधकत्वादभिधेयवत्त्वं सप्रयोजनत्वं चेति द्विविधं विवक्षितम्। तत्र कुत इत्यत आहेत्यवतारितेन विकल्पोत्सर्गापवादाश्चेति भाष्येण विकल्परूपेण उत्सर्गापवादरूपेण च बोधकत्वसंभवात् विधिप्रतिषेधानामर्थवत्त्व-मित्यभिधेयवत्त्वप्रतिज्ञायां हेतुसमर्पणेऽपि[3], पुरुषस्य स्वातन्त्र्ये विधिप्रतिषेधानां निष्प्रयोजनत्वमिति शङ्कापरिहारार्थसप्रयोजनत्वप्रतिज्ञायां हेतुर्नोक्त इत्यर्थः। पुरुषापेक्षितहिताहितोपायत्वबोधनेन विधिप्रतिषेधयोः साफल्यमिति टीकाभिप्राय-माह—स्वातन्त्र्येणेति[4]। P. 90-12

---

१. भाष्ये अकरणप्रतिकोटिनिर्देशकतयोपात्तस्य कर्तुमित्यस्य अन्यथाकरण-प्रतिकोटिनिर्देशार्थमप्यपेक्षितत्वादनुषंगः कर्तव्य इति भावः परिमलोक्तः ॥

२. 'शिरःकपालध्वजवा'निति पाठे तु कपालस्यैव ध्वजत्वेनान्वयः स्फुट एव ॥

३. परिमले तु 'अर्थवन्तस्स्यु' रिति भाष्योक्तं अर्थवत्त्वं सप्रयोजनत्वमात्ररूप-मित्यभिप्रेत्य, तत्र प्रतिज्ञाते हेतुभूतस्य एतदुक्तं भवतीत्यादिटीकया वर्ण्यमानस्य इष्टोपाय-तादिप्रतिपादनस्य विकल्पोत्सर्गापवादाश्चेति हेतुपरत्वेन टीकाभिमतभाष्ये अनुक्ततया भाष्ये प्रतिज्ञैव भाति न हेतुरिति कल्पतरौ आशङ्का। सार्थक्ये हेतुभूतस्य टीकोक्तार्थस्या-पि समर्थकतया हेतुभूतः अर्थ एव विकल्पेत्यादिभाष्ये कथितः। हेतुसाधकहेतुपरत्वादेव तद्भाष्यं हेतुपरत्वेन टीकायामवतारितम्' इति तात्पर्यमुपवर्णितम्। 'प्रतिज्ञैव भाति न हेतुः' इति कल्पतरुवाक्यस्वारस्यानुरोधेन च तथा तात्पर्यवर्णनम्। प्रतिज्ञाहेतुद्वैविध्य-वर्णनेन कल्पतरुवाक्यार्थवर्णनं चमत्कारित्वेपि न स्वरसलभ्यम् ॥

४. पञ्चपादिकायासु सर्वास्वपि टीकासु प्रकारान्तरेण भाष्यार्थो वर्णितः—ब्रह्मणः धर्मस्य च वेदार्थत्वाविशेषेऽपि ब्रह्मण्येव अनुभवाद्यपेक्षा न धर्मे। अन्यथा विधिप्रतिषेध-

सवासनेत्यत्र पूर्वपूर्वमनोवासनाभिः तत्तत्सूक्ष्मरूपैस्सहितमिति भ्रमं
P. 91-1 वारयति—जाग्रदिति । सवासनेन्द्रियेति टीकां व्याचष्टे—जाग्रद्विपर्यया इति । विपर्ययग्रहणं संशयस्याप्युपलक्षणम्[1] । वस्त्वनतिक्रम्य, यथावस्तु ।

---

विकल्पोत्सर्गापवादानामपि ब्रह्मणि, प्रसङ्गः । पुरुषेच्छावशनिष्पाद्यत्वस्यापि च ब्रह्मणि प्रसङ्गः । न च तदिष्टं ब्रह्मणि, इति भाष्याभिप्रायः । इति । प्रसन्नगम्भीरं भाष्यं कुशलमतिभिः बहुधा व्याख्यायते । सर्वोऽप्यर्थः समादरणीय एव लक्ष्याविरोधात् ।

१. अत्र भाष्ये 'नहि स्थाणावेकस्मिन् ' स्थाणुर्वा, पुरुषोऽन्यो वा ' इति तत्वज्ञानं भवति, तत्र ' पुरुषोऽन्यो वा ' इति मिथ्याज्ञानम् । ' स्थाणुरेव ' इति तत्त्वज्ञानम् ' इति वाक्यं टीकायां व्याख्यातम्—' स्थाणुर्वा पुरुषो वा ' इति स्थाणौ संशयः ' पुरुष एव ' इति च विपर्यासः । अन्यशब्देन वस्तुतः स्थाणोरन्यस्य पुरुषस्याभिधानात् ' इत्यादिना । तदभिप्राय उच्यते—भाष्ये ' स्थाणुर्वा पुरुषः ' इत्यन्तं संशयप्रदर्शकम्, वाकारस्य पुरुषपदोत्तरं योजना, स्थाणुः पुरुषो वा इत्येकेनापि वाकारेण संशयप्रतीति-संभवात् । भामत्यां स्थाणुर्वा इति वाकारान्तरं स्पष्टप्रतिपत्त्यर्थमेव, नतु भाष्यस्थस्य निर्देशः। भाष्ये ' अन्यो वा ' इति भागः विपर्ययप्रदर्शनाय । वाकारः अवधारणे । अन्य इति, स्थाणावेकस्मिन्निति निर्दिष्टात् स्थाणोरन्यपुरुषपरम् । विपर्ययाकारः पुरुष इत्येव, न त्वन्य इति । पुरुषगतं वास्तविकं स्थाण्वन्यत्वं अन्यशब्दो ब्रूते । अवधारणार्थको वाकारोऽपि विपर्ययात्मकनिश्चयत्वसूचनाय । नतु विपर्ययाकारेऽपि तस्य घटनावश्यकता । भाष्ये इति-पदस्यावृत्तिः चकाराध्याहारश्च कार्यः । तथा च स्थाणावेकस्मिन् स्थाणुः पुरुषो वा ' इति 'अन्यो वा' [पुरुष एव] इति च उभयं संशयविपर्ययात्मकज्ञानद्वयं तत्वज्ञानं न हि भवति । तत्र, प्रदर्शितज्ञानद्वये, 'पुरुष' इति संशयघटकपुरुषकोटिः, 'अन्यो वा' इति, पुरुष एवेति विपर्ययश्च मिथ्याज्ञानम् । ' स्थाणुरेव ' इति संशयघटकस्थाणुकोटिः तत्वज्ञानम् । संशये एवकारार्थस्याविषयत्वेऽपि पुरुषकोटित्यागेन स्थाणुकोटिमात्रपरिग्रहेलब्धावधारणपरं स्थाणुरेव इति भाष्यम् । संशयस्य मिथ्याज्ञानत्वेऽपि पुरुषकोटयंशमात्रे तस्य मिथ्याज्ञानत्वं, स्थाणुको-टयंशे तु तत्वज्ञानत्वमेव । तत्र इत्यस्य स्थाणाविति वा अर्थः । एवं भामतीरीत्या भाष्यार्थ उक्तः । आनन्दगिरीये तु अन्यथा व्याख्यातम्-स्थाणुर्वा इत्यत्र वाशब्दोऽवधारणे, तथा च पुरोवर्तिनि स्थाणौ स्थाणुरेवेति अदुष्टकरणस्य धीः, इतरस्य तत्रैव स्थाणौ पुरुषोऽन्यो वेति संशयात्मिका धीः, अन्यपदस्य पुरुषान्यस्थाणुपरत्वम् । ' स्थाणुरेव ' इति, ' पुरुषो वा स्थाणुर्वा ' इति च ज्ञानमुभयमपि स्थाणौ तत्वज्ञानं न भवति, किंतु पुरुषोऽन्यो वा इति संशयः मिथ्याज्ञानं, स्थाणुरेव इति ज्ञानमेव तत्वज्ञानं भवति । भाष्ये विपर्ययः नोक्तः, संशयग्रहणं तस्याप्युपलक्षणम् । इति । प्रकारान्तरेणापि भाष्यं व्याख्यातुं शक्यते—स्थाणावेकस्मिन् ' स्थाणुर्वा पुरुषो वा अन्यो वा ' अत्र अन्यपदं स्थाणु-पुरुषोभयान्यपरं, तथा च त्रिकोटिकस्संशयः भाष्योक्तः । तत्र संशये अथवा स्थाणौ ' पुरुषोऽन्यो वा ' इति मिथ्याज्ञानं, कोटिद्वयस्यापि बाधितत्वात् । स्थाणुरेव इति तत्वज्ञानं, स्थाणुत्वकोटेरबाधितत्वात् । अत्र व्याख्याने इतिशब्दावृत्तिः चकाराध्याहारश्च न कार्यः ।

न विद्यते यथावस्तु यासां ताः अयथावस्तव इत्यव्ययीभावगर्भो बहुव्रीहिरिति तदर्थकथनेन दर्शयति—**यथावस्तुत्वमिति**। **नान्यथयन्तीति**। नान्यथा कुर्वन्तीत्यर्थः। P. 91-3

**टीकायाम्—मौलिकमिति**। प्राथमिकमित्यर्थः। उत्तरार्धे "**कश्चि-द्धीरः**' इति दर्शनात् अधीरो **लोकः** '**पराङ्पश्यति**' इत्यत्र कर्तेत्या-शयेनाह—**लोक इति**। उत्तरार्धस्य चायमर्थः—यः **कश्चिदेव धीरः** विषयासक्तिरहितः **आवृत्तचक्षुः**। चक्षुर्ग्रहणमिन्द्रियमात्रोपलक्षणम्। प्रत्याहृतेन्द्रियग्रामः, तदनन्तरम**मृतत्वमिच्छन्**, **प्रत्यगात्मानमैक्षत्** साक्षात्कृतवानिति। P. 91-11

इन्द्रियाविषयत्वेऽप्यन्तःकरणविषयत्वात् संबन्धग्रहोऽस्त्विति शङ्कां निराकर्तुं—**प्रत्यगात्मनश्चेति टीका**। तत्रोपपादनस्थलं दर्शयति—**अपरोक्षत्वा-दिति**। तस्मिन् प्रदेशे अस्मत्प्रत्ययविषयत्वादिति भाष्यव्याख्यानावसरे, उ[1]पहितस्य विषयत्वोक्त्या स्वरूपस्याविषयत्वमुपपादितमित्यर्थः। P. 91-4

**सिद्धसाधनादिति**। क्लृप्तैरेव जीवैर्महायोगिभिः जगत्सृष्टिसंभवादिति भावः। साध्यहीनत्वमेव दर्शयति—**कुंभमिति**। क्रयस्यापि यावत्कुंभोपकरण- P. 92-1

---

भाष्यस्य प्रसन्नगंभीरस्य बहुधा व्याख्यानं संभवतीत्यस्य इदमेकमुदाहरणमिति प्रदर्शयितुं एतावत् लिखितम्॥

१. उपहितस्य - जीवभावोपाध्युपहितस्य।

२. किमेते कुलालादयः स्वकार्यस्य निरवशेषोपकरणादिवेदिनः, कतिपयोपकरणादिवेदिनो वा? न तावदशेषोपकरणादिवेदिनस्ते, कुतः? अदृष्टस्य सर्वोत्पत्तिमतां निमित्तहेतोरपरिज्ञानात्। नापि संप्रदानप्रयोजनविशेषवेदिनः, तस्य संप्रदानभेदस्य देवदत्तादेः, प्रयोजनभेदस्य मधूदकादिधारणादेरनेकस्यापि संभवात्। अथोपकरणादिमात्रविज्ञानं, न समस्तोपकरणादिज्ञानं कुलालादीनां, तर्हि तेनैव निदर्शनेन ईश्वरस्यापि तदुपकरणादिमात्रज्ञानं, तन्मात्रज्ञाने च न सर्वज्ञतासिद्धिः। कतिपयज्ञो हि तथा सति स्यादिति। न च तन्मात्रज्ञानमपीश्वरस्य बालादिवदित्याह (विधिविवेके) बालोन्मत्तादयश्च स्वकार्याणां न प्रयोजनादिवेदिनः, निरभिप्रायाणां तत्र प्रवृत्तिदर्शनात्। न च कुलालादयो निदर्शनं न बालादय इत्यत्र नियमहेतुरस्ति। साध्यं चेत् तत्कर्तृत्वं, तत् कथमन्तर्भावितसर्वज्ञत्वं हेतुमन्तरेण सेद्धुमर्हति। इत्यादिना न्यायकणिकायां विस्तृतोऽर्थः कल्पतरौ संक्षेपेण सूचितः।

P. 92-2 मध्यनिविष्टत्वादिति भावः। **साधारण्येऽपीति**। **उपकरणाद्यभिज्ञकर्तृकमिति** साध्ये उपकरणानां यत्किञ्चिद्यावत्त्वसाधारण्येऽपीत्यर्थः।

किञ्च, ईश्वरस्य ज्ञानं नित्यमनित्यं वा? नाद्यः—ज्ञानं सर्वं जन्यमिति व्याप्तिसत्त्वेन नित्यज्ञानायोगात्। न द्वितीय इत्याह—**मनस्संयोगेति**। **ऐश्व-** P. 92-4 **र्यादिति**। ईश्वरत्वशक्तियोगादित्यर्थः। **वृद्धिमिति**। उपलब्धेरैश्वर्याधीनत्वं नाम वृद्धिमिच्छतस्तस्या एव विलोपादित्यर्थः। तथा च कारणस्वरूपसंभावनायामेवानुमानस्योपयोगः। न तन्निश्चय इति भावः।

**टीकायां** श्रुत्यर्थकथनमनवसरदुःस्थमित्यत आह—**जन्मादिसूत्रेणेति**। **तदर्थं**—लक्ष्यलक्षकभावसिद्ध्यर्थम्[1]। ननु 'यतो वा' इत्यादिवाक्यस्यापि निर्णायकत्वात्, **तस्य च निर्णयवाक्यमिति** कथं भाष्यमित्याशङ्क्य, जगत्कारणत्वरूपतटस्थलक्षणांशे निर्णायकत्वेऽपि स्वरूपलक्षणांशे न निर्णायकत्वम्; सूत्रं च स्वरूपलक्षणपरमपि। लक्षणद्वयपरत्व एव पुष्कलब्रह्मस्वरूपबोधनात्। अत- P. 92-5 स्तदभिप्रायं भाष्यमित्याह—**अत्र स्वरूपेति**।

**पूर्वं निर्णयेऽपीति**। नामरूपाभ्यां व्याकृतस्येत्यादिजगद्विशेषणैर्युक्तिरूपतामापन्नैः स्वतस्संभावनामात्रहेतुतया 'यतो वा' इत्यादिवाक्यसहकारितामापन्नैः प्रथमं कारणस्वरूपमात्रनिर्णयेऽपि[2], तत्कारणं प्रधानं हिरण्यगर्भो वा परमात्मा वेत्यादिसंशयो न निवर्तते। प्रधानादीनामपि व्यापकतया ब्रह्मत्व-

---

१. लक्ष्यलक्षकभावः श्रुतिसूत्रयोः, सूत्रं लक्षकं वेदान्तवाक्यकुसुमग्रथनार्थं सूत्रं श्रुतिसूचकं इति भावः।

२. अत्र आभोगे 'कारणस्वरूपमात्रनिर्णयेऽपि' इत्युक्तम्। पूर्वं 'कारणस्वरूपसंभावनायामेवानुमानस्योपयोगः न तन्निश्चये इत्युक्तम्। परस्परविरुद्धमिव भाति, कल्पतरुवाक्यान्यपि प्रकृते पूर्वापरविरोधवन्तीव भान्ति। अयमत्र विरोधपरिहारः—परिमलोक्तः—कार्यत्वलिङ्गकानुमानं कर्तृसामान्यमपि न निर्धारयितुमीष्टे, घटादीनां कर्त्रपेक्षत्वेऽपि अङ्कुरादीनां माभूत्तदपेक्षा इत्यप्रयोजकत्वशङ्कया घटतृणादिषु कृताकृतव्यवहारोपोद्बलितया व्याप्तिशैथिल्यात्। किन्तु तन्मात्रं संभावयति। कर्त्रैकत्वादौ तु युक्तिः संभावनामात्रमपि न जनयति। क्लृप्तानेकजीवकर्तृकत्वोपपत्तेः। कार्येण च कारणं किंचिदस्तीत्यनुमितमित्यादिः विरुद्धतया भासमानो ग्रन्थः प्रौढिवादरूपः, इति। तथा च कारणस्वरूपमात्रनिर्णयेऽपीत्यस्य निर्णयत्वेन नैयायिकाद्यभिमतायां संभावनायामपीत्यर्थः।

संभवात्। अतः 'आनन्दाद्ध्येव खलु' 'यस्सर्वज्ञः सर्ववित्' 'पराऽस्य शक्तिर्विविधैव श्रूयते' 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिश्रुतितोऽपि निर्णेतव्यमित्यर्थः।

आनन्दवाक्यस्य वा कथं स्वरूपविशेषनिर्णायकत्वम्? लौकिकानन्दस्यैव प्रयोजनतया भूतसृष्टिहेतुभावमाश्रित्य, लौकिकानन्दार्थमिमानि भूतानि जायन्ते इत्येवमपि वाक्यार्थसंभवादित्याशङ्क्य, प्रकृतं जगत्कारणमनूद्य, किं तत्कारणमित्यपेक्षितस्वरूपविशेषबोधनपरमेव तद्वाक्यमित्याशयेनाह—**कारणमिति**।

अन्यान्यप्येवंजातीयकानीत्यादिभाष्योक्त 'सत्यं ज्ञान'मित्यादिवाक्यान्तराभिप्रायेणाह—**आनन्द इति**। **आनन्दादेर्भेदे इति**। आनन्दादेर्ब्रह्मणः सकाशात् परस्परस्माच्च भेदे सति, न ब्रह्मस्वरूपलक्षणत्वमित्यर्थः। **गुणभूतेति**। घटमानयेत्यादौ घटकर्मिका आनयनक्रियेत्येवं वाक्यार्थबोधादिति भावः। अभेदपक्षमालम्ब्य परिहरति—**अत्रोच्यत इति**। उक्तनियमः क्वाचित्क इत्याह—**यत्रेति**। P. 93-1

**यस्त्वज्ञात इति**। यद्यपि कारणरूपेण ज्ञातमेव ब्रह्म, स्वरूपलक्षणवाक्ये तदनुवादेनानन्दत्वविधानाभ्युपगमात्। तथापि प्रधानादिव्यावृत्तेन रूपेणाज्ञातत्वं बोध्यम्। [3]**अप्रमिते चेति**। तथा चाज्ञातब्रह्मस्वरूपबोधनेन वाक्यस्य चरितार्थत्वात्, न पुनर्विशिष्टपरत्वमित्यर्थः। P. 93-8

न च 'यतो वा' इत्यादिवाक्येन ब्रह्मणो जगत्कारणत्ववैशिष्ट्यबोधनात्, आनन्दवाक्येन कारणमुद्दिश्य, तस्यानन्दत्वबोधनाच्च, कथं न विशिष्टपरत्वमिति वाच्यम्। 'अधीहि भगवो ब्रह्मे'त्युपक्रमे ब्रह्मप्रातिपदिकार्थमात्रस्यैव पृष्टत्वेन तदनुरोधेन 'यतो वा' इत्यादिवाक्यानां जगत्कारणत्वाद्यालंबनमुखेन, 'वायुर्वै क्षेपिष्ठा'

---

१. कल्पनीयोपस्थितिकलौकिकानन्दप्रसिद्ध्यपेक्षया क्लृप्तोपस्थितिकपूर्वप्रस्तुतजन्मादिकारणप्रसिद्धिः शीघ्रतरेति भावः परिमले वर्णितः।

२. 'आनन्दादयः प्रधानस्य' इत्यधिकरणन्यायसिद्धं सत्यादिवाक्यान्तरोपलक्षणम्।

३. अप्रमिते च, इति, प्रमिते च, इति च कल्पतरौ पाठभेदः। अज्ञाते तस्मिन् वाक्यस्य बोधमुत्पाद्य समाप्तेः इति, वाक्यात् प्रमिते तस्मिन् वाक्यस्य समाप्तेः इति च, उभयत्र तात्पर्यमेकमेवेति न दोषः।

इत्यादिवाक्यानां वायुक्षेपिष्ठत्वाद्यालंबनमुखेन स्तुतिपर्यवसानवत्, ब्रह्मस्वरूपमात्र एव पर्यवसानादिति भावः ।

P. 93-4 **न तद्वैशिष्ट्यमिति** । वाक्यार्थ इति शेषः । 'कश्चन्द्र' इति चन्द्रस्वरूपमात्रस्यैव पृष्टत्वात् तत्परमेव वाक्यम् । ननु प्रकृष्टप्रकाशवैशिष्ट्यपरम्, अनाकाङ्क्षितत्वादिति भावः । अनाकाङ्क्षितत्वेऽप्याकाङ्क्षितोपायत्वात् तत्परत्वमस्त्वित्यत आह—**मानान्तरादिति** । प्रत्यक्षादेव तत्सिद्धेः न तत्परत्वमित्यर्थः।

P. 93-5 तर्हि व्यर्थं तत्कथनमित्यत आह—**उपायस्त्विति** । स्तुतिविशेषनिर्धारणोपायत्वेन वायुक्षेपिष्ठत्वादेरिव चन्द्रस्वरूपनिर्धारणोपायत्वेन प्रकृष्टप्रकाशस्याकथने तस्य तदुपायत्वाज्ञानेन ततस्तन्निर्धारणानापत्तेः तत्कथनमावश्यकमिति भावः ।

ननु तर्हि चन्द्रे प्रकृष्टप्रकाशवैशिष्ट्यं न स्यात् । वाक्यस्य तत्र तात्पर्याभावादित्यत आह—**तच्चेति** । मानान्तर**विरोधाभावात्** वायुक्षेपिष्ठत्वादिवत् अनुज्ञायते[1] इत्यर्थः । प्रकृते त्वस्ति मानान्तरविरोध इत्याह—**सत्यादीति** ।

अनन्तमित्यत्र अन्तः परिच्छेदः । स च देशकालाभ्यामिव वस्त्वन्तरादपि, 'इदमत्र न' 'इदमिदानीं न' इतिवत् 'इदमिदं ने'त्यपि परिच्छेदस्य व्यावृत्तेरनुभवसिद्धत्वात् । ततश्च त्रिविधपरिच्छेदराहित्यप्रतिपादकानन्तपदविरोधात् त्रिविधपरिच्छेदराहित्यपर्यवसितनिरवधिकमहत्त्वप्रतिपादकब्रह्मपदात् 'एकमेवाद्वितीय'मित्यादिश्रुतिभिश्च बाध्यत इत्यर्थः ।

ततश्च लौकिकवैदिकलक्षणवाक्यानामभेदपरवाक्यानां चाखण्डार्थत्वमेवेति

P. 93-6 निर्धारयितुं अर्थगतमखण्डत्वं लक्षयति—**एवं चेति** । **अविशिष्टमिति** । समभिव्याहृतपदान्तरार्थासंसृष्टमित्यर्थः । तेन चन्द्रे चन्द्रत्ववैशिष्ट्येऽपि नासंभवः। 'कोकिलः पिक' इत्यादिपर्यायानेकशब्दप्रकाशिते वाक्यार्थत्वाभावादलक्ष्ये अतिव्याप्तिवारणार्थ**मपर्यायेति** ? एवमपि 'वह्निना सिञ्चे'दित्यादौ वह्निसेकरूपं यद्द्रव्यं तत्रातिव्याप्तिः, अत उक्त**मेकमिति**[2] । अनेन समभिव्याहृतपदान्तरार्थसंसर्गागोचरप्रमितिजनकवाक्यत्वमखण्डार्थवाक्यस्य लक्षणं सूचितम् ।

---

१. 'अनुज्ञायत इत्यस्य न प्रतिक्षिप्यत इत्यर्थः । ननु वाक्यार्थानुप्रवेशितत्वेनानुज्ञायत इत्यर्थः । तदननुप्रवेशस्य समर्थितत्वात्' इति परिमलम् ।

२. न च 'तत्त्वमसी'त्यादिवाक्यार्थेष्वभेदरूपस्संसर्गोऽस्तीत्यसंभवः शङ्कनीयः । संबन्धस्य द्विष्ठत्वनियमेन अभेदस्य संसर्गत्वाभावात्, इति परिमलोक्तमनुसंधेयम् ।

दृष्टान्तासिद्धिमाशङ्कते—नन्विति। व्यावृत्तिपरत्वानुपपत्तेरिति। P.94-1 प्रत्यक्षेण लक्षणवाक्योक्तप्रकृष्टप्रकाशद्वारा चन्द्रप्रमितौ तत्रेतरव्यावृत्तेरपि तत एव प्रमितेरिति भावः। तर्हि वाच्यत्वपरमस्तु लक्षणवाक्यम्। तस्य प्रत्यक्षायोग्यत्वादित्याशङ्क्याह—न चेति। चन्द्रत्वेनानिश्चिते चन्द्रशब्दवाच्यत्वं साध्यते? निश्चिते वा? नाद्य इत्याह—अचन्द्र इति। व्याघातादिति। वाच्यतावच्छेदकवत्त्वेनानिश्चिते वाच्यत्वप्रतीतेरयोगादित्यर्थः।

द्वितीये, किं मानान्तरात् तन्निश्चयः, उत लक्षणवाक्येन? नाद्यः। अयं चन्द्र इति निश्चयवतः चन्द्रत्वविशिष्टः चन्द्रशब्दवाच्य इति निश्चयसत्वे तत एव तदवगमसंभवेन पुनरुपदेशानपेक्षणात्, तदसत्वे वाच्यतावच्छेदकानिश्चयेन तत्साधनायोगात्। न द्वितीय इत्याह—अथ चन्द्रत्वमिति। ननु चन्द्रत्वस्यापि प्रत्यक्षत एव निश्चितत्वात् कथं तत्परत्वं लक्षणवाक्यस्येत्याशङ्कां निराकुर्वन्नाह—तस्मादिति।

अज्ञातेति[1]। ततश्च चन्द्रत्वस्य प्रत्यक्षेण निश्चय एवासिद्धः। तस्य P.94-3 जातित्वासिद्धेः[2]। सिद्धौ वा सुवर्णगिरिकरकादिषु तेजस्त्वपृथिवीत्वजलत्वाद्यग्रहेण जातेः व्यक्तिसमानवित्तिवेद्यत्वनियमाभावात्। भावे वा अनभ्यासदशापन्नजलादिज्ञानस्य जलत्वादिवैशिष्ट्यांश इव प्रत्यक्षस्यापि चन्द्रत्ववैशिष्ट्यांशे सत्तानिश्चयरूपत्वाभावात्। अतस्तन्निश्चयाय तद्व्यञ्जकतया प्रकृष्टप्रकाशत्वमुपदेश्यमिति भावः।

अर्थात्त्विति। अचन्द्रव्यावृत्तेश्चन्द्रशब्दवाच्यत्वस्य चार्थात् सिद्धिरित्यर्थः। ननु वाच्यभेदे लक्ष्यभेदोऽपि कुतो न भवेदित्यत आह—न हीति। P.93-5 प्रकर्षप्रकाशत्वयोर्वाच्ययोर्नानात्वेऽपि तल्लक्ष्यस्य चन्द्रस्य तदभावादित्यर्थः। किं लक्षकस्य यद्विशेषणं, तद्वैशिष्ट्यं लक्ष्यस्यापाद्यते, यत्किञ्चिद्वैशिष्ट्यं वा? नाद्य

---

१. अज्ञातचन्द्रज्ञापकमिति मूले चन्द्रत्वेनाज्ञानं विवक्षितम्। प्रकृष्टप्रकाशचन्द्रव्यक्तेः प्रत्यक्षेण ज्ञातत्वात्॥

२. चन्द्रस्य एकव्यक्तित्वादिति भावः।

P. 94-5 इत्याह—**मोभूदिति**। नान्त्यः—अप्रयोजकत्वात्। सुवर्णं तेजः[1] जलपृथिव्यन्यत्वे सति रूपवत्त्वादित्यादौ तदभावाच्चेत्यर्थः।

**तर्हीति**। अनित्यत्वस्य तल्लक्षकधर्मसंबन्धवत्, ब्रह्मणोऽपि लक्षकसत्तादितादात्म्याभावे ब्रह्म सदाद्यात्मकं न स्यादित्यर्थः। युक्तमनित्यत्वादेर्लक्षणानात्मकत्वम्। द्वयोरपि सामान्यत्वात्। सत्ताब्रह्मणोस्तु नैवम्। जातिव्यक्तित्वेन

P. 94-7 तादात्म्यसंभवादिति परिहरति—**नैतदस्तीति**।

नन्वेवं घटादीनामिव ब्रह्मणोऽपि सत्तादिजात्याश्रयत्वं स्यात्, न तु तद्रूपत्वमित्याशङ्क्य, व्यक्तिभेदस्य कल्पितत्वेन, सत्तादीनां सामान्यत्वं कल्पितम्। तथा परस्परभेदोऽपि कल्पितः। ततश्च कल्पितभेदभिन्नव्यक्त्यनुगतसत्तादिसामान्यमुखेन लक्ष्यमाणं ब्रह्म, भेदकोपाधिबाधेन भेदबाधनात् सच्चिदानन्दात्मकं निश्चीयत इति श्लोकव्याख्यानपूर्वकं दर्शयति—**इह कल्पितेत्यादिना**।

P. 94-9 ब्रह्मणश्चिदानन्दरूपत्वमपि दर्शयितुमाह—**तथा ज्ञानत्वेति**। इन्द्रियसंप्रयोगादिजन्यान्तःकरणवृत्तिविशेषोपधानलब्धभेदचिद्विशेषानुगतेन ज्ञानत्वेन, स्रक्चन्दनवनितादिसंस्पर्शजन्यान्तःकरणवृत्तिविशेषोपधानलब्धभेदानन्दविशेषानुगतेनानन्दत्वेन च लक्ष्यमाणयोः चिदानन्दव्यक्त्योरपि ताभ्यां तादात्म्यं योज्यमित्यर्थः।

सत्यज्ञानानन्दादिपदानां अखण्डार्थत्वं साधयितुं सदादिभेदमपि निराक-

P. 95-3 रोति—**यथा चेति**। सत्यादिभेदस्यौपाधिकत्वसाधनफलमाह—**तथा चेति**। **व्यक्त्याकारः**—व्यक्तिभेदः। **विशिष्टार्थेति**। पदान्तरार्थसंसृष्टार्थपरत्वरहितमित्यर्थः। तेन दृष्टान्ते न साध्यवैकल्यम्।

एवं तत्पदार्थविषयावान्तरवाक्यानामखण्डार्थत्वं प्रसाध्य, तत्त्वमस्यादि-

P. 95-4 महावाक्यानामपि तत्साधयति—**तथेति**। अनेन, तत्त्वमस्यादिवाक्यमखण्डा-

---

१. अनित्यत्वस्य लक्षकं सामान्यवत्त्वे सति अस्मदादिबाह्येन्द्रियग्राह्यत्वं समानाधिकरणेन सामान्यवत्त्वविशेषणेन विशिष्टं, न तथा लक्ष्यमनित्यत्वम्। घटत्वादिसामान्यस्यानित्यत्ववारणाय सामान्यवत्त्वे सतीति। परमाण्वादेर्योगिबाह्येन्द्रियग्राह्यस्य वारणाय अस्मदादीति। आत्मादेर्वारणाय बाह्येति। विशेष्यदलमपि आत्मादिवारणायैव।

२. अनित्यत्वरूपलक्ष्यस्य ध्वंसप्रागभावान्यतरप्रतियोगित्वरूपतया विशिष्टत्वेऽपि तेजस्त्वरूपलक्ष्यस्य जातित्वेन विशिष्टत्वाभावादिति भावः॥

र्थम्, उपाधिभेदभिन्नार्थैक्यप्रतिपादकत्वात्, महाकाशो घटाकाश इति वाक्यवत्, इत्यनुमानमुक्तम्। न च हेत्वसिद्धिः। आत्मनः स्वतो भेदाभावात्।

आत्मा स्वसमानसत्ताकद्रव्यत्वावान्तरजातिरहितः, विभुत्वात्, आकाशवत्। अत्र धर्मिसमानसत्ताकेति विशेषणात् तरङ्गचन्द्रानुगतचन्द्रत्वन्यायेनोपाधिभेदभिन्नेषु जीवेश्वरेषु कल्पितात्मत्वजात्यभ्युपगमेऽपि न बाधः। न च हेत्वसिद्धिः। परिशेषाद्विभुत्वस्यैव सिद्धेः। ततश्चौपाधिक एव भेद इत्याह—निरंशस्येत्यादिना। P. 95-5

अनुमानानुग्राह्यं प्रमाणमप्याह—श्रूयते चेति। बहुधा भिन्ना अपोऽनुगच्छन्नुपाधिना अब्रूपेण भेदरूपो भिन्नरूपः क्रियते। एवमात्मा क्षेत्रेषु शरीरान्तःकरणादिषु तद्रूपेणोपाधिना भिन्नरूपः क्रियत इत्यर्थः। एवंभूतस्येति। अद्वितीयस्येत्यर्थः। विचित्रशक्तिसंपन्नाविद्यामहिम्ना जगदुत्पत्तिस्थितिलयाधिष्ठानत्वमुपपद्यत इति परिहरति—अत आहेति। P. 95-8

॥ इति [1]जन्माद्यधिकरणं समाप्तम्॥

---

## ॥ अथ शास्त्रयोनित्वाधिकरणम्॥

### सू०॥ शास्त्रयोनित्वात्॥ ३॥

साध्याविशेषादिति। शास्त्रयोनित्वस्य हेतोः 'अस्य महतो भूतस्ये'त्यादिश्रुत्या सिद्धौ, 'यतो वा' इत्यादिश्रुत्या साध्यस्यापि सिद्धिः स्यादिति व्यर्थो हेतुः। अथ श्रुतितिरोधानेन साध्यस्यासिद्धिरुच्यते, तर्हि हेतोरप्यसिद्धिरिति कथं स साध्यसाधकः स्यादित्यर्थः। P. 95-11

आर्थिकी या प्रतिज्ञा ब्रह्म सर्वज्ञमिति प्रतिज्ञा, तयेत्यर्थः। आर्थिकेत्यनेन, विचार्यस्य ब्रह्मणो निर्विशेषत्वेऽपि जीवो न जगत्कारणमिति पूर्वसूत्रो-

---

१. अस्य—प्रत्यक्षादिसंनिधापितस्य नामरूपाभ्यां व्याकृतस्येत्यादिभाष्योक्तविशेषणविशिष्टस्य जगतः, जन्मादि-जन्मस्थितिभङ्गम् - यतः सर्वज्ञात् सर्वशक्तेः सच्चिदानन्दादिस्वरूपलक्षणलक्षितात् कारणात् - भवति-संभाव्यते प्रथममनुमानात्, पश्चात् श्रुतितो निर्णीयते, तत् ब्रह्म - इति सूत्रार्थः।

पक्षिप्तार्थोपयोगितया तस्य सर्वज्ञत्वमर्थात् साध्यत इति सूचितम्। एतच्चोपलक्षणम्। सर्वशक्तित्वमपि पूर्वसूत्रे अर्थात् प्रतिज्ञातं अस्मिन् सूत्रे निःश्वसितश्रुतिस्वारस्येन साध्यत इत्यपि द्रष्टव्यम्। तथा चोपसंहारभाष्ये सर्वशक्तित्वं चेत्युक्तम्।

**भाष्यटीके** अनपेक्ष्य प्रकारान्तरेणापि सङ्गतिर्वक्तुं शक्यत इति स्वयमाह—**अथवेति।** जगत्कारणत्वेन सिद्धस्य सार्वज्ञ्यस्य तदेकदेशवेदकारणत्वेन पुनस्साधने हेतुपौनरुक्त्यमित्याशङ्क्य, वेदत्वेन वेदकारणत्वमभ्युच्चयहेतुत्वेनोच्यत

P. 95-12

---

१. अत्राभोगे, भाष्यटीके अनपेक्ष्य प्रकारान्तरेणापि. स्वयं सङ्गतिमाहेति, कल्पतरौ—'अथवा' इति, 'अस्मिन् पक्षे श्रौतप्रतिज्ञयैव सङ्गतिः' इति च वाक्यं दृष्ट्वा आपातत उक्तम्। भाष्यटीकयोरुक्तां 'ब्रह्म सर्वज्ञं शास्त्रयोनित्वात्' इति आर्थिकप्रतिज्ञया सङ्गतिमनपेक्ष्य 'ब्रह्म जगत्कारणं शास्त्रयोनित्वात्' इति श्रौतप्रतिज्ञया सङ्गतिः उपपादयितुं न शक्यते। तथाहि—शास्त्रयोनित्वं जगद्योनित्वे हेतुर्न भवति साध्याविशेषात् इति कल्पतरावुक्तं पूर्वमेव, साध्याविशेषश्च आभोगे परिमललरीत्या उपपादितः। शास्त्रयोनित्वस्य जगद्योनित्वे साक्षात् हेतुत्वासंभवादेव, अथवेति पक्षे वेदनित्यत्वात् जगद्योनित्वं ब्रह्मणो न संभवतीत्याक्षिप्य, ब्रह्मणो वेदकर्तृत्वस्थापनेन वेदनित्यत्वं निराकृत्य, बाधकाभावेन जगद्योनित्वं समर्थितम्। तथा च शास्त्रयोनित्वं जगद्योनित्वे तद्बाधकविधूननद्वारा हेतुः। एवञ्च वेदानित्यत्वमत्र प्रसाधनीयं भवति। वेदानित्यत्वप्रसाधनं च वियत्पादे सङ्गतं न त्वत्र। तस्मात् भाष्यटीके अनपेक्ष्य प्रकारान्तरेण सङ्गतिर्दुरुपपादा। अत एव परिमले 'पूर्वसूत्रार्थाक्षिप्तसर्वज्ञत्वदृढीकरणार्थतयेह वेदकर्तृत्वं व्यवस्थापनीयमासीत्, तेनार्थात् 'ब्रह्मणस्सर्वकारणत्वमनुपपन्नं वेदस्य नित्यत्वात्' इति शङ्कानिराकरणमपि लभ्यत इत्यानुषङ्गिकार्थकथनपरः अयं अथवेति कल्पतरुश्लोकः। आनुषङ्गिके चार्थे न पृथक्सङ्गत्यपेक्षा। अथवेति, अस्मिन् पक्षे इति च, हेतोरार्थप्रतिज्ञान्वयमनपेक्ष्य श्रौतप्रतिज्ञयैव तदन्वय इत्यभिप्रायं न भवति, येन स्वतन्त्रमिदं पक्षान्तरमित्यानुषङ्गिकत्वं न स्यात्। किंतु आर्थप्रतिज्ञयैवान्वय इति यथाश्रुतभाष्यटीकानुसारेण प्रथमः पक्षः। आनुषङ्गिकार्थविषयः श्रौतप्रतिज्ञयाप्यन्वयो भाष्यटीकयोर्विवक्षित इति द्वितीयोऽयं पक्षः। प्रतिज्ञयैवेत्येवकारः भिन्नक्रमः, श्रौतप्रतिज्ञयाप्यन्वयोऽस्त्येवेत्यर्थः' इत्युक्तम्। एवञ्च कल्पतरौ भाष्यटीके अनपेक्ष्य स्वयं सङ्गत्यन्तरं नोक्तम्। किंतु भाष्यटीकोक्तां आर्थिकप्रतिज्ञया सङ्गतिमपेक्ष्यैव श्रौतप्रतिज्ञयाऽपि संगतिः आनुषङ्गिकार्थविषया भाष्यटीकयोर्विवक्षितत्वेनैव उक्तेति बोध्यम्।

२. अत्राभोगे, सार्वज्ञ्यहेतोः जगदन्तःपातिवेदहेतुत्वस्य जगत्कारणत्वरूपपूर्वोक्तहेतावन्तर्भावात् पौनरुक्त्याशङ्का, वेदत्वेन वेदकारणत्वस्य जगत्कारणत्वहेतावनन्तर्भावात् न पौनरुक्त्यमिति परिहारः, तच्च हेत्वन्तरं पूर्वहेतावस्वरसान्नोक्तम्। किंतु अभ्युच्चयः—हेत्वन्तरसमुच्चय इत्युक्तम्। 'अभ्युच्चयार्थत्वेन हेतुपौनरुक्त्यं परिहरति' इति

इति परिहरति—अभ्युच्चयार्थत्वेनेति। तर्हि नाधिकरणान्तरत्वमित्याशङ्क्य, [1]हेतोरसिद्धत्वाशङ्कायां तत्साधनार्थत्वाद्युक्तमधिकरणान्तरत्वमित्याह—हेत्वन्तरेति। आशङ्क्य निराकरिष्यत इति। येऽपि तावदित्यादिटीकयेत्यर्थः। P. 96-1

न केवलमित्यादिटीकया चतुर्णां वर्णानामाश्रमाणां च गर्भाधानादिश्मशानान्तानि यानि गृह्यकर्माणि, ब्राह्ममुहूर्तमारभ्य रात्रिप्रथमयामपर्यन्तमनुष्ठेयाः गार्ह्यवैतानिकक्रियारूपाः या नित्यादिकर्मपद्धतयो, यच्च ब्रह्मतत्त्वं, तस्य सर्वस्यापि श्रेयस्साधनतोपदेशेन शिष्यानुशासकतया शास्त्रत्वेन महाविषयत्वादेव केवलं न महत्त्वम्, किन्त्वनेकाङ्गोपकरणतयाऽपीत्युक्तम्। तत्र शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दो, ज्योतिषमिति षडङ्गानां प्रसिद्धत्वात्, उपाङ्गानि पुराणादीनि दर्शयति—पुराणन्यायेति। P. 93-3

सृष्टिर्वाक्यापेक्षितेति। संग्रहवाक्यस्य प्रपञ्चवाक्यसापेक्षत्वादिति भावः। जातिर्व्यक्तीत्युपलक्षणम्, प्रमाणादिनिरूपणेनेत्यपि द्रष्टव्यम्। सुव्यक्त इति। मीमांसाया वाक्यार्थनिर्णयद्वारा, धर्मशास्त्राणां वेदानुमानद्वारा, षडङ्गानां वेदस्वरूपतदर्थनिर्णयद्वारा चोपयोगः सुव्यक्त इत्यर्थः।

टीकायाम्—अन्वयमुक्त्वेति। शास्त्रयोनित्वस्य हेतोः [2]श्रुतियुक्तिभ्यां सद्भावमुक्त्वा, व्यतिरेकं पुरस्कृत्य, ततः सर्वज्ञत्वमाहेत्यर्थः। उक्तमर्थमिति। P. 96-10 P. 96-5

---

कल्पतरुवाक्ये हेतुपौनरुक्त्यमित्यस्य उक्तहेतोः पुनः कथनमित्यर्थमभिप्रेत्य एवमुक्तम्। हेत्वन्तरकथनेऽपि, साधितस्यैवार्थस्य पुनः हेत्वन्तरेण साधने पौनरुक्त्यं भवत्येव। हेतोः हेतुव्यक्तेः पुनरुक्तिरिति नार्थः, किंतु एकमेव साध्यं प्रति एकस्य हेतोः उक्तौ सत्यां तत्साध्यसाधकस्यैव हेतोः हेत्वन्तरस्य पुनरपि कीर्तने पौनरुक्त्यं इत्यर्थः। हेत्वन्तरमभ्युच्चयार्थम्। एकस्य साध्यस्य बहुभिर्हेतुभिः साधने दृढीकरणमेव अभ्युच्चय इति विवक्षितमत्र। द्विर्बद्धं सुबद्धं भवतीति हि वदन्ति, 'जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तं तदेव द्रढयन्नाह' इति भाष्ये दृढीकरणमभ्युच्चय इति सूच्यते। इत्यपि कल्पतरुवाक्यार्थो वक्तुं शक्यते।

१. 'सिद्धहेत्वन्तराभिधाने हि ऐकाधिकरण्यम्। इह शास्त्रयोनित्वहेतुः प्रसाधनीय इति तदर्थमधिकरणान्तरमित्यर्थः' इति परिमले।

२. निःश्वसितश्रुतिविभक्तत्वयुक्तिभ्यामित्यर्थः।

भाष्यखण्डाभ्यामुपक्षिप्तमर्थमुदाहरणाद्यवयवोपन्यासेन प्रमाणवन्तं करोतीत्यर्थः।

P. 96-6 भाष्यखण्डोपक्षिप्तमेवार्थं प्रकटयति— **अत्रायमिति । विभक्तत्वेति ।** वेदः कार्यं, विभक्तत्वात् घटवदित्यनुमानोपबृंहितयेत्यर्थः । **व्याप्तिरुक्तेति ।** उपनयनिगमनविभागस्तु **टीकायामेव** स्पष्ट इति भावः ।

P. 96-8 **शास्त्रविशेषणमिति ।** अर्थविशेषणत्वे, 'प्रथने वावशब्दे' इति सूत्रेण घञ्प्रत्यये विस्तार इति रूपापत्त्या, 'ऋदोरप्' इति सूत्रविहिताबन्तस्य विस्तरशब्दस्य शब्दप्रपञ्चवाचित्वादित्यर्थः। अनेन **विस्तरार्थमित्यर्थशब्दस्य** धर्ममात्रपरत्वमाश्रित्य, **विस्तररूपो धर्मो** यस्येति व्याख्यानादृग्वेदादिरूपे शास्त्रे अर्थवादादिबहुले शब्दमात्रस्यैव प्रपञ्चो नार्थस्येति, वेदस्य ब्रह्मज्ञानस्य च तुल्यविषयत्व-

---

१. व्याप्त्यैव हेतुः प्रामाण्यमश्नुत इति व्याप्तिप्रदर्शकोदाहरणग्रन्थ एव प्रमाणोपन्यासार्थः न हेतुग्रन्थ इति भावेन पूर्वभाष्यखण्डे हेतुप्रदर्शनेऽपि उदाहरणाद्यवयवोपन्यासेन प्रमाणवन्तं करोतीत्युक्तम् । उदाहरणान्ताः उदाहरणादिका वा त्रयोऽवयवाः इति मीमांसकमर्यादया स्थिते पक्षद्वये द्वितीयपक्षाभिप्रायेण उदाहरणाद्यवयवोपन्यासेनेत्युक्तम् । यद्यपि भाष्ये यद्यदित्यादिव्याप्तिप्रदर्शकोदाहरणग्रन्थात् पूर्वोत्तरभाष्यवाक्यैः प्रतिज्ञाहेतू उपनयनिगमने च चत्वारोऽवयवाः कथिताः, तथापि उदाहरणस्य व्याप्तिप्रदर्शकस्यावश्यकता, पूर्वं अथवा उत्तरं अवयवद्वयं स्फुटीकरणार्थमेव । अथवा नैयायिकपक्षाभिप्रायं पञ्चावयवकथनमिति बोध्यम् ।

२. विभक्तत्वं भिन्नत्वं कार्यत्वे हेतुरिति वियदधिकरणे 'यावद्विकारं तु विभागो लोकवत्' इति सूत्रेण प्रदर्शयिष्यते ।

३. व्याप्तिप्रदर्शके यद्यदित्यादिभाष्यवाक्ये ज्ञेयैकदेशार्थमपीत्येतत् व्याकरणविशेषणम् । तच्च वेदैकदेशार्थपरिष्कारोपयोगिव्याकरणकर्तुरपि पाणिनेर्लोके सर्वज्ञत्वप्रसिद्धिरस्ति, ततस्सकलवेदकर्तुरीश्वरस्य सर्वज्ञत्वे का शङ्केति द्योतनाय । इति ब्रह्मविद्याभरणे उक्तम् । आनन्दगिरीये तु—ब्रह्मणः शास्त्रकर्तृत्वेऽपि पाणिन्यादिवदसर्वज्ञत्वं शङ्कित्वोक्तं–ज्ञेयेति । तस्य शब्दसाधुत्वादिरूपज्ञेयैकदेशविषयत्वं तत्कर्तुरसार्वज्ञ्ये हेतुरित्यर्थः । अपिस्तथात्वसंभावनार्थः इत्युक्तम् ॥

४. 'विस्तरत्वं शास्त्रविशेषणम्' इति कल्पतरुपाठमाश्रित्येदम्। विस्तरशब्दः अबन्तः शब्दप्रपञ्चपरः, तथा च विस्तरत्वं शास्त्ररूपशब्दविशेषणम् । नार्थविशेषणम् । अर्थविशेषणत्वे अर्थप्रपञ्चपरत्वे शब्दातिरिक्तस्यार्थस्य प्रपञ्चे विवक्षिते, 'प्रथने वावशब्दे' इति सूत्रेण घञो-विधानात् विस्तार इति रूपापत्तेरिति भावः । 'विस्तरार्थत्वं शास्त्रविशेषणम्' इत्यपि कल्पतरौ पाठः दृश्यते ।

५. वस्तुमात्रवाचिनोऽर्थशब्दस्येह धर्मरूपे वस्तुनि पर्यवसानमिति परिमलम् ।

भ्रान्तिर्निवर्तिता भवतीत्यर्थः। **प्रयोजनमिति**। ततश्च ततोधिकविषयज्ञानवत्त्वसाध्यस्य न बाध इति, बाधनिरासोपयोगाद्विशेषणसाफल्यमिति भावः। **टीकायाम्—कथयितुमिति**। सूचयितुमित्यर्थः। P. 96-8 P. 97-4

नैयायिकरीत्याश्रयणेनानुमानमारचति—**इदमिति**। **वेदविषयादिति**। वेदविषयादधिको यो विषयः, तज्ज्ञमपि। वेदार्थतदधिकार्थोभयविषयकज्ञानवदित्यर्थः। **तत्कर्तृत्वादिति**। अन्यदीयानुपूर्व्यनपेक्षणेन कृत्स्नवेदवक्तृत्वादित्यर्थः। तेन सकलवेदवक्तृषु मन्वादिषु दैवाद्वेदसमानानुपूर्वीकयत्किञ्चिद्वाक्यवक्तरि च न व्यभिचारः।

**यो यद्वाक्येति**। यस्य वाक्यस्य प्रमाणत्वेनैतदर्थप्रमां जनयत्विति बुद्ध्या, कर्तेत्यर्थः। तेनार्थानभिज्ञाध्यापकादिषु[1] सामान्यव्याप्तेर्न व्यभिचारः। सर्गादौ च वेदान् प्रवर्तयत ईश्वरस्य तत्तदर्थविवक्षास्तीति[2] व्याप्यस्य पक्षवृत्तित्वम्। P. 97-2

ननु वेदविषयाधिकविषयज्ञत्वसिद्धावपि कथं सर्वज्ञत्वसिद्धिरित्यत आह—**सर्वावभासकेति**। वेदार्थज्ञत्वमात्रसाधनेऽपि, तावद्विषयकस्य सर्वविषयकत्वमवर्जनीयमिति, वेदकर्तृत्वहेतोः पक्षधर्मताबलादेव सर्वज्ञत्वं सिद्ध्यति। यदा

---

१. आदिपदेन निरभिप्रायवाक्यप्रयोक्तारः उन्मादग्रस्तादयः परिग्राह्याः।

२. उक्तं चैतत् ब्रह्माधिकरणवार्तिके—"शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते। तदप्यधिष्ठितं सर्वमेकेन परमात्मना॥ तथर्ग्वेदादयो देहाः प्रोक्ता येऽपि पृथक्पृथक्। भोग्यत्वेनात्मनां तेऽपि चैतन्यानुगतास्सदा॥ तेषामन्तर्गतेच्छानां वाक्यार्थप्रतिपादने। विवक्षा चाविवक्षा च ज्ञायते शब्दशक्तितः॥" इति। तत्र न्यायसुधायाम्—शब्दब्रह्मवादस्य च, चेतनाचेतनयोः ब्रह्मशब्दयोः तादात्म्यानुपपत्तेः शब्दो ब्रह्माधिष्ठानं इत्येवं व्याख्येयत्वात् शब्दात्मकानामपि वेदानां देहता, ब्रह्माख्यस्य च परमात्मनोऽपि देहाधिष्ठातृता शब्दब्रह्मवादिनोऽपि मता। "अथाधिवेदं यस्सर्वेषु वेदेषु तिष्ठन् सर्वेभ्यो वेदेभ्योऽन्तरो यं सर्वे वेदा न विदुः यस्य सर्वे वेदाश्शरीरं यस्सर्वान्वेदानन्तरो यमयति एष त आत्मान्तर्याम्यमृतः" इत्याद्युपनिषत्प्रामाण्यात् ऋग्वेदादिषु आत्मानः प्रतिष्ठिताः। इति उक्तम्। अत्र भगवतः अर्थविवक्षास्तीत्यत्र न विवादः, वेदस्य भगवद्देहतायां परं विवादः। एतदभिप्रायेणैव विधिविवेके एतत् खण्डितम्—"वेदात्मनोऽभिप्राय इत्यतिस्थवीयः" इति। तत्र "देहलक्षणविरहात् वेदस्य, वेददेहस्यात्मनोऽभिप्राय इति न साधु" इति न्यायकणिकायां भावः स्फुटीकृतो वाचस्पतिमिश्रैः। एतेन परमात्मनः जगच्छरीरकत्ववादः अन्तर्यामिब्राह्मणादिषु औपचारिकः न मुख्यः इति अवगम्यते।

पाणिन्यादिदृष्टान्तेन वेदविषयाधिकविषयज्ञानत्वं साध्यते, तदा किमु वक्तव्य-मिति भावः ।

एवं सूत्रभाष्यादिसूचितं सर्वज्ञत्वपर्यवसाय्यनुमानं [1] प्रदर्श्य, स्वयं

E ९४.] साक्षात् तत्साधकमनुमानमाह—यद्वेति । एतदन्यत्वविशिष्टं यदसर्ववित्कर्तृ-कत्वं तदनधिकरणं, एतदन्यत्वविशिष्टं यदवेदत्वं तदनधिकरणं च, यत्सकर्तृकं तदन्य इत्यर्थः ।

एतच्च साध्यं पक्षीभूतघटरूपसकर्तृकान्यत्वमादाय दृष्टान्ते प्रसिद्धं, तस्यासर्ववित्कर्तृकत्वावेदत्वाधिकरणत्वेऽप्येतदन्यत्वाभावेन विशेणाभावप्रयुक्तविशि-ष्टाभावमादाय, यथोक्तविशेषणद्वययोगित्वात् । पक्षे तु वेदान्यत्वमादाय साध्यं सिद्ध्यद्वेदस्य सर्ववित्कर्तृकत्वमन्तर्भाव्य पर्यवस्यति ।

एतदन्यत्वे सति सकर्तृके वेदे यथोक्तविशेषणयोरसर्ववित्कर्तृकत्वावेदत्व-रूपविशेष्याभावप्रयुक्तविशिष्टाभावमादायैव वक्तव्यतया, एतदन्यत्वविशिष्टसर्व-

---

१. इदमनुमानं महाविद्येत्युच्यते 'केवलान्वयिनि व्यापके [साध्ये]प्रवर्तमानो हेतुः पक्षे व्यापकप्रतीत्यपर्यवसानबलादन्वयव्यतिरेकिसाध्यविशेषं वाद्यभिमतं साधयन् हि महाविद्येत्युच्यते' इति चित्सुखप्रणीततत्वप्रदीपिकाटीकायां नयनप्रसादिन्यामुक्तम् । 'तस्य च महाविद्यात्वं असिद्धत्वादिसकलदोषविरहः' इति महाविद्याविडंबने प्रथमपरि-च्छेदे महादेववादीन्द्रः । वेदान्तकौमुद्यां द्वितीयाध्याये महाविद्यास्वरूपमित्थमेवोक्तं रामाद्व-याचार्यैः । महाविद्यानुमानानि च वक्रीरीतिं रोचयतां पुंसां विषये प्रवर्तन्ते, न ऋजुरीतिम्, इति चित्सुखीटीकायाम् उक्तम् । 'दग्धसारं चेदं वादीन्द्रदावानलेन महाविद्याविपिनमिति नास्माभिस्तद्भस्मीभावाय संरभ्यते' इत्यपि चित्सुखीटीकायामुक्तम् । तथा चासारभूतमपीदं वादिव्यामोहाय प्रयुज्यते । सारत्वे च तस्य, कल्पतरूक्तानुमान एव अवेदत्वानधिकरणेत्यस्य स्थाने अभारतत्वाद्यनधिकरणेति निवेशे भारतादेरपि सर्ववित्कर्तृकत्वापत्तिः । स्मर्य-माणासर्ववित्कर्तृकत्वादिभिः तत्परिहारे, मुधा वक्रीरीतिमन्महाविद्यानुमानम् । ईश्वरस्य सार्वज्ञ्यं च ऋजुरीतिमता भाष्यटीकाद्यभिमतेन पूर्वोक्तानुमानेन श्रुत्यादिभिश्च सिध्यति । महाविद्या-नुमानानि च पूर्वोक्तप्रमाणान्तरानुग्राहकमात्राणीति सन्तोष्टव्यमिति भाति । 'पत्युरसामं-जस्या'दित्यधिकरणे कल्पतरुकारैरेव स्वतंत्रं महाविद्यानुमानमीश्वरसाधकं किंचित् खण्डयि-त्वा, 'एवं सर्वा महाविद्यास्तच्छाया वा अन्ये प्रयोगाः खण्डनीयाः' इत्युक्तम् । तस्मात् महा-विद्यानुमाने नातीवाभिनिवेष्टव्यम् । इतरेषां महाविद्यानुमानानि खण्डयित्वा प्रतिबन्द्या चित्सुखप्रभृतिभिः पूर्वाचार्यैरपि सिद्धान्तसाधकतया महाविद्यानुमानानि प्रयुक्तानि इति अवगन्तव्यम् ।

वित्कर्तृकत्वाधिकरणैतदन्यत्वविशिष्टवेदत्वाधिकरणसकर्तृकान्यत्वमादायैव साध्य-पर्यवसानात् ।

अत्र [वेदस्य] असर्ववित्कर्तृकत्वेन अर्थान्तरवारणाय प्रथमविशेषणम् । एवमपि सर्ववित्कर्तृकयत्किञ्चिदन्यत्वमात्रं सिद्ध्येत् । वेदकर्तुश्च सर्वज्ञत्वमुद्देश्यमिति, तत्सिद्ध्यर्थं द्वितीयविशेषणम् । वेदस्याकर्तृकत्वमादाय पक्षे साध्यपर्यवसानेनार्थान्तरवारणाय सकर्तृकेति । दृष्टान्ते साध्यप्रसिद्ध्यर्थमेतदन्यत्वेति विशेषणम्, पक्षीभूतघटान्यत्वमादायैव तत्र साध्यप्रसिद्धेर्वक्तव्यत्वात् । न च वेदान्यत्वमादायैव तत्र साध्यप्रसिद्धिरस्त्विति वाच्यम् । पक्षे साध्यसिद्धेः प्राग्वेदे असर्ववित्कर्तृकत्वानधिकरणसकर्तृकत्वानिश्चयात् ।

प्रयत्नशब्दो व्यापारपर इत्यभिप्रेत्याह—**ईक्षणादीति । सापेक्षत्वमिति ।** ततश्च सापेक्षत्वेन कृत्स्नवेदाप्रामाण्याद्वरं निःश्वसितश्रुतिमात्रस्योपचरितार्थत्वमिति, न तद्बलात् सर्वज्ञत्वसिद्धिरित्यभिप्रेत्य, वेदस्य सापेक्षत्वं वदन् पूर्वपक्षी प्रष्टव्य इत्यर्थः । P. 98-2

**द्वितीये इति ।** किमानुपूर्व्या व्यक्त्यन्तरत्वमेवाभिनवत्वं विलक्षणत्वं वेत्यर्थः। टीकायामानुपूर्वीभेदं दृष्टान्तमुखेन प्रकटयति—**यथा हीति । टीकायाम्**—**माणवकव्यक्तीनामन्यत्वादिति ।** ततश्च तद्धर्मानुपूर्व्या अप्यन्यत्वमित्यर्थः । **टीकायां**—क तर्हि विवाद इत्याशङ्क्य, वर्णानित्यत्ववादिनः, पुरुषस्य वेदरचनायां स्वातन्त्र्यमाहुः, वर्णनित्यत्ववादिनस्तु नेति, तस्मिन्नंशे विवाद इत्याह—**केवलमिति ।** P. 98-5 P. 98-7 P. 99-1

तर्हि पुरुषास्वातन्त्र्यं वदद्भिः जैमिनीयैरविरोधात् कथं विवाद इत्याशङ्क्य ते हि वेदस्रष्टृपुरुषानभ्युपगमेन पृथग्जनानामस्वातन्त्र्यं वदन्ति । वयं तु तदभ्युपगमेन तस्याप्यस्वातन्त्र्यं ब्रूम इत्यस्ति विरोध इत्याशयेनाह—**टीकायाम्**—

---

१. यद्यपि सर्ववित्कर्तृकयत्किञ्चिदन्यत्वसिद्धावपि कश्चित् सर्वज्ञस्सिध्यति, ईश्वरान्यस्य च सर्वज्ञत्वबाधात् परिशेषादीश्वरस्य सर्वज्ञत्वं सिध्यति । इति विवक्षितसिद्धिः, तथापि वेदस्सर्ववित्कर्तृक इति यदुद्देश्यं तत्सिद्ध्यर्थं द्वितीयविशेषणमिति भावः प्रतिभाति ।

२. पक्षीभूतघटस्य च असर्ववित्कर्तृकत्वाधिकरणत्वात् अवेदत्वाधिकरणत्वाच्च तदन्यत्वमादाय दृष्टान्ते साध्यप्रसिद्ध्युपपादनासंभवादिति भावः ।

तत्र सृष्टीति। **लब्धसर्वशक्तिज्ञानस्येति** टीकायां, सर्वेति शक्तिज्ञानोभय-
P. 99-5 विशेषणम्। टीकायां—**न सर्गान्तरे विपरियन्तीति**। पूर्वपूर्वपरिणामसंस्कार-
सहकृताविद्यापरिणामत्वादिदानीन्तना अपि न विपरीता भवन्तीत्यर्थः।

**अन्यथेत्यादिटीकायां** आनुपूर्वीरहितं वेदोच्चारणमनर्थहेतुरित्यर्थः।
P. 99-3 तत्प्रकटयति—**मन्त्रो हीन इति**। न केवलं यदर्थविवक्षया प्रयुक्तो मन्त्रः, तद-
प्रतिपादकत्वेन समीहितासाधकः, किन्त्वनर्थहेतुरपीत्याह—**स वाग्वज्र
इति**। सः मन्त्रो वाग्रूपवज्रस्सन् यजमानं हिनस्ति।

यथा, इन्द्रशत्रुपदघटितः[1] 'स्वाहेन्द्रशत्रुर्वर्धस्वे'ति मन्त्रः, त्वष्ट्रा इन्द्रस्य
शत्रुः शातयिता हन्ता पुत्रो वर्धतामित्यर्थमभिप्रेत्य प्रयुक्तोऽपि तदनुगुणतत्पुरुषा-
न्तोदात्तस्वरं विहाय, बहुव्रीहिस्वरेण इन्द्रशब्दगतेकारस्योदात्तत्वेन प्रयुक्ततया,
इन्द्रः शत्रुः शातयिता हन्ता यस्य पुत्रस्येत्यर्थपर्यवसानेन यजमानं त्वष्टारं तत्पुत्र-
वृत्रासुरहननेन हिंसितवान्, तथेत्यर्थः।

P. 99-9 टीकायाम्—**तच्चास्माकमिति**। वेदस्य स्रष्टैव नास्तीति योऽयं तेषाम-
भिनिवेशः श्रुतिविरुद्धः, तद्व्यतिरिक्तविषये समानमित्यर्थः।[2] **अवगतसार्वज्ञ्य इति**।
अवगतमहिमविशेषवतीत्यर्थः। इदानीमेव सर्वज्ञत्वसाधनेन सिद्धवत्तदुपन्यासा-
P. 99-5 योगात्। महिमपरिज्ञानमप्यस्मदादीनां अशक्यमिति शङ्कते—**नन्विति**।
विश्वसनीयतमानां **सर्गादिभुवां** प्रत्यक्षस्य स्वप्रत्यक्षसमत्वात् युक्तो विश्वास इति
परिहरति—**तत्राहेति**।

P. 99-13 वर्णकान्तरपक्षे सङ्गतिमाह—टीकायां—**पूर्वेणेति**। जगत्कारणत्व-
लक्षणस्यानुमानविधया ब्रह्मलक्षकत्वशङ्कानिरासेन ब्रह्मणो वेदप्रमाणकत्वं वक्तुं इद-
मधिकरणमित्यर्थः।

नन्वेतदपि तत्रैव कृतमित्याशङ्क्याह—**व्युदस्येति**। **ब्रह्मस्वरूपस्य
यल्लक्षणं** जगत्कारणत्वं, तस्य या **असंभवाशङ्का**, असंगोदासीनस्वभावस्य कथं

---

१. 'मन्त्रो हीन' इति श्रुतौ इन्द्रशत्रुरिति पदं इन्द्रशत्रुपदघटितमन्त्रार्थकमिति व्याख्यातम्।

२. भामतीव्याख्यायां ऋजुप्रकाशिकायां तु 'अन्यत्र इति, अद्वैत एवेत्यर्थः। वेदपौरुषेयत्वापौरुषेयत्वयोरभिनिवेशाभावादिति भावः।' इति व्याख्यातम्।

कारणत्वमित्या[दि]शङ्का, तां विचित्रशक्तिसंपन्नाविद्याविषयीकृतस्योपपन्नं कारणत्वं इत्येवं व्युदस्येत्यर्थः। तत्र लक्षणस्य यदनुमानत्वं निराकृतं, तदिहत्यमेव सुहृद्भावेनोक्तमिति भावः ॥

॥ इति [1]शास्त्रयोनित्वाधिकरणम् ॥

---

## ॥ अथ समन्वयाधिकरणम् ॥

### सू०॥ तत्तु समन्वयात् ॥ ४ ॥

अधिकरणमारचयति—**वेदान्ता इति**। सिद्धान्तकोट्युन्मेषार्थमाह—**रूपादिहीनमिति**। **टीकायाम्—अप्रयोजनत्वापत्तेरप्रामाण्यप्रसङ्गाच्चेति** हेत्वोः **कथं पुनरिति** भाष्यनिर्दिष्टप्रतिज्ञायामन्वयः। P. 100-1

मीमांसकानां पूर्वपक्षित्वान्नाप्रामाण्यपर्यवसायी पूर्वपक्षः। किन्तु क्रियार्थत्वपर्यवसायीत्यभिप्रेत्योक्तं **टीकायाम्—न चैतैरित्यादि**। **अक्रियार्थानामानर्थक्यमित्यस्य** सिद्धान्त्यसंमतत्वात् कथं तं प्रति तस्य प्रमाणत्वेनोपन्यास इत्यत आह—**जैमिनीति**। **अपि त्विति**। न्यायसूत्रसंमतत्वेन पूर्वपक्षस्य P. 100-4

---

१. 'शास्त्रयोनित्वात्' इति सूत्रस्यायमर्थः—ब्रह्म सर्वज्ञं, शास्त्रयोनित्वात् शास्त्रकारणत्वादित्यर्थः। इति आर्थिकप्रतिज्ञया सङ्गतिः। अथवेति कल्पतरूक्तपक्षरीत्या—ब्रह्म जगत्कारणं शास्त्रकारणत्वात् इति श्रौतप्रतिज्ञयाऽपि सङ्गतिः। अनेन वेदनित्यत्वमूलकसर्वकारणत्वासंभवशङ्कानिरासः। इदं प्रथमवर्णकरीत्या अर्थवर्णनम्। द्वितीयवर्णकरीत्या तु—ब्रह्म अनुमानादिमानान्तरावेद्यं, शास्त्रप्रमाणकत्वात्—इत्यनंभट्टकृतसूत्रवृत्तौ। ब्रह्म वेदान्तप्रतिपाद्यं शास्त्रैकप्रमाणकत्वात्। अब्भक्षादिवत् अवधारणगर्भतया तदर्थलाभः, प्रमाणान्तरागम्यत्वादित्यर्थे पर्यवसानम्। एवं च न हेतोस्साध्यावैशिष्ट्यम्। इति न्यायरक्षामणौ। अत्र उभयत्र मानान्तरावेद्यं शास्त्रप्रमाणकत्वात्। वेदान्तवेद्यं मानान्तरावेद्यत्वात् - इति हेतुसाध्ययोः व्यत्यासः कृतः। अस्ति तावत् ब्रह्म, शास्त्रप्रमाणकत्वात्, इत्यपि केचित् ॥

२. 'रूपादिहीन'मित्यादिकल्पतरुवाक्ये 'संगतिं उक्त्वा' इत्येतत् 'संगतिं मत्वा' इति शोधनीयम्। टीकायां संगतेरनुक्तत्वात् ॥

दार्ढ्यम्। 'तस्मादनित्यमुच्यते' इति सूत्रोपात्ताप्रामाण्यहेतुत्वेनोक्तमानर्थक्य-
P. 100-4 मभिधेयशून्यत्वमेव कुतो न भवेदित्यत आह—अभिधेयेति।

देवतादीत्यादिपदेन द्रव्यादिक'माज्यमसी'त्यादिमन्त्रप्रकाश्यं गृह्यते। अमुमेवार्थं मन्त्राधिकरणेन स्फुटयति—मन्त्रा इति। किं केवलदृष्टार्था मन्त्राः. उतादृष्टार्था अपीति विकल्प्य, प्रथमं निराकृत्य, द्वितीयं शङ्कते—
P. 101-4 अथेति। उच्चारणादेवेत्यत्र हेतुमाह—तस्येति। फलाकाङ्क्षायां हि दृष्टमदृष्टं वा फलं कल्प्यम्। सा च नियोगाधीना। स च स्वव्यापारे उच्चारणे, नार्थज्ञान इत्यर्थः।

अर्थस्मृतेः फलत्वसिद्ध्यर्थमाह—अर्थस्मृतिरिति। टीकायाम्—राद्धान्तसूत्रमनुग्रहीष्यत इति। पदान्तराणां विधेयब्रह्मस्तुत्यर्थत्वादिति भावः।
P. 104-8 अन्यलभ्यत्वात् प्रवृत्तिर्नोत्पत्तिविधिकार्यमित्याह—अधिकारविधित इति।

अज्ञातज्ञापकेऽपि पुत्रस्ते जात इत्यादिसिद्धार्थबोधिवाक्ये विधिव्यवहाराभावात् क्रियाविषय एव विधिरित्युक्तमनागतेत्यादिटीकायाम्—तत्र भावशब्दो भावयतेर्घञ्प्रत्यये सति, निष्पन्नत्वात् भावनावाचीत्याह—भावो भावनेति। तर्हि कथमुत्पत्तिविधेरप्रवर्तकस्य विधित्वमित्याशङ्क्य, सोऽपि परंपरया प्रवर्तक एवेति दर्शयितुं टीकायां विधीनामविनाभाव उक्तः। तं प्रकटयति—
P. 104-9 अधिकार इत्यादिना।

---

१. अत्र कल्पतरौ 'चिन्तादिना उपायान्तरेणापि' इत्यन्वयः। 'नित्यवत्' इत्यत्र स्वार्थे वतिः। नित्यानां प्रयाजादीनामिवेत्यर्थे वा वतिः। यद्वा तदर्हमित्यर्थे वतिः। तथा च नित्यार्हमाम्नानमनर्थकं स्यादित्यर्थः। इति सोमनाथीये॥

२. 'अथ तु मन्त्रप्रत्यायनाददृष्टं कल्प्येत, ततो यत् दूरमपि गत्वा कल्प्यमदृष्टम्, तदुच्चारणादेव कल्पयितुं युक्तम्। तद्धि पुरुषव्यापारगोचरः। प्रत्यायनन्तु तस्मिन्ननुष्ठिते स्वयमेव भवति। स्वव्यापारे च पुरुषो नियुज्यते। यत्र च नियुज्यते तत्र फलापेक्षा, तेन या अवश्यंभाविनी अदृष्टकल्पना, सा तत्रैव युक्ता, न तु तस्य प्रत्यायनार्थत्वम्, प्रत्यायनं त्वदृष्टार्थमिति युक्तम्।' इति शास्त्रदीपिकायां कल्पतरुवाक्यसमानाकाराणि वाक्यानि दृश्यन्ते।

३. कल्पतरौ पठितौ 'यस्य दृष्टं न लभ्येत' इत्यादिश्लोकौ किञ्चित्पाठभेदेन शास्त्रदीपिकायां दृश्येते। वार्तिके न दृश्येते।

४. 'भवतेर्घञि तु भावशब्दो भवनवाची स्यात्' इति परिमले॥

**फलसंबन्धेति।** क्रियायाः पुरुषाभिलषितफलसंबन्धबोधनमित्यर्थः।[1] P. 101-10
**फलशेषत्वेति।** शेषत्वज्ञापनमेव विनियोगः, प्रधानक्रियाभिप्रायेण फलग्रहणम्।[2]
नन्विन्द्रियाद्यर्थतया विधीयमानदध्यादिस्थल इव प्रकृतेऽपि फलदर्शनात् विधि-चातूरूप्यमस्त्वित्याशङ्कां निराकर्तुं—**सिद्धे चेति टीका।** तत्रासंभवं प्रकटयति—**सिद्धं चेदिति।** दध्यादिस्थले अस्ति पुंव्यापारो नात्रेति वैषम्यमिति भावः।

**टीकायां—नत्वत्र विनियोगादयस्सन्तीति,** अग्निहोत्रवाक्ये P. 101-4
विनियोगादिप्रतीत्यभावकथनं प्रौढिवादेन। **सन्तोऽपीत्यादिटीकया** प्रतीयमाना अपि न विवक्षिता इति यदुक्तम्, तदेव संमतमित्याशयेनाह—**सर्वविधि-ष्वित्ति।**[3] उत्पत्तिविधौ फलाश्रवणात् कथमधिकारादिप्रतीतिरित्याशङ्क्य, सामान्य-रूपेण तत्रापि फलमर्थात् प्रतीयत इत्याशयेनाह—**अग्निहोत्रमिति।**

नन्वन्यथैव वाक्यार्थोऽस्त्वित्याशङ्क्य, किमग्निहोत्रं भावयेदिति वाक्यार्थः? उत अग्निहोत्रनामको होम इति विकल्प्य, नाद्य इत्याह—**नत्विति। अफल-त्वादिति।** प्रवर्तनासंबन्धमहिम्ना भावनायाः समीहितभाव्यकत्वनियमेन तद्भिन्नस्य भाव्यत्वायोगादिति भावः। द्वितीयं निराकरोति—**न चेति।** काल-विशेषसंस्पर्शित्वेनैव सत्ताया बोध्यतया, तदसंस्पर्शिवस्तुबोधनेन तत्र प्रवर्तकस्य विधेरुद्धारापातादित्यर्थः।[4] **प्राप्तविनियोगादीति।**[5] अग्निहोत्रनामकं होमं कृत्वा, P. 101-16
तेन स्वर्गकामः स्वाभिलषितं स्वर्गं संपादयेदिति वाक्यार्थादिति भावः।

---

१. फलपुरुषसंबन्धमात्रबोधनमेव अधिकारः, क्रियायाः फलशेषत्वरूपफल-संबन्धबोधनं विनियोगः। क्रियायाः पुरुषाभिलषितफलसंबन्धबोधनमिति तु विनियोग-पदार्थस्य अधिकारपदार्थान्तःप्रवेशनं चिन्त्यम्॥

२. क्रियायाः फलशेषत्वज्ञापनं, अङ्गानां प्रधानशेषत्वज्ञापनं च उभयं विनियोग एव॥ ३. 'सर्वत्रापि च प्रतीयमानेऽस्मिंश्चतुष्टये ऐदंपर्यं भिद्यते, तेन उत्पत्त्यादिविधि-वाक्यभेदः' इति, 'इतरे त्वंशाः प्रतीता अप्यविवक्षिताः' इति च विधिविवेके मण्डन-मिश्राः॥ ४. विधिस्थले कालत्रयासंस्पर्शि वस्तु बोध्यते। अत एवाहुः न्यायकणिकायां वाचस्पतिमिश्राः—'न खलु कुर्यादिति वर्तमानाख्या, करोतीत्यविशेषप्रसङ्गात्। ना-नागता करिष्यामीति। नातीता, अकार्षमिति।' इति॥

५. अधिकारविधौ फलपुरुषसंबंधः क्रियायाः फलशेषत्वं चोभयमपि बोध्यते, अधिकारविधिवाक्यार्थप्रतीतौ उभयस्यापि भानात्। तथा च 'अधिकारविधितः प्राप्तविनियोगादी'ति कल्पतरूक्तिरुपपन्नेति भावः॥

ननु वेदान्तानां ब्रह्मोपासनापरत्वे ब्रह्मण्यपि तात्पर्यं कुतो न भवेदित्याशङ्क्य, प्रत्यक्षादिप्रमाणविरुद्धत्वान्नेति भङ्ग्यन्तरेणाह—**विधिपरत्व इति।** ननु तत्त्वमसीत्यादिवाक्यैः उपासनापरैरपि जीवब्रह्माभेदरूपमुपास्यं समर्पणीयम्। अन्यथा तदुपासनाऽयोगात्। तथा च कथं न प्रत्यक्षादिविरोध इत्यत आह—**जीव इति।** 'मनो ब्रह्मेत्युपासीते'त्यादौ मनसि ब्रह्मदृष्टिवज्जीवेऽपि ब्रह्मदृष्टेरारोपत्वसंभवात् न जीवब्रह्मैक्यपरत्वमिति, न विरोध इति भावः। (P. 101-16)

**तदिति सूत्रपदोक्तामिति।** प्रस्तुतं ब्रह्मोद्दिश्य, तदित्यनेन पूर्वसूत्रनिर्दिष्टस्य शास्त्रप्रमाणकत्वस्य विधानादित्यर्थः। **टीकायाम्—कर्कशाशय इति।** (P. 102-1)

---

१. विधिपरत्वे प्रत्यक्षादिप्रमाणविपरीतार्थत्वं न स्यादित्युक्ते, ब्रह्मात्मैक्यपरत्वे प्रत्यक्षादिप्रमाणविरोध इति भङ्ग्यन्तरेणोक्तं भवति॥

२. अत्र तदिति सूत्रपदेन सिद्धान्तपक्षप्रतिज्ञा उक्ता इति, भामतीकल्पतर्वोरुक्तम्। तत्र प्रतिज्ञाघटकः साध्यांशः तत्पदेन उक्तः इति आभोगकारः। 'प्रस्तुतं ब्रह्मोद्दिश्य तदित्यनेन पूर्वसूत्रनिर्दिष्टस्य शास्त्रप्रमाणकत्वस्य विधानादित्यर्थः' इति तेन लेखनात्। युक्तं च तत्, पूर्वपरामर्शकतच्छब्देन शास्त्रयोनित्वपरामर्शौचित्यात्। तत् शास्त्रयोनित्वं समन्वयात्, ब्रह्मण इत्यार्थिकम्। 'सूत्रे तदिति पक्षनिर्देशो ब्रह्मपरः। पूर्वसूत्रेप्येतदेव पक्षनिर्देशकमपेक्षणीयम्। वेदान्तप्रतिपाद्यमिति पूर्वाधिकरणद्वितीयवर्णकवत् साध्यमध्याहरणीयम्' इति न्यायरक्षामणौ, 'तच्छब्दस्सूत्रे प्रकृतब्रह्मपरामर्शार्थः। अधिकारादेव ब्रह्मलाभेऽपि जन्मादिसूत्रे यादृशं ब्रह्म निरूपितं तादृशे ब्रह्मणि प्रमाणोपन्यासपरः उत्तरसन्दर्भ इति प्रतिपादनार्थं पुनः परामर्शः, इति द्योतयन् शास्त्रयोनित्वादिति पदं द्वितीयव्याख्यानानुसारेण प्रथमान्ततया विपरिणम्य तदनुषङ्गेण सूत्रं व्याचष्टे भाष्यकारः—तु शब्द इत्यादिना' इति ब्रह्मविद्याभरणे च, तत्पदेन प्रतिज्ञाघटकः पक्षांश उक्त इति कथितम्। पक्षसाध्यांशद्वयमपि तत्पदेन पूर्वसूत्रोक्तब्रह्मगतशास्त्रप्रमाणकत्वपरामर्शकेन वक्तुं शक्यते, तथा च 'तदिति सूत्रपदोक्तां सिद्धान्तपक्षप्रतिज्ञाम्' इति कल्पतरूक्तिः साधु सङ्गच्छेत। इति बोध्यम्।

अत्र समन्वयसूत्रे समन्वयहेतुना साध्यमानं ब्रह्मणः शास्त्रप्रमाणकत्वं पूर्वोक्तप्रतिज्ञाविषयभूतम्, शास्त्रयोनित्वादिति सूत्रे द्वितीयवर्णके साध्यभूतम्, हेतुभूतं वा। ब्रह्म मानान्तरावेद्यम्, शास्त्रयोनित्वात् शास्त्रप्रमाणकत्वात् वेदान्तप्रतिपाद्यत्वात्, इति पूर्वसूत्रार्थवर्णने हेतुभूतम्। ब्रह्म वेदान्तप्रतिपाद्यम्, शास्त्रयोनित्वात् शास्त्रैकप्रमाणकत्वात् प्रमाणान्तरागम्यत्वात्, इति पूर्वसूत्रार्थवर्णने तु साध्यभूतम्, इति बोध्यम्। समन्वयसूत्रेण हि वेदान्तानां ब्रह्मणि समन्वयेन हेतुना ब्रह्मणो वेदान्तप्रतिपाद्यत्वमेव हि साधयितुं शक्यम्। न पुनः ब्रह्मणो मानान्तरागम्यत्वम्। ब्रह्म प्रमाणान्तरागम्यं ब्रह्मणि वेदान्तानां समन्वया-

वेदान्तानां अन्यपरत्वमेवेति क्रूराशय इत्यर्थः[1]। जगदुत्पत्तिस्थितिलयकारण-मित्यनेन कथं 'यतो वा' इत्यादिवाक्यमुक्तं भवतीत्यतः संबन्धिदर्शनन्याये-नेत्याशयेनाह[2]—तद्ब्रह्मेति। संबन्धज्ञापनार्थमेव टीकायां—पूर्वमुदाहृत-मित्युक्तम्। P. 102-3

न त्वन्तरावाक्य इति। ननु तत्रापि प्रौवाज्यलाभः कुतो न भवेदित्या-शङ्क्य, यज्ञत्वे सिद्धे 'सर्वस्मै वै' इति वाक्येन प्रौवाज्यं लभ्यते। यज्ञत्वं च विध्यधीनम्, न चान्तरावाक्ये विधिरस्तीत्याशयेनाह—यजतीति चेति। अवलम्बत[3] इति। अनुवदतीत्यर्थः। अन्वक्शब्दार्थमाह—निरन्तरयोरिति। आलस्यं स्यादिति। यद्यपि सोदरीवाचिनो जामिशब्दस्य सादृश्ये लक्षणे- P. 103-7 P. 104-1

---

दित्यसङ्गतेः। तच्च ब्रह्मणो वेदान्तप्रतिपाद्यत्वरूपं शास्त्रप्रमाणकत्वं शास्त्रयोनित्वाधिकरण-द्वितीयवर्णके हेतुर्वा भवतु साध्यं वा भवतु, तदेवात्र साध्यम्।

अत्र समन्वयाधिकरणोपक्रमे 'शास्त्रप्रमाणकत्वमुक्तं ब्रह्मणः प्रतिज्ञामात्रेण, तदनेन सूत्रेण प्रतिपादनीयम्' इति भामती। वेदान्तप्रतिपाद्यत्वरूपशास्त्रप्रमाणकत्वस्य मानान्तराग-म्यत्वं प्रति हेतुत्वपक्षे, शास्त्रप्रमाणकत्वं पूर्वं सिद्धवत्कृत्य हेतुतया निर्दिष्टम्। तदेवासिद्धम्, अनभ्युपगमात्। तत्साधकहेत्वन्तरानिर्देशेन शास्त्रप्रमाणकत्वहेतुकथनं प्रतिज्ञामात्रमिति भामतीवाक्यार्थः। वेदान्तप्रतिपाद्यत्वरूपशास्त्रप्रमाणकत्वस्य मानान्तरागम्यत्वेन हेतुना साधनपक्षे, यद्यपि शास्त्रप्रमाणकत्वं न प्रतिज्ञामात्रेण उक्तम्, मानान्तरागम्यत्वेन हेतुना तत्साधनात्। तथापि ब्रह्मणः मानान्तरागम्यत्वेऽपि शास्त्रप्रमाणकत्वमपि न संभवति शास्त्रस्य क्रियापरत्वात्। उपासनापरत्वेऽपि च, जीवे ब्रह्मदृष्ट्यारोपमात्रपरत्वेन ब्रह्मण-श्शास्त्रप्रमाणकत्वाभावात्। तथा च शास्त्रप्रमाणकत्वं पूर्वं साधितं प्रतिज्ञामात्रमेव संपन्नमिति भामतीवाक्यार्थ इति सर्वं समंजसम्॥

१. वेदोषरा वेदान्ता इति वदतः क्रूराशयत्वं किमु वक्तव्यमिति भावः। अत एव वेदान्तकल्पलतिकायां 'मीमांसया कपटतो भुजगांबयेव स्वाधीनतामुपनिषद्विनतेव नीता। येनोद्धृताऽमृतफलेन गरुत्मतेव तस्मै नमो भगवतेऽद्भुतशङ्कराय॥' इति क्रूराशयभुजग-सादृश्यं वर्णयांबभूव मधुसूदनसरस्वती॥

२. ययोस्संबन्धः पूर्वं गृहीतः तयोरेकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायेनेत्यर्थः॥

३. कल्पतरुधृतवार्तिकश्लोके 'यागान् विष्ण्वादिसंयुक्तैः विहितान्' इति, 'अन्तरा-युक्तम्' इति च पाठः। विष्ण्वादिसंयुक्तैः वाक्यैरित्यर्थः। अन्तरायुक्तं वाक्यमिति चार्थः।

स्युक्तं पूर्वतन्त्रे। तथापि तस्य दोषत्वं नैरन्तर्येण सदृशानुष्ठाने सति आलस्यापादकत्वेनेति तथोक्तम्।

ननु सत्यं जामितादोषोपक्रमपूर्वकं पुरोडाशयागविसदृशोपांशुयाजविधाने-नाजामित्वोपसंहारादेकमिदं वाक्यमिति, तदेव विधानं विष्ण्वादिवाक्ये कुतो न
P. 104-2 भवेदित्यत आह—**एकवाक्यता चेति। उपांशुयाजविधाविति।** उपांशुयाजवाक्ये विधावित्यर्थः। अनेन, सदृशनैरन्तर्यप्रयुक्तस्य दोषस्य तदन्तराले विसदृशविधानैकनिवर्त्यतया विष्ण्वादिवाक्येषु श्रुतमप्यजामित्वं योग्यतया अन्तरा-वाक्यविहिते याग एवान्वेति। अत एव तैत्तिरीयके तत्रैवाजामित्वं श्रूयते। [इत्यपि सूचितम्।]

एवं **टीकायामनूचोरित्येकवाक्यताबलादिति च** पदसूचिते सिद्धा-न्तयुक्ती प्रदर्श्यापूर्वेति पदसूचितामभ्युच्चययुक्तिं शङ्कामुखेन दर्शयति—**नन्वि-**
P. 104 5 **त्यादिना।** अनुवादयोग्यकर्माभावमुपपादयति—**तथाहीति। देवतात्वमिति।**

---

१. 'सोदरीवाचिजामिशब्दलक्षितस्य सादृश्यस्य नैरन्तर्यानुष्ठाने सति आलस्या-पादकत्वेन दोषत्वात्' इति न्यायसुधायाम् (२-२-४)। 'जामिः स्वसृकुलस्त्रियोः' इत्यमरः। सोदराणां मिथस्सादृश्यसंभवात् तद्वाचिजामिशब्दस्य सादृश्ये लक्षणा संभवतीति बोध्यम्॥

२. अनेनेति। अन्तरापदघटितोपांशुयाजवाक्ये विधिस्वीकारेणेत्यर्थः। प्रतीता एकवाक्यता अन्तरावाक्ये एकयागविधानाङ्गीकार एव निर्वहति। न तु विष्ण्वादिवाक्ये अनेकयागविधानाङ्गीकारे, इति कल्पतरावुक्तम्। अन्तरापदघटितवाक्ये विधिस्वीकारेण युक्त्यन्तरमपि परिमलोक्तं सूच्यते—पुरोडाशद्वयनैरन्तर्यात् जामितादोषोपन्यासेन हि उप-क्रम एवैतदवगतं—उपन्यस्तदोषसमाधानार्थं अन्तराले किंचिद्विधित्सितमिति। तद्यदन्त-रावाक्यं विहाय विष्ण्वादिवाक्येषु विधिराश्रीयेत, तदोपक्रमानुगुण्यं न स्यात्। नहि नैरन्तर्य-प्रयुक्तदोषस्यान्तराले कर्मान्तरविधानेनेव विष्ण्वादियजनविधानेन समाधानं प्रतीयते। अतः जामितादोषपरिहारोपयुक्तान्तरालकालयुक्ते अन्तरावाक्य एव यागविधिराश्रयितव्य इति॥

३. तैत्तिरीयशाखायां—(काण्ड-२ प्र-६ अनु-६ पञ्चाशत्-३३) 'उपांशुयाज-मन्तरा यजत्यजामित्वाय' इति श्रूयते॥

लक्षणीयमित्यन्वयः। विधिश्चेति। 'लिङर्थे लेडि'ति विधानादिति भावः। P. 104-5
देवतालाभमाह—आग्नेयादीनिति। स्तावकत्वमेव दर्शयति—इत्थमिति।

ऐतरेय्यके इति। ऐतरेयिणां बह्वृचानामाम्नाये इत्यर्थः। स एतमिति[3]।
अनेन प्रत्यगात्मैव ब्रह्मेत्युपक्रान्तम्। समाप्तौ चेति। 'प्रज्ञानं ब्रह्मे'त्यत्र प्रज्ञान-
शब्दनिर्दिष्टस्य जीवस्य ब्रह्मभाव एवोपसंहृत इत्यर्थः।

ननु अयमभिसन्धिरित्यादिटीका न युक्ता। भाष्यटीकयोः भूतार्थ-
त्वेनैव सापेक्षत्वस्य शङ्किततया, किं पुंवाक्यानां सापेक्षता भूतार्थत्वेन?
आहोस्वित् पौरुषेयत्वेनेति विकल्पायोगादित्याशङ्क्य, नायं हेतुद्वयविकल्पः,
किं तु हेतूपाधिविकल्पः, ततश्च सापेक्षत्वे भूतार्थत्वं वा प्रयोजकम्, पौरुषेयत्वं
वेति विमृश्य, तत्राद्यं व्यभिचारेण दूषयित्वा, अथेत्यादिना पौरुषेयत्वस्यैव
प्रयोजकत्वेन, तस्योपाधित्वमुक्त्वा, तदभावान्न वेदान्तानां सापेक्षत्वमित्येवमभि-
प्राया टीका। अत एव पुंवाक्यानामिति पुंवाक्यमिति च दृष्टान्त एव
विमर्शविषयत्वेन निर्दिष्टः। हेतुविकल्पत्वे वेदान्तानां सापेक्षत्वं किं भूतार्थत्वेन?
उत पौरुषेयत्वेनेत्येव वाक्यशैलीप्रसङ्गादित्याशयेनाह—वेदान्ता यदीति। P. 104-12

---

१. देवतात्वबोधकपदाभावात् कर्मत्वेन तत् लक्षणीयम्। इयमेका कल्पना, तथा, विष्ण्वादिवाक्येषु यागविधाने कर्मप्रधानतव्यप्रत्ययबलात् विष्ण्वादिदेवतासंस्कारार्थयाग-विधानं झटिति प्रतीतं स्यात्। अतः संस्कृतदेवताविनियोगादर्शनेन ततः परावृत्य यागा-नामर्थकर्मभावेन प्राधान्यं लक्षणीयं, इत्यपरा कल्पना कल्पतरौ पूर्वमुक्ता परिमले विवृता॥

२. शाखाभेदेन पठिताभिः वैष्णवप्राजापत्याग्नीषोमीयाभिः ऋग्भिः विकल्पित-देवतालाभः॥　३. कल्पतरौ तमेवात्मानं ब्रह्माभिधायेत्यन्वयः।

४. टीकायां 'भूतार्थतया वेदान्तानां सापेक्षत्वमाशङ्क्यते' इत्यनुवादानन्तरं 'किं पुंवाक्यानां सापेक्षता भूतार्थत्वेन, आहो पौरुषेयत्वेन' इति विकल्पो न प्रसरति। कुत इति चेत् उच्यते—अनुवादे वेदान्तानामित्युक्त्वा विकल्पे पुंवाक्यानामित्युक्तेरसङ्गतेः। किं च अनुवादे सापेक्षत्वे भूतार्थत्वमात्रस्य हेतुत्वमुक्त्वा विकल्पे पौरुषेयत्वस्यापि हेतुत्वकथना-सङ्गतेः। पूर्वपक्षिणा पौरुषेयत्वेन सापेक्षत्वानुक्तेः। तथाच टीकोक्तविकल्पो न युज्यत इति भावः॥

५. परिमलेऽपि 'पक्षे हेतुविकल्पोऽयं न भवति। किं तु दृष्टान्ते साध्यप्रयोजकधर्म-विकल्पः इति दर्शयितुमेव टीकायां पुंवाक्यनिदर्शनेन हीति पुंवाक्यानामिति च विशेषितम्' इत्युक्तम्॥

P. 105.1 **प्रसङ्गहेतोरिति।** अनिष्टप्रसङ्गहेतोरित्यर्थः। **अपिशब्देनेति। परिनिष्ठितवस्तुस्वरूपत्वेऽपि, न प्रत्यक्षादिविषयत्व(सापेक्षत्व)मित्युक्त्या** परिनिष्ठितवस्तुस्वरूपपरत्वम् न सापेक्षत्वे तन्त्रम्, किंत्वन्यदेवेति सूचनादिति भावः। **तस्यैवेति।** यस्य हेतोः सोपाधिकत्वं वक्तुमिष्टमित्यर्थः।

**ननु यद्युच्येतेत्यादिटीकया** पौरुषेयत्वेन हेतुना सापेक्षत्वमाशङ्क्यते, **तस्मात् पौरुषेयत्वेन सापेक्षत्वं दुर्वारमित्युपसंहारात्।** भूतार्थत्वं तु पौरुषेयत्वसाधकवाक्यत्वलिङ्गविशेषणमभिमतं, **तदेवत्वित्यादिना** भूतार्थस्य मानान्तरयोग्यतया बुद्धिपूर्वकविरचनरूपपौरुषेयत्वानुगुण्येनापौरुषेयत्वविरोधि भूतार्थत्वमित्युपपादनात्। **नतु भूतार्थत्वेनेत्युपसंहारे** सापेक्षत्वे तद्धेतुत्वप्रतिक्षेपाच्च। ततश्च कथं हेतूपाधिविकल्पपरत्वेन पूर्वटीकाव्याख्यानमित्याशङ्क्य, **प्रागुदाहृतटीकानुरोधेन, [तेनापौरुषेयत्वे सिद्धे] भूतार्थानामपि वेदान्तानां न सापेक्षतया प्रामाण्यविघात** P. 105-4 **इत्युत्तरटीकानुरोधेन** च, तथैव व्याख्या युक्ता। **यद्युच्येतेति टीका**

---

१. अन्यच्च पौरुषेयत्वम्, तस्यैव च सापेक्षत्वप्रयोजकस्य उपाधित्वमिति भावः।

२. भूतार्थत्वं सापेक्षत्वे न हेतुरिति प्रतिक्षिप्य, वाक्यत्वविशेषितभूतार्थत्वेन पौरुषेयत्वमापाद्य, तेन वेदान्तानां सापेक्षत्वापादनेन हि पौरुषेयत्वं हेतुरित्येव ज्ञायते नोपाधिरिति, तत् कथं हेतूपाधिविकल्पपरत्वेन टीकाव्याख्यानमित्याशङ्काभावः।

३. 'तेनापौरुषेयत्वे सिद्धे' इत्यादिटीकया हि 'अत्र ब्रूमः' इत्यादिसिद्धान्तपक्षोपसंहारवाक्यरूपया अयमर्थ उच्यते—अस्मर्यमाणकर्तृकत्वादिना वेदस्यापौरुषेयत्वं सिद्धं भूतार्थपरत्वेऽपि। एवं च वेदान्ताः मानान्तरसापेक्षाः भूतार्थत्वात् पुंवाक्यवत्, इति पूर्वपक्ष्यभिमतानुमानस्य पौरुषेयत्वेन सोपाधिकता, पौरुषेयत्वस्य पुंवाक्यरूपदृष्टान्ते साध्यव्यापकस्य पक्षीभूतवेदान्तेषु अभावेन साधनाव्यापकत्वात् उपाधिलक्षणाक्रान्तत्वात्। इति। कथमीदृशार्थलाभ इति चेत्; उच्यते—'भूतार्थानामपि वेदान्तानां न सापेक्षतया प्रामाण्यविघातः' इति वाक्येन हि भूतार्थत्वं न सापेक्षत्वानुमापकं भवितुमर्हतीति बोध्यते। कुतो नानुमापकत्वमिति शङ्कापरिहाराय 'अपौरुषेयत्वे सिद्धे' इत्युक्तम्। तेन हि—पुंवाक्यरूपदृष्टान्तस्य वेदान्तरूपपक्षस्य च पौरुषेयत्वापौरुषेयत्वरूपं वैलक्षण्यं प्रकटितम्। दृष्टान्तपक्षवैलक्षण्यमेव हि उपाधिर्भवति। इत्थमुपाधिप्रदर्शकोत्तरटीकानुरोधेन च हेतूपाधिविकल्पपरत्वेन पूर्वटीकाव्याख्यानं युक्तमिति भावः। इत्थमतिगंभीरो भावः संक्षिप्तेन आभोगवाक्येनावगन्तव्यः। यथावत् परिमलग्रन्थपरामर्शिनामेव चायमर्थो ज्ञातुं शक्यते, नान्येषाम्। परिमलोक्तया दिशा कल्पतरुं भक्तिचक्षुर्भ्यां आलोक्य, सभक्ति निरीक्ष्येत्यर्थः, आभोगः प्रकाश्यते, इति हि ग्रन्थकारेणैवोक्तम्। अस्माभिरपि सभक्तिश्रद्धं साभोगसपरिमलकल्पतरुनिरीक्षण एव कः परिमलार्थः केन वाक्येन कथं आभोगकारेण सङ्गृहीत इति ज्ञातुं शक्यते, इत्यवधेयम्।

च, साधनव्यापकतया पौरुषेयत्वस्यानुपाधित्वे सति उदाहृतव्यभिचारपरिहाराय वाक्यत्वविशेषितेन भूतार्थत्वेन हेतुना वेदान्तानां सापेक्षत्वं दुर्वारम्। अयमेव च हेतुः पौरुषेयत्वेऽपि, तेनापि सह व्याप्तेः [इत्येवंपरा]। **तस्मात् पौरुषेयत्वेन सापेक्षत्वं दुर्वारमित्य(स्या)पि** वेदान्तानां पौरुषेयत्वेन साधनव्यापकतया तस्यानुपाधित्वे भूतार्थवाक्यत्वेन सापेक्षत्वं दुर्वारम्। ननु भूतार्थत्वमात्रेण, प्रत्यक्षादिषु व्यभिचारादित्येवंपरा **टीकेत्याशयेनाह—वाक्यस्य सत इति।** P. 105-2

ननु त्वत्पक्षेऽपि वाक्यत्वेन सापेक्षानुमानं कुतो न भवेदित्यत आह—**कार्यपरतायां हीति। न च साधनेति।** तदानीं वाक्यत्वेन पौरुषेयत्वं नानुमातुं शक्यम्। अपूर्वस्य कार्यस्य मानान्तरागोचरस्वभावतया तदर्थज्ञानवत्पुरुषविरचितत्वरूपपौरुषेयत्वसाधने बाधादिति भावः। **टीकायाम्—आतिष्ठामह इति।** प्रतिजानीमह इत्यर्थः। P. 106-2

वेदान्तानां कार्यार्थत्वे वाक्यत्वेन सापेक्षत्वानुमानं न संभवति। भूतार्थत्वे तु संभवतीति वैषम्यं असिद्धम्। पौरुषेयत्वेन सापेक्षत्वस्य (सोपाधिक-

---

१. 'तस्मात् पौरुषेयत्वेनेति तदुपसंहारवाक्येनाप्यनुपाधित्वशङ्काया एव तत्फलेन सहोपसंहारः, वेदान्तानां पौरुषयत्वमापाद्य उपाधेः साधनव्यापकत्वात् निरुपाधिकेन भूतार्थत्वेन सापेक्षत्वमापाद्यते, न तु तदनापाद्य सोपाधिकेन भूतार्थत्वेनेति' इति परिमले अयमर्थ आविष्कृतः। टीकायां 'पौरुषेयत्वेन' इत्यंशेन पौरुषेयत्वस्य वेदान्तेष्वापादनेन अनुपाधित्वाविष्कारः। 'सापेक्षत्वं दुर्वारम्' इत्यंशेन च अनुपाधित्वफलसापेक्षत्वानुमितिकथनमिति बोध्यम्। टीकायां उपसंहारवाक्यगतस्य 'पौरुषेयत्वेन' इत्यस्य, पौरुषेयत्वापादननिरुपाधिकीकृतभूतार्थत्वेन इत्यर्थः। 'न तु भूतार्थत्वेन' इत्यस्य च तद्भिन्नेन सोपाधिकभूतार्थत्वेन न सापेक्षत्वमापाद्यते इत्यर्थः, इति भावः। प्रमाणान्तरसिद्धार्थानुवादकतया स्वप्रामाण्यसिद्धौ तत्प्रामाण्यमुखनिरीक्षकत्वं सापेक्षत्वं, पूर्वानुपूर्व्यनपेक्षपुंविशेषबुद्ध्यधीनानुपूर्वीमत्त्वं पौरुषेयत्वमिति साध्योपाध्योर्भेदः। इति परिमलम्।

२. कल्पतरौ 'वाक्यस्य सतः' इत्यादिवाक्यानन्तरं 'वाक्यत्वादि लिङ्गं यस्य तत् तथा' इति वाक्यं दृश्यते। तत् वाक्यत्वादिलिङ्गस्येति भामतीपाठमभिप्रेत्य, वाक्यत्वादिलिङ्गकस्येति पाठे उपलभ्यमाने बहुव्रीहित्वस्य स्फुटत्वेन व्याख्यानपेक्षणात्।

३. 'लोकस्तु प्रमाणेनोपलभ्यार्थं. अन्यत्रोपलब्धं वा समारोप्य, वचनानि रचयति—यथा ज्वरितः पथ्यमश्नीयात्। विमोक्षमाणो नैरात्म्यं भावयेत्—इति। न च नियोगः प्रमाणान्तरविषयः समारोपविषयो वा, अन्यत्रानुपलब्धेः' इति न्यायकणिकायाम्।

त्वस्य) तुल्यत्वात् । अतोऽपौरुषेयत्वाय नियामकान्तरमास्थेयमिति **टीकाकारः** परिहरतीत्याह—**कार्ये मानान्तरेति** । (**ततश्चेति** ।) **पौरुषेयत्वमिति** । कार्यपरत्वेऽपि पौरुषेयत्वस्य संभावितत्वया साधनव्यापकत्वस्यापि संभावितत्वादनुमानप्रवृत्तिरविकलेति भावः । (**पौरुषेयत्वमिति** ।) **ततश्चेति** । ततश्च तस्य साधनव्यापकत्वनिश्चयेनानुपाधित्वे, वाक्यत्वलिङ्गकं सापेक्षत्वमपि दुरपवादमिति भावः ।

P. 106-1

किं धात्वर्थः कार्यम्? उतालौकिकमिति विकल्प्य, **यदशक्यमित्यादि-टीकाभि**प्रायवर्णनेन प्रथमं निराकृत्य, द्वितीयं शङ्कते—**तर्हीति** । ननु लिङादिप्रत्ययात्कार्यत्वेन कार्यं प्रतीयते । अतस्तदनुरोधेन तत्र संगतिग्रहोऽप्यवश्यमभ्युपगन्तव्य इति शङ्कते—**नन्विति** । किं कार्यत्वेनापि वेषेण कार्यमात्रे पचेतेत्यादौ शक्तिग्रहः? उत क्रियाविलक्षणे कार्ये स्वर्गकामादिवाक्य एवेति, विकल्प्य, नाद्य इत्याह—**तत्राहेति** ।

P. 106-3

द्वितीयं शङ्कते—**स्वर्गकामेति** । अतिप्रसङ्गित्वादयं सत्तर्को न भवतीत्याशयेन परिहरति—**अयमिति** । **कर्तृस्मरणादिति** । 'पश्याम्यहं भिक्षवो दिव्येन चक्षुषा सुकृतं दुष्कृतं चे'ति तदीयवाक्येनैव कर्तुरवगमादिति भावः । **अकार्यार्थत्वं समानमिति** । बुद्धादिवाक्येषु तर्कलभ्यकार्यार्थत्वप्रतिषेधकस्य पौरुषेयत्वस्य वेदेष्वपि तुल्यत्वादिति भावः ।

P. 106-5

वेदेषु पौरुषेयत्वमसिद्धमिति शङ्कते—**स्मर्यमाणेति** । **सिद्धार्थेति** । पौरुषेयत्वानुमानस्य सोपाधिकत्वं वेदान्तानां कार्यार्थत्व इव, सिद्धार्थत्वेऽपि सम-

P. 106 8

---

१. 'न साधनाव्याप्तिः' इति कल्पतरुपाठस्थाने 'समा साधनव्याप्तिः' इति पाठान्तरम् ।

२. ततश्चेत्यादिग्रन्थे वाक्यत्वादिलिङ्गकं पौरुषेयत्वमित्यत्र पुरुषबुद्धिप्रभवत्वपरेण पौरुषेयत्वशब्देन सापेक्षत्वमेवोक्तम् । कल्पतरौ पूर्वग्रन्थेन, वेदान्तानां कार्यपरत्वेऽपि पौरुषेयत्वानुमानं प्रसरति, कार्यस्यापि मानान्तरयोग्यत्वाविशेषादिति पौरुषेयत्वानुमानमुक्त्वा, तत्फलस्य उपाधेः साधनव्यापकत्वस्याभिधानात्, ततश्चेत्यादिग्रन्थे उपाधिविधूनने सति निरुपाधिकेन वाक्यत्वेन सापेक्षत्वानुमानस्यैव उपसंहर्तव्यत्वादिति भावेन आभोगकारः परिमलमनुसृत्य सापेक्षत्वमिति व्याचख्यौ ।

३. कार्यता भाति, अतोऽपूर्वसिद्धिरिति कल्पतरुः । कार्यत्वेन कार्यं भाति, कार्यं चापूर्वं, कार्यभानानुपपत्त्या सङ्गतिग्रहोऽपि यथाकथंचिदुपपादनीय इति भावः ।

मित्यर्थः। **न्यायकणिकोक्तं** दर्शयति। **वर्तमानेति। कार्यरूपेति।** ऐतच्च गुरुमतेन। भट्टमते तु यागादेः स्वरूपेण प्रत्यक्षत्वेऽपि श्रेयस्साधनत्वरूपधर्मत्व-वेषेणाप्रत्यक्षत्वं बोध्यम्। माभूत् सापेक्षत्वं वेदान्तानाम्, अनुवादकत्वं तु दुर्वारमिति शङ्कते—**नन्विति।** P. 106-9 P. 107-2

सोऽयमस्येति टीकाया भाष्यव्याख्यानरूपतां दर्शयति—**सर्वक्लेशेति।** [3]टीकायां **फणिनमारोपितं,** तादात्म्येनेति भावः। **कषादित्वादिति।** 'कषादिषु यथाविध्यनुप्रयोगः पूर्वस्मिन्'नित्यनेन सूत्रेण णमुल्प्रत्ययविधायकेषु सूत्रेषु तत्प्रकृतितया निर्दिष्टानां धातूनां मध्ये ये कषादयः, तद्विषये तेषामनु-प्रयोग इति विधानादित्यर्थः। **निबन्धनमिति।** निमित्तमित्यर्थः। P. 107-3

---

१. 'अतः प्रमाणान्तरोपलब्धिविवक्षापुरस्सरप्रवृत्तित्वात् विधिमदितरद्वा पुरुष-वचः सापेक्षम्, अतथाभावात्तु वैदिकं उभयमप्यनपेक्षमिति चतुरश्रम्।' इत्यादिना विधिविवेके, तद्व्याख्यायां न्यायकणिकायां च कर्त्रस्मरणादियुक्तिभिः वेदस्यापौरुषेयत्वं उपपादितम्।

२. 'कार्यं रूपयतीति अनुष्ठेयं ज्ञापयतीति कार्यरूपः यागाद्यनुष्ठानप्रयोजकः तद्ग-तस्वर्गादिश्रेयस्साधनत्वाकारः तेन रूपेण यागादिर्धर्मः। अतः यागादेः स्वरूपतः प्रत्य-क्षत्वेऽपि धर्मत्वाकारेणातीन्द्रियता' इति परिमले भट्टरीत्यापि व्याख्यातम्।

३. टीकायां 'फणिनमारोपितम्' इति वाक्यानन्तरं 'न जातु ज्ञानमात्रं वस्त्वप-नयति' इति वाक्यस्थाने 'न जातु ज्ञानमात्रं वस्तूपनयति, नापि वस्त्वपनयति' इति पाठः प्रमादात् गलितः।

४. 'कषादित्वा'दिति प्रतीकात् पूर्वं 'अन्वयव्यतिरेकनिदर्शनयुगलद्वयप्रदर्शन-पुरस्सर'मित्यस्यायमर्थः—ज्ञानमात्रात् प्राप्तप्राप्तित्यक्तत्यागदृष्टान्तौ अन्वयनिदर्शनयुगलम्। अनुष्ठानवशादप्राप्तप्राप्त्यत्यक्तत्यागदृष्टान्तौ व्यतिरेकनिदर्शनयुगलम्। तद्द्वयं एतदुक्तमि-त्यादिटीकायां प्रदर्शितमित्यर्थः।

५. अत्र भाष्ये 'देवतादिप्रतिपादनस्य तु स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चि-द्विरोधः' इत्युक्तम्। तत्र भामती—"यत्तु 'आत्मेत्येवोपासीत' 'आत्मानमेव लोकमुपा-सीत' इत्युपासनावाक्यगतदेवतादिप्रतिपादनेनोपासनापरत्वं वेदान्तानामुक्तं तद्दूषयति—देवतादिप्रतिपादनस्य तु - आत्मेत्येतावन्मात्रस्य - स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चि-द्विरोधः" इति। तत्र कल्पतरुः—'आत्मानमेव लोकं चैतन्यम्, देवता - सगुणं ब्रह्म, आदिशब्दात् प्राणविशुद्ध्यादि गृह्यते। उपासनावाक्यैकदेशमुपास्यसमर्पकं विविनक्ति—आत्मेतीति'।

अत्र भामतीकल्पतरुवाक्ययोरनुपपन्नार्थकत्वं भाति। तथाहि—'आत्मेत्येवोपासीत' (बृ - अ - १ - ब्रा - ४ - कण्डिका-७) 'आत्मानमेव लोकमुपासीत' (बृ - अ - १ - ब्रा - ४ -

P. 107-10 **अर्थवादाः किं न स्युरिति ।** विधिमन्तरेण प्रमाणं किं न स्युरित्यर्थः । तथाच 'विधिना त्वेकवाक्यत्वात्' इति सूत्रविरोध इति भावः । **व्याप्त्यभावेनेति ।** यत्र वेदवाक्यत्वं तत्र सिद्धपरत्वमिति व्याप्त्यभावेन तेन न तदनुमेयमित्यर्थः । अध्ययनविधिबलेन प्रयोजनवत्त्वमात्रसिद्धावपि निषेधैकवाक्यत्वे को हेतुरित्याशङ्क्य, निन्दाया निषेधशेषत्वमौचित्येन दर्शयन्नवतारयति—**रुदत इत्यादिना । रुदतोऽग्नेः यदश्रु शीर्णमभवदित्यर्थः । सिद्धान्तमिति ।** अर्थवादाधिकरणसिद्धान्तमित्यर्थः ।

P. 108-3 **निन्दा न भातीति ।** पारलौकिकानिष्टानुबन्धित्वरूपा निन्दा न भाति । ऐहलौकिकेष्टजनवियोगप्रयुक्तरोदनाद्यनिष्टहेतुत्वं च न निन्दा । तस्य रजतदानेऽपि क्वचिददर्शनेन तत्रातात्पर्यादिति भावः । जनकत्वस्य शक्तिरूपत्वात् अनुमानगम्यत्वमिति, शङ्कते—**नन्विति ।** प्रमाजनकत्वज्ञाने तदुपयोगेऽपि
P. 108-6 प्रमायां नोपयोग इति परिहारतात्पर्यमाह—**कार्यार्थापत्तीति ।** कथं तर्हि भाष्ये अनुमानगम्यत्वनिषेध इत्याशङ्क्य, **प्रामाण्यमनुमानगम्यं न भवतीति**

---

कण्डिका-१५) इति वाक्यद्वयं बृहदारण्यकोपनिषदि प्रथमाध्याये पुरुषविधब्राह्मणे निर्विशेषात्मप्रकरणे वर्तते । अतो नेदमुपासनावाक्यम् । नाप्यत्र प्रतिपाद्यं सगुणं ब्रह्म, अतः इदमपि उपासनावाक्यं इति सगुणब्रह्मपरमिति च कृत्वा चिन्तया भामतीकल्पतर्वोः प्रवृत्तिः । सगुणब्रह्मोपासनाप्रकरणगतवाक्यान्तरोपलक्षणार्थञ्चैतद्वाक्यद्वयमित्यवधेयम् ।

अतएव ब्रह्मविद्याभरणे—'यानि दहरशाण्डिल्याद्युपासनाप्रकरणगतानि ब्रह्मप्रतिपादकपदानि, तेषामुपासनाविधिशेषतोपगतैव । यानि तु निष्प्रपञ्चात्मप्रकरणगतानि तेषां नोपासनाविधिशेषत्वम् । सर्वत्र तदश्रवणात् । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति क्वचिन्निर्विशेषब्रह्मप्रकरणे ध्यानविधिश्रवणेऽपि……नोपक्रमाद्यवगतप्राधान्यभङ्गेन ध्यानविधिशेषतया ब्रह्मप्रतिपादनम् । किं तु ब्रह्मप्रतिपत्त्युपयोगितया ब्रह्मशेषतयैव ध्यानादिप्रतिपादनम् । … ….इत्याह—देवतादिप्रतिपादनस्येत्यादिना ।' इत्युक्तम् ।

१. अत्र टीकायां अर्थवादाधिकरणसिद्धान्तनिरूपणे 'दर्वीहोमवत्' इत्युक्तम् । याज्यापुरोऽनुवाक्याभ्यां विना केवलस्वाहाकारान्तमन्त्रप्रदेयतया विहिता होमाः दर्वीहोमा इत्युच्यन्ते । ते चापूर्वाः, न प्रकृतिमन्तः । इत्यष्टमाध्यायचतुर्थपादे निर्णीतम् । दर्व्या होम इति व्युत्पत्त्या लौकिकवैदिककर्मनाम ।

२. नचानुमानगम्यमिति भाष्यस्य, यद्यपि कार्यार्थापत्तिसमधिगम्यमिति टीकया कथमाक्षेपस्संभवति, अनुमानार्थापत्त्योर्भेदादित्याशङ्क्य कार्यार्थापत्त्यपरपर्यायानुमानेन, इति कल्पतरावुक्तम् । इति बोध्यम् ।

न भाष्यार्थः। किन्त्वनुमानगम्यं सत् प्रामाण्यं भवतीति नेत्येवं भाष्यार्थ इत्याह—**शास्त्रप्रामाण्यमिति**। P. 103-9

वेदान्तजन्यज्ञानस्य प्रमात्वमेव नास्तीति शङ्कते—**कार्यविरहितेति**। किं प्रत्यक्षेण बाधादप्रमात्वं? वेदान्ता न प्रमाजनकाः सिद्धार्थवाक्यत्वादित्यनुमानेन वा? नाद्यः। तद्द(दद)र्शनादित्याह—**सिद्धे ब्रह्मणीति**। तथा चानुभवविरोधान्न बाधप्रसक्तिः इति भावः। द्वितीयं शङ्कते—**यदीति**। चक्षुर्न रूपप्रत्यक्षजनकं इन्द्रियत्वात् श्रोत्रवत् इत्यप्यापत्त्या अप्रयोजको हेतुरिति परिहरति—**तदेति**।

ननु वेदान्तानां सिद्धब्रह्मबोधकत्वाभावस्यैव पूर्वमपि पूर्वपक्षितत्वात् अत्रापरे इत्यादिभाष्यं पुनरुक्तमित्याशङ्कां निराकर्तुं टीकायां—**आचार्यदेशीयानां मतमुत्थापयतीत्युक्तम्**। तत्र 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति देशीयप्रत्ययान्तेनाचार्यशब्देनेषन्न्यूनाचार्यत्वावगमात् पूर्वत्रेवात्रापि ब्रह्मणो वेदान्तबोध्यत्वमनङ्गीकृत्य, सिद्धार्थव्युत्पत्त्यनुपमर्दोपमर्दाभ्यां भेदकथने अस्यापि सिद्धान्तासंस्पर्शिपूर्वपक्षान्तरत्वापत्तेः आचार्यदेशीयमतत्वं न स्यादित्यतः प्रकारान्तरेण भेदं दर्शयति—**अथवेति**। भाष्यानुगुणश्चायं पक्ष इत्याह—**अत एवेति**। P. 103-17

ननु कार्यार्थात् ब्रह्मनिश्चय इत्यनेन कार्यविषयं वाक्यं ब्रह्मनिश्चायकमिति पक्षसाध्ये निर्दिष्टे इति वक्तव्यम्। तत्र पक्षे अज्ञातसङ्गतित्वहेतोरभावात् स्वरूपासिद्धिरित्यत आह—**अत्र कार्येति**। **तत्र हेतुरिति**। **सिद्धार्थपरं वाक्यं न ब्रह्मबोधकमिति प्रतिज्ञायामित्यर्थः**। **यत्र हीत्यादि-**

---

१. अत्र कल्पतरौ 'न पुनरनुमानेन ज्ञेयमिति' इति पाठः अशुद्धः, 'न पुनरनुमानेन न ज्ञेयमिति' इति शोधनीयम्। शास्त्रप्रामाण्यमनुमानगम्यत्वाभाववदिति आपाततः प्रतीयमानार्थो न भाष्यार्थः। किं तु सत् भवतीति पदद्वयाध्याहारेण, अनुमानगम्यं सत् शास्त्रप्रामाण्यं भवति—अनुमानेन भवति, उत्पद्यते, इति न, इति भाष्यार्थः कल्पतरूक्तः आमोगे विवृतः।

२. 'सिद्धार्थव्युत्पत्त्यनुपमर्दोपमर्दाभ्यां वर्णकयोः पूर्वपक्षभेदमुक्त्वा, ब्रह्मणः शास्त्रप्रमाणकत्वप्रतिक्षेपाप्रतिक्षेपाभ्यां तद्भेदं यद्यपीत्यादिभाष्यसिद्धं दर्शयति—अथवेति' इति परिमलम्।

P. 108-18 **टीकायां** अप्रयोजकत्वमाशङ्क्य तात्पर्यमाह—**यंत्र वृद्धेति** । व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वादिति भावः ।

पामरजनाप्रयुक्तानामपि शब्दानां संगतिग्रहदर्शनात् लोकशब्दः प्रेक्षावत्पर इत्याह—**वृद्धैरिति** । सिद्धे प्रयोगाभावोऽपि तद्व्यापकनिवृत्तेरि(त्त्ये)त्याह— P. 109-1 **प्रयोगेति** । सर्वपदानां साक्षात्परंपरया वा कार्याभिधायकत्वमित्येव नियमः । तत्र लिङादीनां कार्यवाचिनां साक्षात् कार्याभिधायकत्वं, तदितरपदानां तु कार्यान्वितस्वस्वार्थवाचिनां परंपरयेत्याशयेन परिहरति—**आशङ्क्याहेति** ।

**अपि चेत्यादिनाप्यज्ञातसंगतित्वस्यैव कथनात् अपिचशब्दानु**पपत्तिमाशङ्क्य, तस्यैव भङ्ग्यन्तरेणाभिधानात् तदुपपत्तिरित्याशयेनाह—**एवमिति** । **न च रज्जुरित्यादिटीकायामुत्तरत्र** वाच्यमित्यदर्शनात् प्रतीत्यैभिलाप इति भ्रमं व्यावर्तयति—**न च रज्जुरितीति** । P. 109-6

ननु 'रज्जुरियं न भुजंग' इति सिद्धवाक्यार्थनिश्चयादिव, तत्त्वमस्यादिवाक्यार्थनिश्चयादप्यनर्थनिवृत्तिसंभवात्, कथं सिद्धब्रह्मपरत्वे वेदान्तानामर्थवत्त्वाभावः? इति सिद्धान्तिशङ्कानुवादे, कथं? **यथाकथञ्चित् लक्षणये**त्युक्तिरित्याशङ्क्य, नायं सिद्धान्तिशङ्कानुवादः, किन्तु ग्रन्थाद्बहिरेव, कृतायाः सिद्धान्तिशङ्कायाः परिहाराय, पूर्वपक्षिवाक्यमेवेदम् । तत्र च दृष्टान्तेऽपि न सिद्धमात्रपरत्वमिति P. 109-7 दर्शयितुं **टीकायां—यथाकथंचिदि**त्युक्तमित्यभिप्रेत्य व्याचष्टे—**सिद्धेति** । अत

---

१. 'यत्र वृद्धप्रयुक्तशब्दविषयत्वं तत्र सङ्गतिः शब्दस्य गृह्यते' इति कल्पतरुवाक्ये तत्रैव इति तु साधु । तदैव वृद्धप्रयुक्तशब्दविषयत्वस्य सङ्गतिग्रहव्यापकत्वं विवक्षितं प्रकाशेत ।

२. 'लोकेन न प्रयुज्यन्ते इति टीकोक्तमयुक्तम् , पामरजने निरर्थकसिद्धार्थपदसंघातप्रयोगस्य संभावितत्वादित्याशङ्क्य लोकेनेति पदं व्याचष्टे—वृद्धैरिति । प्रेक्षावता उत्तमवृद्धजनेनेत्यर्थः' इति परिमले । अत्र टीकायां लोकेन इत्येकवचनं, वृद्धैरिति बहुवचनशब्देन कल्पतरौ तद्विवरणम् । तस्य प्रेक्षावता उत्तमवृद्धजनेन इति परिमले पुनश्च एकवचनशब्देन विवरणम् । जनसामान्यवाचिलोकशब्दस्य उत्तमवृद्धरूपजनविशेषे लक्षणा, तत्र च एकत्वमविवक्षितमित्याशयेन कल्पतरौ बहुवचनम् । एकवचनान्तलोकशब्दस्य बहुवचनान्तशब्देन विवरणमसङ्गतम् , किं च, वृद्धैरिति बहुवचनेन उत्तममध्यमसर्ववृद्धग्रहणं स्यात् , व्यवहारतस्संगतिग्रहस्थले च उत्तमवृद्धस्यैव शब्दप्रयोक्तृत्वं, इत्यभिप्रेत्य परिमले प्रेक्षावता उत्तमवृद्धजनेन इति व्याख्यातमिति भाति ।

३. 'न च रज्जुरियं न भुजंगः' इति प्रतीतेरभिलाप इति भ्रममित्यर्थः ।

एव पूर्वपक्षिग्रन्थतां स्फोरयितुं—न च निवृत्तिरित्युक्तम्। सिद्धान्तिग्रन्थत्वे निवृत्तिरिति न चेत्येव प्रदर्शयेदिति ध्येयम्। नियोगाविनाभावादिति। P. 109-7 प्रयोज्यप्रयोजकवृद्धव्यवहारानुरोधिप्राथमिककार्यव्युत्पत्तिग्रहानुरोधेन तदनन्तरभाविव्यवहारे सर्वत्रापि तत्कल्पनादिति भावः।

टीकायां—मननादय इत्यादिपदेन निदिध्यासनं शमादयश्च गृह्यन्ते। कृत्यवच्छेदद्वारा कार्यावच्छेदकत्वं विषयत्वमित्यभिप्रेत्याह—आत्मेति। कार्यस्य नियोगादिनामकत्वप्रदर्शनमप्रस्तुतमित्याशङ्क्य, प्राभाकरमतावलंबनेन ह्यत्र पूर्वपक्षः, तैश्च नियोगस्य वाक्यार्थत्वाङ्गीकारात् कुतस्त्यं कार्यस्य वाक्यार्थत्वमित्याशङ्कां निराकर्तुं तस्य नियोगाभेदप्रदर्शनमित्याशयेनाह—नन्वित्यादिना। P. 107-9

न च विषयानुष्ठानमिति टीकायां अनुष्ठानं प्रतीतिर्निष्पत्तिश्च। एवं तत्सिद्धिरित्यत्रापि। एवमुत्तरत्रापि द्रष्टव्यम्। स्वविषयस्येति पदाभिप्रायमाह—स्वप्रतीतीति। लिङा कार्यत्वेनापूर्वं बोधनीयम्। कार्यत्वं च कृति- P. 107-11

---

१. 'निवृत्तिरिति नच' इति, इतिपदघटितोक्तौ तावत्पर्यन्तं सिद्धान्तिशङ्कानुवादत्वप्रतीतिः स्यात्। तथानुक्तेः, तावत्पर्यन्तं सिद्धान्तिशङ्कानुवादत्वं न, मध्ये सिद्धान्तिशङ्कानुवादग्रन्थाद्बहिरेव, सिद्धान्तिशङ्कापरिहारकपूर्वपक्षिवाक्यमिदमिति प्रकाशयति कल्पतरुकार इति भावः। यथाकथंचिल्लक्षणयेति टीकाभागव्याख्या कल्पतरौ कल्पयित्वेत्यन्तम्। क्लेशेन पूर्वपक्षिवाक्यत्ववर्णनापेक्षया सिद्धान्तिशङ्कानुवादान्तर्गतत्वमेवोचितम्। मध्ये पूर्वपक्षिवाक्यस्य स्वरसतोऽनन्वयात्, इत्यभिप्रेत्यैव परिमले अन्यथा व्याख्यातम्—"पूर्वपक्षिणापि संप्रतिपन्नो हि दृष्टान्तीकर्तव्यः। न च 'रज्जुरिय'मित्यादिवाक्यं केवलसिद्धार्थपरमर्थवदिति पूर्वपक्षिणस्संप्रतिपत्तिरस्ति। तत्रापि कार्यवाचिपदाध्याहाराभ्युपगमात्, इति पूर्वपक्ष्याशयानुसारेण यथाकथञ्चिल्लक्षणयेति टीकातद्व्याख्यानयोरवतरणम्। रज्जुवाक्यस्य परमते कार्यपरत्वेऽपि रज्जुरियं न भुजंग इति सिद्धार्थांश एव भयादिनिवृत्त्युपयोगी, न तु कुलधर्मतया परिकल्पितः कार्यांश इति सिद्धार्थपरतत्वमस्यादिवाक्यदृष्टान्तत्वसङ्गतिः" इति। भामतीव्याख्यायां ऋजुप्रकाशिकायां पूर्वपक्ष्याशयानुसरणं विनैव सिद्धान्तिमतेऽपि 'रज्जुरियं न भुजंग' इति वाक्ये रज्जुत्वभुजंगाभावत्वविशिष्टयोरैक्यवाक्यार्थासंभवात् रज्जुत्वभुजंगाभावत्वोपहितयोरभेदस्यैव वाक्यार्थत्वात् उपहितलक्षणातात्पर्यकं यथाकथंचिल्लक्षणयेति टीकावाक्यमित्युक्तम्। आरोपिताभावस्याधिष्ठानस्वरूपत्वेऽपि विशिष्टयोरभेदे विशेषणयोरप्यभेदापत्त्या उपहिताभेद एव वाक्यार्थ इति भावः। एवं टीकाभिप्रायवर्णने कल्पतर्वादिक्लेशस्यानवसरः।

२. तत्सिद्धिरित्यत्रापि सिद्धिः प्रतीतिर्निष्पत्तिश्च। एवमुत्तरत्रापि—'स्वसिद्ध्यर्थं' 'अनुष्ठानं' इत्यादावपि प्रतीतिर्निष्पत्तिश्चार्थ इत्यर्थः।

साध्यत्वम् । न चापूर्वं कृत्या साक्षात्साध्यत इति, यागादिद्वारैव कृतिसाध्यत्वं बोधनीयमिति, कार्यप्रतीत्युपाधिर्विषय इत्यर्थः । **करणस्येति** पदाभिप्रायमाह—

P. 109-10 **स्वनिर्वर्तकत्वेनेति** । शङ्कते—**कार्यमिति** । अनेन, तदेव कार्यं स्वावच्छेदकज्ञाननिरूपणाय तादृशं ज्ञानविषयीभूतं आत्मानमाक्षिपतीति टीका योजिता ।

**तर्हीति** । सर्वेषामपि वेदान्तानां कार्यपरतया, सच्चिदानन्दब्रह्मस्वरूपसत्तायां तात्पर्याभावादश्रौतत्वमित्यर्थः । अनुपपद्यमानस्य विधेरेव तत्र तात्पर्यात्

P. 110-1 सिद्धमात्मनोऽपि श्रौतत्वमिति परिहरति—**विध्याक्षिप्तस्येति** । ज्ञानज्ञेययोः कृत्यसाध्यत्वात् कथं विधेयत्वमिति शङ्कते—**ज्ञानस्येति** । विधेयत्वं-विधिविषयत्वं, तच्च धात्वर्थस्य कार्यघटकतया, अन्यस्य तु तन्निरूपकत्वेनेति परिहरति—**इत्याशङ्क्याहेति** ।

कार्यं स्वावच्छेदकज्ञाननिरूपणाय ज्ञेयमाक्षिपतीत्युक्तमयुक्तम्, ज्ञेयस्य सत्ताराहित्येऽपि ज्ञाननिरूपणसंभवादिति शङ्कते—**नन्विति** । तच्छ-

P. 110-5 ब्दस्य वेदान्तप्रसिद्धं ब्रह्मस्वरूपमर्थ इति व्याचष्टे—**ब्रह्मास्मीति ज्ञाने इति** । नन्वारोपितस्यापि वाग्धेनुतादात्म्यादेर्निरूपकत्वं दृश्यते, इत्यत आह—**न च सत्यामिति** । तत्र बाधकवशात् तथाभ्युपगमेऽपि प्रकृते न तथा, अद्वैतवादे सर्वानुपपत्तिपरिहारस्य करिष्यमाणत्वादिति भावः ।

भाष्ये अज्ञातसंगतित्वादिहेतूनामेव प्रदर्शितत्वात् **न च विषयानुष्ठानं**

P. 110-7 **विना तत्सिद्धिरित्यादिटीका** कस्य भाष्यस्य व्याख्येत्यत आह—**इयं**

---

१. "उपासनानियोगो हि स्वविषयतयावगतस्यात्मनः स्वरूपनिर्धारणमपेक्षते, सत्यादिपदार्थाश्च तत्प्रकरणपठिताः वाक्यार्थीभावमपेक्षमाणाः स्वशेषितया उपासनानियोगेनैवान्वयं प्राप्नुवन्ति । तथा चोभयाकांक्षा निवृत्ता भविष्यति । शेषशेषिभावेनान्वय एव च ग्राहकग्रहणमिति प्राभाकरैर्व्यवह्रियते । ततश्च यद्यपि सत्यादिपदार्थस्य न साक्षादुपास्यकोटौ निवेशः, तत्कोटेस्समानवाक्योपात्तेनात्मनावरुद्धत्वात् । तथापि उपासनानियोग एव उपास्यस्वरूपापेक्षायां स्वान्वितानां सत्यादिपदार्थानां अवगतान्वयनिर्वाहार्थं तेषामात्मविशेषणतामाक्षिपतीत्युपादानापरपर्यायविध्याक्षेपरूपप्रमाणसहकृतो वेदान्तवाक्यनिचयः सत्याद्यात्मकमुपास्यं समर्पयतीति न काचिदनुपपत्तिः" । विध्याक्षेपरूपविधिव्यापारात्मकमुपादानं शब्दप्रमाणान्तर्भूतम् । ननु 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति लौकिकवाक्यार्थज्ञानमूलकश्रुतार्थापत्तिवत् शाब्दप्रमोपजीवि तदनन्तरं प्रवर्तमानं प्रमाणान्तरमिति गुरुमतर्यादा " इति परिमलतदनुसारिब्रह्मविद्याभरणादिग्रन्थोक्तरीतिरिहानुसंधेया ।

चेति। प्रतिपत्तेरेव प्रतिपत्तिविधिविषयत्वात् कथं ब्रह्मणस्तद्विषयत्वमुक्तं भाष्ये इत्याशङ्क्य, प्रतिपत्तिद्वारा ब्रह्मणो विध्यवच्छेदकत्वात् तद्विषयत्वोक्तिरिति भाष्यभावमाह—**प्रतिपत्तिविधेरिति**। आदिशब्दार्थमाह—**तथा अपूर्वेति**। P. 111-2 उत्पत्त्यपूर्वेत्यर्थः। गुरुमते परमापूर्वस्यैव लिङ्वाच्यस्य फलविधितया, अन्यविधिपरेण शास्त्रेण तस्य समर्पणानभ्युपगमात्। उत्पत्त्यपूर्वं तु फलविध्याक्षेपलभ्यमिति न दोष इति ध्येयम्।

नन्वज्ञातसंगतित्वहेतुर्न भाष्ये दृश्यत इत्याशङ्क्य, संमतिप्रदर्शनेन सोऽपि भाष्योक्त इत्याह—**तद्भूतानामिति**। **नियोज्यादिशब्दानामर्थभेदं** दर्शयति—**नियोगस्येत्यादिना**। नियोगबलान्नियोज्यमात्रसिद्धावपि नामृतत्वकामस्य नियोज्यत्वसिद्धिः। तदश्रवणात्। ततश्च **कथममृतत्वकामस्येति** भाष्यमिति शङ्कते—**अमृतत्वेति**। P. 111-9

**भाष्ये** किमर्थानुपपत्तिराशङ्क्यते? उतामृतत्वशब्दप्रयोगे कारणं पृच्छ्यते? आद्येऽपि, किं मोक्षस्य फलत्वे प्रमाणाभावः, उत स्वर्गस्यैव फलत्वं न्याय्यमिति? अथवा ब्रह्मभावस्य फलत्वेऽपि कथममृतत्वस्य फलत्वमिति?। आद्यं निराकरोति—**आशङ्क्याहेति**। **ब्रह्मभवनस्य नियोज्याकाङ्क्षा**बाधात् अध्याहारेण **टीकार्थ**माह—**भवतीति**। **साध्यत्वाभिव्यक्त्यर्थमिति**। ततश्च प्रवर्तनारूपस्य विधेरेव **नियोज्यविशेषाकाङ्क्षेति** भावः।

**निश्चितश्चेहेति**। विधिवाक्यपर्यवसानानन्तरमेव वाक्यशेषप्रवृत्तेरिति P. 111-14 भावः। **सूत्रार्थ**माह—**क्रताविति**। ततश्च **क्रतावप्यङ्ग इव फलप्रतिपादकं वाक्यमर्थवादमात्रं कार्ष्णाजिनिराचार्यो मन्यत इति सूत्रार्थः**। तस्य(त्र)-सर्वांशदृष्टान्तत्वभ्रमं व्युदस्यति—**न प्रतिष्ठादीति**। **मुख्यार्थेति**। समभिव्याहृतसकलपदपर्यालोचनयैव च विधिवाक्यपर्यवसानादिति भावः।

द्वितीयं निराकर्तुं—**पिण्डपितृयज्ञन्यायेनेति टीका**। तत्र **विश्वजिदुदाहरणे** ग्रथितो न्यायः कथं **पिण्डपितृयज्ञन्यायत्वेनोक्तः**?—इत्याशङ्क्य, 'यस्सत्रायागुरते स विश्वजिता यजेते'ति, सत्रसंकल्पे निमित्ते विधीयमानत्वेन फलकल्पनाया अप्रसक्तेः क्त्वाचिन्तया तत्र न्यायग्रथनमित्याह—**विश्वेजि**- P. 111-19

---

१. शाबरभाष्योदाहृतविश्वजिद्विलक्षणः एकाहकाण्डे फलसंयोगं विना श्रुतो विश्वजित् स्थिरोदाहरणमिति सोमनाथीये उक्तम्।

P. 112-2 न्न्यायेनेति । अश्रूयमाणत्वेनेति । तेन शब्देनाप्रतीयमानत्वात् तदसमवेत इत्यर्थः । तथापीति । जहत्स्वार्थापेक्षया अजहत्स्वार्थाया अभ्यर्हितत्वादिति भावः ।

पिण्डपितृयज्ञस्य स्थिरोदाहरणत्वप्रकटनाय दर्शानङ्गत्वं प्रकट(दर्श)यति-पिण्डपितृयज्ञेति । प्रकरणादङ्गत्वं व्यावर्तयितुं—अनारभ्याधीतेत्युक्तम् । तृतीयं शङ्कते—नन्विति । 'एतदमृतमभयमेतद्ब्रह्मे'त्यादिश्रुत्या ब्रह्मभावामृत-
P. 112-10 त्वयोः अभेदावगमान्न दोष इति परिहरति—तत्राहेति । आद्यद्वितीयं निराकर्तुं अमृतत्वं चेत्यादिटीकेत्याह—अमृतत्वेति । अमृतत्वं च ब्रह्मभावस्य नाशाभावादेव । न च नाशानुमानं, आगमबाधादिति ब्रह्मभावस्य नित्यसिद्धतां प्रकटयितुं भाष्ये अमृतत्वशब्देन निर्देशः कृत इति भावः ।

तन्निवर्तयतीति । ततश्च भाष्ये ब्रह्मज्ञानं विधीयत इत्यत्र ज्ञानशब्द उपासनापरः । 'द्रष्टव्यः' इत्युदाहरणं च तदनन्तरश्रुत 'निदिध्यासितव्य' इति विध्युपलक्षणत्वेनेति भावः ।

ननु 'द्रष्टव्य' इत्येव विधिः किं न स्यादित्याशङ्क्य, किं मुख्यार्थे विधिः, उत लाक्षणिके ? आद्येऽपि, किं [श्रावणं] प्रत्यक्षं [वा] ज्ञानं मुख्योऽर्थः ? उतोपासना ? नान्त्यः, दृशेरुपलब्धिवचनत्वादित्युक्तं टीकायाम् । तदुप-
P. 112-13 पादयति—द्रष्टव्य इति । 'दृशिर्प्रेक्षणे' इति स्मरणात् लोकप्रसिद्धेश्चेति भावः । टीकायां-श्रावणं न विधेयम् । अध्ययनविधिनैव प्रापितत्वात् इत्युक्तम् । तत्र कथमध्ययनप्रापकस्य विधेः श्रावणज्ञानप्रापकत्वमित्यत आह—स्वाध्यायेति । कर्मधारयभ्रमं वारयति—भावनयेति ।

अप्रयोजकमिति । दध्यानयनस्य प्रयोजकमनुष्ठापकं न भवतीत्यर्थः। सूत्र-
P. 112-17 व्याख्यानेन पूर्वपक्षमाह—तत्रेति । दध्यानयनान्निमित्तात् पयस उपादान-

---

१. अत्र कल्पतरौ पिण्डपितृयज्ञन्यायानुक्रमणे अवसाने 'विश्वजिन्न्यायेन स्वर्गकामनियोज्यकल्पनया स्वर्गफलः पिण्डपितृयज्ञः' इत्युक्तम् । तत् न संगच्छते—विश्वजितः स्थिरोदाहरणत्वासंभवस्य इदानीमेव कल्पतरुकृतोक्तत्वात्, पिण्डपितृयज्ञस्यैव विचार्यत्वात् तत्र पिण्डपितृयज्ञन्यायेनेति वक्तुमनौचित्यात्, अतः 'सः स्वर्गःस्यात्' इति सूत्रोक्तन्यायेन इति पठितव्यमिति भाति । यद्वा सोमनाथोक्तफलरहितविश्वजिदभिप्रायं वाक्यं नेयम् ।

२. श्रावणं, वाक्यश्रवणजन्यं शाब्दबोधात्मकं ज्ञानम् ।

कारणादित्यर्थः। **आमिक्षैव** प्रयोजिका **स्यात्** यतः **प्रधानं** पय एवामिक्षेति सूत्रभागं व्याचष्टे—**अत्रेति**। पयसः प्राधान्ये हेतुमाह—**तत्रानयतेरिति**। P. 112-21

शङ्कोत्तरत्वेन सूत्रशेषं व्याचष्टे—**नन्वित्यादिना**। **रूपभेदेऽपीति**। P. 113-1 द्रवत्वकठिनत्वाभ्यां स्वरूपभेदेऽपीत्यर्थः। **तर्हीति**। रूपाभेदादिति भावः। नन्वेकत्र रूपाभेदः अपरत्र रसाभेदः। ततश्च विनिगमकाभाव इत्यत आह—**रूपाभेदेऽपीति**।

द्रष्टव्य इत्यादेर्लक्षितोपासनाविधायकत्वमपि न संभवति तदुपलक्षितविध्यन्तरेणैव तत्सिद्धेरिति द्वितीयकल्पनिराकरणाय द्रष्टव्य इत्यादयस्त्विवति टीकेति ध्येयम्। ननु टीकायां—भाष्यशेषो हेतुद्वयस्य प्रपञ्चः। स निगदव्याख्यात इत्युक्तम्। तदयुक्तम्। निगदव्याख्यातत्वे स्वेन पूर्वं तत्प्रपञ्चनवैफल्यादित्यत आह—**हेतुद्वयेति**। P. 113-4

भाष्यतट्टीकोक्तं युक्तिद्वयं श्लोकेन संगृह्णाति—**वेदान्ता इति**। तत्र, यद्विषया जिज्ञासेत्यादिभाष्यसूचिता युक्तिः पूर्वार्धेनोक्ता, तस्य चायमर्थः—वेदान्ता यद्युपास्तिविधिपराः, तर्ह्युपास्तेश्चोदनालक्षणत्वेन धर्मत्वात् धर्मजिज्ञासासूत्रप्रतिज्ञाविषयतया तयैव मीमांसया तदर्थं प्रवृत्तेन जैमिनिनैव विचा-

---

१. 'आनयनं द्विकर्मकं, यदानीयते तत् प्रथमं कर्म, यत् प्रति आनीयते तत् द्वितीयं, तच्चेह पयः। तच्च प्रथमेन कर्मणा व्याप्यमानं प्रधानम्। प्रधानपरामर्शि च सर्वनाम' इति शास्त्रदीपिकायाम्। 'साक्षात् क्रियया व्याप्यमानत्वात् प्रथमत्वम्। प्रथमेन व्याप्यमानत्वात् द्वितीयत्वम्।' इति, 'मैत्रावरुणाय दण्डं प्रयच्छति' इत्यत्र कर्मणा अभिप्रेयमाणस्य संप्रदानस्य प्राधान्यं यथा, एवं प्रथमेन कर्मणा व्याप्यमानस्य द्वितीयस्य कर्मणः पयस एव प्राधान्यम्। उभयत्र द्वितीयानिर्देशे किं केन व्याप्यत इति निश्चेतुमशक्यत्वात्, सप्तमीनिर्देशे सति आधारस्याधेयव्याप्यतया पयसो दध्ना व्याप्यमानत्वं स्वध्यवसानमिति, पयसः प्राधान्यानुकूलः सप्तमीनिर्देशः' इति च सोमनाथीये उक्तमत्रावधेयम्।

२. अत्र 'रसभेदोपलंभान्न वाजिने' इति कल्पतरुपाठः। दधिसंसृष्टस्य पयसो यो मधुराम्लरसः तस्यामिक्षायामुपलंभात् रूपभेदेऽपि रसाभेदात् आमिक्षायां तादात्म्येन पयोऽस्ति। वाजिने तु तक्रपयसोरिव रूपाभेदेऽपि कटुतिक्तरसत्वेन रसभेदात् न वाजिने तादात्म्येन पयोऽस्ति। 'न च पयस्त्वं द्रवापेक्षम्। रसविशेषमात्रापेक्षं तत्। अतितापेन सान्द्रीभूतेऽपि पयसि पयस्त्वप्रतीतेः' इति च शास्त्रदीपिकायाम्। अतः रसाभेद एव विनिगमकः न रूपाभेद इति भावः।

रितार्था भवेयुरिति पुनर्बादरायणेन प्रतिज्ञातं **ब्रह्मजिज्ञासनं निष्फलमेव स्यात्** । अतो नोपास्तिविधिपरा इति ।

तथा च वक्ष्यति—**कार्यविलक्षणानधिगतविषयलाभात् स्वमते शास्त्रपृथक्त्वसिद्धिः अतस्तद्ब्रह्मेति भाष्ये उक्तेति** । एवं च सति परिमले

P. 113-6 अस्या युक्तेरभ्युच्चययुक्तित्वं किमर्थमुक्तमिति चिन्त्यम् । **उत्तरार्धे** तादृशोऽपि फलविशेषो यदि मोक्षः स्यात्, तदा **स्वर्गादिफलैः कोऽपराधः कृत** इत्यन्वयः ।

ननु मोक्षे उच्चनीचत्वादिकं मया नेष्यत इत्याशङ्क्य, क्रियाफलत्वे

P. 113-7 तदवर्जनीयमित्याह—**वेदान्ता इति** । 'फलस्य कर्मनिष्पत्तेः तेषां लोकवत्परिमाणतः फलविशेषः स्या'दिति न्यायादिति भावः । **विचारितत्वोक्तिः**—

---

१. परिमले 'वेदान्तानामुपास्तिविधिपरत्वे प्राचि तन्त्रे विचारितत्वेनात्र विचारो विफलस्स्यादिति युक्तिः अभ्युच्चययुक्तिरेव न मूलयुक्तिः । वैधोपासनफलबोधकतया विधिशेषभूतैः वेदान्तवाक्यैः स्वर्गदेवतयोः यागविधिशेषभूतैर्वाक्यैस्सिद्धिवत् ब्रह्मस्वरूपमात्रस्य प्राचीनतन्त्रोक्तन्यायैः कथंचित् सिद्धिसंभवेऽपि तन्निर्गुणत्वादेः विद्याभेदाभेदोपसंहारानुपसंहारस्य विशेषस्य च एतत्तन्त्रव्युत्पादयिष्यमाणन्यायैकनिर्णेयस्य ततो निर्णयालाभात् । मूलयुक्तिस्तु श्लोकोत्तरार्धसंगृहीता मोक्षस्य सातिशयत्वानित्यत्वापत्तिरेव, 'तत्रैव च भाष्यस्य तात्पर्यं टीकाकारो दर्शयति' इत्यवतारिकया कल्पतरुकारोऽप्येतमर्थं सूचयति' इत्युक्तम् । युक्तमेव तत् ।

पूर्वमीमांसायामनिर्णीतानामर्थानां ब्रह्मनिर्गुणत्वविद्याभेदाभेदादीनां निर्णयाय ब्रह्मविचारारंभसंभवात् । जिज्ञासाधिकरणेऽपि सौत्राथशब्दार्थविचारप्रस्तावे परिमले अयमेवार्थः स्पष्टं प्रदर्शितः—'धर्मजिज्ञासासूत्रस्य सकलवेदार्थविचारप्रतिज्ञापरत्वमात्रेण अस्य शास्त्रस्य गतार्थत्वं नापद्यते । इह व्युत्पादयिष्यमाणानां सिद्धब्रह्मपरवाक्यार्थनिर्णायकन्यायानां पूर्वतन्त्रव्युत्पादितेभ्यः कर्मपरवाक्यार्थनिर्णायकन्यायेभ्यो विलक्षणत्वात्' इति । तत्र धर्मजिज्ञासासूत्रस्य सकलवेदार्थविचारप्रतिज्ञापरत्वेऽपि अस्य शास्त्रस्य गतार्थत्वं नापद्यते इत्युक्तम् । अत्र तु उपासनस्य चोदनालक्षणस्य मानसधर्मत्वेन तत्साधारण्येन धर्मजिज्ञासासूत्रस्य सकलधर्मविचारप्रतिज्ञापरत्वेऽपि अस्य शास्त्रस्य गतार्थत्वं नापद्यते इत्युच्यते इति विशेषः। अतः पूर्वार्धोक्ता युक्तिरभ्युच्चययुक्तिरेव न मूलयुक्तिरिति युज्यत एव । अत एव पञ्चपादिकादिसर्वटीकासु तद्युक्तेः प्रपञ्चनं न कृतम् । द्वितीययुक्तेरेव प्रपञ्चनं दृश्यते ॥ 'कार्यविलक्षणे' त्यादिवक्ष्यमाणकल्पतरुवाक्ये—पूर्वपक्षिमते उभयोरपि तन्त्रयोः कार्यविषयत्वाविशेषात् न शास्त्रपृथक्त्वसिद्धिः, स्वमते तु तत्सिद्धिरित्युच्यते । तत्तु अङ्गीक्रियत एव, उपासनाविधिपरत्ववादिनां मते ऐकशास्त्र्यं, सिद्धान्ते नेति विशेषः ॥

जिज्ञासितत्वोक्तिः, भाष्ये विचारितत्वाकथनात्। **भोक्तव्यमिति दर्शनायेति**। P. 113 11
ज्ञानेन विना पापानामत्यन्तोच्छेदे मानाभावेन तदुपासनाफलभोगानन्तरं पुनरागमनशक्येन॰'न ह वै सशरीरस्ये'त्यादिश्रुत्या च प्रबलपुण्यप्रतिबद्धपापफलमपि तदनन्तरं भोक्तव्यमेव। ततश्च मुक्तस्य पुनस्संसारप्रसङ्ग इति दर्शनायेत्यर्थः। दानमितीतिशब्दो भाष्यव्याख्यानसमाप्तिद्योतनार्थः।

**देवदत्तेति**।[2] संसारकालीनदेवदत्तशरीरध्वंसे अतिव्याप्तिवारणाय कालीनान्तम्। अन्यदीयशरीरप्रागभावसमानकालीनतया अव्याप्तिवारणाय—**देवदत्तेति**। P. 114-1
मुक्तस्य देवदत्तस्य (स्व)शरीरप्रागभावासमानकालीनो यज्ञदत्तशरीरध्वंसोऽपि [आत्यन्तिकं] अशरीरत्वं स्यादिति द्वितीयं देवदत्तपदम्। देवदत्तोपान्त्यशरीरध्वंसे तदीयचरमशरीरोत्पत्त्यनन्तरभाविनि यथोक्तलक्षणसत्वादतिव्याप्तिरिति, तद्वारणाय शरीरतत्प्रागभावासमानकालीनत्वं विवक्षणीयमिति परिमलोक्तं चिन्त्यम्। पूर्वपूर्वशरीराभिमाननिवृत्तिपूर्वकमेवोत्तरोत्तरशरीराभिमानेन पूर्वशरीरध्वंसानन्तरमेवोत्तरशरीरोत्पत्तेः। आध्यासिकसंबन्धविशिष्टवेषेणैव शरीरध्वंसस्य विवक्षितत्वात्।

---

१. अधर्मफलं भोक्तव्यमिति। 'तद्य इह कपूयचरणाः' इत्यादिश्रुत्या धर्मफलभोगानन्तरं कदाचिदधर्मफलभोगस्याप्युक्तत्वादिति भावः। इदमप्यभ्युच्चयमात्रम्। 'अहंग्रहोपासनाभिः तत्फलप्राप्तेः प्रागेव सर्वपापक्षयस्याङ्गीकृतत्वात्' इति परिमले॥

२. देवदत्तशरीरासमानकालीनत्वं प्रलयकालोत्पन्ने तदीयशरीरध्वंसेप्यस्तीति तद्वारणाय प्रागभावविशेषणम्।

३. चरममुक्तशरीरध्वंसे परं शरीरप्रागभावासमानकालीनत्वं भवति, सर्वमुक्त्यनन्तरं शरीरप्रागभावाभावात्। अतस्तत्र लक्षणसमन्वयादसंभवो नोक्तः। इति बोध्यम्।

४. यज्ञदत्तशरीरध्वंसस्य देवदत्तमोक्षत्वं स्यादिति भावः॥

५. देवदत्तस्य उपान्त्यशरीरध्वंसः तदीयचरमशरीरोत्पत्त्यनन्तरभावी देवदत्तशरीरप्रागभावासमानकालीन एव, तस्यात्यन्तिकाशरीरतारूपत्ववारणाय देवदत्तशरीरतत्प्रागभावासमानकालीन इति परिष्करणीयम्। उपान्त्यशरीरध्वंसस्य च देवदत्तचरमशरीरसमानकालीनत्वाद्वारणमिति भावः॥

६. तथा च उपान्त्यशरीरध्वंसस्य चरमशरीरप्रागभावसमानकालीनत्वेन शरीरप्रागभावासमानकालीनत्वाभावादेव वारणसंभवात् शरीरतत्प्रागभावासमानकालीन इति परिष्कारोऽनावश्यक इति भावः॥

अन्यथा मुक्तशरीरस्यापि कञ्चित्कालं परिपालनसंभवेन तस्य तावत्पर्यन्तं मुक्त्यभावप्रसङ्गात्। शरीरतत्प्रागभावासमानकालीन इति व्याख्यानेऽपि द्वित्रिदिनस्थायिचरमशरीरध्वंसानन्तरोत्पन्ने तत्रातिव्याप्तिध्रौव्याच्च[1]।

ननु 'अशरीरं शरीरेष्वि'त्यादिश्रुत्या शरीरकालेऽपि सद्भावप्रतिपादनात् कथं ध्वंसात्मकमशरीरत्वमित्यतः तन्निष्कर्षमाह—**सत्त्वोपाधीति**। **टीकायां**—**उपासनासंस्कारवदित्यारभ्य शङ्का**। तस्याः फलं दर्शयन्नाह—**उपासनापूर्वमपीति**। **कारीर्यादीति**। शुष्यत्सस्यसञ्जीवनकामस्यैव तत्राधिकारादिति

P. 114-1
P. 114-5

---

१. मुक्तस्य देवदत्तस्य प्रारब्धबलात् जातं द्वित्रिदिनस्थायि यत् चरमशरीरं तस्य ध्वंसानन्तरमेव तदीयं पूर्वमुपान्त्यं शरीरं यदा दाहादिवशेन नष्टं, तदा तादृशोपान्त्यशरीरध्वंसस्य देवदत्तशरीरतत्प्रागभावासमानकालीनत्वेन तत्रातिव्याप्तिरिति भावः ॥

२. 'सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात्, नह्यात्मनः शरीरात्माभिमानलक्षणं मिथ्याज्ञानं मुक्त्वा अन्यतः सशरीरत्वं शक्यं कल्पयितुम्' इति भगवत्पादसूक्तिमवलंब्य आध्यासिकसंबन्धविशिष्टवेषेणैव शरीरस्य ध्वंसः विवक्षित इति सत्यमेतत्। प्रकृते शरीरे उपान्त्यं अन्त्यं इत्यादिविभागश्च अवयवोपचयापचयाभ्यां शरीरभेदमङ्गीकुर्वाणानां नैयायिकादीनां मतरीत्या। एकदा च न शरीरद्वयं, मूर्तयोस्समानदेशताविरोधात्। एवं च उपान्त्यशरीरध्वंसः अन्त्यशरीरोत्पत्तिकाले, विनश्यदवस्थस्य मूर्तस्य मूर्तान्तरसमानदेशत्वाविरोधे, अन्त्यशरीरोत्पत्तिद्वितीयक्षणे वा जायते। जीवस्यापि यदा यदा यद्यच्छरीरमस्ति तदा तदा तत्तच्छरीरे आभिमानिकः संबन्धः। जीवन्मुक्तस्यापि प्रारब्धकर्मानुसारेण संस्कारवशात् शरीरे अभिमानः भवति। एवं च अन्त्यशरीरोत्पत्तिकाले तदनन्तरक्षणे वा जायमानः उपान्त्यशरीरध्वंसः अन्त्यशरीरकाले जायमानः शरीरप्रागभावासमानकालीन एव, तदा शरीरप्रागभावाभावात्। तथा च तद्वारणाय परिमले शरीरासमानकालीनत्वोक्तिः, तस्य च शरीरसमानकालीनत्वाद्वारणम्। अन्त्यशरीरोत्पत्तेः पूर्वमेव उपान्त्यशरीरध्वंसो न जायते, येन शरीरप्रागभावसमानकालीनत्वात्तस्य प्रागभावासमानकालीनत्वाभावादेव वारणं स्यात्। उपान्त्यशरीरं नष्टं अन्त्यशरीरं च नोत्पन्नमित्येतादृशस्समय एव नास्ति। उपचयापचयाभ्यां शरीरभेदेऽपि शरीरसन्तानस्याविच्छिन्नत्वात्।

यद्वा नैयायिकादिमतानाश्रयणेऽपि, उपान्त्यं अन्त्यं इति च परस्परविलक्षणशरीराभिप्रायेऽपि, मुक्तस्य देवदत्तस्य योगाभ्यासवशेन कायव्यूहं स्वीकुर्वाणस्य अन्त्यशरीरमुत्पाद्य प्रारब्धवशेन तत्राभिमानं कुर्वतः तत्काले तदुत्पत्त्यनन्तरं वा उपान्त्यशरीरे अभिमानं त्यजतः परिमलग्रन्थाभिप्रायविषयत्वस्वीकारे, तादृशोपान्त्यशरीरध्वंसे शरीरप्रागभावासमानकालीने अतिव्याप्तिवारणाय शरीरसमानकालीत्वविवक्षा। तस्य चान्त्यशरीरसमानकालीनत्वाद्वारणम्। एतदभिप्रायद्योतनायैव च परिमले 'यदि स्यात् तदा' इत्युक्तम्। स्थलमिदमपूर्वमिति तेन द्योतनात् ॥

भावः। आदिपदेन 'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुं ज्योगामयावी'[1] इत्यादिवाक्यविहितानि दीर्घरोगनिवृत्तिफलकानि कर्माणि गृह्यन्ते।

अमृतत्वकामेनाप्यन्यनियोज्यकापूर्वावगतौ बाधकाभावात् टीकायां—कार्यमिति विधेयपरमित्याह—**तदपूर्वमिति। नार्हतीति।** कामी काम्यादन्यत्काम्याव्यवहितसाधनतया ज्ञातमेव कर्तव्यतया जानातीति नियमादिति भावः। **नेहेति। एतेन ब्रह्मभूयादन्यन्नियमापूर्वसाध्यममृतत्वं न च किञ्चिदस्तीति टीका योजिता।** यद्यप्युत्पत्त्यपूर्वमेव नियमापूर्वसाध्यं, तथापि नियमापूर्वापेक्षया परमत्वं बोध्यम्। गुरुमतेन वा तदुक्तिः। तन्मते परमापूर्वस्य तत्साध्यत्वादिति ध्येयम्।[2] P. 114-6

विश्वजिन्न्यायं गुरुमतेन दर्शयति—**विश्वजितेति। लिङ्गप्रकरणेत्यादि-** P. 115-2 विशेषणप्रयोजनमाह—**निषेधे हीति। गुरुमते** 'न कलञ्जं भक्षये'दित्यस्य कलञ्जभक्षणाभावविषयकं कार्यमित्यर्थः। तत्र च नियोज्याकाङ्क्षायां कलञ्जभक्षणे यः प्रविवृत्सति, स एव सामर्थ्याल्लभ्यते। भक्षणोन्मुखं प्रत्येव तदभावकर्तव्यताबोधनादिति भावः। **इह तु विषयेणेति।** नियोगस्य कृतिसाध्यत्वप्रतीतिनिर्वाहको विषय एव। न तु नियोज्योऽपि। कृतितत्साध्यमध्यवर्तिन एव तथात्वात्।[3] अध्ययननियोगादेस्तेन विनापि प्रतीतेश्चेति[4] भावः। P. 115-5

---

१. ज्योगामयावी - दीर्घरोगी।

२. 'न चावघातनियमस्य परमापूर्वप्रयुक्तत्वे तत्साधनत्वाविशेषादाज्यसांनाय्ययोरप्यवघातप्रसङ्गः, तुषविमोकादिदृष्टप्रयोजनव्यवस्थया व्रीह्यादिषु तद्व्यवस्थोपपत्तेः, अन्यथा आग्नेयाद्यपूर्वप्रयुक्तत्वेऽपि तत्साधनस्रगादिसाधारण्यप्रसङ्गानिवारणादिति भावः' इति परिमलादनुसंधेयम्।

३. 'कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः' इति तदुक्तेः। कृत्या यागस्साध्यः, यागेन अपूर्वं साध्यं इति अपूर्वस्य कृतिसाध्यत्वघटकं मध्यभावि यागादिकम्।

४. अध्ययननियोगादेरित्यादिपदेन प्रयाजादिनियोगो गृह्यते। गुरुमते अध्यापनविधिना अध्ययनसिद्धेरुक्तत्वात् अध्ययननियोगस्य नियोज्यं विनैव प्रतीतिः, प्रयाजादिनियोगस्यापि दर्शपूर्णमासप्रकरणलब्धाधिकारिकस्य नियोज्यं विनैव प्रतीतिरिति भावः।

कल्पतरौ 'विषयेण कार्यस्यान्विताभिधानपर्यवसानात्' इत्यस्यायमर्थः—कार्यस्य यत् अन्विताभिधानं प्रतीत्यनुबन्धेनान्वितस्य सतः अभिधानं, तस्य विषयेण पर्यवसानात्।

P. 115-6 **अत्रापीति ।** अभिधेयस्य कृतिसाध्यत्वस्य कृतिकर्तारमन्तरेणापर्यवसाने तदभिधानमपि न निर्व्यूढमित्यर्थः । तदेव दर्शयति—**कार्यं हीति । तमन्तर्भाव्यैवेति ।** अध्ययननियोगादेरपि माणवकादिनियोज्यलाभेनैव प्रतीतिपर्यवसानम् । परं तु आचार्यत्वकामनियोज्यकाध्यापनविधिमहिम्नैव स लभ्यत इति, न तत्र तत्कल्पनमिति भावः ।

नन्वेवं कर्तुरावश्यकत्वेऽपि, तस्य नियोज्यत्वं कथमित्यत आह—**न चासाविति ।** कर्तव्यत्वेन ज्ञात्वा तद्विषयानुष्ठानेन तदुत्पत्तावेव तेन संबन्धादिति भावः । P. 116-1 **किं सर्वेषामिति ।** सर्वफलकामानामित्यर्थः । फलकामिन एव यथोक्तनियोज्यत्वसंभवेन तदन्यस्य तत्र प्रसक्त्यभावात् ।

ननु दुःखनिवृत्तेरपि सर्वाभिलषितत्वात् तत्कामः किमिति नाध्याह्रियते, इत्यत आह—**दुःखनिवृत्तेरपीति ।** सुखकाले दुःखाभावेन सुखस्य दुःखाभावाविनाभूततया तत्सिद्धौ दुःखाभावसिद्धेरवर्जनीयत्वात् इति भावः।[1] नच वैपरीत्यमित्याह—**दुःखेति ।** पुत्रपश्वादिसुखार्थिनामपि संभवात् कथं विशेष इत्याशङ्कां निराकर्तुं, **सर्वान्** [2]**प्रतीति सूत्रे** हेतुरुक्तः । तं सोपपत्तिकं व्याचष्टे— **अनवच्छिन्नस्येति ।** अतो विशेषग्रहणे मानाभावात् सर्वविशेषसाधारणस्वर्ग एव नियोज्यविशेषणमित्याह— P. 116-7 **विशेषे चेति । आगुरणेति ।**[3] सत्रं संकल्प्य दैवान्मानुषाद्वा अपराधात् तत्त्यागेन तत्संकल्पोपरम इत्यर्थः ।

---

विषयस्यैव प्रतीत्यनुबन्धत्वादिति भावः । कार्यं नाम यागादिविषयककृतिसाध्यम् । तत्र यागादिप्रतीतिं विना कार्यस्याप्रतीतेः यागादिविषयस्य प्रतीत्यनुबन्धत्वम् ।

१. इदमुपलक्षणम्—'सुखस्य भावरूपत्वेन लघूपस्थितिकत्वाच्चेत्यपि द्रष्टव्यम् ।' इति परिमलम् ।

२. 'यदेकं फलं स स्वर्गस्स्यात् सर्वान् पुत्रपश्वादिसुखविशेषान् प्रति अविशिष्टत्वात् सामान्यरूपत्वात् स्वर्गस्य ' इति गुरुणा बृहतीनामके निबन्धनग्रन्थे व्याख्यातं सूत्रम् । प्रायः सर्वपुरुषान् प्रति स्पृहणीयत्वेनाविशिष्टत्वादिति भाष्यकारादिव्याख्या ' इति परिमले ।

३. 'गुरी उद्यमने ' इति धातुबलात् यः सत्राय आगुरेत् उद्यमं कुर्वीत इत्येव अर्थः प्रतीयते यद्यपि, तथापि प्रायश्चित्ततया विश्वजिद्विधानात् सत्रप्रवृत्तस्य प्रायश्चित्तायोगात् उद्यमनिवृत्तावेव प्रायश्चित्तप्रसक्तेः, आगुरेदिति उद्यमनिवृत्तिपरतया व्याख्यातम् ।

ननु अत एवेत्यादिभाष्यस्यानुमानरूपन्यायप्रदर्शकत्वमुक्तं **यत्किले-त्यादिटीकायाम्** । तदनुपपन्नम् । अशरीरत्वस्य मोक्षस्य चैतन्यदृष्टान्तेन नित्यत्वसाधने तयोर्भेदापत्तेरित्याशङ्क्य, स्वरूपातिरिक्ताविद्यानिवृत्तिरशरीरत्वमिति पक्षाभिप्रायेण टीका प्रवृत्ता । स्वरूपमेवेति पक्षे तु व्याघात एव भाष्योक्तो न्याय इत्यभिप्रेत्याह—**स्वाभाविकेति** । **विशेषणमिति** । **कूटस्थनित्यमित्यत्र** P. 117-1 कूटस्थेति विशेषणमित्यर्थः । परिणामिनित्यतानिराकरणस्य संगतिमाह—**इदं त्विति** ।

सर्वात्मना परिणामपक्षे तद्भावव्याघातमुपपादयन्नवतारयति—**परि-** P. 117-4 **णामो हीति** । तर्ह्येकदेश एव परिणामिनित्योऽस्त्वित्यत आह—**स चानित्य इति** । एकदेशस्य धर्म्यभिन्नस्य सर्वात्मना परिणामे प्रथमकल्पोक्तो दोष इत्याह—**नश्यतश्चेति** । भेदाभेदाङ्गीकारेऽपि कथमनित्यत्वपरिहार इत्यतस्तात्पर्यं दर्शयन् अवतारयति—**पक्षद्वयेति** । विपर्ययशब्दस्य विरोधार्थकत्वं दर्शयन् वाक्यार्थमाह—**यत्प्रमाणेति** । P. 117-9

---

१. अत्र कल्पतरौ 'तदर्थं परिणामिनित्यस्य भ्रमसिद्धत्वमाह—परिणामीति' इति वाक्यस्यायमर्थः—तदर्थं - 'यत् पारमार्थिकं तदविकृतम्' इति व्याप्तिप्रदर्शनार्थं परिणामिनित्यस्य भ्रमसिद्धत्वमाह, इति । अविकृतत्वरूपव्यापकाभाववति विकृते परिणामिनि पारमार्थिकत्वरूपव्याप्यस्याभावे एव हि व्याप्तिः प्रदर्शिता भवति । अतः परिणामिनित्यस्य भ्रमसिद्धत्वमाह टीकाकारः—'परिणामिनित्यता हि न पारमार्थिकी' इति । परिणामिनित्यतायाः अपारमार्थिकत्वे च नित्यत्वेन भासमानस्य परिणामिनोऽपि अपारमार्थिकत्वात् परिणामिनित्यस्य भ्रमसिद्धत्वमाह इति कल्पतरूक्तटीकावतारिकोपपत्तिरिति ध्येयम् ।

२. एकदेशपरिणाम एवेष्यते । यः एकदेशः नश्यति सः एकदेशिनः धर्मिणस्सकाशात् भिन्नाभिन्नः । भिन्नत्वात् एकदेशिनः न तत्त्वव्याहतिः, अपि तु नित्यता सिद्धयति । अभिन्नत्वात् एकदेशिन एव परिणामिता सिद्धयति । ततश्च परिणामिनित्यतासिद्धिः । पक्षद्वयोक्तदोषपरिहारो भवति । भेदाभेदमते च एकमेव वस्तु कार्यकारणोभयात्मकं, कार्याकारेण परिणामित्वं, कार्याणि च मिथो भिन्नानि । कारणाकारेण च नित्यत्वं, तच्च कारणमभिन्नम् । कार्यात्मना परिणममानादेकदेशात् भिन्नाभिन्नस्य एकदेशिनः कारणस्य कार्यादपि भिन्नाभिन्नत्वं सिद्धयति । एवं च कार्यं कारणं च मिथो भिन्नाभिन्नम् । वाक्यान्वयाधिकरणे च परिमले 'भेदाभेदमते कार्यकारणयोर्मिथो भेदाभेदवत्त्वात् कार्याणां भेदः कारणमपि स्पृशति । कारणस्याभेदः कार्याण्यपि स्पृशति' इत्युक्तम् । एवं च भेदाभेदमते न कोपि दोषः सर्वं समञ्जसं भवतीति शङ्कितुराशयः ।

P. 117-10 **प्रमाणमाहेति।** अर्थापत्तिमित्यर्थः। तत्प्रत्यक्षस्य विप्रतिपन्नत्वात्। तथाहीत्यादिटीकायां अर्थापत्तेरेव प्रदर्शनाच्च। एवं च **सामानाधिकरण्यप्रत्यये पर्यालोच्यमान इति,** टीका योज्या।

कुण्डले हेमाभेदे हेम्नो, हेम्नि कुण्डलाभेदे कुण्डलस्य वा वस्तुनो हेमत्वकुण्डलत्वाभ्यां द्विरवभासप्रसङ्ग इष्टापादनमित्याशङ्क्य, सर्वात्मना भेदाभावे हेमकुण्डलशब्दयोः पर्यायत्वापत्त्या हेमत्वकुण्डलत्वयोरप्यभेदे, हेम कुण्डलमिति समानाधिकरणप्रत्ययो हेम हेमेत्येवंरूपः, कुण्डलं कुण्डलमित्येवंरूपो वा स्यादित्याशयमाह—**हेम हेमेति।**

अभेदासिद्धिशङ्कोत्तरत्वेन टीकां व्याख्यातुं पर्यवसितमर्थमाह—**अपर्यायेति।** किं हेमत्वकुण्डलत्वयोरुभयोरपि धर्मिणा सहाधाराधेयभावः सामानाधिकरण्यप्रयोजकः, उत हेमत्वमात्रस्य? नाद्यः। हेम्नः कुण्डलावस्थातिरिक्तकुण्डलव्यक्तेरेवाभावेन कुण्डलत्वजात्यैसिद्धेरित्याद्यकल्पनिराकरणमभिप्रेत्य, द्वितीयकल्पमादायैव शङ्कामाह—**हेमत्वस्येति।** P. 117-11

नन्वेवमपि कथं परिणामिनित्यसिद्धिः। हेमादीनामप्यनित्यत्वादित्याशङ्क्य, मूलकारणस्य प्रधानादेरुक्तयुक्त्या परिणामिनित्यस्य सिद्धिरित्यभिप्रेत्य, P. 118-1 टीकायाः परमकारणपरतामाह—**लोक इति।** भावरूप इति पक्षेऽपि स किमभेदविरुद्धः, उत न?। प्रथमे, भावाभावत्वपक्षे वक्ष्यमाणमेव दूषणं भविष्यतीत्यभिप्रेत्य, द्वितीयं दूषयति—[3]**ऐकान्तिकेति।** रूपरसयोरिव तयोरेकत्र संभवादिति P. 118-3

---

१. अत्र श्रीरङ्गनगरस्थवाणीविलासमुद्रालयमुद्रिते चतुस्सूत्रीभागात्मकाभोगग्रन्थे 'कुण्डलत्वजात्यसिद्धेः' इत्यनन्तरं चतस्रः पङ्क्तयः त्रुटिताः। 'इत्यभिप्रेत्य टीकायाः परमकारणतामाह' इति मुद्रितम्। अहो प्रमादः। अनन्वयः पाठकानां परमं वैरस्यमावहति। एवमेव शोधकानां लेखकानां च प्रमादः पाठकानां परमोऽनर्थः॥

२. अत्र टीकायां 'परमकारणस्य सतः' इति सच्छब्देन यद्यपि ब्रह्म विवक्षितम्, तच्च न परिणामिकारणं विवर्तोपादानत्वात्तस्य, तथापि ब्रह्मपरिणामो जगदिति वदतां एकदेशिनां मतमनुसृत्य, सिद्धान्तेऽपि सच्छब्देन मायाशबलितब्रह्मणोऽभिधानात् मायामभिप्रेत्य वा, सच्छब्दप्रयोगात् परमकारणस्य परिणामिनित्यत्वसिद्धिरिति तात्पर्यम्॥

३. 'ऐकान्तिकाभेदानिषेधात्' इत्यस्य 'तथा च भेदे सत्येव अत्यन्ताभेदोऽपि स्यादित्यर्थः।' इति परिमले व्याख्यानम्। वाक्यान्वयाधिकरणे कल्पतरावेव 'अविरोधश्चेत् भेदेप्यत्यन्ताभेदाविरोधात् न भेदाभेदावकाश इति भावः' इति किंचिदधिकं स्फुटी-

भावः। द्वितीयमाशङ्क्याहेति। परस्पराभाव इति चेत्, इति पूर्वग्रन्थेनाशङ्क्येत्यर्थः। P. 118-4

टीकायां भावाभावयोर्विरोधे अन्यतरस्यैव भागित्वं स्यादित्युक्त्वा, तयोरविरोधे कटकवर्धमान(शराव)योरपि भिन्नयोस्तत्त्वेनाभेदः स्यादित्युक्तम्। तदयुक्तम्। स्वस्वकारणाभेदस्य तात्त्विकस्यैवाभ्युपगमादित्यत आह—कटकत्वेति। विशिष्य, कटकाभेदापादने को हेतुरित्याशङ्क्य, कार्यभेदो न स्यादित्यत्र पर्यवसानमिति सूचयन् उत्तरटीकामवतारयति—कार्यस्येति। तथा चेत्यनेन हाटकाभेदमात्रपरामर्शे कटकाद्यात्मना भेदसत्वेन भेदस्याप्रतिभासनादित्यसङ्गतं स्यात्। अतः कृत्स्नयुक्तिपरामर्शित्वमाह—एवमेकेति। भेदाभेदयोरवच्छेदकभेदेन सत्त्वाभ्युपगमान्न विरोधः। कटकत्वादेरभेदानवच्छेदकत्वान्नैककार्यापत्तिश्चेति शङ्कातात्पर्यमाह—कटकस्य हीति। ननु तदभिन्ना- P. 118-5 P. 118-7

---

कृतम्। तत्र च परिमलम्—'यद्यविरोधस्तर्हि भेदाङ्गीकारेऽप्यत्यन्ताभेदः प्रकारविशेषानपेक्षी अभेदस्स्यात्। विरोधे हि केनचित् प्रकारेण भेद इति भेदोपाधिप्रकारं परिहृत्य तदन्येन प्रकारेणाभेद इति वक्तव्यं स्यात्। तथा च भेदः कथं निविशताम्? (तथा च अत्यन्ताभेदसत्त्वे च—प्रकारविशेषमनपेक्ष्य अभेदसत्वे च—भेदः कथं निविशताम्? केनचित् प्रकारेणाभेदसत्त्वे हि प्रकारान्तरेण भेदस्स्यात्। प्रकारविशेषमनपेक्ष्यैवाभेदसत्वे भेदः कथं वर्तताम्? न कथमपि भेदो वर्तेतेति भावः) यद्युच्येत विरोधाभावात् भेदाभेदौ गन्धपृथिवीत्ववत् असङ्करोपपादकप्रकारभेदानपेक्षौ निवेष्टुमर्हत इति, तर्हि एकस्यामेव व्यक्तौ, गन्धवती पृथिवीति, गन्धपृथिवीत्वबुद्ध्योरिव, घटो भवति घटो न भवतीति बुद्ध्योरपि समावेशस्स्यात्। तददर्शनात्, तयोर्व्यवस्थितघटपटादिविषयत्वस्यैव च दर्शनात्, गन्धपृथिवीत्वयोरिव न भेदाभेदयोरविरोध इत्यर्थः॥' इति। तत् सर्वमिहानुसंधेयं ग्रन्थार्थपरिशुद्धये॥

१. तत्वेनाभेदप्रसङ्ग इत्यस्य तात्विकाभेदप्रसङ्ग इत्यर्थो भाति, सतु नानिष्टः कारणात्मना कटकवर्धमानयोरभेदाङ्गीकारात्, इत्याशङ्क्य तत्वेनेति पदं व्याचष्टे कटकत्वेति। इति परिमलम्।

२. अत एव 'कार्यात्मना तु नानात्वमभेदः कारणात्मना। हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा॥' इति वाचस्पत्युक्त्या भेदाभेदवादिकारिकया अवच्छेदकभेदेनैव भेदाभेदयोरुक्तत्वात्' इति लघुचन्द्रिकायामुक्तम्। वाक्यान्वयाधिकरणेऽपि परिमले 'भास्करग्रन्थेषु विरुद्धयोरपि समबलयोरपि भेदाभेदयोरसंकरोपपादनं कृतं-भेदो घटशरावादिकार्यात्मना, अभेदस्तावदनुवृत्तमृदादिकारणात्मनेति' इत्युक्तम्। तथाच अवच्छेदकभेदेन भेदाभेदयोरभ्युपगमान्न विरोध इति शङ्का युज्यते॥

भिन्नस्य तदभिन्नत्वावश्यकत्वमिति पूर्वमुक्तत्वात् कथं शङ्का? कथं वा हाटकमेव वस्तु सदित्युक्त्या, कटकादीनामवास्तवत्वाभिधानात् व्यावृत्तत्वादिति हेतुरित्यत उक्तं—**प्रस्मृतपराभिसन्धिः स्वप्रक्रियेति** ।

P. 118-8

किं कटकस्य हाटकमेव स्वरूपं, उपादानव्यतिरेकेण वस्तुसतः कार्यस्याभावात्, ततश्च कुण्डलादिषु हाटकानुवृत्त्या तदभिन्नस्य कटकस्यानुवृत्तिरभ्युपगम्यते? किं वा हाटकाद्वस्त्वन्तरमेव कटकमित्याश्रित्य, नास्ति कुण्डलादिष्वनुवृत्तिरित्युच्यते? आद्ये-प्रागुक्तदोषतादवस्थ्यमित्याह—**सिद्धान्ती त्विति** । द्वितीये कटकस्य हाटकाभेदोऽपि न स्यादित्याह—**कटकस्येति** । उपनयकथनसामर्थ्यादेव तस्मिन्ननुवर्तमानत्वे सति व्यावृत्तत्वं हेतुरुक्त इत्याह—**अर्थात्त्विति** ।

P. 119-1

न केवलं हेमाद्येकोपादानकानां कार्याणामेकत्वापत्त्या व्यवहारसंकरः । किन्तु सदुपादानकस्य कृत्स्नस्यापि जगतः, इति वक्तुं **सत्तानुवृत्त्येति टीका** । तत्र सत्तानुवृत्तिमात्रेण नानुगमः, घटादिष्वाकाशानुवृत्तावपि तददर्शनादित्यतः तात्पर्यमाह—**कुण्डलादिष्विति** । तादात्म्येनानुवृत्तिर्विवक्षितेति न दोषः इति भावः । **क्वचिदेव कदाचिदेव कथञ्चिदेवेत्येवं विवेक(व्यवस्था)हेतोः कस्यचिदभावादिति टीकायां** द्वितीयाव्यवस्थायां हेतुर्नोक्त इत्यत आह—**कुतश्चिदित्यपीति** ।

P. 119-9

ननु स्वमतेऽपि कार्यकारणाभेदाभ्युपगमात् **कथमपिचेत्यादिटीके**त्यत आह—**इतश्चेति** । कारणव्यतिरेकेण कार्यं नास्तीत्येवंरूपः कार्यकारणाभेदः सिद्धान्ते, कारणव्यतिरेकेण कार्यसत्तामङ्गीकृत्य तयोरभेदं ये मन्यन्ते तन्मते दूषणमुच्यत इत्यर्थः । अत एव कनके ज्ञातेऽपि तद्भिन्नत्वेन कल्पितानां कुण्डलादीनामज्ञातत्वात् स्वमते जिज्ञासोपपत्तिः । परमते तु भिन्नानामपि तेषां कनकनिश्चयेन निश्चितत्वात् तदनुपपत्तिरित्यभिप्रायेणाह—**निश्चितेति** ।

ननु **प्रत्युतेत्यादिटीका** न युक्ता । कनकनिर्णयेन कटकादिनिर्णये तदभेदः कारणमितिवत्, तदनिर्णये तद्भेदः कारणमित्यपि सुवचत्वात् । न चानिर्णये निर्णयाभावे, भेदस्य कारणत्वकल्पने गौरवमिति वाच्यम्, त्वन्मतेऽपि निर्णये, अभेदस्य भेदाभावस्य कारणत्वकल्पनायां गौरवसत्त्वेन साम्यादित्याशङ्क्य,

नाभेदो भेदाभावः। किन्त्वैक्यमेव। तदभाव एव तु भेदः तस्य भावरूपत्वायोगात्। तथा च नाविनिगम इत्याशयमाह—**हेम्नैनिर्णयेनेति**।

किं सामानाधिकरण्यानुपपत्त्या भेदाभेदावभ्युपगन्तव्याविति ब्रवीषि? अथवा सामानाधिकरण्यस्य गतिं पृच्छसीति विकल्प्य, प्रथमं निराकर्तुं **अथेति** टीका। तया किमपि दूषणं नोक्तमित्यतस्तात्पर्यमाह—**यदि हेम्नै इति**। **मिथो विरोधेति**। कुण्डलादिषु हेमाभिन्नत्वस्य, तस्मिन्ननुवर्तमाने व्यावृत्तत्वम्, तस्मिन्निश्चिते सन्दिग्धत्वमित्येवंरूपधर्मद्वयस्य च, मिथो विरोधेत्यर्थः। उपपादि घटिष्टेत्यनयोः लुङन्तयोः माङ्योगादडागमाभावः। ते व्यवस्थाजिज्ञासे।

द्वितीयं निराकर्तुं **तस्मादिति** टीकेत्याह—**एवं निरुद्ध इति**। **सौगतमतमिति**। यद्यपि सौगतमते कार्यकारणभेदो नास्ति। परमाणुपुञ्जाति-

---

१. अत्र कल्पतरौ 'वैपरीत्यं निश्चयः' इति पाठः। वैपरीत्यस्य विवरणं निश्चय इति। अविनिगम एव—अनिर्णय एव—इति न, किं तु वैपरीत्यं अनिर्णयवैपरीत्यं निश्चय इत्यर्थः। प्रत्युतेति टीकास्थपदविवरणं वैपरीत्यमिति॥ समस्तपाठे वैपरीत्यनिश्चय इत्यर्थः।

२. अत्र कल्पतरौ 'यदि हेम्नः' इति ग्रन्थात् पूर्वं 'पूर्ववादी उक्तमनुवदति' इति पदच्छेदः॥

३. 'तस्मात्' इत्यादिटीकायां सामानाधिकरण्यस्य गतिरुक्ता इति आभोगे उक्तम्। 'स्वमतेन सामानाधिकरण्यमुपपादयति—तस्मादिति' इति कल्पतरौ अवतारिता सा टीका। तदनन्यत्वाधिकरणेऽपि एतस्याः टीकायाः समानाकाराणि स्वल्पभेदवन्ति टीकावाक्यानि दृश्यन्ते—'तत्र भेदाभेदयोरन्यतरसमारोपकल्पनायां किं तात्त्विकाभेदोपादाना भेदकल्पनास्तु, आहो तात्त्विकभेदोपादाना अभेदकल्पनेति। वयं तु पश्यामः—भेदग्रहस्य प्रतियोगिग्रहापेक्षत्वात्, भेदग्रहमन्तरेण च प्रतियोगिग्रहासंभवात् अन्योन्यसंश्रयापत्तेः, अभेदग्रहस्य च निरपेक्षतया तदनुपपत्तेः, एकैकाश्रयत्वाच्च भेदस्य एकाभावे तदनुपपत्तेः, अभेदग्रहोपादानैव भेदकल्पनेति।' इति।

अन्योन्याश्रयः परं तत्र अधिकतयोक्तः। अन्योन्याश्रयश्च तत्र कल्पतरौ स्फुटीकृतः-'अस्मादयं भिन्न इत्यत्र पञ्चम्युल्लिखितावधेः ग्रहः धर्मिणस्सकाशादगृहीतभेदस्य न संभवति। भेदग्रहश्च नागृहीते प्रतियोगित्वे उपपद्यते, धर्मिणोऽपि स्वापेक्षया तत्प्रसङ्गात्। ततश्चान्योन्याश्रयग्रस्तभेद एवारोपितो नाऽभेद इत्याह—वयं त्विति' इति। लघुचन्द्रिकायां—'घटपटयोरभेदग्रहे भेदं प्रति प्रतियोग्यनुयोगिभावाग्रहात्, एकस्मिन्नपि दीर्घवंशादौ भेदभ्रमे तं प्रति तद्ग्रहात्, अन्वयव्यतिरेकाभ्यां भेदधीः भेदप्रतियोग्यनुयोगिभावधीहेतुः' इति विशदीकृतमिदम्।

अस्यां टीकायां कार्यकारणयोः अभेदः तात्त्विकः भेदः कल्पनिकः इत्युक्तम्। अभेदस्य तात्त्विकत्वं व्यावहारिकत्वं, भेदस्य च काल्पनिकत्वं प्रातिभासिकत्वमिति ध्येयम्। मृदः घटादिसंस्थानविशेषः पूर्वावस्थोपमर्देन जायमानः मृद्वत् व्यावहारिकसत्य एव। परं तु 'मृदा घटः कृतः' 'मार्त्तिको घटः' इति भेदेन व्यवह्रियमाणः मृदारब्धः मृद्भिन्नः आगन्तुकावस्थाविशेषवदवयविद्रव्यान्तरात्मकः घटादिः विकारः, तस्य मृदा साकं भेदश्च प्रातिभासिकः, एवमेवारंभणाधिकरणादिषु व्यवस्थापितम्। लघुचन्द्रिकायामपि— 'व्यवहारदशायामेवावयवावयविगुणगुण्यादिभेदस्य विचारेण मिथ्यात्वनिश्चयात् तादृशभेदः प्रातीतिकः अभेदस्तु व्यावहारिकः अतो भिन्नसत्ताकत्वेन तयोरविरोधः' इत्युक्तम्। एवं च 'तस्मा'दित्यादिटीकाया विभिन्नसत्ताकभेदाभेदविषयकतया सामानाधिकरण्यप्रत्ययस्य गतिरुक्ता इति आपाततो भाति।

परिणामवादिनां मते तु, कार्यकारणयोः भेदाभेदयोरुभयोरपि पारमार्थिकतया समानसत्ताकभेदाभेदविषयतया सामानाधिकरण्यप्रत्ययस्योपपत्तिः। कार्यकारणयोर्भेदाभेदौ अवच्छेदकभेदनिरपेक्षावेव। अत एव परिमले वाक्यान्वयाधिकरणे भेदाभेदमतानुवादे— 'कार्यकारणयोर्नात्यन्तं भेद इष्यते, किं तु अत्यन्तभेदे अत्यन्ताभेदे वा अनुपलभ्यमानात् 'मृद्घटः' 'हिरण्यं कुण्डलम्' इत्यादिसामानाधिकरण्यात् भदाभेदाविष्येते, इत्युक्तम्।

लघुचन्द्रिकायामपि— वाचस्पत्युक्तायाः 'कार्यात्मना तु नानात्वं' इति भेदाभेदवादिकारिकायाः विवरणावसरे, कार्यात्मना—कार्यमात्रगतकटकत्वकुण्डलत्वादिरूपैः कटककुण्डलादीनां मिथो भेद एव। कारणात्मनेत्यत्र कार्यात्मनेत्यनुषज्यते, तथा च कारणगतेन रूपेण कार्यमात्रगतेन रूपेण च हेमत्वकुण्डलत्वादिभ्याम्। अभेदः। नानात्वमित्यनुषज्यते, अभेदः, अभेदोऽपि। भिदा-भिदैव। इत्युक्तकारिकाव्याख्यानस्य वाच्यत्वेन एकरूपेणैव भेदाभेदौ वाच्यौ। अत एव भामत्यामुक्तम्—'हाटकत्वेनैव रूपेण कटकादेः कुण्डलत्वादिमत्यभेदः नतु कटकत्वादिरूपेण। तेन रूपेण तु तत्र तस्य भेद एव, एवं भेदोऽपि हाटकत्वादिना कटकादेः कुण्डलत्वादिमत्यस्ति। हाटकादिरूपेण ज्ञातेऽपि कुण्डलत्वादिरूपेण जिज्ञासोदयात्, इति' इति।

भामत्या अर्थतोऽनुकरणमिदम्। नतु शब्दतोऽपि। भामत्यान्तु वाक्यमेवं दृश्यते— 'अथ हाटकत्वेनैवाभेदो न कटकत्वेन, तेन तु भेद एव कुण्डलादेः।' इति, 'अथ भेदोऽप्यस्ति कनकात् कुण्डलादीनामिति कनकावगमेऽप्यज्ञातास्ते' इति च। तथा च भेदाभेदमतमवच्छेदकभेदं विनैव भेदाभेदसमावेशपरमिति ज्ञायते। 'कार्यात्मना तु नानात्व'मिति कारिकायामापाततः प्रतीयमानः अवच्छेदकभेदेन भेदाभेदसमावेशाभिप्रायः कल्पतरौ वाक्यान्वयाधिकरणे खण्डितः। तत्रत्यकल्पतरुवाक्यमिदम्—'भेदाभेदव्यवस्था चेत् हिंसाविधिनिषेधवत्। कार्यकारणयोस्तर्हि नैकत्र स्तो भिदाभिदे॥ यथाग्नीषोमीयहिंसायां विधिः, वृथाहिंसायां निषेधः नैकत्रैव, एवं कारणमेकं कार्याणि नानेति भेदवाद एव स्यात्' इति। 'भेदवाद एव स्यादिति-भेदाभेदयोराश्रयभेदवाद एव स्यादित्यर्थः' इति परिमलव्याख्या॥

रिक्तकार्यस्यैवानभ्युपगमात्। तथापि तदेकदेशिमतं गौतमैमतसदृशमस्तीति,

---

एवं परिणामवादं स्वीकुर्वाणानां अनेकान्तवादिनां मते समसत्ताकभेदाभेदविषयकतया, स्वमते भिन्नसत्ताकभेदाभेदविषयकतया च सामानाधिकरण्यप्रत्ययस्य गतिरुक्ता टीकाकारेणेति आपाततः प्रतिभाति। परंतु 'सामानाधिकरण्यं यत् हेमकुण्डलगं न तत्। भेदाभेदवगाहीति प्राग्वाचस्पतिनेरितम् ॥' इति वाक्यान्वयाधिकरणे कल्पतरुकारोक्तिपरामर्शे, प्रागिति निर्दिष्टग्रन्थरूपे प्रकृतभामतीग्रन्थे भेदाभेदावगाहित्वेन सामानाधिकरण्योपपादनं न कृतमित्येतत् परं न, सामानाधिकरण्यं भेदाभेदानवगाहीत्यपि साधितमिति ज्ञायते। न च 'पारमार्थिकभेदाभेदोभयानवगाहीति प्राग्वाचस्पतिनेरित'मिति कल्पतरुवाक्यार्थ इति वाच्यम्। 'न तत् भेदाभेदावगाहीति ईरित'मिति सामान्यत एव भेदाभेदावगाहित्वनिरासात्।

स्वमतेन सामानाधिकरण्यमुपपादयतीति कल्पतरावतारिते तस्मादिति टीकाग्रन्थे, कार्यकारणयोरभेद एव तात्विकः भेदस्तु काल्पनिक इति कथनेन कथं सामानाधिकरण्यमुपपादितमिति चेदुच्यते—पूर्वग्रन्थेन कार्यकारणयोर्भेदाभेदौ सहावस्थानासंभवादिदूषणैर्दूषयित्वा, तस्मादिति ग्रन्थेन अभेद एव तयोर्न भेद इत्युक्तम्। एवं च हेम्नः कुण्डलस्य चाभेद एव भेदो नास्तीत्युक्तेर्हेमत्वं कुण्डलत्वं चोभयमेकत्रैव द्रव्ये वर्तते इति लभ्यते, तथा च 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यम्' इति प्रसिद्ध्यनुरोधेन हेमत्वकुण्डलत्वयोरुपादानरूपैकद्रव्याश्रितत्वेन सामानाधिकरण्यमुपपद्यते इति सामानाधिकरण्योपपत्तिस्सूचिता 'तस्मादि' त्यादिटीकाग्रन्थे भवति।

उपादानविकारयोः सत्येवाभेदे भेदकल्पनामत्रिमिति प्रकृतटीकाग्रन्थोक्तिः न भेदाभेदाभ्यां सामानाधिकरण्यमुपपादयितुं, हेमत्वकुण्डलत्वयोरेकद्रव्याश्रितत्वेनैव तस्योपपादितत्वात्। तथैव तदुपपादनं विवक्षितमिति प्रागुक्तकल्पतरुवाक्यानुसारेणावश्यवक्तव्यत्वाच्च। किं तु सुवर्णकुण्डलाभेदे कथं 'सुवर्णेन कुण्डलं कृतम्' 'सौवर्णं कुण्डलम्' इत्यादिभेदव्यवहार इत्याकांक्षायां 'पुरुषस्य चैतन्यम्' इतिवत् कल्पनामात्रसिद्धभेदावलंबनः स व्यवहार इति भेदव्यवहारमात्रोपपादनार्थं इत्यवगन्तव्यम्।

इत्थं भामत्यां निगूढोऽर्थः किं चित् कल्पतरुपूर्वापरवाक्यैराविष्कृतः, परिमलकारैः सम्यगुद्घाटितः अवश्यविज्ञेय इति मत्वा भामतीकल्पतरुपरिमलपूर्वापरवाक्यपरामर्शपूर्वकं किंचिदधिकं लिखितमिति क्षन्तव्यम् ॥

१. 'सौगतैरवयविस्थाने अवयवसंघातस्याभिषिक्तत्वात् संघातस्यावयवभेदाभिप्रायः सौगतमतमिति पाठो योज्यः। गौतममतमिति पाठश्चेत् स निर्विशङ्कः। न्यायसूत्रकृता गौतमेन प्रत्यक्षपरीक्षायां—अवयवभिन्नावयव्यभावे परमाणूनामन्त्यावयवानां अतीन्द्रियत्वात् तदाश्रितस्य गुणकर्मसामान्यादेस्सर्वस्याप्यग्रहणं स्यात्। अतो गुणकर्मादिग्रहणात् अस्ति तदाश्रयः पटादिरवयवी। तथा एकदेशधारणे कृत्स्नधारणात् एकादेशाकर्षणे कृत्स्नाकर्षणाच्च सोऽस्ति। अन्यथा अवयवानां भिन्नत्वात् कस्यचिदवयवस्य धारणाकर्षणाभ्यां अन्यस्य धारणाकर्षणानुपपत्तेः इति अवयवभिन्नावयविप्रसाधनेन अवयवाभेदो निराकृतः।' इति परिमले उक्तम् ॥

तदभिप्रायेणेदं द्रष्टव्यम्। भिद्यमानतन्त्रत्वादित्यादियुक्तेरेकाभावे चेत्यादि-
P. 119-21 युक्तेश्च भेदाभावात् पौनरुक्त्यमित्याशङ्क्य, मतभेदेन तदुभयमित्याह—भेदः
किं धर्मीति। अधिकरणेत्यर्थः। ततश्च भेदं प्रत्युपजीव्यत्वात् न्नाभेदस्य तत्र
कल्पितत्वमित्याह—तत इति।

'मृत्तिके'त्यादिश्रुतेः कथमभेदसत्यतापरत्वमित्याशङ्क्य, पर्यवसानगत्ये-
त्याह—'मृत्तिके'ति श्रुतिरिति। नन्वनंशेऽप्यात्मनि कर्मजन्यातिशयो दृश्यत इत्यत
P. 120-1 आह—अनंशत्वमिति। आकारभेदः—धर्मभेदः। श्रुत्युक्तानीति। 'आप्त-
काम' इत्यादिश्रुत्युक्तानीत्यर्थः। शास्त्रानारंभदूषणं नास्मन्मत इति वक्तुं तद्ब्र-
ह्मेत्यादिभाष्यमित्याह—कार्येति।

P. 121-2 टीकायाम्—'तदेवं स्वमतेन मोक्षाख्यं फलं नित्यं श्रुत्यादिभिरुप-
पाद्य, क्रियानिष्पाद्यस्य तु मोक्षस्यानित्यत्वं प्रसञ्जयति—तद्यदीति।
न चागमबाधः, आगमस्योक्तेन प्रकारेणोपपत्तेः। अपि च ज्ञानजन्या-
पूर्वजनितो मोक्षः नैयोगिक इत्यस्यार्थस्य सन्ति भूयस्यः श्रुतयः
निवारिका इत्याह, इति केषुचित् पुस्तकेषु पाठो दृश्यते। अन्यत्र तु 'तदेवं
स्वमतेन मोक्षाख्यं फलं नित्यं श्रुत्यादिभिरुपपाद्य, ज्ञानजन्यापूर्वज-
नितो मोक्षो नैयोगिक इत्यस्यार्थस्य सन्ति भूयस्यः श्रुतयो निवा-
रिका इत्याह, इति पाठः।

---

१. अत्र तद् ब्रह्मेत्यादिभाष्यमित्युक्त्या 'तद्ब्रह्म यस्येयं जिज्ञासा प्रस्तुता' इति भाष्यपाठ इति सूचितम्। तदेव अशरीरत्वं मोक्षाख्यं ब्रह्म - तस्यैव अस्मिन् शास्त्रे जिज्ञासा प्रस्तुता। 'यस्येयं जिज्ञासा प्रस्तुते'ति विशेषणेन भाष्ये कार्यविलक्षणानधिगत-ब्रह्मरूपविषयशालित्वात् स्वमते शास्त्रपृथक्त्वं सिद्ध्यति। उपासनापरत्ववादिपूर्वपक्षिमते उभयोरपि पूर्वोत्तरमीमांसयोः कार्यविषयत्वाविशेषात् शास्त्रपृथक्त्वं न सिद्ध्यति। तथा च शास्त्रानारंभदूषणं तन्मते भवति, स्वमते न भवति इति बोध्यते इति ध्येयम्। 'शास्त्रपृथक्त्वसिद्धिस्तद्ब्रह्मेति भाष्ये उक्तेति पाठः। अतस्तद्ब्रह्मेत्यतश्शब्दः संपाता-यातः' इति परिमले उक्तम्। संपातः प्रमादः, प्रमादेनायातः प्रामादिक इत्यर्थः। 'अत-स्तद्ब्रह्म यस्येयं जिज्ञासा प्रस्तुता' इति भाष्यपाठः प्रामादिक इति परिमलकाराभि-प्रायः। प्रकटार्थविवरणे ब्रह्मविद्याभरणे च 'अतश्शब्दघटितभाष्यपाठः व्याख्यातः। रामानन्दीये आनन्दगिरीये च पाठद्वयमप्यनूद्य व्याख्यातम्। अतश्शब्दार्थः बहुधा विवृतः। स च तत्रैवानुसंधेयः। अतश्शब्दरहितः पाठः सुबोधः। अतश्शब्दसहितः पाठस्तु क्लिष्टः। अत एव परिमलकारेणानादृतः इति ज्ञायते।

तत्र पूर्वस्मिन् पाठे, न चागमबाध इति टीकाया अयमर्थः—न च मोक्षस्य कृतकत्वेनानित्यत्वप्रसञ्जने तन्नित्यत्वप्रतिपादकश्रुतिविरोधः। वेदान्तानां सिद्धब्रह्मपरत्वमेव न विधिपरत्वं, विधेयालाभादिति प्रागुक्तप्रकारेणैवोपपत्तौ प्रतिपत्तिविधिपरत्वाश्रयणेन निरुपाधिकन्याय[1]बाधकत्वकल्पनायोगादिति।

द्वितीयपाठमाश्रित्य पूर्वोत्तरयुक्तयोर्भेदं प्रकटीकुर्वन्, व्याचष्टे—प्रागिति। P. 120-2 उपपाद्येत्यस्य निवारिका इत्यव्यवहितया निवारणक्रियया नान्वयः। मोक्षनित्यत्वप्रतिपादिकानां मोक्षस्य नैयोगिकत्वनिवारिकाणां च श्रुतीनां भिन्नानामेवोदाहृततया, निवारक[2]श्रुतिभिरुपपादनाकरणेन ल्यबनुपपत्तेः। किन्तु इत्याहेति वचनक्रियायामन्वयः। एवं च सत्युभयत्रापि भाष्यकारस्यैव कर्तृत्वेन ल्यबुपपत्तिरित्याशयेनाह—[उपपाद्येत्यस्येति।]

फलस्वभावेनेति। मोक्षस्य नित्यत्वान्नियोगायोगः प्रथममुक्तः। अपि- P. 121-2 चेत्यादिना[3]पि ज्ञानाधीनस्यापि मोक्षस्य कण्ठचामीकरवत् प्राप्तप्राप्तिरूपत्वेन सिद्धत्वान्नियोगायोग उक्त इति, पूर्वभाष्ये फलस्वाभाव्येनैव नियोगायोग उक्त

---

१. निरुपाधिकन्यायः—उपाधिदोषविधुरं यत् कृतकत्वलिङ्गकमनित्यत्वानुमानं तद्बाधकत्वं आगमस्य कल्पयितुमयुक्तमिति भावः।

२. निवारकश्रुतिभिः 'श्रुत्यादिभिरुपपाद्ये'त्यनेन कथितस्य श्रुत्याद्युदाहरणपूर्वकं नित्यत्वोपपादनस्य अकरणादित्यपि बोध्यम्।

३. अत्र कल्पतरौ 'अपि च ब्रह्म वेद' इत्यादि भाष्यवाक्यं, 'तत्साधनज्ञानस्य केवलदृष्टार्थत्वाच्च स उच्यते इत्याह' इति 'तदेव'मित्यादिपूर्वटीकावतारिकया ज्ञानस्वभावपर्यालोचनया नियोगाभावप्रतिपादकमित्युक्तम्। 'एवं फलस्वभावेन नियोगाभावमुक्त्वा' इति 'अविद्याद्वये'त्यादितदुत्तरटीकावतारिकास्थितपूर्वोक्तानुवादभागे तदेव भाष्यवाक्यं ज्ञानफलमोक्षस्वभावपर्यालोचनया नियोगाभावप्रतिपादकतया उक्तमित्यनूदितम्। तत् कथमनुक्तस्य उक्ततया कथनं संगच्छते? इति शङ्का जायते। अस्यास्समाधानमिदम्—मोक्षसाधनज्ञानस्य केवलदृष्टार्थस्य तात्कालिकब्रह्मप्राप्तिसाधनत्वं स्वभावः। ब्रह्मभावप्राप्तिरूपमोक्षफलस्य प्राप्तप्राप्तिरूपस्य तात्कालिकफलत्वं स्वभावः। अत्र एकस्वभावपर्यालोचने अपरस्वभावपर्यालोचनमन्तर्भवति। 'अपि च' इत्यादिभाष्योक्ताः 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतयश्च पूर्वोक्तज्ञानतत्फलमोक्षोभयसंबन्धिपूर्वोक्तस्वभावप्रतिपादनपरा एव। तथा च अपिचेत्यादिभाष्ये एकस्मिन्नेव मोक्षसाधनज्ञानस्य केवलदृष्टार्थत्वात् नियोगायोगः, फलस्वभावेन नियोगाभावश्च उक्त एवेति उभयमध्ये एकं पूर्वमुक्त्वा तेनार्थादुक्तस्यापरस्य उक्तत्वेनानुवादः कल्पतरौ संगत एवेति बोध्यम्।

P. 121-2 इत्यर्थः । **फलिविज्ञानेति ।** ज्ञानस्य समानविषयकाविद्यानिवर्तनस्वभावत्वादिति भावः । ज्ञानस्य नान्याधीनं मोक्षसाधनत्वम् । किन्तु स्वत एव ।
P. 122-2 अतो 'न स्वत' इति टीकानुपपत्तिरित्यतः स्वतश्शब्दार्थमाह—विहितेति ।

---

१. अत्र भामत्यां—'अविद्याद्वयप्रतिबन्धापनयमात्रेण च विद्याया मोक्षसाधनत्वं, न स्वतोऽपूर्वोत्पादेन वा' इति वाक्यं वर्तते । तत्रैव 'ततोऽविद्यानिवृत्त्या ब्रह्मस्वरूपाविर्भावो मोक्षः । न तु विद्याकार्यस्तज्जनितापूर्वकार्यो वा' इति उपरि वाक्यान्तरं वर्तते । वाक्यद्वयमपि समानार्थकम् । प्रथमवाक्ये मात्रपदार्थविवरणमेव 'न स्वत' इत्यादिकम् । मात्रपदव्यावर्त्यम्—स्वतः विद्याया मोक्षसाधनत्वं, अपूर्वोत्पादनद्वारा मोक्षसाधनत्वं च । अपूर्वोत्पादनद्वारा मोक्षसाधनत्वकोटेः प्रतिकोटिः स्वतो मोक्षसाधनत्वकोटिः, वाशब्दस्य कीर्तनात् । तेन 'स्वतः' इति कोटिः द्वारापेक्षां विना साक्षात् मोक्षसाधनत्वरूपा इति ज्ञायते ।

यद्यपि सिद्धान्तेऽपि विद्यायाः साक्षादेव मोक्षसाधनत्वं, तथापि सिद्धान्ते अविद्यापनयेन नित्यसिद्धमोक्षाभिव्यंजकत्वं विद्यायाः, पूर्वपक्षे विद्यायाः विहितक्रियारूपायाः मोक्षजनकत्वमिति विशेषः । अत एव प्रथमवाक्ये अविद्यापनयनमात्रेण इति, द्वितीयवाक्ये ब्रह्मस्वरूपाविर्भावः इति च सिद्धान्तभागस्य, 'न तु विद्याकार्यः' इति द्वितीयवाक्ये पूर्वपक्षभागस्य च निर्देशः । वाक्यद्वयेऽपि पूर्वपक्षकोटिद्वयमध्ये 'न तज्जनितापूर्वकार्यः' 'नापूर्वोत्पादेन' इति द्वितीयकोटिनिर्देशः तुल्यः । प्रथमकोटिनिर्देशः उभयत्र 'न तु विद्याकार्यः' 'न स्वतः' इति । अतः उभयमपि एकार्थम् ।

विद्यायाः अपूर्वोत्पादद्वारानपेक्षायाः साक्षादेव मोक्षजनकत्वं अत्र निषिध्यते । एवं च स्वतः इति पदस्य विहितक्रियारूपेणेति नार्थः, तथा सति विहितक्रियारूपेण वा अपूर्वोत्पादेन वा विद्यायाः न मोक्षसाधनत्वमित्यर्थः स्यात् । तथा सति कोटयोर्विरोधाभावेन विकल्पासंगतिः, साक्षाद्वा अपूर्वोत्पादनद्वारा वा न साधनत्वमित्युक्ते विकल्पः संगच्छते । तस्मात् स्वतः इत्यस्य साक्षादित्येवार्थः । न विहितक्रियारूपेणेति अर्थः । कल्पतरौ स्वत इति प्रतीकमुपादाय 'विहितक्रियारूपेणेत्यर्थः' इत्युक्तेः कोऽर्थ इति चेत् ।

उच्यते—ज्ञानस्य साक्षाद्वा अपूर्वद्वारा वा मोक्षकारणत्वं 'न स्वत' इत्यादिवाक्ये निराक्रियमाणं न संगच्छते, ज्ञानस्य वस्तुव्यंजकत्वेन प्रसिद्धस्य कारकत्वाभावादप्रसक्तप्रतिषेधापत्तेरित्याशङ्कानिरासाय प्रकृते ज्ञानं उपासनात्मकं क्रियारूपं, क्रियायाश्च साक्षात् कारकत्वं लौकिकक्रियासु दृष्टं, वेदविहितक्रियायाश्च अपूर्वद्वारा जनकत्वं यागादिक्रियासु वर्तते, एवं च प्रकृते विद्यायाः वेदविहितक्रियारूपेण साक्षाद्वा अपूर्वद्वारा वा मोक्षजनकत्वं संभवतीति पूर्वपक्षिमतेन प्रसक्तेस्सत्वात् तन्निषिध्यते न स्वत इत्यादिवाक्येन इति कल्पतरावुच्यते—विहितक्रियारूपेणेत्यर्थः इति वाक्येन ।

तत्र अर्थ इति पदस्य आशय इत्यर्थः । विहितक्रियारूपेण ज्ञानस्य मोक्षकारणत्वं संभवतीति पूर्वपक्ष्याशय इति कल्पतरुवाक्यार्थः ।

टीकायाम्—आचिनोतीति । गूढं शास्त्रार्थं प्रकटीकरोतीत्यर्थः । तद- नन्तरापायादिति पञ्चमीलब्धमर्थं प्रकटयति—टीकायां—तत इति । अवि- द्यानिवृत्त्या, दुःखान्तेन स्वविलासेन सहाविद्यानिवृत्त्येत्यर्थः । मिथ्याज्ञानमेवाह— टीकायां—भेदावभासमिति । यथा वृत्त्यनन्तत्वेनेत्यादिटीकायाम्— 'अनन्तं वै मनः' इति श्रुत्युक्तमनन्तत्वं अनन्तवृत्तिकत्वेनेत्युक्त्वा, मनआलं- बनमित्यादिना संपादनं व्याख्यातम् । तस्य प्रयोजनमाह—आरोप्यत्व- साम्येऽपीति । P. 121-7 P. 122-1

ननु संवरणोद्यमनयोर्भेदात् कथं व्याख्यानमित्यतो [1]लक्षणाबीजं संबन्ध- माह—योहीति । स्वापे इति । 'अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येती'त्यादिश्रुतेरित्यर्थः । न्यायसाम्येऽपि श्रुतपरित्यागे किं कारणमित्यतः आह—लयस्य चेति ।

ननु बाह्यवायौ वह्न्यादीनां चतुर्णां, प्राणे च वागादीनां चतुर्णां संवर्गप्रतिपादनेन वायुप्राणाभ्यां सह दशसंख्यासंपत्तिः 'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृत'मिति श्रुतौ कीर्तिता । ततश्च कथं दशाशागतं जगद्दर्शयतीति टीकेत्याशङ्क्य, तदनन्तरवाक्यशेषे सर्वान्नान्नादित्वरूपसार्वात्म्यप्रतिपादनात् सर्व- द्रष्टृत्वप्रतिपादनाच्च श्रुतावग्न्यादिग्रहणं सकलजगदुपलक्षणार्थमित्याशयमाह— अग्न्यादेरिति । P. 122-6

---

अत्र न स्वत इति वाक्ये विद्यायाः साक्षात् °मोक्षाभिव्यंजकत्वं न निषिध्यते । तस्य संमतत्वात्, किंतु साक्षात् मोक्षकारकत्वं निषिध्यते । तस्यासंमतत्वात् । अत्र परिमले तदनुसारिणि आभोगे च, विद्यायाः मोक्षसाधनत्वस्य अन्यानधीनत्वात् स्वत एव सत्वात् न स्वत इत्युक्तिर्न संगतेत्याशङ्क्य, स्वत इति पदस्य विहितक्रियारूपेणेत्यर्थात्, विहितक्रियारूपेण मोक्षसाधनत्वस्य निषेधात्, नानुपपत्तिरिति समाहितम् । तस्य सिद्धा- न्तविरोधाभावेऽपि, स्वत इति पदस्य प्रकृते अर्थान्तरस्य कल्पतरुवाक्यस्य चार्थान्तरस्य पूर्वोक्तरीत्या आश्रयितव्यत्वात् परिमलाभोगग्रन्थोभयस्य उपपत्तिश्चिन्तनीयेति सूरिभि- रवधेयम् ।

[1] संवरणेन उद्यमनं लक्ष्यते, उद्यमनं चालनं वायुस्वभावः । यो हि यत् उद्य- च्छति चालयति सः तत् स्ववशतामापाद्य संवृणोति स्वात्मभावापादनेन तिरोधत्ते । अनेन कार्यकारणभावरूपेण उद्यमानसंवरणयोस्संबन्धेन लक्षणाबीजेन संवरणपदस्य उद्यमने लक्षणया पदद्वयस्य व्याख्यानव्याख्येयभाव उपपद्यत इत्यर्थः ।

यथा वायुरित्युपक्रमात् पुनरपि यथाशब्दो नान्वेतुमर्हतीत्यत आह—संवर्गेति। उपासनाविधिशङ्कावसरे दर्शनस्य प्रधानकर्मत्वकथनमसङ्गतमित्यत आह—एतच्चेति। अनेन, आत्मज्ञानमात्मोपासना, मनआद्युपासनाश्च प्रधानकर्माणि यतः, तत्तस्मात्कारणादेतेषु त्रिष्वपि संपदध्यासक्रियाविशेषयोगनिमित्तकत्वपक्षेष्वात्मोपासनाः प्रधानकर्माणीति टीका योजिता।

P. 122-8

स्तुतिश्चेति। तात्पर्येण गुणाभिधानं स्तुतिरित्यर्थः। नन्ववेक्षणस्य गुणकर्मत्वे किं प्रमाणमित्याशङ्क्य, निष्ठाप्रत्ययाभिहितकर्मकारकं प्रति धात्वर्थस्यावेक्षणस्य गुणत्वं श्रुत्यैवावगम्यत इत्याह—अवेक्षितमिति। पूषानुमन्त्रणेति। पूषदेवताकयागानुमन्त्रणमन्त्रवदित्यर्थः। ग्रहणे हेतुमाहेति। तथा च तत्र तादृशस्यानुमन्त्रयितव्यस्य यागस्याभावात् 'पूष्णोहं देवयज्यये'ति मन्त्रस्य पूषदेवताके कर्मण्युत्कर्षेऽपि, प्रकृते अवेक्षणसंस्कार्यस्याज्यस्य लाभात् प्रकरणान्वयो युक्त इत्यर्थः।

P. 123-5

ननु प्रधानाङ्गभूतेति वक्तव्ये कथमुपांशुयाजाङ्गभूतेति टीका? 'सर्वस्मै' वाक्येन पत्न्यवेक्षितस्यैवाज्यस्य ध्रौवाज्यमुखेन सर्वार्थत्वावगमादित्यत आह—सर्वस्मै वा इति। नन्वेवमप्युपांशुयाजग्रहणमयुक्तम्। अवेक्षणादिसंस्काराणामङ्गप्रधानार्थत्वव्यवस्थापनेन तदङ्गभूताज्यभागाद्यङ्गाज्यद्रव्यसंस्कारत्वस्यापि सत्त्वात् इत्याशङ्क्य, सत्यमेवम्। तथापि ग्राहकग्रहणार्थमुपयोगमात्रं वक्तव्यमिति प्रधानभूतोपांशुयाजग्रहणमित्याशयेनाह—सत्यपीति। न प्रधानहविष्ट्व-

P. 123-10

१. अत्र टीकायां 'आत्मदर्शनात्मोपासनादयः प्रधानकर्माणि। आत्मा तु द्रव्यं कर्मणि गुणः' इत्युक्तम्। तत्र आदिपदग्राह्यमनआद्युपासनेषु आत्मा द्रव्यं गुणभूत इत्येतत् नान्वेति। अतः टीका केषां चित्पदानामावृत्त्या योजिता, तथा च दृष्टान्तभूतमनआद्युपासनासाधारण्येन आत्मदर्शनादीनां प्रधानकर्मत्वयोग्यतासत्त्वात् प्रकृतात्मोपासनाः प्रागुक्तपक्षत्रयेऽपि प्रधानकर्मभूताः। तत्र च आत्मा द्रव्यं गुणभूत इति टीकया उच्यते। अतो न दोष इति भावः प्रतिभाति।

२. आग्नेयादीनामपि प्रधानत्वात् तत्साधारण्येन प्रधानाङ्गभूतेति वक्तव्ये कथं उपांशुयागमात्रग्रहणमित्याशङ्क्य आग्नेयादीनां प्रधानानां उत्पत्तिशिष्टपुरोडाशावरुद्धत्वात् उपांशुयाजस्यातथात्वात् उपांशुयागमात्रग्रहणं, इति भावः।

३. ग्राहकग्रहणं शेषशेषिभावेनान्वयः। गुरुमते तथैव व्यवहारः।

मितीति। आज्यभागाद्यङ्गेषु निवेशे सत्यपि तदर्थाज्यस्य प्रधानहविष्ट्वाभावेन प्रधानहविर्भूतमुपांशुयाजाज्यमेव टीकायामुपलक्षणतया निर्दिष्टमित्यर्थः।

ननु, क्रतुसंबन्धित्वेनानवगतस्य हिरण्यस्य कथं भरणसंस्कारविधिरित्याशङ्क्य, भार्यमिति कृत्यप्रत्ययमहिमावगतसंस्कार्यत्वबलादेव विनियोगकल्पनमित्याशयेनाह—तथा चेति। सूत्रार्थमाह—अद्रव्यत्वादिति। द्रव्यदेवतासंबन्धशालिनो यागादेरेव प्रायेण स्वतन्त्रकर्मत्वावगमादेवंजातीयकानां स्वरसतो गुणकर्मत्वमेवेत्यर्थः। P. 124-5

(अथवा हिरण्यभरणोदाहरणपूर्वपक्षसूत्रं 'द्रव्यपरत्वाच्चे'त्यनन्तरसूत्रमेव। इदं तु विष्णुर्यष्टव्य इत्येवमाद्युदाहरणपूर्वपक्षसूत्रम्। तथा च द्रव्यपदेन देवताया अप्युपलक्षणं न कर्तव्यं भवतीति ध्येयम्।)

---

१. अत्र कल्पतरौ 'तथा च' इत्यतः पूर्वं 'यद्यप्ययमिति' इति भामतीप्रतीकधारणपूर्वकं 'विधित्वाभावो हि पूर्वपक्षोपन्यासे वर्णित इति' इति वाक्यं वर्तते। तस्यायमर्थः—भामत्यां हि 'आत्मा वा अरे द्रष्टव्यः' इत्यादिवाक्यं प्रक्रम्य 'यद्यप्ययं विधिः' इत्युक्तम्। तत्र यद्यपीत्यनेन विधित्वं नास्तीति सूच्यते। स च सूचितो विधित्वाभावः पूर्वपक्षोपन्यासस्थले पूर्वग्रन्थे 'अत्र चात्मदर्शनं न विधेयम्' इत्यादिभिर्वाक्यैर्वर्णित इति।

२. 'यागदानहोमान्मुक्त्वा नान्यत्प्रधानकर्मत्वं प्रतिपद्यते। न चेह यागादित्वमस्ति, संप्रदानाद्यभावात्, अतः औत्पत्तिकेनाङ्गत्वेन कर्मशेषत्वम्' इति तन्त्रवार्तिके॥

३. अत्र परिमलोक्तमवश्यमनुसंधेयम्—'ननु द्रव्यदेवतासंबन्धराहित्येन धारणस्य यागत्वाद्यभाव एव सिद्ध्येत्, न तु धारणरूपतयैव स्वतंत्रकर्मत्वस्याभावोऽपि। सत्यम्, धारणस्य स्वतन्त्रकर्मत्वं लक्षितयागरूपतया, मुख्यधारणरूपतया वा? इति विकल्पं मनसि निधाय आद्यपक्षनिराकरणार्थत्वेन इदमद्रव्यसूत्रं योजितम्। द्वितीयपक्षनिराकरणं तु 'द्रव्यपरत्वाच्च' इति तदनन्तरसूत्रेण धारणस्य स्वातन्त्र्ये कृत्यप्रत्ययावगतद्रव्यप्राधान्यविरोधं दर्शयता कृतमित्यभिप्रायः। ननु अद्रव्यसूत्रस्य द्रव्यदेवतासंबन्धराहित्येन यागत्वनिराकरणार्थतायां 'अद्रव्यदेवतात्वात्तु शेषस्स्यात्' इति शबरस्वामिलिखितः सूत्रस्य पाठो लिखितुं युक्तः, न तु 'अद्रव्यत्वात्' इति वार्तिककारलिखितः पाठः। तस्मिन् पाठे हि, अद्रव्यत्वात्, विधेयद्रव्याभावात्, धारणमात्रविधानसंभवेन द्रव्यस्यापि तद्विशेषणतया विधानाभावात्, न हिरण्यसाधनकधारणरूपस्वतन्त्रकर्मविधिरित्येव सूत्रार्थो वर्णयितुं युक्तः। सत्यं देवतापदयुक्तो भाष्यकारलिखितः सूत्रपाठः सांप्रदायिको न भवतीति वार्तिककारैस्त्यक्तत्वात् यथावार्तिकं सूत्रं पठित्वा तत्रैव भाष्यकारदर्शितोऽप्यर्थः योजितः। अस्मिन्नर्थे द्रव्यशब्दः संप्रदानार्हदेवतारूपद्रव्यवाचीति तदभावेन द्रव्यदेवतायोगराहित्यरूपहेतुसिद्धिरित्यभिप्रायः।' इति। अत्र आभोगे 'अथवा' इत्यादिः 'ध्येयम्'

ननु हिरण्यस्य श्रुतभरणसंस्कार्यत्वान्यथानुपपत्त्यैव वैदिके कर्मणि विनियोगः कल्प्यताम्। एवं च सति फलविपरिणामक्लेशो विशिष्टविधिगौरवं च न भविष्यति। न च 'हिरण्येन षोडशिनः स्तोत्रमुपाकरोति' 'हिरण्यमालिनः प्रचरन्ति' इत्यादिवाक्यविहितस्य हिरण्यस्य धारणमप्यर्थप्राप्तमेवेति विधिवैयर्थ्यमिति वाच्यम्। यत्र विहितस्याऽपि हिरण्यस्य धारणं न नित्यप्राप्तम्, यथा 'सहिरण्यैः पाणिभिः सोममाप्याययन्ती'त्यादौ तत्र (हि) सोमाप्यायनकालमात्रधारणेनाप्युपपत्तौ न सदा धारणं प्राप्तमिति, तद्विषयो विधिर्भवेदित्याशङ्क्य, कृत्यप्रत्ययस्य[1] साध्यत्वमात्रबोधनसामर्थ्येऽपि संस्कार्यत्वबोधने सामर्थ्याभावात्, हिरण्यस्य क्रत्वन्वयबलात् तथा कल्पने, परस्पराश्रयापत्तेः। हिरण्योद्देशेन भरणविधौ सुवर्णश्रुतिवैयर्थ्यापत्तेः, तस्यापि विधौ वाक्यभेदापत्तेश्च, विशिष्टमेव

P. 125-4 भरणमार्थवादिकफलाय[2] विधीयत इति सिद्धान्तयुक्तिमुपसंहारव्याजेनाह—तस्मादिति।

यथावार्तिकमेव सूत्रं पठित्वा हिरण्यभरणाधिकरणानुक्रमणात् दार्ष्टान्तिके आत्मसाधनकदर्शने गुरुमतानुरोधेनापूर्वविषयत्वकथनमसङ्गतमित्यतो व्याचष्टे—

P. 124-1 अपूर्वे[3] विषय इति। टीकायाम्—शान्तिकर्मणीति। साधारणपिशाचनिवृत्त्यर्थं क्रियमाणे शान्तिकर्मणि प्रबलमेतालोदयवत् विदिक्रियाविषयत्वेन ब्रह्मणो विधेयत्वनिषेधाय विषयत्वमेव निराकुर्वतः शास्त्रप्रमाणकत्वभङ्ग एव प्राप्त इत्यर्थः।

---

इत्यन्तः कुण्डलितो ग्रन्थः अनन्वितः शावरभाष्यतन्त्रवार्तिकशास्त्रदीपिकाकुतूहलवृत्त्यादिसर्वमीमांसाग्रन्थपरिशीलनेऽपि दुर्बोधः अशुद्धः लेखकप्रमादागतः अधोलिखितपरिमलानुसारेण कथञ्चिद्वाक्यान्तरकल्पनया पण्डितैरवश्यशोधनीय इति प्रार्थ्यते।

१. 'कृत्यप्रत्ययश्च कर्मत्वं साध्यतामात्रमाह न शेषित्वम्' इति शास्त्रदीपिकायाम्।

२. 'दाक्षायणी ब्रह्मसूत्री कमण्डलुधरो द्विजः' (दाक्षायणी, सुवर्णधारी) इत्यादिपुरुषार्थहिरण्यधारणस्मृतेः इयमेव श्रुतिर्मूलं भविष्यतीति तस्या मूलान्तरकल्पनागौरवमपि परिहृतं भवतीति परिमलम्।

३. अपूर्वार्थित्वात् प्रधानकर्म, न गुणकर्म संस्कारार्थत्वाभावादिति प्रकृते उच्यते। न तु गुरुमतानुसारेण कार्यापरपर्यायापूर्वं प्रति विषयत्वं कर्मण उच्यते इत्यर्थः।

४. अत्र 'तथोपास्तिक्रिये'त्यादिभाष्ये—तथा 'यद्वाचानभ्युदितं येन वागभ्युद्यते' इत्यविषयत्वं ब्रह्मण उपन्यस्य 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति उपास्तिक्रियाकर्मत्वप्रतिषेधोऽपि भवति। इत्यन्वयो बोध्यः।

वाक्यार्थस्य आहत्य शब्दानभिधेयत्वमुपपादयति—**गामानयेति**। **वस्तु-** P. 125-9
**गतेति**। गोशब्दाभिधेयगोत्वतादात्म्येन व्यक्तिविशेषलक्षणादित्यर्थः। भाष्ये वेदित्रादिशब्दप्रयोगात्, त्वंपदार्थो हीति टीकाया भिन्नार्थकत्वभ्रमं व्यावर्तयन्नाह—**प्रत्यगात्मत्वेनेति**। प्रमातृत्वादेरेवानर्थहेतुत्वात् तथा व्याख्यानमिति भावः। तदस्येति टीकायां तदित्यव्ययं सप्तम्यर्थ इत्याशयेनाह—**तत्र सतीति**। अविद्याविलसितत्वे सतीत्यर्थः। तत्पदार्थस्य प्रत्यगात्मत्वाभावात् तत्पदार्थप्रत्यगात्मनोरिति व्याचष्टे—**अविषयेति**। P. 125-11

**तन्निवृत्ताविति**—तच्छब्देन पूर्ववाक्ये अविद्याविलसितत्वेन निर्दिष्टो वाक्यार्थः परामृश्यत इत्याशयेनाह—**प्रमित्येति**। **त्रय इति**। प्रमाणप्रमेयप्रमितय इत्यर्थः। ननु तत्पदार्थप्रत्यगात्मनोः कथं तत्त्वमसीति सामानाधिकरण्यम्? एकार्थत्वाभावात्, इत्याशङ्क्य, परस्परसमभिव्याहारेण लक्षितस्वरूपपरतया सामानाधिकरण्यनिर्वाह इति वक्तुं तथाहीत्यादिटीका, तत्र विगलितपराग्वृत्त्यर्थत्वं तत्पदस्य त्वंपदैकार्थ्याभावेऽपि स्वत एव लभ्यते, ब्रह्मणः परागर्थत्वाभावात्। ततश्च तदेति टीकानुपपत्तिरित्याशङ्क्य, विगलितपराग्वृत्तित्वेन प्रत्यक्त्वलक्षणात् न दोष इति व्याचष्टे—**विगलितेति**। **ऐकार्थ्यस्यैव व्याख्येति**। ष्यञ्प्रत्ययस्य स्वार्थिकत्वात् विशुद्धचिदात्मतामेकमर्थं गत्वेत्यन्वय इति भावः। **मध्यश्लोक इति**। भामतीमौक्तिकहारस्य नायकमणिरित्यर्थः। P. 125-15

तद्यदि कर्तव्यशेषत्वेनेत्यादिभाष्येणैव मोक्षस्यानित्यत्वप्रसञ्जनात् P. 126-
पौनरुक्त्यमाशङ्क्याह—**साध्यश्चेदिति**। **अनित्यत्वं स्थापयितुमिति**। संस्कारविशिष्टवेषेणापि नानित्यत्वमिति दर्शयितुमित्यर्थः। भाष्ये कार्यस्य

---

१. भाष्ये वेदित्रादिशब्दः प्रयुक्तः, टीकायां त्वंपदार्थो हीत्यादिकायां प्रमाता इत्यादिशब्दः प्रयुज्यते, तथा च भिन्नशब्दप्रयोगात् भिन्नार्थकत्वभ्रमः जायत इति भावः।

२. 'तथाहि' इति टीकातः पूर्वं 'न हि वक्तुरवस्तुत्वे वाच्यवाचकवचनानि वस्तुसन्ति भवितुमर्हन्तीति' इति टीकायां पाठभेदः।

३. अत्र आभोगे—'अनित्यत्वं स्थापयितुमिति' इति प्रतीकधारणं कृत्वा 'संस्कारविशिष्टवेषेणापि नानित्यत्वमिति दर्शयितुमित्यर्थः' इति व्याख्यातम्। अनित्यत्वं स्थापयितुमित्यस्य, नानित्यत्वमिति दर्शयितुमित्यर्थकरणं च विरुद्धमिव भाति। तत्परिहार-

**वाचिकत्वादिकमुक्तम्**, तद्यागादिभवक्रियाजन्यत्वादौपचारिकं, स्वतो वागादि-
P. 126-1 धर्मत्वाभावादित्याशयेन टीकायामुक्तं—**वागादिव्यापारेति**। मतभेदप्रदर्शनेन पक्षद्वयं प्रकटयति—टीकायाम्—**क्षणिकं ज्ञानमिति**। **स्तबकाः**—गुच्छाः।
P. 126-2 **पोतेन दीव्यतीति**। 'तेन दीव्यती'ति ठक्प्रत्यय इति भावः।

**भिन्नाभिन्नविकल्पाभ्यामिति**। अभेदे नित्यत्वान्नापनेयत्वम्, भेदे धर्मधर्मिभावानुपपत्तिरित्येवं निरसनीय इत्यर्थः। वास्तवत्वपक्षमवलंब्य, भेदेऽपि दर्पणतन्मालिन्ययोरिव धर्मधर्मिभावो युज्यत इत्यभिप्रेत्य, शङ्केत्याशयेनाह—**शङ्कितुरिति**। मुक्तिदशायामेव श्रुतिबोधितं शुद्धत्वं, न संसारदशायाम्, तथा
P. 126-5 च नित्यशुद्धत्वमसिद्धमिति परिहरति—**अत आहेति**। अशुद्धेरवास्तवत्वान्नित्यशुद्धमेव ब्रह्मेति वक्तुं—**नाविद्येति टीका**। तत्र, ब्रह्मानाश्रयत्वे, (तर्हि,) किमाश्रयेत्यत आह—**किन्तु जीवे इति**। **अध्यासभाष्ये इति**[२]। मयेति शेषः। टीकावाक्यार्थकथनरूपत्वादस्य वाक्यस्य।

ननु तर्हि जीवगताविद्यानिरसनार्थमेव क्रियापेक्षास्त्वित्याशङ्कां निराकर्तुमनिर्वचनीयेति पदसूचितमर्थमाह—**तथाविधा चेति**। लोके तथा दर्शना-

---

उच्यते—नित्येऽपि मोक्षे अविद्यानिवृत्तिरूपसंस्कारः कर्मणा साध्यते, कर्मसाध्यसंस्कारविशिष्टवेषेण मोक्षस्यानित्यत्वं भवतु नाम, तावता न काचित् क्षतिः, स्वरूपतो मोक्षनित्यत्वस्य तावता अनपायात्। मोक्षस्य स्वरूपतः अनित्यत्वं तु नास्त्येव इति पक्षप्रतिक्षेपेण नित्ये मोक्षे स्वतोऽपि अनित्यत्वं नास्ति, संस्कारविशिष्टवेषेणापि अनित्यत्वं नास्ति, इति दर्शयितुं, यदि संस्कारविशिष्टवेषेणानित्यत्वमिष्यते तर्हि मोक्षस्य आगमापायिधर्मवतः सविकारस्य स्वरूपतोऽपि अनित्यत्वं स्यादिति अनित्यत्वं स्थापयितुमित्यर्थः। अतो न विरोधः।

१. अनेन टीकायां 'कार्यमपूर्वं यागादिव्यापारजन्यम्' इत्यत्र वागादिव्यापारजन्यमिति शोधनीयमिति सूच्यते।

२. 'इत्युक्तमध्यासभाष्ये इति। अन्तःकरणाद्यवच्छिन्नः प्रत्यगात्मा इदमनिदंरूपश्चेतनः कर्ता भोक्ता कार्यकारणाविद्याद्वयाधारः इत्यध्यासभाष्यटीकायामुक्तमित्यर्थः' इति परिमलम्। 'मयेति शेषः टीकावाक्यार्थकथनरूपत्वादस्य वाक्यस्य' इत्याभोगः। अस्यायमर्थः—अध्यासभाष्यटीकायामुक्तोऽर्थः अत्र टीकायाम्—इत्युक्तम् - इति उच्यते टीकाकृता। तथा च पूर्वटीकावाक्यकथितार्थकथनरूपत्वादस्य टीकावाक्यस्य मयेति शेषः। टीकाकृतेत्यर्थः। अध्यासभाष्ये भाष्यकृता उक्तमिति नार्थः। अध्यासभाष्ये टीकायां मया टीकाकृता उक्तमित्यर्थः। इति बोध्यम्।

दिति भावः । एवं, टीकायां 'न' इति भाष्याभिप्रायमुक्त्वा, क्रियाश्रयत्वानुपपत्तेरिति भाष्यमभ्युपेत्यवाद इत्युक्त्वा, यदाश्रया क्रियेत्यादिभाष्यं विकल्पमुखेन व्याख्यातम् । तत्र, संयोगविभागादिरूपैकफलावच्छिन्नव्यापारनिचयस्यैव धात्वर्थतया, कथं संयोगविभागयोरेव घृषिधात्वर्थत्वेन वर्णनमित्याशङ्क्य, फलमेव धात्वर्थ इति **मण्डनमिश्रमतानुरोधेनैतदुक्तेः**, तन्मते च विक्लत्तेः पचिधात्वर्थत्ववत् संयोगविभागयोः घृषिधात्वर्थत्वान्न दोष इत्याशयेनाह— **एतच्चेति** । P. 126-6

उपास्तिक्रिया, नात्मगतोपकारजनिका, तदसमवेतक्रियात्वात् । या क्रिया यदसमवेता सा न तद्गतोपकारजनिका । यथा मण्यसमवेता दर्पणघर्षणक्रियेत्यत्र [व्याप्तिर्विवक्षिता] क्रियात्वं [धात्वर्थत्वम् ।] स्पन्दत्वं कृतित्वं वा कुतो न भवेदित्याशङ्क्य, व्यभिचारापत्तेर्नैवमित्याह—**यद्यपीत्यादिना** । **धात्वर्थद्वारेति** । P. 127-1 तथा च स्पन्दादौ धात्वर्थत्वरूपक्रियात्वाभावात् न व्यभिचार इति भावः । आत्मन्यपि संयोगविभागरूपक्रियासंभवे हेतोरसिद्धिरित्यत आह—**तौ च नात्मनीति** ।

---

१. 'यद्यपि स्पन्दरूपा भावना' इति कल्पतरुपाठस्थाने, यद्यपि स्पन्दरूपा क्रिया भावना वा' इति पाठः आभोगानुसारी इति भाति । स एव शुद्धः भावनायाः स्पन्दरूपत्वाभावात् ।

२. घृषिधात्वर्थत्वं संयोगविभागयोरेव न स्पन्दादेरिति भावः ।

३. अत्र उपास्तिक्रिया नात्मगतोपकारजनिका, तदसमवेतक्रियात्वात् इत्यनुमाने क्रियात्वं धात्वर्थत्वं विवक्षितमिति पूर्वमुक्तम् । फलस्यैव धात्वर्थत्वात् सामान्यव्याप्तौ स्पन्दादौ न व्यभिचारः तस्य फलभिन्नस्य धात्वर्थत्वाभावादित्युक्तम् । तर्हि उपास्तिक्रियास्थलेपि बुद्ध्यादिगतोपास्तिक्रियाजन्यस्य कस्यचित् फलस्य, बुद्धेरात्मनश्च संयोगविभागप्रचयरूपस्य वा अन्यस्य वा, धात्वर्थत्वं, तथा च तदेव फलं उपास्तिक्रियात्वेन विवक्षितम् । तच्च फलं आत्मनि समवेतम्, अतः तदसमवेतक्रियात्वरूपो हेतुरसिद्ध इति शङ्काशयः । तौ च संयोगविभागौ नात्मनि समवेतौ, आत्मनोऽसङ्गत्वात्, तथा च नासिद्धिरिति परिहाराशयः । 'तौ च नात्मनि' इति वाक्येन कल्पतरौ यद्यपीत्यादिपूर्ववाक्ये प्रक्रान्तौ दर्पणनिघर्षणस्थलीयौ इष्टकाचूर्णसंयोगविभागौ नात्मनि निषिध्येते । तयोरात्मनि अप्रसक्तेः। अतः पूर्वोक्तरीत्या क्रियाश्रयबुद्धेस्संयोगविभागावेव आत्मनि प्रतिषिद्ध्येते इति मन्तव्यम् । संयोगविभागातिरिक्तफलाश्रयणे तन्निषेधस्याप्युपलक्षणं कल्पतरुवाक्यम् । फलावच्छिन्नव्यापारस्य धात्वर्थत्वपक्षेऽपि, उपास्तिक्रिया नात्मगतोपकारजनिका, तत्समवेतफलाजनकक्रियात्वात्, इत्यनुमानविवक्षया आत्मनः संस्कार्यत्वं न संभवतीति दूषणं समानम् । बुद्धिगतोपास्तिक्रियायाः आत्मसमवेतफलाजनकक्रियात्वहेतुस्सिद्ध

असङ्गत्वश्रुतेरिति भावः। एकफलावच्छिन्नव्यापारनिचयो धात्वर्थ इति मते, कथं व्यभिचारपरिहार इत्याशङ्क्य, तस्मिन् पक्षे, तत्समवेतफलाजनकक्रियात्वं हेतुरिति न दोष इत्याशयेनाह—**संयोगेति**। संयोगविभागातिरिक्तः तत्फलको व्यापारो घृषिधात्वर्थ इति पक्षेऽपि दूषणमिदं समानमित्यर्थः।

**तच्चानिष्टमिति** भाष्ये तच्छब्देनानित्यत्वपरामर्शे, अनिष्टमित्यसङ्गतम्। स्वरूपेण नित्यत्वेपि संस्कारविशिष्टवेषेणानित्यत्वमस्त्विति वदन्तं प्रत्येवाविकार्यत्वश्रुत्युपन्यासादित्याशङ्क्य, **टीकायां बाधनं परामृश्यत** इत्युक्तम्। तत्र

P. 127-3 हेतुमाह—**तदव्यवहितमिति**। अथवा अनित्यत्वपरामर्शे बाधनपरामर्शे वा विशेषाभावात्, किमर्थं व्याख्यायत इत्याशङ्क्य, न्यायं पुरस्कृत्येत्याशयेन न्यायं दर्शयति—**तदव्यवहितमिति**। **स्वत एवेति**। ततश्च शुद्धस्यैव संस्कार्यत्वे व्यभिचारतादवस्थ्यमिति भावः। असङ्गोदासीनब्रह्मस्वभावस्य जीवस्वरूपस्य स्वतः संस्कार्यत्वासंभवात् उपहितस्यैव संस्कार्यत्वमिति परिहरति—**अत आहेति**।

तादृशस्यापि जीवस्य व्यवहाराय शरीराद्यपेक्षेत्याह—**नन्वित्यादिना**। ननु यज्ञदत्तस्यापि देवदत्तशरीरसंयोगे तेन व्यवहारापत्तिः, तत्संहतत्वात्। अत आह—**संहतत्वमपीति**। नन्वेवमन्तर्यामिणोऽपि तत्प्रविष्टस्य तेन व्यवहारा-

P. 127-7 पत्तिः, अत आह—**प्रवेशोऽपीति**।

ननु स्नानादिक्रियाया आत्मन्यारोपेऽपि वस्तुतस्तदसमवेतत्वात् व्यभिचारतादवस्थ्यमित्याशङ्क्य, येन संबन्धेनोपकारो जन्यते, तेन संबन्धेन क्रियाया

---

एव। उपास्तिक्रियाजन्यफलस्य संयोगविभागरूपस्य वा अन्यस्य वा आत्मासमवेतत्वात्। आत्मनोऽसङ्गत्वात्। स्पन्दादौ च न व्यभिचारः। दर्पणादिसमवेतफलजनकस्य तस्य तत्समवेतफलाजनकक्रियात्वाभावादिति बोध्यम्। ब्रह्मविद्याभरणे—'अन्याश्रया तु क्रिया अन्यत्र मलनिवृत्तौ नोपयुज्यते। यद्यपीष्टकाचूर्णस्य दर्पणेन संयोगविभागप्रचयानुकूलो व्यापारो हस्तचालनतदनुकूलयत्नादिरूपोऽन्यगतोऽपि भवति। तथापि मलापकर्षणे पुरुषव्यापारस्य द्वारीभूतो यस्संयोगविभागप्रचयः स दर्पणगतो भवत्येव। नैवं ब्रह्मणि संभवतीति परिहरति—न - क्रियाश्रयत्वानुपपत्तेरिति।' इत्युक्तम्। एतेन यत्र संस्कारो वक्तव्यः तद्गता वा तद्गतफलद्वारिका वा क्रिया तत्र संस्कारमाधत्ते। आत्मनि तु क्रिया वा क्रियाफलं वा नास्ति। अतो न संस्कारसंभवः इति दर्शितम्। आनन्दगिरीये—'क्रियायाः स्वाश्रये तद्युक्ते वा अतिशयहेतुत्वात् असङ्गस्यात्मनः तदाश्रयबुद्ध्याद्यसंबन्धात् न तन्निष्ठा क्रिया संस्कारमात्मन्याधातुमलम्' इत्युक्तम्।

अपि तद्वृत्तित्वं विवक्षणीयम् । अन्यथा अतिप्रसङ्गात् । अतश्च स्नानादिक्रिया-तत्संस्कारयोरुभयोरप्यात्मनि कल्पितत्वेन क्रियाया उपकारसमानसंबन्धेन तत्समवेततया तदसमवेतत्वघटितहेतोरेवाभावान्न व्यभिचार इति टीकाभिप्रायमाह—देहादाविति । रूप्याद्यध्यासवैलक्षण्येनेति । स्नानादिसंस्कारो न स्थायिफल- P. 127-10 जनकः, आरोपितत्वात्, शुक्तिरूप्यवदित्यत्र प्रातीतिकत्वमुपाधिरिति भावः ।

ननु ईशावास्यभाष्ये, स्नायुशब्दात् स्नाविरशब्दनिष्पत्तिमाश्रित्य, सिरारहितमिति व्याख्यातत्वात् कथं अविगलितमिति व्याख्येत्याशङ्क्य, प्रकारान्तरेण रूपनिष्पत्तावेवमपि व्याख्यातुं शक्यत इत्यभिप्रायेण टीकेत्याशयेनाह—ष्णु [स्नु] प्रस्रवण इति । अतोऽन्यन्मोक्षं प्रति क्रियानुप्रवेशद्वारमिति भाष्येणैव क्रियाफलत्वव्यापकीभूतनिर्वर्त्याद्यन्यतमत्वव्यावृत्त्या मोक्षस्य क्रियाफलत्वव्यावृत्तिरिति युक्तिः सूचितेति भाष्यभावं वर्णयितुं—एतदुक्तमित्यादिटीकेत्याह—इत्याशङ्क्याहेति । परिहारान्तरेति । ततश्च तदर्थं पुनश्शङ्केति P. 128-2 भावः ।

पूर्वपक्षे इति । ज्ञानं क्रिया मानसी कस्मान्न विधिगोचरः इति शङ्कायामित्यर्थः । वस्तुत इति व्याख्याने बीजमाह—औपाधिकं त्विति । वृत्त्युपरागोपाधिकं ब्रह्मणः कर्मत्वमिति परेणानभ्युपगमात् तन्निषेधे अनुक्तो-

---

१. उपास्तिक्रिया नात्मगतोपकारजनिका तदसमवेतक्रियात्वात्, इति पूर्वोक्तहेतोरित्यर्थः ।

२. एतदुक्तमित्यादिटीकायां 'अन्यतमतया' इति पदं 'अन्यतमया' इति शोधनीयम् । 'क्रियाफलत्वं यत्र यत्र तत्र चतसृणां विधानामन्यतमा' इति व्याप्तिः। न तु 'अन्यतमता' इति, विधानिष्ठस्यान्यतमत्वस्य क्रियाफले अभावादिति अवगन्तव्यम् ॥

३. 'न च विदिक्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणः' इति पूर्वं भाष्ये 'अन्यदेव तद्विदितात्' इत्यादिना श्रुतिगणेन विदिक्रियाकर्मत्वप्रतिषेधादिति हेतुबलात् ज्ञानक्रियाकर्मत्वं परिहृतम् । ब्रह्मणः स्वयंप्रकाशत्वादपि ज्ञानकर्मत्वं निराकृतम् । इदानीं ज्ञानस्य विधातुमनर्हत्वात् विदिक्रियाकर्मत्वेन ब्रह्मणः कार्यानुप्रवेशः परिह्रियते इति बोध्यम् ॥

४. औपाधिकं कर्मत्वं अस्मदिष्टं निषेद्धुं न शक्यत इत्यपि बोध्यम् । औपाधिककर्मत्वस्याङ्गीकारेऽपि ज्ञानस्याविधेयत्वात् विदिक्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणो न संभवत्येव । परंतु परैः औपाधिकं कर्मत्वं नेष्यते, स्वाभाविकमेव कर्मत्वमिष्यते, प्रमाणज्ञानविधिवादिभिः स्वाभाविकेन विदिक्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणः इष्यते, स्वाभाविकं विदिक्रियाकर्मत्वं वा तेन कार्यानुप्रवेशो वा नास्माभिरिष्यते इत्युक्तमिति भावः ॥

पारंभः स्यादिति भावः। ननु ज्ञानस्य क्रियात्वनिराकरणपरतया भासमानं भाष्यं P. 128-5 विधेयत्वनिराकरणपरतया किमर्थं व्याख्यायत इत्यत आह—**यदा त्विति** ।

**ज्ञेयवैलक्षण्यमिति** । ज्ञेयस्य ब्रह्मणः क्रियागोचरादन्यस्मात् वैलक्षण्यमित्यर्थः। **यत्तच्छब्दाध्याहारेणेति**। यत्रेत्यस्य तत्रेति, सेत्यस्य येति चेत्यर्थः। योजयितुमिति। अनेन, **टीकायां योजनान्तेन** सन्दर्भेण भाष्यपदानामन्वय उक्तः, तात्पर्यार्थस्तु—**तस्मात् ब्रह्मज्ञानं मानसी क्रियापि न विधिगोचर इत्यन्तेन प्रकटीकरिष्यत** इति सूचितम्।

अनेन च, वस्तुस्वरूपनैरपेक्ष्येण विधीयमानायां पुरुषव्यापाराधीनायामेव लोके क्रियात्वप्रसिद्धेः, वस्तुस्वरूपनिरपेक्षा पुरुषव्यापाराधीना च या क्रिया सैव विधेयेत्यतथाभूतं प्रमाणज्ञानं क्रियात्वेऽपि न विधेयमिति भाष्याभिप्रायो वर्णितः। ध्यानस्य विधेः प्रागप्राप्तत्वकथनं प्रकृतानुपयोगीत्यत आह—**ध्यान-** P. 128-2 **स्येति**। वषट्करिष्यन्नित्यस्य विशेष्यं दर्शयति—**होतेति**। याज्याया वक्तेत्यर्थः।

ननु नहि **यस्यै देवतायै इत्यादिटीकया** ध्यानस्य पुरुषेच्छाधीनत्वं नोपपाद्यत इत्याशङ्क्य, विधिप्रवृत्तेः प्राक्प्रमाणप्राप्तत्वं पुरुषेच्छानधीनत्वे तन्त्रम्। ततश्च **टीकायां**—प्राप्तत्वाभावकीर्तनं पुरुषेच्छाधीनत्वेनेत्येवमभिप्रायमित्याशयेनाह—**विध्यर्थेति**। **टीकायां उपासना**—नोपास्तिक्रिया, तस्याः प्रागेव P. 129-1 निरस्तत्वात्। किन्तु ज्ञानाभ्यास इत्याह—**शाब्दज्ञानेति**। यथाक्रममन्वयमाह—**उपासनाया इति**।

ननु कथं क्रियाया वस्तुस्वरूपनैरपेक्ष्यम्? देवताध्यानादेः देवतासापेक्षत्वात् इत्याशङ्क्य, कल्पितेनापि तदुपपत्तेः न वस्तुयाथात्म्यापेक्षा, परं तु क्वचिद्बाधकाभावेन वस्तुनो याथार्थ्यात् वस्तुस्वरूपेणाविरोधः, क्वचित्तु विरोध इति वक्तुं—**पुरुषचित्तव्यापाराधीनायाश्चेति टीका**। तत्र **क्वचिद्विरोध इति**

---

१. कल्पतरौ 'यच्छब्दाध्याहारेण' इति, 'तच्छब्दाध्याहारेण' इति च पाठभेदः परिमले उक्तः। आभोगानुसारेण 'यत्तच्छब्दाध्याहारेण' इति पाठः॥

२. अत्र टीकायां [भाष्ये] निदर्शनमिथुनद्वयोपन्यासः इत्युक्तम्, देवताध्यानं संध्याध्यानं च वस्तुस्वरूपाविरोधि निदर्शनमिथुनम्। योषित्पुरुषाग्निबुद्धिद्वयं वस्तुस्वरूपविरोधि निदर्शनमिथुनम्। इति मिथुनद्वयम्॥

विशेषकीर्तनस्य प्रयोजनमाह—क्रियाया इति। क्रियैवेति भाष्यव्याख्यानेन भाष्यान्तरमपि व्याख्यातमित्याह—अनेनेति। भाष्यस्य क्लिष्टव्याख्याने पूर्वं युक्तिरुक्ता। इदानीं भाष्यानुगुण्यमाह—अत एवेति। P. 129-3

नियोज्यविषयराहित्येन विध्यभावं भाष्योक्तमुपपादयितुं सत्यमित्यादिटीका। तत्र समर्थः कर्तेत्यादिपदबोधितानां सामर्थ्यादीनामुत्तरोत्तरं प्रति हेतुत्वं दर्शयन् तत्रेति सतिसप्तम्याश्रयणेन विषयस्य नियोज्यत्वे हेतुत्वमन्वयव्यतिरेकसिद्धमित्याह—यः समर्थ इत्यादिना। उक्तविषयस्येति। ततश्च तदधीननियोज्याभावोऽपि सिद्ध्यतीति भावः। P. 130-1

अनेवंभूतत्वमेव दर्शयति—श्रवणं हीत्यादिना। किं तात्पर्यावगममात्ररूपं श्रवणं विधेयं? किं वा [अखण्डे] ब्रह्मणि तात्पर्यमवगच्छेदित्येवं [विधीयमानं] विषयविशेषावच्छिन्नतात्पर्यावगमरूपम्? नाद्यः। अध्ययनविधिनैव कर्मकाण्डवाक्यानामिव वेदान्तानामपि तत्सिद्धौ विधिवैयर्थ्यादित्यभिप्रेत्य, द्वितीये किं तादृशोऽवगमः प्रकारान्तरेण न ज्ञातः? उत ज्ञातः? इति विकल्पं मनसि निधाय, क्रमेण दूषयति—तस्य चेति। अवगमे चेति। ज्ञानगोचरज्ञानस्य तद्विषयविषयकत्वेन तस्य तत्त्वादिति भावः।

युक्त्यनुचिन्तनमात्रमसंभावनादिनिरासाय वाक्यान्तरेष्विव वेदान्तेष्वपि सिद्धमिति तन्न विधेयम्। किन्तु विषयविशेषावच्छिन्नमेवेत्याशयेनाह—विषयविशेषेति। अवगतस्य न कर्तुं शक्यत्वं, ज्ञातत्वात्। अनवगतस्य तु कर्तव्यत्वेन बोद्धुमशक्यत्वमित्यर्थः। P. 130-4

---

१. 'यदा तु ज्ञानं क्रियैव न भवतीत्येवंपरतया भाष्यं व्याख्यायते' तदा पचतीतिवत् जानातीति पूर्वापरीभावप्रसिद्धिः दुश्चिकित्सा स्यात्, इति' पूर्वग्रन्थे इत्यर्थः।

२. सर्वेषां वेदानामर्थपरत्वमापादयता अर्थज्ञानफलकाध्ययनविधिनैव वेदान्तानामपि कर्मकाण्डवत् सामान्यतोऽर्थतात्पर्यावगमसिद्धेरिति भावः।

३. तस्य-विषयविशेषावच्छिन्नप्रत्ययरूपश्रवणगोचरज्ञानस्य - तत्त्वात् - श्रवणरूपत्वादित्यर्थः।

४. 'वेदान्तानामखण्डे ब्रह्मणि न्यायतस्तात्पर्यमवगच्छेदिति विषयविशेषावच्छिन्नतात्पर्यावगतिविषयः श्रवणविधिरभ्युपेतव्यः। तथा च प्राक् तदवगमानवगमयोरुक्तदूषणद्वयमापततीति भावः' इति परिमलम्।

P. 130-5 **उपासनस्य**—निदिध्यासनस्य । ननु ब्रह्मप्रत्ययावृत्तेः निदिध्यासनस्य योऽयमवगमः, तस्य ब्रह्मप्रत्ययत्वेऽपि कथं निदिध्यासनसिद्धिः । तस्यैकत्वात् । प्रत्ययसमुदायस्यैव च निदिध्यासनत्वादित्यत—उक्तम्—**यथाश्रवणमननमिति** । श्रवणं मननं चानतिक्रम्य, तत्समानविषयको यः प्रत्ययः तदावृत्तेरित्यर्थः । तया च श्रवणमननाभ्यां सह त्रित्वात् समुदायसिद्धिरिति भावः । **विधित्सितार्थस्येति** ।

न तावत् साक्षात्कारफलकं ध्यानमिह विधेयम् । तस्य लोकत एव प्राप्तत्वात् । नापि ध्यानेनैव साक्षात्कुर्यादिति नियमः । ब्रह्मसाक्षात्कारे उपायान्तराभावेन व्यावर्त्याभावात् । नापि नैरन्तर्यविधिः । तदभावे चित्तैकाग्र्यसाक्षात्कारयोरदर्शनेन तस्यापि लोकत एव सिद्धेः । अतः परिशेषात् अदृष्टार्थतया प्रत्ययावृत्तिमात्रं विधेयम् । तच्च जातमिति न पुनः कर्तव्यत्वमित्यर्थः ।

दर्शनस्य तु केवलवस्तुतन्त्रत्वेन कर्तुमकर्तुमन्यथा वा कर्तुं अशक्यत्वं P. 130-6 स्फुटमेवेत्याह—**दर्शनस्य त्विति** । **अनुवादस्य प्रवृत्तिविशेषकरत्वमुपपादयितुं तथाहीत्यादिटीका** । तत्र कथं मनःप्रवाहस्य विषयसंबन्धिप्रसरणखिलीकरणं, कथं वा विषयेच्छादिसेतूद्घाटनेन प्रत्यगात्मसंबन्धिप्रसरणसंपादनमित्यतः P. 131-1 तदुपपादयति—**दर्शनार्थमिति** । **अनुवदन्ति कुर्वन्तीति** च शत्रन्ते पदे । **सामर्थ्यादिति** । उपनिषद्गम्यत्वसिद्धवत्कारसामर्थ्यादित्यर्थः ।

---

१. अत्र कल्पतरौ 'एवं मननस्यापि विषयविशेषनियतयुक्त्यालोचनस्यावगतस्य कर्तुमशक्यत्वादीति' इति शोधनीयम् । आदिपदेन अनवगतस्य कर्तव्यत्वेन बोधायोगपरिग्रहः ।

२. 'न चाविच्छिन्नप्रत्ययावृत्तिः ध्यानशब्दार्थः, सा न सिद्धेति वाच्यम् । यथाश्रवणमननं प्रत्ययावृत्तिरूपं ध्यानं कर्तव्यमिति विध्यर्थावगमकाले श्रवणे यथाभूतः प्रत्ययः मनने च यथाभूतः तयोरपि क्रमेणानुसंधेयत्वेन नैरन्तर्यस्यापि प्राप्तेरिति भावः ।' इति परिमलमिहानुसंधेयम् ।

३. विधित्सितार्थस्य ज्ञातस्येति, कल्पतरौ जातस्येति शोधनीयम् ।

४. अत्र कल्पतरौ 'तद्गतप्राशस्त्यलक्षणया' इत्यस्यायमर्थः—द्रष्टव्य इत्यर्हार्थे तव्यप्रत्ययः न विधिपरः । दर्शनार्ह इत्यर्थः । तस्य च दर्शनं प्रशस्तमित्यर्थे पर्यवसानात् दर्शनगतप्राशस्त्ये लक्षणेति भावः ।

**यदि हीत्यादिटीकाया** अयमर्थः। किं सर्वत्र कार्य एव संगतिग्रहात् P. 131-2 वेदान्तानामपि कार्यपरत्वं? उत क्वचित् सिद्धार्थे संगतिग्रहसत्वेऽपि? नाद्य इत्याह— **यदि हीति**। न द्वितीय इत्याह—**अथ तु भूतेऽपीति**। ननु संगतिग्रहव्यापकस्य शब्दप्रयोगस्य व्यावृत्तौ न संगतिग्रह इत्युक्तम्। अत आह—**तत्र तावदिति**। एवं सत्येव न भवेदकार्यार्थे संगतिग्रह इत्यर्थः। ननु कुतूहलाद्यर्थप्रयुक्तेष्वपि वाक्येषु प्राथमिककार्यव्युत्पत्त्यनुरोधेन कार्यपदाध्याहारोऽस्त्वित्यत आह—**बहुलमुपलब्धेरिति**। बहुलप्रयोगानुरोधेन, गौरवेण पदान्तरलभ्यत्वेन च कार्यांश एव त्यक्तव्यः। अन्यथा 'दण्डेन गामभ्याजे'त्यादिवाक्ये प्रथमव्युत्पत्तौ [शक्यतया—गृहीतं] दण्डकरणकगोकर्मकानयनकार्यमेव सर्वेषामपि पदानां शक्यं स्यादिति भावः।

कुतूहलार्थं वाक्यमुदाहृतं **टीकायाम्—आखण्डलादीति**। तद्व्याचष्टे— **आखण्डलादीनामिति**। हर्षादिना पुरुषान्तरवर्तिनी [भूतार्थ] बुद्धिरुन्नेतुं शक्यत इत्येतदुपपादयितुं—**तथाहीत्यादिटीका**। तत्र प्राथमिकव्युत्पत्त्युपजीवनेनैव सिद्धार्थव्युत्पत्तेः, तदनुरोधेन स्नानदानादिकर्तव्यतापरत्वमेव वाक्यस्य कल्प्यतामित्याशङ्क्य, तदनुपजीवनेनैव व्युत्पत्तिं दर्शयितुं **अविदितेत्यादिविशेषणम्**। हर्षे हेत्वन्तराप्रतीतिस्फोरणाय **पटवासेत्यादिविशेषणम्**।

एवं विशेषणद्वयप्रयोजनं सिद्धवत्कृत्य, पदानि व्याचष्टे—**अभ्यर्णं** P. 131-9 **निकटमित्यादिना**। **प्रत्युक्ते इति**। पूर्वपक्षोक्ते इत्यर्थः। **अनुपदिशतामपीत्यपि**शब्दसूचितं विशेषं दर्शयति—**प्रवृत्तिनिवृत्त्याश्रयणं हीति**। P. 131-12

---

१. अविदितार्यजनभाषार्थ इति विशेषणेन इयमेव आर्यभाषायां प्राथमिकी व्युत्पत्तिः इति दर्शितम्। 'लाटदेशे पटवासप्रदर्शनपुरस्सरं पुत्रजननवार्तां वाचैव स्फुटं वदन्ति वार्ताहारा इति तद्देशप्रसिद्धिं जानन् वार्ताहारवाक्यस्य पुत्रजननमेवार्थ इति प्रत्येतीति न तस्यार्थान्तरप्रतीतिप्रसङ्गः' इति परिमले उक्तम्।

२. एवंविधविषये हर्षजनकं हेत्वन्तरं शङ्कमानाः जननीजारशङ्कया आत्मनोऽपि ब्राह्मण्यं प्रति संदिहानाः नाधिकारभाजो ब्राह्मणोचितासु क्रियास्विति कृतं मीमांसाभ्यासपरिश्रमेण तेषाम्' इति न्यायकणिकायाम् पटवासोपायनार्पणस्थलेऽपि शङ्कमानान् प्रति उक्तम्।

२. 'न चाहेयमनुपादेयं रूपमात्रं कश्चिद्विवक्षति प्रेक्षावान्, तस्याबुभुत्सितत्वात्' इत्यादिना पूर्वपक्षिणोक्ते इत्यर्थः।

P. 131-14 [1]असिद्धिरुद्धृतेति । सिद्धे संगतिग्रहतद्व्यापकप्रयोगाद्यसंभवान्न प्रमाजनकत्वमित्येतन्निरस्तमित्यर्थः । बाधं परिहरतीति । वेदान्तवाक्यानामेव पक्षतया तस्य पक्षत्वाभावादिति भावः । सिद्धसाधनादिति । पूर्वपक्षिणा वेदान्तानां सिद्धे ब्रह्मणि मुख्यतात्पर्याभावेन प्रमितिजनकत्वानभ्युपगमेऽपि प्रतीतिजनकत्वाङ्गीकारादिति भावः । साध्यसमतापातादिति । भूतार्थविषयकत्वं हि साध्यम् भूतार्थविषयकप्रमाजनकत्वमेव, प्रमाणानामाहत्य प्रमेयविषयकत्वासंभवेन प्रमाद्वारैव तदभ्युपगमात् । ततश्च [हेतोः] साध्याविशेष इत्यर्थः ।

ननु यत् भूतार्थविषयकप्रमाजनकं, तन्न कार्यविषयम् । यथा चक्षुरादीति, विशेषव्याप्तेरेव संभवात् सामान्यव्याप्तिप्रदर्शनं अयुक्तमित्याशङ्क्य, द्वितीययत्तच्छब्दयोः प्रकृतभूतार्थपरत्वात् विशेषव्याप्तिरेव दर्शितेत्याशयेनाह—[2]यत्तच्छब्दावपीति । उपोपसर्गश्चेति । ततश्च निर्विशेषं ब्रह्मस्वरूपमत्यन्तसमीपसाक्षिरूपेण विषयीकृत्य, सवासनामविद्यां सीदति श्रृणातीति व्युत्पत्त्या ब्रह्मविद्यैवोपनिषदित्यर्थः ।

P. 132-2

भाष्ये असंसारित्वादिविशेषणानामनर्थकत्वात् कथं टीकायां तद्व्याख्यानमित्याशङ्क्य, किं वेदान्तानां सिद्धे वस्तुनि संगतिग्रहाद्यभावेन तद्बोधकत्वमेव नेति ब्रवीषि? किं वा तद्बोधकत्वेऽपि न तत्र पर्यवसानम्, किन्तु तद्द्वारा कार्य एवेति, विकल्पं मनसि निधाय, योऽसावुपनिषत्स्वेवाधिगत इत्यनेन औपनिषदस्य पुरुषस्येत्येतदंशविवरणभाष्येण प्रथमं निराकृत्य, अनन्यशेषत्वादित्यंशविवरणेन द्वितीयं निराकर्तुं—उत्तरभाष्यम् । तत्र किं ब्रह्मणो दध्यादिवत् क्रियाशेषत्वात्तद्बोधकस्य 'दध्ना जुहोती'त्यादिवत् कार्यपर्यवसानम्? अथवा व्रीह्यादिवत् क्रियासंस्कार्यत्वात् 'व्रीहीन् प्रोक्षती'त्यादिवदिति विकल्पनिराकरणार्थमसंसारीत्यादिविशेषणानीति न दोष इत्याशयेनाह—वस्त्वक्रियाशेषमिति ।

P. 133-1

---

१. वक्ष्यमाणहेतुः भूतार्थविषयप्रमाजनकत्वं, तच्च स्वातन्त्र्येण भूतार्थप्रतीतिजनकत्वरूपम् । प्रतीतौ याथार्थ्यविशेषणस्यानपेक्षितत्वात्, तस्य च हेतोः असिद्धिः पूर्वपक्षिणा उद्भाविता सिद्धव्युत्पत्तिप्रसाधनेन परिहृता । इति परिमलम् ।

२. तद्विषयमित्यस्य भूतार्थविषयमित्यर्थलाभे सति तेन लक्षणया कार्यविषयत्वाभावरूपमभिमतसाध्यं बोधनीयमिति परिमलम् ।

वस्तुतः असंसारिणोऽपि जीवस्य अहंप्रत्ययविषयत्वात्, अहंप्रत्यय-विषयात् भिनत्तीति कथं टीका, इत्यत आह— भाष्य इति। ततश्चाहंप्रत्यय-पुष्कलविषयात् भिनत्तीति टीकार्थ इति भावः। आद्यकल्पनिराकरणार्थं असंसारीति विशेषणम्। तेन कथं तन्निरास इत्यत आह—क्रियारहितत्व-मिति। द्वितीयं निराकर्तुं उत्पाद्यादीति विशेषणम्। तत्र क्रियासंस्पर्शरा-हित्यं हेतुः। अनन्यशेषत्वमपि तत्र हेतुर्भवितुमर्हतीत्यभिप्रायेण टीकेत्याह—व्यवहितमपीति। अनन्यशेषत्वमपीत्यन्वयः। रक्षाशेषाः—भस्मशेषाः। P. 133-2 P. 133-3

वेदान्तानां सिद्धब्रह्मबोधकत्वस्य समर्थितत्वात् शङ्कानुपपत्तिरित्याशङ्क्य, वेदान्तानां सिद्धब्रह्मबोधकत्वाभावः किं सिद्धे क्वचिदपि संगतिग्रहासंभवेन वेदा-न्तानां सिद्धे ब्रह्मणि, संगतिग्रहाभावात्? किं वा अन्यत्र सिद्धे संगतिग्रहसंभ-वेऽपि ब्रह्मणि वेदान्तपदानां संगतिग्रहासंभवादिति विकल्प्य, प्रथमं निराकृत्य, द्वितीयं शङ्कत इत्याह—एवं सिद्धार्थेति। P. 133-5

---

१. क्रियारहितत्वमकर्तृत्वं तदेवासंसारित्वं, कर्ता क्रियायां शेषः। न तु अकर्तृ-ब्रह्मस्वरूपं शुद्धं जीवस्वरूपं क्रियायां शेषः। ततश्च दध्यादिवत् क्रियाशेषत्वनिरासः इति भावः।

२. 'क्रियारहितत्वाच्चतुर्विधद्रव्यविलक्षणः' इति टीका, तत्र क्रियारहितत्वं क्रिया-संस्पर्शराहित्यं उत्पत्त्यादिक्रियाराहित्यमिति यावत्, उत्पत्त्यादिरहितत्वात् उत्पाद्यादिरूपं न भवतीत्यर्थः। भाष्ये असंसारिपदेनोक्तं कर्तृकर्मभावेन क्रियारहितत्वं, अकर्तृत्वं उत्पत्त्या-दिक्रियासंस्पर्शराहित्यमित्युभयरूपमिति भावेन आत्मनः अक्रियाशेषत्वे उत्पाद्यादिचतुर्विध-द्रव्यविलक्षणत्वे च हेतूकृतं भामतीकल्पतर्वोरिति ध्येयम्। ब्रह्मविद्याभरणे—'कार्यशेषता कार्यसंबन्धित्वं, तत् किं कर्तृतया, उत प्रयाजादिवदितिकर्तव्यतारूपतया, उत व्रीह्यादिवद-वहननादौ उपासनाशेषितया? इति विकल्पं मनसि निधाय निराकरोति। असंसारीति कर्तृतायाः, उत्पाद्यादीति शेषितायाः, स्वप्रकरणस्थ इति इतिकर्तव्यतारूपतायाः निरा-करणं द्रष्टव्यम्' इत्युक्तम्।

३. टीकायां 'यत्पुनरनन्यशेषं भूतभाव्युपयोगरहितं, यथा 'सुवर्णं भार्यम्' 'सक्तून् जुहोति' इत्यादि, न तस्योत्पत्त्याद्याप्यता' इत्युक्तम्। सुवर्णं भार्यमिति न संस्कारकर्म, अपि तु प्रधानकर्म इति पूर्वमुक्तम् कल्पतरौ, सक्तून् जुहोतीत्यपि प्रधानकर्म इत्यत्रैवोक्तम्। तत्रैव प्रधानकर्मणि सुवर्णस्य सक्तूनां च शेषत्वसंभवात् अनन्यशेषत्वं कथमिति शङ्कानिरासायोक्तं टीकायां-भूतभाव्युपयोगरहितमिति। न तस्य सुवर्णादेः उत्प-त्त्याद्याप्यता उत्पाद्यादिचतुर्विधसंस्कार्यान्तर्भावः। इत्यर्थः।

**अपदार्थस्य कथं वाक्यार्थत्वमिति** शङ्कायाः कः परिहार इत्याशङ्क्य, यत्र पदैराहत्य वाक्यार्थो बोध्यते, तत्र संसृष्टपदार्थस्यैव वाक्यार्थतया पदार्थत्वगवेषणम्। यत्र तु लक्षणया स्वरूपमात्रं बोध्यते, यथा 'सोऽयं देवदत्तो' 'घटाकाशो महाकाश' इत्यादौ, तत्र न पदार्थतापेक्षा। एवं च प्रकृते सोपाधिकस्वरूपवाचकानां वेदान्तपदानामप्युपक्रमोपसंहाराभ्यासापूर्वतादितात्पर्यग्राहकग्राहिताद्वितीयब्रह्मतात्पर्यकाणामुपाध्यंशप्रहाणेन स्वरूपज्ञापकत्वं संभवतीति परिहारतात्पर्यमाह—**स्वयंप्रकाशत्वेनेति**। P. 133-7

ननु निषेधमुखेन कथमात्मबोधनं? धर्मिज्ञानाभावे निषेधस्यैवायोगादित्यत उक्तम्—**स्फुरत्यात्मनीति**। तर्हि शास्त्रेण तद्बोधनं व्यर्थमित्यत आह—**समारोपितदृश्यनिषेधेनेति**। निषेधे धर्मिप्रतियोगिप्रमैव तन्त्रम्, शशशृङ्गे वस्त्वन्तरस्य वस्त्वन्तरे शशशृङ्गस्य वा निषेधादर्शनादिति शङ्कते—**नन्विति**। शशशृङ्गादेरपि भासमानतादशायां अनुभवसिद्ध एव निषेधः। इतरथा[1], भासमानत्वस्यैवाभावान्न निषेध इति परिहारतात्पर्यमाह—**भासमान इति**। P. 133-10 **भातीति** सप्तम्यन्तम्। एवमपि कथमुपाधेर्भानमित्यत आह—**तत्साक्षिक इति**। ततश्च साक्ष्येव तद्भानमिति भावः।

**य आत्मेति**[2]। बृहदारण्यकचतुर्थाध्याये, 'अथात आदेशो नेति नेती'ति वाक्ये, 'इदं न इदं ने'ति निषेधाधिष्ठानत्वेन निरूपितमात्मस्वरूपम्। तत्पञ्चमाध्याये, 'अगृह्यो न हि गृह्यते' इत्यादिना पुनः निरूप्यत इत्यर्थः। आत्मनो निरासे प्रपञ्चस्य सत्तास्फुरणे उभे अपि न स्यातामिति परिहाराभिप्रायमाह—**न केवलमिति**। P. 133-13

**प्रत्युक्तत्वादिति** भाष्यमनुपपन्नम्, अस्याः शङ्कायाः प्रागनिरस्तत्वादित्याशङ्क्य, टीकायामौपनिषदः **पुरुषो नाहंप्रत्ययविषयः तत्साक्षित्वादित्येवमहंप्रत्ययविषयत्वस्य प्रत्युक्तत्वात्** निरस्तत्वादित्येवं व्याख्यातम्। तदेतत् भाष्यप्रदर्शनेन विशदयति—**संस्कार्यत्वेति**। P. 134-2

---

१. इतरथा—अन्यदा-भासमानत्वाभावदशायाम्। इतरदा-इति तु युक्तः पाठः।

२. 'स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यते' इति शाकल्यब्राह्मणे पठितम्। तत्र भाष्यम्—'स एषः स यो नेति नेतीति निर्दिष्टः मधुकाण्डे सोऽयमात्मा अगृह्यः' इत्यादि।

अत्र टीकायां जीवब्रह्मणोरभेदात् कथमेकस्मिन्नहंप्रत्ययविषयत्वतदभावावित्याशङ्क्य काल्पनिकभेदशालिन्युपहिते जीव एवाहंप्रत्ययविषयत्वं, शुद्धे तु नैवमिति मानान्तरागोचरत्वादौपनिषदत्वं परमात्मन इत्येवमेतदुक्तमित्यादिना परिहृत्य, तत्रैव भाष्यमवतारितम्—एतदेव प्रपञ्चयतीति। तदनुपपन्नम्। तत्साक्षित्वेन प्रत्युक्तत्वादिति पूर्वभाष्यानुरोधेन, न ह्यहंप्रत्ययेत्यादिभाष्यस्य साक्षित्वेन प्रत्युक्तिप्रकटनपरत्वौचित्यादित्यत आह—न ह्यहंप्रत्ययेति। अहंप्रत्ययविषयत्वस्य प्रत्युक्तत्वादुपपन्नमौपनिषदत्वमिति पूर्वभाष्यार्थः। अन्यथा, शङ्काया अनिरासात्। ततश्च तदुपपादनार्थत्वं नहीत्यादिभाष्यस्येत्यर्थः। P. 134-2

भाष्ये इति। तच्छब्दनिर्दिष्टस्य साक्ष्यस्य कर्तुरेव विधिकाण्डे समधिगतेरिति [ भावः।] सर्वभूतस्थत्वविशेषणार्थकथनेन बौद्धमतानधिगतत्वमुपपादयति—विनश्यत्स्विति। समत्वादिविशेषणानां प्रयोजनमाह—सावयव आत्मेत्यादिना। समत्वमेकत्वम्। ततो दिगंबरमतनिरास इत्यर्थः। भाष्यगतेन अतश्शब्देनानधिगतत्वं परामृश्यत इति व्याख्याय, सर्वस्यात्मत्वं वा तेन परामृश्यत इति व्याख्यातम्—अथवेति। तदापाततः। अनधिगतत्वस्यैव पूर्ववाक्यार्थस्य प्राधान्येन सर्वनाम्ना परामर्शौचित्यात्। अत इत्यनेनात्मत्वपरामर्शे उत्तरवाक्ये आत्मत्वादेवेति स्वरूपेण कीर्तनं न स्यात्; अत एव चेत्येव वक्तुमुचितत्वाच्चेति ध्येयम्। P. 134-3 P. 134-6

---

१. 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्। विनश्यत्स्वविनश्यन्तम्' इति स्मृतौ सर्वभूतस्थत्वस्य तथा विवरणादिति भावः। इति परिमलम्।

२. समत्वमेकत्वमिति न युज्यते, भाष्ये 'सम एकः' इति एकत्वस्य पृथगुपादानात्। एकपदेन नानात्मवादितार्किकादिमतानधिगतिरुच्यते - शरीरपरिमाणात्मवादिनां जैनानां मते प्रतिशरीरं आत्मनः भिन्नपरिमाणत्वेन समत्वाभावात् समपदेन दिगंबरसमयानधिगतिरुक्तेति तात्पर्यमत्र। अतः एकरूपत्वमिति वक्तव्यम्।

३. 'अव्यवधानस्वारस्यात् 'आत्मत्वादेव' इत्यग्रिमभाष्यगतैवकारस्वारस्याच्च अथवेति पक्षः' इति परिमले कथितम्। 'न केनचिदधिगतस्सर्वस्यात्मा' इत्यत्र भाष्यवाक्ये अनधिगतत्वापेक्षया आत्मत्वमव्यवहितम्। 'आत्मत्वादेव' इत्यत्र एवकारः पूर्वत्र हेतुतयोक्तादात्मत्वादेव इत्यर्थकत्वात् अत इत्यनेनात्मत्वपरामर्शं बोधयति। निर्दिष्टस्य पुनर्निर्देशे एवकारप्रयोगात्। इति परिमलभावः।

ननु विधिशेषत्वं वा नेतुमिति भाष्येण प्रागुपपादितमनन्यशेषत्वं पुनरुपपाद्यते । तस्य किं प्रयोजनमित्याशङ्क्य, वृत्तकीर्तनपूर्वकं तत्प्रयोजनं दर्शयति—औपनिषदस्येत्यादिना । अहंप्रत्ययविरोधमिति । भाष्ये अभिहितमात्मनो यद्विशेषणमुपनिषदेकगम्यत्वं, तस्यात्मविषयकेणाहंप्रत्ययेन बाधमाशङ्क्याहंप्रत्ययविषयस्य मिथ्यात्वेन तद्भिन्नस्य शुद्धस्यौपनिषदत्वं विवृतमित्यर्थः । अनन्यशेषत्वेति । स्वप्रकरणस्थत्वहेतुना संमुग्धाकारेण प्रागुपपादितस्यानन्यशेषत्वस्य आत्मत्वरूपहेत्वन्तरेण विधिशेषत्वाभावात्मना विशेषरूपेण विवरणायेत्यर्थः । अनुषङ्गेणेति । न शक्य इत्यनुषङ्गेणेत्यर्थः ।

P. 134-8 (margin)

विध्यशेषत्व इति । अनधिगतत्वमतश्शब्दार्थ इति पक्षे, तस्य विध्यशेषत्वे हेतुत्वं न संभवति, मानान्तरानधिगतस्यापि यूपाहवनीयादेः विधिशेषत्वात् । अतो वक्ष्यमाणमात्मत्वहेतुमत्राप्याकृष्य व्याचष्टे इत्यर्थः । भाष्ये आत्मनोऽहेयत्वादिकमुक्तम् । तद्यर्थम् । तादृशस्यापि कर्तुः कार्यशेषत्वेन, विध्यशेषत्वे तस्य हेतुत्वायोगात् । आत्मत्वस्य तत्र हेतुत्वेनान्वितत्वाच्चेत्याशङ्क्य, शङ्कोत्तरं भाष्यमिति दर्शयन्, अपि चेति टीकामवतारयति—माभूदिति ।

P. 134-10 (margin)

तर्हि कथमपि च शब्द इत्यत आह—अनन्यशेषत्व इति । एकस्मिन् साध्ये हेत्वन्तरसमुच्चयार्थो न भवति, किन्तु एकस्मिन् हेतौ साध्यान्तरसमुच्चयार्थ इति भावः । ननु आत्मत्वादेवेति भाष्यटीकयोरेवकारः प्रयुक्तः । स च निर्दिष्टस्य पुनर्निर्देशे भवति । नान्यथेत्यत आह—भाष्येति । भाष्ये अत इति योऽयं शब्दस्तदुक्तादेवेत्यर्थः । एतच्च द्वितीयव्याख्यानुरोधेन[3] ।

P. 134-12 (margin)

---

१. 'न तु अतश्शब्दस्याप्यनुषङ्गेणेत्यर्थः । अतश्शब्दोक्तहेतोः पुनर्निर्देशकरूपस्य आत्मत्वादेवेत्यग्रिमभाष्यगतहेतोः पूर्वत्राप्यन्वयस्य टीकायां वक्ष्यमाणत्वात् ।' इति परिमलम् ।

२. कल्पतरौ 'विधेयत्वाभावे' इति निषेध्यत्वाभावस्याप्युपलक्षणम् ।

२. कल्पतरौ अतः इति भाष्यस्थशब्दस्य अनधिगतत्वादिति, आत्मत्वादिति च व्याख्याद्वयं क्रमेण कृतमत्रानुसंधेयम् । भामत्यां 'अपि च सर्वेषामात्मत्वादेव न हेयो नाप्युपादेयः' इति, 'अपि चातस्सर्वेषाम्' इति, 'अपिचात एव सर्वेषाम्' इति च पाठभेदो वर्तते, कल्पतरावपि—'अत इति । भाष्योक्तादेव हेतोरित्यर्थः' इति, 'भाष्ये अत इत्युक्तादेव हेतोरित्यर्थः' इति, 'अत इति । भाष्ये अत इत्युक्तादेव हेतोरित्यर्थः' इति च पाठभेदो वर्तते । तत्र टीकायां अपि च सर्वेषामिति पाठो न व्याख्यानापेक्षः ।

प्रथमव्याख्यायां तु **सर्वस्यात्मेति** हेतुगर्भविशेषणे **उक्तादेवेति** व्याख्यानं द्रष्टव्यम् ।

दर्शनस्य कथं परिहार इत्याशङ्क्य, 'शरीरे सुख'मित्यादिवत् तदधिकरणावच्छेदकेऽपि तदधिकरणत्वदर्शनमुपपन्नमित्याह—**कल्पितस्येति** । **सर्वं हीति** भाष्यभावमभिधाय **पुरुषो हीति** भाष्यं व्याख्यातुं **पुरुष एव हीत्यादिटीका** । तत्रानन्तशब्दस्य नित्यार्थकत्वभ्रमं वारयति—**अनवधिरिति** । **विक्रियाहेत्वभावादिति** भाष्यगतहेतोरेकस्यैव कथनादपिचशब्दानुपपत्तिरित्यत आह—**धर्मान्यथात्वेति** । तथा च विक्रियाया अभावात्, तद्धेत्वभावाच्चेति **भाष्यार्थ** इति भावः ।

P. 135-1

**अत एवेति** भाष्ये **अतश्शब्देन** कूटस्थनित्यत्वपरामर्शे, तस्य नित्यत्वे हेतुत्वानुपपत्तिरित्यतो व्याचष्टे—**यत एवेति** । श्रुत्युपस्कारकतया तस्मादित्युक्तम् **भाष्ये** । तदर्थमाह—**कल्पितस्येति** । एतच्छ्रुत्युदाहरणस्य प्रकृतोपयोगं दर्शयन्नाह—**निरतिशयेति** । '**दृष्टो हि तस्यार्थ**' इति **शाबरवाक्ये तस्येत्यस्यार्थमाह**—**वेदस्येत्यर्थ इति** । क्रियत इति कर्मेति व्युत्पत्तिमभिप्रेत्य शङ्कते—**नन्विति** । अनुष्ठानाय किञ्चित् कर्म बोध्यते । वर्जनाय किञ्चित्कर्मेति

P. 135-5
P. 135-7

---

पाठान्तरे अतश्शब्दः सर्वात्मत्वादिति भाष्योक्तहेतुपरामर्शीति व्याचष्टे कल्पतरुकारः भाष्योक्तादेव हेतोरित्यर्थ इति । 'भाष्ये अत इत्युक्तादेव हेतोरित्यर्थः इति कल्पतरुपाठेऽपि अयमेवार्थः, भाष्ये उक्तादेव हेतोरित्यर्थः इति व्यवहितयोजनया ग्राह्यः । इति परिमले उक्तम् । परिमले व्यवहितयोजनास्वीकारः, भाष्यस्थातश्शब्दः अनधिगततत्ववाची न सर्वात्मत्ववाची इत्यभिप्रायेण, पूर्वोक्तकल्पतरुपाठत्रयमध्ये द्वितीयपाठाभिप्रायेण च । अत इत्येतत् प्रतीकधारणमिति च मत्वा । अत इत्यस्य भाष्यस्थशब्दस्य सर्वात्मत्वपरामर्शित्वे, पूर्वोक्तकल्पतरुतृतीयपाठस्वीकारे च, अयमर्थः - अत इति भामतीप्रतीकधारणं, तस्य भाष्ये अत इति शब्देन उक्तादेव सर्वात्मत्वहेतोरित्यर्थः इत्यर्थकथनम्, इति योज्यम् ॥

१. अस्यां टीकायां 'न च पुरुषस्यास्ति विनाशः, यतोऽनन्तः विनाशः स्यादि' इति शुद्धः पाठः । 'इत्यत आहे'ति अशुद्धम् । पुरुषस्यापि विनाशाविनाशस्यानवधित्वप्रसङ्गः, तस्माद्विनाशः पुरुषस्य नास्तीत्याहेत्यर्थः ।

२. विक्रियाऽभावतद्धेत्वभावहेतुद्वयसमुच्चयार्थः अपि चेति शब्दः इति भावः ।

३. 'तस्मात् पुरुषा'दिति प्रतीकग्रहणे पुरुषादित्यादि श्रुतिवाक्य भाष्यम् । तस्यार्थमाह—कल्पितस्येति ' इति परिमलम् ।

P. 135-8 प्रतिषेधशास्त्रमपि कर्मविषयमेव। अत एव सौत्रं धर्मग्रहणमुल्लंघ्य कर्मशब्द[1] एव भाष्ये प्रयुक्त इति परिहरति—**अत आहेति** ।

'आम्नायस्ये'ति सूत्रविषये पूर्वं परिहारस्यानमिधानात् भाष्यटीक[2]योरपिचशब्दानुपपत्तिरित्यत आह—**शाबरेति** । अतदर्थानामित्यर्थशब्दस्य क्रियार्थत्वादित्येतदनुवादत्वादवशिष्टावर्थशब्दौ विकल्पविषयावित्याशयेनाह—**क्रियार्थत्वादिति** । **शाबरवाक्ये चोदना हीति** विधिवाक्यस्य निर्दिष्टत्वादवगमयितुमित्यत्र वाक्यार्थत्वेनेति [कार्यार्थत्वेनेति]पर्यवस्यति । ततश्च विधिवाक्यगतानां द्रव्यादिशब्दानां क्रियाप्रयोजनकत्वमुक्तं भवतीति परिहरति—**अत आहेति** ।

P. 136-4 कार्यसदसद्भावाभ्यां वैषम्यं शङ्कते—**कार्यान्वितेति** । प्रयोजनसदसद्भावावेव तन्त्रम् । न कार्यसदसद्भावौ इति परिहरति—**अत आहेति** । तदेव दर्शयति—**कार्यान्वितेति** । **उत्तरत्रेति** । **'उच्यते–अनवगतात्मे'ति**–भाष्यव्याख्यानावसरे इत्यर्थः । नन्वितरान्विते शक्त्यनभ्युपगमे कथमन्वितप्रतीतिः? वृत्त्यविषये शब्दस्य बोधकत्वायोगादित्यत आह—**अयमभि-**

P. 136-7 **सन्धिरिति** ।

**विशिष्टाभिधाने** । विशिष्टशक्त्यङ्गीकारे । किमानयनादिविशेषान्वयो लक्ष्यः? अर्थान्तरान्वयमात्रं वा । आद्यं निराकृत्य, द्वितीयं निराकरोति—

P. 136-10 **न चार्थान्तरेति** । **तस्य[3] चेति** । वाच्यस्येत्यर्थः । अन्वयानुपपत्तिरेव लक्षणा-

---

१. 'अथातो धर्मजिज्ञासा' इत्यत्र अकारप्रक्षेपेण अधर्मविचारोऽपि प्रतिज्ञात इत्यधर्मरूपं प्रतिषिध्यमानमपि भाष्ये कर्मशब्देन संगृहीतम्, तत्संग्रहार्थमेव धर्मशब्दमपहाय कर्मशब्दग्रहणमिति भावः। इति परिमले ॥

२ 'अपि चाम्नायस्ये'ति टीकावाक्ये 'न हि ते क्रियार्था इत्यत आह' इत्येतदशुद्धम् । 'क्रियार्था इत्याह' इति शोधनीयम् । तत्रैव टीकायां 'भूतार्थानां द्रव्यगुणकर्मणां' इति द्रव्यगुणकर्मशब्दानामिति व्याख्यातं कल्पतरौ, तत्र भूतार्थत्वेन व्यवह्रियमाणः कर्मशब्दः धात्वर्थरूपकर्मपरः । न हि ते क्रियार्था इत्यत्र क्रियाशब्देन अपूर्वमुच्यते । तत्रैव टीकायां 'द्रव्यगुणशब्दानां' इति कर्मशब्दस्योपलक्षणम् । 'भूतद्रव्यगुणाभिधानं' इति कर्माभिधानस्योपलक्षणम् ।

३. 'वाच्यस्य लक्ष्येण संबन्धो वाक्यार्थे चानन्वयो वाच्यः' इति कल्पतरौ पाठो दृश्यते । 'वाच्यस्य लक्ष्येण संबन्धः, तस्य च वाक्यार्थे अनन्वयो वाच्यः' इति कल्पत-

बीजमिति नायमस्ति नियमः । 'यष्टीः प्रवेशये'त्यादौ [यष्टिधरे] तात्पर्यानुपपत्त्यापि लक्षणादर्शनात् । अतः सामान्येन तात्पर्यविषयीभूतवाक्यार्थानुपपत्तिरेव लक्षणाबीजम् । सा च, वाच्यस्य तात्पर्याविषयत्वे, अन्वयायोग्यत्वे, अन्वयभावे च अविशिष्टेति नानुपपत्त्यभाव इत्याह—मुख्यार्थेति । P. 136-14

अन्वितलक्षणाया इति । तथा च शालिकनाथवचनं पदार्थलक्षणाभिप्रायमिति भावः । संबन्धाभावं परिहरति—न चेति । ननु यत्र संबन्धिनोः परस्परानुप्रवेशः, तन्तुपटादौ तत्रैव तादात्म्यसंबन्धः । प्रकृते च विशेष्यस्वरूपस्य, विशिष्टे अनुप्रवेशात् कथं तादात्म्यमित्यत आह—कस्यापीति । समुदायसमुदायिनोरिव, विशिष्टस्वरूपयोरपि संबन्धान्तरासंभवेन तादात्म्यविशेषस्यैव स्वीकारादिति भावः । P. 136-16

ननु समभिव्याहृतयावद्गुणान्वितप्रधानपदार्थ एक एव सर्वैरपि पदैः लक्षणीयः । न तु प्रत्येकं तत्तदर्थान्वितस्वस्वार्थः । वाक्यार्थभेदेन वाक्यभेदापत्तेः । तथा च नियमासिद्धिरिति शङ्कते—नन्विति । पक्षधर्मताबलात् P. 136-17

---

रुपाठमभिप्रेत्य तस्य चेति प्रतीकधारणमिति भाति । अन्यथा मूले प्रतीकादर्शनादसंगतं स्यात् ।

१. वाच्यस्य तात्पर्याविषयत्वं 'विषं भुङ्क्ष्व' इत्यादिलक्षणास्थले । वाच्यस्यान्वयायोग्यत्वं 'गङ्गायां घोषः' इत्यादिलक्षणास्थले । वाच्यस्य अन्वयभावः पदार्थैर्वाक्यार्थलक्षणायाम् । तत्र विशिष्टवाक्यार्थे पदार्थस्वरूपस्यान्तर्भावादन्वयोऽस्ति । अत्र 'अन्वयाभावे च' इत्येतत् अन्वयाभावात् 'अन्वयभावे च' इति शोधितम् ।

२. 'गुणादिकं गुण्यादिना भिन्नाभिन्नं, समानाधिकृतत्वात्' इति भेदसहिष्णुभेदरूपतादात्म्यसंबन्धस्थापकन्यायप्रयोगे अद्वैतसिद्धौ प्रदर्शिते, गुणादिकं-गुणः, क्रिया, जातिः, विशिष्टरूपम्, अवयवी, अंशी, इति, गुण्यादिना—गुणिना, क्रियावता, व्यक्त्या, केवलरूपेण, अवयवेन, अंशेन, इति च व्याचक्षाणवता लघुचन्द्रिकाकारेण अवयवावयविरूपतन्तुपटयोरिव समुदायसमुदायिरूपांशांशिनोः विशिष्टकेवलस्वरूपयोरपि तादात्म्यमङ्गीकृतमिति बोध्यम् । विशिष्टे स्वरूपं, समुदाये समुदायि चानुप्रविष्टम् । पटे तन्तुरननुप्रविष्टः, आरंभवादे पटस्य तन्तुभिन्नद्रव्यत्वात् तत्र तन्तोरननुप्रवेशात् । परिणामवादेऽपि तन्तोः पटात्मना परिणामात् पटे तन्तुरननुप्रविष्टः, न हि दुग्धपरिणामे दध्नि दुग्धमनुप्रविष्टम् । इति आभोगाशयः । ३. नियमः पदभेदेन अर्थभेदनियम इत्यर्थः ।

४. धूमस्य वह्निव्याप्तिबलात् धूमेन वह्निसामान्यमेव सिद्ध्येत्, नतु पर्वतीयवह्नेस्सिद्धिः, सा तु धूमस्य पर्वतवृत्तित्वरूपपक्षधर्मताबलात् । तद्वत् आकांक्षादिबलात् विशिष्ट-

साध्यविशेषसिद्धिवत् आकाङ्क्षादिबलात् विशिष्टवाक्यार्थसिद्धिः । परं तु शब्द-P. 136-18 बोध्यस्य वृत्तिविषयत्वनियमात् लक्षणाकल्पनमिति परिहरति—**तदुच्यत इति** । **प्रयोगस्त्विति** । उपपादिते कार्यान्वितशक्तिनिरासे इत्यर्थः । **नानयत्यन्त्रि-तेति** । परमतसिद्धस्यैव निषेधान्न प्रतियोग्यप्रसिद्धिदोष इति भावः ।

ननु तत्तदर्थान्तरविशिष्टानामपि भेदात् कथमेकवाक्यत्वमित्यतः तात्प-P. 137-4 र्यमाह—**गुणभूतेति** । प्रधानपदार्थभेदे तु वाक्यभेद एवेति भावः । अस्मि-न्नव्यवहितेऽर्थे संमतिरुच्यत इति भ्रमं वारयति—**पदानामिति** । पदानामेव विशिष्टार्थपरत्वे, शक्यपदार्थवैफल्यमित्यत आह—**पदार्थानां चेति** । (**उत्पा-द्यमात्रपर इति** । संस्कार्यादिसाधारण्येन कार्यमात्रपरो यथा स्यादित्येतदर्थमि-त्यर्थः) कार्यस्य सुखदुःखाभावरूपत्वाभावेन कथं प्रयोजनत्वमित्याशङ्क्य, गौणंP. 137-11 तदित्याह—**कार्यं हीति**[2] । **व्युत्पत्तिनियममिति**[3] । प्राथमिकव्युत्पत्तिनियम-मित्यर्थः ।

---

वाक्यार्थस्सिद्ध्यत्येव । अथापि शब्दबोध्यस्य वृत्तिविषयत्वनियमात् लक्षणाकल्पनमिति भावः ।

१. भव्यार्थत्वेनेति भाष्ये भव्यशब्दः भवनकर्तृवचनत्वात् उत्पाद्यमात्रपरः । मात्र-शब्दः कृत्स्नार्थकः, उत्पत्तिमद्वस्तुसामान्यपरो माभूदित्येवमर्थं आह टीकाकारः भव्यं कार्य-मिति । कार्यमिति पदेन अपूर्वमुच्यते । गुरुमतानुसारिणा एकदेशिना अपूर्वरूपकार्यार्थ-त्वेनैन भूतवस्तूपदेशस्य अङ्गीकारात् तन्मतानुवादे तथैव अर्थवर्णनस्योचितत्वात् । तथैव प्रकृते पूर्वापरग्रन्थपरामर्शे अर्थप्रतीतेः । एवं स्थिते आभोगे, मात्रपदं व्यावृत्त्यर्थकं मत्वा उत्पाद्यमात्रपरो भव्यशब्दो माभूत् उत्पाद्याप्यविकार्यसंस्कार्यसाधारणकृत्स्नकार्यपरो भवतु इत्येवमर्थं टीकाकारः भव्यं कार्यमित्याह । एवं च भाष्ये भव्यशब्दः सर्वकार्यपरः, इति व्याख्यातम् । तत्तु प्रामादिकम् । अत एव स ग्रन्थः कुण्डलितः इत्यवधेयं पण्डितैः ।

२. अत्र 'नहि भूतमुपदिश्यमानं क्रिया भवति' इति भाष्ये, 'न भूतार्थानां क्रियात्मत्वमित्यर्थः' इति भामत्यां च क्रियाशब्दः क्रियाकार्योभयपरः ।

३. 'व्युत्पत्तिनियममिति । प्रथमं कार्यान्वितप्रयोग एव शक्तिग्रह इति नियम-मभ्युपेत्येत्यर्थः ' इति परिमले ॥ अत्र परिमले उपरि 'न तु कार्यान्विते शक्ति-मभ्युपेत्येति । अभिसंधिमजानानस्य शङ्का—स्यादेतदिति । अभिसंधिमुद्घाटयति—एव-मिति । किंतूपाधिरिति । शब्दार्थावगतावुपायमात्रमित्यर्थः ।' इत्येतावती पंक्तिः त्रुटिता । श्रीरङ्गमुद्रितपुस्तके दृश्यते । आवश्यिका च सा, अन्यथा अनन्वयात् । तत्रापि, 'न तु' इति नास्ति । तद्योजितम् । 'अभ्युपेत्येति' इत्यनंतरं वाक्यविरामः कार्यः ।

**अक्रियात्वेऽपीति भाष्येण**, द्रव्यगुणादिभूतोपदेशः न विरुद्धः, तस्य क्रियार्थत्वेन कार्यान्वितव्युत्पत्त्यभङ्गादित्युक्तम्। तद्वैपरीत्यं प्रकृते दर्शयितुं—**एवं चेति टीकेत्याह—अङ्गीकृत इति**। कार्यान्विते भूत एव संगतिग्रहाद्वेदा- P. 137-12
न्तानां न ब्रह्मपरत्वमिति वदन् प्रष्टव्यः, किं कार्यान्वितत्वमुपलक्षणं? शक्त्युपाधिर्वा? विशेषणं वा? नाद्यः, भूते व्युत्पत्तिग्रहाविरोधादिति वक्तुं—**नहीत्यादि-टीका**। तदभिप्रायमाह—**भवत्विति**।

द्वितीयमाशङ्कते—**ततः किम्? इति**। तदादिशब्दशक्तिग्रहे बुद्धिस्थत्वादीनामुपाधित्वं युक्तम्। अबुद्धिस्थे क्वचिदप्यप्रयोगात्। कार्यान्वितत्वं तु नैवं, सिद्धार्थमात्रपर्यवसितानामपि वाक्यानां बहुलमुपलब्धेरिति परिहरति—**अत आहेति। मृत्वा शीर्त्वा वेति** मरणशीर्णताभ्यां क्लेशो लक्ष्यत इत्याशयेनाह—**क्लेशेनेति**[1]। P. 138-2

तृतीयमाशङ्कते—**स्यादेतदिति**। अन्यत्र गृहीतशक्तिकं पदं नान्यदभिदधातीत्यत्र दृष्टान्तमाह—**न हीति**। विशेषणत्वमसिद्धमिति परिहरति—**अत आहेति**। उपाधित्वमेव दृष्टान्तपूर्वकमाह—**तथाहीति**। **शब्दार्थावगत्युपायतामात्रमिति**। तथा च विवक्षादिवत् कार्यान्वयमपि परित्यज्य, लाघवात् पदार्थस्वरूप एव शक्तिं गृह्णातीति भावः। प्रथमं तथा शक्तिग्रहेऽपि पश्चात् त्याग एव लाघवादिना युक्त इत्याशयेनाह—**अत इति। कार्यान्वयं विहायापि यः प्रयोगभेदः, तस्मिन्** प्रसक्ते सति, शुद्ध एव संगतिरिति निश्चयात् भूतमपि पदशक्यमित्यर्थः।

**कथमपरथेति**। लोके प्रत्यक्षादि**प्रमाणान्तरगृहीतानयनादिकार्या-** P. 138-7
**न्वित एव संगतिग्रहेऽपि** न प्रमाणान्तरगृहीतत्वमपि तत्र शक्यम्। वैदिककार्ये अपूर्वे तदभावात्। अतः प्रमाणान्तरगृहीतत्ववत् कार्यान्वितत्वमपि शक्ति-

---

१. भामत्यां 'कथं चित्' इत्यस्य 'अध्याहारादिभिः' इति कल्पतरौ व्याख्या।

२. कार्यान्वितत्वं शक्त्युपाधिरिति द्वितीयविकल्पः इदानीमेव निरस्तः। कथमिदानीमुपाधित्वमिष्यते इति चेत्। उच्यते—कार्यान्वितत्वं शक्त्युपाधिरिति पूर्वं निरस्तम्। कार्यान्वितत्वोपहिते शक्तिरिति नेष्यत एव। प्रथमं कार्यान्वितप्रयोग एव शक्तिग्रह इति तु इष्यते। अभ्युपगमवादेन कथ्यते। शक्तिग्रहेपाधिः, न तु शक्त्युपाधिः, इतीष्यते। अत एवोक्तम्—शब्दार्थावगत्युपायतामात्रमिति। अतो न विरोधः॥

ग्रहोपायमात्रमित्यर्थः। इदमापाततः। प्राथमिकव्युत्पत्तिकाले कार्यस्यैव मानान्तरस्य नियमेनोपस्थित्यभावेन वैषम्यादिति ध्येयम्।

अन्यस्मिन्नुपहिते दृष्टे सत्यन्यदनुपहितं दृष्टमित्यस्य न कथञ्चिदपि प्रसङ्ग इत्यतो व्याचष्टे—तदेवेति। अस्ति किलेति। नासिकात्र्यंबके[1] ब्रह्मगिरिः प्रसिद्धः। कलनाय—संकलनाय। सकुसुमफलैश्चूतैः रुद्धो घर्मद्युतेः सूर्यस्य कराणां पातो यासु वनावलीष्वित्यर्थः। यत्र नदी भाति, यत्र च भान्ति वासराणि धवलनिशा इव स गिरिवरोऽस्तीत्यन्वयः। (P. 133-9)

ननु राज्ञः पुरुष इत्यादिपदानां कथं क्रियानिष्ठत्वाभावः? अस्तित्वक्रियाया उपलब्धेः। 'अस्तिर्भवन्तीपरो[2]ऽप्रयुज्यमानोऽपि गम्यते' इति न्यायेन लडन्तस्यास्तिधातोरुपस्थितत्वादित्यत उक्तं टीकायाम्—न हि पृच्छतेति। (P. 138-5) तात्पर्ये सत्येव तदादरो, नेतरथेति भावः। पर्यहार्षीदिति। वेदान्तानां सिद्धब्रह्मबोधकत्वं न संभवतीति शङ्कामिति शेषः। यदि नामेत्यादिभाष्यगतयोः शङ्कापरिहारयोरानर्थक्यं परिहर्तुं टीकायां चोदयतीति, परिहरतीति चोक्तम्। तदभिप्रायं दर्शयन्नवतारयति—एवं तावद्व्युत्पत्तीति। व्याख्याबीजं दर्शयन्नेव चशब्दं व्याचष्टे—समुच्चयेति[3]। शङ्काद्योतीति। संभावनार्थकत्वात् इति भावः।

सिद्धबोधिपददृष्टान्तेन वेदान्तानामपि सिद्धब्रह्मपरत्वमित्युक्तत्वात्, अपि चेत्यादिभाष्यटीकयोः (P. 138-14) आनर्थक्यमित्याशङ्क्य, भेदं दर्शयति—एवं तावदिति। निषेधेषु बोध्यतासंबन्धेन कृतिनिवृत्त्या, कार्यनिवृत्तिमुपपादयन्, कृतिर्हीत्यादिटीकायाः[4] प्रयोजनमाह—यत्र कृतिरित्यादिना। विषयश्चा-

---

१. 'नासिकात्र्यम्बकस्थाने निवसद्भिराचार्यैरयं ग्रन्थः कृत इति प्रसिद्धिः, अतस्तत्रत्यगिरिनदीवनवर्णनं कृतम्' इति परिमलम्।

२. भवन्तीपरः, लडन्त इत्यर्थः।

२. यद्यपि पूर्वोक्तक्रियानिर्वर्तनशक्तिमद्वस्तूपदेशसमुच्चयार्थकत्वं संभवतीति शङ्का भवति, तथापि, तस्य तथैवेति दृष्टान्तीकरणात्, दार्ष्टान्तिकेन अनवगतात्मवस्तूपदेशेन साकं समुच्चयो न संभवतीति आशयः प्रतिभाति।

४. कृतिर्हीति टीकातः पूर्वं, 'कृत्युपहितमर्यादम्' इत्यस्य विवरणं टीकायामेव 'कृत्या व्याप्तम्' इति।

स्येति टीकां व्याचष्टे—न घटवदिति। यथा घटादिशब्दार्थ एकैकस्मिन् P. 138-17
क्षणे परिसमाप्तस्तिष्ठति, नैवं कृतिविषयः। किन्तु, पचतीत्यादौ पाकवत्
पूर्वापरीभूत इत्यर्थः। किन्त्विति। कर्तृकारकादन्यस्य कर्मणः उत्पाद-
नायां, अत्र णिजर्थो न विवक्षितः। उत्पत्तावनुकूल इत्यर्थः।

ननु द्रव्यगुणयोः कृतिविषयत्वाभावे कथं तत्साध्यत्वमित्याशङ्क्य, परंपर-
येत्याह—तत्रापीति। भट्टमते द्रव्यगुणशब्दानां कथञ्चिदपि कार्यावमर्शा- P. 139-2
भावादाह—गुरुमतेनेति। पदस्मारितेति। पदैः स्मारिताः कार्यविशेषे-
णानन्विताः ये पदार्थाः तेषु निमित्तेषु—भावान्वयनिमित्तेषु। क्रियाया इव
द्रव्यादेरपि स्वत एव कार्यान्वयसंभवे सति, न क्रियान्वयापेक्षेति, कार्यानन्वयः
क्रियान्वये निमित्तमित्यनन्वितानां पदार्थानामपि निमित्तत्वमुक्तम्। तेषु पदार्थेषु,
निमित्ताधीना, भावान्वयावस्था नैमित्तिकीत्यर्थः। अविशेषेणेति। ततश्च P. 139-6
सर्वेषामपि शब्दानां अविशेषेण नियोगविषयसमर्पकत्वं संभवतीत्ययमेव नियोग-
गविषयसमर्पको नायमिति निर्धारणासंभवात् अनध्यवसाय इति पूर्वपक्ष इत्यर्थः।

---

१. 'पाको हि पूर्वापरीभूताधस्संतापनादितण्डुलविक्लित्तिफलपर्यन्तक्रियासंतान-
रूपो नैकक्रियात्मकः। अतो घटादिवत् प्रतिक्षणं पर्याप्तवृत्तिर्न भवतीत्यर्थः।' इति
परिमलम्।

२. 'ओदनोत्पत्त्यनुकूलपुरुषव्यापारस्य पाकस्यैवौदनोत्पादनात्वेन तस्य तदनु-
कूलत्वाभावात्। यद्वा प्रज्वलनादिरूपोऽन्यादिव्यापारोऽपि भवत्योदनोत्पादना, तदनु-
कूलश्च पुरुषव्यापार इति तदभिप्रायो णिचः प्रयोगः' इति परिमलम्।

३. गुरुमते अन्विताभिधानाङ्गीकारात् कथं कार्यान्विते गृहीतशक्तिकैः पदैः अन-
न्वितार्थानां स्मारणं कथ्यते? इति शङ्कानिरासायोक्तम्-कार्यविशेषेणेति। कार्यसामान्ये
गृहीतशक्तिकैः पदैः स्मारिताः तस्यामवस्थायां समभिव्याहृतकार्यविशेषानन्वितार्था विवक्षिता
इति न विरोध इति भावः, परिमलात् ज्ञायते। वस्तुतस्तु गुरुमते अन्विताभिधानाङ्गी-
कारेऽपि अन्वयांशे कुब्जशक्त्यङ्गीकारात् अन्वयस्य स्मारितत्वाभावात् अनन्वितार्थाना-
मेव स्मारितत्वाङ्गीकारात् शङ्केयं निरालंबनेव भाति। स्पष्टमिदं अद्वैतसिद्धौ अखण्डार्थवादे
स्मारितपदकृत्यविचारे। इति बोध्यम्।

४. अत्र कल्पतरौ 'अविशेषेण' इति पदेन द्रव्यगुणभावार्थवाचकशब्दानां सर्वे-
षामपि नियोगविषयसमर्पकत्वमित्यर्थः प्रतीयते, स च प्रतिपदाधिकरणपूर्वपक्षः, न भावा-
र्थाधिकरणपूर्वपक्षः, भावार्थाधिकरणमेव च कल्पतरावनुक्रान्तम् इति शङ्कानिरासाय अवि-
शेषपदार्थ उच्यते अनध्यवसाय इति। इहाविशेषेणेत्यनेन द्रव्यगुणभावार्थानां त्रयाणा-
मपि कार्यत्वमविशिष्टमिति अनध्यवसायेन पूर्वपक्षो विवक्षितः। अनध्यवसायपूर्वपक्ष-

किं द्रव्यगुणक्रियाणां साध्यतयोपस्थितौ विशेषाभावादनियमः? उत सत्यपि विशेषे नियोगान्वययोग्यताया अविशिष्टत्वादिति विकल्प्य, प्रथमं **भावशब्दो हीत्यादिना** निराकृत्य, द्वितीयमाशङ्क्य, निराकरोति—**किमत इति**। भावान्वितस्य च नियोगस्य निराकाङ्क्षतया, द्रव्याद्यन्वयप्रसक्तेरेवाभावादनध्यवसायकथा दूरोत्सारितेत्याह—**तल्लाभे चेति**। **भावो भावनेत्यादिभ्य इति**। भावयतेर्धातोः 'एरजि'त्यनेन सूत्रेण अच्प्रत्यये सति निष्पन्नो भावशब्दो भावनावाचीति भावः। **तेभ्योऽपूर्वमिति**। **सूत्रे क्रियाशब्दः** क्रियते अनेन फलमिति व्युत्पत्त्या अपूर्वपर इति भावः। विधेयस्यैव विधिविषयत्वं युक्तमिति शङ्कते—**नन्विति**। उत्पत्तिविधिविहितस्यापि धात्वर्थस्य सानुबन्धरूपेण पुनर्विधेयत्वान्न दोष इति परिहरति—**अत आहेति**।

P. 139-8, P. 140-2 (margin references)

P. 140-7 आशयमजानानः शङ्कते—**यदीति**। **द्रव्यदेवताख्येति**। 'ऐन्द्रवायवं गृह्णाती'त्यत्र 'सोममभिषुणोती'त्यादिसन्निहितवाक्यनिर्दिष्टसोमरसस्यैव गृह्णातिकर्मत्वेनान्वयादिति भावः। **इतरत्रेति**। सोमवाक्ये देवताया अप्रतीतेरित्यर्थः। द्रव्यविषये वैलक्षण्यादप्रत्यभिज्ञानमुपपाद्य, यागविषये प्राप्त्यभावादेव तदाह—

---

एव गुरुकृतायां बृहतीनाम्न्यां निबन्धनटीकायां शाबरभाष्यव्याख्यायां दर्शितः। शाबरभाष्यगतस्य 'अविशेषेण' इति पूर्वपक्षे हेतूपन्यासस्य च अनध्यवसाय एव तात्पर्यं वर्णितम्। शाबरभाष्यं हि एवम्—'यदा एकं, (अपूर्वं) तदा संदेहः—किं भावशब्देभ्यः? उत द्रव्यगुणशब्देभ्यः? इति। किं तावत् प्राप्तम्—अविशेषेणेति' इति। 'तत्रानध्यवसायमेव केचित् पूर्वपक्षमाहुः' इति शास्त्रदीपिकायामप्युक्तम्। 'अविशेषेणे'ति कल्पतरुस्थपदस्य अनध्यवसायार्थं विहाय सर्वेषामपि द्रव्यगुणभावार्थवाचकशब्दानां नियोगविषयसमर्पकत्वमित्येवार्थं स्वीकृत्य प्रतिपदाधिकरणशरीरमेव कल्पतरावनुक्रान्तमिति वक्तुं शक्यम्। न च कल्पतरौ उपरि भावार्थवाचकशब्द एव नियोगविषयसमर्पक इति निर्धार्यते। निर्धारणं च भावार्थाधिकरण एव, न प्रतिपदाधिकरणे, तत्र द्रव्यगुणभावार्थवाचकेषु कश्चिदेव नियोगविषयसमर्पक इत्यनिर्धारणेन परिसमाप्तेरिति वाच्यम्। गुरुकृतायां लघ्वीनाम्न्यां शाबरभाष्यव्याख्यायां विवरणटीकाभिधानायां प्रतिपदाधिकरणस्य कर्मैव नियोगविषयो न द्रव्यगुणौ इति निर्धारणान्तत्वात्। प्रतिपदाधिकरणस्य भावार्थसूत्रव्यतिरेकेण सूत्रान्तराभावात् तदेव सूत्रं कल्पतरौ लिखितमिति न कश्चिद्दोषः। एतत् सर्वं परिमलोक्तं आभोगे सूचितमिति तत् लिखितम्।

१. द्रव्यगुणयोर्विधिस्थले भावार्थस्याविधेयत्वात् तयोरेव साक्षात् नियोगान्वयः न भावार्थस्य इति शङ्काभावः।

नै च यजेतेति । ऐन्द्रवायवादिवाक्यावगतद्रव्यदेवतासंबन्धस्य निर्वाहके प्रत्यक्ष- P. 140-10 श्रुते यागे सति नानुमानं युक्तमित्यर्थः । कथं तर्हि देवतालाभ इत्यत आह—इतरत्रेति । त्यज्यमानहविरुद्देश्यत्वस्य देवतात्वस्य यागादन्यत्रासंभवात् ग्रहणेषु श्रुतं देवतात्वं यागद्वारैव निर्वोढव्यमिति, देवतानां यागान्वयोऽपि सिद्ध इति भावः ।

अरूपत्वादिति । व्यावृत्तस्वरूपरहितत्वादित्यर्थः । तदेवाह—नह्य- P. 141 1 त्रेति । अभ्युपगमो नैतेन विरुध्यत इत्यन्वयः । ननु टीकायां 'तद-नुवादेन तदनुबन्धीभूतद्रव्यादिपरो भवति' इत्युक्त्वा, तदनन्तरं, इति सर्वत्रापि भावार्थविषय एव विधिः' इत्युपसंहृतम् । तत्कथमित्याशङ्क्य, शाब्दबोधदशायां भावार्थविषय एव विधिः प्रतीयते । तात्पर्यपर्यवसानं तु द्रव्यादौ । तथा च वार्तिकम्—'सर्वत्रैव विशिष्टविधानोत्तरकालं किं प्राप्तं किम-प्राप्तमित्यन्वेषणायामप्राप्तमात्रविषयोपसंहारात् विधेर्भावनाधात्वर्थयोरनुवाद इत्यभि-धीयते । न त्वादित एव तावनूद्य, द्रव्यं गुणो वा विधीयेते' इत्यादि । ततश्च न विरोध इत्याह—यद्यपीत्यादिना । P. 141-9

विशिष्टं विदधीतेति । तात्पर्येणेति शेषः । द्रव्यादिपरतेति । ततश्च स्वरूपेण भावार्थस्य प्राप्तत्वेऽपि, द्रव्यगुणाद्युपरक्तवेषेण पुनर्विधानसंभवात्, कार्य-विषयत्वे न किञ्चिदपि बाधकमिति भावः । मीमांसकैकदेशिन इति । शब्द-बलवादिनिबन्धनकारानुयायिन इत्यर्थः । सिद्धस्य स्वातन्त्र्येण न विधेयत्वमित्ये-तदतिदेश्यमित्याह—तत्रापीति । नन्वित्यादिना संबन्धस्य विधेयत्वमाशङ्क्यते, P. 142-1

---

१. ऐन्द्रवायवादिवाक्यैर्देवताविशिष्टेषु ग्रहणेषु चोदितेषु यागं विना ग्रहणमात्रेण द्रव्यस्य देवतासंबन्धासिद्धेः यागापेक्षायां 'सोमेन यजेत' इत्येतत् सर्वनेतान् द्रव्यदेवता-संबन्धानुपपादयत यागान्तरानुमानं निरुन्ध्यादित्यर्थः । एवं च उत्पत्तिवाक्यविहितस्य लताद्रव्यस्य अभिषवादिवाक्यपर्यालोचनेन रसद्वारा साधनत्वमित्यवगतेः तस्य रसस्य इन्द्रवाय्वाद्युद्देश्यकग्रहणसंस्कारविधिसामर्थ्यात् उत्पत्तिवाक्यविधेये यागे देवता लभ्यते । तत्तद्देवतोद्देशेन गृहीतस्य रसस्य तत्तद्देवतायै त्यागाभावे ग्रहणे देवतोद्देशांशस्यादृष्टार्थत्वा-पत्तेः । अतो न तत्र देवताख्यरूपालाभदोषः । इति परिमले विशदीकृतमिदम् ।

२. 'तत्र पश्चात्तने व्यापारे मन्दबुद्धिप्रतिपत्त्यर्थं स्थूलेन न्यायेन कथ्यमाने शास्त्रकृता एव एता वचनव्यक्तय इति भ्रान्तिः' इति वार्तिकवाक्यशेषः ।

३. 'गुरुमते निबन्धनप्रस्थानानुवर्तिनः' इति परिमलम् ।

तदनुपपन्नम्। कार्यं हि विधिः तद्विषयतया अन्यस्य विधेयत्वम्, कृतितत्साध्यमध्यस्थश्च विषयः, न च संबन्धस्तथा, कृत्यविषयत्वादित्याशङ्क्य, संबन्धं भावये- P. 142-1 दित्येवं विधिसंभवान्न दोष इत्याशयमाह—**एकदेशीति**।

**ननु यथाश्रुतेति**। शब्दबलवादित्वादिति भावः। अशक्यत्वान्नैवमित्याह—**इत्याशङ्क्येति**। **भवत्यर्थस्य,** उत्पत्तेः। **विधिवैयर्थ्यमिति**। तन्निष्पत्तिफलकत्वाद्विधेरिति भावः। ततश्च, तस्य सिद्धस्य भवनं प्रत्यकर्तृत्वात्, तत्कर्तृकभवनफलकविधिवैयर्थ्यात्, भवत्यर्थो न विधेय इति **टीकार्थो** बोध्यः। **न खल्विति टीकायां** गगनमुद्दिश्य, तस्य भवनकर्तृत्वं प्रतिषिध्यत इति बोध्यम्। **नियोज्याभावादिति**। भवने भवितुरेव नियोज्यत्वादिति भावः।

P. 142-4 **प्रयोज्यशब्दस्य** प्रवर्त्यपरत्वं वारयति—**उत्पाद्य इति**। तत्र हेतुमाह—**तद्व्यापारो हीति**। भवनमपि प्रवर्त्यव्यापार एवास्त्वित्यत आह—**तस्य हीति**। अष्टाकपालो भवतीति सामानाधिकरण्यादुत्पाद्यस्य पुरोडाशस्यैव व्यापारं सामान्यरूपेणाख्यातोपात्तं भूधातुर्भवनात्मना **विशिनष्टीत्यर्थः**। **लक्षितेति**। भवनाक्षिप्तस्यापि भावकव्यापारस्य शाब्दत्वसिद्ध्यर्थं लक्षणाभ्युपगमात् **लक्षितत्वोक्तिः**। किं द्रव्यदेवतासंबन्धस्य साक्षादेव कृतियोग्यत्वात् कृतिविषयत्वम्? P. 142-7 उत परंपरया? नाद्य इत्याह—**तस्येति**। द्वितीयं शङ्कते—**नन्विति**। 'दध्ना जुहोती'त्यादौ दध्यादेः[1]कथंचिदपि साध्यत्वासंभवात् कृतिविषयत्वाभावेऽपि, द्रव्यदेवतासंबन्धस्य यागद्वारा कृतिसाध्यत्वात् तद्विषयत्वं नानुपपन्नम्। अत एव हस्तादिव्यापारद्वारा कृतिसाध्यस्यापि घटादेः तद्विषयत्वेन कर्मत्वमित्यर्थः।

अयोग्यत्वान्न घटादेः कृतिविषयत्वमिति परिहरति—**अत आहेति**। **टीकायां—नामार्थमिति** हेतुगर्भं विशेषणम्। आख्यातान्तेन पदेन पूर्वापरीभूततया भासमानस्यैव कृत्यन्वययोग्यत्वात्, अतथाभूतस्य नामार्थस्य तदयोगादित्यर्थः। **टीकायाम्—अपि त्विति**। घटं चिकीर्षन् कर्ता **दण्डादिकं हस्तादिना व्यापारयति**। तथा च हस्तादिव्यापारं पुरुषप्रयत्नो गोचरयतीत्यर्थः। P. 142-6 कृतेर्घटविषयकत्वं तत्कर्त्रनुभवविरुद्धं चेति वक्तुं—**तस्मादिति टीका**।

---

१. 'होमसाधनस्य दध्यादेः होममद्वारापि साध्यत्वासंभवात् मा भूद्विषयत्वम्' इति परिमले॥

यस्मात् घटं कुर्वन् दण्डादिकमेव व्यापारयति, **तस्मात् घटकृतिं व्यापारविषयामेव प्रतिपद्यते** इत्यर्थः ।

घटादेः कृतिविषयत्वाभावे कर्मत्वं न स्यादिति शङ्कते—**यदि दण्डादीति** । ननु कृतिप्रयोजनत्वेऽपि घटस्य कथं कर्मत्वं ? तदविषयत्वादित्यत आह—**घटविषयेति** । (घटार्थेति ।) न कृतिविषयत्वं कर्मत्वे तन्त्रं, सर्वत्र व्यापारस्यैव कृतिविषयत्वेन तण्डुलादेरपि अकर्मत्वापत्तेः । किन्तु कृतिसाध्यव्यापारजन्यफलशालित्वम् । ततश्च कृतिसाध्यघटार्थव्यापारजन्योत्पत्तिलक्षणफलशालित्वादुपपन्नमोदनादेरिव घटादेरपि कर्मत्वमिति भावः । P. 142-8

तर्हि विधेयालाभादाग्नेयवाक्यमनर्थकमिति शङ्कते—**यदीति** । आक्षिप्तो यागो विधेयो लभ्यते इति परिहरति—**अत आहेति** । यागभावना विधीयत इति उक्तमिति मत्वा शङ्कते—**नन्विति** । कृत्यविषयत्वात् संबन्धस्येव पुरुषार्थत्वाभावाद्यजेरप्यविधेयत्वे वाक्यवैयर्थ्यं तदवस्थमित्यर्थः । यागकरणिका[1] स्वर्गभावनैव विधेयेति परिहति—**अत आहेति** । अतश्शब्दस्य व्यवहितपरामर्शित्वमाह—**यत एवेति** । [2]**तावब्रूतामिति** । यद्यपि'उपांशुयाजमन्तरा यजती'ति वाक्य एव यागविधिरिति तदेवोदाहर्तव्यम् । तथापि तस्मिन् वाक्ये कालसंबन्धाश्रवणेन कालसंबन्धविधिलभ्यत्वाच्च अनुवादस्य तदेवोदाहृतम् । देवतालाभमेवाह—**आज्यभागक्रमे हीति** । वाक्यं दर्शयति—**एवं हीति** । **वृत्रघ्नपदवत्याविति** । वृत्रहननप्रकाशकपदवत्यावित्यर्थः । **वृधन्वत्पदवत्यौ**—वृद्धिप्रकाशकपदवत्यौ । P. 142-10 P. 142-18 P. 143-1

प्रकरणमित्येकत्वमविवक्षितमित्याशयेनाह—**प्रकृतानीति** । पौर्णमास्यामित्येतद्विद्वाक्यद्वयपरमित्याशयेनाह—**पौर्णमासीति** । आलंबनपदमध्याहरति—**आलंबनमिति** । **अविरोधमेवाह—क्रमावगतेति** । व्यवस्थामात्रविधौ न केवलं विधिलाघवम् । किन्तु शब्दयोर्मुख्यार्थत्वं चेत्याह—**काले हीति । द्वित्वोपपादनमिति** । ऐदंपर्येण त्रयाणां त्रयाणां समुदायभावसंपादकवाक्याभावे अधिकारवाक्ये यागानामनेकत्वात् बहुवचनं स्यात् । समुदायाभिप्रा- P. 143-6

---

१. यागभाव्यिका भावना इत्यर्थः ।

२. कल्पतरुकोशे ' उपांशुयाजमन्तरा यजति ' इति वाक्यं दृश्यते । आभोगानुसारेण ' तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन् ' इति वाक्यं लेखनीयम् । तदेव च श्रीरङ्गमुद्रितपुस्तके दृश्यते ।

P. 143-7 यत्वे वा एकवचनं स्यान्न द्विवचनमित्यर्थः । **तत्रापीति** । न केवलं विद्वद्वाक्ये आग्नेयादिवाक्यविहितकर्मानुवादके, अपि तु तेषां फलसंबन्धबोधके अधिकारविधावपीत्यर्थः ।

प्रकृतमुपसंहरतीत्याह—**कृतिनिर्वर्त्यस्येति** । इयता प्रबन्धेन **नियोगकृतिभावार्थानां** व्याप्यव्यापकभावसाधनस्य किं प्रयोजनमित्याशङ्क्य, 'न हन्यादि'त्यादौ किं भावार्थो नेष्यते? उतेष्यते? इति विकल्प्य, प्रथमं निराकर्तुं **तथा चेति टीके**त्याह—**एवमिति** । द्वितीयं निराकर्तुं **एवं चेति टीके**-

P. 143-10 त्याह—**निषेधेष्विति** । पर्युदासाश्रयणे **टीकायां दोषद्वयमुक्तम्** । स्वयं तात्पर्यग्राहकाभावादपि न पर्युदास इति, **पर्युदासवृत्त्येति** पदसूचितं दोषान्तरमाह—**नामेति** । 'अब्राह्मणमानये'त्यादौ **नामयोगात्**[2], 'नेक्षेते'त्यादावुपक्रमानुरोधेन **धात्वर्थयोगाच्च नञः पर्युदासकता** । पर्युदासस्तदन्यत्तद्विरोधि वा, **तदर्थकतेत्यर्थः**। **प्रतिषेधः** संसर्गाभावः। **अहननेत्यादिटीकोक्तं** दोषद्वयं प्रकट-

P. 144-1 यति—**तत्रेति** ।

'तस्य व्रत'मित्युपक्रमस्य प्रतिषेधविरोधित्वं प्रकटयति—**तत्र हीति** । उपसंहारबलादुपक्रमस्यैव लक्षणास्त्वित्यत आह—**एकस्मिंश्चेति** । **आख्यातयोगिनेति** । स्वरसत[3] इत्यर्थः । संकल्पलक्षणायां हेतुमाह—**तथाचेति** । **सर्वक्रियाप्रत्यासन्न इति** । सर्वस्या अपि क्रियायाः संकल्पपूर्वकत्वादिति भावः । स च संकल्पो नेक्षणविषयकः । किं त्वनीक्षणविषयक इत्याह—**ईक्ष इति त्विति** ।

P. 144-6 नञ्विरोधादिति भावः । **तत इति** । 'नेक्षे' इत्येवंरूपेत्यर्थः[4] । **संकोचक**-

---

१. अत्र कल्पतरौ 'उत्पत्त्यधिकारयोरविसंवादार्थ'मित्यस्यार्थः परिमले उक्तः—'अविसंवादार्थमिति । उत्पत्तिवाक्येन यस्येष्टसामान्ये करणत्वं बोधितं, तस्यैबाधिकारवाक्येनाकाङ्क्षितेष्टविशेषकरणत्वबोधनायामविसंवादो भवति । उत्पत्तिवाक्येन यत्र फले द्रव्यदेवतासंवन्धस्य करणत्वं बोधितं, तत्रैव फले तं परित्यज्य तदाक्षिप्तस्य यागस्य करणत्वबोधने तु तयोर्विसंवादः स्यादित्यर्थः ।

२. 'नामयोगे पर्युदासकतायां तदन्यतद्विरोध्यन्यतररूपायां अब्राह्मणाधर्मावुदाहरणम्' इति परिमलम् ।

३. 'प्रधानभूताख्यातान्वयिना नञा प्रतीतोऽप्याख्यातार्थस्य कर्तव्यत्वस्याभावोऽननुष्ठेयत्वात् त्यज्यत इत्यर्थः' इति परिमले ॥

४, 'नेक्षे' इत्येवंरूपश्च संकल्पः नञीक्षतिधातुभ्यां लक्ष्यते इति बोध्यम् ।

मिति। प्रकृत्यनुरक्तप्रत्ययान्वयस्वरसस्य नञः प्रधानप्रत्ययप्रहाणेन प्रकृतिमात्रान्वयसंकोचकमित्यर्थः।

**विमतमिति**। हननाभावादिकमित्यर्थः[1]। व्याख्यानबीजमाह—**विभागभाष्य इति**। अप्रयोजकत्वमाशङ्क्याह—**अकार्यार्थानां हीति**। **टीकायामेतदेवेति**। ततः किमित्याशङ्क्य, तत्फलकथनेनैतदेव विभजत इत्यर्थः। नन्वाक्षेपः प्रवृत्तोऽप्यलाभान्निवर्तते। अतश्च न नियोगोऽपि स्थितिं लभत इति शङ्कते—**विधिश्रुतीति**[2]। अलाभोऽसिद्ध इति परिहरति—**अत आहेति**। **हननविरोधी यत्न इति**। व्यापारविशेष इत्यर्थः[3]। **न चेत्यादिभाष्यस्य** शङ्कापरत्वाभावादित्याहेति टीकानुपपत्तिरित्याशङ्क्य, हेत्वर्थकोऽयमितिशब्द[4] इत्याशयेनाह—**अस्यां शङ्कायामिति**।

P. 145-2

P. 14 -7

भाष्यपाठविरोधमाशङ्क्याह—**व्यवहितेति**। नञ इत्यस्य द्विः पाठभ्रमं वारयति—**भाष्य इति**। व्यवहितान्वयेन[5] भाष्यव्याख्याने बीजमाह—**स्वभावेति**। हेत्वकथनात् न्यूनता स्यादिति भावः। ननु **नञश्चेत्युत्तरभाष्यं** हेतुपरमस्तु। नेत्याह—**नञश्चेति**। **योजयतीति**। ततश्च, **स्वभावप्राप्तो** रागप्राप्तो यो **हन्त्यर्थः** आख्यातान्तहन्तिधात्वर्थः हननकर्तव्यत्वं, **तदनुरागेण**

P. 145-11

---

१. आदिपदेन हननकर्तव्यत्वाभावः परिगृह्यते। न हन्यादित्यत्र नञः धातुना अन्वये हननाभावलाभः। प्रत्ययेनान्वये हननकर्तव्यत्वाभावलाभः। धात्वन्वयो गुरुमतेन, प्रत्ययान्वयः सिद्धान्तिमतेन। उभयमपि न नियोगावच्छेदकं अभावत्वात्। प्रत्ययार्थाभावपक्षे प्रत्ययेन नियोगाप्रतीत्या तस्य नियोगावच्छेदकत्वं नास्तीत्यपि बोध्यम्।

२. अत्र कल्पतरौ 'न तावत् हननादिः, तस्य रागप्राप्तेः' इत्युक्तम्। 'न हन्तव्यः' इत्यत्र विधिश्रुतिसिद्धनियोगस्य हननविषयकत्वे नञः अन्वयानुपपत्तिरित्यपि बोध्यम्।

३. 'प्रयोजनलाभे च लक्षणा न दोषाय' इति कल्पतरौ प्रयोजनं हननाद्यौदासीन्यं बोध्यम्।

४. 'इत्यत आह' इति वक्तव्ये 'इत्याह' इत्युक्तमिति भावः। क्वचित् 'इत्याह' इति वक्तव्ये 'इत्यत आह' इत्यपि उक्तम्। इत्यतः, इत्यभिप्रायेण, इत्यर्थकरणे तदा। एवं ग्रन्थशैली तत्र तत्र वर्तते। लेखकप्रमादादपि तथा स्यात्।

५. 'स्वभावप्राप्तहन्त्यर्थानुरागेण' इत्यस्य व्यवहितान्वयं हेतुपरत्वं चानभ्युपगम्य, अनुवादस्थमेव तदाश्रित्य, कृत्स्नभाष्यस्य प्रतिज्ञापरत्वमङ्गीकृत्य, 'नञश्चे'ति भाष्यं हेतुपरमाश्रित्य, भाष्ययोजनाप्रकारभेदाः पञ्चपादिकादिटीकान्तरेषु दृश्यमानास्तत एवावगन्तव्याः॥

P. 145.11 तत्संबन्धेनेति **भाष्यार्थ** इति भावः। **किमिह विधेयमिति**। लिङ्प्रत्ययाभिहितस्य कार्यस्य को विषय इत्यर्थः।

**नञर्थो वेति**। हननाभावरूप इत्यर्थः। न तु कर्तव्यत्वाभावरूपः।[1] तस्य नियोगविषयत्वशङ्कानास्पदत्वात्। नियोगवाचकेनाख्यातेन कर्तव्यत्वानभिधानेन तत्र नञर्थान्वयायोगात्। '**विधिविभक्तिश्रवणात् कार्यं तावदत्र प्रतीयते। तच्च न भावार्थमन्तरेणे**'ति टीकानुरोधेन विधिविभक्तिविनिर्मुक्तस्यैव विषयसमर्पकत्ववर्णनौचित्याच्च। न च नञो धातुयोगे पर्युदासापत्त्या, न च नञः प्रसज्यप्रतिषेधो विधेय इति टीकानुपपत्तिः। नामधातुयोगे सत्येव पर्युदास

---

१. हननकर्तव्यत्वाभावस्य कृतिविषयत्वाभावेन नियोगरूपकार्यविषयत्वशङ्कानास्पदत्वमिति भावः, आख्यातस्य नियोगवाचकत्वेन कर्तव्यत्वावाचकत्वात् नञा कर्तव्यत्वाभावबोध एव प्रकृते नास्ति, कथं तस्य विधेयत्वशङ्का भवितुमर्हति। आख्यातस्य कर्तव्यत्वार्थकत्वेन तदभावस्य नञा बोधनेऽपि नियोगवाचकाभावात् कथं कर्तव्यत्वाभावस्य नियोगविषयत्वशङ्का भवितुमर्हति। इत्यादि बोध्यम्।

२. टीकायां 'नञः प्रसज्यप्रतिषेधः' इत्यस्य, नञर्थभूतप्रसज्यप्रतिषेध इत्यर्थः। संबन्धसामान्यार्थकषष्ठ्याः प्रतिपाद्यत्वरूपसंबन्धविशेषे पर्यवसानात्॥ अत्र परिमले— 'नचात्र नञः प्रसज्यप्रतिषेधो विधेयः, तस्याप्यौदासीन्यरूपस्य सिद्धतया प्राप्तत्वात्' इति टीकायां निषिध्यमानः नञर्थविधिविकल्पः आख्यातार्थाभावविषय एव, न तु धात्वर्थाभावविषयः। धात्वर्थे नञर्थान्वयस्य 'गुणानां चे'ति न्यायविरुद्धत्वात्, परिपूर्णं हि आख्यातान्तपदं नञा संबध्यते, नतु पदैकदेशभूतं धातुमात्रम्, व्युत्पत्तिविरोधात्। नञः धात्वन्वयाङ्गीकारेपि न धात्वर्थाभावबोधस्संभवति नामार्थान्वयिन इव धात्वर्थान्वयिनोऽपि नञः पर्युदासार्थत्वनियमेन प्रतिषेधार्थत्वासंभवात्। यथाहुः—'नामधात्वर्थयोगे तु नैव नञ् प्रतिषेधकः। वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिनौ॥' इति। 'नामधात्वर्थयोर्योगेहि नञः पर्युदासकता' इति कल्पतरावप्युक्तम्। तस्मात् टीका आख्यातार्थकर्तव्यत्वाभावविधिनिषेधपरा, नतु धात्वर्थहननाभावविधिनिषेधपरा। टीकायां-तस्य-हननकर्तव्यत्वाभावस्यापुरुषतंन्त्रस्य-सिद्धतया-स्वतस्सिद्धतया प्राप्तत्वात् न विधिस्संभवति इत्यर्थः। औदासीन्यरूपस्येत्येतत् कर्तव्यत्वाभावस्याभावरूपत्वाभिप्रायम्। यद्वा—यथा पुरुषस्यानीप्सितेष्वौदासीन्यं स्वतस्सिद्धम्, एवमयमपि कर्तव्यत्वाभावरूपो नञर्थः स्वतस्सिद्ध इत्यौदासीन्यसादृश्याभिप्रायम्। इत्युक्तम्। ननु हननकर्तव्यत्वाभावस्य, विधिविषयत्वशङ्का न प्रसरति, विधेः कर्तव्यत्वार्थकत्वस्य, तत्र नञ्संबन्धेन कर्तव्यत्वाभावबोधस्य चाभ्युपगमे विध्यर्थकपदाभावेन कथं कर्तव्यत्वाभावविधिशङ्का संभवेत् इति चेन्न, अत एव शङ्कायाः अलग्नत्वादेव कल्पतरौ शाखाचङ्क्रमनिरासार्थमित्युक्तम्। अन्यथा हननविधिपक्षस्य कथं खण्डनं भामत्याम्। नञः श्रूयमाणत्वेन तदर्थपरित्यागेन हननविधिशङ्काया अप्यप्रसरात्।

इति नियमः, न तु तस्मिन् सति पर्युदास एवेति। अप्रयोजकत्वात्। अत एव **गुरुमते** 'हननाभावविषयकं कार्य'मित्येव वाक्यार्थः। न च हननाभावस्य सिद्धस्यापि परिपाल्यत्वेन साध्यत्वसंभवात् **सिद्धतया प्राप्तत्वादिति** हेत्वनुपपत्तिरिति वाच्यम्। कथं चित्साध्यत्वसंभवेऽपि, साक्षात् कृतिविषयत्वासंभवेन द्रव्यदेवतासंबन्धवन्नियोगविषयत्वं न संभवतीति तदभिप्रायात्।

न च तत एव निराकृतत्वात् पुनर्निराकरणवैफल्यम्। प्रकृतोपयोगितया हननपक्षवदस्यापि निराकरणसंभवात्। अत एव, प्रधाने विधारकप्रयत्नविधिपक्षे दूषिते, हननादिपक्षमपि कदाचिदवलंबेतेत्यनास्थया तन्निरास इति स्फोरयितुं, **शाखाचङ्क्रमणनिरासार्थ**मित्युक्तमिति ध्येयम्। ननु श्रुतकार्यानुपपत्त्या लक्षणापि सोढव्येत्यत उक्तं **टीकायाम्—विधिविभक्तेश्चेति**। विधिबोधकत्वाभावात् कार्यप्रतीतिरसिद्धेति भावः। ततश्च कर्तव्यत्वस्यैव विध्यर्थत्वात् तदभाव एव निषेधवाक्यार्थः। न तु हननाभावविषयकं कार्यमित्यादिरूपेण हननाद्यभावो नञर्थः कार्यविषयतया समर्प्यत इत्याह—**टीकायाम्—तस्मादिति**। P. 145-11

अत्र शङ्कते—**ननु नञर्थश्चेदिति**। ततश्च हननाभावकर्तव्यत्वानुभवविरोधान्न हननकर्तव्यत्वाभावो वाक्यार्थ इति भावः। न्यायविरोधादनुभवो भ्रम इत्याशयेनाह—**रागप्राप्तेति। टीकायाम्—तदिदमाहेति**। भाष्यकारः। ननु नञः साख्यातहन्त्यर्थानुरागे सति हननाभावस्य कथं कार्यत्वप्रतीतिरित्याशङ्क्य, **नञश्चेत्यादिभाष्येण** स्वसंबन्धिन आख्यातार्थकर्तव्यत्वस्याभावं बोधयतीति सिद्धवन्निर्देशेन कार्यत्वप्रतीतेर्भ्रमत्वमाहेत्यर्थः। P. 146-1

---

१. विधारकप्रयत्नविधिपक्षे स्थिरशङ्कायोग्ये लक्षणाप्रसङ्गेन दूषिते, तमपहाय तर्हि 'न हन्या'दित्यत्र श्रुतधातुनञर्थमध्य एव किंचिद्विधेयमस्त्विति उत्तानधीः शङ्केत, तन्माभूदित्येतदर्थं तदपि पक्षद्वयं विकल्पमुखेन उद्भाव्य दूषितमित्यर्थः' इति परिमलम्।

२. कोऽत्र न्यायविरोध इति चेत् उच्यते—'हन्यात् इत्यादिपदं परिपूर्णं हि नञा संबध्यते। न पदैकदेशभूतं धातुमात्रं, अतो धात्वर्थविशिष्टस्य प्रत्ययार्थस्याभावो नञा लभ्यते, नोपसर्जनस्य धात्वर्थस्याभावः। एवं च नञर्थस्य प्रधानसंबन्धोऽपि भवति। गुणसंबन्धो हि 'गुणानां च परार्थत्वादसंबन्धस्समत्वात् स्यात्' इति न्यायविरुद्धः।' इति परिमलोक्तः हननाभावकर्तव्यत्वबोधे न्यायविरोध एव आभोगकारेण परिमलप्रतिपादितार्थसंग्राहकेण न्यायविरोधादिति उच्यते इति ज्ञायते।

३. भाष्ये 'स्वभावप्राप्तहन्त्यर्थानुरागेण नञः' इति वाक्येन नञः साख्यातहन्त्यर्थानुरागेण हननकर्तव्यत्वाभाव एव निषेधवाक्यार्थः, न तु हननाभावविषयकं कार्यमिति

किं कर्तव्यत्वाभावज्ञानान्निवृत्तिः ? उत प्रवर्तकज्ञानाभावात् ? नाद्यः। P. 146-2 तस्य तद्धेतुत्वे मानाभावादित्याशयेनाह—**कर्तव्यत्वाभावेति**। नान्त्यः—इष्टसाधनतालिङ्गककर्तव्यत्वानुमितिसंभवादित्याह—**सत्यपीति**। **प्रागभाव-** P. 146-5 **तयेति**। प्रसक्तक्रियाप्रागभावतयेत्यर्थः। **अत इति**। बलवदनिष्टसाधनताज्ञानादित्यर्थः। **टीकायां** राजाज्ञादिपूर्वकयोरिच्छाद्वेषाहेतुकयोः व्यभिचारवारणाय स्वतन्त्रेति हेतुविशेषणम्। प्रवृत्तिनिवृत्त्योरिच्छाद्वेषहेतुकत्वं प्रसाध्य, P. 146-8 तयोरिष्टानिष्टसाधनताज्ञानहेतुकत्वं साधयति—**टीकायां**—**कर्तव्यतैकार्थेति**।

---

वाक्यार्थ इति पूर्वमुक्तम्। तदुपरि, एवं सति कथं अस्माद्वाक्यात् हननाभावः कार्यं इति प्रतीतिर्भवतीति शङ्का। तत्परिहाराय 'नञश्चैष स्वभावः यत् स्वसंबन्धिनोऽभावं बोधयतीति' इति भाष्यम्। अनेन भाष्येण कथं परिहारो लब्ध इति चेत्—उच्यते—नञ् स्वसंबन्ध्यभावबोधकः। स च साख्यातहन्त्यर्थेन संबद्ध एव सन् न्यायतः तदभावं बोधयति सिद्धान्ते। केचन धातुना नञ् संबध्नाति इति भ्राम्यन्ति, तद्रीत्या स्वसंबन्धिधात्वर्थाभावं बोधयति, तदनन्तरं विधिसंबन्धेन हननाभावः कार्यं इति बोधः तद्वाक्याद्भवतीति ते भ्राम्यन्ति, युक्तश्च स भ्रमः, नञः स्वसंबन्ध्यभावबोधकत्वस्वभावात्। इत्यभिप्रायवता तेन भाष्यवाक्येन सा शङ्का परिह्रियते। परिमलेऽपि अयमर्थो वर्णितः 'अभावश्च स्वविरोधिभावे'त्यादिटीकाग्रन्थावतारिकातत्तात्पर्यवर्णनमुखेन—'ननु हननाभावो न विधेयश्चेत् कथं 'न हन्यात्' इत्यत्र हननाभावः कर्तव्यतयोच्यत इति प्रतिभाति, इति 'अभावश्चे'त्यादिटीकाग्रन्थः अवतारयितुं युक्तः। परिहाराभिप्रायश्च इत्थं वर्णनीयः—न हन्यादित्यव्यवधानात् नञो धात्वर्थान्वयेन हननाभावोऽर्थ इति कश्चन भ्रमः। ततः प्रतियोगिच्छायानुपातिनि तस्मिन् कर्तव्यतयोच्यत इति कश्चन भ्रमः। एवं भ्रमद्वयावलंबन एव केषांचित् हननाभावस्य विधेयत्वेन व्यवहार इति।' इति। अत्र परिमले 'अभावश्च' इति टीकायाः अवतारिकादानपूर्वकं अभिप्रायाविष्करणेन 'तदिदमाह' इति टीकया स्वोक्तार्थप्रदर्शकतया कथितं 'नञश्चैष स्वभाव' इति भाष्यमपि सावतारिकं प्रदर्शिताभिप्रायं अभूदिति मन्तव्यम्। अभावश्चेति टीकायाः कल्पतरुकृता दत्ता—'ननु नञर्थश्चेत् न विधीयते तर्हि हननं नास्तीत्यादाविव सिद्धतया प्रतीयेत इत्याशङ्क्याह—अभावश्चेति।' इत्यवतारिका, 'रागप्राप्तकर्तव्यताकहननलक्षणप्रतियोगिगतं साध्यत्वमभावे समारोप्यत इत्यर्थः' इति परिहाराभिप्रायकथनं चोभयमयुक्तं, अत्र हि स्वमते हननाभावमर्थमङ्गीकृत्य, तथात्वे 'न हन्यात्' इत्यस्य हननं नास्तीत्यतो विशेषो न स्यादिति शङ्का, 'न हन्या' दित्यत्र प्रतियोगिनो लिङा कर्तव्यतया प्रतीतेः तदभावेऽपि प्रतियोगिच्छायानुपातिनि कर्तव्यताभ्रमो विशेष इति परिहाराभिप्रायश्च, भाति। तत् न समीचीनम्। सिद्धान्ते हननाभावार्थस्यानभ्युपगमात्। अतः कल्पतरुग्रन्थः प्रौढिवादेन प्रवृत्तः, पूर्वोक्त एव टीकाभिप्राय इत्युक्तं परिमल एव।

**इन्दूद्येति।** यद्यप्यर्थान्तरत्वावारकत्वात् साध्ये विशेषणं व्यर्थमेव, तथापि 'इत्यानुपूर्व्यात्सिद्धः कार्यकारणभाव' इत्युत्तरटीकालोचनायां प्रवृत्तिनिवृत्तिहेतुज्ञानस्यैव उद्देश्यत्वात्, तत्सिद्धयर्थं विशेषणमिति भावः। **आशङ्क्याहेति।** फलेच्छाद्वेषयोश्च न प्रवृत्तिनिवृत्तिहेतुत्वम्, मानाभावादिति भावः। P. 146 7

**शब्दादीनामिति** (१) शब्दो-लिङादिः। (२) तद्व्यापारः तन्निष्ठः शब्दभावनाख्यः। (३)पुरुषाशयः आप्ताभिप्रायः। (४) त्रैकाल्यं त्रयः कालाः, तदवच्छिन्नत्वेनाप्रतीता अर्थभावना त्रैकाल्यानवच्छिन्नभावना। (५) अपूर्वं नियोगः। तदन्तानां ये प्रत्ययाः परीक्षकैः प्रवर्तकत्वेन, नञ्समभिव्याहारे निवर्तकत्वेन च स्वीकृताः तत्पूर्वावित्यर्थः। **प्रत्यक्षव्यवहार इति।** तत्र स्वेच्छाधीनत्वात् प्रवृत्तेरिति भावः। न च पराधीनप्रवृत्तौ तेषां हेतुत्वम्, आवश्यकेष्टसाधनताज्ञानादेव सर्वत्र प्रवृत्त्युपपत्तौ कारणान्तराकल्पनात्। [३]प्रेरणादेरपीष्टसाधनताज्ञान एवान्यथासिद्धिरिति भावः। P. 147-1

**इत्यानुपूर्व्यादिति** टीकाया इष्टानिष्टेत्युत्तरटीकायाश्च पौनरुक्त्यं परिहर्तुं अर्थभेदं दर्शयति–**इत्यानुपूर्व्यादिति।** तथा च टीकायां कार्यकारणभावशब्दः तद्ग्राहकान्वयव्यतिरेकपर इति भावः। किमुभयविशिष्टस्य धात्वर्थस्य लिङ्वाच्यत्वमाशङ्क्यते, उत नियोगस्य। नाद्यः, धातुनैव तल्लाभादित्याह—**अत आहेति।** नान्त्यः। क्षणिकस्य कालान्तरभाविफलजनकत्वाय कल्प्यमानस्य P. 147-5

---

१. विधिनिषेधात्मकः शब्द एव प्रवर्तको निवर्तकश्च इति प्रथमः पक्षः 'शब्दात्मिका भावना' इति यथाश्रुतवार्तिकग्रन्थानुसारी। शब्दनिष्ठः प्रवर्तनानिवर्तनात्मकः शब्दबोधितः शब्दभावना शब्दव्यापारः इति भाट्टपक्षः द्वितीयः। ईश्वरात्मकपुरुषाशयः इति उदयनादितार्किकपक्षः तृतीयः। शब्दभावनानङ्गीकर्तृमीमांसकैकदेशिपक्षः त्रैकाल्यानवच्छिन्नरूपेण बोधिता अर्थभावना इति चतुर्थः। अपूर्वरूपो नियोग इति प्राभाकरपक्षः पंचमः॥

२. प्रवृत्तेरिति पदं निवृत्तेरप्युपलक्षणम्।

३. विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम्, निमन्त्रणं नियोगकरणं आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम्। आमन्त्रणं कामचारानुज्ञा। अधीष्टः सत्कारपूर्वको व्यापारः सत्कृत्य प्रवर्तनं, अधीष्ट एवाध्येषणमित्युच्यते। इति प्रवर्तनाभेदाश्चत्वारः प्रेरणादेरित्यनेन ग्राह्याः॥

P. 147-5 व्यापारस्य लोकसिद्धत्वेन नियोगस्य लिङ्वाच्यत्वाकल्पनादित्याह—¹व्यापार इति। क्षणिकस्य कालान्तरभाविफलजनकत्वं व्यापारद्वारेत्यस्यार्थस्य पूर्वानुभवस्थले सिद्धत्वादिति भावः।

ननु निषेधस्थले निवृत्तिसिद्ध्यर्थं ²अनर्थहेतुत्वं बोध्यत इत्ययुक्तम्। तद्बोधे सत्यपि सान्दृष्टिकेष्टसाधनत्वज्ञानात् प्रवृत्तिप्रसङ्गादित्याशङ्क्य, बलवदनिष्टाननुब-

---

१. अत्र परिमले—'व्यापारो लोकसिद्ध इति। साध्यत्वेष्टसाधनत्वयोर्धर्मी व्यापारो ह्यत्र यागादिकः, स च यज्यादिधात्वर्थत्वेन लोकप्रसिद्ध इति यज्यादिधातुसमभिव्याहारादेव तयोर्धर्मिसंबन्धसिद्धेः न धर्म्यपि लिङादिशब्दार्थः। इत्यर्थः। यद्वा, कृतिसाध्यत्वेष्टसाधनत्वविशिष्टे यागस्वर्गयोर्व्यापारेऽपूर्वे शक्तिरिति शङ्का। व्यवहितयोः कार्यकारणभावे द्वारापेक्षाया लोकसिद्धत्वेन आक्षेपादेव तत्सिद्धेः नापूर्वरूपो व्यापारः शब्दार्थः। अतो न तत्र शाब्दयोः कृतिसाध्यत्वेष्टसाधनत्वयोः अन्वयः, किं तु यज्यादिधात्वर्थ एवान्वय इति भावः' इत्युक्तम्। तदुभयमपि आभोगे 'अत आह' इति 'व्यापारः' इति चकल्पतरुवाक्यार्थत्वेन संगृहीतम्॥

२. अत्र टीकायां—'नञ्समभिव्याहृता लिङादिविभक्तिः अन्यतोऽप्राप्तं अनयोः (हननपानयोः) अनर्थहेतुभावमात्रमवगमयति'। इत्यत्र न तु दृश्यमानमिष्टसाधनत्वं नास्तीत्यपि बोधयतीति मात्रपदार्थः। तदुपपादनाय 'प्रत्यक्षं हि तयोरिष्टसाधनभावोऽवगम्यते। अन्यथा रागविषयत्वायोगात्' इति टीका। 'तस्माद्रागादिप्राप्तकर्तव्यत्वानुवादेनानर्थसाधनताप्रज्ञापनपरं 'न हन्यात्' 'न पिबेत्' इत्यादि वाक्यम्' इति टीकायां रागादिप्राप्तकर्तव्यत्वानुवादेन, इत्यस्य च तदनुपमर्देनेत्यर्थः। विधिविभक्त्या तदनुवादेऽपि न तस्य निषेधः। बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपविशिष्टनिषेधस्य विशेषणनिषेधे पर्यवसानादित्यादि बोध्यम्।

अत्रेदमवधेयम्—'न हन्यात्' इत्यत्र नञः आख्यातार्थान्वयेन आख्यातार्थाभावः निषेधवाक्यार्थ इत्युक्तं भाष्ये। आख्यातस्य च कर्तव्यत्वविशिष्टेष्टसाधनत्वमर्थः। तथा च हननगतकर्तव्यत्वविशिष्टेष्टसाधनत्वाभावः निषेधवाक्यार्थः, तद्बोधस्य निवर्तकत्वमिति सिद्धम्। तदुपरि 'कर्तव्यत्वाभावबोधस्य निवर्तकत्वमयुक्तं' सत्यपि तस्मिन् हननगतदृष्टेष्टसाधनत्वप्रयुक्तकर्तव्यताया अनपाया'दिति शङ्का कल्पतरौ 'अभावबुद्धिश्चौदासीन्ये कारणम्' इति भाष्यस्यावतारिकाभूतटीकार्थत्वेनोक्ता। तत्र कल्पतरौ 'कर्तव्यत्वाभावबोधस्ये'ति पदं कर्तव्यत्वविशिष्टेष्टसाधनत्वाभावबोधस्येति परिमले व्याख्यातम्। कर्तव्यत्वविशिष्टेष्टसाधनत्वाभावबोधे सत्यपि इष्टसाधनताज्ञानस्य प्रवर्तकस्य सत्वात् कुतो निवृत्तिः। सत्यपीत्यनेन वस्तुतो बोधो नास्तीति सूच्यते, इष्टसाधनत्वबोधस्य सत्वात् कर्तव्यत्वविशिष्टेष्टसाधनत्वाभावबोधानुदयात्, इति शङ्कार्थः।

अस्याः शङ्कायाः परिहारः 'अभावबुद्धिश्चे'ति भाष्याभिप्रेतः। सचाभिप्रायः टीकायां 'निषेध्यानां चानर्थसाधनताबुद्धिरेव निषेध्याभावबुद्धिः। तया खल्वयं चेतनः आपाततो

रमणीयतां पश्यन्नपि आयतिमालोच्य प्रवृत्त्यभावं निवृत्तिमवबुद्धय निवर्तते औदासीन्यमात्मनोऽवस्थापयतीति यावत्' इति विवृतः। तत्र कल्पतरौ 'ननु हननादिषु प्रत्यक्षदृष्टेष्टसाधनत्वकर्तव्यत्वयोर्निषेद्धुमशक्यत्वात् कथमभावबुद्धिरिति भाष्यम्, अत आह—निषेध्यानां चेति।' इत्यवतारिका कृता। 'दृश्यमानमपीष्टं बह्वदृष्टानिष्टोदयावहत्वादनिष्टमित्यनर्थहेतुत्वज्ञापनपरं वाक्यम्। एवं च पर्युदासपक्षादस्य पक्षस्य न विशेष इति न शङ्क्यम्—श्रुतेष्टोपायत्वाभावोपपत्तये अनिष्टोपायत्वकल्पनात्। त्वन्मते श्रुतं परित्यज्याश्रुतविधारकप्रयत्नविधिकल्पनादिति।' इति टीकातात्पर्यवर्णनं कृतम्। कल्पतरावेव उपक्रम एव 'निषेधेषु नञ्समभिव्याहृतविधिप्रत्ययेन प्रकृत्यर्थभूतहननादिगतदृष्टेष्टोपायतामनपबाध्य तद्गतगुरुतरादृष्टानिष्टोपायता ज्ञाप्यते। अतो निवृत्त्युपपत्तिरिति वक्तुं लोके विधिनिषेधयोरिष्टानिष्टोपायत्वबोधकत्वं व्युत्पत्तिबलेन दर्शयति टीकाकार' इत्युक्तम्।

अत्र परिमले श्रुतेष्टोपायत्वाभावोपपत्तये, इति कल्पतरुप्रतीकमुपादाय 'ननु इष्टसाधनत्वाभावः श्रुत इत्ययुक्तम्, तस्य 'न हन्यात्' इत्येतदर्थत्वाभावात्। सांदृष्टिकेष्टोपायत्वे विद्यमाने तदभावस्य बाधितत्वात्। 'हननेष्टसाधनतामनपबाध्य तद्गतगुरुतरादृष्टानिष्टोपायता ज्ञाप्यत' इति पूर्ववाक्ये तदबाधनस्योक्तत्वाच्च। एवं च श्रुतेष्टसाधनत्वाभावोपपत्तये गुरुतरानिष्टसाधनत्वं कल्प्यत इत्यप्ययुक्तम्। गुरुतरानिष्टसाधनत्वे कल्पितेऽपि सांदृष्टिकेष्टोपायत्वस्य प्रत्यक्षसिद्धस्यापनेतुमशक्यत्वेन तदभावोपपादनायोगात्।' इत्याक्षिप्तम्।

तस्य परिमले समाधानमेवमुक्तम्—'इष्टोपायत्वमात्रं न लिङ्गर्थः। किं तु बलवदनिष्टाननुबन्धित्वविशेषितम्। तथा च निषेधवाक्यैर्विशिष्टाभावबोधने नास्ति बाधः। विशेष्यवति विशिष्टाभावो विशेषणाभावेनोपपादनीय इति तदुपपादनार्थं विशेषणाभावात्मकबलवदनिष्टानुबन्धित्वकल्पनेति श्रुतेष्टसाधनत्वाभावोपपत्तये इत्यादिग्रन्थस्य तात्पर्यम्। ग्रन्थे गुरुतरादृष्टानिष्टसाधनत्वकल्पनोक्तिः निन्दार्थवादरहितेषु निषेधवाक्येषु। निन्दार्थवादसत्त्वे तु तत एव तल्लाभः। हननादिषु निषेध्येषु तात्कालिकेष्टापेक्षया भाव्यनिष्टस्य गुरुतरत्ववचनं निन्दार्थवादः' इति।

एवं च निषेधस्थले कर्तव्यत्वविशिष्टबलवदनिष्टाननुबन्धीष्टसाधनत्वाभावो हननगतो वाक्यार्थः। तदुपपादनाय बलवदनिष्टानुबन्धित्वं हननस्य कल्प्यते। हननस्य केवलमिष्टसाधनत्वेऽपि बलवदनिष्टाननुबन्धीष्टसाधनत्वज्ञानाभावान्न तत्र प्रवृत्त्यापत्तिः। हनने केवलमिष्टसाधनत्वाभावस्य बाधाद्बोधयितुमशक्यत्वेऽपि बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभावस्याबाधात् बोधयितुं शक्यत्वम्। भाष्ये अभावबुद्धिरिति पदं हननगतकर्तव्यत्वविशिष्टबलवदनिष्टाननुबन्धीष्टसाधनत्वाभावबुद्धिरित्यर्थकम्। भामत्यां 'निषेध्यानां चानर्थसाधनताबुद्धिरेव निषेध्याभावबुद्धिः' इत्यत्र निषेध्याभावबुद्धिः—हननगतबलवदनिष्टाननुबन्धित्वविशेषितेष्टसाधनत्वरूपनिषेध्याभावबुद्धिः। तस्याः अनर्थसाधनताबुद्धिरेवेत्यभेदकथनं उपपादकबुद्धेरुपपाद्यबुद्ध्यभेदोपचारेण। अनर्थसाधनत्वं उपपादकं, बलवदनिष्टसाधनत्वाभावविशिष्टेष्टसाधनत्वाभावः उपपाद्यः, इत्युक्तमेव। कल्पतरौ 'दृश्यमानमपीष्टं बह्वदृष्टानिष्टोदयावहत्वादनिष्टम्' इत्यस्य दृश्यमानमिष्टं बलवदनिष्टाननुबन्धीष्टं न

न्धीष्टसाधनत्वज्ञानस्यैव प्रवर्तकतया, बलवदनिष्टानुबन्धित्वज्ञापनेन सान्दृष्टिक-
P. 147-6 मिष्टमिष्टाभास इति ज्ञापने निवृत्तिसिद्धिरित्याशयेनाह—**दृश्यमानमपीति** । **न विशेष इति** । लक्षणायास्तुल्यत्वादिति भावः । **श्रुतेष्टोपायत्वेति** । बलवदनिष्टाननुबन्धीष्टोपायत्वाभावोपपत्तये इत्यर्थः ।

ननु प्रवृत्त्यभावबुद्धिमात्रेण कथं निवृत्तिरुक्ता टीकायां इत्यत आह—
P. 148-3 **प्रवृत्त्यभावमित्यस्येति** । एवमपि कथं शङ्कायाः परिहार इत्यत आह—**उद्यत्क्रियाया इति** । उद्यन्ती प्रसक्ता या क्रिया खड्गोद्यमनादिरूपा **ततो मयोपरन्तव्यमित्येवं** तत्परावर्तनक्रियोपलक्षितत्वरूपनिवृत्तित्वविशिष्टप्रवृत्त्यभावविषयिण्या [बुद्ध्या] **निवर्तत** इत्यर्थः । **न तु प्रवृत्तिप्रागभावमात्रमिति** । यथोक्तनिवृत्तित्ववैशिष्ट्यरहितं **प्रवृत्तिप्रागभावमात्रमवबुध्य, न निवर्तेत** इत्यर्थः ।

निषेधस्थले किमभावबुद्धिधारेष्यते? उत नेति विकल्प्य, क्रमेण निराकृतं **टीकायाम्** । तत्र बुद्धिधाराभ्युपगमपक्षः फल्गुत्वादनास्थयेति सूचयितुं, अनन्तरं
P. 149-1 व्याकुर्वन्नाह—**यथोक्तेति** । तावदेवेति टीकाया भाष्यार्थकथनपरतामुक्त्वा, द्वितीयपक्षाङ्गीकारेण शङ्कानिरासार्थमेतदुक्तमित्यादिटीकेत्याह—**न ह्यभावेति** । **इदम्** औदासीन्यम् । **अपवादनिरासिकेति** । **अपवादः**—प्रतियोगिसामग्री । तस्याः प्रागभावनिवृत्तिरूपप्रतियोगिजनकत्वात् । **तन्निरासिका**—तदन्तर्गतबलवदनिष्टाननुबन्धीष्टसाधनताज्ञानविघटकत्वादिति भावः ।

नन्वनादेरौदासीन्यस्य सादेर्जीवनस्य च कथं दृष्टान्तदार्ष्टान्तिकतेत्याशङ्क्य **अपवादनिवर्तकाभावेऽप्यपवादाप्रसक्तौ तिष्ठत्येवोत्सर्ग** इत्येतावत्यंशे **दृष्टान्तदार्ष्टान्तिकभाव** इत्यमुमर्थमौदासीन्यस्योत्सर्गत्वप्रदर्शनपूर्वकं दर्श-
P. 149-5 यति—**अनादित्वादिति** । **औदासीन्यमजानतोऽप्यस्तीति टीकाभिप्राय-**

---

भवति । तदेव च मुख्यमिष्टं यदनिष्टाननुबन्धि, इदन्तु बलवदनिष्टानुबन्धित्वादिष्टाभासः क्षुद्रेष्टम्, इत्यर्थः । तथा च सर्वमवदातम् ।

१. 'प्रवृत्त्यभावमवबुद्ध्ये'त्येतावता अनादिसिद्धप्रवृत्तिप्रागभावबोधमात्रमुक्तं स्यात् । न तद्बोधमात्रान्निवर्तते । किंतु खड्गोद्यमनादिरूपा या हननोद्यमक्रिया तस्या उपरन्तव्यमिति कर्तव्यत्वेनानुसंधीयमाना या खड्गादिपरावर्तनक्रिया तदुपलक्षितत्वेन निवृत्तिरूपापन्नं प्रवृत्त्यभावमवबुद्ध्य निवर्तते, निवृत्तिरूपापन्नप्रवृत्त्यभाववान् भवतीत्यर्थः । इति परिमलम् । 'उद्यमक्रियाया' इति कल्पतरौ पाठान्तरम् ।

माह—**यदौदासीन्यमिति**। **उक्तमिति**। शब्दबलाद्गम्यमानमपीत्यर्थः। P. 149-7
प्रसक्तक्रियेत्यादिटीकाभिप्रायमाह—**ततः कर्तव्यत्वेनेति**। [2]विशिष्टाव-
गतिमभिनयति—**यद्धन्यादिति**। एवंरूपेण निषेधेन बलवदनिष्टसाधनत्व-
लक्षणया विशिष्टमौदासीन्यं ज्ञाप्यत इत्यर्थः।

निवृत्तेरुपलक्षणत्वमुपपादयति—**प्रसक्तक्रियेति**। औदासीन्यस्य निवृ-
त्त्युपलक्षितत्वमनुपपन्नमिति शङ्कते—**नन्विति**। प्रसक्तक्रियाविरोधिव्यापार एव
निवृत्तिरिति परिहरति—**उच्यत इति**। **नञर्थस्त्विति**। बलवदनिष्टाननु- P. 149-12
बन्धीष्टसाधनत्वाभावाक्षिप्तं (भावोपलक्षितं) बलवदनिष्टसाधनत्वमित्यर्थः।

भाष्ये आनर्थक्याभिधानं उपाख्यानादिविषयमित्युक्तम्। टीकायां
तु क्रियार्थत्वादेरप्युपाख्यानादिविषयत्वमुच्यते। तत्र को हेतुरित्याशङ्क्य
'अम्नायस्य क्रियार्थत्वा'दित्यादेरविशेषेण सर्व[स्य]सिद्धार्थविषयत्वे कथमानर्थ-

---

१. 'यदौदासीन्यं तत् प्रागभावरूपत्वादुक्तमपि न निवृत्तिहेतुः' इति कल्प-
तरुः, औदासीन्यं प्रागभावरूपत्वात् अनादि। अतो न निवृत्तिहेतुः। अनादेः निवृत्ति-
हेतुत्वे सर्वदा निवृत्तिप्रसङ्गात्। 'उक्तमपि' इत्यस्य शब्दबलात् गम्यमानमपीत्यर्थः। अनादि-
सिद्धौदासीन्यज्ञानमपि न निवृत्तिहेतुः। अपिशब्दात् स्वरूपतोऽपि, अज्ञात सदपि
औदासीन्यं न निवृत्तिहेतुरिति लभ्यते। अत्र टीकायां 'औदासीन्यं अजानतोऽप्यस्ति'
इति, 'आजानतोप्यस्ति' इति च पाठभेदः। आजानतः स्वभावतोऽप्यस्ति इत्यर्थः। अजा-
नतः इति पाठे औदासीन्यमनवगच्छतोऽप्यस्ति इत्यर्थः। तत् न निवृत्तावुपयुज्यत
इति भावः।

२. परिमले—'यद्धन्यात्तन्नेति। इदं वाक्यं प्रसक्तक्रियानिवृत्तिप्रतिपादकतया
नोपात्तम्, खङ्गादिपरावर्तनरूपतया वक्ष्यमाणायाः प्रसक्तक्रियानिवृत्तेः 'न हन्यात्' इत्येत-
दर्थत्वाभावात्। किं तु निवृत्तिरूपखङ्गादिपरावर्त्यताबुद्धिः केन भवतीत्याकांक्षायां
'न हन्यात्' इत्येतदर्थभूतानिष्टसाधनत्वज्ञानेन भवतीत्येतदर्थप्रतिपादकतयोपात्तम्।'
इत्युक्तम्। एवं च प्रसक्तक्रियानिवृत्तिरूपौदासीन्यात्मकविशिष्टावगतेरभिनयो न भवति
यद्धन्यात्तन्नेत्येतत्। किं तु तादृशविशिष्टावगतिहेतुभूतनिषेधवाक्यजन्यबोधाभिनयः
इति ध्येयम्। अत एव कल्पतरौ 'एषा च निवृत्तिः नञर्थबोधफलम्, नञर्थस्तु हननगतेष्ट-
साधनत्वाभाव एवेति' इति समनन्तरमेवोक्तम्। तत्र च परिमले—'एषा चेति।
'न हन्यात्' इत्यनेन हननगतबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभावावगतिः, ततो
बलवदनिष्टानुबन्धित्वकल्पनम्, तेन उद्यतं खङ्गादिकं परावर्तनीयमिति बुद्धिः, ततः
तत्परावर्तनवैशिष्ट्येन लब्धपरिपालनतया निवृत्तिरूपापन्नौदासीन्यप्राप्तिरिति क्रमः'
इत्युक्तम्।

**क्याभिधानमात्रमुपाख्यानविषयं** स्यादित्यतो भाष्यमुपलक्षणार्थत्वेन व्याचष्ट इत्याह—**भाष्य इत्यादिना। न निवर्तकतेति।** स्वरूपस्य पूर्वमपि सत्त्वादिति भावः। **आत्मशब्दः साक्षात्कारस्वरूपपरः** इत्याह—**स्वमिति। अभावत्वात्तथेति।** अभावरूपमशरीरत्वं ब्रह्मभिन्नत्वेन मिथ्यात्वात् ज्ञानेन निवर्त्यमित्यर्थः। अशरीरत्वस्य ब्रह्मभिन्नत्वमसिद्धमिति परिहरति—**नेति।**

P. 150-2

P. 150-6 व्यवहितत्वेऽपि योग्यत्वादात्मनः परामर्श इति व्याचष्ट इत्याह—**भाष्य इति। टीकाकारेण स्वोक्तेऽर्थे भाष्यमवतारितं तदिदमाहेति। तद्भाष्यं** निष्कृष्य दर्शयन्नाह—**शरीरसंबन्धस्येति। व्याचष्ट इति। शरीरसंबन्धस्यासिद्धत्वादिति हेतोरसिद्ध**(प्रयोजक)त्वाशङ्कानिराकरणेनेत्यर्थः। **ताभ्यामित्यस्य रोचयमान** इत्यनेनान्वये **धर्माधर्माधीनत्वं शरीरसंबन्धस्य** नोक्तं भवेदित्यतस्तात्पर्यमाह—**आत्मनीति। टीकायां यस्तु मन्यते** इत्यादिना (प्रवाहानादित्वमवलंब्य) असत्कार्यवादमवलम्ब्य प्रवाहानादित्वशङ्कायाः करिष्यमाणत्वात् यद्युच्येतेत्यादिशङ्का व्यक्त्यनादित्वावलंबनेन सत्कार्यवादिन इति व्याचष्टे—**धर्माधर्मव्यक्त्योरिति। तथापीति।** उभयोरप्यनादित्वेन परस्परहेतुकत्वाभावान्नायं दोष इति भावः। ययोरनादित्वं न तयोर्हेतुहेतुमत्ता, ययोस्तु सा, न तयोरनादितेति, तत्र परस्पराश्रयो दोषः स्यादेवेत्याह—**तत्र नित्येति। अन्धपरंपरातुल्येति।** पटशौक्ल्यादिनिश्चायकान्धपरंपरातुल्या तद्वदेव वस्त्वसाधिकेत्यर्थः।

P. 151-1

**ननु आत्मनः क्रियासमवायाभावे हेतुर्नोक्तो भाष्यटीकयो**-रित्याशङ्क्य, प्रागेवोक्तत्वादिह पुनर्नोक्त इत्याशयेनाह—**आत्मनीति। भाष्यटीकयोरहंप्रत्ययस्य** गौणत्वनिराकरणं प्रकृतानुपयोगीत्याशङ्क्य प्रासङ्गिकं तदित्याशयेनाह—**देहात्मेति। भ्रान्तिनिमित्तात्रिति।** भ्रान्ति निमित्तीकृत्यैव तद-

P. 151-6

---

१. भाष्ये 'तत्कृते'ति वाक्यात् पूर्वं 'नित्यमशरीरत्वमकर्मनिमित्तत्वादित्यवोचाम' इति, वर्तते। तत्र 'अशरीरत्वमेव धर्मकार्यमिति चेत् न तस्य स्वाभाविकत्वात्' इत्यादिपूर्वग्रन्थेन अवोचामेत्यर्थः।

२. 'व्याचष्टे' इत्यस्य स्थाने 'विवृणोति' इति कल्पतरौ पाठो दृश्यते।

नन्तरभाविनौ शब्दप्रयोगप्रत्ययावित्यर्थः। एवं संशयेनिमित्तेत्यत्रापि योजना। P. 151-8
**अनुपपन्नमिति**। भ्रान्तिशब्दस्य विपर्यय एव प्रसिद्धेरिति भावः। **भ्रान्तेरपीति**। निर्हेतुककार्यायोगादिति भावः। **तन्मात्रमिति**। साधारणधर्मिदर्शनमात्रमित्यर्थः। **उतेति**। **सादृश्याद्दोषत्वमाश्रित्य, तन्मिलितं** यथोक्तधर्मिदर्शनमित्यर्थः। **धवलभास्वररूपस्येत्यनेन, शुक्लभास्वररूपस्य पुरः स्थितस्य द्रव्यसामान्यस्य शुक्तिरजतविशेषसाधारण्ये सतीति टीका** योजिता। **अभिधायेति**। **शुक्लभास्वरस्येति टीकयेति** शेषः। **द्वितीयं दूषयतीति**। P. 151-10
दोषस्य प्रमाप्रतिबन्धकत्वेन शुक्तिप्रमानुत्पत्तावपि, 'शुक्तिर्वा रजतं वे'ति संशयः कुतो न स्यादिति **दूषयतीत्यर्थः**।

**समानधर्मधर्मिण** इत्यत्र द्विवचनादर्शनान्न द्वन्द्व इत्यभिप्रेत्य, कर्मधारयानुगुण्येन पूर्वपदे बहुव्रीहिं दर्शयति—**समानो धर्मो यस्येति**। **रजतमेव** P. 152-4
**स्मृतमिति**। फलबलादिति भावः। स्मारके सत्यस्मरणमयुक्तम्। फलनियमस्त्वदृष्टादेवेति परिहरति—**तत्राहेति**। **अत इति**। तुल्यसादृश्योद्बोधितसंस्कारजन्यस्मृतेरविशेषेण कोटिद्वयविषयकत्वादिति भावः। **रागादिति**। रजतमात्रविषयकरागविशेषलक्षणाद्दोषादित्यर्थः। **अक्षपादसूत्रं** व्याचष्टे—**समानधर्म इति**। **अनेकधर्मपदं**—मध्यमपदलोपिसमासतया व्याचष्टे—**अनेकस्मादिति**। **एवमभिप्राय इति**। दृष्टनियामकाभावाभिप्राय इत्यर्थः। **कथमुक्तं** इत्याशङ्क्य, **सामर्थ्यादि**त्याह—**दृष्टं हेतुमिति**। **प्रतिजानतेति**। उत्कण्ठा- P. 152-11

---

१. परिमले 'संशयशब्देन विशेषादर्शनादिसंशयकारणकलापो विवक्षितः। संशयस्य प्रत्ययशब्देन तत्कार्यतया ग्रहणात्। संशयशब्दस्य मुख्यार्थत्वे तु संशयमूलकशब्दप्रयोगजन्यप्रत्ययान्तरपरः प्रत्ययशब्दो योज्यः।' इत्युक्तम्।

२. अत्र टीकायां संशयो वा द्वेधा युक्तः' इति पाठो दृश्यते। द्वेधा इति अधिकमिति भाति। यद्वा-द्वेधा द्विकोटिकः संशयः इति स्वरूपकीर्तनम्।

३. अक्षपादसूत्रे अव्यवस्थात इत्येतदन्तेन सूत्रांशेन त्रिविधा संशयसामग्री वर्णिता। विशेषापेक्ष इत्यनेन अन्यतरविशेषावधारणाकाङ्क्ष इत्यर्थकेन स्वयमनवधारणात्मकत्वमुक्तम्। तेन विशेषापेक्षो विमर्श इति सूत्रांशेन अनवधारणज्ञानं संशय इति तल्लक्षणं दर्शितम्' इति परिमलम्।

४. अत्र कल्पतरौ 'एवमिहापि' इत्यस्य अयमर्थः—एवं-अक्षपादसूत्रोक्तप्रकारेण। इहापि-शुक्तिरजतभ्रमस्थलेऽपि इति।

पूर्वकं सरतेत्यर्थः। प्रतिज्ञार्थकत्वे 'संप्रतिभ्यामनाध्याने' इति सूत्रेणात्मनेपदे प्रतिजानानेनेति[1] प्रसङ्गादिति ध्येयम्। तदपीति। अदृष्टाख्यं कर्मेत्यर्थः।

P. 152-11

अशरीरत्वे चेति चकारस्य तत्रान्वयायोगादुत्तरत्रान्वयमाह—श्रुतीः स्मृतीश्चेति[2]।

P. 152-12

ननु तदिदमाहेति टीकायां मननिदिध्यासनयोरपि न विधिरित्यस्मिन्नर्थे भाष्यमवतारितम्। तत्रावगत्यर्थत्वादिति भाष्येण कथं विध्यभाव उक्त इत्यत आह—साक्षात्कारो हीति। ननु वामदेवादेर्जन्मान्तरीयमेव श्रवणं हेतुर्भविष्यति। नेत्याह—जन्मान्तरेति। श्रवणस्य साक्षात्कारहेतुताग्राहकप्रमाणाभावे, जन्मान्तरे तत्कल्पकस्यैवाभावेन व्यभिचारताद्वस्थ्यादित्यर्थः। प्रथमसूत्रेति। विशिष्टमधिकारिणं ब्रह्मविचारे प्रवर्तयितुं तत्कर्तव्यतापरस्य सूत्रस्य, यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येति भाष्यस्य च क्लिष्टार्थकत्वापत्तेरित्यर्थः।

P. 153-4

तन्नेति। किं विध्यभावे व्यभिचारेण श्रवणादेः साक्षात्कारहेतुताग्रहो न संभवतीत्यभिप्रायः[3]? किं वा विधेयत्वव्याप्यसत्वे विधेयत्वेनापि भवितव्यमिति?

---

१. 'प्रतिजानानेनेति पाठस्साधुः। प्रतिजानतेति पाठस्तु कथंचिदाध्यानार्थविवक्षया समर्थनीयः' इति परिमले।

२. अत्र टीकायां 'श्रुतिस्मृतीरुदाहरति' इति पाठः। कल्पतरौ 'श्रुतिस्मृतीरिति। श्रुती स्मृतिं चेत्यर्थः' इति पाठः। न तु 'श्रुतीः स्मृतीश्चेत्यर्थः' इति वा 'श्रुतिं स्मृतिं चेत्यर्थः' इति वा पाठः। भाष्ये श्रुतिद्वयं एका स्मृतिश्च उदाहृता, तदभिप्रेत्य श्रुतिस्मृतीरिति टीका। अन्यथा श्रुतिस्मृती इत्येव टीका स्यात्, श्रुतिस्मृतिद्वित्वबोधकतया द्विवचनौचित्यात्। बहुवचनं तु श्रुतिवचनद्वयं स्मृतिवचनमेकञ्चाभिप्रेत्य, इति कल्पतर्वाशयः। आभोगस्तु चिन्त्यः। श्रुतिस्मृतीरिति टीकापाठे श्रुतिस्मृत्योस्समासकरणेन तत्समुच्चयबोधकतया तत्र चकारानन्वयात्। श्रुतिस्मृती इति टीकापाठे श्रुतित्वेन स्मृतित्वेन च द्वित्वात् द्विवचनोपपत्तिः। तदा व्याख्यानपेक्षा॥

३. 'अन्वयव्यतिरेकव्यभिचारात् लोकतः कारणत्वं ग्रहीतुं न शक्यं, अतो विधिबोध्यकारणत्वमङ्गीकृत्य तन्निर्वाहार्थं फलप्रतिबन्धकदुरितनिवृत्त्यादिवैकल्यकल्पनया अन्वयव्यभिचारः, जन्मान्तरकृतश्रवणादिकल्पनया व्यतिरेकव्यभिचारश्च परिहरणीय इति तदभिप्रायः' इति परिमले विधिवादिनः अभिप्रायः प्रकाशितः॥ 'उभयतो व्यभिचारेण श्रवणस्य साक्षात्कारकारणत्वं लोकत इव, बाधेन विधितोऽपि ग्रहीतुं न शक्यमिति प्रागेव शाब्दापरोक्षनिराकरणेनोक्तप्रायम्, अतो विधिना कारणत्वं निश्चित्य व्यभिचारः

नाद्यः—गान्धर्वशास्त्रश्रवणादेरिव लोकत एव तद्धेतुताग्रहात्। न च व्यभिचारः। चित्तसंस्कारद्वारैव तद्धेतुत्वाभ्युपगमेन तत्सत्वे साक्षात्कारावश्यंभावात्। अत एव वामदेवादिस्थलेऽपि न व्यभिचारः। द्वारसत्वात्। तद्बलादेव च तस्य जन्मान्तरीयश्रवणसिद्धिः। नहि लोकसिद्धस्मृत्यनुभवकार्यकारणभावानुरोधेन कल्प्यमानस्य प्राथमिकेष्टसाधनतास्मरणानुकूलस्य जन्मान्तरीयानुभवस्य विध्यपेक्षा दृश्यते। उपपादितश्च श्रवणादेर्लोक एव हेतुताग्रह इत्यभिप्रेत्य, द्वितीयं दूषयति—**न तावदित्यादिना।** P. 153-4

**भवान्तरेति।** जन्मान्तरेत्यर्थः। **प्रमीतस्य**—मृतस्य। **प्रथमसूत्रं त्विति।** विषयादिप्रदर्शनेनैव प्रवर्तकत्वसंभवान्न कर्तव्यतापरत्वं प्रथमसूत्रस्येति भावः। **जिज्ञासा कर्तव्येति** भाष्यमपि संपाद्यतापरं, न कर्तव्यतापरम्। इच्छायास्तदयोगादिति भावः। परमते, विध्यभावप्रतिपादकबहुभाष्यविरोधान्न किञ्चिदेतदित्यनास्थया भाष्यं न गृहीतमिति ध्येयम्। **निजिह्नुवे**—निह्नुतं बभूवेत्यर्थः। गुणकर्मत्वनिराकरणभाष्यमेवाह—**यदि हीति।** श्रवणादिकमप्युपयोक्ष्यमाणसंस्कारोऽस्त्वित्याशङ्क्य, निराकरोति—**न च श्रवणादीति।** अदृष्टपर्यवसायिन एव गुणकर्मणो विध्यपेक्षा, दृष्टे तु लोकत एव सिद्धेर्न तत्र विध्यपेक्षेति भावः। P. 153-9

ननु धर्मभिन्नशास्त्रप्रमेयाभावेन पृथक् शास्त्रारंभासंभवस्योक्तत्वात् **आरभ्यमाणं चेति** भाष्यं कथं सङ्गच्छतामित्याशङ्क्य, न कृत्स्नशास्त्रारंभाभिप्रायं भाष्यम्, किन्तु धर्मस्यैव बाह्यत्वान्तरत्वकृतभेदाश्रयणेन **कथं चिदारभ्यमाणमपी**त्येवमभिप्रायमित्याह—**नन्विति। नित्यनिवृत्तीति।** वाक्यतदर्थयोर्नि- P. 154-3

---

परिहरणीय इति शङ्कितुरभिप्रायो न संभवतीति सिद्धान्तिनोऽप्यभिप्रायः परिमले विशदीकृतः। अत्र परिमले, व्यभिचारेण कारणत्वस्य लोके बाधाङ्गीकारे विधितोऽपि बाधितकारणत्वबोधो न भवतीति भावः। तथा शाब्दापरोक्षस्य पूर्वं निराकरणात् शब्दस्यापरोक्षकारणत्वं बाधितम्, तथा च विचारितशब्दज्ञानात्मकश्रवणस्यापरोक्षहेतुत्वं विधातुं न शक्यमित्यपि भावः 'शाब्दापरोक्षनिराकरणेने'ति पदेन सूच्यते इत्यवगन्तव्यम्। पूर्वं 'बाधेन ग्रहीतुं न शक्य'मित्यनुक्तत्वात् उक्तप्रायमित्युक्तम्।

१. अत्र कल्पतरौ 'न विधिविचारपरं' इति पाठो दृश्यते, 'न विचारविधिपरं' इति शोधनीयम्।

P. 153-4 त्यत्वात् इति भावः। विधीनां साध्यादिभेदाधिष्ठानत्वे हेतुमाह—तद्विषया इति। तदुत्पादिन इति टीकां व्याचष्टे—अपि चैते इति। (तद्विषया अपीति।) धर्मबोधकानां विधीनां कथं तदुत्पादकत्वेन तदधिष्ठानकत्व-मित्यत आह—पुरुषेणेति। टीकायां कुत इति प्रश्नो न स्वातन्त्र्येण। किन्तु हेतुभाष्यावतारणायेत्याशयेनाह—न हीति। प्रश्नपूर्वकं प्रतीकोपादान-P. 154-6 मित्यर्थः। तदेव भाष्यं व्याचष्ट इत्याह—न हीत्यादीति। अहेयानुपादे-येति विशेषणमहिमलब्धं भाष्यार्थमाह—[2]विधेयेति।[3]

भाष्ये प्रमातृत्वनिषेधस्यैवोक्तत्वात् कथं टीकायां न च कर्तृत्व-मिति कर्तृत्वसामान्यनिषेध इत्यत आह—(वि)ज्ञानेति। प्रमाणशब्देन, करणानामुपात्तत्वात् कथं चकारार्थत्ववर्णनमित्यत आह—भाष्यस्येति। प्रमानिषेधस्यापि कर्तव्यत्वात् तत्परः प्रमाणशब्द इति भावः। [4]नन्वसत्त्वं मिथ्यात्वं तद्गौणाद्यात्मनो नित्यमिति सर्वदा पुत्रादिबाधप्रसङ्गः। असत्त्वस्य P. 154-10 निवृत्तिरूपत्वेऽपि, हेत्वभावे कथं निवृत्तिरिति आशङ्क्य, तत्र हेतुं [5]दर्शयन्,

---

१. त्र्यंशभावनारूपधर्मविषयत्वात् विधयः साध्यादिभेदाधिष्ठानाः। तदधिष्ठा-नत्वं च तद्विषयत्वम्। कल्पतरौ 'तद्विषया विधयः साध्यादिभेदाधिष्ठानास्तद्विषयाः' इति पाठः। प्रथमं तद्विषया इति पदं पूर्वप्रकृतत्र्यंशभावनाख्यधर्मविषयत्वार्थकं हेतुगर्भ विशेषणम्। द्वितीयं तद्विषया इति पदं साध्यादिभेदाधिष्ठानत्वं तद्विषयत्वरूपमिति विवरणपरम्। इति विशेषः। तदुत्पादिन इति टीकां, इत्याभोगे वर्तते, टीकायां धर्मोत्पादिनः इति पाठः।

२. विधिगोचरः विधेयनिषेध्यवाक्यार्थभेदः साध्यसाधनादिपदार्थभेदः, इतर-प्रमाणगोचरः स्तंभाद्यर्थभेद इति कल्पतरौ विभागः, स चाद्वैतावगतौ न भवतीति भाष्यार्थः इति भावः।

३. कल्पतरौ 'बहुव्रीही विशेषणपरौ' इति हेतुगर्भविशेषणपरौ इत्यर्थः।

४. अत्र कल्पतरौ 'पुत्रादावहमित्यभिमानः गौणात्मा चेत्' इति वर्तते। 'गौणश्चेत्' इति पाठस्सुगमः। गौणात्मा इत्यस्य गौणस्वरूप इत्यर्थः।

५. अत्र गौणात्मनः असत्त्वं नाम पुत्रादावात्माभिमाननिवृत्तिः। आत्माभिमानश्च पुत्रादेरुपकारकत्वारोपाज्जातः। उपकारकत्वारोपनिवृत्त्या निवर्तते। आत्माभिमाननिवृत्ति-रूपगौणात्मासत्त्वं पुत्रादिबाधने हेतुः। पुत्रादिबाधनं नाम पुत्रादिषु ममकाराभावः। इति भामतीकल्पतरुभ्यां ज्ञायते। आभोगे 'हेतुं दर्शयन्' इति वर्तते। तस्य स्फोरयन्नित्यर्थः, टीकाकारस्यैव दर्शयन्नित्यत्र कर्तृत्वात्, तस्य च हेत्वप्रदर्शकत्वात्। स च हेतुः कल्पतरुकारेण

पुत्रादेः स्वरूपेण बाधासंभवात् ममकारादिविशिष्टवेषेण बाधनमिति व्याचष्टे, इत्याशयेनाह—**पुत्रादेरिति।** **प्रमित्यभावमाहेति।** ततश्च, **सद्ब्रह्माह**-P. 154-13 मित्येवं बोधि स्फुरणशीलं तत्संपादकं कार्यं वृत्तिरूपमिति **टीकार्थो** बोध्यः।

**निगदव्याख्यात इति।** बोधे हेतुभूतं कार्यमित्यस्यार्थस्य स्पष्टत्वा-दिति भावः। **एष हीत्यादिटीकां** व्याचष्टे—**नियतेति।** **ज्ञानकरणमिति।**P. 155-1 अद्वैतसाक्षात्कारकारणमित्यर्थः। **ज्ञानेवृत्तिरिति।** अद्वैतसाक्षात्कारस्य ज्ञानस्य वृत्तिर्वर्तनमुत्पत्तिर्नेत्यर्थः। अन्विष्टप्रमात्रभेदकथनस्य प्रयोजनमाह—**प्रमातृलये इति।** टीकायामितिशब्देन प्रमातुरन्विष्टाभेदे अन्वेष्टव्याभेदो हेतुरुक्तः। स एव कथमित्यत आह—**अन्वेष्टव्य इति।** अनुपलब्धिबाधितमभिन्नत्वमिति शङ्कते—**नन्विति।** आवृतत्वादनुपलब्धिरित्याशयेन परिहरति—**तत्राहेति।**P. 155-5 **स नेति।** हेत्वभावात् फलाभावो य उक्तः, स न संभवति। ज्ञानस्यैवा-नुदयेन ततः प्रमात्रादिनिवृत्त्ययोगादित्यर्थः। विपक्षे दण्डमाह—**बाध्यस्येति।** स्वविरोधिप्रमानुत्पादकत्वप्रसङ्गा[3]दित्यर्थः।

---

टीकासूचितो वक्तव्यः, तत्रापि न दृश्यते। अतः आभोगरीत्या कल्पतरौ एवं पाठ उन्नीयते—'पुत्रादेरुपकारकत्वारोपात् आत्माभिमानः तस्मिन् उपकारकत्वारोपनिवृत्त्या निवृत्ते ममत्व-बाधनेत्याह—गौणात्मन इति' इति॥ अथवा उपकारकत्वारोपात् आत्माभिमान इत्युक्त्या तन्निवृत्त्या तन्निवृत्तिरिति अर्थाल्लभ्यते॥

१. कल्पतरौ 'ज्ञानानुवृत्तिः' इति पाठो दृश्यते।

२. टीकायां अन्वेष्टव्य आत्मा प्रमातृत्वोपलक्षितादात्मनो न भिन्न इत्यतो हेतोः अन्विष्टस्यादात्मेत्याह' इत्यर्थः। 'इत्याह' इत्यस्य "इति हेतोराह' इत्यर्थः। इति भावः भाति॥

३. अत्र कल्पतरौ 'शङ्कोत्तरत्वेन तृतीयश्लोकं व्याख्याति' इत्युक्तः 'देहात्मप्रत्ययो यद्वत्' इति भाष्योपात्तः श्लोकः सूतसंहिताव्याख्यायां तात्पर्यदीपिकायां श्रीमाधवाचार्य-विनिर्मितायां मुक्तिखण्डचतुर्थाध्याये सुन्दरपाण्ड्यवार्तिकत्वेन व्यवहृतः—यदाहुः—'प्रत्य-क्षादिप्रमाणानां प्रामाण्यं व्यावहारिकम्। आश्रित्यायं प्रपञ्चस्स्यादलीकोऽपि प्रमाणवान्॥ अद्वैतागमवाक्यं तु तत्त्वावेदनलक्षणम्। प्रमाणभावं भजतां बाधवैधुर्यहेतुतः॥ इति। तथा सुन्दरपाण्ड्यवार्तिकमपि—'देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन संमतः। लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्॥' इति। कल्पतरौ वेधाद्यधिकरणे (३-३-१४) 'आह चात्र निदर्शनमा-चार्यसुन्दरपाण्ड्यः—निःश्रेण्यारोहणप्राप्यं' इत्यादिना पूर्वमीमांसासंबन्धि सुन्दरपाण्ड्य-कर्तृकं श्लोकत्रयमुदाहृतम्। तच्च तन्त्रवार्तिके (३-३-७) कीर्तितम्। उत्तरमीमांसासंबन्धि श्लोकत्रयं तदीयं अत्र भगवत्पादैरुदाहृतम्॥

(१) किं बाध्यस्य प्रमाजनकत्वं न संभवतीति ब्रवीषि ? (२) किं वा पारमार्थिकमपारमार्थिकान्नोत्पद्यत इति ? (३) अथवा मिथ्याभूतस्य कथं मिथ्यानिवर्तकत्वं, निवर्तकत्वेऽपि वा कथं निवर्त्यस्य स्वनिवर्तकोत्पादकत्वमिति, विकल्प्य, प्रथमद्वितीयौ निराकृत्य, तृतीयं कल्पमाशङ्कते—**नन्विति**। **अविद्या वेति**। प्रमात्रादिरूपेत्यर्थः। अविद्यायाः स्वनिवर्तकोत्पादकत्वमपि न विरुद्ध-मित्याह—**दृष्टं चेति**। अतिभयङ्करव्याघ्रादिदर्शने स्वप्ननिवृत्तेरनुभवसिद्धत्वा-दिति भावः। उच्छेदजननयोरेकाविद्याकर्तृकत्वभ्रमं व्यावर्तयन् व्याचष्टे—**अवि-द्यामयीति**।

P. 155-10

**टीकाकारेण** विद्याविद्ययोः, कार्यकारणभावे निवर्त्यनिवर्तकभावे च श्रुतेरुदाहृतत्वात् तदनुसारेण श्रुतिं योजयति—**विद्यामिति**। चैतन्योपरा-गाद्वृत्तिर्विद्येत्याशयेनाह—**वृत्तिं विद्यामिति**। कार्यकारणभावेनेत्युपलक्षणम्। निवर्त्यनिवर्तकभावेनेत्यपि द्रष्टव्यम्। ततश्च तयोरुक्तरूपेण ज्ञाने, अविद्यात्मक-प्रमात्रादिकारणकलापेन विद्यां संपाद्य, तया तन्निवर्त्य, तदुपलक्षितं, तदभि-व्यक्तं स्वरूपं प्राप्नोतीति, श्रुत्यर्थ इति भावः।

P. 155-12

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय'(छा. उ. ६-२-१)मिति श्रुतिं व्याचष्टे—**सदेवेति**। इदंशब्दस्य लोकप्रसिद्ध्या, प्रत्यक्षसिद्धार्थकत्वमादाय शङ्कते—**माभूदिति**। **किमासीदिति काकुः**। आसीत् किमित्यर्थः। उत्तर-वाक्यानुरोधेन कार्यमात्रपर इदंशब्द इति परिहरति—**नेत्याहेति**। अविद्यादे-रपि सत्वात् कथमवधारणमत आह—**स्वकार्येति**। **स्वशब्देन सदर्थ उच्यते**। आत्मा वा इदमेक एवाग्र आसीदि'(एत. उ. २-१-११)ति श्रुतिं व्याचष्टे—**आप्नोतीति**।

P. 155-18

---

१. ब्रह्मसिद्धौ ब्रह्मकाण्डे मण्डनमिश्रैरयं ' विद्यां चाविद्यां च ' इति मन्त्रः द्विधा व्याख्यातः। तत्रत्यप्रथमव्याख्यानुसारेण कल्पतरुकारैरत्र श्रुतियोजना कृता। तत्र ब्रह्मसिद्धौ विद्याशब्दं ब्रह्मस्वरूपज्ञानपरतया व्याख्याय व्यङ्ग्यव्यञ्जकभावरूपोपेयोपायभावेन साहित्यं कथितम्। अत्र विद्याशब्दं चरमाखण्डाकारवृत्तिपरतया व्याख्याय कार्यकारणभावेन साहि-त्यमुक्तमिति विशेषः। निवर्त्यनिवर्तकभावेन आभोगकारोक्तसाहित्यं तत्र नोक्तम्। कल्पतरौ 'स्वरूपभूतं विद्योपलक्षित'मिति पाठः।

'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्य'( बृह. उ. २-५-१९ )मिति श्रुतिं व्याचष्टे—**तदिति प्रकृत इति**। बाह्यस्य प्रपञ्चस्य सत्वात् कथं **अबाह्यमिति** P. 156-2 बाह्यनिषेध इत्यत आह—**एवंविधमिति**। तस्य विवरणं **कूटस्थमिति**। बाह्यत्वे हेतुमाह—**एतदनात्मतयेति**। 'ब्रह्मैवेदममृतं पुरस्तात्'(मुण्ड. उ. २-२-११) इति श्रुतिं व्याचष्टे—**यत्पुरस्तादिति**। 'ब्रह्म पश्चा'दित्यादिमन्त्रशेषाभिप्राय-माह—**तथा पश्चादिति**। 'यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते' (छा. उ. ५-१०-५) इति श्रुतिं व्याचष्टे—**संपततीति**। P. 156-3

भाष्ये 'तथा यागाद्यनुष्ठायिनामेव विद्यासमाधिवशादुत्तरेण पथा गमनं, केवलैरिष्टापूर्तदत्तसाधनैः धूमादिक्रमेण दक्षिणेन पथा गमनम्, तत्रापि सुखतारतम्यं तत्साधनतारतम्यं च शास्त्राद्यावत्संपातमुषित्वेत्य-स्मात् गम्यते' इति दक्षिणमार्गस्यापि निर्दिष्टत्वत् 'यावत्संपातमुषित्वे'त्येतत् 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते' (छा. उ.५-१०-३) इति श्रुतेरुप-लक्षणम्। अतस्तां व्याचष्टे—**इष्टमिति**। 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छा. उ. ८-१२-१) इति श्रुतिं व्याचष्टे—**परमार्थत इति**। एव-कारार्थस्य वावेत्यस्य व्यवहितान्वयमाह—**न स्पृशत एव इति**[1]। P. 156-10

'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति' (काठ. उ. १-२-२१) इति श्रुतिं व्याचष्टे—**परमार्थत इति**। **मन्तृमन्तव्येति**। आत्माभेदोक्त्या, काल्पनिकभेदमादाय जीवब्रह्मणोर्मन्तृम-न्तव्यता। न स्वत इति सूच्यते इति भावः। 'अप्राणो ह्यमनाः शुभ्रः' (मुण्ड.उ. २-१-२) इति श्रुतिं व्याचष्टे—**प्राण इति**। शुभ्र इति पदानुरो-धात् प्राणमनश्शब्दयोरुपलक्षकत्वमाह—**क्रियाशक्तिमदिति**।

'असंगो ह्ययं पुरुषः' (बृह. उ. ४-३-१५) इति श्रुतेः हिशब्दयोगेन हेतुसमर्पकत्वात् प्रतिज्ञाप्रदर्शनपूर्वकं व्याचष्टे—**स्वप्नादीति**। **अनन्वागत-स्तेनेति**। तेन दृश्यमानेन कार्येण कर्तृतया अनन्वित इत्यर्थः। पूर्णतापरेण पुरुषशब्देनासङ्गत्वं समर्थ्यत इत्याह—**मूर्तान्तरेणेति**। 'अन्यत्र धर्मादन्य- P. 156-15

---

१. 'न स्पृशतः। एवं परमार्थतः' इति कल्पतरौ पाठः दृश्यते। 'न स्पृशत एव। परमार्थतः' इति शोधनीयमिति आभोगात् ज्ञायते।

त्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥' (काठ. उ. २-१४) इति श्रुतिं व्याचष्टे—**धर्मादधर्मादिति**। धर्माधर्मग्रहणं तत्फलस्याप्युपलक्षणमिति व्याचष्टे—**तत्फलेति**।

**अन्यत्रेति** शब्दः प्रथमान्त इत्याशयेनाह—**पृथग्भूतमिति**। 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मुण्ड. उ. २-२-८) इति श्रुतिं व्याचष्टे—**अस्य विदुष इति**। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने'ति (तै. उ. २-९) श्रुतिं व्याचष्टे—**ब्रह्मण इति**। 'तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्

P. 156-19 तत्सर्वमभव'दिति (बृ. उ. १-४-१०) श्रुतिं व्याचष्टे—**यदस्मिन्निति**। **विधूतकल्पनमिति**। कर्तृत्वादिकल्पनारहितमित्यर्थः। 'तत्र को मोहः कश्शोक एकत्वमनुपश्यत' इति (ईशा. उ. ७) श्रुतिं पूर्ववाक्यप्रदर्शनेन व्याचष्टे—**यस्मिन्निति**। 'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चे'ति श्रुतिं (बृ. उ. १-४-१०) व्याचष्टे—**तत्तत्पदलक्ष्यमिति**। 'त्वं हि नः पिता यो ऽस्माकं अविद्यायाः परं पारं तारयसी'ति (प्र. उ.६-८) श्रुतिमाख्यायिकार्थ-

P. 157-5 कथनपूर्वकं व्याचष्टे—**भारद्वाजादय इति**। **विद्यानिष्क्रयार्थमिति**। गुरुदक्षिणयेति शेषः।

'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवश्शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु' (छा. उ. ७-१-३)'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार' (छा. उ. ७-२६-२) इति श्रुतिद्वयं तद्भेदप्रकटनपूर्वकं व्याचष्टे—**तत्रापीति**। वल्कलादिकषायद्रव्यसादृश्यात् रागादौ कषायशब्दप्रयोग इत्याह—**वल्कलादिवदिति**। संलग्नस्य कषायस्य क्षारजलसेकमन्तरा न नाश इत्यत आह—**ज्ञानेति**। **ज्ञानं**—विवेकः। **वैराग्यं** प्रसिद्धम्। **अभ्यासः** चित्तैकाग्र्यानुकूलो यत्नः। **त एव क्षारजलं, तेन विनाशितो यस्येत्यन्वयः**।

P. 157-13 संवर्गविद्याश्रुतेः (छा. उ. ४-३-१) स्पष्टार्थत्वात्—तां प्रदर्शयन्नेवाप्रसिद्धार्थकं विवृणोति—**संवर्गविद्यायामिति**। उद्वायतीत्यस्य विवरणं **उपशाम्यतीति**। अप्येतीत्यस्य विवरणं **प्रलीयत इति**। 'अन्यदेव तद्विदितादथो अविदितादधी'ति (केन. उ. १-३) श्रुतिं व्याचष्टे—**तद्ब्रह्मेति**। 'येनेदं सर्वं विजानाति तं केन विजानीया'दिति (बृ. उ. २-४-१३) श्रुतिं

व्याचष्टे—**येन प्रमात्रेति**। वृत्त्यनुपपत्तेः—प्रवृत्त्यनुपपत्तेः। **अविषयत्वं ब्रह्मणः उपन्यस्येति** भाष्यसूचिता श्रुतिः 'यद्वाचानभ्युदितं येन वागभ्युद्यते' (केन. उ. १-४) इति, तां व्याकुर्वन्, 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (केन. उ. १-४) इति श्रुतिं व्याचष्टे—**यद्वाचेत्यादिना**। किमाह श्रुतिरित्यतः तद्दर्शयति—**तदेवेति**। P. 158-3

'यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानता'मिति (केन. उ. २-३) श्रुतिं व्याचष्टे—**यस्य ब्रह्मेति**। उत्तरार्धस्य पौनरुक्त्यं परिहर्तुमाह—**एतानिति**। 'न दृष्टेर्द्रष्टारं पश्ये'रिति (बृ. उ. ३-४-२) श्रुतिं व्याचष्टे—**दृष्टेरिति**। **कर्मभूताया इति**। नित्यदृष्टिकर्मभूताया इत्यर्थः। **न पश्येरित्यनेन** दृशिक्रियाकर्मत्वं प्रतिषिध्यत इत्याह—**दृश्ययेति**। **न पश्येः**—न विषयीकुर्या इत्यर्थः। भाष्ये 'न मतेर्मन्तारं मन्वीथा' इति **चैवमादीत्यादिग्रहणेन**, 'न विज्ञातेर्विज्ञातारं विजानीया' इति (बृह. उ. ३-४-२) श्रुतिरुक्ता। एतच्छ्रुतिव्याख्यानेनैव 'न मते' रित्यादिश्रुतिरपि व्याख्याता भवतीत्याशयेनाह—**विज्ञातेरिति**। "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीती'ति (मु. उ. ३-१-१) श्रुतिं व्याचष्टे—**तयोरिति**। P. 158-5

'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण' (क. उ. १-३-४) इति श्रुतिं व्याचष्टे—**आत्मीयमिति**। अर्थाद्विशेष्यलाभ इत्याह—**आत्मानमित्यर्थ इति**।

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥'

(श्वे. उ. ६-११) इति श्रुतिं व्याचष्टे—**एको देव इति**। 'स पर्यगाच्छुक्रमकाय- P. 168-10

---

१. अनेन भाष्ये 'यद्वाचे'त्यादिश्रुतिर्न पठितेति ज्ञायते, परंतु भाष्ये पठितैव सा श्रुतिः।

२. अनेन 'न मतेर्मन्तारं मन्वीथा' इति चैवमादि, इति भाष्यपाठ इति ज्ञायते, परं तु 'न विज्ञातेर्विज्ञातारं विजानीया' इति चैवमादि' इति भाष्यपाठो दृश्यते। क्वचित् 'न मतेर्मन्तारं मन्वीथाः न विज्ञातेर्विज्ञातारं विजानीया'इति चैवमादि' इति भाष्यपाठो दृश्यते॥

P. 158-13 मव्रणमस्नाविरं शुद्धमपापविद्धम्' (ईशा. उ. ८) इति श्रुतिं व्याचष्टे—स आत्मेति। स पर्यगादित्यस्य फलितार्थकथनं सर्वगत इति। प्रसङ्गात् तत्रत्य-भाष्याभिप्रायमाह—भाष्य इति। ततश्च भाष्ये अनाधेयातिशयत्वनित्य-शुद्धत्वयोरसिद्धिवारणार्थमेतौ मन्त्रौ सिंहावलोकनन्यायेनोदाहृतावित्यव्यवहित-ग्रन्थानन्वयेऽपि न दोष इति भावः।

"आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्॥" (बृ. उ. ४-४-१२)

इति श्रुतिं व्याचष्टे—आत्मानमिति। आक्षेप इति। प्रयोजनादिप्रतिक्षेपः क्रियते, कृतकृत्यत्वप्रदर्शनायेत्यर्थः। 'स एष नेति नेत्यात्मे'ति श्रुतिं (बृ. उ. P. 159-5 ३-९-२६) व्याचष्टे—य आत्मेति। विश्वदृश्येति। मूर्तामूर्तोपलक्षितस्य सर्व-स्यापि प्रपञ्चस्य नेति नेतीति निषेधमुखेन तदधिष्ठानभूत आत्मा व्याख्यात इत्यर्थः। 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' (क. उ. १-३-११) इति श्रुतिं व्याचष्टे—यथेति। विधेयसमर्पककाष्ठाशब्दापेक्षया पुरुषलक्षणेति स्त्रीलिङ्गनिर्देशः। 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति (बृ. उ. ३-९-२६) श्रुतिं व्याचष्टे—यस्त्वदुदाहृतेति।

'तद्यथा अहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव' (बृ. उ. ४-४-७) इति श्रुतिं P. 159-9 व्याचष्टे—अत्र ब्रह्मेति। न संसरतीति। नाभिमानं करोतीत्यर्थः। वल्मीकग्रहणमुपलक्षणमित्याशयेनाह — वल्मीकादाविति। अनभिमता अभिमानाविषयीकृता। त्यक्तत्वचा संयुक्तोऽपि मार्गगत्या तत्र प्रविशन्नपि। जीवनमप्युपाधितादात्म्याध्यासमन्तरेण सत्वमेव, तत्तादात्म्ये तन्मरणेन मरणा-पत्त्या जीवनायोगादित्याशयेनाह—निरुपाधिरिति। 'सचक्षुरचक्षुरिव सकर्णो-P. 159-13 ऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इवे'ति श्रुतिं व्याचष्टे—परमार्थेति।

मङ्गलाचरणव्याजेन जगत्कारणत्वं ब्रह्मण एवेति दर्शयति—परमेति। परं जगत्कारणं तद्विषयिणी या मा 'सदेव सोम्ये'त्यादिकारणवाक्यजन्या प्रमा। अर्थान्तरमप्यत्र गम्यते—परा—उत्कृष्टा शच्यादिस्वविभूत्यपेक्षया या मा महालक्ष्मीः, सा यमाश्लिष्यति, आनन्दबोधसत्स्वरूपलक्षणान्वितं परं परमात्मानं श्रीनृसिंहमहं वन्दे इत्यर्थः ॥

नारायणेन्द्रयोगीन्द्रगुर्वनुग्रहयोगतः ।
संसेव्य कल्पकतरुं प्राप्तोऽस्मि परमां स्थिराम् [परमाम्बिकाम्] ॥

॥ इति [3]समन्वयाधिकरणम् ॥

॥ चतुस्सूत्री समाप्ता ॥

---

१. परमा परमानन्दबोधसल्लक्षणाञ्चितम्। यमाश्लिष्यति सर्वज्ञं तं वन्दे पुरुषोत्तमम्॥ इत्ययं कल्पतरुमङ्गलश्लोकः ईक्षत्यधिकरणारंभे दृश्यते कोशेषु। आभोगकारः समन्वयाधिकरणावसान एव कृतोऽयं मङ्गलश्लोक इति मत्वा अत्रैव व्याख्यातवान् इति ज्ञायते ॥

२. 'कारणवाक्यजन्या प्रमा निरतिशयानन्दादिस्वरूपलक्षणाञ्चितं यं सर्वज्ञं विषयीकरोति, न त्वतथाभूतं प्रधानादिकं, प्रस्तोष्यमाणाधिकरणन्यायात्, तं पुरुषोत्तमं वन्दे इत्यर्थः।' इति परिमले ॥

३. 'तत्तु समन्वयात्' इति सूत्रस्यायमर्थः—तदिति सूत्रपदेन सिद्धान्तपक्षप्रतिज्ञा उक्ता इति भामत्यामुक्तम्। प्रतिज्ञालाभप्रकारविशेषः अत्रैव (१३८) पुटे टिप्पण्यां द्रष्टव्यः। तु—शब्दः पूर्वपक्षव्यावृत्त्यर्थः, समन्वयः वेदान्तानां ब्रह्मणि तात्पर्येणान्वयः। वेदान्तानां क्रियापरत्वं आरोपितब्रह्मभावजीवोपास्तिपरत्वं वा वदतां पूर्वमीमांसकानां पूर्वपक्षः प्रथमवर्णके, जीवब्रह्माभेदाङ्गीकारेण उपासनविधिशेषतयैव ब्रह्मसिद्धिः न स्वातन्त्र्येणेति वदतामेकदेशिनां पूर्वपक्षः द्वितीयवर्णके च निराकृतः तुशब्देन। स्वातन्त्र्येण ब्रह्मणि वेदान्तानां समन्वयो हेतुस्तन्निरासे ॥ तथा च स्वातन्त्र्येण ब्रह्मणि वेदान्तानां समन्वयात् अनन्यशेषं ब्रह्म शास्त्रप्रमाणकमिति सूत्रार्थः ॥

## ॥ अथ ईक्षत्यधिकरणम् ॥

सू०॥ ईक्षतेर्नाशब्दम् ॥ ५ ॥

सू०॥ गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

सू०॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

सू०॥ हेयत्वावचनाच्च ॥ ८ ॥

सू०॥ स्वाप्ययात् ॥ ९ ॥

सू०॥ गतिसामान्यात् ॥ १० ॥

सू०॥ श्रुतत्वाच्च ॥ ११ ॥

वृत्तार्थकथनपूर्वकमीक्षत्यधिकरणस्य संगतिं दर्शयितुं प्रवृत्तत्वात् **कार्यान्वयमिति** श्लोकस्य, तत्पूरणार्थमेवङ्कार इत्याशयेनाह—**कार्यान्वयमिति। यदि सर्वज्ञ इति।** अचेतने सर्वज्ञत्वासंभवेन, वेदान्तानां तत्परत्वशङ्कानुत्थितेत्यर्थः। असंभवोऽसिद्ध इत्याशयेन परिहरति—**अत आहेति।** चेतनस्यैव सर्वज्ञत्वं नाचेतनस्येत्यद्याप्यसिद्धमिति, तदर्थमधिकरणारंभ इत्याह—**सर्वज्ञ इति।** (P. 161-1)

न च प्रथमसूत्रेण नित्यशुद्धबुद्धमुक्तस्वरूपस्य ब्रह्मणो विचार्यत्वं प्रतिज्ञाय, तल्लक्षणादिकथनार्थं प्रवृत्तेन जन्मादिसूत्रत्रयेणापि ब्रह्मणो जगत्कारणत्वसर्वज्ञत्वादिकं समर्थितमेवासीदिति कथमुपक्षिप्ततामात्रम्? **एवं तच्च ब्रह्मणीति परमार्थत इति** टीकाप्ययुक्तेति वाच्यम्। ब्रह्मशब्दस्य नित्यशुद्धादिस्वरूपार्थकत्वम् वेदान्तानां तादृशे स्वरूपे समन्वयाधीनम्। तथा चोक्तं भाष्ये—**ब्रह्म च वक्ष्यमाणलक्षणमिति।** तद्यदि समन्वयः प्रधाने स्यात्, तदा ब्रह्मशब्दोऽपि तत्पर इति, तद्विचार एव विवेकख्यात्यर्थं प्रथमसूत्रे प्रतिज्ञातः स्यात्। ततश्च, प्रथमसूत्रनिर्दिष्टब्रह्मशब्दार्थनिर्णयाय प्रवृत्तेन **जन्मादिसूत्रत्रयेण,** सर्वज्ञत्वहेतुकं जगत्कारणत्वं ब्रह्मणो लक्षणमिति, वेदान्ताः तत्र तात्पर्येण समनुगताः तत्र प्रमाणमिति चोक्तम्, एतावतापि लक्षणप्रमाणस्वारस्येन चेतनं ब्रह्मेति निर्दिष्टमासीत्,

न तु चेतनमेवेत्यवधृतमित्यर्थसिद्धचेतनसमन्वयाक्षेपेण चेतनमेव ब्रह्मेति निर्णयार्थमिदमधिकरणमित्यर्थः ।

**टीकायां—संशय इति।** **वादिनां विप्रतिपत्त्या विशेषानुपलंभे सति** मध्यस्थस्य संशय इत्यर्थः। **जीवाणुव्यतिरिक्तचेतनेश्वरनिमित्ताधिष्ठिता इति** टीकायाम् जीवाणुव्यतिरिक्तत्वम्, चेतनत्वं च, नाधिष्ठातुर्विशेषणम्। जीवाधिष्ठातृत्वपक्षस्य प्रसिद्धत्वेऽप्यणूनां प्रधानस्य वा अधिष्ठातृत्वमिति पक्षयोरप्रसिद्ध्या, व्यावर्त्यालाभात्। किन्तु स्वरूपकीर्तनम्। तत्सामर्थ्याच्च परमाणुकारणवादस्य मतान्तरात् भेदसिद्धिरित्याशयेन व्याचष्टे—**कारणस्येति। वाद** इत्यत्र निरस्तमित्यस्य पुंलिङ्गतया परिणतस्यान्वयः। **सिद्धान्तात् भेद इति।** दर्शित इति शेषः । P. 161-5 P. 161-5

नचाधिष्ठिता इत्यनेन तद्भेदः, सिद्धान्तेऽपि परमेश्वराधिष्ठितानां अविद्यानां परिणाम्युपादानताभ्युपगमादिति भावः। **न सर्वशक्तिविज्ञाने इति साध्ये** सर्वस्य शक्तिविज्ञाने इति विग्रहे योग्यताबलादेव शक्तौ जनकता, ज्ञाने विषयता च, षष्ठ्युक्तः संबन्ध इति पर्यवस्यतीत्यभिप्रेत्य व्याचष्टे—**सर्वजनेति। ज्ञानक्रियाशक्ती खल्विति** श्लोकव्याख्यानटीकासूचितमर्थं समासप्रदर्शनेन स्पष्टीकरोति—**ज्ञानक्रिययोरिति।** हेतोरप्रयोजकत्वं निराकरोति—**यस्य हीति।** P. 162-3

नन्वपरिणामित्वस्य साक्षादेव शक्त्यभावहेतुत्वसंभवात् ज्ञानक्रियाभावद्वारा तत्र हेतुत्वेन, **टीकायां** किमर्थं व्याख्यास्यत इत्याशङ्क्य, कार्योन्नेयधर्माणां कार्याभावेनैवाभावो वक्तव्यः। न तु हेत्वन्तरेण। अप्रयोजकत्वापत्तेः। अतस्तन्निरासाय, तथा व्याख्यास्यत इत्यभिप्रेत्य स्वयं तथैव व्याचष्टे—**कार्योन्नेये हीति। प्रधाने त्वस्ति संभवं** इत्यत्र परिणामित्वमर्थाद्धेतुर्लभ्यत इत्याशयेनाह—**प्रधाने त्विति। श्लोके ब्रह्मण इति** पदसूचितो हेतुरेकत्वाच्चेत्यनेन विवृतः। तस्य प्रयोजनमाह—**नन्विति।** ज्ञानस्य गुणत्वादेकत्वादिवत् P. 162-6

---

१. अत्र टीकायां 'परमाणवः' इत्यनन्तरं 'ये तद्रूपं' इति शेषपूरणं कर्तव्यमिति भाति। अन्यथा अनन्वयापत्तेः। इति ध्येयम् ।

२. प्रयत्नस्योपलक्षणमिदम् ।

नापरिणामित्वविरोध इति भावः। **साधयतीत्यनन्तरं एकत्वाच्चेत्यस्यानुषङ्गः।**
P. 162-8 अस्मिन् पक्षे अखण्डत्वं तदर्थ इत्याह—**निरवयवत्वादिति यावदिति।**

ननु परिणामरूपेण ज्ञानेन ब्रह्म सर्वज्ञमिति न ब्रूमः। येन परिणामिनि तन्न भवेत्। किन्तु स्वरूपज्ञानेन, तच्च ब्रह्मण एवेति शङ्कते—**नन्विति!** ननु ब्रह्मणि वृत्तिरपि काचिदिष्यताम्? न, परिणामरूपत्वात् तस्या इत्याशयेनाह—**सर्वविषयेति।** जीवानां स्वरूपज्ञानसत्वेऽपि तस्य सर्वविषयकत्वाभावात् न सर्वज्ञत्वमिति वैषम्यं शङ्कते—**नन्विति। ज्ञानकर्तृत्वमिति। सर्वज्ञमिति पदेन** यत् ज्ञातृत्वमवगम्यते, तत् ज्ञानकर्तृत्वमेव। ज्ञाधातोरुपरि विहितस्य कर्तृप्रत्ययस्य कर्त्रर्थकत्वादिति भावः। **कार्यत्वे वेति टीकायां** कार्यस्य कादाचित्कत्वनियमात् नित्यवच्छुतं सर्वज्ञत्वं भज्येतेत्युक्तम्, तदङ्गीकृत्यवादेनेत्याह—**अङ्गीकृत्यापीति। कार्यतामङ्गीकृत्यापीत्यन्वयः।**

P. 163-1 **आक्षिप्तः इति।** पुरुषार्थेन प्रयोजनेन प्रवर्तमान इत्यर्थः। **अग्रयप्राये** इत्यादिशाबरोदाहरणस्य प्रसक्तिं दर्शयन्नाह—**यज्ञपुरुषस्येति। यथा अग्रचेत्यादीति आहुरिति टीकागतेन पदेनान्वयः। कथमिति।** नित्यस्य स्वरूपभिन्ने उपाधिलयाधीन एकीभावो न संभवतीत्यर्थः। भवन्मत इव मन्मतेऽप्यौपचारिको लय इत्याशयेनाह—**अतश्चेति। वृत्तीनामन्यासामिति टीकाभिप्रायं** दर्शयन् **योगसूत्रार्थमाह—प्रमाणेति। निद्रातोऽन्या इति।** निद्रापेक्षया अन्याः प्रमाणादय इत्यर्थः। उपक्रमे गुणित्वादिकीर्तनात्, **स कारणमित्यादिकमपि**
P. 163-8 प्रधानपरमेवेति स्फोरयितुं उपक्रमं पठति—**'ज्ञः कालकाल' इति। टीकायां—प्रतिपादितमधस्तादित्यतः प्रधानाभिप्राय इति पूर्वेणान्वयः।**

तस्मात् सर्वज्ञत्वसर्वशक्तित्वजगत्कारणत्वादेः प्रधान एव संभवात् सर्वेषां वेदान्तानां तत्रैव समन्वय इति पूर्वपक्षमुपसंहरति—**टीकायां—तस्मादिति।**

---

१. कल्पतरौ 'इत्युक्त्वा लोकेप्युदाहरन्ति यथा अग्रचेत्यादीति' इति वर्तते। अत्र इत्युक्त्वा इति क्त्वाप्रत्ययस्य प्रकृत्यर्थसमानकर्तृकक्रियान्तरलाभाय आहुरिति टीकागतेन पदेनान्वय इत्युक्तम्। इत्युक्त्वा शबरस्वामिनः आहुरित्युक्ते अन्वयो भवति। अन्यथा अनन्वयात्। उदाहरन्ति इत्यस्य लौकिकाः कर्तारः। ते च न उक्तिक्रियाकर्तार इति बोध्यम्।

२. कल्पतरौ 'इति सूत्रोक्ताः निद्रातोऽन्याः वृत्तयः' इति पदच्छेदः सूचितोऽनेन।

अपिकारयोरेवकारार्थकथनमात्रेण कथं तद्व्यावर्तनमित्यतस्तत्सूचितं नियामकमाह—इह हीति । निश्चयवत एवेति । अन्यथा मुख्येक्षणवतो ब्रह्मण एव कारणत्वमित्यवधारणसंभवे तच्छङ्कानुपपत्तेरित्यर्थः । सूत्रविरोधमुक्त्वा, प्रक्रमस्थभाष्यविरोधमप्याह—तत्परत्वेनेति । विपर्ययेण—अनवधारणविपर्ययेण, अवधारणेनेत्यर्थः । P. 164-2

'निरतिशयं सर्वज्ञबीज'मिति पातञ्जलं सूत्रमर्थतोऽनुक्रान्तं—यथाहुरिति टीकायाम् । तत् सत्वस्य निरतिशयोत्कर्षे हेतुं दर्शयन् व्याचष्टे—यदेति । ज्ञानस्य निरतिशयत्वसाधनं प्रकृतानुपयुक्तमित्यत आह—निरतिशयतामिति । मध्यमपरिमाणत्वादौ व्यभिचारवारणाय-जातित्वादिति । ज्ञानस्य निरतिशयत्वेऽपि न सर्वविषयत्वम् । तयोर्व्याप्त्यभावादिति शङ्कते—निरतिशयत्व इति । अतिशयो ह्याश्रयाधिक्यकृतो वा? विषयाधिक्यकृतो वा? तत्र ज्ञाने आद्यस्यासंभवात् द्वितीयः परिशिष्यत इत्याह—ज्ञेयभूम्ना हीति । P. 164-5 P. 165-1

सत्वसंपत्त्या सर्वज्ञत्ववत्, तमस्संपत्त्या अज्ञतैव कस्मान्न भवतीति शङ्कां परिहरति—टीकायां—एतदुक्तं भवतीति । टीकायां—पुरुषार्थेति । सत्वोत्कर्षजन्यपुरुषार्थप्रयुक्तरजस्तमोगुणवैषम्यविमर्दनात् सत्वस्य निरतिशयोत्कर्षे सर्वविषयकज्ञानलक्षणं कार्यमुत्पद्यत इति तदादाय गुणसाम्यावस्थायामपि तन्मात्रविवक्षया सर्वज्ञत्वव्यपदेशो युज्यते इत्यर्थः । चस्त्वर्थ इति टीकां व्याचष्टे—तुशब्दसमानार्थ इति । त्रिगुणत्वात्तु प्रधानस्येत्येतद्विवरणरूपस्य अपि च प्रधानस्येति भाष्यस्य तत्समानार्थकत्वौचित्यादिति भावः ।

ननु वेदान्तानामनुमानसिद्धकारणविशेषानुवादित्वेन स्वार्थपरत्वाभावात् कथमीक्षणेन ब्रह्मकारणत्वनिर्णय इति शङ्कते—नन्विति । अनुवादकत्वमसिद्धमिति परिहरति—तत्राहेति । चेतने च स आञ्जस इत्यत्र हेतुमाह—टीकायां—तेषु तेष्विति । जडत्वाविशेषे सत्वस्य चैतन्यबिंबोद्ग्राहित्वं, P. 165-3

१. अत्र टीकायां 'पुरुषार्थप्रयुक्तगुणवैषम्यविमर्दनात्' इति पाठ इति आभोगात् ज्ञायते । सत्वोत्कर्षेण जन्यः भोगापवर्गलक्षणः पुरुषार्थः, तत्प्रयुक्तं रजस्तमोगुणवैषम्यविमर्दनं तस्मादित्यर्थः । रजस्तमोगुणयोः यद्वैषम्यं आधिक्यं तस्य विमर्दे सत्येव सत्वोत्कर्षो भवति । टीकागतं गुणवैषम्यपदं रजस्तमोगुणवैषम्यपरतया आभोगे व्याख्यातं भवति ।

P. 165-12 **नेतरयोरिति** कथमित्याशङ्क्य, दृष्टान्तेन परिहरति—**टीकायां—पार्थिवत्व इति । प्रत्ययः कथमिति ।** ऐक्षतेत्यत्र श्रूयमाणः कर्तृप्रत्यायकः तङ्प्रत्यय इत्यर्थः ।

**टीकायां**—(१) किं ब्रह्मणः स्वरूपज्ञानं नित्यमिति तत्प्रति कर्तृत्वं वार्यते ? (२) किं वा अनित्यज्ञानं नास्तीति ? (३) अथवा ब्रह्मणि ज्ञानमेव न संभवतीति ? (४) संभवे वा तत्प्रति कर्तृत्वं न मुख्यमिति ? (५) किं वा स्वमते मुख्यमेव कर्तृत्वं संभवतीति विकल्प्य, **सत्यमित्यादिना** प्रथममिष्टापत्त्या परिहृत्य, द्वितीयं स्वरूपेण नित्यस्यापि ज्ञानस्य तत्तदनित्योपाध्युपहितरूपेणानित्यत्वसंभवात्, तत्र कर्तृत्वं ब्रह्मण इत्येवं **तस्य त्वित्यादिना** निराकृत्य, **यद्यपीत्यादिना** तृतीयमाशङ्कितम् । **तत्रौदासीन्यस्य वास्तवत्वकथनं** ज्ञान-

P. 165-6 लक्षणपरिणामासंभवायेत्याशयेनाह—**यद्वादीति** । चतुर्थमिष्टापत्त्या निराकर्तुं—इति **कर्तृत्वोपपत्तिरिति टीका** । तदभिप्रायं दर्शयन्नेव पञ्चमं निराकर्तुं **परैरपीत्यादिटीकेत्याह—उपाध्यपेक्षेति ।**

स्वमते मुख्यं कर्तृत्वमिति ? किं **सांख्यमतेन ?** उत **भाट्टमतेन ?** अथवा **नैयायिकमतेन ?** आद्येऽपि किं चितिशक्तेर्मुख्यं कर्तृत्वं ? किं वा करणानामिति विकल्प्य, **परैरपीत्यादिना** प्रथमं निराकुर्वन् चितिशक्तेरेव कर्तृत्वं युक्तमित्यत्र हेतुमप्याह—**टीकायां—चैतन्येति** । तदयुक्तम् । चैतन्यस्य स्वरूपतया, कर्तृत्वस्य तत्सामानाधिकरण्यायोगात् इत्याशङ्क्य, 'पुरुषस्य चैतन्य' मिति व्यवहाराभिप्रायेण तदित्याह—**यत्रात्मनीति** । अन्तःकरणादेः चैतन्यबिंबोद्ग्राहितया तन्निष्ठस्यापि कर्तृत्वस्य चैतन्यसामानाधिकरण्यमुपपद्यत इत्यभिप्रेत्य द्वितीयं शङ्कते—**नन्विति । विकारा एवेति** बहुवचनेन तेषामेव कर्तृत्वं नासहायायाश्चितिशक्तेरिति सूचितम् ।

किं शुद्धानामेव विकाराणां कर्तृत्वं ? उत संक्रान्तचित्प्रतिबिंबानाम् ? नाद्य इत्याह—**नेत्याहेति । टीकायां—त्रयोदशेति ।** पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, बुद्ध्यहंकारमनांसि त्रीणि चेत्यर्थः। बहुत्वमप्रयोजकमित्याह—**टीकायां—**

P. 166-3 **नो खल्विति । टीकायां—नेतेति ।** तेषां पान्थानान्नेतेत्यर्थः । द्वितीयं निराकरोति—**टीकायां—एवं चेति ।** एवमपि कथमवास्तवत्वं कर्तृत्वस्येत्याशङ्क्याह—

P. 166-4 **टीकायां—नचास्या इति ।** तर्हि कर्तृत्वमेव मास्त्वित्यत आह—**टीकायां—न**

चेति। ततश्च चितिशक्तेः व्यापाराभावात् जडवर्गस्य च ज्ञानाभावान्न कस्यापि ज्ञानकर्तृत्वमिति कर्तुरभावे व्यवहारमात्रोच्छेद इति भावः। एवं च द्वयोरप्येकैक-वैकल्ये सिद्धं कर्तृत्वस्य मिथ्यात्वमित्याह—**टीकायां—तस्मादिति।** P. 166-8

**भाट्टमतेनेति** द्वितीयं कल्पमाशङ्कते—**भवत्विति।** अस्तु तात्त्विकं, ततः किं? तदाह—**तदनभ्युपगच्छत इति।** ततश्च मुख्यत्वाय तदेवाङ्गीक्रि-यतामित्यर्थः। **न्यायमतेनेति** तृतीयं कल्पमाशङ्कते—**अस्तु तर्हीति।** नन्वेव-मपि कथं सर्वज्ञत्वम्। सर्वेषामपि विषयाणामेकदा असत्त्वेन तावद्विषयकै-कज्ञानकर्तृत्वायोगादित्याशङ्कामुपसंहारव्याजेन निरस्यति—**टीकायां—तस्मादिति।** P. 165-5

नन्‌ तपश्शब्दस्य कर्मविशेषवाचित्वात् कथमीक्षणरूपज्ञानपरत्वमुक्तमित्यत आह—**ज्ञानमिति।**[1] कारणेन कार्यं लक्ष्यते। अविद्यावृत्तिरूपस्येक्षणस्य जीवादृष्टजन्यत्वादिति भावः। **तद्व्याचिकीर्षावदित्यत्र तच्छब्देन ज्ञानस्य** परामर्शं व्यावर्तयति—**तद्विषयेति**[2]। तच्छब्देन ज्ञानविषयतया प्रक्रान्ते नाम-रूपे परामृश्येते। एवं च सत्येकधर्मत्वानित्यादिटीकोपपत्तिरित्याशयेनाह—**अयमिति।** (अनेन[3] तपसा ईक्षणेन युक्तं व्याचिकीर्षाव्याप्तौपर्यवस्यतीति भावः।) P. 166-3

नन्वन्नशब्दस्य सूक्ष्मभूत (भूतसूक्ष्म)परत्वे, तस्यैव जननमुपपद्यते। अन्यथा उत्तरत्र सूक्ष्मभूत (भूतसूक्ष्म)सृष्टेरनुक्तत्वेन तदध्याहारे गौरवं चेत्या-

---

१. अत्र कल्पतरौ 'ज्ञानं साधनेनोपलक्षितम्' 'ज्ञानेन साधनेनोपलक्षितम्' 'ज्ञानेनोपलक्षितम्' इति पाठत्रयं परिमले अनूद्य व्याख्यातम्।

२. तद्व्याचिकीर्षावदिति टीकागतः तच्छब्दः ज्ञानविषयतया पूर्वप्रकृतनामरूप-परः। कल्पतरौ तद्विषयनामरूपव्याचिकीर्षावदिति तच्छब्दः ज्ञानपरः। ज्ञानविषयीभूत-नामरूपविषयकव्याचिकीर्षावदित्यर्थः। कल्पतरौ व्याचिकीर्षाया नामरूपविषयकत्वकथ-नात् टीकागतः तद्व्याचिकीर्षेति तच्छब्दः नामरूपपर इति सूचितमित्यर्थः।

३. अत्राभोगे अशुद्धिर्भाति कुण्डलितभागे, विद्वद्भिश्शोधनीयम्। शोधनाय विषय-शुद्धिरुच्यते—कल्पतरौ 'उत्पन्नव्याचिकीर्षया नामरूपप्रपञ्चस्य व्याप्तिरभिजायत इत्युक्ता।' इति पाठः। अन्नपदेन उक्तस्य स्थूलप्रपञ्चस्य प्रथमं स्वरूपतः जनिर्न भवति। किंतु व्या-चिकीर्षाविशिष्टवेषेण। व्याचिकीर्षा जायत इति भावः। व्याचिकीर्षाव्याप्तिः व्याचिकीर्षा-विषयीभावः भवतीति यावत्। अन्नादित्यत्रापि, व्याचिकीर्षितान्नानन्तरं अन्नव्याचिकीर्षान-न्तरमित्यर्थः। तदनन्तरं सूक्ष्मभूतसृष्टिः, ततो हिरण्यगर्भसृष्टिः। इति प्रकृते भामती-कल्पतर्वोर्विवक्षितम्। एतादृशार्थालोचनपूर्वकं ग्रन्थशोधनं कर्तव्यमिति प्रार्थ्यते।

शङ्कां निराकर्तुं टीकायां–साधारणमित्युक्तम्। तदयुक्तम्। सूक्ष्मभूताना-(भूतसूक्ष्माणा)मपि साधारणत्वात् इत्याशङ्क्य, भोग्यत्वेन साधारणत्वं प्रसिद्धान्न-गुणयोगः। तच्च नामरूपप्रपञ्चस्यैव। भूतसूक्ष्माणामभोग्यत्वात्, 'नामरूपे व्याक-रवाणी'ति भोगार्थं व्याचिकीर्षितनारूपव्याकरणस्यैव प्रतिज्ञातत्वाच्च। अतः प्रथम-
P. 166-4 श्रुतान्नशब्दस्वारस्यानुरोधादेव श्रुत्यर्थो युक्त इत्याशयेनाह—अन्नशब्देनेति। अन्नप्राणयोः पौर्वापर्यलक्षणः क्रमोऽपि [व्यचिकीर्षा]व्याप्तिमादायैवेत्याशयेनाह—व्याचिकीर्षितेति।

ननु हिरण्यगर्भस्य सूक्ष्मभूतशरीराभिमानित्वात् कथं तत्सृष्ट्यभावे हिरण्यगर्भसृष्टिरित्यत आह—हिरण्यगर्भेति। तथा च अन्नात् भूतसूक्ष्माणि, ततः प्राण इति श्रुत्यर्थ इति भावः। ननु नामरूपप्रपञ्चव्याचिकीर्षायामेकदैव सर्वं किमिति नोत्पद्यत, इत्याशङ्कां निराकर्तुं दृष्टान्तकथनमित्याह—समुदाय इति। समष्टीति। लोकसृष्ट्यनन्तरभावित्वात् व्यष्टिमनसामिति भावः। कारणे कार्योपचार इत्याशयेनाह—तत्कारणमिति यावदिति। सप्तमी निमित्ता-
P. 166-10 र्थेति। कर्मस्विति सप्तमी 'दण्डे सति घट' इत्यादाविव कारणत्वपरेत्यर्थः।

ननु यस्येत्यादिवाक्ये सृष्टिसाधनत्वेन प्रसिद्धं तपो यस्य ज्ञानमेव, न त्वायाससाध्यं क्रियारूपमित्येतावति वक्तव्ये कथं ज्ञानमयमित्युक्तम्। तपसो धर्मविशेषस्य ज्ञानविकारत्वासिद्धेरित्याशङ्क्य, विकृतं ज्ञानमेव ज्ञानमयशब्देन
P. 167-1 विवक्षितमित्याह—ज्ञानमयमिति। इहापीति। तत्प्रसङ्गमाशङ्क्य कारणा-र्थकत्वमाहेत्यर्थः। ननु पूर्वस्मादित्यनेन कथं कारणत्वलाभः? लाभे वा कथं तस्य श्रुत्यर्थत्वम्? तद्वाचकपदादर्शनादित्यत आह—नियतेति। तच्छब्दार्थ इति। पञ्चम्यन्ततच्छब्दार्थ इत्यर्थः। ततश्च नानन्तर्ये पञ्चमी। किं तु हेतुत्व इति भावः। जायमानस्य ब्रह्मणः कारणवैलक्षण्यप्रदर्शनार्थमेतदिति विशेषण-मिति व्याचष्टे इत्याह—नियतेति।

ननु स्थूलसूक्ष्मात्मकनामरूपप्रपञ्चसृष्टेः पूर्वमेवोक्तत्वात् नामरूपमिति
P. 167-3 पुनरुक्तमित्याशङ्क्य, महाभूतसृष्ट्यनन्तरभाविनामरूपार्थकत्वमाह—नामेति।

---

१. भोग्यत्वेन सर्वप्राणिसाधारण्यरूपप्रसिद्धान्नगुणयोगः 'नामरूपे व्याकरवाणि' इति व्याचिकीर्षाविषयत्वेनाम्नाते स्थूलप्रपञ्च इव भूतसूक्ष्मेषु नास्तीत्यतः तत्स्वारस्यानु-सारेणैवं योजना आश्रितेति भावः' इति परिमलम्।

अयथार्थोपदेशमात्रस्य[1] न मुक्तिविरोधित्वमित्यत आह—**अयथाभूतेति**। प्राय- P. 167-4
पाठस्य प्रमाणत्वाभावेन, वाक्यशेषवत् संशयनिवर्तकत्वमेवेत्यत्र नियामकमाह—
**द्वितीये स्थितमिति**। **वत्सनिकान्ताः**—वत्सप्रियाः।

अयमालभतिर्यजिमत्कर्मपरः, प्राणिद्रव्यसंयुक्तालभतित्वात्, वायव्य-
वाक्यगतालभतिवत्, इत्यनुमानेन पूर्वपक्षमाह—**वायव्यमिति**। ईषामालभेते-
त्यादौ व्यभिचारवारणाय प्राणिद्रव्येति विशेषणम्। अनुमाने द्रव्यदेवतादियोगित्व-
मुपाधिरित्यभिप्रेत्य, तस्य साध्यव्यापकतां दर्शयति—**वायव्यादेरिति**। **संज्ञप-
नेति**। यद्यप्यालभतिः स्पर्शमात्रवाची। तथापि संज्ञपनेऽपि दृश्यते—'अश्वा-
लंभं गवालंभं वर्जयेत्' 'पशुमालभ्य पुरोडाशम्' 'तान् पर्यग्निकृतानुत्सृजति
ब्रह्मसाम्न्यालभते' इत्यादिलौकिकवैदिकप्रयोगादिति, मनसि निधाय यथोक्तसाध-
नाव्यापकत्वं दर्शयति—**इह तु नेति**। P. 167-8

नन्विहापि द्रव्यं श्रूयते। अग्नीषोमीयविध्यन्तप्रवृत्त्या देवतापि लभ्यते।
तथा च साधनव्यापकत्वान्नोपाधित्वमित्याशङ्क्य, तर्हि देवतालाभानुसन्धानेन
यागपरत्वम्, स्पर्शनलालितस्य वत्सस्य गोप्रस्नावनेन दोहनोपयोगानुसन्धानेन
संस्कारपरत्वं वेति विशये, 'गां दोग्धि' 'वत्समुपावसृजति' 'दोग्ध्योपसीदति'
इत्यादिसंस्कारकर्मप्रायपाठान्निर्णय इत्याह—**किं तु गोदोहनेति**। **अयन-
आश्रय इति**। मदीया बान्धवा देशान्तरे तिष्ठन्तीत्येवं तान् ब्राह्मणानाश्रित्य,
स्वस्य ब्राह्मण्यं प्रकटयति स्वयं तु तच्चिह्नरहित इत्यर्थः। **न त्वचेतनमिति पूर्व-
टीकया** पौनरुक्त्यं परिहर्तुमाह—**[पातञ्जलादिमतेऽपीति। टीकायां—
जगदिति]** महदहंकारादिकार्येत्यर्थः।

**ननु तेषामित्यादिटीका** न युक्ता। योगिमते कार्याणामुपादानभेदान-
भ्युपगमादित्याशङ्क्य, **तेषां कार्याणां योगिमते अधिष्ठातुरीश्वरात्, काणा-
दमते उपादानाच्च भेदेन कार्यत्वादित्येवं** व्याचष्टे—**तन्मत इति**। ततः P. 168-1
किमित्यत उक्तं **टीकायां—कार्याणां चेति**। तद्वाक्यम्, निमित्तकारणेन
उपादानकारणेन च कार्याणामभेदस्यैव श्रुतावुक्तत्वेन **कारणेन सह भेदा-
भावादित्येवं** व्याचष्टे—**श्रुतौ चेति**। असदुपादानत्वनिराकरणपूर्वकं चेतनो- P. 168-2

---

१. प्रतीकोपासनाद्युपदेशस्य मुक्तिविरोधित्वाभावादिति भावः।

पादानत्वं साधयितुं कारणस्य सत्वोक्तिरिति परिहरति—इत्याशङ्क्याहेति।

P. 168-2 अधिकरणानुक्रमण इति। न च प्रधानं परमाणवो वेति टीकायामुक्त इत्यर्थः। बहु स्यामिति श्रुत्युपन्यासस्य प्रयोजनमुक्तम्—टीकायां बहु स्यामिति चेत्यादिना। तत्र तेनेत्यस्य कथनेनेत्यर्थकत्वं दर्शयति—चेतनेति।

तेजःप्रभृतेरिति भाष्ये तेजःप्राथम्यकीर्तनं छान्दोग्ये त्रिवृत्करणोपयोगितया तेजोऽबन्नानां त्रयाणामेव निर्दिष्टत्वेन तत्र च तेजःप्राथम्यात् तदभिप्रायमिति व्याख्यातुं-यद्यपीत्यादिटीका। सा न युक्ता। छान्दोग्ये वियदधिकरणन्यायेन, श्रुत्यन्तरश्रुतवियदादिसृष्ट्युपसंहारात्। अन्यथा श्रुत्योर्विरोधापरिहारात्। त्रिवृत्करणे तेजसः प्राथम्येऽपि सृष्टौ तदसिद्ध्या, तेजःप्रभृतेः स्रष्टृत्वमिति भाष्यासमर्थनात्, छान्दोग्यस्यापि पञ्चीकरणपरत्वेन, तत्रापि तेजः-
P. 168-8 प्राथम्यासिद्धेश्चेत्याशङ्क्य, तात्पर्यमाह—आकाशोपक्रमेत्यादिना। अविरोधमाहेति। सृष्टावाकाशप्राथम्यं तैत्तिरीयकादिषु। छान्दोग्ये तु त्रिवृत्करणे तेजःप्राथम्यमिति वियदधिकरणसिद्धान्ताभावेऽपि न विरोध इत्यर्थः। स्वरूपोत्पत्तावपीति। तथाच भाष्यमुपपन्नमिति भावः।

P. 168-7 यदुक्तं छान्दोग्येऽपि पञ्चीकरणमेव विवक्षितमिति। तत्राह—संप्रदायाध्वनेति। युक्तिविरोधे संप्रदायोऽकिञ्चित्कर इति भावः। युक्तिविरोधमेवाह—पृथिवीति। किं शुद्धानां भूतानां भूतान्तरैकदेशसंसर्गमन्तरा व्यवहारजनकत्वं न संभवतीति व्यवहारसिद्ध्यर्थं नानारूपत्वकृतिरिष्यते? उत भूतान्तरसंसर्गेण न गुणो नापि दोषः। किन्तु श्रुतिबलान्नानात्वकृतिरिष्यत इति विकल्प्य, प्रथमे भूतान्तरसंसर्गस्य विशिष्टकार्यजनकत्वे अतिप्रसङ्ग इत्युक्त्वा, तदजनकत्वे तत्संसर्गस्य निष्फलतया शुद्धैरेव व्यवहार इत्याह—अर्धभूयस्त्वत इति। द्वितीये त्रिवृत्करणमेव सिद्ध्यतीत्याह—अनपेक्ष्येति। प्रसङ्गात् पञ्ची-
P. 169-1 करणप्रकारमपि दर्शयन् त्रिवृत्करणं टीकोक्तं दर्शयति—पञ्चीकरणमेवमित्यादिना।

तद्यथेत्यादिटीकायाः योग्यतया (परमो) भाष्योदाहृतश्रुतिव्याख्यानत्वमित्याशयेनाह—ब्रह्म चतुष्पादिति। एकैकस्मिन् पादे चतुरवयवत्वकल्पनायाः
P. 169-5 प्रयोजनमाह—पशोरिति। अष्टाशफमित्येतद्व्याख्यानार्थं टीकायां—तदर्धं शफ इत्युक्तम्। एवं व्याख्यातं भाष्योदाहरणं, न प्रश्नोपनिषदभिप्रायेण। तत्र

प्राणादिनामान्तानामेव कलानामुक्तत्वात्। नापि छान्दोग्याभिप्रायेण, तत्र 'स ईक्षांचक्रे इत्यादेरभावादित्याक्षिपति—**इदमुदाहरणमिति**। ईक्षणपूर्वकं सृष्टि- P. 169-6 प्रतिपादकवाक्योदाहरणपरं भाष्यम्, न तु यथाश्रुताभिप्रायमिति द्योतयितुं तथा व्याख्यानमिति समाधत्ते **तस्मादिति**। उदाहृतं छान्दोग्यवाक्यमित्यर्थः।

एवमपि छान्दोग्ये षोडशकलविद्यायामीक्षणाश्रवणात् सृष्ट्यश्रवणाच्च कथं न्यायतो वा तस्योदाहरणत्वमित्यतो भङ्ग्यन्तरेण समाधत्ते—**अथवेति**। P. 169-10 प्रश्नोपनिषद्वाक्यमेवोदाहरणम्। न च तत्रोक्तस्य ब्रह्मण उपास्यत्वविरोधः। तस्यैव छान्दोग्ये उपासनाविधानात् सृष्टिश्रुत्युपजीवनेनोपासनाविधिप्रवृत्तेः। न च कलाभेदः, प्रश्नोपनिषद्गतानामेव छान्दोग्ये कीर्तनात्। न च सामस्त्येन कीर्तनापत्तिः अनुपयुक्तानामकीर्तने दोषाभावात्। तस्मात् दिगाद्यवयवत्वेनोपास्यं **षोडशकलं प्रस्तुत्याह—'स ईक्षांचक्रे' इतीत्येवं भाष्यं व्याख्यातुं टीकेत्याशयेनाह—परब्रह्मेत्यादिना**।

**सगुणनिर्गुणत्वेनेति**। छान्दोग्ये सगुणविद्या, प्रश्ने निर्गुणविद्या, 'स यथेमा नद्य' इत्याद्युत्तरसन्दर्भेण सर्वोपाधिप्रत्यस्तमयेनामृतत्वफलकीर्तनादिति भावः। **कियन्तः समा इति**। उभयत्र कण्ठोक्त्या केचन समा इत्यर्थः। P. 169-14 **उपसंह्रियते** पुरस्क्रियते। **उपयोगि त्विति**—उपसंह्रियत इत्यनुषङ्गः। श्रुतिगतकलाशब्दस्वारस्यानुरोधेनैवं व्याख्यातं **टीकायामित्याशयेनाह—एवं चेति**। टीकायाम्—श्तिपा धातुस्वरूपमुच्यते, 'इक्श्तिपौ धातुनिर्देशे वक्तव्या'विति स्मरणादिति भावः। **प्रयोगानुगम इति**। **यजतेरितिवदिति** P. 169-18 प्रयोगोदाहरणमित्यर्थः।

---

१. अत्र कल्पतरौ 'न्यायनिष्ठं शास्त्र' मित्यस्यायमर्थः—शास्त्रं, उत्तरमीमांसाशास्त्रं, न्यायनिष्ठं, वाक्यार्थनिर्णायकन्यायमात्रप्रतिपादकं, न तु वाक्यनिष्ठं, उपनिषद्भाष्यवत् प्रतिवाक्यमर्थनिर्णायकम्। क्वचिद्वाक्ये उदाहृतन्यायेन अनुदाहृतवाक्यानामप्यर्थोऽत्र निर्णेतुं शक्यते। न तु प्रत्येकं वाक्यान्युदाहृत्यार्थनिर्णयोऽत्रेति भावः।

२. कल्पतरौ 'तथापि पृथिवीन्द्रियमनःप्राणादयः कियन्तः समा उभयत्रापि' इति उक्तम्। अत्र मनःपदं संपातायातं, छान्दोग्ये मनसोऽश्रवणात्। कलासंग्राहककल्पतरुश्लोके शरीरकपदस्थानमित्यर्थः।

P. 170-1 दृष्टान्ते लाक्षणिकत्वं प्रकटयितुं आह—**सप्तमे स्थितमिति**। **शाका-दिष्विति**। ओदनेन भुजिक्रियाजननार्थमाकाङ्क्षितेष्वित्यर्थः। इतिकर्तव्यताऽवि-धेरिति सौत्रं पदं अकारप्रश्लेषेण व्याचष्टे—**तस्याश्च विकृतिष्विति**। **यजतेरिति** पदं व्याचष्टे—**सौर्यादीनामिति**। **पूर्ववत्त्वमित्यत्र** पूर्वशब्दः प्रकृ-तिविहितेतिकर्तव्यतापर इत्याशयेनाह—**दर्शादीति**। **व्यक्तिः**। ननु प्रधानाव-स्थायां रजस्तमसोस्सत्त्वेऽपि तदविवक्षया सत्वमात्रं विवक्षित्वा प्रधानं सर्वज्ञमुच्यत इत्युक्तत्वात्, कथं भाष्ये—**रजस्तमोव्यपाश्रयामित्यादिदूषणमित्याशङ्क्य**, किं तस्यामवस्थायां सत्वमात्रविवक्षया स्वरूपेण सर्वज्ञं प्रधानमित्युच्यते, उत कार्योपयोगि, (उत) अनभिव्यक्तमिति विकल्प्य, प्रथमं गुणवैषम्यप्रसङ्गेन निरा-कृत्य, द्वितीये, अनभिव्यक्तस्य, सत्त्वस्य कार्योपयोगित्ववदनभिव्यक्तयोः रजस्तमसो-स्तत्प्रतिबन्धकत्वस्यापि सद्भावात् न कार्योपयोगिसर्वज्ञत्वं प्रधानस्येत्येवं व्याचष्टे—

P. 169-10 **टीकायां—न चाव्यक्तेनेति**।

प्रधानस्य सत्वधर्मेण सर्वज्ञत्वे प्रागुक्तं योगिदृष्टान्तं विघटयितुं—**योगिना-मिति** भाष्यगतचेतनत्वादिति हेत्वभिप्रायमाह—**टीकायां—सत्वांशेति**। **अविद्या**—अनात्मन्यात्मबुद्धिः। **अस्मिता**, बुद्धिपुरुषयोरविवेकः। **रागः** सुखे तत्साधने वा स्पृहा। **द्वेषः**—दुःखे तत्साधने वा क्रोधः। **अभिनिवेशः** पूर्वजन्मवासनाधीनो मरणत्रासः। **अस्पृष्टस्य पुरुषस्यैवेति**। 'क्लेशकर्मविपाका-शयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति सूत्रलक्षितस्यैव 'निरतिशयं सर्वज्ञबीज'-मिति सर्वज्ञत्वकथनादिति भावः। **तदपि चेति** तच्छब्देन सार्वज्ञ्यं न परा-मृश्यते, किन्तु व्यवहितमपि मतमेव योग्यतया परामृश्यत इत्याशयेनाह—

P. 170-5 **न चैतदपीति**।

भाष्ये नित्यज्ञानक्रियत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यासंभवान्न ब्रह्मणः सर्वज्ञत्वमित्याक्षेपे, **इदं तावदित्यादिना** नित्यज्ञानत्वं ब्रह्मणः सर्वज्ञत्वे अनुकूलमित्युक्तम्। तदयुक्तम्। आक्षेपाननुगुणत्वात्। न च स्वरूपेण नित्य-त्वेऽपि उपहितरूपेण कार्यत्वात् कर्तृत्वं संभवतीत्येतत्परं **तद्भाष्यमिति** वाच्यम्। **ज्ञाननित्यत्व** इत्यादिना पुनश्शङ्कानुपपत्तेरित्याशङ्क्य, गूढाभिसन्धेरुत्तरं—**इदं तावदित्यादि**। अभिसन्धिमजानानस्य शङ्का—**ज्ञाननित्यत्व इत्यादि**। अभि-

सन्ध्युद्घाटनं—न, प्रततौष्ण्येत्यादि, इत्यभिप्रायेण व्याख्यातम्—**टीकायां—चैतन्यस्येत्यादिना।**

अत एव गूढाभिसन्धिरिति द्योतनार्थं **इत्यभिसन्धाय** एतदभिप्रायः **परिहरतीति** अभिप्रायस्य पुरुषविशेषणत्वमाश्रितम्। अन्ते च तदुद्घाटनपरत्वद्योतनार्थं इत्येतदभिप्रायमित्यभिप्रायस्य भाष्यविशेषणत्वमाश्रितमित्यभिप्रेत्य, तर्हि गूढाभिसन्धिभाष्यस्य किं प्रयोजनमित्याशङ्क्य, प्रकृत्यर्थमुख्यत्वानुरोधेन चरमप्रवृत्तप्रत्ययार्थकर्तृत्वं यथा कथंचित् नीयमानमपि न दोषायेत्यमुमर्थं सूचयितुं तद्भाष्यमित्याशयेनाह—**इदं तावदित्यादीति।** P. 170 6

विकल्पं दर्शयति—**सवितुरिति।** ईक्षतेः सकर्मकत्वात् कथं कर्माविवक्षेत्यतस्तदनुगुणमर्थमाह—**एवं चेति। ईक्षणं करोतीति।** प्रकाशं करोतीत्यर्थः। **न णिजन्त इति। असत्यपि कर्मणि सविता प्रकाशयतीति पाठ** इत्यर्थः। P. 171-7 श्रुतिगते **ऐक्षतेत्येकस्मिन् पदे** कथं कर्मविवक्षाविवक्षे विरोधादित्याशङ्क्य, प्रौढिवादयथार्थवादाभ्यामविरोधमाह—**ऐक्षत इत्यत्रेति।** अविवक्षाहेतुं प्रागुक्तं निरस्यति—**न खल्विति। योगिनां त्वित्यादिभाष्येणैव** प्रधानस्य सत्वधर्मेण P. 171-8 सर्वज्ञत्वे उदाहृतस्य योगिदृष्टान्तस्य विघटितत्वात् यत्प्रसादादिति भाष्यं व्यर्थमित्याशङ्क्य, पूर्वं प्रधाने दृष्टान्तवैषम्यमुक्तम्, इदानीं तदभ्युपेत्य योगिसार्वज्ञ्यं त्वन्मतरीत्यैव ब्रह्मसार्वज्ञ्यसाधकमुच्यत इति भाष्यभावमाविष्कुर्वन्नाह—**या तु प्रधानस्येति।**

**ईक्षणं कर्ममात्रमुपाधिमपेक्षते** इत्यन्वयः। **टीकायां—व्यतिरेकमुखेनेति।** नित्यत्वव्यतिरेकमुखेनेत्यर्थः। अनित्यत्वे कारणापेक्षोक्त्या, नित्यत्वे तदभावस्यानुक्तसिद्धत्वादिति भावः। **भाष्ये शरीराद्यनपेक्षतायामनावृतज्ञानत्वे च** मन्त्रयोरुदाहृतत्वात् [कथं] **टीकायां जगत्क्रियासंभवासंभवप्रतिपादनमित्याशङ्क्य,** जगच्छब्देन नामरूपोपाध्यवच्छेदो विवक्षित इत्याशयेन व्याचष्टे—**ज्ञानमेव बलमित्यादिना। लयलक्षणेति।** लीयते कृत्स्नं P. 172-3 कार्यजातमत्रेति, लयलक्षणा मूलाविद्या। **अनुक्रमणिकायामिति।** अधिकरणरचनायामित्यर्थः।

'स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति श्रुतिं व्याचष्टे—**यस्सदाख्य इति।** भवितृपरत्वमेव दर्शयति—**एत-** P. 173-1

P. 173-2 **दात्मकं जगदिति**। 'इदं सर्वमेष आत्मे'ति कथम् जडाजडयोस्सामानाधिकरण्यमित्याशङ्क्य, 'चोरः स्थाणु'रित्यादिवत् बाधायां सामानाधिकरण्यमिति स्फोरयितुं श्रुतौ परमात्मनः सत्यत्वमाह—**'तत्सत्य'मिति**। परमात्मनः सत्यत्वेऽपि, जीवस्य परमपुरुषार्थसिद्धौ किमायातमित्याशङ्क्य, सच्चिदानन्दब्रह्माभेदेन जीवस्य स्वरूपानन्दाभिव्यक्त्या, परमपुरुषार्थसिद्धिं दर्शयितुं श्रुतौ 'स आत्मे' त्युक्तम्। सामान्यरूपेण जीवस्य ब्रह्माभेद उक्तः। विशिष्य दर्शयितुं 'तत्त्वमसि श्वेतकेतो' इत्युक्तम्।

**तप्तपरशुग्रहणमोक्षदृष्टान्तेनेत्यादिभाष्यं** व्याचष्टे—**सत्येनेति**। **मोक्षवदिति**। चौर्यारोपान्मोचनवदित्यर्थः। **'अहमुक्थमस्मीति विद्या'दिति** श्रुतावुक्थशब्दार्थमाह—**उक्थं प्राण इति**। **अर्थवादकल्पितेन ज्वलनसादृश्येन क्रतौ प्रवृत्तः ज्योतिश्शब्द इति भाष्यं** प्रतीकतो गृहीत्वा व्याचष्टे—

P. 174-1 **अर्थवादेत्यादिना**। **क्रतौ** प्रथमयज्ञे **ज्योतिश्शब्दः** 'ज्योतिष्टोम' इत्येवं प्रयुक्तः। तत्र हेतुः—**ज्योतिष्ट्वेन रूपितेति**। **स्तुतिशब्दः** स्तोमपरः। कस्मिन् वाक्ये ज्योतिष्ट्वेन रूपिता इत्यत उक्त**'मेतानि वाव'**ति। 'त्रिवृत्पञ्चदश एकविंश' इति पूर्ववाक्यनिर्दिष्टाः स्तोमाः **एतच्छब्दार्थः**। केन गुणेन ज्योतिष्ट्वेन रूपणमित्यत उक्तं—**प्रकाशकत्वेनेति**। 'यो हि त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयती'त्याद्यर्थवादकल्पितेन प्रकाशकत्वेनेत्यर्थः।

'उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतविज्ञातं विज्ञात' मिति श्रुतिं व्याचष्टे—**हे श्वेतकेतो इति**। **तर्कतो येन मतेनान्यन्मतमिति पूर्वेणान्वयः**। 'कथं नु भगवस्स आदेशो भवती'ति श्रुतिं किंशब्दार्थं दर्शयन्नवतारयति—**अन्यज्ञानादिति**। 'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मिति श्रुतिः। तत्र मृत्पिण्डो मृत्पिण्डस्वरूपं, तेनेत्यर्थः। कथं मृत्पिण्डे ज्ञाते घटादिविकाराणां ज्ञातत्वमित्याशङ्कां निराकर्तुं श्रुतौ 'वाचारंभण'मित्युक्तम्। तद्व्याचष्टे—**यो विकार इति**। **यो विकारः स वाचा आरंभणमारभ्यमाणं स्पृश्यमानं भवतीत्यर्थः**।

अथवा वाचाया वागिन्द्रियस्यालंबनं विषय इत्यर्थः। तदेतदाह—**वागा-**

P. 175-2 **लंबनमिति**। तदभिप्रायमाह—**उच्यते परमिति**। अर्थस्य कथं वागालंबन-

त्वमित्यत उक्तम्—श्रुतौ **'नामधेय'मिति**। तदभिप्रायमाह—**नाममात्रमिति**। तर्हि कथं जलाहरणादिव्यवहार इत्याशङ्क्य, सत्येन मृत्स्वरूपेणैव कल्पितघटाद्याकाराकारितेन सर्वोऽपि व्यवहारो, यथा कल्पितभुजगाद्याकाराकारितेन रज्ज्वादिना भयकंपादिव्यवहार इत्याशयेनोक्तम्—श्रुतौ **'मृत्तिकेत्येव सत्य'मिति**। **इतिशब्दः** प्रकारार्थः। मृत्तिकादिप्रकारेणेत्यर्थः। P. 175-2

ततश्च घटादिकार्यापेक्षया मृत्तिकायाः सत्यत्वं, मृत्तिकादिकार्यापेक्षया तत्तत्कारणस्य सत्यत्वमित्येवं मूलकारणस्य सत्स्वरूपस्यैव सत्यत्वमित्यर्थः। एवं च कार्याणां कारणस्वरूपमेव पारमार्थिकं रूपमिति, मृदि ज्ञातायां सर्वं तत्कार्यं ज्ञातमिति, ब्रह्मणापि ज्ञातेन तदभिन्नानां जीवानां, तत्सत्ताव्यतिरिक्तसत्तारहिततया तन्मात्रस्वरूपाणां वियदादीनां च, ज्ञातत्वात् ब्रह्मविज्ञानेन सर्वविज्ञानमुपपद्यत इति भावः।

जीवस्य मनश्शब्दवाच्यत्वं न भवतीत्यतः **तद्भाष्यं** व्याचष्टे—**लक्ष्यो भवतीति**। कुत्रत्योऽयं जीवलक्षको मनश्शब्द इत्यत आह—**एवमेवेति**। नन्वार्थवादिकत्वात् स्वाप्ययस्य प्रधानेऽपि कथञ्चित् संभवात् नासौ तस्य सच्छब्दावाच्यत्वहेतुः इत्याशङ्क्य, श्रुतौ निर्वचनानां बहुलमुपलंभेन तत्र तात्पर्यात् भूतार्थवाद एवायमिति द्योतयितुं भाष्ये निर्वचनान्तरोपन्यास इत्याशयेनाह—**अर्थवादस्येति**। 'स वा एव आत्मा हृदि तस्यैतदेव निरुक्तं हृदयमिति तस्माद्धृदय'मिति श्रुतिं व्याचष्टे—**तस्येति**। 'आप एव तदशितं नयन्ते' 'तेज एव तत्पीतं नयते' इति श्रुतिं निर्वक्तव्यशब्दसंपृक्तोपक्रमप्रदर्शनेन व्याचष्टे—**'अशनाये'ति**। **एकवचनं इति**। इदमुपलक्षणम्। ङीपोऽभावोऽपि छान्दस इति द्रष्टव्यम्। अश्यत इत्यशः, तन्नयतीति कर्मण्यणि 'टिड्ढाणञि'त्यादिना ङीपा भवितव्यत्वादिति ध्येयम्। P. 175-3 P. 175-5

'यथाग्नेर्ज्वलतस्सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' इति श्रुतिं

P. 176-1 व्याचष्टे—**प्राणा इति**। **अनुग्राहका इति**। चक्षुराद्यनुग्राहका इत्यर्थः। 'स कारणं करणाधिपाधिप' इति श्रुतिं व्याचष्टे—**करणाधिपानामिति**।

॥ इति ईक्षत्यधिकरणम्[1] ॥

---

## ॥ अथ आनन्दमयाधिकरणम् ॥

सू०॥ आनन्दमयोऽभ्यासात् ॥ १२ ॥

सू०॥ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

सू०॥ तद्धेतुव्यपदेशाच्च ॥ १४ ॥

सू०॥ मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

सू०॥ नेतरोऽनुपपत्तेः ॥ १६ ॥

सू०॥ भेदव्यपदेशाच्च ॥ १७ ॥

सू०॥ कामाच्च नानुमानापेक्षा ॥ १८ ॥

सू०॥ अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥

P. 176-3 **सिद्धवत्कारेणेति**। तत्सिद्धवत्कृत्य करिष्यमाणाक्षेपोपयोगितया जन्मादिसूत्रमारभ्यैवानुवादः कृत इत्याशयेनाहेत्यर्थः। उत्तरग्रन्थसन्दर्भः किं प्रतिपादितब्रह्मस्वरूपविपरीतबोधिप्रमाणान्तरविरोधपरिहाराय ? किं वा तादृशवाक्यान्तरविरोधपरिहारायेति, विकल्प्य, क्रमेण दूषयितुं **तच्चेत्यादिटीकेति** सूचयितुं

---

१. 'ईक्षतेर्नाशब्दम्' इति सूत्रे हेतोः पक्षवृत्तित्वं नास्तीत्याशङ्का भवति। तत्समाधानमुच्यते—शिवार्कमणिदीपिकायां उपक्रमे—'न हि साक्षात् पक्षवृत्तिहेतुरेव सूत्रेषु व्यपदिश्यते। किं तु यथाकथंचित् पक्षवृत्तिहेतोरुपनायकोऽपि प्रायेण सर्वैरपि सूत्रकारैः हेतुतया निर्दिष्टो दृश्यते। सूत्रोक्तो हेतुः समानसंवित्संवेद्यतया पक्षवृत्तिहेतोरुपनायको भवत्येव' इत्युक्तम्। न्यायमंजर्यां जयन्तभट्ट एवमाह—'क्वचित् पुनः व्यधिकरणासिद्धोपि भवति गमक इत्येके, तद्यथा—अग्निमानेष देशः धूमोपलब्धेरिति प्रयुज्यते। तदोपलब्धेरात्मधर्मतया वैयधिकरण्येऽपि गमकता अस्तीति।' इति। अतः हेतोः पक्षवृत्तित्वसंपादनक्लेशो नातीवाश्रयणीय इति भाति।

प्रथमं कल्पमाशङ्कते—**वेदान्तानामिति । मोक्षसाधनत्वव्यावृत्तय इति ।** P. 176-7
अन्यथा तदुपदेशस्य निरुपाधिकोपदेशशेषता न स्यादिति भावः ।

ननु गुणानामप्युपासनाविषयतया गुण्यभेदेऽपि तद्भेदादपि भेदसंभवात् कथं शङ्केत्याशङ्क्य, गुणिभेद एवोपासनाभेदप्रयोजकः, न विषयभेदमात्रम् । तथात्वे प्रतिगुणमुपासनाभेदापत्तेरित्याशयेन तात्पर्यमाह—**गुणभेदेऽपीति । एकस्मिन् सर्वभूताश्रय इति टीकोक्तं** हेतुं प्रकटयन् शङ्काभिप्रायमाह—**स्थितेऽपीति ।** उपाधिविवक्षातदविवक्षाविवेचनार्थमुत्तरसन्दर्भ इत्युक्त्वा, अविशेषोक्तनिर्विशेषब्रह्मसमन्वयापवादार्थत्वमुत्तरसन्दर्भस्योक्तमित्याह—**अविशेषेणेति ।** P. 177-9 अपवादशङ्काया अप्रामाणिकत्वादाभासोक्तिः । **तदपवाद इति ।** अपवादापवाद इत्यर्थः । (यथाश्रुतसूत्ररीत्या) आनन्दमयवाक्यस्य जीवपरत्वव्युदासेन निर्विशेषब्रह्मपरत्वसाधनादिति ध्येयम् । **इतीति ।** एवमाद्यर्थः अध्यायशेष आरभ्यत इत्यर्थः।

पूर्वत्रेव प्रकृतेऽपि प्रायपाठोऽकिञ्चित्कर इति कथं पूर्वपक्षोत्थितिरिति शङ्कते—**नन्विति ।** विशयाभावसद्भावाभ्यां वैषम्यमिति परिहरति—**अत आहेति । सिद्धान्ताभावेनेति ।** सिद्धान्तोक्तप्रायपाठाप्रयोजकत्वाभावेनेत्यर्थः । P. 178-3 **टीकानुरोधेन प्राणमयस्य विकारत्वमुपपाद्य, भाष्ये अन्नमयं शरीरमनात्मानं अत्यन्तमूढानामात्मत्वेन प्रसिद्धमनूद्येत्यादिना,** शरीरप्राणादीनामेव कोशत्वज्ञापनात् तदनुरोधेन प्रकारान्तरेणोपपादयति—**अथवेति ।** एतदभिप्रायेणैव **टीकायां—न च सत्यर्थे स्वार्थिकत्वमुचितमित्युक्तम्[1] ।** यथासंख्याम्नानोपस्थितभृगुवल्ल्युक्तान्नाद्युपस्थित्या कथञ्चिद्विकारार्थो न संभवतीत्यर्थः । **विकारसन्निधेरिति ।** विकारार्थकमयट्प्रायपाठस्यापि विकारप्रत्यायनमुखेनानन्दमयशब्दस्य जीव[वि]शेष(त्व)ज्ञापकत्वात् सन्निधिप्रमाणत्वमुक्तम् । P. 179-1

ननु विषमो दृष्टान्तः । सिंहादीनामधिकबलत्वस्य प्रमाणसिद्धत्वेन देवदत्तस्य नरान्तरमपेक्ष्यैव बलवत्त्वमिति तत्र संकोचावश्यंभावेऽपि प्रकृते तत्संकोचे

---

१. यद्यपि टीकायां विकाररूपार्थे संभवति निरर्थकत्वपर्यायभूतं स्वार्थिकत्वं नोचितमित्येवोक्तम् । तथापि तस्य मुख्यविकारार्थे संभवति कथंचिद्विकारार्थवर्णनं नोचितमित्यपि अभिप्रायो वक्तुं शक्यते । एवं च प्राणाद्युपाध्यवच्छिन्नात्मनः कथंचित् प्राणादिविकारत्ववर्णनापेक्षया आध्यात्मिकान्नमयादिकोशानां आधिदैविकान्नादीन् प्रति मुख्यमेव विकारत्वं वर्णनीयमित्यभिप्रायः ।

मानाभावादित्याशङ्क्य, ब्रह्मणोऽप्यानन्दमयप्रतिष्ठात्वोक्त्या, ततोऽप्यान्तरत्वं गम्यत इत्याशयेनाह—यथा[1] बलवानिति। परमसिद्धान्तं[2] मनसि निधायाह—

P. 179-5 लिङ्गाभासमिति। श्रुतिमप्याहेति। शारीरशब्दस्य जीवे प्रचुरप्रयोगादिति[3] भावः।

न च सशरीरस्येत्यादिभाष्यं मयटः प्राचुर्यार्थत्वेऽप्यानन्दमयो न ब्रह्मेति पूर्वपक्षप्रदानार्थमिति व्याख्यातम्, तद्भाष्याननुगुणमिति शङ्कते—सशरीरस्येति। भाष्यमार्थिकार्थपरमिति परिहरति—तत्राहेति। तदेव दर्श-

P. 180-5 यति—एवमुक्ते हीति। गुणाकृष्टशक्तित्वात्[4] न विशिष्टविधिरित्याह—वसन्तकालेति। नन्वरुन्धत्यन्तराभावेन तद्दर्शनस्य मुख्यत्वेऽपि प्रकृते आनन्दमयादप्यान्तरस्य ब्रह्मणस्सत्वान्न मुख्यमान्तरत्वम्। किन्तु बलवान्देवदत्त इत्यादाविव सापेक्षमित्याशङ्क्य, पुच्छब्रह्मणो नानन्दमयान्तरत्वं, तदवयवत्वादित्याश[येन नासौ दोषः इत्यादि] (यः न) भाष्यं व्याख्यातुं न हीत्यादिटीकेत्याशयेनाह—देवदत्तादेरपीति।

इहापीति परिहाराभिप्रायमाह—मुख्येति। प्रियाद्यवयवयोगवच्चेति टीकायाः प्रयोजनं दर्शयन्नुपपादितत्वमर्थादित्याह—योऽपीति। तथान-

P. 180-7 न्दमय इति टीकायाः प्रयोजनमाह—एवं चेति। तथा च टीकायामानन्दमय इत्यत्र यो मयट्, तस्य प्राचुर्यार्थता भाष्ये उपपादितेत्यन्वयः।

---

१. कल्पतरौ 'यथा बलवान्' इति वाक्यात्पूर्ववाक्ये 'अन्नमयाद्यान्तरत्वेनोक्तम्' इति पाठः दृश्यते। अन्नमयाद्यान्तरत्वेन, उत' इति शोधनीयम्।

२. भाष्यकारीयं पुच्छब्रह्मवादसिद्धान्तमित्यर्थः। वृत्तिकारसिद्धान्ते तस्य लिङ्गत्वेन लिङ्गाभासत्वायोगात्।

३. सूत्रकारेणापि 'अनुपपत्तेस्तु न शारीरः' इत्यादौ जीवे शारीरशब्दप्रयोगादिति भावः।

४. अत्र वृत्तिकारसिद्धान्तप्रदर्शनवेलायां—भाष्यम्—'पर एवात्मानन्दमयो भवितुमर्हति, कुतः? अभ्यासात्। परस्मिन्नेव ह्यात्मनि आनन्दशब्दो बहुकृत्वोऽभ्यस्यते' इत्युक्तम्। अस्यार्थः—परमात्मान्वययोग्यः बहुवारमभ्यस्तः आनन्दशब्दः आनन्दमयान्वितो दृश्यते, तेन आनन्दमयः परमात्मेति निश्चीयते। किञ्च 'एतमानन्दमयमात्मानमुपसंक्रामति' इति मुक्तप्राप्यत्वेनोक्तः आनन्दमयः परमात्मेति ज्ञायते, इति।

(सूत्रभाष्यैमानन्दमयमिति वाक्यमित्यर्थः ।) भाष्यगतं व्याकरणसूत्रमुपादाय व्याचष्टे—तत्प्रकृतेति। प्रथमासमर्थादिति । प्रथमान्तात् समर्थादन्य- P. 180-8 निरपेक्षादित्यर्थः । वचनग्रहणेन वा कथं तल्लाभ इत्यत आह—तादृशस्येति । प्रकृते मयडित्येव सिद्धे वचनग्रहणात् प्रकृतग्रहणं लोकप्रसिद्धमयडभिधेयरूपव-त्प्रस्तुतपरमित्यवगम्यते इत्यर्थः ।

भाष्यमुल्लङ्घ्य भङ्ग्यन्तरेण सूत्रव्याख्याने हेतुमाह—मान्त्रवर्णिकमिति। तर्ह्यस्मिन् विवरणे काऽनुपपत्तिरित्यत आह—तत्रेति। मन्त्रब्राह्मणयोरिति P. 181-3 भाष्यानुरोधात् मान्त्रवर्णिकं ब्रह्मैव ब्राह्मणे गीयत इति सूत्रार्थो वर्णित इत्यवगम्यते । तन्मन्त्रप्रतीकग्रहणेन तदर्थाकथनान्न स्पष्टं ब्राह्मणत्वमानन्दमय-वाक्यस्य, नापि तदर्थप्रत्यभिज्ञया तद्ब्राह्मणत्वावगमः । विलक्षणत्वात् ।

---

१. शोधनीयमिदं वाक्यं शोधनप्रकारास्फुरणात् यथास्थितमेव कुण्डलान्त-र्निवेशितम् ।

२. 'विकारशब्दान्नेति चेत्' इति सूत्रभाष्ये 'प्रकृतिवचनादयमन्यः शब्दः विकारवचनः समाधिगतः 'आनन्दमय' इति, मयटो विकारार्थत्वात्' इति वाक्य-स्यायमर्थः—प्रकृतिवचनात्-विकारप्रतिसम्बन्धिवचनात् आनन्दशब्दात्—अयमन्यश्शब्दः विकारवचनः मयट् दृश्यते, न च स्वार्थे मयडङ्गीकारेण तस्य प्रकृतिभूतानन्दवाचक-त्वमस्त्विति वाच्यम् । तथा सति अर्थान्तराभावात् मयड्वैयर्थ्यप्रसंगात् । स्वार्थे मय-डभ्युपगमे 'आनन्द आत्मा' इत्यनेन पौनरुक्त्यप्रसंगाच्च । यद्वा—प्रकृतिरूपात् मयट्-प्रत्ययप्रकृतिरूपात्-वचनात् आनन्दप्रातिपादकात् इत्यप्यर्थो वक्तुं शक्यते। परंतु प्रकृति-वचनात् विकारवचनः - इति समभिव्याहारेण विकारवाची इतिवत् प्रकृतिरूपार्थवाची इत्यर्थः प्रतीयते, तेन पूर्वव्याख्यैव समीचीनेति भाति । तदा च मयटः विकारवाचित्व-सिद्धवत्कारेण प्रकृतेः प्रकृतिवाचित्वं उक्तमिति बोध्यम् । मयटः प्राचुर्यवाचित्वे प्रकृतेः प्रकृतिवाचित्वायोगात् । अथवा - प्रकृतिवचनात् प्रकृत्यर्थवचनात् स्वार्थवचनात् इत्यर्थः । नायं मयट् प्रकृतिवचनः, स्वार्थे मयट् नेत्यर्थः । तथा सति वैयर्थ्यप्रसंगादिति पूर्वोक्तो हेतुः । तथा च प्रकृतिवचनादित्यस्य अर्थत्रयं भवति । इति बोध्यम् । 'शालीन् भुङ्क्ते मुद्गैः'रित्यादौ प्रकृतिवाचिनः शब्दस्य विकारार्थकत्वं दृष्टं, श्रुतौ 'एकेन मृत्पिण्डेन विज्ञा-तेन' इत्यादौ विकारवाचिनः प्रकृतिवाचित्वं च दृष्टं, तद्वदत्र न भवति, आनन्दमय इत्यत्र प्रकृतिप्रत्ययरूपस्य शब्दद्वयस्य तदुभयवाचिनो दर्शनादित्यानन्दगिर्याचार्याः। 'प्रकृतवचना-दयमन्यः विकारवचनः' इत्यपि पाठान्तरम् । तदा प्राचुर्यार्थको नायं मयट्, अपि तु विकारवाचीत्यर्थः ।

न च 'ब्रह्मविदाप्नोति पर' मिति संग्रहवाक्यनिर्दिष्टब्रह्मतद्वेदनतदाप्यस्वरूपनिर्णयार्थावतारित'सत्यं ज्ञान'मित्यादिमन्त्रनिर्दिष्टत्रिविधपरिच्छेदराहित्यलक्षणानन्त्यगुहानिहितत्वादिप्रतिपादनार्थतया प्रवृत्तेरनुवाकशेषे 'तस्माद्वा एतस्मा' दिति सन्दर्भेण तच्छब्दनिर्दिष्टस्य ब्रह्मणः एतच्छब्देनापि निर्देशेन जीवब्रह्माभेदावगमात्, कार्यकारणभावोपपादनेन कार्याणां कारणव्यतिरेकेणासत्त्वावगमाच्चानन्त्यमुपपाद्य, गुहानिहितत्वोपपादनार्थं प्रवृत्तस्यास्य सन्दर्भस्य तद्व्याख्यानत्वं सूक्ष्मदृष्टया ज्ञातुं शक्यमिति वाच्यम्।

प्रवेशश्रुत्यैव गुहानिहितत्ववर्णनात्। तथा च भाष्यम्—'यच्च भूतानि सृष्ट्वा, तान्यनुप्रविश्य, गुहायामवस्थितं सर्वान्तर'मिति। कोशवाक्यं तु तद्वेदनोपायकथनपरम्। तथा च भाष्यम्—'यस्य विज्ञानाय अन्योऽन्तर आत्मा अन्योऽन्तर आत्मेति प्रक्रान्तम्' इति। पूर्वत्राप्यरुन्धतीनिदर्शनेन ज्ञानोपायकथनपरत्वमेवाविष्कृतम्। न चैतावतापि तद्व्याख्यानत्वं, तदपेक्षितार्थप्रतिपादकत्वमात्रेण तद्व्याख्यानत्वे उपनिषदन्तरस्यापि तथात्वापत्तेः।

अतः स्पष्टप्रत्यभिज्ञायामेव व्याख्यानव्याख्येयभावः। यथाकथञ्चित्प्रत्यभिज्ञायाः सर्वत्र सुलभत्वात्। अन्यथा भृगुवल्ल्यानन्दवल्ल्योरपि व्याख्यानव्याख्येयरूपतापत्तेः। मन्त्रब्राह्मणस्थले विशिष्य, स्पष्टप्रत्यभिज्ञायामेव व्याख्यानव्याख्येयभावदर्शनाच्च। अत एवोक्तं भाष्ये—मन्त्रब्राह्मणयोरिति। ततश्च व्याख्यानव्याख्येयभावाभावे मन्त्रोक्तमेव ब्राह्मणे वक्तव्यमिति, नियमहेत्वभावात् सूत्रासामञ्जस्यमित्यतः भङ्ग्यन्तरेण व्याचष्टे इत्यर्थः।

**सूत्रे[मन्त्र]पदानुरोधेन ब्राह्मणे** इत्यपि पदं लभ्यत इति सिद्धवत्कृत्य, कोशचतुष्कवाक्ये आनन्दमयवाक्ये च, **सूत्रकारेण** मन्त्रब्राह्मणशब्दप्रयोगे निमित्तमुक्तम् **टीकायामुपायोपेयभूतयोरिति**। तद्विवृणोति—**यथा मन्त्र इति**। ननु कोशवाक्ये विज्ञानमयस्यान्तरत्वमुक्तम्, आनन्दमयवाक्ये च आनन्दमयस्य, तत्कथमुक्तं प्रत्यभिज्ञानं? ब्रह्मानाश्रयत्वादित्याशङ्कां निराकर्तुं **परब्रह्मणीत्युक्तम्** [टीकायाम्]। तदयुक्तम्। प्रतिवाक्यमन्यशब्दश्रवणेन परस्परभिन्नेष्वेवान्तरत्वश्रवणादित्यत आह—**विज्ञानमयादीति**।

P. 181-4 P. 182-2

'येऽन्नं ब्रह्मोपासते' 'ये प्राणं ब्रह्मोपासते' 'विज्ञानं ब्रह्म चेद्वेद' 'आनन्दं ब्रह्मणो विद्वान्' इत्येवमन्नमयादीनां ब्रह्मत्वावगमात् तस्य चैकत्वादुप-

क्रमस्थब्रह्माभेदेन निर्दिष्टस्यात्मनः प्रतिवाक्यं श्रवणाच्च, प्रत्यग्रूपेण ब्रह्मैव निर्दिश्यते। तत्र च श्रूयमाणमन्यत्वं 'घटाकाशादन्यो मठाकाश' इत्यादाविव 'सविशेषणे ही'ति न्यायेन तत्तदुपाध्यन्यत्वपरमित्यर्थः। सर्वत्र ब्रह्मण एव निर्देशे विज्ञानमय एव तदुपदेशपर्यवसानं कुतो न स्यादित्याशङ्क्य, निराकरोति—न चैवमिति। आत्मत्वापत्तिरिति। अविवक्षितोपाधिब्रह्मत्वादित्यर्थः। तस्मादिति। P. 182-3
ततोऽप्यान्तरस्य निर्देशादयं तत्प्रतिपत्त्युपायतया विकृत एव निर्दिष्ट इत्यर्थः।

तर्हि भाष्यं कथं समर्थनीयमित्यत आह—भाष्येऽपीति। भाष्यस्य महाप्रकरणोपन्यासपरत्वे लिङ्गमाह—अत एवेति। मन्त्रब्राह्मणपरत्वे, व्याख्यानव्याख्येययोर्वैलक्षण्यं स्यादित्येव विपक्षे बाधकमुपन्यस्येतेति भावः। मन्त्रब्राह्मणयोश्चेति भाष्यमप्यन्यथेत्यादिवाक्यशेषानुरोधेन, मान्त्रवर्णिकब्रह्माधिकारादिति, प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गादिति च दूषणभाष्ये दर्शनाच्च, प्रकरणप्रदर्शनपरमेवेत्याह—मन्त्रब्राह्मणयोरिति। P. 182-5

तर्हि कथं भाष्यं त्यक्तं टीकाकृतेत्यत आह—सौत्रं त्विति। सूत्रे मान्त्रवर्णिकपदं विवक्षितमुख्यार्थकं कृत्वा, भाष्यं [न] तत्परमिति, मत्वा त्यक्तमित्यर्थः। अविवक्षितमिति क्वचित्पाठः। तस्मिन् पाठे, किमुभयोरपि व्याख्यानयोर्निर्दुष्टत्वं? नेत्याह—सौत्रं त्विति। तथा च सूत्रविरोधात् टीकाकृद्व्याख्यानमयुक्तमिति भावः। न च भाष्यकारपक्षेऽपि, मन्त्रपदस्य मन्त्रवत्प्रकरणपरत्वात् मुख्यार्थत्यागस्तुल्य इति वाच्यम्। तस्य मन्त्र (मात्र) परत्वमुखेनैव प्रकरणपरत्वात्। नच प्रकरणनिर्देशपरत्वे 'ब्रह्मविदाप्नोती'त्येतदुल्लङ्घ्य, मन्त्रग्रहणे को हेतुरिति वाच्यम्। तत्रैव स्पष्टं फलकीर्तनेन प्रकर(णि)णत्वावगमात्, सूत्रार्थनिर्णयस्य मन्त्राधीनत्वाच्च। तथा च भाष्यम्—'ब्रह्मविदाप्नोति पर'मित्युपक्रम्य, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यस्मिन् मन्त्रे यद्ब्रह्म प्रकृतं सत्यज्ञानानन्तविशेषणैर्निर्धारित'मिति।

अनेकहेतूपदेशे इति। इतरो जीवो नानन्दमयः अनुपपत्तेः। तस्य सर्वस्रष्टृत्वानुपपत्तेः। सृज्यमानवियदादिविकारात्मत्वानुपपत्तेरित्येवमनेकार्थकत्वेन वाक्यभेदापत्तेरित्यर्थः। सूत्रपदसूचितं परिहारमाह—सूत्रस्येति। आनन्द- P. 182-6

---

१. वृत्तिकारसिद्धान्तदूषणभाष्ये इत्यर्थः।

मयस्य जीवात् भिन्नत्वव्यपदेशो न ब्रह्मत्वसाधकः, अतिप्रसङ्गादिति शङ्कते—
P. 183-1 **नन्विति**। आत्मत्वे सति जीवभेदव्यपदेशः तत्साधक इति **परिहारटीका**-
भिप्रायमाह—**आनन्दमयो हीति**।

**जीवस्यापीति**। तथा चानन्दमयस्य जीवत्वेऽपि स्थूलोपाधिकस्य लब्धृत्वं सूक्ष्मोपाधिकस्य लभ्यत्वं च संभवतीति, न विरोध इति भावः। स्थूलसूक्ष्मोपाधिभेदस्य सत्वात्। **न त्वित्यादिपरिहारासामंजस्यमित्यत आह-स्वतन्त्रेति**। स्थूलसूक्ष्मोपाधिकयोः कथञ्चिद्भेदसंभवेऽपि अविद्यावच्छिन्नस्य जीवस्य न स्थूलसूक्ष्मोपाधिभेदेन भेदसंभव इति भावः।

P. 184-3 **पुच्छवाक्यं** विषयीकृत्य संशयादिकं दर्शयति—**ब्रह्मानन्दमयमिति**। **श्रुतिबाधेति**। ब्रह्मश्रुतिबाधप्रसङ्गादिति वदन्नित्यर्थः। **कथञ्चिदित्यनेन** प्राय-पाठानादरो विवक्षितः [इत्याह—]**उपेक्ष्यापीति**। सत्यमल्पत्वनिरूपितं प्राचुर्यं, तच्चाल्पत्वं प्राचुर्यस्य विशेषणत्वे व्यधिकरणसजातीयगतं भासते। 'प्रचुरब्राह्मणोऽयं ग्राम' इत्यादौ ग्रामान्तरगतेषु ब्राह्मणेष्वल्पत्वावगमात्। विशेष्यत्वे तु समाना-धिकरणविरोधिगतमेव भासते। 'ब्राह्मणप्रचुरो ग्राम' इत्यादौ तस्मिन् ग्रामे अब्राह्मणानामल्पत्वप्रतीतेः। 'प्रकाशप्रचुरः सविते'त्यादावपि प्रकाशविरोधिमेघा-द्यावरणकल्पिततमोऽल्पत्वमेव गम्यत इति सार्वत्रिकोऽयं नियम इत्यभिप्रेत्य परिहरति—**उच्यत इति**।

P. 186-3 मयडन्तस्थले कथं प्राचुर्यस्य विशेष्यत्वनिश्चयः? तत्राह—**तथा चेति**[1]। औत्सर्गिकं प्रत्ययार्थप्राधान्यं नेह त्याज्यम्। 'अन्नमयो यज्ञ' इत्यादावन्नप्रचुरो यज्ञ इत्यवगमादिति भावः। ननु पूर्वपक्षे कथं **मुख्यत्रितयलंघनम्**। आनन्द-मयादिशब्दानां मुख्यार्थत्वे बाधकाभावादित्यत आह—**मयड्विकार इति**। प्राचुर्ये तु लक्षणा। 'तत्प्रकृतवचने मय'डिति सूत्रस्य लाक्षणिकार्थमादायाप्युपपत्तेः
P. 187-1 अनेकार्थकत्वकल्पनायोगात्। तत्राप्यल्पत्वनिवृत्तिलक्षणा गण्डस्योपरि पिटका-तुल्या। **परब्रह्मणीति**। अवयवत्वयोग्ये सविशेषे तु न मुख्य इत्यर्थः। **न मयडर्थे इति**। ततश्च प्राचुर्यांशो लाक्षणिक इति भावः।

---

१. अत्र 'तथा चे'ति कल्पतरुवाक्ये 'आनन्दपदस्य विशेषणत्वात् तत्रापि शब्द-बलाद्विरोध्यनुवृत्तिः प्रतीयत इति दुर्निवारा दुःखानुवृत्तिः, मानान्तरेण तु' इति वाक्य-योजनायां सुबोधोऽर्थो भवति।

ननु चरमावयववाची पुच्छशब्दः। पक्षिणामपि पुच्छवत्त्वव्यवहारात्। तथा च पूर्वपक्षे स मुख्य इति अभिप्रेत्य शङ्कते—नन्विति। कोशानुरोधात् P. 187-3 प्रयोगबाहुल्याच्च लाङ्गूल एव मुख्य इत्याशयेनाह—लाङ्गूल इति। करचरणादि-सदृशे त्ववयवमात्रे पुच्छपदं न मुख्यमित्यर्थः। तात्पर्यग्राहकसत्वात् मन्मते लक्षणा ज्यायसीति वक्तुं आधारपरत्वे चेति टीकेत्याह—अपि चेति। अस्मिन् पक्षे आनन्दमयस्य सामर्थ्यलभ्यसर्वान्तरत्वलिङ्गविरोध इति शङ्कते—आनन्दमय-स्येति। सामर्थ्यलभ्यं सर्वान्तरत्वं ब्रह्मण एवेति परिहरति—अत आहेति। P. 188-1 श्रुतार्थापत्तिलक्षणं सामर्थ्यमपि ब्रह्मण्येवेत्याशयेनाह—अर्थादिति।

उत्क्रष्टव्य इति। बहुपाशके कर्मणीत्यर्थः। बहुवचनस्य गुणवाचक-त्वेन गुणत्वमाह—पाशगुणत्वेनेति। सूत्रं व्याचष्टे—उत्कर्ष इति। वेद- P. 189-1 विरोधे सूत्राणामध्याहारादिना कथञ्चिद्व्याख्यानमेव युक्तमित्यत्र संमतिमाह—तथा चेति। सूत्राणामन्यथानयनप्रकारं भाष्योक्तं विशदीकर्तुं आनन्दमय-शब्देनेत्यादिटीका। अपराण्यपि सूत्राणीत्यन्त्यभाष्यस्य प्रथमं व्याख्याने हेतुमाह—अल्पवक्तव्यत्वादिति। टीकायां—ब्रह्म पुच्छं प्रतिष्ठा इति P. 190-2 पठितव्यमिति। एतच्च यथोक्तविचारानुगुण्येन भाष्यं नेयमित्यस्योपलक्षणम्। P. 190-9

---

१. 'पुच्छोऽस्त्री लूमलाङ्गूलम्' इत्यमरसिंहः।

२. 'प्रतिष्ठापदलब्धाधारत्वमेव पुच्छपदेन दृष्टान्तमुखेन पुच्छवद्भावविशेषिततया लक्ष्यते श्रोतृबुद्ध्यवतारणाय। लोकेऽपि प्रातिस्विकशब्ददर्शितार्थे एव दृष्टान्तकथनं 'यो यो धूमवान् सोऽग्निमान् यथा महानस' इति दृश्यते' इति न्यायरक्षामणावुक्तम्। परिमलेऽपि पुच्छपदप्रतिष्ठापदयोस्सार्थक्यमुपवर्णितम्। एतेन पुच्छपदप्रतिष्ठापदयोः पौन-रुक्त्यप्रसंगेन भामतीदूषणं वार्तिकाख्यभाष्यव्याख्योक्तमपास्तम्।

३. 'वैदिकं जैमिनीयं च यत्र वाक्यं विरुद्ध्यते। यथाश्रुतगृहीतेऽर्थे तत्रेदमुप-दिश्यते॥ अध्याहारादिभिस्सूत्रं वैदिकं तु यथाश्रुतम्। नेयम्' इति श्लोकवार्तिके उक्तम्। तद्व्याख्यायां न्यायरत्नाकरे पार्थसारथिमिश्रेणाप्युक्तम्—'यत्र वेदसूत्रयोर्यथाश्रुत-गृहीतार्थयोर्विरोधः, तत्र वेदं यथाश्रुतं व्याख्याय सूत्रमध्याहारादिभिर्नेयम्। इदमनेन भाष्येण उपदिश्यते इति।' इति, 'वेदसूत्रविरोधे तु सूत्रस्यैवान्यथाकरणमिति' इति च। 'प्रधानभूतवेदविरोधे गुणभूतानां सूत्राणां अन्यथाकरणं प्रसिद्धम्' इति। 'न्यायाभासात् सूत्रकारबहुमानाच्च एवं श्रोतारो भ्राम्येयुः—नास्माकं वेदसूत्रयोः कश्चिद्विशेषः, वेदार्थनि-र्णये सूत्रमेवास्माकं प्रमाणं, अतः तत्र अध्याहारादि न कर्तव्यमिति, सूत्रानुरोधेन वेद एवा-ध्याहारादिभिः व्याख्येय इति च। तन्निवृत्तये भाष्यकार एवमाह' इति च।

तथा च, इतश्च 'ब्रह्म पुच्छं प्रतिष्ठे'त्यत्र ब्रह्मशब्दाभिधेयः स्वप्रधान एवात्मा, नेतरः, आनन्दमयावयवत्वाक्रान्तः। कस्मात्? अनुपपत्तेः। पुच्छं ब्रह्म हि प्रकृत्य श्रूयते—'सोकामयत' इत्येवं भाष्यं परिणमयितव्यमिति भावः। एवमुत्तरत्रापि द्रष्टव्यम्।

अनुवादद्योतकस्य चेच्छब्दस्य पुरोवादसापेक्षत्वात् पुरोवादं **विकारश-ब्दादित्यनेनो**क्तं प्रकटयितुमाह—**यदीति शेष इति**। ततश्च विकारस्या-नन्दमयस्य यदि ब्रह्म पुच्छमवयवः, तर्ह्यवयवश्चेत् कथं सर्वस्य कारणमुच्येतेति **टीकार्थ** इति भावः। ननु **न हीत्यादिटीका** न युक्ता। आनन्दमयवाक्य-स्योपासनापरत्वेन ब्रह्मण आनन्दमयविकारावयवत्वेन दृष्टिमात्रेण विकारत्वाद्यप्रस-ङ्गेन कारणत्वाविरोधात्। न च मुख्यावयवेष्वेव तद्दृष्टिः श्रुतौ विवक्षितेति वाच्यम्। पूर्वपर्यायनिर्दिष्टानामाकाशपृथिवीयजुरादिशब्दानां प्राणमयाद्यवयव-

P. 190-4 त्वायोगादित्यतः तात्पर्यमाह—**आनन्दमय इति**।

'तस्येदमेव शिर' इत्यादिना मुख्यैकदेशानामेव शिरआद्यवयवत्वकल्प-नात् आकाशपृथिवीशब्दाभ्यामपि तत्संबन्धिसमानोदानयोरेव ग्रहणम्। यजु-रादिशब्दैश्च तत्तद्विषयमनोवृत्तय उच्यन्त इति, सर्वत्राप्येकदेशानामेवावयवत्व-कल्पनात् ब्रह्मणोऽपि तथात्वे सर्वकारणत्वविरोध इत्यर्थः। ब्रह्मण आनन्दमय-

P. 191-1 विकारावयवत्वाभावस्य **हेतुत्वमितिशब्दोक्तं** स्पष्टयति—**कृत्वेत्यर्थ इति**। तस्यावयव इति षष्ठीसमासं वारयति—**तेन ब्रह्मणेति**।

॥ इत्यानन्दमयाधिकरणम् ॥

---

१. 'यदीति शेषः' इति प्रतीकं कल्पतरौ न दृश्यते। काश्यां मेडिकलहाल-नाम्नि यन्त्रालये मुद्रिते कल्पतरुकोशे टिप्पण्यां विकारजातस्येतीत्येतदग्रे—'अवयवो यदीति शेषः।' इति अधिकः पाठः इति लिखितम्। तत्पाठानुसारी आभोगग्रन्थः।

## ॥ अथ अन्तरधिकरणम् ॥

### सू० ॥ अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

### सू० ॥ भेदव्यपदेशाच्चान्यः ॥ २१ ॥

परमपुरुषार्थनिःश्रेयसहेतुनिर्विशेषब्रह्मप्रतिपत्तिफलके शास्त्रे सविशेषचिन्तायाः कथं सङ्गतिरित्यत आह—**निर्विशेष इति**। एवमपि कथं शास्त्रसंबन्ध इत्याशङ्क्य, चित्तैकाग्र्यद्वारा, शास्त्रप्रतिपाद्यब्रह्मात्मैकत्वप्रतिपत्तिपर्यवसानादित्याशयेनाह—**वशीकृत इति**। P. 192-1

ननु वेदान्तानामविशेषेण निर्विशेषब्रह्मसमन्वयरूपोत्सर्गापवादचिन्तारूपत्वादस्याश्चिन्तायाः कथं तदपवादापवादचिन्तानन्तर्यमित्याशङ्क्य, किमानन्दमयाधिकरणेन व्यवहितत्वादुत्सर्गस्य तेन कथमपवादस्य संगतिरिति पृच्छसि ? किं वा आनन्दमयाधिकरणं नेह सङ्गतमिति ब्रवीषीति विकल्प्य, प्रथमं निराकर्तुं पूर्वस्मिन्नित्यादिटीकाभिप्रायमाह—**समन्वयस्येति**। **सविशेषपरत्वं पूर्वपक्ष्युक्तमपोद्येत्यर्थः**। **प्रघट्टकसंगतिमिति**। अधिकरणद्वयात्मकप्रकरणसंगतिमित्यर्थः। उत्सर्गस्थापनार्थत्वादानन्दमयाधिकरणस्य न व्यवधायकत्वमिति भावः। द्वितीयमाशङ्क्य निराकरोति—**यद्यपीत्यादिना**। P. 192-4

निर्णीयत इत्यनेनान्वयभ्रमं वारयति—**आदित्येति**। **रूपवत्त्वेति**। हिरण्मयशरीरादिरूपवत्त्वेत्यर्थः। **रूपवत्त्वादीत्यादिपदेन** मर्यादादिकं गृह्यते। P. 193-3

---

१. अस्मिन्नधिकरणे विषयवाक्ये 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्यंशस्य छान्दोग्यवाक्यकारैः ब्रह्मनन्दिभिर्बहुष्वर्थेषु प्रदर्शितेष्वपि, अक्लिष्टो निर्दुष्टोऽर्थः परिगृह्य प्रकाशितो विशुद्धविज्ञानैश्शुचिहृदयैर्भगवत्पादैः छान्दोग्योपनिषद्विवरणे। छान्दोग्यवाक्यकारो ब्रह्मनन्दी तद्भाष्यकारो द्रविडाचार्यश्चोभावपि भगवत्पादैर्बहुषु स्थलेषु प्रमाणतया प्रदर्शितौ अद्वैतसंप्रदायावलम्बिनौ प्रचीनाचार्यौं। ताभ्यां क्रमेण छान्दोग्योपनिषद्विवरणात्मकौ वाक्यतद्भाष्यनामकौ ग्रन्थौ कृतावुदाहृतौ च तत्र तत्र प्राचीनाचार्यैः। तदपि ग्रन्थद्वयं लुप्तं संप्रति न समुपलभ्यते कुत्रापि। ब्रह्मसूत्रोपरि स्वतन्त्रतया वा, परैः कल्पितबोधायनीयविस्तृतब्रह्मसूत्रवृत्तिसंक्षेपात्मकतया वा, ताभ्यां कृतः कोऽपि ग्रन्थः नाद्यावधि समुपलभ्यते। नापि प्रमाणिकैरुदाहृतः कुत्रापि। एवं वस्तुतत्वे सर्वलोकविदिते स्थितेऽपि, भगवत्पादीयविशुद्धलोकहितसत्संप्रदायप्रद्वेषिभिः कैश्चित्, 'विबुधानपि मोहमावहन्तो वितथैतिह्यसहस्रवर्णनेन।

P. 193-5 **अन्यथासिद्धिमाहेति।** कर्माधिकाराभावकथनमुखेनादित्यजीवेऽपि संभवमाहेत्यर्थः। अन्यपरादर्थवादान्नाधिकारसिद्धिरित्याशयेन परिहरति—**तन्नेति।** विपक्षे दण्डमाह—**गवामिति। सत्रमासतेति सत्रासनश्रवणात्।** सत्रानुष्ठानश्रवणादित्यर्थः। यद्यपि श्रुतौ **गाव** इति स्त्रीलिङ्गनिर्देशः, 'अशृङ्गास्सतीरिति वाक्यशेषात्। तथाप्येकशेषेण पुङ्गवानामपि तत्र निर्देशात् तन्मात्राभिप्रायेण तेषामित्युक्तम्।

एवमपि ज्ञानोपासनयोरिव निषेधेऽपि स्यादधिकार इत्याशङ्क्य, निराकरोति—P. 193-8 **न चेति। तदेवेति।** फलानारंभकत्वमेवादित्यगतपाप्मोदयस्य निमित्तमस्त्वित्यर्थः। ततश्च पाप्मभ्य उदितः तज्जनितफलासंस्पृष्ट इति श्रुत्यर्थ इति भावः। ननु देवानामपि निषेधाधिकाराभ्युपगमे, कथं **कर्मानधिकृत इति टीकेत्यत आह—कर्मेति।** तथा च पापफलाभोक्तृत्वमपि **कर्मानधिकृत इत्यनेन** प्रदर्श्यत इत्यर्थः। नित्यत्वस्य **भाष्यानुक्तत्वं** व्यावर्तयति—**नित्यत्वमितीति।** अनित्यस्य स्वकारणप्रतिष्ठत्वनियमेन स्वमहिमप्रतिष्ठत्वायोगात्, तेन श्रुतिसिद्धेन नित्यत्वं लक्ष्यत इत्यर्थः।

नित्यस्यापि साधारत्वदर्शनात् न तेनानाधारत्वसिद्धिरिति शङ्कते—P. 194-2 **कथमिति।** उपादानात्मकाधाररहित्ये नित्यत्वं हेतुरित्याशयेन परिहरति—**तत्राहेति।** तर्हि पूर्णस्य ब्रह्मणः कुण्डबदरयोरिव केनचिदाधाराधेयभावायोगात् नित्यत्वेनैवानाधारत्वसिद्धौ सर्वगतत्वविशेषणं व्यर्थमिति शङ्कते—**तर्हीति।** लोके नित्यत्वसर्वगतत्वयोरुभयोरप्यनाधारत्वे तन्त्रत्वादिहापि तत्पुरस्कार्यमिति द्योतयितु-

---

विनयाभिनयात् खलाः किलामी विजयन्ते कपटालया जगन्ति ॥' इति विश्वगुणादर्शग्रन्थोक्तरीत्या ऐतिह्यकल्पनाशरणतया पौनःपुन्येन यत् किंचित् अद्वैतसंप्रदायदूषणतया कथ्यते लिख्यते मुद्राप्यते पामरेषु प्रचारः क्रियते चेति नैतावता प्रामाणिकाः क्षोभं प्राप्नुयुरिति सविनयमावेद्यते ॥

१. 'ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री' इत्यनुशासनात् 'पुमान् स्त्रिया' इत्यस्यापवादरूपात् स्त्रियाशिष्यमाणत्वेन श्रुतौ 'अशृङ्गास्सतीरित्युपपद्यते' इति परिमले ॥ जायापत्योस्सहाधिकारेऽपि कर्मसु पत्युर्मुख्याधिकारात् पुङ्गवानां पृथक् तेषामिति निर्देशकरणमिति च परिमले।

२. सायणाचार्या अपि वेदभाष्ये अर्थवादमवलम्ब्य देवानां कर्माधिकारं भारतीविलासवदेव प्रोचुः ॥

मेव तद्विशेषणमित्याशयेन परिहरति—अत आहेति। नित्यमप्यसर्वगत- P. 194-3 मित्ययुक्तम्, सिद्धान्ते तदभावादित्यतो मतान्तरत्वद्योतिचेच्छब्दाध्याहारेण व्याचष्टे—नित्यमपीति। तदेवेति। अधरोत्तरयोराधाराधेयताप्रसिद्धेरिति भावः।

तर्हि सर्वगतत्वेनैव चारितार्थ्ये किं नित्यत्वेनेत्याशङ्कां अविद्यादेरपि सर्वगतत्वात् तद्व्यावृत्त्यर्थं नित्यत्वमप्यावश्यकमित्युपसंहारव्याजेन निरस्यति—तस्मादिति। बहुत्वेन बलवत्त्वं सूचयितुं रूपवत्त्वादिभ्य इति बहुवचनम्। अन्यथासिद्धबहुत्वमप्रयोजकमिति परिहरति—अत आहेति। श्लोके सर्वहेतुत्वं सर्वोपादानत्वम्, ततश्च सार्वात्म्यं ब्रह्मण उपपादितमित्याशयेनाह—ब्रह्मणीति। विकारवदिति विशेषणस्य प्रयोजनमाह—रूपवत्त्वादेरिति। P. 194-6 तत इति। यतोऽपादाने पञ्चमी, तत एवं टीकार्थ इत्यर्थः। टीकायां संभवे सतीत्यस्य पूर्वत्रान्वयः।

टीकायां—समुदाचारेऽपीति। आदित्याधिकारप्रापकविद्याकर्मणोः P. 195-2 कुर्वद्रूपत्वेऽपीत्यर्थः। रूपभेदेनेत्यस्य व्याख्यानं रूपविशेषेणेति। अन्वयं प्रदर्श्य, तदन्तर्गतस्य विकारस्य चेति वाक्यस्य प्रयोजनं दर्शयति—नन्वित्यादिना। मिथ्यावस्तुज्ञानजनकत्वेऽपि शास्त्रस्य प्रामाण्ये अप्रामाण्यमेव न स्यादिति शङ्कते—अप्रामाण्यमिति। मिथ्याबुद्धिमिति। बुद्धेश्च मिथ्यात्वम- P. 195-3 यथाभूतवस्तुविषयकत्वेन। ततश्च ब्रह्मनिर्मितं मायामयं जगत् सत्यत्वेनाबोधयच्छास्त्रं अप्रमाणं नेत्यर्थः। तां कुर्वत् इति तच्छब्दस्य बुद्धिपरत्वेन व्याख्याने

---

१. 'ननु 'तां कुर्व'दित्ययुक्तं, न हि शब्दः स्वयं मायां करोतीत्याशङ्क्य तां कुर्वदित्यनेन अनुवादत्वं विहाय स्वातन्त्र्येण मिथ्याबुद्ध्युत्पादकत्वं विवक्षितमिति व्याचष्टे-मायां मिथ्याबुद्धिं कुर्वदिति।' इति परिमले उक्तम्। टीकायां ब्रह्मनिर्मितं मायारूपमनुवदत् शास्त्रं अशास्त्रं न भवति, अपि तु तां कुर्वत् शास्त्रमशास्त्रं भवति, नतु तां करोति शास्त्रं, तस्मात् नाशास्त्रत्वप्रसंगः इत्युक्तम्। शब्दादर्थाच्चायमर्थः टीकायां लभ्यते। तत्र ब्रह्मनिर्मिताया मायायाः शास्त्रेण स्वयं करणं न प्रसक्तं, अतो न निषेध्यम्। अतः मायापदस्य मिथ्याबुद्धिपरतया कल्पतरौ व्याख्या। अनुवादत्वं विना स्वातन्त्र्येण मिथ्याबुद्धिकरणे अशास्त्रत्वं स्यात्। न तु तां मिथ्याबुद्धिं स्वातन्त्र्येण शास्त्रं करोति, उत्पादयति। अपि तु प्रागेव सिद्धां मिथ्याबुद्धिं अनुवदति, अतो नाशास्त्रत्वप्रसंगः। इति टीकार्थः टीकायामेव 'अनुवदन्, कुर्वत्' इति पदद्वयसूचितः केवलं मायापदस्य मिथ्याबुद्धिपरत्वमात्रं वर्णयता कल्पतरुकृता प्रकाशितः। तत्र कल्पतरौ 'ननु तां करोति' इत्यस्य मिथ्याबुद्धिं स्वातन्त्र्येण शास्त्रं न करोतीत्येवार्थः। अयमर्थः टीकायामर्थादुक्त एव। ननु तच्छब्दस्य बुद्धिपरत्वेन

बीजमाह—न त्विति । टीकायामन्तर्यामी भेदेनोक्त इति । 'य आदित्ये तिष्ठन्नादित्यादन्तर' इत्यादिश्रुत्यन्तर इत्यर्थः ।

P. 195-12 टीकायां—धनसनय इति । धनवन्त इति । धनमेव सनिर्लभ्यं वस्तु येषामिति श्रुत्यर्थ (मत्वर्थ)कथनमेतत् । यद्यद्विभूतिमदित्यत्र धनकान्तिबलव-त्स्वेव स्वस्वरूपप्रकाशलेशसद्भाव उक्तः। तत्सार्वात्म्यश्रुतिविरोधात् अयुक्तमित्या-
P. 195-4 शङ्कां निराकर्तुं सर्वात्मकत्वेऽपीति टीकेत्याह—विभूतिमत्स्वेवेति ।

लोककामेशितृत्वमपि निरङ्कुशं श्रूयमाणं परमेश्वरं गमयतीति भाष्यं ; तदनुपपन्नम् । तस्य निरङ्कुशत्वासिद्धेरित्याशङ्क्य, लोककामेशितृत्वं श्रूयमाणं निरङ्कुशं यथा भवति, तथा परमेश्वरं गमयतीति पारमैश्वर्यविशेषणं तत् । तद्गमकत्वमप्यत्यन्तपारार्थ्यन्यायसूचनेनेत्युक्तम्—टीकायाम् । तत्र
P. 195-5 कोऽसौ न्यायः तत्सूचनं वा कथमित्यतः तत्तात्पर्यमाह—लोकेति । देवमनु-ष्याणां स्वस्वकामोपभोगेऽपि पारार्थ्यश्रवणादत्यन्तपारार्थ्यमवगम्यत इति तेनादि-त्यमण्डलोपास्यपुरुषस्य निरङ्कुशमैश्वर्यं गम्यत इत्यर्थः ।

---

व्याख्याने कल्पतरुकृते बीजकथनपरो न तु तां करोतीत्यादिः । कल्पतरावेव न तु तां करोती-त्यादिवाक्यस्यान्ते 'इत्यर्थः' इत्युक्त्या अयं ग्रन्थः टीकार्थकथनपरः, नतु तच्छब्दस्य बुद्धि-परत्वेन व्याख्याने बीजकथनपरः, इत्याविष्कृतम् । तथा च आभोगग्रन्थोऽत्रासंलग्न इति भाति । पण्डिता विमृशन्तु ।

१. अत्र सर्वात्मकत्वेपीति टीकातः पूर्वं 'कस्मात् पुनर्विभूतिमत्त्वं परमेश्वरपरि-ग्रहे घटत इत्यत आह—यद्यद्विभूतिमदिति ।' इति टीकायां विभूतिमत्त्वं इत्यस्य स्थाने गीयमानत्वं इति निवेश्यम् । विभूतिमत्त्वमित्यस्य गीयमानत्वमित्यर्थो वा वक्तव्यः । तथा सत्येव 'अस्यैव गीयमानत्वं दर्शयति, तच्च परमेश्वरपरिग्रहे घटते-यद्यद्विभूती'त्यादि-भाष्यार्थकथनपरत्वं टीकायास्संगतं स्यात् । अन्यथा अनन्वितार्थकत्वप्रसंगः ।

२. आदित्यपुरुषस्य लोककामेशितृत्वश्रवणात् देवानां मनुष्याणां च ईश्वराज्ञां विना अशितुमपि न शक्यमिति सूच्यते । इदमेव अत्यन्तपारार्थ्यम् । अत्यन्तपारतन्त्र्य-मिति यावत् । अयं न्यायः लोककामेशितृत्वश्रवणात् सूचितः । सूचितेन च तेन न्यायेन निरङ्कुशमैश्वर्यं आदित्यपुरुषस्य गम्यते । तेन च परमेश्वरत्वमादित्यपुरुषस्य गम्यत इति भामतीकल्पतरुग्रन्थार्थः। भामत्यां 'अतः' इत्यस्य लोककामेशितृत्वश्रवणादित्यर्थः । तेनात्य-न्तपारार्थ्यन्यायः सूच्यते । कल्पतरौ न्याय इत्यनन्तरं सूच्यते इति शेषपूरणम् । तेन निरङ्कुशमैश्वर्यमित्यर्थः इति भामत्यां, गम्यते इति शेषपूरणम् ।

'सैवर्क्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्मे'ति श्रुतिं व्याचष्टे—'सैवर्क्तत्सामे'ति । एवमात्मके ऋक्सामे इति । पृथिव्यग्न्याद्यात्मके ऋक्सामे 'इयमेवर्गग्निस्सामे'त्यादिश्रुत्युक्ते आदित्यपुरुषस्य 'तस्यर्क्च साम च गेष्णा'विति श्रुत्युक्तौ गेष्णौ, अक्षिपुरुषे च वाक्प्राणाद्यात्मके ऋक्सामे 'वागेवर्क्प्राणस्सामे'त्यादिश्रुत्युक्ते 'यावमुष्य गेष्णौ तौ गेष्णा'वित्यतिदिष्टौ गेष्णौ, पर्वणी शरीरावयवरूपे पर्वणी इत्यर्थः । P. 196-1

॥ इति अन्तरधिकरणम् ॥

---

## ॥ अथ आकाशाधिकरणम् ॥

### सू० ॥ आकाशस्तल्लिङ्गात् ॥ २२ ॥

पूर्वत्र व्यभिचारिलिङ्गानामव्यभिचारिलिङ्गैर्बाधो वर्णितः, अत्र तु लिङ्गेन श्रुतिबाध इति विशेष इत्याह—श्रुतिप्राप्तेति । बाधार्थः—बाधप्रयोजनकः । P. 196-6 ननु टीकायां बाध्यभेदेन पौनरुक्त्यपरिहारः न दृश्यते । किन्तु पूर्वत्र सोपाधिकस्य ब्रह्मण उपास्तिचिन्ता । अत्र तु संपत्तिचिन्तेत्येव दृश्यते, इत्याशङ्क्य, स्वोक्तार्थद्योतिटीकावाक्यं दर्शयति—इदमुक्तमिति । न भूताकाश P. 197-1 इत्यनेनाकाशशब्दमुख्यार्थो नोपास्यत्वेनोपदिश्यत इति कथनात् । तेन मदुक्तं [लभ्यते] इत्यर्थः ।

वैषम्यान्तरं तु नोपादेयमित्याह—यद्यपीत्यादिना । यद्यपि संपत्तिचिन्तात्वेन भेदे सत्यपि लिङ्गात् ब्रह्मनिर्णयस्य तुल्यत्वेन न्याये न कश्चिदपि विशेष इति, नैतावता पौनरुक्त्यपरिहारः । तथापि स्पष्टमिदं दूषणमिति दूषणान्तरमुक्तम्—उद्गीथसंपत्तेः तुल्यत्वादिति । P. 197-2

यद्यपि तस्मादुद्गीथ इति न संपत्तिपरम् । किन्त्वादित्यपुरुषस्योन्नामकत्वेन ऋक्सामगेष्णत्वेन चोद्गेष्ण इति भवितव्यं नाम परोक्षप्रियत्वाद्देवानां

---

१. 'गेष्णौ पादपर्वणी'-इत्यानन्दगिर्याचार्याः ।

२. उदृक्सामगेष्ण इत्येव भवितव्यं इति वक्तव्ये, उद्गेष्ण इति भवितव्यमिति कथमुच्यते आभोगकारेण परिमलकृता चेति चेत्-उच्यते-सत्यभामाया भामेति निर्देशवदित्यवधेयम् ।

उद्गीथ इत्येवं जातमित्येतदभिप्रायम् । तथापि तन्नाममुखेन तत्संपत्तावपि तात्पर्यं
P. 197-3 संभवतीति तथोक्तम् । तर्हि कथं टीकेत्यत आह—**तस्मादिति** । इदानीं तु
यदुद्गीथे संपाद्योपास्यत्वेनोपदिश्यते तद्ब्रह्मैवेत्यसाधारणधर्मतुल्यत्वमेवानूदित-
मित्यर्थः ।

एकस्याः श्रुतेः बहुनां लिङ्गानां च विरोधे किमनुरोधेन किमन्यथा नेय-
मिति चिन्तायां, **प्रथमत्वादिन्यायोप**बृंहितश्रुतिप्राबल्येन पूर्वपक्षवर्णनपरे
**श्लोके, प्रथमत्वस्य** प्रथमनिर्दिष्टत्वात्, तदेव प्रथमं व्याख्यायत इति भ्रमं
व्यावर्तयति—**प्रधानत्वहेतुमिति** । सर्वाण्यपि लिङ्गान्यपेक्ष्य श्रुतेः प्राथम्याभावाद-
नास्थाद्योतनाय व्युत्क्रमेण व्याख्यानमिति भावः ।

P. 197-6 अपच्छेदन्यायेन प्रथममपि बाध्यतामिति शङ्कते—**नन्विति** । वाक्य-
भेदस्थल एव स न्याय इत्याह—**निरपेक्षमिति** । श्रुतौ सर्वत्राकाशशब्दो गौणो
दृष्ट इति प्रकृतेऽपि तथेति शङ्कते—**यदेष इति** । 'आकाशाद्वायु'रित्यादौ
व्यभिचारान्नायं नियम इति परिहरति—**इत्याशङ्क्याहेति** । वैषम्यं शङ्कते—
**यादांसीति** । आकाशशब्दस्य ब्रह्मणि प्रचुरप्रयोगसत्वात् शक्तिरेवास्त्विति
P. 198-2 शङ्कते—**अस्तु तर्हीति** । **सिद्धान्तटीकाया भाष्याननुगुणत्वमाशङ्क्य, सौत्रं
हेतुं** प्रकारान्तरेण स्वयं व्याख्यातुं सा टीकेत्याशयेनाह—**प्रश्नोत्तरयोरिति** ।

सन्दिग्धार्थकः प्रश्नः निश्चितप्रतिवचनानुरोधेन निश्चेय इत्याशयेन
शङ्कते—**नन्विति** । विशेषांशे संशयेऽपि, प्रश्नतात्पर्यविषये न संशय इत्यभि-
प्रेत्य परिहरति—**तत्राहेति** । पौर्वापर्यपदसूचितं परिहारं प्रकटयति—
P. 198-8 **प्रश्नोत्तरयोरिति** । शब्दस्य प्रधानत्वाभावादाह—**प्रधानार्थत्वेऽपीति** ।
**दाल्भ्येनेति** । 'त्रयो होद्गीथे कुशला बभूवुः शिलकश्शालावत्यश्चैकिता-
यनो दाल्भ्यः प्रवाहणो जैबलि'रित्यादिना कथार्थमुपविष्टानां त्रयाणां मध्ये
शालावत्येन 'का साम्नो गति'रिति पृष्टेन **दाल्भ्येन** स्वरप्राणादिक्रमेण **स्वर्गो**

---

१. अत्र कल्पतरौ 'तस्मादेतदपि असाधारणधर्मवत् तुल्यमेवानूदितम्' इति पाठश्शोध्यः । ब्रह्मणः असाधारणधर्मः यथा पूर्वत्र अत्र चाधिकरणे तुल्यः तद्वत्, एतदपि, उद्गीथसंपादनमपि, अधिकरणद्वयेऽपि तुल्यमेवानूदितमित्यर्थः ।

२. कल्पतरौ नन्विति शङ्कातः पूर्वं 'प्रथमत्वहेतुं व्याख्याति-अपिचेति' इति पाठसंशोधनं कार्यम् ।

लोकः सामप्रतिष्ठेत्युक्ते 'अप्रतिष्ठितं वै किल ते दाल्भ्य सामे'त्यादिना शालावत्यो दूषयित्वा, दाल्भ्येन पृष्टः स्वयं पृथिवीलोकः सामाश्रय इत्यूचे। प्रवाहणस्तु—तं 'अन्तवद्वै किल ते शालावत्य सामे'त्यादिना अदूदुषत्। तर्हि 'अस्य लोकस्य का गति'रिति शालावत्योऽपृच्छदित्यर्थः। न सर्वलोकगतिरिति। अस्येति शब्दस्य प्रकरणबलेन पृथिवीमात्रपरत्वादिति भावः। P. 199-4

प्रकरणस्य लिङ्गेन बाध इत्याशयेनाह—पृथिवीमात्रेति। न चापां कारणस्य तेजसः प्रसिद्धत्वेऽपि, यथा 'अपां का गति'रिति प्रश्नः, तद्वदयमपि स्यादिति नेदं लिङ्गमिति वाच्यम्। व्रीह्यादिरूपान्नहेतुवृष्टिकारणस्यैव तत्र पृष्टत्वात्। अत एव तत्र स्वर्गो लोक इत्युत्तरम्। श्रुत्यापि बाधमाह—अस्येति चेति। ननु 'असौ लोक' इत्यदश्शब्दसमभिव्याहृतस्येदंशब्दस्य पृथिवीलोकपरत्वमेव युक्तम्, तथैव प्रसिद्धेरित्याशङ्क्य, प्रसिद्धिबलाद्वाक्यशेषबलाच्च प्रथमस्य तथात्वेऽपि, व्यवहितस्य पृथिवीमात्रपरत्वे नास्ति नियामकमित्याह—यस्त्विति। P. 199-7

ननु सर्वनाम्नो बुद्धिस्थपरामर्शस्वाभाव्यादप्रकृतस्य कथं परामर्श इत्याशङ्क्य, प्रागुपन्यस्तस्वरादिसमुदायस्य प्रत्यक्षोपस्थितस्य वा लोकस्य परामर्शो न विरुद्ध इत्याशयेनाह—द्वितीये त्विति। अस्तु वा अस्यशब्दस्य प्रकृतपृथिवीमात्राभिधायकत्वम्, तथापि 'अन्तवद्वै किल ते शालावत्य सामे'ति निन्दोपक्रमात्, त्रिविधपरिच्छेदरहितानन्तगत्युपक्रमात्, 'स एषोऽनन्त' इति तदुपसंहाराच्च, सर्वकारणस्यैव गतित्वोपक्षेपात् पृथिवीकारणमात्रप्रश्ने, सर्वकारणप्रतिवचनानौचित्याच्च, लक्षणया सर्वलोकपरत्वमावश्यकमित्याशयेनाह—किञ्चेति।

उष्ट्रलगुडेति। उष्ट्रशिक्षार्थमुष्ट्रारूढेन तच्छिरसि पातितो लगुडः पृथ्वग्रः प्रासनयोग्यो दण्डविशेषः। तस्यामवस्थायामुष्ट्रेण शिरस्युत्तानिते तदारूढमेव हन्तीति न्यायः[१]। तद्वदुपालंभकर्तुरेवायमुपालंभः इति भावः। कारणविषय इति। अस्य लोकस्य का गतिरिति गतिशब्दस्य कारणविषयत्वादिति भावः। उपात्तमिति। अस्येति पदेनेत्यर्थः। वेदो वेति। वेदः ऋगादि- P. 199-10 P. 199-14

---

१. स्वमते परेणोद्भाव्यमानानां दूषणानां तन्मते पातने उष्ट्रलगुडन्यायावतारः। यथोष्ट्रेणोह्यमानेन उष्ट्रं प्रति पातितेन लगुडेन तत्प्रहारः क्रियते। इति लौकिकन्यायसंग्रहे उदासीनश्रीरघुनाथवर्मविरचिते उक्तम्।

शब्दैरुच्यते। **प्रायदर्शनात्।** प्रथमं श्रवणादित्यर्थः। वैषम्यं शङ्कते—

P. 199-15 **नन्विति।** प्रश्नस्य प्रकारांशे सन्दिग्धत्वेऽपि विशेष्यांशे निश्चितत्वमेवेति परिहरति—**प्रश्ने इति।**

P. 200-2 उपक्रमे **सर्वेषां लोकाना**मित्यदर्शनात् कथं **टीके**त्यत आह—**उत्तर इति।** उत्तरे सर्वशब्दश्रवणस्य, प्रश्नस्य तथा व्याख्याने कथं निमित्तत्वमित्याशङ्क्य, लिङ्गविधयेत्याह—**इदं चेति। साम्ये विरोधिना**मिति। 'विप्रतिषिद्धधर्मसमवाये भूयसां स्यात् स्वधर्मत्व'मिति न्यायस्य स्वरूपतः प्रमाणतश्च तुल्यविषयत्वात्। अन्यथा उपक्रमस्थैकवेदशब्दानुरोधेन बहूनां ऋगादिशब्दानामन्यथानयनानुपपत्तेः। प्रधानसोमयागकालानुरोधेन दीक्षणीयादीनां पर्वकालबाधानापत्तेश्चेति भावः।

P. 200-6 **शेषिबाध इति। आत्मार्थे पृथिवी**मित्यस्य शेष्यर्थं बहवोऽपि शेषाः त्यक्तव्या इत्येवंपरत्वादिति भावः। ननु प्रतिवचने आकाशस्यैव श्रवणात्, **नाकाशः प्रधानम्—किन्तु ब्रह्मैवेति** कथमिति शङ्कते—**नन्विति।** आकाशशब्दमुख्यार्थस्य न प्राधान्यम्। किन्तु तल्लक्षितस्य ब्रह्मण एवेति मनसि निधाय, तथोक्तमिति परिहरति—**उपक्रान्तेति। अपि चास्यैवोपक्रमे** इत्यादिटीकया गृहीतः प्रतीको **भाष्ये न दृश्यते।** व्याख्यानादर्शनात् प्रतीकग्रहणवैफल्यं चेत्याशङ्क्य, आनन्त्यलिङ्गस्य प्राबल्यद्योतनार्थं उपक्रमस्थत्वकथनपूर्वकं श्रुतिप्रदर्शनेन

P. 200-8 भाष्ययोजनाप्रकार एवायम्। न तु प्रतीकग्रहणमित्याशयेनाह—**अपि चेति।**

**दर्शितश्चेत्यादिभाष्यं**[1] व्याख्यातुं **न चाकाशशब्द इत्यादिटीका। ननु अपि चेत्यादिभाष्यस्य** व्याख्यातप्रकारेणानन्त्यलिङ्गमुपक्रमस्थत्वात् प्रबलमित्येवंपरत्वात्, **वाक्योपक्रमेऽपीत्यादिभाष्य**मनुपपन्नमित्याशङ्क्य, आकाशशब्दस्य वाक्योपक्रमस्थत्वमभ्युपेत्यापि सिद्धान्तं दर्शयितुं तद्भाष्यमित्येतदभि-

---

१. अत्र कल्पतरौ प्रश्नः पृष्टादन्यविषयः इत्याशङ्क्य तत्समाधानार्थतया टीकोक्तवैयधिकरण्यापत्तिरवतारिता। तत्र प्रश्नस्य पृष्टादन्यविषयत्वशङ्कैव निरालंबना भाति। तथापि, पृष्टात् उत्तरविषयात् अन्यविषय इत्यर्थः कथंचिद्वाच्यः। तथा सत्येव उत्तरस्य वैयधिकरण्यापत्तिरपि युज्यते इति बोध्यम्।

२. 'वाक्योपक्रमेऽपि' इति भाष्यवाक्यात् पूर्वं भाष्ये 'ओं कं ब्रह्म' इत्यशुद्धम्। 'कं ब्रह्म खं ब्रह्म' 'ओं खं ब्रह्म खं पुराणम्' इति शुद्धपाठः।

प्राया तत्रैव चेत्यादिटीकेत्याह—आस्तामिति । 'अन्तवत्त्वदोषेण शालावत्यस्य पक्षं निन्दित्वा, अनन्तं किञ्चिद्वक्तुकामेन जैवलिनेत्यादिभाष्यतात्पर्यावधारणाय 'त्रयो होद्गीथे कुशला बभूवु'रिति श्रुतिं व्याचष्टे—उद्गीथ इति । P. 201-2

॥ इति आकाशाधिकरणम् ॥

---

## ॥ अथ प्राणाधिकरणम् ॥

### सू० ॥ अत एव प्राणः ॥ २३ ॥

**सैवेति** । पूर्वाधिकरणोक्तप्रत्युदाहरणलक्षणैवेत्यर्थः । पूर्वाधिकरणेनापि[1] प्रत्युदाहरणलक्षणामाह—**अथवेति** । प्रसङ्गसङ्गतिमप्याह—**अथवेति** । प्रसङ्ग[2]-शब्देन श्रुतिगतस्संदंशो विवक्षित इति वदन् प्रासङ्गिकतयापि तत्कीर्तनस्य प्रयोजनमाह—**पुरस्ताद्धीति** । **शौवः** श्वभिर्दृष्टः । **भोगप्रत्यासत्तेरिति** । स्रक्चन्दनवनितानां स्वशरीरस्य च त्वगिन्द्रियादिद्वारैणैव भोगसाधनत्वादिति भावः । **प्रत्यक्षानुगृहीतयेति** । सुषुप्तिकाले प्राणे जाग्रति परिदृश्यमानस्य वागादिलयस्य तत्रैवौचित्यादिति भावः । P. 201-3, P. 202-2

**सर्वाणीति वाक्यमिति** । न चैवं प्रत्युदाहरणसंगत्ययोगः, वायावपि सर्वभूतसंवेशनोद्गमनसंभवात् तत्कारणे आकाशे सुतरां तत्संभवादिति वाच्यम् । अनन्तवस्तुपरोपक्रमानुरोधेन, पूर्वत्र ब्रह्मनिर्णयेऽपि, प्रकृते तन्निर्णायकोपक्रमाभावेन वाक्यशेषाधीने निर्णये प्रत्यक्षानुग्रहनियमितार्थश्रुत्यन्तरसंवादेन वायुरेवेति निर्णीयत इति, पूर्वपक्षप्रवृत्त्या संगत्यविरोधात् । तथैव च ग्रन्थे प्रदर्शितत्वात् । P. 202-4

---

१. प्रथममुक्ता संगतिः प्राणाधिकरणस्य अन्तरधिकरणेन साकं, अतिदेशत्वादस्याधिकरणस्य, आकाशाधिकरणस्य तत्पूर्वाधिकरणेन या संगतिस्सैव अस्यापि नान्येति भावेन । इदानीं आकाशाधिकरणेनापि साकं अस्य अथवेत्यादिना संगतिरुच्यते । तृतीया संगतिः प्रसंगलक्षणा । आकाशवाक्यानन्तर्यात् प्राणवाक्यस्य स्मृतिर्भवतीति स्मृतस्य उपेक्षानर्हत्वलक्षणा प्रसंगसंगतिरित्यर्थः ।

२. उद्गीथोपासनप्रसङ्गेनेति टीकागतप्रसङ्गशब्देनेत्यर्थः ।

P. 202-4 अभिधायकवाक्यप्रदर्शनेन देवतयोरभिहितत्वं दर्शयति—कतमेति। अपि चेत्यादिभाष्ये अब्रह्मप्रायपाठादब्रह्मत्वं प्राणस्योक्तम्। तदुपलक्षणम्। शरीरसंबन्धिप्रायपाठादपि वायुविकार[1] एव प्राणः, न त्वसङ्गस्वभावं ब्रह्मेति तद्भाष्यं व्याख्यातुं-अपि चेत्यादिटीका। तत्र कथमन्नशब्दस्य देवतापरत्वं? ओदने रूढत्वात्, इत्याशङ्क्य, उपक्रमस्थाभ्यस्तदेवतापदानुरोधेन लक्षणेत्याशयेनाह—अन्नमपीति। ननु अकिञ्चित्करत्वं प्रायपाठस्योक्तम्। अत P. 203-1 आह—टीकायां-निरस्तोऽपीति। नायं स्वतन्त्रयुक्तित्वेनोपन्यस्तः। किन्तु पूर्वपक्षयुक्तिभूतस्य प्रसिद्ध्यतिशयस्य श्रुत्यन्तरसंवादोपोद्बलनार्थत्वेन। अतो न दोष इत्यर्थः।

स्वत एवेत्यादिना नो खल्वित्यादिटीकां योजयित्वा, तस्मादसंवादिन इत्यादिटीकां योजयति—असंवादिन इति। तेन स्तामित्यादिP. 202-8 टीकां व्याचष्टे—येनेत्यादिना। 'प्राणं तर्हि वागप्येती'त्यादिवाक्यस्य ब्रह्मपरत्वं किं वायुविकारे लयग्राहिप्रत्यक्षविरोधाद्बाध्यते ? तत्साधकाभावाद्वा। नाद्यइत्याह—इन्द्रियमात्रेति। न भूतलय इति। भूतशब्दस्य सेन्द्रियसशरीरजीवपरत्वे महाभूतपरत्वे वा तदानीं शरीरादिलयादर्शनादिति भावः। न द्वितीय इत्याह—तेनेति। उक्तं दूषणमिति। स्वतस्सिद्धप्रमाणभावमित्यादिविशेषणसूचितं तद्विरोधादिकमित्यर्थः। [मानान्तरानुपयोगादिकमित्यर्थः।]

P. 203-6 आकाङ्क्षाबलाद्व्यवधानेऽपि युक्तमेकवाक्यत्वमिति शङ्कते—नन्विति। सन्निहितविध्येकवाक्यतया नैराकाङ्क्ष्यमाह—यदा वा इति। न पुनरिति। इदमिति शेषः। अनन्यथासिद्धार्थकत्वं विनिगमकं प्रकटयति—सर्वोत्पP. 204-1 त्तीति। आर्षेयवरणे[2] प्रवरान्तर्गतर्षिवरणे। 'न चतुरो वृणीते' इत्यादीति। 'न पञ्चातिप्रवृणीते' इत्यादिशब्दार्थः। टीकायां-वाक्यशब्देन स्ववाक्यगतं

१. वायुविकार इति, देवताशब्दात् प्राणाभिमानिदेवतेति च पूर्वपक्षे प्रकारद्वयं भाष्यानुसारात् टीकानुसाराच्चावगम्यते, शरीरसंबन्धिप्रायपाठात् देवतात्वं टीकाभिमतम्। एवं सति वायुविकार एवेति आभोगे उक्तिः वायुविकारतदभिमान्यभेदोपचारेणेति मन्तव्यम्। परिमले अयमर्थः विशदः।

२. 'आर्षेयं वृणीते' इत्यत्र आर्षेयं यजमानगोत्रप्रवर्तकमृषिमिति पर्यवसितोऽर्थः। इति सोमनाथः। वृणीते उच्चारयतीत्यर्थः। कश्यपगोत्रो यजमान इत्यादिरूपेण ऋषिसंबन्धं कथयतीति यावत्।

लिङ्गं लक्ष्यत इति व्याचष्टे—**अतः स्ववाक्यस्थेति । ब्रह्मवाचीति ।** यद्यपि ब्रह्मवाचिपदसत्त्वे श्रुतिरेव । तथापि प्राणशब्दस्य ब्रह्मपरत्वनिर्णायकतदसाधारण-धर्मवाचिसमभिव्याहृतपदाभावेनेत्यर्थः । P. 205-1

नन्वेवमपि कथं सिद्धान्तनिर्वाहः । प्राणशब्दस्य वायौ मुख्यत्वादाकाश-शब्दस्येव प्राणशब्दस्य मुख्यार्थत्यागहेतोरुपक्रमोपसंहारैकरूप्यावगमितब्रह्मतात्पर्य-कस्य लिङ्गस्याभावादित्यतः **प्राण(शब्द)स्यापि हि ब्रह्मलिङ्गसंबन्धः श्रूयत** इति भाष्यसूचितमाकाशवाक्यस्थलिङ्गसदृशं दर्शयति—**कतमा सेति । मम त्विति ।** प्राणशब्दश्रुतित्यागे **वाक्यशेषस्तात्पर्यग्राहक** इति विशेष इत्यर्थः । आख्यायिकार्थं संग्रहेण दर्शयन्नुदाहृतश्रुतिं व्याचष्टे—**चाक्रायणः किलेति ।** P. 205-3 अकृत्यमपि विद्वत्सन्निधौ कृतमेव झटिति तत्फलं प्रसूत इति द्योतयितुमाह—**मम विदुष इति ।**

॥ इति प्राणाधिकरणम् ॥

---

१. चिन्त्यमिदम्—'टीकायां वाक्यशब्देन स्ववाक्यगतं लिङ्गं लक्ष्यत इति (कल्पतरौ) व्याचष्टे' इति इदानीमेव आभोगे उक्तम् । ब्रह्मपरत्वनिर्णायकतदसाधारण-धर्मवाचिपदाभावे कथं लिङ्गेनापि निर्णयो भवेत् । तस्मात् परिमलानुसारेण ब्रह्मवाचिपदा-भावेन इति यथाश्रुत एवार्थो ग्राह्यः । तर्हि ब्रह्मवाचिपदाभावे वाक्यत्वाभावादिति कथं? श्रुतित्वाभावादिति किल वक्तव्यं यादिति चेत्, परिमलवचनमिहानुसन्धीयताम्—'ब्रह्मवा-चिपदाभावेनेति । ननु ब्रह्मवाचिपदसत्त्वे श्रुतिस्स्यात्, न वाक्यम् । उच्यते—विषयवाक्ये विशेष्यपदं चेत् ब्रह्मवाचि, तदा श्रुतिः । विशेषणपदं चेत् तदा ब्रह्मपरत्वेन निर्णिनीषितस्य विशेष्यपदस्य तस्य च समभिव्याहाररूपं वाक्यं प्रमाणमिति व्यवस्था' इति ।

## ॥ अथ ज्योतिरधिकरणम् ॥

सू०॥ ज्योतिश्चरणाभिधानात् ॥ २४ ॥

सू०॥ छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ॥ २५ ॥

सू०॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

सू०॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥

P. 206-2 **वाक्ये व्याचष्ट इति।** 'तस्यैषा दृष्टिः' 'तस्यैषा श्रुति'रिति चेति भाष्ये गृहीते इति शेषः। **संगतिरुक्तेति।** प्रत्युदाहरणलक्षणेति शेषः। **नियमसम्युपेत्येत्यन्वयः।** दीप्तिकौक्षेयकज्योतिस्सारूप्यौष्ण्यघोषलिङ्ग-दर्शनश्रवणाल्पफलश्रवणवन्मर्यादाधारश्रवणमपि तेजोलिङ्गं कुतो न भवेदिति P. 206-9 शङ्कते—**किमुपोद्बलनायेति।** उपासनार्थं ब्रह्मणोऽपि मर्यादाधारकल्पनमिति निरासहेतोः सत्वात् कथं तदभाव इत्यतो व्याचष्टे—**निरासकारणं हीति।**

भवन्मतेऽप्युपास्यस्य तेजोऽवयविनो न मर्यादोपपत्तिरिति शङ्कते—**भवत्विति।** अवयवेऽपि ज्योतिश्शब्दस्य मुख्यत्वात् स एवोपास्य इत्याह—**न समस्तमिति। अस्यैवेति। आवृत्तिमाश्रित्येति** शेषः। **अनया टीकया वाक्यान्तरार्थस्याप्यप्रतिसन्धितः—अनिश्चयादित्येवं** तद्वाक्यं व्याख्यातमिति सोपपत्तिकं दर्शयति—**गायत्रीति।** गौणार्थपरत्वेन भाष्यव्याख्याने P. 207-5 बीजमाह—**अनुद्भूतेति।**

किं अत्रिवृत्कृततेजसस्सृष्टौ प्राणिकर्म प्रयोजकम्? किं वा उपासनम्, नाद्य इत्याह—**प्राणिकर्मेति।** ततः प्राणिनामुपभोगाभावेन तत्सृष्टिप्रयोजककर्मसद्भावे नास्ति प्रमाणमिति भावः। नान्त्य इत्याह—**तत्रात्रिवृत्कृतमिति। एकैकामित्यादि** न प्रतीकग्रहणम्। **भाष्ये** तादृशवाक्यादर्शनात्। किन्तु P. 207-8 **भाष्योदाहृतश्रुतिगतपदान्वयकथनमित्याशयेनाह—तासामिति।**

---

१. टीकायां 'एकैकां त्रिवृतं त्रिवृतं करवाणि इति। तेजःप्रभृत्युपास्यमात्रविषयतया श्रुतिर्न संकोचयितुं युक्तत्यर्थः।' इति वाक्यं दृश्यते। तत्र 'एकैका'मित्यादि

नन्वत्र तेजस एवोपास्यत्वश्रवणात् कथं प्रभृतिग्रहणम्? त्रिवृत्कृतविषयत्वेनैव संकोचादुपास्यमात्रविषयतयेति च कथमित्यतः तद्व्याचष्टे—**तेज** P. 207-10 **आदीति**। ततश्च, **टीकायां तेजःप्रभृतीत्यनन्तरं** भूतमित्यध्याहारेण, तेजःप्रभृति भूतं प्रत्यविशेषप्रवृत्ता, तासामेकैकां त्रिवृतं करवाणीत्येवमर्थिका श्रुतिरुपास्यमानात्रिवृत्कृततेजोविषयत्वेन संकोचयितुं–संकोचवती कर्तुं न युक्तेति **टीकार्थ** इति भावः। फलितमर्थमाह—**ततोऽन्यत्रेति**।

**टीकायामेकैकामित्यनेन** 'तासां त्रिवृतं त्रिवृतमेकैका'मिति श्रुतिनिर्दिष्टास्तेजोऽबन्नरूपा देवता गृह्यन्ते। तत्र तेजोऽबन्नेषु देवताशब्दो गौण इति दर्शयति—**तेजआदीनीति**। **त्रिवलितमिति**। त्रिगुणितमित्यर्थः। **टीकायां** P. 207-10 **ब्रह्मण्येवेत्यस्य नेयानीत्यनेनान्वयः**। **न च प्रधानस्य प्रातिपदिकार्थस्येति** व्याख्यानटीकानुरोधेन **प्रधानमित्येतत्** व्याचष्टे—**ननु दिवी-** P. 208-3 **त्यादिना**। **निमित्तपरेति**। स्वरसावगतविध्यर्थत्यागेन 'हेतुहेतुमतोर्लिङि'ति सूत्रानुरोधेन निमित्तपरैवाश्रीयत इत्यर्थः। **सर्वतःपरिहारमिति**। स्वशिरसः परितो भ्रामयित्वेत्यर्थः। **तस्मादिति**। 'श्रोत्राय मे वर्चोदा वर्चसे पवस्वे'त्या- P. 208-10 श्विनग्रहावेक्षणमन्त्रे तस्य श्रोत्रवर्चःप्रदत्वश्रवणादिति भावः।

---

प्रतीकग्रहणं, 'तेजःप्रभृती'त्यादि तद्व्याख्यानमिति प्रतिभाति। तदयुक्तम्। भाष्ये श्रुतौ वा तथाभूतप्रतीकाभावात्, उत्तरग्रन्थस्य तद्व्याख्यानत्वासंभवाच्चेत्याशङ्क्य भाष्योदाहृतश्रुतिगतपदयोजनार्थत्वेनैकैकामित्यादिकं भिन्नवाक्यतया व्याचष्टे—तासामिति।' इति परिमले विशदोऽत्र भावः।

१. एवं च टीकायां 'तेजःप्रभृति' इति भिन्नं पदं न समस्तं, भूतमिति पदाध्याहारमात्रं नालं, सामान्यप्रवृत्ता इत्यप्यध्याहार्यं, 'एकैकां त्रिवृतं त्रिवृतं करवाणि इति' इति न परिमलोक्तरीत्या भिन्नं वाक्यं, किंतु इति श्रुतिरित्यन्वयः। एवमर्थिका श्रुतिरित्यर्थः। 'उपास्यमात्रविषयतया' इत्येतत्, उपास्यमानात्रिवृत्कृततेजोव्यतिरिक्तविषयतया इत्यर्थकं, संकोचयितुं न युक्तेत्यर्थः। इत्येवं टीका व्याख्याता भवति। अहो महान् क्लेशः। टीकायां लेखकप्रमादेन कल्पतरुकाराणामपि शुद्धः पाठो दुर्लभस्समजनि इति ज्ञायते। ग्रन्थलेखकाः शोधकाश्च प्रमादेन बहुसंकटं बहूनामुत्पादयन्ति। इत्यस्य इदमेकमुदाहरणम्। बहुकोशपरिचयवतां लेखकादिप्रमादः प्रत्यक्षत एव दृश्यते।

२. प्रत्ययार्थप्राधान्यप्रसिद्धिः कृत्तद्धितार्थविषयेति भावः इति परिमले।

P. 208-13 स्ववाक्यसन्निधानेन पूर्ववाक्यसन्निधेर्बाधं शङ्कते—नन्विति । सर्वनाम-श्रुत्यपेक्षितार्थसमर्पकत्वात् प्रस्तुतसन्निधिरेव प्रबल इत्याह—यच्छ्रुतेरिति । अत एव, 'सा वैश्वदेव्यामिक्षे'त्यादावामिक्षायाः द्रव्यान्तरत्वे प्रस्तुतपयःपरामर्शि-तच्छब्दविरोध इत्युक्तम् । न चैव'मथैष ज्योति'रित्यादावपि प्रस्तुतज्योतिष्टोम-परामर्शापत्तिः । तत्राप्युत्सर्गप्राप्तस्य प्रस्तुतपरामर्शित्वस्य नामान्तरेणोत्पत्तिसंयो-गिना बाधात् । न चेह तथा बाधकमस्तीति भावः । प्रतीकशब्दार्थमाह—

P. 210-1 शाखेति । कौक्षेयं–कुक्षौ भवम् ।

P. 212-1 अनुपयुक्तांशत्यागेन श्रुतिं पठति—गायत्री वेति । टीकायां–न च ब्रह्मपुरुषसंबन्धित्वमस्ति गायत्र्या इति । 'ते वा एते पञ्च ब्रह्मपुरुषा' इत्यादिश्रुत्युक्तमिति भावः । 'सैषा चतुष्पदे'ति श्रुत्यभिप्रेतं चातूरूप्यं[2] दर्शयति—पृथिव्या इत्यादिना । भूतानां वागधीनगानत्राणाश्रयत्वात् वाग-भेदेन तदुपादेयगायत्र्यात्मकत्वं, तदाधारत्वाच्च, पृथिव्या गायत्रीत्वं, भूतात्मकत्वं च प्राणानां, 'प्राणो ह पिते'त्यादिश्रुतिसिद्धम् । 'षड्विधे'ति श्रुत्युक्तं षाड्विध्यं

P. 212-4 दर्शयति—एवमिति । छन्दोमात्ररूपाया गायत्र्याः सर्वभूतात्मत्वं न संभवतीति तदुपादानभूतवाग्द्वारा तद्वक्तुं वाचः, प्राणाश्रयत्वेन[3] शरीरहृदययोर्गायत्र्यात्मकत्वं वक्तुं प्राणस्य चोक्तेः, ताभ्यां सहितैः भूतपृथिवीशरीरहृदयैः षड्विधा गायत्रीत्यर्थः ।

जगतीप्रार्थितेति[4] । जगत्या प्रार्थितेत्यर्थः । स्वीयेनैकेन अवशिष्टे-नेत्यर्थः । त्रिपाद्गायत्रीति समस्तं पदम् । त्रिपदा चासौ गायत्री चेति कर्मधारये पुंवद्भावे रूपम् । एतेन, त्रिपादिति व्यस्तं पदमित्याश्रित्य, 'टाबृचि'

---

१. 'स्ववाक्यगतत्वरूपप्रत्यासत्त्यपेक्षयाऽपि सर्वनाम्नामौत्सर्गिकी प्रसिद्धार्थपर-त्वव्युत्पत्तिर्बलवती' इति परिमलम् ।

२. चातूरूप्यं इत्यस्य भूतपृथिवीशरीरहृदयाख्यपादचतुष्टयवत्त्वमित्यर्थो भाति । अत्र टीकायां 'गायत्र्या एव हृदयादिभिर्व्याख्या' इत्यत्र हृदयादिभिरित्यस्य व्युत्क्रमेण निर्देशस्य भूतपृथिवीशरीरहृदयात्मना इत्यर्थः ।

३. 'कथं शरीरस्य गायत्रीत्वमिति । उच्यते—अस्मिन् हीमे प्राणा भूतशब्द-वाच्याः प्रतिष्ठिताः । अतः पृथिवीवत् भूतशब्दवाच्यप्राणप्रतिष्ठानात् शरीरं गायत्री ।' इति, 'अस्मिन् हीमे प्राणाः प्रतिष्ठिताः । अतः शरीरवत् गायत्री हृदयम् ।' इति च छान्दोग्योपनिषद्भाष्ये इदमुपपादितमवगन्तव्यम् ।

४. इयं कल्पतरूक्ता कथा ताण्ड्यमहाब्राह्मणे अष्टमाध्याये चतुर्थखण्डे श्रूयते ।

इति टापि त्रिपदेति भवितव्यत्वात् त्रिपादिति न साध्विति परिमलोक्तं चिन्त्यम् । इह निर्देश्यं चतुष्पात्त्वमौपचारिकं, तत् गायत्र्या अपि कथञ्चित् संभवतीति परिहरति—तन्नेति । चतुष्पदोऽपीति । गायत्रीमन्त्र- P. 212-11 स्येति शेषः ।

स्वात्मनि[2] त्रयः पादा इतीति । यद्यपि टीकायां नैतादृशः प्रतीकोऽस्ति । तथापि स्वात्मनीति यावदिति, पूर्ववाक्यनिर्दिष्टेन स्वात्मनीति पदेनेह त्रयः पादाः इत्येतत् गृहीतं व्याख्यातुमिति द्रष्टव्यम् । वाक्यशेषादिति । सप्तमीबलादित्यर्थः[3] । मन्त्रस्य ब्रह्मपरत्वाय बहुव्रीह्याश्रयणे कथं दिवीत्याधार-निर्देशः ? तत्राह—त्रपाद्द्वारेति । 'इदं वाव तदि'ति श्रुतौ लिङ्गव्यत्यय इति P. 212-14 द्योतयितुं तथैव निर्दिशति—अयं वाव स इति ।

लक्षणास्थलेऽपि[4] तात्पर्यमावश्यकम् । अन्वयानुपपत्तेरध्याहारेणापि शान्तेः, लक्ष्यानियमप्रसङ्गाच्च । अतः कथं टीकेति शङ्कते—नन्विति । गौणप्रयोगे P. 213-1

---

१. चतुष्पदोऽपीति पुंलिङ्गानुगुण्याय शेषपूरणं गायत्रीमन्त्रस्येति ।

२. कल्पतरौ 'स्वात्मनीति यावत् त्रयः पादा इति' इत्येव प्रतीकधारणं कोशे दृश्यते । पाठान्तरतया काशीमुद्रितकल्पतरुपुस्तके 'स्वात्मनि त्रयः पादा इति' इति पाठः अधो निवेशितः ।

३. 'दिवि इत्यस्य सत्यलोकान्तर्गतब्रह्मविष्णुशिवभोगभूमिपरत्वं, त्रिपादित्यस्य ब्रह्मादिमूर्तित्रयाभिव्यक्तिपरत्वं चार्थः' इत्यपि अर्थान्तरं परिमले उक्तम् ।

४. 'अस्मिन् पक्षे ब्रह्मैवाभिहितमिति न छन्दोऽभिधानम्' इति भाष्यम् । अनेन पक्षद्वयवैलक्षण्यं भाष्य एव विशदम्—पूर्वस्मिन् पक्षे अजहल्लक्षणास्वीकारात् छन्दसोऽप्युपास्यकोटौ उपाधितया निवेशोऽस्ति, इह तु गौण्या वृत्तेस्स्वीकारात् गायत्रीपद-मुख्यार्थगतचतुष्पात्त्वगुणविशिष्टतया ब्रह्म बोध्यत इति छन्दसो नोपास्यकोटौ निवेश इति वैलक्षण्यम् । एतत् द्योतयितुमेव भाष्ये पूर्वं—'साक्षादेव गायत्रीशब्देन ब्रह्म प्रतिपाद्यते' इत्युक्तम् ! विकारविनिर्मुक्तमेव ब्रह्म गायत्रीपदेन प्रतिपाद्यत इति तदर्थः । अत्र भाष्ये अभिहितमिति कथं ? गौणवृत्तिविषयस्याभिहितत्वाभावादिति मत्वा टीकायां ब्रह्मपरत्वाद-भिहितमित्युक्तम्—भाष्ये इत्युक्तम् । अभिहितपदस्य तात्पर्यगम्यमित्यर्थः । तथा च न दोषः इति भावः। एवमेव कल्पतरावपि टीकाशय उक्तः । एतदुपरि कल्पतरौ 'ननु पूर्व-त्रापि विकारानुगतं ब्रह्म गायत्रीपदेन लक्षणया तात्पर्येण गमितम् , अतः को विशेषः' इति शङ्का निरालम्बनेव भाति । विशेषस्य भाष्ये स्पष्टमुक्तत्वेन शङ्कानुत्थानात् । लक्षणास्थलेऽपि तात्पर्यमावश्यकम् , अतः कथं टीकेति आभोगोक्ताशयवर्णनमप्यनुचितम् । न हि टीकायां

अभिधेयगुणे तात्पर्यसत्त्वेन शब्दस्य नात्यन्तमभिधानत्यागः। अत एव सिंहो माणवक इत्यादौ, माणवके सिंहादितादात्म्यप्रतीतिरप्यनुभवसिद्धा। तथाचाभिधायकत्वापरित्यागेनैव शब्दगम्यत्वात् गौणार्थस्याभिहितत्वव्यपदेशः। लक्षणायां तु लक्ष्यतावच्छेदकाक्रान्ते अर्थान्तर एव तात्पर्यम्। नाभिधेये। अजहल्लक्षणायामपि लक्ष्यतावच्छेदकमुखेनैवाभिधेयपरत्वम्। नाभिधेयतावच्छेदकमुखेन।

P. 213-3 ब्रह्मणः प्रकृतत्वाभावे ब्रह्मपुरुषत्वलिङ्गासंभवमुपक्षिपति—**गायत्र्याख्यस्येति**। प्राणादीनां द्वारपालत्वे गुणयोगं चक्षुरादित्याद्यभेदे संबन्धं च दर्शयति—**प्राणादीति**। **समुदायार्थ इति**। 'तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषय' इत्युपक्रम्य, 'स योऽस्य प्राङ्सुषिः स प्राणस्तच्चक्षुः स आदित्यः' 'अथ योऽस्य दक्षिणस्सुषिः स व्यानस्तच्छ्रोत्रं स चन्द्रमाः' 'अथ योऽस्य प्रत्यङ्सुषिः सोऽपानः सा वाक् सोऽग्निः' 'अथ योऽस्योदङ्सुषिः स समानस्तन्मनस्स पर्जन्यः' 'अथ योऽस्योर्ध्वस्सुषिः स उदानस्स वायुः स आकाश' इति श्रुतिखण्डानां समुदायरूपेण समुच्चयरूपेणार्थ इत्यर्थः।

**स एवादित्य इत्यर्थ इति टीका** 'स आदित्य' इति श्रुत्यर्थकथनपरेत्याह—P. 214-3 **स आदित्य इतीति**। **कारणमिति**। स इति तच्छब्देन चक्षुरपरामर्शे निमित्तमित्यर्थः। तथा च चक्षुर्द्वारा तदभेदेन निर्दिष्टस्य प्राणस्यैव

---

लक्षणापक्षवैलक्षण्याय ब्रह्मपरत्वमुक्तम्। किं तु भाष्योक्ताभिहितपदस्य शक्यत्वार्थकस्य बाधितार्थत्वेन ब्रह्मणस्तात्पर्यगम्यत्वमर्थः इत्युक्तम्। स च पक्षद्वयेपि तुल्य एव। छन्दोभिधानानभिधानाभ्यामेव पक्षद्वयविशेषात्। तथा च सर्वमिदमसंगतमिति चेत्—उच्यते कल्पतरौ भाष्यटीकाद्वयमनपेक्ष्य स्वयं विशेषान्तरमुच्यते। तत्र च कल्पतरौ, आभोगे परिमले च भिन्नभिन्नोऽभिप्रायो वर्णितः। आभोगे, गौणप्रयोगे अभिधेयगतगुणे तात्पर्यात् अभिधानस्य सर्वात्मना त्यागः नास्ति, लक्षणायां अर्थान्तर एव तात्पर्यात् तस्य त्याग इति विशेष उक्तः। परिमले तु–प्रकृतस्थलमात्रे लक्षणागौणपक्षयोः कल्पतरौ विशेष उच्यते। ब्रह्मगायत्र्योः सादृश्यरूपो गुणविशेषः चतुष्पात्त्वमप्रसिद्धम्। ब्रह्मणि तात्पर्यावधारणे पूर्वं जाते तन्निर्वाहाय अप्रसिद्धगुणविशेषस्य लम्भनं गौणपक्षे। लक्षणापक्षे ब्रह्मगायत्र्योरुपादानोपादेयभावरूपसंबन्धस्य प्रसिद्धस्य शीघ्रं स्फुरणात् तात्पर्यावधारणात् पूर्वमेव संबन्धलाभः, इत्युक्तम्। तत्र परिमले 'प्राथमिकत्वादभ्यर्हितत्वाच्च उपादानोपादेयभावसंबन्धः शीघ्रं स्फुरतीत्युक्तम्। तत्र प्राथमिकत्वादित्यस्य स्थाने प्रसिद्धत्वादिति वक्तुमुचितमिति भाति। प्राथमिकत्वं दुरुपपादम्। अभ्यर्हितत्वं परंपरासंबन्धात्मकगौणवृत्त्यपेक्षया साक्षात्संबन्धरूपलक्षणायाः सन्निकृष्टत्वेनेति भाति॥

तदधिष्ठात्रा आदित्येनैक्योपचार इति भावः। नन्वस्तु चक्षुष आदित्याभेदात्, श्रोत्रस्य चन्द्रमस्स्रष्टृत्वात्, वाचोऽग्निस्रष्टृत्वात् मुखप्रभवत्वाच्च तत्तदधिष्ठितत्वम्। मनसस्तु कथं पर्जन्याधिष्ठितत्वं? तदसंबन्धादित्याशङ्क्य, कार्यद्वारा कारणयोः संबन्ध इत्याह—**पर्जन्य इति। आकाशः परमेश्वर इति।** हृदयाकाशाभि- P. 214-7 व्यक्तः परमेश्वरः श्रुतिगताकाशशब्देन लक्ष्यते। चेतनस्यैवाधिष्ठातृत्वादिति भावः।

सुषिशब्देन तत्स्थाः पुरुषाः लक्ष्यन्त इत्युक्तम्—**टीकायां—तत्संबद्धा इत्यादिना।** तत्र विशेष्यं निर्दिशति—**प्राणादय इति। टीकायां** मध्य-परभागयोरवच्छेदकत्वं विवक्षितम्, विरुद्धयोरवच्छेदकभेदेनैव एकवृत्तित्वदर्शनेन द्वयेनेऽपि वृक्षाग्रस्थत्वतदुपरिदेशस्थत्वयोरप्यवच्छेदकभेदेनैव वृत्त्यौचित्यादित्याशयेनाह—**यदा मुख्यमिति। लक्षणयेति।** बाह्यद्युभागलक्षणयेत्यर्थः। दार्ष्टान्तिके P. 215-2 अवधिपदे लक्षणा। दृष्टान्ते त्ववधिमत्पद इति वैषम्यमप्रयोजकम्, अवधिप्रयोग-लाक्षणिकत्वस्य तुल्यत्वात्। अत्यन्तसाम्यमपेक्षितं चेत्तदपि सुसंपादमित्याह—**शक्यते चेति।**

ननु **यदा तु मर्यादैवेति टीका** कथं घटताम्? सर्वगतस्य ब्रह्मणो द्युसंबन्धित्वेन द्युमर्यादत्वायोगादित्याशङ्क्य, तदसंस्पृष्टत्वं हि तन्मर्यादत्वं तदसं-गोदासीने ब्रह्मणि मुख्यमेवेत्याशयमाह—**यदा त्वनौपाधिकमिति। सामी-** P. 215-4 **प्येति।** तत्राभिव्यक्तेर्ब्रह्मणः तत्समीपस्थत्वं बोध्यम्। **या त्विति। दिवि द्योतनवति चैतन्यरूपे स्वात्मनीति टीकया** या व्याख्या कृतेत्यर्थः। **अत एवेति।** व्याख्याविकल्पाप्रवृत्त्या भाष्याननुगुणत्वादेव तस्यां व्याख्याया-मपरितोषादथवेति व्याख्यान्तरं कृतमित्यर्थः।

श्रुतौ 'गायत्री वा इदं सर्वं'मित्यादिनोक्तेऽर्थे 'तावानस्य महिमे'त्यृगव-तारिता—'तदेतदृचाभ्यनूक्त'मिति। तस्या उक्तार्थप्रतिपादकत्वं प्रथमपादेनेति दर्श-यन् व्याचष्टे—**तावानस्य महिमेति इत्यादिना।** 'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृत'मिति श्रुतिं व्याचष्टे—**'ते वा एते' इति। अङ्कशब्दो** बिन्दु- P. 215-9 वाची। अयशब्दः चतुरश्रसांकविदेवनाक्षवाची। तत्र चतुस्त्रिद्व्येकांकाना-मयानां क्रमेण, कृतं, त्रेता, द्वापरः, कलिरिति च संज्ञा।

एवं चतुरयकद्यूते कृतसंज्ञके त्रिद्व्येकाङ्कानामयानामन्तर्भावस्य 'यथा कृतायविजितायाधरेऽयाःसंयन्ती'ति श्रुतौ कथितत्वात्, चतुस्त्रिद्व्येकांकायशब्दवाच्यविदेवनाक्षविशेषनिष्ठाङ्कगतचतुष्ट्वत्रित्वद्वित्वैकत्वसंख्यासंयोजनलब्धैव दशसंख्यापत्तिरित्यवगमात्, तादृशीं दशसंख्यामादाय, वाय्वादिषु दशसु कृतशब्दप्रयोग इति दर्शयितुं संयोजनानुगुण्येनावान्तरसंख्या दर्शयति—

P. 216-1 **अत्रापीति** । **त्र्यङ्कायवदित्यादौ** सप्तम्यन्ताद्वतिः । त्र्यङ्काय इवेत्यादिरर्थः । दृष्टान्तं विशदयति—**द्यूत इति** । 'सैषा विराडन्नादी'ति श्रुतिं व्याचष्टे—**सैषेति** । दशसंख्यासंपत्त्या वाय्वादीनामन्नत्वेऽपि कथमन्नादित्वम्, तत्राह—**कृतत्वाच्चेति** । तस्य हेतुत्वमुपपादयति—**कृते हीति** । अन्नादित्वकथनस्य

P. 216-4 प्रयोजनमाह—**अत इति** ।

॥ इति ज्योतिरधिकरणम् ॥

---

## ॥ अथ प्रतर्दनाधिकरणम् ॥

सू०॥ प्राणस्तथानुगमात् ॥ २८ ॥

सू०॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ २९ ॥

सू०॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥

सू०॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

यद्यनेकेषामेकं लिङ्गं, यदि वा एकस्यानेकानि लिङ्गानि, तदा न बला-

P. 216-7 बलचिन्तावकाशः । अत आह—**अनेकेषामिति** । कर्मधारयमहिमलब्धमर्थमाह—**प्रतिपदार्थमिति** । पूर्वपक्षे वाक्यभेदाभ्युपगमेनैकवाक्यसमावेशाभावादविरोधे कथं बलाबलचिन्तेत्याशङ्क्य, बलाबलचिन्तामुखेन यथाभिमतपूर्वपक्षनिष्कर्षात् पूर्वमस्ति विरोधप्रसक्तिरिति वदन् सन्देहशब्दार्थं च दर्शयन् चिन्तामुपक्षिपति—**तेषामिति** ।

अत्र जीवमुख्यप्राणब्रह्मणां त्रयाणामपि त्रीण्युपासनानि विधीयन्त इति प्रधानतः पूर्वपक्षः। तथात्वे वाक्यभेदापत्तेरेकं ब्रह्मैव ज्ञेयत्वेनोपदिश्यत इति सिद्धान्तः। एतत्प्रतिपादनपरं **जीवमुख्यप्राणलिङ्गादित्यादिसूत्रभाष्यम्।** इतरत्तु, नैकवाक्यत्वसिद्ध्यर्थं ब्रह्मपरत्वमाश्रयणीयम्, मुख्यप्राणजीवान्यतरपरत्वेऽप्येकवाक्यत्वसंभवात्। इत्याशङ्कां निराकर्तुं **अन्तस्तद्धर्मोपदेशात्**, इत्यधिकरणसिद्धानन्यथासिद्धब्रह्मलिङ्गप्राबल्यप्रतिपादनपरम्। ततश्च **किं सर्वाणि लिङ्गानि समबलानि, उत ब्रह्मलिङ्गमेव बलवदि**त्येतदधिकरणतात्पर्यविषयीभूतः संशयः। अधिकरणान्तरसिद्धार्थकथनोपयोगस्तु संशयः **कस्य लिङ्गिनो लिङ्गं बलवदिति।** ततश्च प्रधानपूर्वपक्षकोट्यप्रदर्शनात् असङ्गता टीकेत्याशङ्क्य, तदध्याहारेण व्याचष्टे—**किममूनीति।** P. 216-8

ननु ब्रह्माब्रह्मलिङ्गबलाबलं प्रागचिन्तितमिति कथं? **अन्तस्तद्धर्मोपदेशा**दित्यत्र चिन्तितत्वादित्याशङ्क्य, प्राणशब्दार्थनिर्णायकेनाधिकरणेनाचिन्तितत्वमभिप्रेतमिति दर्शयति—**एतच्चेति।** इह लिङ्गोपोद्बलकश्रुत्यलाभात् पूर्वेणापि न गतार्थतेत्याह—**ज्योतिर्वाक्येऽपीति।** **संगतिः** प्रत्युदाहरणलक्षणा। एवं मुखचिन्तायाः[1] संगतिं प्रदर्श्य, प्रधानचिन्तायाः पूर्वाधिकरणेन दृष्टान्तसंगतिं दर्शयति—**अथवेति।** P. 217-4

**पूर्वं लिङ्गानीति** पदसूचितं पूर्वाधिकरणेनागतार्थत्वं दर्शितम्। इदानीं **बहूनीति** पदसूचितमाकाशाधिकरणेनागतार्थत्वं दर्शयति—**एवं चेति। भूयसां न्यायेनेति।** 'विप्रतिषिद्धधर्मसमवाये भूयसां स्यात् स्वधर्मत्व'मिति पूर्वतन्त्रसिद्धन्यायेनेत्यर्थः। अनन्तरनिर्दिष्टस्याप्यधिकरणान्तरसिद्धविचारस्य प्रधानविचारोपयोगितया आर्थक्रमेण प्राथमिकत्वमाश्रित्य, प्राणलिङ्गप्राबल्यं पुनरुक्तिशङ्काव्याजेन[2] निराकरोतीत्याशयेनाह—**अनन्यथासिद्धेति। वैदन्निति** शतृ- P. 217-7

---

१. मुखचिन्तायाः प्राणस्तथानुगमात् इत्यादिसूत्रेण प्रथमतः क्रियमाणायाः अप्रधानचिन्तायाः इत्यर्थ इति भाति।

२. कल्पतरौ 'अन्यथासिद्धिवत् 'अन्तस्तद्धर्मोपदेशात्' इत्यनेन पुनरुक्तिं शङ्कते' इति पाठः सर्वत्र कोशेषु दृश्यते। आभोगानुसारेण 'अन्यथासिद्धिं वदन् ...... शङ्कते' इति पाठः ज्ञायते। अयमेव शुद्धः पाठः। अन्विताथकः। सर्वत्र कोशेषु शोधकप्रमाद एव अशुद्धिबीजम्।

प्रत्ययेन वदनस्य फलत्वमभिचरन्नित्यादाविव गम्यते। ततश्च, शङ्कते अन्यथा-सिद्धिवदनायेत्यर्थः।

P. 217-6 **टीकायां—ब्रह्म कारणमित्याहेति**। वाग्वदनस्य कारणं जीवं ब्रह्मेत्याह श्रुतिरित्यर्थः। **टीकायां—परमात्मायत्तत्वादिति**। 'को ह्येवान्यात् कः प्राण्या' दित्यादिश्रुतेरिति भावः। **टीकायाम्—आत्मनि प्राणशब्दमुच्चचारेति**। तथा च प्राणत्वेन स्वात्मोपासनकथनमिन्द्रलिङ्गमिति भावः। **टीकायाम्—आभूतसंप्लवमिति**। **भूतानां** त्रैलोक्यान्तर्गतानां नाशपर्यन्तं दिनप्रलयपर्यन्तमिति यावत्। **स्थानं—**स्वर्गलोकावस्थानं, तदेव चिरकालावस्थानरूपत्वात् **अमृतत्वमुच्यत** इत्यर्थः। **टीकायां—त्वाष्ट्रमहनमिति**। हतवानस्मीत्यर्थः। **टीकायामपवर्गस्येति**। तस्यैव हिततमत्वादिति भावः।

P. 218-7 **टीकायां—पराचीति**। उपासकप्रत्यगात्मसंबन्धित्वेन श्रुतानां 'प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्य उत्थापयती'ति शरीरपरिग्रहादीनां पराग्रूपे इन्द्रे अनुपपत्तेरित्यर्थः। **टीकायाम्—आत्मनि प्रतिबुद्धस्येति**। अखण्डसच्चिदानन्दस्वरूपे तदावारकं तमो निरस्य वर्तमानस्येत्यर्थः। **टीकायाम्—प्रारब्धविपाककर्माशयमात्रमिति**। प्रारब्धं वर्तमानशरीरारंभकं कर्म। विपाकस्तत्फलं, कर्माशयः—पूर्वकर्मवासना। एतत्सर्वं—**भोगेन**-फलानुभवेन **क्षपयतः**, प्रतिबुद्धत्वादेव च **ब्रह्मणः सत** इत्यर्थः।

किं ध्यानतः साक्षात्कारः सूत्रानुक्तः कथं परिगृह्यत इति दूषणमभिप्रेतम्? किं वा तस्मिन् पक्षे **शास्त्रदृष्टचेति सूत्रं** कथमिति? आद्य आह—**अपीति**। द्वितीय आह—**शास्त्रार्थेति**। 'अपि च संराधने प्रत्यक्षानुमानाभ्या'मिति **सूत्रे** ध्याने योगिनः प्रत्यक्षेण पश्यन्तीति स्पष्टं कथितत्वात्तदनुरोधेन, **शास्त्रदृष्टिः** शास्त्रप्रयोज्या दृष्टिः इत्याश्रीयते इति भावः।

P. 218-2 (margin at line "अपीति")

ब्रह्मलिङ्गस्य प्रबलत्वेऽपि श्रुत्यनुगृहीतलिङ्गान्तरसाम्ये, न दोष इत्यभिप्रेत्य, पूर्वपक्षं दर्शयतीत्याशयेनाह—**वसत इतीति**। प्राणस्यैव प्रज्ञात्मत्वेनोपास्यत्वमिति भ्रमं वारयितुं सहयोगे तृतीयेति व्याचष्टे—**तस्येति**। ननु प्राणशब्दस्य मुख्यप्राणपरत्वकथनात्, कथं **ब्रह्मणि प्राण** इत्युक्तमित्याशङ्क्य,

P. 219-2 ब्रह्मवाक्यस्थप्राणशब्दाभिप्रायं तदित्याह—**स एष इति**।

अत्र प्राथमिके कस्य लिङ्गं बलवदिति विचारे इन्द्रपूर्वपक्षान्तर्भावेऽपि समबलत्वपूर्वपक्षे नेन्द्रस्यान्तर्भावः। वाक्यत्रित्वेनैवोपपत्तौ चतुष्ट्वकल्पनायोगात्, 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्वे'ति प्राणप्रज्ञात्मनोरेव तद्धर्मायुरादिगुणयोगेनोपासनाविधानात्। उत्तरत्र प्राणप्रज्ञात्मनोरेव बहुधा प्रपञ्चनात्, 'प्राणेन ह्येवामुष्मिन् लोके अमृतत्वमाप्नोति प्रज्ञया सत्यसंकल्प'मिति च तयोरेव फलश्रवणात्, वामदेवस्येव ब्रह्मभूतस्य शक्रस्यापि प्राणादिभावोपपत्तेश्चेति अभिप्रायेणाह—**टीकायां—तस्मादिति**। **उक्तं त्रय एवेति** पदार्थभेदमात्रं न वाक्यार्थभेदकमित्याशयेन शङ्कते—**भवत्विति**। P. 219-7 P. 219-2

गामानय घटमानयेत्यादाविव प्रधानकर्मकारकादिभेदे क्रियाभेद इति परिहरति—**अत आहेति**। एतदेव दर्शयति—**गुणप्राधान्येति**। गुणश्च प्राधान्ययोग्यपदार्थश्चेति द्वन्द्वः। ननु पदश्रुत्यपेक्षया वाक्यस्य प्राबल्यकथनं श्रुतिलिङ्गादिबलाबलन्यायविरुद्धमित्याशङ्क्य, कर्तव्ये विनियोगे एकान्तरितत्वद्व्यन्तरितत्वादिना तत्र बलाबलसत्वेऽपि, प्रकृते न तथा किञ्चित्कारणमस्ति। प्रत्युत वाक्यार्थ एवोद्देश्यत्वात् प्रबल इति तात्पर्यमाह—**हेतुरिति**। P. 219-4

द्विवचनश्रुतिमन्यथयितुं **यत्पुनरित्यादिटीका**। तत्र **ज्ञानक्रियाशक्तिभेदेन बुद्धिप्राणयोरित्यत्र** यथाक्रममन्वयमाह—**ज्ञानशक्तिमतीति**। **कथं तर्हीति**। उपाधिमात्रोपासनस्य हितोपायत्वायोगादिति भावः। 'यं त्वं मनुष्याय हिततमं मन्यसे' इति, परमपुरुषार्थसाधनस्यैव प्रार्थितत्वात् तद्धेतुस्वरूपज्ञानस्यैव '-मामेव विजानीही'त्युक्तत्वाच्च कृत्स्नेयमाख्यायिका स्वरूपप्रतिपादनपरा। नोपासनविधिपरा। उपास्वेत्यादिश्रवणं च तदाभिमुख्यसंपादनार्थम्। ततश्च 'प्राणोऽस्मि प्रज्ञात्मे'त्यादिकं तदुपलक्षणार्थम्। 'यो वै प्राण' इत्याद्यभेदनिर्देशोऽप्युपलक्ष्यैक्यद्योतनार्थत्वात् सफलः। प्रत्युत त्वत्पक्षे तदभेदनिर्देशो निष्फल इत्यभिप्रायेण परिहरति—**अत आहेति**। P. 219-7

---

१. 'अत एव हि भगवान् सूत्रकारः देवतापक्षं फल्गुत्वात् पृथगेव निरस्य उपासात्रैविध्यादित्याह। इतरथा चातुर्विध्यादित्यवक्ष्यत्' इति शास्त्रदर्पणे कल्पतरुकृतैवोक्तमिदम्।

**टीकायां**-सिद्धान्तद्वयमुपसंहरति—**तस्मादिति**। तदधीनस्थितिकत्वात्
P. 221-3, 10 तत्प्रष्ठितत्वमित्याह—**मुख्यप्राणेति**। **सूक्ष्मभूतानीति**। मात्राशब्दस्य सूक्ष्म-रूपमात्रवाचकत्वेऽपि भूतपदसमभिव्याहारेण भूतसूक्ष्माणामेव प्रतीतेरिति भावः। बुद्धेरेकत्वेऽपि कारणभेदेन भेद इत्याह—**पञ्चेन्द्रियेति**। बुद्धीनां सूक्ष्मरूपा-भावान्मात्राशब्दो यौगिक इत्याह—**मीयन्त इति**।

ननु **वृत्तिकारव्याख्याने** कथं सूत्रसङ्गतिः जीवमुख्यप्राणलिङ्गादिति शङ्काया अपरिहारादित्याशङ्क्य, भाष्यकारमते जीवमुख्यप्राणलिङ्गसद्भावाज्जीवादि-परापीयमाख्यायिका न ब्रह्ममात्रपरेति शङ्काया वाक्यभेदापत्त्या परिहारार्थः सूत्रशेषः। वृत्तिकारमते तु—प्रथमसूत्रेणैवैकवाक्यताबलात् ब्रह्मपरत्वे समर्थिते, कथमेकवाक्यत्वं ? जीवमुख्यप्राणलिङ्गसद्भावादित्याशङ्काया विशिष्टैकार्थपरत्वान्न वाक्यभेद इति [परिहारं] वक्तुं सूत्रशेष इति दर्शयितुं, **पूर्वोत्तरव्याख्ययोः**
P. 221-12 **सूत्रार्थं विभजते** इत्याशयेनाह—**पूर्वोत्तरेति**।

**अत्र भाष्ये प्राणधर्मेण, प्रज्ञाधर्मेण, स्वधर्मेण चैकमुपासनं निवक्षित-मित्युक्तम्**। तदयुक्तम्। भिन्नवाक्यस्थानां धर्माणां क्रोडीकारासंभवेन, तावद्धर्म-विशिष्टैकब्रह्मोपासनाविध्ययोगात्, एकत्रोपासनविधावुत्पत्तिशिष्टगुणावरुद्धे गुणा-न्तरविध्ययोगात्, अनेकगुणविधाने वाक्यभेदापत्तेश्चेत्याशङ्क्य, **तद्भाष्यं**
P. 221-6 **व्याख्यातुं इह त्विति टीका**।

तस्याश्चायमर्थः। इह तावदाख्यायिकायां निर्विशेषं ब्रह्म प्रतिपिपादयि-षितम्। हिततमोपदेशप्रश्नप्रतिवचनोपक्रमात्। 'मामेव विजानीहि'ति चोपदे-शात्। ब्रह्मविज्ञानस्तुत्येकप्रयोजनसार्वात्म्यसर्वपापासंस्पर्शकीर्तनात्। निर्विशेष-ब्रह्मपरेन्द्रविश्वामित्रसंवादरूपैतरेयश्रुतिसारूप्याच्च। तथा भाष्योदाहृतजीवादि-धर्मबोधकश्रुत्यनुरोधेन तिस्र उपासना अपि विधीयन्ते। न चैवं वाक्यभेदः। उपासनात्रयसंबन्ध्येकब्रह्मपर्यवसानेन वाक्यभेदाप्रसक्तेः। तथा चोपासात्रयसंब-न्ध्येकब्रह्मज्ञापकत्वान्न वाक्यभेद इति सूत्रार्थ इति।

**भाष्यमपि, प्राणधर्मेण, प्रज्ञाधर्मेण, स्वधर्मेण च यत्त्रिविधमु-पासनं** त्रीण्युपासनानि। अर्थात् प्राणप्रज्ञाब्रह्मणामिति लभ्यते। **त्रिविधमपि**

---

१. अत्र कल्पतरौ मुख्यप्राणेति वाक्योपक्रमे नञ्पदमधिकं प्रामादिकम्।

निर्विशेषब्रह्मणः एकस्येत्येकमुपासनमित्येवं योज्यम्। तदेतदाह—**अत्र त्विति**। P. 221-13
एकब्रह्मसंबन्धित्वेनैकस्या एव त्रित्वादित्यर्थः।

किं ब्रह्मणो विधिसंस्पर्शाभ्युपगमेन वाक्यैकत्वप्रयोजकत्वमुच्यते? तदनभ्युपगमेन वा? आद्येऽपि किं विशेष्यत्वेन, उत विशेषणत्वेन? अथवा अनुवाद्यत्वेनेति? विकल्प्य दूषयति—**किमुपासनेत्यादिना**। तिसृणामप्युपासनानां मिलितानामेव ब्रह्मान्वये, न वाक्यभेदः। सोऽपि नेत्याह—**परस्परमसंगादिति**। असंबन्धादित्यर्थः। P. 221-13 P. 222-3

**आद्यद्वितीयं निराकर्तुमितिसर्वमवदातमिति टीका**। तदभिप्रायं मतान्तरनिराकरणव्याजेन दर्शयितुमाह—**अत्र केचिदिति**। **विधेयमिति**। श्रुतत्वादिति भावः। निर्विशेषपरत्वानभ्युपगमेनापि कश्चित्प्रकारो विरचितः, तमपि दर्शयति—**अपि चेति**। (१) किमिह श्रुतत्वादेवोपासनाविधिराशङ्क्यते? (२) उत तदानर्थक्यात्? (३) अथवा उपरिधारणवदपूर्वत्वात्? (४) किं वा श्रवणादिदृष्टान्तबलेन?। नाद्यः—एकवाक्यताविरोधेन विष्ण्वादिवाक्यवत् अविधायकत्वादित्याह—**उपक्रमेति**। **सर्वात्मत्वेत्यादिना** द्वितीयं निराकृत्य, तृतीयं प्रागुक्तश्लोकार्थकथनेन परिहरति—**सर्वात्मत्वं चेति**। **कल्पित इति**। ततश्च श्लोके अकल्पीति पदच्छेद इति भावः। P. 225-1 P. 222-3 P. 222-7

चतुर्थं निराकरोति—**श्रवणादीति**। इष्टत्वेऽपि द्रष्टव्य इति प्रथमनिर्दिष्टसाक्षात्कारोपयोगितया श्रवणादीनां विधानं न प्रकरणविरोधि, नामादिषु ब्रह्मोपासनानामपि निर्विशेषप्रतिपत्तिपर्यवसायितया न विरोधित्वम्। न चैवं जीवप्राणोपासनयोः निर्विशेषप्रतिपत्त्युपायत्वे किञ्चिन्नियामकमस्तीति द्रष्टव्यम्। P. 222-8

**विषम इति**। विविदिषासंबन्धस्य मानान्तरादप्राप्तेरिति भावः। न चेह तथा यत्किञ्चित्फलसंबन्धित्वेन श्रवणमस्ति। वाक्यान्तरश्रुतस्यामृतत्वादेः ब्रह्मप्रतिपत्तिफलत्वात्। न हि प्राणादिधर्मकीर्तनं सर्वात्म्यविवक्षया, उपास्तिश्रवणं च लोकप्राप्तनिदिध्यासनानुवाद इत्येवं गतिसंभवे फलकल्पनेनोपसंहारावगतैकवाक्यताविरोधिवाक्यभेदफलकमुपासनाविधानं न्याय्यमिति भावः। P. 222-9

P. 223-3 **द्वैरूप्यादिति।** ततश्च, तत्तद्वाक्यानां तत्तद्धर्मविशिष्टजीवादिबोधानन्तरं ब्रह्मवाक्येन सह तत्तद्धर्मविशिष्टजीवादिविशिष्टब्रह्मबोधकत्वापत्त्या त्वदभ्युपगतपदैकवाक्यताभङ्ग इति भावः। **विप्रकीर्णत्वादिति।** अरुणायेत्यादौ तु नैवमिति वैषम्यमिति भावः।

P. 223-3 श्रुतिं व्याचष्टे—**दिवोदासस्येति।** 'प्रार्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगामे'ति श्रुतिं व्याख्याय, 'अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छ'मिति श्रुतिमुपादाय व्याचष्टे—**'अरुन्मुखा'नितीति।** 'अस्तित्वे च प्राणानां निःश्रेयस'मिति श्रुतिं व्याचष्टे—**अस्तित्वे चेतीति।** 'तद्यथा रथ-
P. 223-6 स्यारेष्वि'त्यादिश्रुतौ स्पष्टांशं विहाय व्याख्येयांशमुपादाय व्याचष्टे—**एवमेवैता इति। नेमिः**—रथचक्रप्रान्तवर्तिवर्तुलकाष्ठम्। **अराः**, अक्षग्रथनोपयुक्तसच्छिद्रमध्यकाष्ठात्मकनाभिलग्नानि नेमिग्रथनोपयुक्तानि सूक्ष्मकाष्ठानि।

P. 224-1 **नेमिवद्विषया इति,** भूतानि मात्राश्चेत्येवमर्थकेन भूतमात्राशब्देन निर्दिष्टा इत्यर्थः। **अरवदिन्द्रियबुद्धय इति,** प्रज्ञामात्राशब्दनिर्दिष्टा इत्यर्थः। यद्यपि प्रज्ञाशब्देन बुद्धीनां मात्राशब्देनेन्द्रियाणां च श्रुतौ निर्दिष्टत्वादिन्द्रियबुद्धय इति व्युत्क्रमेण कथनमयुक्तम्, तथापि भूतशब्दनिर्दिष्टानां पृथिव्यादीनामिन्द्रियेषु, मात्राशब्दनिर्दिष्टानां शब्दादीनां बुद्धिषु च, विषयत्वेनार्पणात्तदनुरोधेन तथा निर्दिष्टमिति ध्येयम्।[2] 'तान् वरिष्ठः प्राण उवाचे'त्यादिश्रुतिमुपादाय, **प्राणसंवादे वागादीन् प्राणान् प्रकृत्येति** भाष्याभिप्रायं संवादश्रुतिव्याख्यानेन दर्शयन् व्याचष्टे—**तान् वरिष्ठ इति। श्रेष्ठंमन्यान्**—वस्तुतोऽश्रेष्ठानित्यर्थः। **वानमेव बाणमिति।** वबयोरभेदेन व्यवहारादिति भावः।

P. 224-6 'तस्मादेतदेवोक्थ'मिति श्रुतावुक्थशब्दार्थमाह—**तस्मादेतदित्यादिना। जीवलक्षणायाः प्रज्ञाया इति।** यद्यपि प्रज्ञाशब्दो बुद्धौ निरूढः [तथापि] 'मन एवास्या एकमङ्गमदूदुह'दित्युत्तरत्र मनःप्रज्ञयोर्भेदनिर्देशात् एवं व्याख्या-
P. 224-8 तम्। **अदूदुहद्रेचितवती** पृथक्कृतवती। **तस्या दुग्धायाः प्रज्ञाया इति।**

---

१. वैरूप्यादिति पाठान्तरम्।

२. कल्पतरौ पूर्वं 'पृथिव्यादीनि शब्दादयश्च इन्द्रियेषु तज्जन्यज्ञानेषु च विषयत्वेनार्पिताः' इति अयमेव क्रमः उक्तः।

इदं तु प्रौढ्या व्याख्यातम्। तच्छब्दस्य दोग्धृपरत्वमेव युक्तम्। 'प्राण एवास्या एकमङ्गमदूदुहत् तस्य गन्धः परस्तात् प्रतिविहिता भूतमात्रा' हस्तावेवास्या एकमङ्गमदूदुहतां तयोः कर्मे'त्याद्युत्तरसन्दर्भेषु दोग्धृलिङ्गवचनयोरेव दर्शनादिति ध्येयम्। परस्तादित्यस्यार्थमाह—उपरीति। P. 224-9

'प्रज्ञया वाचं समारुह्ये'ति श्रुतावपि प्रज्ञाशब्दस्य जीवपरत्वावश्यंभावात् तद्द्वारा कस्य समारोहणकर्तृत्वमित्याशङ्क्य, शुद्धचैतन्यस्येत्याह—उपहितेति। द्रष्टृत्वाध्यासमिति। द्रष्टृत्वपदेन 'प्राण एवास्या एकमङ्गमदूदुह'दित्यादिना ज्ञानेन्द्रियव्यापारेषु यत् घ्रातृत्वादिकमुक्तं, यच्च कर्मेन्द्रियव्यापारेषु कर्तृत्वं, तत्सर्वमुपलक्ष्यत इति ध्येयम्। [ननु] उपहितचैतन्यं जीवं प्रति फलचैतन्यरूप-प्रज्ञादोग्धृत्वं ज्ञानेन्द्रियाणामेव युक्तम्, न कर्मेन्द्रियाणाम्, अतः कथं वाचा प्रज्ञादोह उक्त इत्यत आह—कर्मेन्द्रियप्रवृत्तिरपीति। P. 225-1

'ता वा एता दशैव भूतमात्रा अधिप्रज्ञ'मित्यादिश्रुतिमुपादाय व्याचष्टे—ता वा इति। मात्राशब्दार्थमाह—शब्दादयश्चेति। उपलक्षयतीति। छत्रिन्यायेनेति भावः। अन्योन्याधीनत्वकथनस्य प्रयोजनमाह—ग्राह्येति। ततश्च निर्विशेषब्रह्मपरत्वमाख्यायिकायाः सिद्धमित्याह—अतोऽद्वैतं तत्वमिति। P. 225-4

॥ इति प्रतर्दनाधिकरणम् ॥

इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डभट्टमहोपाध्यायतनूभवेन
श्रीमन्नारायणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशगृह्यमाणेन
लक्ष्मीनृसिंहचरणारविन्दचञ्चरीकेण लक्ष्मीनृसिंहेन
विरचितायां कल्पतरुप्रदीपिकायां
आभोगाख्यायां प्रथमाध्यायस्य
प्रथमः पादः ॥

---

॥ श्रीः ॥

॥ श्रीलक्ष्मीनृसिंहाय मङ्गलम् ॥

## ॥ अथ प्रथमाध्यायस्य द्वितीयः पादः ॥

सू०॥ सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

सू०॥ विवक्षितगुणोपपत्तेश्च ॥ २ ॥

सू०॥ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

सू०॥ कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

सू०॥ शब्दविशेषात् ॥ ५ ॥

सू०॥ स्मृतेश्च ॥ ६ ॥

सू०॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

सू०॥ संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

P. 227-1 त्रयाणामपि पादानां अर्थभेदं सङ्गतिसूचनाय दर्शयति—प्रथमे पाद इति। तयोस्त्विति। द्वितीयपादे सविशेषब्रह्मवाक्यमुदाहरणम्[1]। तृतीये निर्वि-

---

1. द्वितीयपादे, मनोमयः, अत्ता, पाययिता, अक्षिपुरुषः, (अन्तरः) अन्तर्यामी, वैश्वानरः, इत्येषां सविशेषत्वम्, अक्षरस्य निर्विशेषत्वम्। तृतीयपादे, दहरस्सविशेषः, अन्ये निर्विशेषाः। अतः प्रायश इति कल्पतरावुक्तम्, इति परिमले तृतीयपादोपक्रमे उक्तम्। द्वितीयपादे, मनोमयः, अन्तरः, वैश्वानरः, इति त्रय एव उपास्याः। अत्त्रादीनां नोपास्यत्वम्, तथापि निर्विशेषोपलक्षकसविशेषस्वरूपत्वमिति बोध्यम्। लिङ्गानामस्पष्टता च, जीवादिविषयकत्वसंभाव्यमानस्वारस्यलिङ्गाभिभूतत्वम्, इति ब्रह्मविद्याभरणे। द्वितीयपादे ब्रह्मलिङ्गमात्रस्य अस्पष्टता। तृतीयपादे ब्रह्माब्रह्मलिङ्गयोरस्पष्टता इति विशेषः। रूढिबहुलानि वाक्यानि द्वितीये। तृतीये योगबहुलानि। इति च विशेषः। इति भाष्यभावप्रकाशिकायां चित्सुखाचार्याः। एवमेव आनन्दगिरीये रामानन्दीये च उक्तम्। एवं च कल्पतरौ योगरूढिविषयतया इत्यस्य स्थाने रूढियोगविषयतया इति शोधनीयमिति भाति। आभोगोऽपि शोधनीय इति भाति।

शेषवाक्यमित्येवं वा, द्वितीये यौगिकपदघटितं वाक्यम्, तृतीये रूढपद-घटितमित्येवं वेत्यर्थः। प्रथमे पाद इत्यादिवृत्तानुवादभाष्यं व्याख्यातुं अथ द्वितीयमित्यादिटीका। तत्राधिकरणसिद्धान्तस्वरूपं दर्शयति—यत्सिद्धाविति। अर्थान्तरप्रसिद्धानामित्यादिभाष्यमुत्तरविचारोपजीव्यार्थ-प्रदर्शकत्वाभावात् अनुपपन्नमित्यतः उत्तरविचाराक्षेपपरतया व्याख्यातुं, यदा अर्थान्तरेत्यादिटीकावाक्यम्। तदेतदधिकरणारंभाक्षेपस्याप्युपलक्षणमिति शङ्कामुखेन व्याचष्टे—यद्यर्थान्तरेत्यादिना। P. 227-2

पुनरपीत्यादिभाष्यसूचितं परिहारं दर्शयितुं पूर्वपक्षेत्यादिटीका-वाक्यमित्याह—अत आहेति। तज्जलमिति। अत्र जायत इति विग्रहे, डप्रत्यये जमिति रूपम्। एवं लीयत इति लम्। अनितीति विग्रहे क्विप्प्रत्यये अनिति रूपम्। तेषां द्वन्द्वे तत्पदेन षष्ठीसमासः सप्तमीसमासो वा। ततश्च तच्छब्दस्य प्रत्येकान्वयेन तज्जलमित्यादिनिर्देशो ग्रन्थे आर्थिकार्थाभिप्रायेण, तस्माज्जायत इत्यादिविग्रहप्रदर्शनं चेति द्रष्टव्यम्। तदनमिति समानर्थकतया निर्दिष्टम्। श्रुतौ नकारान्तस्यैव निर्देशात्। P. 227 5

तत्प्रधानस्तन्मय इति। प्राधान्येऽपि मयडस्तीति [1]केचित्। तन्मते-नैतदुक्तम्। पादान्तरत्वादेवेति। पूर्वपादोक्तव्याप्त्वादिधर्मोपजीवनेनैतत्पाद-प्रवृत्त्या पादयोः सङ्गतत्वे, उत्तराधिकरणानां चैतदधिकरणानन्तर्यनियामके च सति, परिशेषादेतदधिकरणस्य पादादित्वोपपत्तेः पूर्वपादान्त्याधिकरणेनास्याधिकरणस्य संगतिर्न वक्तव्येति भावः। P. 228-1

अत्र ब्रह्मैवोपास्यमिति वदन् प्रष्टव्यः। किमादौ ब्रह्मशब्दश्रवणात्? उत ब्रह्मलिङ्गात्? किं वा अन्ते ब्रह्मशब्दात्?। आद्येऽपि किमुपासनाविध्येकवाक्य-तया उपास्यसमर्पकं ब्रह्मपदमिष्यते? भिन्नवाक्येऽपि तदपेक्षितत्वाद्वा? नाद्य इत्याह—स्ववाक्योपात्तेति। पाठक्रममाश्रित्य शङ्कते—प्रागिति। अर्थ-क्रमेण परिहरति—तत्राहेति। द्वितीयं शङ्कते—नन्विति। P. 228-4

किं केवलोपासनामात्रविधेरुपास्यापेक्षायां तत्समर्पकमिदं वाक्यम्? किं वा मनोमयत्वादिधर्मान्वयेऽपि तद्विशेष्याकाङ्क्षायां तत्समर्पकमिति? अथवा

---

१. मयड्विकारप्राचुर्यप्राधान्येष्विति केचन वैयाकरणाः पठन्ति, इति परिमलम्।

ब्रह्मशब्दानर्थक्यपरिहाराय तदेवोपासनाविधिना अपेक्षितं, तदनेन समर्प्यत इति ? आद्येऽपि किमुपासनाविधेरितरव्यावृत्ततया लब्धात्मनः शमविधिसंबन्धः? किं वा अलब्धात्मनोऽपि भाविप्रतिसन्धानेन? । नान्त्यः। नाम्ना येन केनचिद्गुणेन वा व्यावृत्ततया अनवगतस्य विध्यन्तरान्वयायोगात्, भाव्यान्वयात्पूर्वं वाक्यस्य वाक्यान्तरेण नान्वय इत्यस्य विश्वजिदादिवाक्येषु प्रसिद्धत्वाच्च । अन्यथा विश्वजिदादीनां विविदिषादौ विनियोगेन चारितार्थ्यसंभवे फलकल्पनावैफल्यापत्तेरित्याशयेनाह—

P. 228-4 **अत आहेति** । तदभिप्रायमाह—**सापेक्षस्येति** ।

आद्ये स्ववाक्यगतेनैवोपास्यजीवात्मना संबध्यते न वाक्यान्तरगतेन ब्रह्मणेति दर्शयितुं **तस्मादिति टीका** । तदभिप्रायमाह—**अनोमयत्वादिभिरेवेति** । द्वितीयं शङ्कते—**स्यादेतदिति** । यदेतद्वाक्यावगतमनोमयत्वादिमत्तत्किम् ? इत्याकाङ्क्षायां पूर्ववाक्यानुरोधेन ब्रह्मैवास्त्वित्यर्थः । स्ववाक्य एव सामर्थ्यानुरोधेन विशेष्यस्य निश्चितत्वान्नापेक्षेति परिहरति—**अत आहेति** । तृतीयं शङ्कते—**यदीति** । किमुपास्यसमर्पणपरब्रह्मशब्दबलात् ब्रह्मैवोपास्यं समर्प्यत इत्युच्यते ? किं वा तच्छ्रवणबलादेव ? नाद्य इत्याह—**अत आहेति** ।

किं विध्यपेक्षत्वात् 'तेन ही'त्यादेर्हेतुपरत्वम् ? किं वा श्रुत्यर्थलिप्सया ? अथवा दर्व्यादीनामपि होमकरणत्वलाभायेति, विकल्प्य प्रथमं निराकृत्य, द्वितीयमनूद्य दूषयति—**यत्त्वित्यादिना** । दर्व्यादीनामन्तरङ्गसाधनानामपि अहेतुत्वे (तथात्वे) व्यवहितस्य शूर्पस्य किमु वक्तव्यमिति द्योतयितुं **दर्व्यादिनेत्युक्तम्** । तृतीयमाशङ्क्य, निराकरोति—**अथेत्यादिना** । यत्र, हिशब्दघटितस्य वाक्यस्य श्रुतिवृत्तता संभवति 'चतुर्गृहीतान्याज्यानि भवन्ति न ह्यत्रानूयाजा इज्यन्ते ।' इत्यादौ, तत्रैव प्रयोजनान्तरलिप्सया हेतुपरत्वमिति भावः ।

P. 229-1

लक्षणाया अविशेषेऽपि, (श्रु)स्तुत्यनुगुणवर्तमानतादिनिर्देशाद्धेतुपरत्वे शूर्पस्य दर्व्यादिना विकल्पप्रसङ्गादपेक्षितत्वाच्च स्तुतिपरत्वमेवेति परिहरति—

P. 329-3 **अद्धेति** । **तच्छ्रवणबलादिति** द्वितीयं कल्पं निराकर्तुं **न चेत्यादिटीका** ।

१. अत्र कल्पतरौ 'अद्धा' इति ग्रन्थे 'अपूर्वार्थत्वादिति' इत्यनन्तरम् ('जै. सू. अ. १, पा. २, सू. २६-३०) अत्रायं विशेषो (विषयो) द्रष्टव्यः । इति निर्णयसागरमुद्रालयमुद्रितपुस्तके दृश्यते । तत् केनचित् कृतटिप्पणीरूपम् । प्रमादात् तत् मूल एव मुद्रितमिति ज्ञेयम् ।

**लिङ्गाद्ब्रह्मनिर्णय इति** प्रथमकृतविकल्पगतो द्वितीयः कल्पो नावकल्पते। अस्पष्टत्वेनान्यथासिद्धिशङ्काकलङ्कितत्वात्। नापि ब्रह्मलिङ्गभूयस्त्वम्, जीवलिङ्गानामपि बहुत्वादिति वक्तुं **सर्वकर्मत्वादि चेत्यादि**टीका। P. 228-9

अन्तिमब्रह्मशब्दादिति तृतीयं कल्पं निराकर्तुं **एतद्ब्रह्मेति चेति** टीका। जीवलिङ्गानां ब्रह्मणि कथञ्चिन्नयने, ब्रह्मलिङ्गानामपि तदभिन्नजीवे नयनसंभवात् न तदनुरोधेनापि ब्रह्मण उपास्यत्वमिति पूर्वपक्षोपसंहारार्थं **एवं सत्यसंकल्पादय इत्यादि**टीकेति द्रष्टव्यम्। P. 229-1 P. 229-1

प्रथमं ज्योतिरधिकरणन्यायावलंबनेन सिद्धान्तं दर्शयितुं **समास इत्यादि**-टीका। तत्र प्रथमार्धं व्याचष्टे—**प्राणश्शरीरमिति**। ननु व्युत्पत्तिबलादेव सर्वनाम्नः सन्निहितपरामर्शित्वं, न प्रत्यभिज्ञाबलात्। अत एव 'सा वैश्वदेवी' इत्यादौ तदभावेऽपि सन्निहितपरामर्शित्वं दृश्यत इति आशङ्क्य, तर्हि ततोऽपि सन्निहितो मनोमय एव तेन परामृश्यतामित्याह—**अस्तु तर्हीति**। आयोग्य-त्वात् सन्निधिरप्रयोजक इत्याशयेनाह—**सोऽपीति**। P. 229-3 P. 229-4

ननु प्रचुरप्रयोगेण मनोमयादिशब्दानां जीवपरत्वावगमात्, स एव सर्वनामार्थो, न व्यवहितं ब्रह्मेत्यतो मुख्यं सिद्धान्तप्रकारं दर्शयतीत्याह—**ब्रह्मोपादान इति**। **न चैष इत्यादि**टीकाभिप्रायमाह—**एष इत्यादिना**। P. 230-2

अत्र प्रकरणे 'अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतःप्रेत्य भवति' इति पूर्ववाक्ये यादृशाभिलषितगुणविशिष्टत्वेनोपासनं, तादृशमभिलषितं भवतीति, निर्दिष्टं फलकाममधिकाधिकारिणं, स इत्यनेन निर्दिश्य, क्रतुं कुर्वीतेत्युपासनं विहितम्। ततः, कथं कुर्वीतेत्याकाङ्क्षायां, 'मनोमयः प्राणशरीर' इत्यारभ्य 'एतमितः प्रेत्याभिसंभवितास्मी'त्यन्तेन सन्दर्भेण ध्यानप्रकारः प्रदर्शितः। ततश्च क्रतुविधेर्मनोमयत्वादिभिरादौ संबन्धात् सर्वना-

---

१. कल्पतरौ 'अतः स्ववाक्यस्थेन मनोमय इति मयडर्थेन' इत्यस्य स्थाने 'अस्तु तर्हि मनोमय इति मयडर्थेन' इति पाठान्तरम्। तदभिप्रेत्य आभोगः। परिमले—'अतः स्ववाक्यस्थेनेति। मयडर्थो मनोऽवच्छिन्नतया तद्विकारो जीव इति स एव सर्वनामार्थो भवेदिति भावः। अस्तु तर्हीति क्वचित्पाठः सोपि कथंचित् उक्ताभिप्रायो योज्यः।' इत्युक्तम्। अस्तु तर्हि इत्यस्यापि अत इत्येवार्थे इति भावः परिमलस्येति ज्ञायते। आभोगे तु शङ्कोपरि अस्तु तर्हीति ग्रन्थः योजितः।

मर्थस्यापि समासस्य मनोमयमादायैवोपपत्तेः, यत्र तन्मनोमयत्वादिकं, तदेवोपास्यं विशेष्यमिति पर्यवसानात्र ब्रह्मनिर्णय इत्याशयेनाशङ्कते—**यदि जीवद्वारेति** । P. 230-4

ततश्च लिङ्गाधीने निर्णये, जीवलिङ्गानामपि बहुत्वेन, भूयसांन्याया-प्रवृत्तेः ब्रह्मलिङ्गप्राबल्येनैव तन्निर्णयः कर्तव्य इति, तद्व्युत्पादनार्थमिदमधिकरणम् । न चैतत्प्रतर्दनाधिकरणे व्युत्पादितम् । अत्रैव 'विवक्षितगुणोपपत्तेश्च' 'अनु-पपत्तेस्तु न शारीरः' इति च सूत्रदर्शनेन एतदधिकरणव्युत्पादितस्यैव न्यायस्य तदधिकरणतात्पर्यविषयीभूतविचारोपयोगितया तत्रानुवादात् । अन्तरादित्याधि-करणमपि तत्र श्रुतानां सर्वेषामपि लिङ्गानामादित्ये संभवात् स एवोपास्य इति शङ्कानिराकरणार्थम् । ततश्च ब्रह्माब्रह्मलिङ्गबलाबलव्युत्पादनमत्रैवेत्यभिप्रेत्याह—**बलाबलेति** । P. 230-5

P. 230-6 उत न जीवस्येत्यादिटीकाभिप्रायमाह—**वस्तुत इति** । समारोप्य-स्येत्यादिटीकाभिप्रायमाह—**ज्ञायमानेनेति** । असाधारणस्वरूपज्ञानकाले तद्व-त्त्वेनाभिमत[पदार्थसत्वा]सत्वाभ्यां विशेष इति टीकाभिप्राय इति भावः । P. 231-2

P. 232-1 सामान्यत उक्तमर्थं प्रकृते निदर्शयितुं तस्मादिति टीकेत्याह—**प्रस्तुते इति** । ततश्च जीवे तदुपाधिविगमेन विना ब्रह्मधर्माणामपरिच्छिन्नत्वादीनामुपपादयितु-मशक्यत्वात्, तद्विगमे च जीवस्यैवाभावात्, ब्रह्मस्वरूपानुपमर्देन उपपादयितुं शक्या जीवधर्मा एव तत्रोपपादनीया इति ब्रह्मैवोपास्यमिति **टीकार्थ** इति भावः ।

श्रुत्यन्तरप्रसिद्धिवदिहत्यापि प्रसिद्धिरभ्युच्चयतया, धर्मोपलक्षणार्थ[1]मेवोप-न्यस्ता, न मूलयुक्तित्वेन, तदसंभवादित्याशयेन परिहरति—**अत आहेति** । P. 232-3

P. 233-1 नेच्छार्थः संभवतीति भाष्यं व्याख्यातुं तथा चेति टीकेत्याह—**विवक्षा-भावेति** । ततश्च अस्वातन्त्र्येण[2] विवक्षायामनादिपूर्वपूर्वन्यायसिद्धार्थविवक्षानाद-रेण स्वातन्त्र्याभावेन हेतुना, विवक्षा नास्तीत्युक्तम् । न तु स्वरूपेणैव नास्ती-त्युक्तमिति टीकार्थ इति भावः । **न त्विति** । उद्देश्यत्वप्रतियोगि यदुपादे-यत्वं तदुपादानपदेन नोक्तमित्यर्थः । P. 233-2

---

१. धर्मपदेन सार्वभ्यादिब्रह्मलिङ्गपरिग्रहः ।

२. 'अस्वातन्त्र्येण' इति टीकापाठः, न तु 'स्वातन्त्र्येण' इति पाठः, इति सूच्यते ।

ननु ग्रहोद्देशेन विधीयमानः संमार्गः कथं चमसेषु स्यात् ? अथ ग्रहो न विवक्षितः, तर्हि किमर्थः संमार्ग इत्याशङ्क्य, विधीयमानसंमार्गसामर्थ्यात् सोमाधारपात्रार्थता लभ्यत इत्याशयेनाह—**प्रकृतयागेति**। किञ्च संमार्गस्य ग्रहस्वरूपार्थत्वे आनर्थक्यात् सोमयागापूर्वसाधनोद्देशेन विधातव्यत्वात्, दर्शपूर्णमासापूर्वसाधनोद्देशेन विधीयमानस्य प्रोक्षणादेरिव यवसाधारण्यं, चमससाधारण्यं दुर्वारमित्याशयेनाह—**ग्रहपदस्य चेति**। श्रुतोद्देश्यसंभवे न सामर्थ्यलभ्यं तद्युक्तमित्याह—**तच्चेति**। प्रोक्षणादिवैषम्यमाह—**व्रीहियवयोस्त्विति**। **यवोपलक्षणार्थ इति**। तण्डुलनिर्वृत्तिप्रणाड्या यदपूर्वसाधनं, तदुद्देशेन प्रोक्षणविधौ यवसाधारण्यलाभादिति भावः । P. 233-4 P. 233-7

एकवचनश्रुत्यवष्टम्भेन शङ्कते—**नन्विति**। अवच्छेदकतयेत्यस्या-विवक्षितमित्यनेनान्वयमाह—**ग्रहगतं त्विति**। पश्वेकत्वयोः परस्परमन्वयानन्तरमेव यागान्वयेन वाक्यभेदाप्रसङ्गात्, विवक्षितं तत्रैकत्वमित्याह—**युक्ता हीति**। **उपादेयविशेषणत्वादिति**। ततश्च पशोरस्ति परिच्छेदकसंख्याकाङ्क्षेति भावः।. प्रकृते तद्वैषम्यमाह—**अत्र त्विति**। पदार्थानां परस्परसंबन्धे द्वयं प्रयोजकम्, परस्पराकाङ्क्षा वा, एकक्रियावशीकारो वा। आद्यमत्र नास्तीत्याह—**ग्रहत्वेति**। सोमावसेकनिर्हरणसामर्थ्यप्रकरणाभ्यां ग्रहेयत्ताया निश्चितत्वान्न परिच्छेदकाकाङ्क्षेति भावः। द्वितीयमपि नास्तीत्याह—**उद्दिश्यमानयोरिति**। विधेयानामेव द्रव्यदेवतादीनामेकक्रियावशीकार इति भावः। P. 234-1 P. 234-2

'हविरार्तिमार्च्छेती'त्यादाविव नोद्देश्यप्रतीतिपर्यवसानार्थमपि विशेषणापेक्षेत्याह—**ग्रह एवोद्देशनेति**। इच्छानिच्छे **गौण्यान्नित्याहेति**—उपा- P. 234-4

---

१. 'तद्गतं त्वेकत्वमवच्छेदकत्वेन वर्जितमविवक्षितम्' इति टीका। तत्र अविवक्षितमित्यस्य वर्जितमिति व्याख्या इति भाति।

२. अत्र 'सोमावसेकनिर्हरणप्रयोजनस्य संमार्गस्य सर्वेषु प्राकरणिकेषु ग्रहेष्वपेक्षितत्वेन तेषु केषांचिद्व्यावर्तकस्य संख्याविशेषस्यानाकांक्षितत्वादिति भावः' इति परिमलमनुसन्धेयम्। ३. 'उद्देश्ययोः क्रियां प्रति प्रधानयोः उपादेयवत् क्रियावश्यत्वाभावात्' इति परिमलमनुसन्धेयमिह।

४. 'ग्रह एवोद्देशनपर्यवसानाच्च' इति कल्पतरौ पाठ इति ज्ञायते। उद्देश्यत्वपर्यवसानाच्च इत्यपि पाठः। ५. कल्पतरौ 'गौण्या वृत्त्या इत्याह' इति पाठो दृश्यते। 'गौण्यावित्याह' इति पाठ इति ज्ञायते अनेन ॥

दानपरित्यागगतगुणयोगादिति भावः। ततश्च तद्द्वारा विवक्षिताविवक्षितशब्दा-
P. 234-4 वपि गौणावित्याशयः। **को गुण इतीति**। को गुण इत्याकांक्षायां स गुणस्तात्पर्य-
P. 235-1 तदभावरूपो **भाष्य एवोक्त** इत्याहेत्यर्थः। **विनिगममाहेति**। भेदबाधे
इति शेषः। [1]**विधिमात्रेति**। भावमात्रेत्यर्थः। ततश्च न जीवपरभेदः प्रत्यक्षादि-
गम्य इति भावः। **जीवभेदेति**। जीवस्य ब्रह्मभेदाप्रमितेरित्यर्थः। **जीवाविद्य-
योरित्यत्र** जीवशब्देन तदभिव्यक्तिः लक्ष्यत इति सहेतुकं दर्शयति—
P. 235-4 **जीवाविद्ययोरिति**।

भ्रमरूपाविद्यायां अन्योन्याश्रयं परिहृत्य, मूलाविद्यायामपि परि-
P. 236-2 हरति—**अनादिस्त्वित्यादिना**। **अविद्यातत्संबन्धयोरिवेति**। अविद्या-
धीनः तत्संबन्धः तत्संबन्धाधीना चाविद्या। चैतन्ये अविद्यासंबन्धाभावे, तदावार-
काविद्यारूपस्यैवाभावात्। ततश्च तद्वदेव परस्परतन्त्रत्वं न विरुद्धमित्यर्थः।
**तद्बलादिति**। स्वप्रकाशचैतन्ये अध्यासादिति भावः।

उत्पत्तिज्ञप्तिप्रतिबन्धकत्वाभावेऽपि लोकविरोधो दुर्वार इति शङ्कते—
**तथापीति**। **अव्याप्यादिति**। आपादकस्यैवाज्ञाने, तत्र व्याप्तिग्रहस्य दूरोत्सा-
रितत्वेन, यदि जीवः स्वाश्रिताविद्याश्रितः स्यात्, तदा लोकविरुद्धः स्यादिति
प्रसञ्जनायोगादित्यर्थः। ननु जीवो यद्यविद्याश्रितः स्यात्, अविद्याश्रयो न
P. 236-5 स्यात् प्रपञ्चवदित्यापादने न कोऽपि दोष इत्यरुचेराह—**अपि चेति**।
**अमूर्तत्वादिति**। आकाशसूक्ष्मरूपस्य च शब्दस्य नाकाशाश्रितत्वमिति भावः।
किन्तु अवच्छेद्यावच्छेदकत्वमित्यर्थः।

---

१. 'विदिमात्रव्यापारत्वात्प्रत्यक्षस्य' इति कल्पतरौ पाठान्तरम्। परिमले स पाठो व्याख्यातः—'विदिमात्रेति ज्ञानमात्रफलकत्वात् तत्त्वावेदकप्रमाणवत् प्रमितिफलकत्वाभावादित्यर्थः। विधिमात्रेति पाठेऽपि विधिपदं ज्ञापनमात्रपरम्।' इति। आभोगे तु 'आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः। नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते॥' इति ब्रह्मसिद्धौ उक्तत्वेन तदनुसारेण विधिपदं भावपरतया व्याख्यातमिति बोध्यम्॥

२. 'अविद्यासंबन्धस्तन्निरूपकाविद्याधीनः अविद्यापि तत्संबन्धाधीना। अविद्यासंबन्धाधीनत्वात् सर्वविवर्तानाम्, तत्र यथेतरेतरतन्त्रत्वमनादित्वान्न दोषावहं, एवमिहापीत्यर्थः।' इति परिमले।

३. कल्पतरौ 'स्वाश्रिताश्रितत्वस्य क्वचित्प्रमितौ' इत्यत्र क्वचिदिति प्रमेयत्वाभिधेयत्वादौ इति परिमले व्याख्यातम्। प्रमेयत्वनिष्ठधर्मस्यापि प्रमेयत्वादिति भावः तत्रावगन्तव्यः।

नन्वस्मिन्नपि पक्षे अविद्यया[1] जीवोऽवच्छिद्यते, जीवेन चाविद्येति परस्पराधीनत्वमविशिष्टमित्याशङ्क्य, नेदं दोषायेत्याह—तच्चेति[2]। प्रमाणस्य[3] प्रमाणत्वमबाधितप्रमेयावच्छेद्यं प्रमेयत्वमपि प्रमावच्छेद्यं दृश्यत इत्यर्थः। P. 236-6

नन्वेवमविद्याया अनाश्रितत्वे, 'अहमज्ञ' इति जीवाश्रितत्वेन प्रतीतिर्न स्यात्। जीवाधिष्ठानकत्वाभावे आध्यासिकतत्तादात्म्याभावेनापरोक्षत्वं च न स्यात्। समानाश्रयज्ञाननिवर्त्यत्वानुपपत्तिश्चेत्याशङ्क्य, जीवाश्रितैवाविद्या। न च लोकविरोधः। शास्त्रैकसमधिगम्ये तस्याकिञ्चित्करत्वात्। अन्यथा प्रकाशस्य तमस्संबन्धविरोधादविद्यैव न स्यात्। स्वयंप्रकाशे निरंशे ब्रह्मणि, चैतन्याद्यंशेऽनावरणं अखण्डानन्दाद्यंशे आवरणमित्यस्यापि लोकविरुद्धत्वाच्च। अत एव प्रागुक्ततर्कोऽप्यप्रयोजकः। तस्मान्नीरूपस्य पूर्णस्यापि ब्रह्मणः शास्त्रबलेन प्रतिबिंबाभ्युपगमवदविद्याया अपि प्रमाणबलेन जीवाश्रितत्वम्। सा च स्वरूपं विषयीकृत्य, स्वेनोपाधिना जीवं भिन्दत्येव तदाश्रितावतिष्ठते। अघटनघटनापटीयस्यास्स्वविषये कुण्ठीभावायोगात्।

न चैवं ब्रह्मणोऽविद्यापरिणामजगदधिष्ठानत्वायोगः रज्वादेर्जीवाश्रिताविद्याविषयीकृतस्य सर्पाद्यधिष्ठानत्वेन तदाश्रयत्ववत् ब्रह्मणोऽपि जीवाश्रिताविद्याविषयीकृतस्य तथात्वोपपत्तेः। विषयतासंबन्धेन संबन्धिनीं जीवाविद्यामादायैव 'मायिनं तु महेश्वरम्' 'मम माया दुरत्यये'त्यादिव्यवहारः ईक्षणादिव्यापारश्चोपपद्यत इति सर्वं समञ्जसमित्यभिप्रेत्याह—अधिष्ठानमिति। विवर्तानामाकाशादीनामधिष्ठानं ब्रह्म तदाश्रयः। अविद्यान्तःकरणादीनां[4] तु जीव आश्रय इत्यर्थः। P. 236-6

---

१. 'अविद्यावच्छेदोपाधिकं जीवत्वमिति जीवोऽविद्ययाऽवच्छिद्यते, अविद्या च चैतन्याश्रिता वृक्षाश्रितः कपिसंयोगो मूलेनेव जीवत्वेनावच्छिद्यते।' इति परिमलम्।

२. 'तच्चेतरेतरापेक्षम्' इति कल्पतरुपाठः।

३. 'प्रमाणत्वाकारेण हि प्रमाणं निरूपकप्रमेयावच्छेद्यम्, प्रमेयं च स्वविशेषणीभूतप्रमावच्छेद्यम्' इति परिमलम्। 'प्रमेयत्वाकारावगाहि' इति परिमले दृश्यते 'प्रमाणत्वाकारेण हि' इति शोधनीयम्।

४. कल्पतरौ 'जीवाविद्यादिकानां' इति परिमलानुसारी मुद्रितपाठः। परिमले 'जीवाविद्ययोराश्रयाश्रयिभावाभावे कस्तयोराश्रय इत्याकांक्षायां सर्वप्रपञ्चविवर्ताधिष्ठानं चैतन्यरूपं ब्रह्मैव केवलमित्यवच्छेद्यावच्छेदकतोक्त्या गर्भितमर्थं विवृणोति—अधिष्ठान-

P. 236-7 वैशेष्यादिति सूत्र इति । संभोगप्राप्तिरित्यादिसूत्रे वैशेष्यादिति यत्पदं तत्रेत्यर्थः । स्वार्थिकत्वे आनर्थक्यादतिशयो भावप्रत्ययेन लक्ष्यत इत्याशयेनाह—अतिशयस्त्विति । विशेषस्वरूपस्य यो भावः धर्मः [विशेषत्वरूपः] स इत्यर्थः ।
P. 237-1

॥ इति सर्वत्र प्रसिद्धाधिकरणम् ॥

---

## ॥ अथ अत्त्रधिकरणम् ॥

### सू०॥ अत्ता चराचरग्रहणात् ॥ ९ ॥

### सू०॥ प्रकरणाच्च ॥ १० ॥

P. 237-4 विषयवाक्यं व्याचष्टे—यस्येति । दुश्चरितात् चित्तमालिन्यहेतुव्यापारान्नाविरतः विरत इत्यर्थः । निर्विशेषस्य ततोऽपि दुर्ज्ञेयत्वं कैमुतिकन्यायेन दर्शयितुं यत्र स इत्यंशं क इत्था वेदेति पदावृत्त्या योजयति—यत्र चेति । पूर्वत्र मनोमयत्वादिलिङ्गानां ब्रह्मण्यस्पष्टत्वादिहापि सर्वसंहर्तृत्वलिङ्गस्यास्पष्टत्वात् पादसंगतिं सिद्धवत्कृत्य, पूर्वाधिकरणेन संगतिमाह—पूर्वेति । इह न

P. 238-1

---

मिति ।' इत्युक्तम् । आभोगे तु जीवस्यैवाविद्याश्रयत्वमभिप्रेत्य 'जीवोऽविद्यादिकानां' इति पाठः आश्रितः । इति बोध्यम् ।

भामत्यां 'न हि तद्भावस्य जीवस्य' इत्यत्र 'तद्भागस्य जीवस्य' इति पाठस्साधुरिति भाति । अविद्यावच्छेदलब्धजीवभावस्य औपाधिकस्य ब्रह्मभागस्य जीवस्येत्यर्थः । भामत्यामेव 'न चैतावता ईश्वरस्यानीशता' इत्यस्यायमर्थः—एतावता—पूर्वपूर्वकर्माद्यपेक्षत्वेन - पूर्वकर्माद्यपेक्ष्य बन्धकस्य ईश्वरस्य स्वातन्त्र्याभावशङ्कायाः परिहारोऽयं टीकाग्रन्थ इति भाति । अन्यथा टीकेयं प्रकृतार्थासंबद्धेव भाति । कथंचित् अस्य टीकावाक्यस्य सांगत्यमुपपादनीयम् ।

अत्राधिकरणे 'स्मृतेश्च' इति सूत्रे 'न च वाच्यं स्मृतेरपि स्ववचनत्वेन कथं विप्रतिपन्नं प्रति सूत्रकारः तामुपादत्त इति । तस्याः परोक्तानुवादरूपत्वात्' इति शङ्कासमाधाने मध्वसूत्रभाष्यटीकायां तत्वप्रकाशिकायां जयतीर्थः उपचिक्षेप ।

१. 'इह न सोऽत्तेति' इति कल्पतरुपाठः । पूर्वत्रोक्तं ब्रह्मणो भोक्तृत्वाभावमुपजीव्य पूर्वपक्षकरणात् उपजीव्योपजीवकत्वसंगतिरिति युक्तम् । पूर्वं यथा ब्रह्मणो भोक्तृत्वाभावः तथा अत्तृत्वाभाव इह प्रतिपाद्यत इति कथंचित् दृष्टान्तसंगतिर्बोध्या ।

**भोक्तेति**। इह श्रूयमाणो भोक्ता न परमेश्वर इति, तद्दृष्टान्तेन प्रत्यवस्थानात् संगतिरित्यर्थः। विषयमाक्षिपति—**विषयवाक्य इति**। अन्यस्यालाभादयमेव विषय इति परिहरति—**आशङ्क्याहेति**। P. 238-2

ननु कथं संशयः? साधारणधर्माभावात्। न चात्तृत्वं साधारणो धर्मः। तद्धि भोक्तृत्वम्। 'तयोरन्यः पिप्पलं स्वाद्वत्ती'त्यादावत्तृत्वस्य भोक्तृत्वरूपत्वावगमात्। तच्च नाग्निपरमात्मनोः। अत कथं संशय इति शङ्कते—**भोक्तृत्वलक्षणमिति**। "अद्यतेऽत्ति च भूतानि" 'स एव पात्यत्ति च पाल्यते चे'-त्यादिप्रयोगानुरोधेन संहर्तृत्वस्याप्यत्तृत्वरूपत्वात्, तदादाय संशयोपपत्तिरित्याशयेन परिहरति—**इत्याशङ्क्याहेति**।

ननु ओदनरूपभोग्यश्रवणादत्तृत्वं भोक्तृत्वमेव झटिति प्रतीयते। ततश्च न संशय इत्याशङ्क्य, ब्रह्मक्षत्रादेरोदनस्य भोग्यत्वायोगात् तदनुरोधेन संहर्तृत्वमेवात्तृत्वमादाय, संशय इति दर्शयितुं भोक्तृत्वस्य साधारणधर्मत्वाभावं दर्शयति—**यदेति**। **जीवात्मनश्चेति टीकां** युक्त्यन्तरपरत्वेन व्याचष्टे—**तयोरन्य इति**। P. 238-4 बाधितत्वात् प्रसाधनमप्यशक्यमित्याशयेन शङ्कते—**नन्विति**। तद्भोक्तृत्वं हि तद्भोग्याधीनभोगाश्रयत्वम्। ततश्च ब्रह्मक्षत्रादिशरीराणां साक्षात् परंपरया वा भोगसाधनत्वेन भोग्यत्वे, जीवस्य तद्भोक्तृत्वं कुतो न भवेदिति परिहरति—**अत आहेति**। **साक्षाद्वेत्येतदुपपादयति—छागादीति**।

ननु भोक्तृत्वस्य जीवमात्रधर्मत्ववत् सर्वसंहर्तृत्वस्यापि परमात्ममात्रधर्मत्वेन त्रितयसाधारणत्वाभावात् कथं संशय इत्याशयेन शङ्कते—**यदीति**। अश्रुतं P. 238-7 संहर्तृत्वं कल्प्यमानं त्रयाणामुपक्रमानुरोधेन त्रितयसाधारणमेव कल्प्यत इत्याशयेन परिहरति—**अत आहेति**। **टीकायां—त्रयाणामग्निजीवपरमात्मनामिति**। "स त्वमग्निं स्वर्ग्यमध्येषि" इत्यादिरग्नेः प्रश्नः। 'येयं प्रेते विचिकित्से'त्यादिर्जीवस्य। 'अन्यत्र धर्मा'दित्यादिर्ब्रह्मणः। 'लोकादिमग्निं तमुवाच' इत्यादिरग्निप्रश्नस्य **प्रतिवचनोपन्यासः**। 'हन्त त इदम्, प्रवक्ष्यामि' इत्यादिरुत्तरयोः प्रश्नयोः **प्रतिवचनोपन्यासः**। तदुपलब्धेरित्यर्थः।

ननु तर्हि भोक्तृत्वमप्यश्रुतं कल्प्यमानं त्रितयसाधारणमेव भोगोपयोगित्वरूपं कल्प्यताम्। ततश्च को विशेषः संहर्तृत्वस्येत्यत आह—**अत एवेति**। P. 238-7

यतः संहर्तृत्वस्यैव संशयप्रयोजकत्वं युक्तं, न भोक्तृत्वस्य, अत इत्यर्थः। निर्विकारे ब्रह्मण्यपि मुख्यसंहर्तृत्वासंभवात् युक्तं विनाशकारणत्वरूपं गौणं संहर्तृत्वमाश्रयितुम्। नैवं भोक्तृत्वं, जीवे मुख्यस्यैव तस्य संभवादिति वैषम्यमिति

P. 238-8 भावः। व्याख्याबीजमाह—**वनितादिष्विति**। **वनितादिविषये भोक्तृत्वसत्वेऽपीत्यर्थः**।

**भोक्तृत्वप्रतीतिरिति**। मुख्यभोक्तृत्वप्रतीतिरित्यर्थः। **तिरोभूतभेदेति**। अविवक्षितोपमानोपमेयभेदेत्यर्थः। अत एव 'त्वत्कृपाणभुजङ्गस्य क्षीरं विद्विषतां यश,' इत्यादौ न मुख्यपातृत्वमिति भावः। उत्सर्गतो मुख्यस्यैव प्रतीतिरिति

P. 238-12 परिहरति—**अत्रोच्यत इति**। **मृगयाविन इति**। युद्धमृगयया स्वदेशमवितुं रक्षितुं शीलं यस्य तस्येत्यर्थः। **क्षत्रिय एवेति**। परनरपतिरूपगौणमृगनिर्देशेऽपि **मृगयावी क्षत्रिय** एव मुख्यो यथा प्रतीयते, तथा गौणौदननिर्देशेऽपि मुख्यभोक्तृप्रतीतिरविरुद्धेत्यर्थः।

लोकप्रसिद्धिबलेनौदनगतभोग्यत्वगुणप्रतीत्या, भोक्तृत्वप्रतीतिसंभवेऽपि, स्ववाक्यश्रुतमृत्यूपसेचनकत्वलिङ्गबलेनौदनगतविनाश्यत्वगुणप्रतीत्या, संहर्तुरेव प्रतीतेर्न जीव इहात्ता। किन्त्वग्निरिति द्वितीयपूर्वपक्षं दर्शयितुं—**यदि त्विति**

P. 238-14 **टीकायां** सिद्धान्तपक्षनिराकरणे हेतुं दर्शयन्नवतारयति—**अविक्रियस्येति**। न च स्रष्टृत्ववत् संहर्तृत्वोपपत्तिः। ब्रह्मणः प्रपञ्चप्रविलयकारणत्वेऽपि लोकप्रसिद्धसंहर्तृत्वायोगादिति भावः। **तवापीति**। जीवो भोक्तृत्वादत्तेति वदतः तवापि ओदनशब्दो भोगसाधने गौणः। स ममापि विनाश्ये गौणोऽस्त्वित्याशयेनाहेत्यर्थः।

P. 239-1 **कस्तर्हीति**। ततश्च **भोगायतनं भोगसाधनं वा न भवत्योदन इति पूर्वटीकार्थ** इति भावः। **न चात्रेति टीकां** विनिगमकप्रतिपादनपरत्वेन व्याचष्टे—**अपि चेति**। न केवलं तौल्यम्। विनिगमकमपि चेत्यर्थः।

P. 239-2 **ब्रह्मक्षत्रोपलक्षितेति**। उपसेचनत्वोक्त्या मृत्योरपि नाश्यत्वावगमेन **ब्रह्मक्षत्रशब्दस्य** मृत्युसंस्पर्शिसर्वचराचरोपलक्षकत्वादिति भावः। अनवक्लृप्तिमेव

---

१. 'मृगयाविनोदिनः इति पाठस्साधुः। मृगयाविन इति पाठस्तु अक्षरद्वयभ्रंशेन प्रामादिकः' इत्यपि परिमले।

कल्पतरुग्रन्थे कीर्तितः भारतीविलासः भास्करमतानुयायी इति ज्ञायते।

दर्शयति—**टीकायां—न च जीवस्येत्यादिना। टीकायां—कश्चिद्भवेदिति।** P. 239-4
कश्चिच्छागादिर्भक्ष्यो भवेदित्यर्थः। सर्वस्य जीवस्येत्यन्वयः। जीवस्यात्तृत्वं कर्तृ ब्रह्मक्षत्रमपि सर्वं न व्याप्नोतीत्यर्थः।

**ब्रह्मक्षत्रमृत्युश्रुतीनामिति।** व्याघ्रादिभक्ष्यछागादिमात्रपरत्वेन, तद्घातकमात्रपरत्वेन च संकोचो न कल्पनीय इत्यर्थः। ततश्च श्रुतिसंकोचावहत्वात् भोग्यत्वस्य प्रथमप्रतीतत्वेऽपि विनाश्यत्वापेक्षया विशेषरूपत्वेऽपि च न तल्लक्षणेति भावः।

नन्वस्मन्मते श्रुतेः संकोचमात्रम्। त्वन्मते त्वानर्थक्यमेव। विशिष्य ब्रह्मक्षत्रग्रहणस्य निष्प्रयोजनत्वादिति शङ्कते—**यदीति।** किं विशिष्य तस्यैवो- P. 239-5
पलक्षकत्वेन ग्रहणे कारणं पृच्छसि? किं वा तस्येतरव्यावर्तकत्वं बाध्यते इति। नाद्य इत्याह—**अत आहेति।** द्वितीये, किमितरव्यावर्तकत्वं श्रौतं? कल्प्यं वा? आद्ये आह—**अत आहेति।** द्वितीय आह—**पञ्चपञ्चनखा-** P. 240-1
**दाविति।** मनुष्यादिनिवृत्त्या वा किं प्रयोजनमित्यत आह—**तथा चेति।** पञ्चेत्यनेन गोधादिपञ्चनखजन्तुव्यतिरिक्तमनुष्यादिपञ्चनखजन्तुव्यावर्तनस्य तदंशे, न हिंस्यादिति शास्त्रबाधप्रयुक्तानर्थनिवृत्तिः प्रयोजनमित्यर्थः।

इह तु प्रयोजनाभावान्न कल्पनमित्याह—**इहेति।** यदा चराचरोपलक्ष- P. 240-2
णार्थं ब्रह्मक्षत्रग्रहणं, तदा, संहर्तृत्वमपि लयकर्तृत्वमेव। अचरप्रपंचे लोकप्रसिद्धसंहर्तृत्वायोगात्। तच्च मायोपाधिके परमात्मन्येवेति, न पूर्वपक्षोक्तो दोष इति वक्तुं **तथा चेत्यादिटीकेत्याह—मायोपाधेरिति।** "मायिनं तु महेश्वरमित्युपक्रम्य, "यस्मिन् क्षेत्रे संहरत्येष देव' इति, तस्य संहर्तृत्वश्रवणादिति भावः।

॥ इति अत्त्रधिकरणम् ॥

---

## ॥ अथ गुहाधिकरणम् ॥

### सू०॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

### सू०॥ विशेषणाच्च ॥ १२ ॥

P. 240-5 **पूर्वसिद्धान्तपक्षेति** । पूर्वपक्षस्य सिद्धान्तपक्षस्य चाक्षेप इत्यर्थः ।

P. 241-2 **प्राकृतेति** । प्राकृतसुपर्णविषयत्वेन भासमान 'द्वासुपर्णे'त्यादिमन्त्रसारूप्यादिहापि तद्विषयत्वशङ्केत्यर्थः । **लक्षणां वक्तुमिति** । भाष्योक्तामित्यर्थः । एवमपि कथं लक्षणा मुख्यत्वसंभवादित्याशयेन शङ्कते—**अन्यात्रिति** । सृष्टिशब्दस्य सृष्टघसृष्टिसमुदायलक्षकत्वं सहेतुकमुपपादयति—**तत्र सृष्टीरुपदधातीति** । **सृष्टचसृष्टिमन्त्रा इति** । सृजिधातुसहिताः तदसहिताश्च मन्त्रा इत्यर्थः ।

P. 241-5 **यदि सृष्टिमन्त्रेष्टकानामिति** । 'तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतो'रित्यनुशासनेन **सृष्टिशब्दनिर्दिष्टानामिष्टकानामुपधाने यदि विधानमित्यर्थः** । न चोपधानविधानात् पूर्वं **सृष्टिपदेन** सृष्टिमन्मत्रोपधेयेष्टकाभिधानस्यैवायोगेन कथं तासामुपधाने विधानमिति वाच्यम् । **सृष्टिशब्दस्य** सृष्टिमन्त्रवत्य एवाभिधेयाः । न तूपधानमपि । गौरवात् । **सूत्रे** तन्निर्देशस्तु मन्त्राणां इष्टकासंबन्धस्तद्वारकः, इति वस्तुगतिमनुरुध्येति भावः ।

**तर्हीति** । एतद्वाक्यप्रवृत्तेः पूर्वं केनचित्प्रमाणेन सृष्टिमन्त्राः एताः असृष्टिमन्त्राः एताः, इति विशेषानवगमेनैतद्वाक्यनिर्देशबलेनावगम्यमानाः 'प्राणभृत उपदधाति,' 'वज्रिणीरुपदधाती'त्यादिविध्यसंसृष्टाः सर्वा एव सृष्टिमंत्रिकाः स्युरित्यर्थः । ततः किं ? तत्राह—**तत्रेति** । न चेष्टकाग्रहणादिषु विनियोगेन साफल्यम् । ग्रहणादीनामार्थिकत्वेन मन्त्रानपेक्षत्वात् , अवेक्षणादिभिर्विनिगमनाविरहात् , असाधारणलिङ्गाभावेनोत्कर्षस्यैव न्याय्यत्वात् , उपधानमन्त्रमध्यपाठानर्थक्यात् , 'यत सप्तदशेष्टका उपधाती'ति, वाक्यशेषानुरोधेन तेषामुपधानसंबन्धस्यैव वक्तव्यत्वाच्चेत्यर्थः । समुदायद्वारा समुदायिलक्षकत्वं प्रकृते दर्शय-

P. 242-2 न्नपिबत्संसृष्टतामित्यादिटीकां व्याचष्टे—**एवमत्रापीति** ।

अत्र भाष्यटीकयोः जीवपरमात्मपक्षे पिबच्छब्दो मुख्य एवेति पक्षान्तरमुक्तम् । तदयुक्तम् । स्वातन्त्र्यलक्षणं हि कर्तृत्वं प्रत्ययार्थः । तच्च न

तत्प्रयोजकेऽस्ति। न च कर्तृत्वसामान्यमेव शतृप्रत्ययवाच्यम्। प्रयोजककर्तरि, पिबन्, पिबति, पातेत्यादिप्रयोगाभावेन, क्वाचित्कस्य '**यः कारयति स करोत्येवे**'त्यादिप्रयोगस्य लाक्षणिकत्वसंभवेन च, तथा शक्तिकल्पकत्वाभावात्। अन्यथा, 'अग्नीनादधीत' इत्यादौ, प्रयोजककर्तुरपि मुख्यत्वेनात्मनेपदविरोधाभावे, प्रयोज्याहितैरग्निभिः प्रयोजकोऽपि यजेतेत्याद्यापत्त्या, येनाधानं कृतं तस्यैव तेऽग्नयः कार्याय भवन्ति नान्यस्येति सिद्धान्तविरोधापत्तेः। **बुद्धिजीवपक्षे**, लक्षणापत्त्या पिबच्छब्दस्य मुख्यवृत्त्यनुरोधेन, जीवपरमात्मनिश्चये, पूर्वपक्षायोगाच्चेत्याशङ्क्य,

न **भाष्यटीके** प्रकृतिप्रत्ययोभयमुख्यत्वाभिप्रायेण प्रवृत्ते। किन्त्वन्यतरमुख्यत्वाभिप्रायेण प्रवृत्ते। तत्रापि **जीवपरमात्मपक्षे**, प्रत्ययो मुख्यः। प्रकृतिस्तु सृष्टिन्यायेन पानपायनसमुदायलक्षणया तदुभयपरा। **बुद्धिजीवपक्षे** तु, बुद्धेरपि पानक्रियां प्रति कारकत्वसद्भावेन तद्विशेषकर्तृवाचिना प्रत्ययेन तदेव लाघवाल्लक्ष्यते। न च जीवपरमात्मपक्षेऽपि प्रत्ययस्यैव कर्तृत्वसामान्यलक्षकत्वसंभवे किं वैषम्येणेति वाच्यम्। प्रकृत्यर्थपानक्रियां प्रति स्वातन्त्र्यलक्षणस्य कर्तृत्वस्य प्रयोजके बाधितत्वात्। तस्य कारकत्वाभावात्। पायनक्रियाद्वारैव कथंचित् पानकर्तृत्वं वक्तव्यमिति, प्रथमोपस्थितावश्यकपायनलक्षणाया एव न्याय्यत्वाच्चेत्यभिप्रेत्य **टीकां** व्याचष्टे—**प्रत्ययस्येति**। P. 242-4

संगतिं दर्शयन् पूर्वपक्षटीकामवतारयति—**पूर्वत्रेति**। **टीकायां—क्लेशादिति**। गुहाप्रवेशः किं ब्रह्मणः स्वरूपेण, जीवभावेन वा? नाद्यः—पूर्णस्य तदनुपपत्तेः। नान्त्यः। तेन सह प्रविष्टत्वश्रवणविरोधात्। न हि जीवरूपेण संसरतोऽपि परमात्मनो जीवपरमात्मानौ संसरत इति व्यपदेशो भवति। अतो लक्षणाश्रयणक्लेश इत्यर्थः। सोऽपि न युक्त इत्याह—**टीकायां न चेत्यादिना**।

लोकसंबन्धिनोऽपि ब्रह्मणो न सुकृतलोकसंबन्धः। तल्लोकसंबन्धस्य सुकृतफलभोगार्थत्वेन ब्रह्मणि तदयोगात्, किन्तु, बुद्धेरेवेति **वक्तुमपि चेत्यादिटीका**। तत्र—**अतदाश्रयत्वादिति** कर्मानाश्रयत्वात्-कर्मासंबन्धादित्यर्थः। जीवस्य तमस्त्वाभावे **अभिन्न** इत्यनेन सूचितं हेतुं प्रकटयति—**टीकायां—प्रकाशेति**। ततश्च बुद्धिजीवलिङ्गानुसारेण पिबन्ताविति साधारणश्रुतेः जीवपरत्वमित्युपसंहर्तुं **तस्मादिति टीका**। P. 242-9

नन्वग्निजीवपरमात्मनां त्रयाणामेव प्रकृतत्वात् कथं बुद्धेरप्यभिधानमित्याशङ्क्य, 'येयं प्रेते विचिकित्सा मनुष्ये' इति प्रश्नवाक्यगतविचिकित्सापनुत्तये, विविक्तजीवस्वरूपकथनाय तदभिधानमित्याह—**टीकायां तत्रेति**। अस्य

P. 243-1 **द्वितीयतेत्यादिश्लोकभागं** व्याकुर्वन्नेव **सिद्धान्तटीकामवतारयति—अस्य जीवस्येति**। **द्वित्वाधारतेति** पर्यवसितार्थकथनम्। अर्शआद्यच्प्रत्ययान्त-**द्वितीयशब्दात्** भावप्रत्ययाश्रयणात् सद्वितीयत्वं तदर्थः। अत एव वक्ष्यति—**टीकायां सद्वितीयत्वे** इति।

(सामर्थ्यात्मक) सारूप्यात्मकजीवब्रह्मलिङ्गस्य बुद्धिजीवलिङ्गेन बाधं

P. 243-2 शङ्कते—**नन्विति**। जीव(ब्रह्म)लिङ्गान्यनन्यथासिद्धानि। अविद्योपाधिकस्य जीवस्यापि स्वतो गुहाप्रवेशासंभवात्। बुद्धिद्वारा चेत्, ब्रह्मणोऽपि। किञ्च बुद्ध्यधीने जीवस्य प्रवेशे, प्रविष्टाविति द्विवचनश्रुत्यनुपपत्तिः। न ह्युपष्टंभकाधीने सुवर्णस्य गुरुत्वे 'उपष्टंभकसुवर्णे गुरुणी' इति व्यपदेशोऽस्ति। बुद्ध्यधीनं तु प्रवेशमादाय जीवपरमात्मानौ शक्यौ व्यपदेष्टुम्। एवं सुकृतलोकवर्तित्वमपि, अन्तर्यामिभावेन जीवस्य फलोपभोगनिर्वाहाय ब्रह्मणो युज्यते। तेन विना जीवस्य क्वचिदप्यव्यवहारात्। एवं जीवस्य छायारूपत्वमप्यज्ञानावृतत्वाद्युज्यते। पञ्चाग्निपरिचरणत्रिवारकृतनाचिकेताग्निचयनपरिशोधितान्तःकरणशालिब्रह्मविदुक्ति-विषयत्वं च ब्रह्मलिङ्गम्। ततश्च साधारणासाधारणब्रह्मलिङ्गोपोद्बलितप्रथमावगत-(सामर्थ्य) सारूप्यलिङ्गानुरोधेन ब्रह्मणैव सद्वितीयत्वमिति परिहरति—**अत आहेति**।

ननु पारतन्त्र्यादिना बुद्धिरपि जीवस्य सरूपा किं न स्यादिति शङ्कां निराकर्तुं स्वाभाविकत्वेन झटित्युपस्थितं चैतन्यमेव सारूप्यघटकमित्युक्तम्—

P. 243-4 **टीकायां—तदिह चेतन इति। टीकायां—कर्तृत्वोपचारादिति**। पिप्पलं स्वाद्वत्तीति कर्मफलोपभोगकर्तृत्वोपचारादित्यर्थः। यथोक्तं पक्षं निराकरोति—**टीकायां—न खल्विति**। शङ्कायाः फलं दर्शयति—**टीकायां—सिद्धान्तार्थमिति**। **सिद्धान्तन्यायसिद्धमर्थं ब्राह्मणं** व्याचष्ट इति शङ्काभाष्याभिप्रेतोऽर्थ इत्यर्थः। ततश्च ब्राह्मणव्याख्यातसिद्धान्तभाक्त्वं स्यादिति भावः।

P. 243-3 न्यायं दर्शयति—**अत्तीत्यस्येति**। अभिपश्यतीत्यर्थः इति अभिचाकशी-

---

1. सभ्यावसथ्यसहितत्रेताग्निरूपपञ्चाग्निपरिचरणेत्यर्थः।

तीत्यस्य ब्राह्मणानुरोधेन व्याख्या। अनुपपत्तिं शङ्कत इति। ग्रन्थात् बहिरिति शेषः। परिहारस्य वर्तमानत्वाच्छङ्काया अपि वर्तमानत्वनिर्देशः। तदापत्त्येति। स्वप्रतिबिंबितचैतन्यतादात्म्येनेत्यर्थः। P. 243-6

ऋतं पिबन्ता'विति श्रुतिं व्याचष्टे—सुकृतस्येति। बुद्धौ परमे इति। बुद्धौ यत्परमं तत्रेत्यर्थः। 'तं दुर्दर्श'मित्यादिश्रुतिं गृहीत्वा व्याचष्टे—'तं दुर्दर्श'मिति। अनेकानर्थसंकट इति। कार्यकरणसंघात इत्यर्थः। प्रत्याहारपूर्वकं धारणादित्रयं योगशब्देन विवक्षितमित्याशयेनाह—विषयादिति। P. 243-8

'द्वा सुपर्णे'त्यादिश्रुतिमुपादाय व्याचष्टे—मुण्डक इति। 'ओ व्रश्चू च्छेदने' इति धातुमभिप्रेत्याह—उच्छेद्यत्वादिति। अश्वत्थफलवाची पिप्पलशब्दः कथं कर्मफले प्रयुक्त इत्यत आह—संसारस्येति। 'ऊर्ध्वमूलोऽधश्शाख एषोऽश्वत्थः सनातनः' इति श्रुतेरिति भावः। 'समाने वृक्षे पुरुषो निमग्न' इत्यादिश्रुतिमुपादाय व्याचष्टे—समान इति। अविद्याधीना दैन्यसंभावना अनीशेत्याह—न कस्यचिदिति। ब्रह्मविवर्ततया प्रपञ्चस्य मिथ्यात्वं दर्शयितु'मस्य महिमान'मिति श्रुतिः। तामितिशब्दस्य व्यवहितान्वयेन व्याचष्टे—प्रपञ्चमिति। गम्यमानां क्रियामभिप्रेत्याह—भवतीति। P. 244-1 P. 245-2

॥ इति गुहाधिकरणम् ॥

---

## ॥ अथ अन्तराधिकरणम् ॥

सू०॥ अन्तर उपपत्तेः ॥ १३ ॥

सू०॥ स्थानादिव्यपदेशाच्च ॥ १४ ॥

सू०॥ सुखविशिष्टाभिधानादेव च ॥ १५ ॥

सू०॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

सू०॥ अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥

ननु 'प्राणो ब्रह्म, कं ब्रह्म, खं ब्रह्मे'त्युपक्रमस्थस्य ब्रह्मणः 'आत्मविद्ये'त्यत्रात्मशब्देन परामृष्टस्य य एष इति सर्वनाम्ना परामर्शसंभवात्, ज्योति-

P. 245-4 रधिकरणेन गतार्थतेत्यत आह—इयं चेति । अतश्चेति । पूर्वप्रकृताभावादित्यर्थः । ननु दृश्यत इत्यस्यापि लौकिकशास्त्रीयदर्शनपरत्वेन सन्दिग्धत्वात्, कथं सर्वनामापेक्षितार्थसमर्पकत्वमित्याशङ्क्य, लोकप्रसिद्धिबलेन लौकिकमेव दर्शनं
P. 245-5 निश्चितमित्याह—स चेति ।

नन्वन्तरादित्यवाक्ये तत्रत्यान्तरक्षिवाक्ये च दृश्यते इत्यस्य शास्त्रीयदर्शनपरत्वात्, प्रकृतेऽपि तथा किं न स्यादित्याशङ्क्य, हिरण्मयपुरुषे प्रत्यक्षदर्शनस्य बाधितत्वेनादित्यवाक्ये शास्त्रीयदर्शनाश्रयणेन, तत्सरूपे अक्षिवाक्ये तदाश्रयणेऽपि, प्रकृते प्रतिबिंबपूर्वपक्षे न लोकप्रसिद्धिबाध इत्याशयेनाह—दृश्यत इत्यस्येति । 'एतं श्लोकमिति । द्वितीयश्लोकमित्यर्थः । उपक्रमप्राबल्येन पूर्वपक्ष इति स्फोरयितुं इमं श्लोकं व्याचष्टे इति भावः ।

न च 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन बहुब्रह्मलिङ्गानुरोधात् श्रुतिरेव कथञ्चिन्नेयेति वाच्यम् । "य एषोऽक्षिणि पुरुषो दृश्यते" इत्युक्त्वा, 'एष आत्मेति होवाचे'ति, "एतदमृतमेतदभयमेतद्ब्रह्म" इति च तमेव दृश्यमानं पुरुषमेतच्छब्देन पुनः पुनर्निर्दिश्य स्तुत्वा, तत्स्थानमपि निर्लेपमिति तद्द्वारापि 'तद्यद्यपी'त्यादिना स्तुत्वा, तस्यैव संयद्वामत्वादिना गुणेनोपासनविधानात् छायापुरुषः प्रधानम् । ततश्च—'आत्मार्थे पृथिवीं त्यजेत्' इति न्यायेन शेष्यनुरोधात् बहूनामपि शेषाणामन्यथानयनस्य युक्तत्वादिति भावः ।

ब्रह्मोपक्रमाभ्युपगमेनापि पूर्वपक्षं दर्शयितुं 'कञ्च खञ्चे'त्यादिवाक्यमिति टीका । सा न युक्ता । वक्तृभेदेऽपि तदर्थस्याचार्यबुद्धिस्थत्वेन सर्वनाम्ना परामर्शसंभवादित्याशङ्क्य, "लोकान् वाव किल सोम्य तेऽवोचन्नहं तु ते तद्वक्ष्यामी' ति पूर्वासंस्पृष्टार्थकथनप्रतिज्ञाविरोधेन सर्वनाम्ना न तत्परामर्शो युक्त इत्येवं तदभिप्रायं दर्शयन्, नियम्यनियामकत्वानभ्युपगमे, लिङ्गविरोधं
P. 242-2 शङ्कते—भिन्नवक्तृकत्वेनेति ।

'एषा सोम्य तेऽस्मद्विद्यात्मविद्या चे'ति स्वोक्तविद्योपसंहारपूर्वक'माचार्यस्तु ते गतिं वक्ते'त्युक्तत्वात् न तद्विद्यागत्यभिप्रायम् । तथात्वे, अग्निविद्यायामप्यर्चिरादिगतिप्रसङ्गात् । किन्तु, 'प्राणो ब्रह्मे'त्यादिना निर्विशेषब्रह्मविद्या 'अथ

१. टीकायां द्वितीयश्लोके 'स खल्वत्रापि युज्यते' इति पाठः ।

हैन'मित्यादिना (अस्मद्धि)अग्निविद्या चोक्ता। तत्र च 'लोकी भवती'ति स्वर्गलोकफलश्रवणेन पितृयाणगतिरुक्तप्रायेति मनसि निधाय, आचार्यस्तु देवयानाख्यं गत्यन्तरमपि वक्ष्यति तद्धेतूपासनामुखेनेति तदभिप्राय इत्याशयेन परिहरति—**अत आहेति।**

स्यादेवं, यदि सर्वनाम्नोरितरनिरपेक्षयोः प्रत्यक्षाभिधायकत्वं स्यात्। यदि वा दृश्यत इत्यनेन प्रथममन्वयः स्यात्। न चैवं संभवति, पर्यवसिताभिधानं हि पदं पदान्तरेण संबध्यते नेतरथा। ततश्च, सर्वनामार्थपर्यवसानाय, तद्विशेष्याकाङ्क्षायां पुरुषादिपदैरात्मन एव निश्चितत्वेन ब्रह्मैव प्रथमावगतमिति, तदनुरोधेन दृश्यत इत्येतदेव शास्त्रीयदर्शनपरं व्याख्येयमिति **सिद्धान्तटीकाभिप्रायमाह—य एष इत्यादेरिति। तदुपादत्त इति। अधिकरणावसान**भाष्यमित्यर्थः। **तद्व्याख्यातीति** प्राप्तावसरत्वादाकृष्य व्याख्यातीत्यर्थः। P. 246-4

उत्तरत्राप्येतच्छब्देन पुरुषस्यैव परामर्शादसिद्धं छायापुरुषस्य शेषित्वम्। ततश्च प्रकृते 'त्यजेदेक'मिति न्याय एवेत्याशयेनाह—**टीकायामपि चेति। तद्यद्यपीत्यादिश्रुतिरपि** ब्रह्मपक्ष एव सप्रयोजनेति दर्शयति—**टीकायामेतदमृतमित्यादिना। टीकायां वामशब्दार्थकथनानन्तरं तेन संयच्छब्दस्य** तृतीयाबहुव्रीहिः प्रदर्शितः। तस्य प्रयोजनं दर्शयन् तट्टीकामवतारयति—**एतमिति। संगच्छमानानीत्यस्य** उद्देश्यं दर्शयन्नाह—**जीवान् प्रतीति। एतं हीत्यस्येति।** श्रुताविति शेषः। अन्यथा कर्मफलप्राप्तिं प्रति परमात्मन एव कर्मत्वं निर्दिष्टं स्यादिति भावः। P. 247-4

---

१. 'अत आहेति। गतिवचनं विद्यान्तराभिप्रायं, गतेरवगत्यर्थत्वात्। न तूक्तपरिशिष्टाभिप्रायम्। एषा सोम्य त इत्यादिना अग्निविद्यावत् आत्मविद्याया अपि निरवशेषोपदिष्टत्वेन उपसंहारात्। अन्यथा देवयानगतिवचनस्य आत्मविद्यायामिव अग्निविद्यायामप्यन्वयप्रसंगादित्याहेत्यर्थः।' इति परिमले। टीकागतं 'गत्यन्तराभिप्रायम्' इति पदं परिमलरीत्या विद्यान्तराभिप्रायमित्यर्थकम्। आभोगरीत्या उपासनान्तरस्थदेवयानगत्यभिप्रायमित्यर्थकम्। इति विशेषः।

२. अधिकरणावसानभाष्यव्याख्यानरूपटीकाग्रन्थे 'विदुषो विषयः शास्त्रत उपलब्धि'रित्येतस्मिन् विषयपदं क्वचित् कोशे नास्ति। यत्रास्ति कोशे तद्रीत्या कल्पतरौ 'विदुषो विषयः तेन निष्पाद्या शास्त्राद्योपलब्धिः' इति व्याख्यातम्, इति परिमले उक्तम्।

**टीकायां स्थानिन इति** पञ्चम्यन्तम् । स्थान्यपेक्षयेत्यर्थः । अभि-

P. 248.1 व्यक्त्यर्थं हृदयाद्येकस्थानत्वस्यापि दर्शनात् कथं टीकेत्यतो व्याचष्टे—**स्थाना-न्तरेति**। कृत्वाचिन्तोद्घाटनार्थं सूत्रमित्याशयेनावतारयति—**टीकायां–अपि चेति** ।

अत्र प्रकरणे अग्निविद्या सगुणब्रह्मविद्या चेति विद्याद्वयमेव विव-क्षितम् । न निर्विशेषविद्यापि । उपक्रमोपसंहारयोरेकस्या एव ब्रह्मविद्यायाः स्वरसतो दर्शनात् । तत्फलानभिधानाच्च । किन्तु, ब्रह्मविद्योपक्षेपमात्रम् । तन्मा-त्राभिप्रायेण चात्मविद्येत्याग्नीनां वचनं, 'गतिं वक्ते'ति च गतिग्रहणमवशिष्ट-मात्रोपलक्षणम् । अत एव 'लोकान्वाव किल सोम्य तेऽवोच'न्निति लोकफला अग्निविद्या एव कृत्स्नोक्त्यावोचन्नित्यनूद्य, ब्रह्मविद्यायां अकृत्स्नत्वादनुक्तत्वमेव मत्वा, 'अहं तु ते तद्वक्ष्यामी'त्यादिना तदग्निभिः सामान्येनोपदिष्टं ब्रह्म तथा वक्ष्यामि येन प्रकारेणैतदुपासके पापासंस्पर्शो भवतीति प्रतिज्ञाप्युपपद्यते । एवं प्रतिज्ञाय सत्यलोकप्राप्तिफलकत्वेनोपदिश्यमाना उपासना कथं छायापुरुषस्य स्यात् । तस्मात् ब्रह्मण एवात्रोपासनमित्यमुमर्थमाख्यायिकां व्याख्याय दर्शयति—**टीकाकार** इत्यभिप्रेत्य, तत्परित्यक्तानि पदानि व्याचष्टे—**कमलस्येत्यादिना**।

'अथ हैनं गार्हपत्योऽनुशशासे'त्यादिश्रुत्यर्थमाह—**पृथिव्यग्निरित्या-**

P. 248-2 **दिना** । श्रुतावपेक्षितमध्याहरति—**इमा एव चतस्रस्तनव इति** । **न चैत-दिष्टमिति टीका**मेतच्छब्दार्थकथनपूर्वकमुपादाय, तत्र हेतुमाह—**न चैतत्प्रती-कत्वमिति**। 'कञ्च तु खं च न विजानामी'ति प्रश्नपूर्वकं, 'यद्वाव कं तदेव खं यदेव खं तदेव कम्' इति प्रतिपादितब्रह्मविद्याया **आत्मविद्याशब्देन परा-मर्शादित्यर्थः**। ततश्च प्रतीकत्वाभ्युपगमेन प्रश्नः, अपरिच्छिन्नसुखरूपत्वेन प्रतिवचनं, ब्रह्मपदस्थाने आत्मपदं च न स्यादिति भावः ।

**टीकायां परस्यान्त इति** । परस्य सत्यलोकस्थस्य ब्रह्मणः अन्ते, समीपे **कृतात्मानो** निश्चितात्मान इत्यर्थः । 'अथोत्तरेण तपसा ब्रह्म-चर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्ते एतद्वै प्राणानामायतनमेत-दमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्त' इति श्रुतिमुपादाय व्याचष्टे—

P. 250-1 **अथोत्तरेणेतीति** । **सूर्यमिति** । सूर्यस्य जगदात्मत्वं, 'सूर्य आत्मा जगतः' इति श्रुतिसिद्धमिति भावः ।

हिरण्यगर्भभूतं सदिति । सूर्यस्य च हिरण्यगर्भरूपत्वं छन्दोगोपनिषदि पुराणेषु च प्रसिद्धम् । 'अग्निर्ज्योतिरहश्शुक्ल' इति स्मृतिं व्याचष्टे—अग्निरर्चिर्देवतेति । तेऽर्चिषमभिसंभवन्ती'ति श्रुतौ निर्दिष्टा अर्चिरभिमानिनी देवता अग्निशब्देन निर्दिष्टेत्यर्थः । ज्योतिस्सूर्य इति । "संवत्सरादादित्य"मिति श्रुतौ निर्दिष्टः सूर्य इत्यर्थः । P. 251-1

॥ इति अन्तराधिकरणम् ॥

---

## ॥ अथ अन्तर्याम्यधिकरणम् ॥

सू० ॥ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

सू० ॥ न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

सू० ॥ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

अशरीरस्येति । स्वकर्मार्जितशरीररहितस्येत्यर्थः । अशरीरस्त्वित्यादिटीकोक्तमनुमानमाह—अशरीरं इति । अनेन विशेषणेनाशरीरत्वं हेतुरुक्तः । ननु किमशरीरत्वमात्रं हेतुः? नियम्यातिरिक्तशरीरराहित्यं वा? नाद्यः—असिद्धेः । ब्रह्मणोऽपि नियम्येन शरीरेण, सशरीरत्वात् । नान्त्य इत्याह— P. 252-2

---

१. 'ज्योतिस्सूर्य इति । 'अग्निर्ज्योति'रिति स्मृतौ क्रमो न विवक्षित इति भावः' इति परिमलम् ' 'अग्निज्योतिश्शब्दाभ्यां अर्चिरभिमानिनी देवता लक्ष्यते'. इति गीतागूढार्थदीपिकायां मधुसूदनसरस्वती । 'श्रुतावर्चिश्शब्दस्याग्निज्योतिरुभयसाधारण्यात् श्रुत्यार्चिरित्युक्तम् , तदेवात्र विभज्य दर्शितम् , ततो न कोऽपि विरोधः' इति शङ्करानन्दी । गीताभाष्ये 'यत्र काले' इत्युपक्रमानुरोधेन 'अग्निः कालाभिमानिनी देवता । तथा ज्योतिरपि देवतैव कालाभिमानिनी । अथवा अग्निज्योतिषी यथाश्रुते एव देवते । भूयसा तु निर्देशः 'यत्र काले तं काल'मिति आम्रवणवत्' इत्युक्तम् । वेङ्कटनाथः तात्पर्यचन्द्रिकायाम्—अग्निर्ज्योतिरिति अग्निरूपज्योतिरित्यर्थः । तेन देवयानप्रथमपर्वस्थार्चिर्विवक्षा । अत एवाग्निज्योतिषोर्भिन्नदेवतात्वं कालाभिमानिदेवतात्वं च वदन्तः प्रत्युक्ताः । इत्याह । अग्निज्योतिश्शब्दद्वयेन स्वरसतोऽर्थद्वयप्रतीतेर्दुरपह्नवत्वेन वेङ्कटनाथ एव प्रत्युक्तः। अभिनिवेशवतां प्रत्युत्तरं भगवानपि वक्तुं न समर्थः ।

२. अत्र कल्पतरौ पूर्ववाक्ये 'दृष्ट' इति पदं 'दृष्टान्तितः' इति शोधनीयम् ।

P. 252-3 नन्विति । आद्यकल्पमभिप्रेत्य, तत्रासिद्धिं परिहरति—न नियम्येति । सोपाधिकत्वशङ्कानिराकरणेन श्लोकं व्याख्यातुं प्रवृत्तीत्यादिटीकेत्याह—अचेतनत्वमिति ।

चेतनस्य शरीरिण इति—टीकासूचितमर्थमाह—नियमनमिति । मुक्ते तदभावादिति । ततश्चोपाधिव्यतिरेकेण साध्यव्यतिरेकसाधने, तत्र व्यभिचार इति भावः । असमर्थादपि कार्योत्पत्तौ दण्डमाहेत्याह—विपक्ष इति । उभयकारणत्वेति । उपादानत्वनिमित्तत्वेत्यर्थः । शारीरश्चेति सूत्र-निरसनीयजीवपूर्वपक्ष एव भाष्याभिमत इति दर्शयितुं, पक्षान्तराणामाभासत्वं P. 253-1 दर्शयति—टीकायां—तत्र यद्यपीत्यादिना ।

टीकायां—अदृष्टत्वाश्रुतत्वादीनीति । 'अदृष्टो द्रष्टा अश्रुतः श्रोता' इत्यादिश्रुत्युक्तानीत्यर्थः । टीकायां—शरीरेन्द्रियादियोगश्चेति । पृथिव्या आयतनवाच्यशरीरत्वस्य, अग्नेर्लोक्यतेऽनेनेति व्युत्पत्त्या, लोकशब्दवाच्यचक्षुष्ट्वस्य, ज्योतिश्शब्दवाच्यसर्वार्थप्रकाशकस्य मनसश्च श्रवणादिति भावः । टीकायां—प्रतिनियतेति । पृथिव्याद्यभिमानिजीवानां स्वस्वशरीरत्वेन निर्दिष्ट-पृथिव्याद्येकैकनियामकत्वादित्यर्थः ।

टीकायां—व्यापाराभावादिति । सृष्टिनियमनादिव्यापाराभावादित्यर्थः । पारिशेष्यादिति । पूर्ववाक्यस्थस्यान्तर्यामीति पदस्य, जीव एवेति वक्ष्य-माणेन संबन्ध इत्यर्थः[1] । ननु जीव एवेत्यस्य वक्ष्यमाणेनान्तर्यामि-पदेनेति । व्यवहितत्वेन, तत्रापि जीवात्मेति पदश्रवणेन च तदयोगात् । श्रुतानां पदानां जीवे योजनां प्रदर्श्य, तदतिरिक्तान्तर्यामिस्वीकारे, बाधकमाह—P. 253-13 टीकायां—यदि पुनरिति ।

टीकायामेकवचनं चेति । 'योऽन्तरो यमयती'त्युपक्रमगतमित्यर्थः । अनयैव च टीकया शङ्कान्तरमपि निराकृतम् । तथा हि—ननु कथं पृथि-

---

१. कल्पतरौ 'पारिशेष्याज्जीव एवेति । अन्तर्यामीति वक्ष्यमाणेन संबन्धः' इति वाक्ये यथाश्रुतार्थे दोषात्, जीव एवेति वक्ष्यमाणेन प्रकृतजीवपदेनैव, पूर्वपददृष्ट्या अस्यैव वक्ष्यमाणत्वसंभवात् । अन्तर्यामीत्यस्य अनुषक्तस्य पूर्ववाक्यस्थान्तर्यामीति पदस्य संबन्धः इत्यर्थः क्लेशेनाश्रितः ।

व्याद्यभिमानिजीवः 'एष त आत्मे'ति गौतमं प्रत्यात्मत्वेनोपदेष्टुं शक्यत इति शङ्का, कर्मोपासनाभ्यां पृथिव्यादिजीवरूपतापि संपादयितुं शक्यत इति स्फोरणाय, जीवस्यैव सामान्यात्मनैव अन्तर्यामित्वप्रतिपादनात् सामान्यविशेषयोश्चाभेदात्, तथा निर्देश इति परिहारः। **तदिदमुक्तम्—एकवचनं चेति**। एकत्वेन कथनं जात्यभिप्रायमित्यर्थः। यद्वा, अन्तर्यामिणं ब्रूहीति तत्स्वरूपस्यैव पृष्टत्वेन गौतमस्य तदभेदकथनाप्रसक्तेः ते त्वत्संबन्धी अन्तर्यामी एष आत्मेत्यन्वयान्न विरोधः। सर्वथापि न पूर्वपक्षविरोध इत्यभिप्रायेणोपसंहरतीत्याह—**पूर्वपक्षमिति**। P. 252-7

**किमिदमशरीरत्वमिति**। यद्यपि **शरीरेण भोक्तृत्वेनान्वय** इति प्रागेवोक्तम्। तथापि शाखाचंक्रमणव्यावृत्त्यर्थं विकल्प्य, दूष्यत इति ध्येयम्। त्वदार्जकत्वमात्रेणैव, तन्नियन्तृत्वसंभवे, भोक्तृत्वांशो व्यर्थ इति, **तृतीयकल्पनिराकरणं द्वितीयकल्पनिराकरणेनैव सिद्धमिति मत्वा, टीकायामुपेक्षितं** भङ्गयन्तरेण स्वयं निराकरोति—**तृतीये त्विति**। P. 254-1

परमात्मा जीववन्नियम्य इत्यत्र किं नियन्तृत्वं हेतुः, उत पारतन्त्र्यम्? नाद्य इत्याह—**तत्राहेति**। तथा च न नियन्तृत्वमात्रं हेतुः। त्वन्मते, जीवनियन्तुरन्यस्यानभ्युपगमेन जीवे व्यभिचारात्। किन्तु, नियन्तृत्वेनाभिमतप्रतियोगिकभेदसमानाधिकरणनियन्तृत्वम्। तच्च दृष्टान्ते विकलमिति भावः। नान्त्य इत्याह—**औपाधिकस्य हीति**। ततश्च नानुपहितस्य पारतन्त्र्यमित्यसिद्धिरिति भावः। P. 254-2

ननु 'एष त आत्मे'ति श्रुतेः प्रत्यभिज्ञाने तात्पर्याभावात्, जात्यभिप्रायं तद्भविष्यति, इत्याशङ्क्य, लोकप्रसिद्धस्यान्तर्यामिणः स्वरूपेण प्रश्नायोगादुत्तरत्र 'अदृष्टो द्रष्टे'त्यादिना, उपाधितदभावाभ्यामदृष्टत्वद्रष्टृत्वादिकमुक्त्वा, तयोर्भेदशङ्कां 'नान्योऽतोऽस्ति द्रष्टे'त्यादिना प्रतिषिध्य, पुन'रेष त आत्मे'त्यादिना प्रागसकृदुक्तमन्तर्याम्यभेदं जीवस्योपसंहृत्य, विरुद्धयोरौपाधिकयोरपि कथमभेद इत्याशङ्कां निराकर्तुं, 'अतोऽन्यदार्त'मिति, स्वरूपव्यतिरिक्तस्य सर्वस्यापि मिथ्यात्वकथनेनाभेदस्यैव दृढीकारादन्तर्यामिस्वरूपप्रश्नो जीवब्रह्माभेदपर्यन्त इति तात्पर्य-

---

१. अचेतनत्वमुपाधिरिति सोपाधिकत्वात् तृतीयकल्पनिरास इति भावः।

विषयीभूतं प्रत्यभिज्ञानं नान्यथा नेतुं शक्यमित्याशयेन टीकाभिप्रायमाह—
P. 254-4 **जीवानामिति**।

अभ्यस्तत्वान्नैकवचनं कथञ्चित् व्याख्यातुं शक्यमित्याशयेनाह—**एकत्व इति**। सिद्धान्तेऽप्यभेद एवेत्यत आह—**औपाधिकेति**। **काण्वपाठे,** न टीकोक्तः क्रम इत्यत आह—**माध्यन्दिनेति**। **लौकिके कर्तरीति**। शरीर इत्यर्थः[1]। 'यः पृथिव्या' मित्यादिश्रुतिं व्याचष्टे—**पृथिव्यामित्यादिना**।
P. 255-3 'अप्रतर्क्यमविज्ञेय' मिति **सांख्यस्मृतिं** व्याचष्टे—**अप्रतर्क्यमिति**।

॥ इति अन्तर्याम्यधिकरणम् ॥

---

## ॥ अथ अदृश्यत्वाधिकरणम् ॥

सू०॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

सू०॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

सू०॥ रूपोपन्यासाच्च ॥ २३ ॥

P. 255-2 **भाष्योक्तैवेति**। प्रत्युदाहरणलक्षणेत्यर्थः। **ब्रूयादित्यध्याहार इति**। ततश्च, **योनिशब्दो निमित्तं ब्रूयाच्चेदित्यर्थ** इति भावः। ननु परिणामपरिणामिनोः सारूप्यनियमो 'न विलक्षणत्वा' दित्यधिकरणे निराकरिष्यते। ब्रह्मणः
P. 256-1 परिणामानभ्युपगमात् तन्निराकरणायोगश्चेत्यत आह—**परिणाममतमिति**। **सिद्धान्तिन इति कृत्वा,** विचारेणेत्यर्थः। **टीकासूचितमनुमानमाह—भूतयोनिरिति**। **टीकायां** सारूप्यनियमप्रतिपादनेन हेतोरप्रयोजकत्वशङ्कानिरास इति भावः। **परिणामिनो** नाशावश्यंभावात् **कथमक्षरशब्दनिर्दिष्टं** नित्यत्वमित्याशयेन शङ्कते—**नन्विति**। न, क्षरतेर्धातोरयमक्षरशब्दो निष्पन्नः।
P. 256-3 किन्त्वश्नोतेर्धातोरित्याशयेन परिहरति—**अत आहेति**।

---

१. लौकिके कर्तरि शरीरे दर्शनादिवृत्त्यविरोधात् दर्शनादिविषयत्वसंभवात् आत्मनीति टीकायां व्याख्यातमिति कल्पतरुभावः।

**आगमेनेति।** 'यः सर्वज्ञ' इत्याद्यागमेन भूतयोनेश्चेतनत्वप्रतिपादनादिति भावः। 'अक्षरात् परत' इत्यस्य पञ्चम्यन्तत्वं प्रकटीकुर्वन्नेव समानाधिकरणे पञ्चम्याविति दर्शयति—**अक्षरात्परादितीति।** ब्रह्मणो नामरूपाधिष्ठानत्वे, भूतसूक्ष्मस्याज्ञानस्य सहकारितायां घटकसंबन्धमाह—**तद्विषयतयेति।** व्याख्याबीजमाह—**अचेतनानामिति भाष्यमिति। इत्याहेति।** इत्याशयेनाहेत्यर्थः। विशयाभावे, प्रायदर्शनस्याकिञ्चित्करत्वादिति भावः। P. 256-3

पूर्वत्र द्रष्टृत्वादिवदिह सर्वज्ञत्वादिश्रवणात् कथं पूर्वः पक्ष इत्याशयेन शङ्कते—**नन्विति।** सर्वज्ञत्वादिकमन्यविषयत्वान्नाक्षरस्य प्रधानत्वे बाधकम्। यच्च बाधकं द्रष्टृत्वादि तदिह नास्तीत्याशयेनाह—**बाधकं द्रष्टृत्वादीति।** ईक्षत्यादीत्यादिशब्देन 'अक्षरमंबरान्तधृते'रित्यादिचिन्ता गृह्यते। **द्वितीयार्धमिति। योनिशब्दो निमित्तं चेदित्यर्धमित्यर्थः।** P. 256-6 P. 256-9

ननु **शारीरोऽपीत्यादिभाष्ये,** निमित्तत्वस्य जीवब्रह्मसाधारणत्वोक्त्या, विकल्पेन पूर्वपक्षवर्णनमयुक्तम्। **योनिशब्दस्य** जीवब्रह्मसाधारणनिमित्तवाचकत्वेऽपि ब्रह्मणो भूतयोन्यक्षरात परत्वोक्त्या तस्य जीवत्वनिश्चयसंभवादित्याशङ्क्य, भूतयोनेर्जीवत्वेऽपि, नाक्षरादित्यक्षरशब्दो जीवपरः तस्य परिच्छिन्नस्य, कार्यकरणसंघाताभिमानिनोऽनित्यस्य स्वतोऽक्षरत्वायोगात्। ब्रह्मभावेन तथात्वे च भेदनिर्देशायोगात् अश्नुत इति व्युत्पत्त्या, तस्य प्रधानपरत्वात्। अत एव भाष्ये **'विशेषणभेदव्यपदेशाभ्या'मिति सूत्रे भेदव्यपदेशः** प्रधाननिराकरणपरत्वेनैव व्याख्यात इत्याशयेन भाष्यं व्याख्यातुं **तथापीत्यादिटीकेति** नियमपूर्वपक्षासंभवं दर्शयन्नाह—**सति चेतनपरत्व इति।** P. 256-10

---

१. 'आगमेनानुमानयोर्बाधमाशङ्क्याह' इति कल्पतरौ पाठमभिप्रेत्य प्रतीकधारणमिदम्।

२. अचेतनानामेव तद्दृष्टान्तत्वेनोपादानात्' इति भाष्यम् अचेतनदृष्टान्तप्रायदर्शनात् भूतयोनेरचेतनत्वं इत्येका युक्तिः, कार्यकारणसारूप्यस्य दृष्टान्तेषु दर्शनात् भूतयोनेरपि कार्यसरूपत्वमित्यपरा युक्तिः इति युक्तिद्वयप्रदर्शनपरम्, न प्रायदर्शनमात्रपरं, अपि तु सारूप्यप्रतिपादनपरमपीति तात्पर्यम्।

३. 'निमित्तवाचिनो योनिशब्दस्यादृष्टद्वारा निमित्ते जीवेऽपि वृत्तिस्संभवति। अतो भूतयोनिः ब्रह्मैवेति निर्णयहेतुर्नास्तीति अविनिगमेन पूर्वपक्षसंभव उपपादितः। 'अक्षरात्परतः परः' इति श्रुतब्रह्मगतपरत्वावधित्वलिङ्गेन भूतयोन्यक्षरं ब्रह्म न भवति,

अदृश्यत्वादिगुणको भूतयोनिशब्दप्रतिपाद्यः, परमात्मैव। तद्धर्मसर्वज्ञत्वाद्युक्तेरिति भाष्योक्तं प्रतिज्ञादिकं सिद्धवत्कृत्य, सर्वज्ञत्वादिकं न भूतयोनेरिति पूर्ववाद्युक्तं निरस्यति टीकाकार इत्याशयेनाह—यदुक्तमिति। P. 256-10 सर्वविदो विश्वयोनित्वकथनं प्रकृतानुपयुक्तमित्यतो व्यत्यासेन योजनामाह—विश्वयोनिरिति। एवं च टीकायां नाचेतनमिति फलितार्थकथनपरम्। ततश्च, नाचेतनं प्रधानं भूतयोनिरित्यर्थ इति भावः। यस्मादर्थ इति। P. 257-3 अव्ययमिति भावः।

न चाक्षरशब्देति। ततश्च श्रौतत्वादक्षरप्रत्यभिज्ञा जगदुपादानत्वलिङ्गावगतप्रत्यभिज्ञातो बलवतीति भावः। लैङ्गिकत्वेऽपि प्राथमिकत्वेन प्राबल्यमित्याह—प्रथमश्रुते इति। 'यस्सर्वज्ञ' इति वाक्य इत्यनेन यच्छब्दश्रुतिरपि प्रकृतभूतयोनेरेव सर्वज्ञत्वे प्रमाणमित्युक्तम्। किञ्च प्रथमश्रुतमक्षरं नात्र निर्दिश्यते। विभक्त्यर्थवैलक्षण्यात्। किन्तु 'येनाक्षर'मित्यत्रैव। ज्ञेयत्वसारूप्यात्। ततश्च श्रौतप्रत्यभिज्ञापि ब्रह्मण्येव प्राथमिकीति, तदनुरोधेनाक्षरादित्यक्षरशब्देन 'अप्राणो ह्यमना' इति पूर्ववाक्यनिर्दिष्टप्राणमनःपरिणामित्वेनोपस्थितमव्याकृतमेव निर्दिश्यत इत्याशयेनाह—येनाक्षरमिति। P. 257-5

टीकायाम्—यत्तु सारूप्येत्यादिना पूर्वपक्षोक्तमनूद्य, किमूर्णनाभ्यादिदृष्टान्तानुरोधेन परिणाम एव श्रुतौ विवक्षित इत्याश्रित्य, सारूप्यनियमं ब्रवीषि? किं वा विवर्तपक्षेऽपीति विकल्प्य, प्रागुपन्यस्तश्रुतिलिङ्गवाक्यानुरोधेन ब्रह्मपरे सन्दर्भे सति, कार्यस्य कारणाव्यतिरेकमात्राभिप्रायेण दृष्टान्तोपादानाभ्युपगमान्न ब्रह्मणः परिणाम इति प्रथमं निराकृत्य द्वितीयं निराकर्तुं विवर्तस्त्विति टीका। तत्र [1]द्वितीयार्धं युक्त्यन्तरपरत्वेन व्याचष्ट इत्याशयेनाह—विवर्तस्त्विति। प्रयोजनमिति। अधिकरणस्येति शेषः। भोग्येति पाठस्तु, स्पष्टार्थ एवेत्यभिप्रेत्याह—भोगेति। P. 257-6

---

किंतु जीव एवेति निर्णयेनापि पूर्वपक्षस्संभवतीति द्रष्टव्यम्' इति परिमले उक्तम्। तत्खण्डनाय आभोगकारस्येयमुक्तिरिति ज्ञायते।

१. 'द्वितीयार्धं' द्वितीयार्धे 'अनादिवासनोद्भूत' इत्यंशमित्यर्थः' इति परिमलम्।

**ऋतुयजनेत्यादिटीका**मिप्रायमाह—**ऋतुष्विति** । 'ऋत्विग्दधृगित्यादिना क्विन्प्रत्यये, 'वचिस्वपी'त्यादिना यकारस्य संप्रसारणे इकारे, तदनन्तरस्याकारस्य 'संप्रसारणाच्चे'ति पूर्वरूपे, 'ऋतु इज्' इति स्थिते, यणादेशे, 'क्विन्प्रत्ययस्य कु'रित्यनेन सूत्रेण जकारस्य कुत्वे, खरि चेति चर्त्वे ऋत्विक्छब्दो निष्पन्न इत्यर्थः । 'पत्युर्नो यज्ञसंयोग' इति सूत्रार्थमाह—**यज्ञसंयोग इति** । **अन्त्यस्येति** । 'अलोऽन्त्यस्ये'ति सूत्रादिति भावः । **ततो ङीपि कृत इति** । 'ऋन्नेभ्यो ङीप्' इत्यनेनेति भावः । P. 258-1 P. 258-2

**प्रधानवारणार्थ इती**त्यनन्तरं तथा व्याख्यातमिति शेषः । **ईश्वराश्रयमि**ति भाष्यं **टीकाकार**मतानुरोधेन योजयति—**अक्षरमव्याकृतमित्यादीति** । **अधिष्ठानत्वे**—जगदधिष्ठानत्वे । क्लिष्टयोजनायां निमित्तमाह—**किञ्चेति** । बहुसामञ्जस्यमेव दर्शयति—**प्रकृतिविकारेति** । ततश्च न ब्रह्म जगदुपादानं स्यादिति भावः । **आक्षेपसमाधानाभ्यामिति टीकां** व्याचष्टे—**अदृश्यत्वादिति** । **प्रथमस्येति** । निराकाङ्क्षस्येति शेषः । अन्यथासिद्धं लिङ्गमिति शङ्कते—**लिङ्गमिति** । अन्यथासिद्धिशङ्कापि न कर्तुं शक्येति परिहरति—**तथा सतीति** ।

अत्र परिमले, '**अन्ये पुनर्मन्यन्ते**' इत्यस्य पक्षस्य भाष्यकाराभिमतत्वेन व्याख्यानं **टीकायामयुक्तम्** । प्रकरणबलेन भूतयोनेरेव सार्वात्म्यविवक्षया रूपोपन्यासात् । लिङ्गस्य च सार्वात्म्यपरत्वेनान्यथासिद्धत्वात् । मूर्धादिश्रुतिबाधस्य हिरण्यगर्भपक्षेऽपि तुल्यत्वात् । न हि तस्य द्युप्रभृतयः अवयवसंस्थानविशेषाभिव्यङ्ग्यमूर्धत्वादिजातियुक्ता अवयवा भवितुमर्हन्ति । सार्वात्म्यविवक्षया तत्कल्पनं तु परमात्मन एव युक्तम् । तस्यैव सर्वकारणत्वेन मुख्यसार्वात्म्ययोगात् ।

अत एवाग्रिमाधिकरणे, देवतापक्षनिराकरणार्थं भाष्यं '**देवतायास्सत्यप्यैश्वर्ये न द्युमूर्धत्वादिकल्पनं संभवति' अकारणत्वादिति** । न च प्रथमश्रुतापाणिपादत्वादिविरोधान्न तस्य तत्कल्पनमिति वाच्यम् । शाण्डिल्यविद्यायां श्रुतज्यायस्त्वविरुद्धाणीयस्त्वकल्पनदर्शनेन निर्गुणेऽपि सार्वात्म्यप्रतिपत्त्यर्थं तत्कल्पनोपपत्तेः ।

अत एव निर्विशेषप्रतिपत्त्युपायतया, प्रियशिरस्त्वरथरथिभावादिकल्पनापि तत्र तत्र दृश्यते। सविशेषगतस्यापि रूपस्य निर्विशेषस्तुत्यर्थमुपन्याससंभवाच्च।

अत एव भूमविद्याप्रकरणे, 'स एकधा भवती'त्यादिना सगुणविद्याफलेनापि स्तुतिः। तथा च ज्ञेये ब्रह्मणि रूपोपन्यासाङ्गीकारे, रूपवत्त्वं पारमार्थिकं स्यादिति भ्रान्तिनिवृत्त्यर्थं **टीकाकारैः** तथा भाष्यमवतारितमित्याचार्यैरपि तथाभिप्रायो वर्णित इत्येव युक्तम्।

अत एव 'हृदयं विश्वमस्ये'ति श्रुतिव्याख्यानावसरे, 'हृदयं मन' इति व्याख्याय, विश्वस्य मनस्त्वकल्पनायां संबन्धो दर्शितः **'तन्मनसा सृष्टत्वा'-दिति**। न हि विश्वं हिरण्यगर्भमनसा सृष्टमिति ब्रह्मपरत्वमेव मन्त्रस्याभ्युपगतमित्युक्तम्।

**तच्चिन्त्यम्**। हिरण्यगर्भस्यैवायं रूपोपन्यासो युक्तः। कुतः ? विग्रहवत्त्वलिङ्गात्। न च तस्य सार्वात्म्यपरत्वम्। मूर्धादिश्रुतिव्याकोपात्। न च हिरण्यगर्भपक्षेऽपि श्रुतित्यागः। तस्य शरीरित्वेन, मूर्धाद्यवयवयोगित्वात्। **तथा च भाष्यम्**—'स वै शरीरी प्रथम' इति। तथा च हिरण्यगर्भमूर्धादेः अग्न्यादितादात्म्येन स्तुतिरिह विवक्षितेति मुख्या एव मूर्धादिशब्दाः। अस्तु वा अमुख्यत्वम्, तथापि हिरण्यगर्भपरत्वमेव। तस्य मूर्धादिसंबन्धयोग्यत्वात्। सामर्थ्येन प्रकरणस्य बाधात्।

किञ्चैवं मूर्धादिशब्दानां आनर्थक्यमेव स्यात्। अग्न्यादिकीर्तनेनैव सार्वात्म्यसिद्धेः। कथञ्चिदुपयोगवर्णनस्य गत्यन्तरे सत्ययोगात्। अपि चैवं वाक्यमेवेदमनर्थकं स्यात्। सार्वात्म्यस्य 'पुरुष एवेद'मित्यादिना वक्ष्यमाणत्वात्। निर्विशेषप्रकरणत्वेन वैश्वानरविद्यायामिवोपास्यगुणसमर्पकत्वायोगात् प्रतिपत्त्युपायतया स्तुत्युपायतया वा रूपोपन्यासस्य जायमानवर्गमध्ये अयोगात्। तथा च **भाष्यम्—इहैव कथमकस्मादन्तराले भूतयोनेः रूपमुपन्यसेदिति**।

किञ्च भूतयोनिप्रकरणेऽपि सृष्टेरिदमवान्तरप्रकरणम्। सन्दंशात्। तथा च भाष्ये सन्दंशमुदाहृत्य, **सृष्टिं परिसमाप्येत्युक्तम्**। अवान्तरप्रकरणं च महाप्रकरणाद्बलवत्। अतोऽपि सृज्यहिरण्यगर्भपरत्वमेव, आकरयोः सन्निध्युपन्यासस्तु, सोऽपि संभवतीत्यभिप्रायेण। तन्मनसा सृष्टत्वादित्यपि, हिरण्यगर्भसृज्य-

विश्वाभिप्रायम्। परमात्मनो मनोराहित्येन, तदयोगात्। तथा च तत्र **यस्येत्यर्थे अस्यशब्द** इत्युक्त्वा, यस्य मूर्धा अग्निरित्याद्यन्वयप्रदर्शनपूर्वकमेष **सर्वभूतगतप्राणानां समष्टितया सर्वभूतान्तरात्मा एतस्माज्जायत इत्यनुषङ्ग** इत्युक्तम्। तस्मात् भाष्यकाराभिमतो युक्तश्चायं पक्ष इति, सर्वमनवद्यम्।

**टीकायां**—प्रकरणादित्ययं '**सर्वरूपोपन्यासः परमेश्वरप्रतिपत्तिहेतुरिति** भाष्यस्य शेषः पूरितः। तस्य प्रयोजनमाह—**पुरुष एवेत्यादिना**। P. 260-2 'यथोर्णनाभि'रित्यादिश्रुतिं व्याचष्टे—**ऊर्णनाभिरिति**। 'येनाक्षर'मित्यादिश्रुतिं व्याचष्टे—**येन ज्ञानेनेति**। 'स ब्रह्मविद्या'मित्यादिश्रुतिं व्याचष्टे—**सर्वविद्येति**। 'परीक्ष्य लोका'नित्यादिश्रुतिं व्याचष्टे—**कर्मनिर्मितानिति**। P. 260-5 आयादित्यत्र लङो लिङर्थकत्वेन व्याख्याने को हेतुरित्याशङ्क्य, विधिसमभिव्याहारादित्याह—**गच्छेदितीति**।

'तद्विज्ञानार्थ'मिति तच्छब्देन परामर्शादक्षतशब्देन ब्रह्मैवोच्यते। तस्य च कर्मजन्यत्वशङ्कानुन्मेषात् कर्मसु वैराग्यहेत्वलाभाच्च नास्त्यकृतः कृतेनेति, नैकं वाक्यम्। किन्तु द्वे वाक्ये इत्यभिप्रेत्य व्याचष्टे—**संसार इति**। **अध्याहार इति**। किंशब्दाध्याहार इत्यर्थः। 'दिव्यो ह्यमूर्त' इत्यादिश्रुतिं व्याचष्टे—**दिवि स्वात्मनीति**। 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्या' वित्यादिश्रुतिं व्याचष्टे—**अग्निर्द्यौरिति**। पद्भ्यामिति तृतीयामित्थम्भावार्थकत्वेन व्याचष्टे **पादरूपेणेति**। P. 260-6 'तस्मादग्निस्समिध' इत्यादिश्रुतिं व्याचष्टे—**तस्मात्परमात्मन इति**। P. 261-5 'हिरण्यगर्भस्समवर्तते'त्यादिश्रुतिं व्याचष्टे—**सदाधारेति**। **ब्रह्मणे**—चतुर्मुखाय। P. 261-6

॥ इति अदृश्यत्वाधिकरणम् ॥

---

## ॥ अथ वैश्वानराधिकरणम् ॥

सू०॥ वैश्वानरस्साधारणशब्दविशेषात् ॥ २४ ॥

सू०॥ स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

सू०॥ शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते ॥ २६ ॥

सू०॥ अत एव न देवता भूतं च ॥ २७ ॥

सू०॥ साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

सू०॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

सू०॥ अनुस्मृतेर्बादरिः ॥ ३० ॥

सू०॥ संपत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३१ ॥

सू०॥ आमनन्ति चैनमस्मिन् ॥ ३२ ॥

भाष्ये किं पुनरत्र संशयकारणमिति प्रश्नपूर्वकं वैश्वानर इति जाठरभूताग्निदेवतानां साधारणशब्दप्रयोगादात्मेति च शारीरपरमेश्वरयोरिति द्वैराश्येनैव संशयकारणोपन्यासात्, तथैव संशयं दर्शयति—अत्र वैश्वानर इति। अन्यो वेत्यनेन भूताग्निदेवतयोरुभयोरपि संग्रहः। आक्षेपसंगतिमाह—सार्वात्म्येति। अनेकान्तशङ्केति। जाठरादावब्रह्मणि सार्वात्म्यरूपोपन्यासदर्शनादित्यर्थः। मीमांसारंभे श्रुतावुद्दालकस्याकीर्तितत्वात् कथं टीकायामुद्दालकोऽपि निर्दिष्ट इत्याशङ्क्य, तदनन्तरनिर्दिष्टस्यापि, तस्य मीमांसारंभेऽप्युपलक्षणत्वमाश्रित्य, टीकेत्याशयेनाह—उद्दालकोऽपीति। श्रुतौ मीमांसारंभ इति शेषः। (P. 261-8)

(P. 2611-1) तर्हि ब्रह्मपदमेवास्तु। किमात्मपदेनेत्यत आह—ब्रह्मेत्युक्त इति। सुतेजस्त्वादीनामप्युपास्यत्वमित्याशयेनाह—सुतेजस्त्वगुणेत्यादिना। सूर्यस्य विश्वरूपत्वे प्रमाणमाह—एष शुक्ल इति। देहमध्यमिति। सम्यगुपचितो देह इति व्युत्पत्त्या, सन्देहशब्दस्य नाभिकण्ठमध्यभागवाचित्वादिति भावः। कस्य प्रतिष्ठानमित्यतो व्याचष्टे—तत्र पृथिव्यामिति। द्वन्द्वान्ते श्रुतस्य दूषणशब्दस्य मूर्धपातादिष्वप्यन्वयं दर्शयन् प्रतीकमादत्ते—मूर्धपातादीति। (P. 262-3) निन्दाश्रुतिमाह—मूर्धा ते इति। 'अन्धोऽभविष्य' इत्यादिरादिशब्दार्थः। समस्तभावोपदेशश्रुतिमाह—तस्य ह वा इति। वैश्वानरस्य कथं भोक्तृत्वमित्यत आह—उपासक एवेति। अहंग्रहोपासकत्वादिति भावः। (P. 262-5)

---

१. अनेन टीकायां प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलोद्दालकाः इति पाठः ज्ञायते।

हृदयस्य गार्हपत्यत्वे, **हृदयानन्तरमिति** टीकासूचितं हेतुं प्रकटयति—**हृदयाद्धीति**। सुषुप्तौ हृदये निलीनं मनः प्रबोधे ततो निष्क्रामत् प्रणीतमिव भवतीत्यर्थः। **निश्चितार्थेति**। निराकाङ्क्षार्थेत्यर्थः। **वाजसनेयिवाक्यमिति**। साकाङ्क्षमिति शेषः। **टीकायामभिमानमात्रेण पूर्वपक्षमुक्त्वा**, अनन्यथासिद्धानेकाब्रह्मलिङ्गोपोद्बलितवैश्वानराग्निशब्दानुरोधेन ब्रह्मात्मशब्दावन्यथा नेयाविति समीचीनं पूर्वपक्षमाह—**अपि चेत्यादिना**। P. 263-1 P. 264-1

**अद्धेत्यादिटीकायामन्यथेत्यनन्तरमकारप्रश्लेषः**। **टीकायां**—उपाध्युद्देशेन—उपाधिनिर्देशेन। **किं शाखान्तरेति**। पुरुषस्यानुवाद्यत्वे तद्बलादेव तस्योपक्रमस्थत्वलाभादिति भावः। **अतश्शब्दसूचितं सूत्रविरोधं दर्शयति**—**यत एवेति**। **अनूद्येति**। तस्य प्रथमश्रुतत्वादिति भावः। **यच्छब्दायोगमिति**। तस्योद्देश्यतास्फोरकत्वादिति भावः। (अधिकारतः) आकारतः पुरुषसादृश्याभावेऽपि सकलपुरुषावयवयोगित्वेन पुरुषविधत्वमित्याह—**वैश्वानरपुरुषस्येति**। पुरुषावयवमूर्धादिचिबुकान्तान्तःप्रतिष्ठितत्वाच्च पुरुषेऽन्तःप्रतिष्ठितत्वमित्याह—**कार्यकरणेति**। **अत्रैवेति टीकार्थमाह—शाखादीनामिति**। **विश्वेषां वेति**। केशाकेशीत्यादिव'दन्येषामपी'त्यनेन सूत्रेण पूर्वपदस्य दीर्घ इति भावः। P. 265-2 P. 266-5

**तत्र चेमामित्यादिभाष्यं व्याचष्टे—इमामेवेति**। **टीकाकारव्याकृतां** जाबालश्रुतिं तद्व्याख्यानस्य निरवद्यत्वद्योतनाय साकल्येन व्याचष्टे—**अत्रिः** P. 266-8

---

१. 'व्युत्पत्त्या वा वैश्वानराग्निशब्दयोर्ब्रह्मवचनत्वात् नान्यथासिद्धिः' इति वाक्ये 'अन्यथा असिद्धिः' इति अकारप्रश्लेष इत्यर्थः।

२. अत्र 'पञ्चपादीकृतस्तु' 'पञ्चपाद्यान्तु' इति कल्पतरुकारलेखनेन भामत्यां दूषितः पक्षः पञ्चपादीकृतामिति ज्ञायते। पञ्चपादीपक्षे भामतीकृतां दूषणं चिन्त्यमिति च कल्पतरुकृतोक्तम्। उपरि दहराधिकरणेऽपि 'पञ्चपाद्यान्तु (आकाशशब्दस्य ब्रह्मणि) रूढिरुक्ता, तां दूषयति ये त्विति' इति कल्पतरावुक्तम्। पञ्चपादी आन्तं ग्रन्थकृता कृतापि चतुस्सूत्र्यन्तैव संप्रति समुपलभ्यते। कल्पतरुकृताऽपि पञ्चपादी व्याख्यातेति प्रसिद्धिरस्ति। पञ्चपादीनामपदार्थविषये भ्राम्यन्तः केचन पादपञ्चकपर्यन्तमेव सा टीका इति मुह्यन्ति मोहयन्ति च परान्। पञ्चपादी इत्यस्य विस्तारेणार्थबोधिनी इत्यर्थः। पञ्जिका इत्यादिनामवत् पञ्चपादिका विस्तारेणार्थप्रतिपादिका इत्यर्थः। 'पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना। आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्॥' इत्युक्तांशपञ्चकवतीति वा अर्थः।

किलेति । इतरः—याज्ञवल्क्यः । नासाभ्रुवोः—शरीरावयवयोः कथं दोषवार-कत्वादिकमित्यत आह—नियम्यजीवेति । भ्रूमध्यस्य वस्तुगत्या ब्रह्मलोकस-

P. 267-8 न्निधत्वं न संभवतीत्यतः आह—सन्निधत्वेनोपास्य इति । न स्त्रीलिङ्गेति । द्वयोरपि द्वित्वाविवक्षायामौत्सर्गिकमेकवचनं युक्तम् । विज्ञानशब्दोपात्ते स्त्रीलिंङ्ग तु न कथञ्चिदपि युज्यत इति भावः ।

P. 268-1 'वैश्वानरं केतुमह्नां' इति श्रुतिं व्याचष्टे—वैश्वानरमिति । 'वैश्वानरस्य सुमता'वित्यादिश्रुतिं व्याचष्टे—वैश्वानरस्येति । बह्वृचा हि,कमिति अभिश्रीरिति च पदद्वयमधीयते । तदुभयं व्याचष्टे—स च कं सुखमिति । 'यो भानुने' त्यादिश्रुतिं व्याचष्टे—यो भानुरूपेणेति । 'प्रादेशमात्रमिव हवै देवास्सुविदिता अभिसंपन्नास्तथानु व एतान्वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामी'ति श्रुतिं

P. 268-3 व्याचष्टे—प्रादेशमात्रमिवेति । 'एष वा अतिष्ठाः' 'एष वै सुतेजाः' इत्यादिश्रुतिं व्याचष्टे—अधोलोकानिति । सुतेजस्त्वादीत्यादिपदेन, पृथग्गतिम-

P. 269-1 त्त्वादिकं गृह्यते । चक्षुरादिष्वित्यादिपदेन प्राणादिकं गृह्यते ।

॥ [1]इति वैश्वानराधिकरणम् ॥

इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डभट्टमहोपाध्यायतनूभवेन
श्रीमन्नारायणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशगृह्यमाणेन श्रीलक्ष्मी-
नृसिंहचरणारविन्दचञ्चरीकेण श्रीलक्ष्मीनृसिंहेन
विरचितायां कल्पवृक्षप्रदीपिकायां
आभोगाख्यायां प्रथमाध्यायस्य
द्वितीयः पादः ॥

---

१. अत्र 'शब्दादिभ्य' इति सूत्रभाष्यान्ते 'प्रसिद्धमूर्धत्वादि' इति समासपाठः शुद्धः । प्रसिद्धमूर्धकत्वमिति बहुव्रीहिः । 'प्रसिद्धं मूर्धत्वादि' इति तु अशुद्धम् । अनन्वितार्थकं च । 'आमनन्ति चैनमस्मि'न्निति सूत्रभाष्ये 'तत्र चेमामेव नासिकां या सर्वाणीन्द्रियकृतानि पापानि वारयतीति सा वरणा, सर्वाणीन्द्रियकृतानि पापानि नाशयतीति सा नासीति वरणानासीति निरुच्य' इत्यन्वयः, पाठो वा ज्ञेयः, वरणानासीति एकं पदं, वरणासहिता नासीति विग्रहः कल्पतरौ स्फुटीकृत इति ज्ञेयम् ।

|| श्रीः ||

|| श्रीलक्ष्मीनृसिंहाय नमः ||

## || अथ प्रथमाध्यायस्य तृतीयः पादः ||

सू०|| द्युभ्वाद्यायतनं स्वशब्दात् || १ ||

सू०|| मुक्तोपसृप्यव्यपदेशात् || २ ||

सू०|| नानुमानमतच्छब्दात् || ३ ||

सू०|| प्राणभृच्च || ४ ||

सू०|| भेदव्यपदेशात् || ५ ||

सू०|| प्रकरणात् || ६ ||

सू०|| स्थित्यदनाभ्यां च || ७ ||

नारायणेन्द्रयोगीन्द्रगुर्वनुग्रहयोगतः ।
संसेव्य कल्पकतरुं प्राप्तोऽस्मि परमांबिकाम् ||

**टीकायामिहेति** पादपरमित्याशयेन व्याचष्टे—**निर्विशेषेति** । प्राये- P. 270-1
णेत्यर्थः । दहराद्यधिकरणेषु सविशेषविचारादिति ध्येयम् । **अमृतं यद्ब्रह्मेति** ।
द्युभ्वाद्यायतनं, यदमृतं ब्रह्म तत् न युक्तमित्यन्वयः । **टीकायां श्लोकेनायतनस्य**
ब्रह्मत्वाभावोऽमृतत्वाभावश्च साध्यते । तत्रामृतत्वाभावसाधनस्य सिद्धान्तपक्षप्रति-
क्षेपकत्वसूचनार्थममृतस्य ब्रह्मत्वमुक्तम् । आयतनं न ब्रह्म, सेतुत्वादित्यत्र हेतो-
रप्रयोजकत्वशङ्कायां, सेतुत्वस्य पारवत्त्वेन व्याप्तत्वादपारब्रह्मरूपत्वे आयतनस्य
श्रुतिबोधितं सेतुत्वं न स्यादिति हेतूच्छित्तिरेव विपक्षे बाधकस्तर्क इति सूचयितुं
**टीकायां पारवत्त्वेनेत्युक्तमित्याशयेनाह—सेतुत्वस्येति** । P. 270-3

---

१. दहरमात्रस्य सविशेषत्वेऽपि देवताधिकरणापशूद्राधिकरणयोरधिकारिनिर्णय-
परत्वेन निर्विशेषपरत्वाभावात् आदिपदमुपात्तम् । सविशेषविचारपदं अधिकारिविचारोप-
लक्षणम् ।

P. 270-3 **अमृतत्वाभावे।** आयतनस्येत्यनुषङ्गः। आयतनं नामृतं, तत्संबन्धित्वादित्यत्र हेतोरप्रयोजकत्वं निराकुर्वन्, सिद्धान्ते षष्ठीव्याकोपं दर्शयति—**भेदे हीति। परकूलमिति।** कूलस्य परभाग इत्यर्थः। एवमर्वाक्कूलमर्वाग्भाग इति द्रष्टव्यम्। अवयवशक्त्यैव चारितार्थ्ये सेतुशब्दस्य न पारवति रूढिरित्यभिप्रेत्य शङ्कते—**नन्विति।** नियतप्रयोगात् गवादिशब्दवत् रूढिरेवेति परिहरति—**अत आहेति।** यत्र पादप्रोतनं स रूढिरित्यर्थः।

P. 270-6 **अमृतान्तरेति।** "क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः[1]" इति जीवेऽपि अमृतशब्दप्रयोगात् तत्संबन्धि ब्रह्म भविष्यतीति, न षष्ठीविरोध इति भावः। **अतोऽन्यदिति।** ततश्च न मुख्यममृतत्वं जीवस्येति भावः। ननु पुरुषं **यावदगच्छदिति टीकायां**—यावच्छब्दो नावध्यर्थकः। पुरुषमिति[2] द्वितीयानुपपत्तेः। नापि साकल्यार्थकः। व्यापकस्य प्रधानस्य साकल्येन पुरुषप्राप्तिसंभवेन तदभावायोगात्। न च तादात्म्येनाप्राप्तिर्विवक्षिता। साकल्यविशेषणवैयर्थ्यात्। न च प्रपञ्चस्याधिष्ठानसदात्मना पुरुषतादात्म्यसत्त्वेन चिदानन्दाद्यात्मनैव तत्तादात्म्याभाव इति, साकल्यविशेषणमिति वाच्यम्। सांख्यैः प्रधानस्य प्रपञ्चस्य वा सदद्वयस्तत्वानभ्युपगमादित्यतो व्याचष्टे—

P. 270-7 **पुरुषं प्रतीति।**

यावत्पर्यन्तं[3] प्रधानं पुरुषं प्रति तादात्म्यमगच्छत् भवति, तावत्पर्यन्तं तस्माद्वस्तुतः परिच्छिन्नं सद्भवति पारवदित्यर्थः। पुरुषतादात्म्ये सत्येव वस्तुपरिच्छेदराहित्यम्। तच्च न कदाचिदपि प्रधानस्य भवतीति भावः।

---

१. श्वे. उ. ५. १.

२. अवध्यर्थकयावच्छब्दयोगे द्वितीयानुशासनाभावात्। इति परिमलम्।

३. यावच्छब्द इह नावध्यर्थः। किं तु परिमाणार्थः। तस्य परिमेयविशेषाकाङ्क्षया तादात्म्यशब्दः। तत्प्रतिनिर्देशाकाङ्क्षया तावच्छब्दश्च। द्वितीयोपपत्त्यर्थं प्रतिशब्दश्चाध्याहार्यः। प्रतियोगे च पुरुषस्येति षष्ठ्यर्थो लभ्यते। तेन पुरुषस्य यावत्तादात्म्यं तावदप्राप्नुवदित्यर्थलाभात् वस्तुपरिच्छेद उक्तो भवतीत्याशयः। सदात्मना पुरुषतादात्म्यसत्वेऽपि चिदानन्दाद्यात्मना तादात्म्याभावात् वस्तुपरिच्छेदः। इति परिमले उक्तम्। तस्य खण्डनेन आभोगे अर्थान्तरमुक्तम्।

एवमपि प्रधानस्य कथममृतसेतुत्वम्? न ह्यमृतस्य पारवानित्यर्थः संगच्छत इत्यत उक्तम्—**टीकायां—भवति च तज्ज्ञानमिति**। यथा जलस्य सेतुरित्यादौ, जलस्य विधारकः पारवानित्यर्थो लभ्यते। तथैवामृतस्य मोक्षस्य विधारकः पारवानिति तच्छ्रुत्यर्थः। प्रधानस्य मोक्षविधारकत्वं च तद्धेतुज्ञानोपयोगित्वादित्यर्थः। नन्वव्याकृतमपि 'अव्यक्तात् पुरुषः परः' इति श्रुत्या साक्षादेवोक्तमित्यत आह—**साक्षादिति**। P. 271-1

ननु केवलस्य ब्रह्मण आयतनत्वासंभवेन, मायोपाधिकस्यैव तदित्यव्याकृतमप्यायतनत्वेन श्रुत्युक्तमित्याशङ्क्य, साक्षादित्यनेन प्राधान्यं विवक्षितमित्याशयेनाह—**अव्याकृतं हीति। टीकायां—अमृतात् परब्रह्मणो भेदश्चेति**। ततश्चामृतब्रह्मसंबन्धी स्वकार्याणां विधारकः पारवान् सेतुरिति श्रुत्यर्थ इति भावः। 'अमृतस्यैष सेतु'रित्येतच्छब्देन, द्युभ्वाद्यायतनं तज्ज्ञानं वा, परामृश्य तस्य सेतुत्वमुच्यत इति मनसि निधाय, तदनुगुणतया, **श्लोकगतमस्य**-शब्दं द्वेधा योजयन् **श्लोकार्थमाह—अस्य द्युभ्वायतनस्येत्यादिना**। P. 271-3

अमृतशब्दस्य भावपरत्वेऽपि तस्यापि मोक्षस्य ब्रह्मस्वरूपतया कथं तद्धारकत्वमित्याशयेन शङ्कते—**यद्यपीति**। अखण्डाकारवृत्त्यधीनमभिव्यक्तत्वं भावप्रत्ययार्थ इत्याशयेन परिहरति—**तथापीति। साम्यमिति**। वाय्वादिविधारके सेतुशब्दादर्शनेन पारवतो जलविधारकस्यैव तद्वाच्यत्वादिति भावः। **पारवत्तावर्जमिति** णमुलन्तं पदं व्याचष्टे—**पारवत्तामिति। योगमात्रादित्यत्र** योगशक्तिर्विवक्षितेति भ्रान्तिं वारयति—**षिञ्धात्वर्थेति**। तर्हि गौणत्वाविशेषे धात्वर्थयोगोक्तेः किंप्रयोजनत्वमित्यत आह—**विधारकत्वमेवेति**। इह सेतुशब्दो गुणयोगेन प्रवर्तमानः किं पारवत्त्वेन गुणेन प्रवर्तेत? किं वा विधारकत्वेनेति संशये, द्वयोरपि सेतुगुणत्वाविशेषेऽपि षिञ्धातूपस्थितेन गतिनिरोधाख्येन बन्धनेन तत्फलस्य धारणस्योपस्थितत्वात् तेनैव गुणेन गौणत्वमित्येतदर्थं तदुक्ति- P. 272-2

---

१. टीकायां 'धारणाद्वाऽमृतत्वस्य साधनाद्वास्य सेतुता' इति पाठः। 'साधनाद्वास्य' इति कोशे त्रुटितम्।

२. 'कल्पतरौ ब्रह्मैवामृतमित्येतदनन्तरं तदेव चामृतत्वमिति शेषोऽध्याहर्तव्यः। ज्ञायमानत्वदशामभिप्रेत्य तदमृतत्वशब्दार्थं कृत्वा धारयितृत्वं निर्वाह्यमित्यध्याहारेण वाक्यं पूरणीयम्।' इति परिमलम्।

रिति भावः। व्याख्याबीजमाह—**तथा चेति। योगाद्बलिनीति न च शङ्क्यमित्यन्वयः।** अत एव "प्रोद्गातृणा"मित्यत्र योगं परित्यज्य रूढिपूर्विकैव लक्षणा समाश्रितेति भावः।

अभिव्यक्तत्वस्यामृतत्वस्य वृत्त्यधीनत्वेऽपि न मुख्यं ज्ञानजन्यत्वमित्यतो P. 272-4 भङ्ग्यन्तरेणामृतत्वशब्दार्थं दर्शयति—**अविद्यानिवृत्तिरिति।** ननु सेतुशब्दस्य धारणार्थकत्वपक्षेऽप्यमृतत्वमविद्यानिवृत्तिरित्येव किमिति नाश्रीयते, ब्रह्मणस्तदाधारत्वसंभवात्, वैषम्येण व्याख्याने हेत्वभावाच्चेति चेन्न। अविद्याया जीवाश्रयत्वेन तन्निवृत्तेरपि तदाश्रयत्वौचित्यात्। उपाधिनिवृत्त्या जीवस्य ब्रह्मभावेऽपि, शुको मुक्तो, वामदेवो मुक्त इत्यादिव्यवहारानुरोधेनाविद्योपाधिके अविद्यावत्तत्सूक्ष्मरूपतन्निवृत्तेरपि तदुपाधिकाश्रयत्वौचित्यात्, अविद्यानिवृत्तेरपारमार्थिकत्वेन तदाश्रयत्वस्य पारमार्थिकत्वायोगाच्च।

**अन्यथा श्लोकेष्विति स्यादिति** टीकाभिप्रायमाह—**द्वयोरिति।** उक्तरीत्या ब्रह्मण एवामृतत्वधारकत्वात्, तज्ज्ञानस्यैव चामृतत्वसाधनत्वात्, जगदुपादानस्य ब्रह्मण एव द्युभ्वादिजगदायतनत्वौचित्याच्च, **अमृतस्येति, सेतुरिति** P. 272-7 **च श्रुती,** द्युभ्वाद्यायतनत्वं च ब्रह्मण्येवोपपद्यत इत्याशयेनाह—**टीकायां—तथा चामृतस्येति चेति।**

**ननु स्वशब्दादिति तन्त्रोच्चारितमिति टीका न युक्ता।** नानाशब्दाभिप्रायेण सकृदुच्चारणं हि तन्त्रम्। इह च न स्वशब्दादित्यस्य भेदप्रसक्तिः। **एकेनैव स्वशब्दशब्देन सदात्मब्रह्मशब्दानां** त्रयाणामपि स्वीयशब्दत्वेनाभिधानसंभवादेकवचनस्य च जात्यभिप्रायत्वादित्याशङ्क्य, प्रकृते विवक्षितं तन्त्रत्वमाह—**नानार्थेति।** प्रत्येकमेकैकार्थमात्रपरत्वेनोच्चारणे तु वाक्यभेदः स्यादित्याशयेनाह—**एवं चेति। सर्वे ह्येत इति टीकां**—व्याचष्टे—**अस्य** P. 272-6 **ब्रह्मण इति।**

सविशेषनिराकरणपरतया भासमानस्य भाष्यस्यानवसरहिरण्यगर्भपक्षनिराकरणपरत्वेन व्याख्याने बीजमाह—**तत्र त्विति। निराकरणार्थं** भवेदिति शेषः। तस्याद्याप्यसिद्धत्वान्न तस्य सविशेषत्वनिराकरणार्थत्वमिति भावः। तर्हि, प्राथमिकप्रधानपक्षनिराकरणार्थं किं न स्यात्, इत्याशङ्कायां, अयोग्यत्वा- P. 273-1 न्नैवमित्याशयेनाह—**तत्प्रधानवादेति।**

**टीकायां—सावधारणेनेति ।** यस्मिन् **द्यौरिति** यच्छब्दनिर्दिष्टा- P. 272-11
यतनमात्रपरामर्शकेन **तमेवैकमिति** श्रुतिवाक्येनेत्यर्थः। **विकारानृताभिसन्धस्य**
**चेति** भाष्यं व्याचष्टे—**टीकायां—विकाररूपे इति । टीकायां—यत्सर्वमिति ।**
प्रथमनिर्दिष्टसर्वोद्देशेन ब्रह्मत्वविधाने जडाजडयोरैक्यानुपपत्त्या, 'चोरः स्थाणु'
रित्यादाविव, बाधायां सामानाधिकरण्येनोद्देश्यरूपप्रविलापनेन विधेयरूपप्रति-
पादनादिति भावः । **टीकायां—न त्विति ।** तथात्वे या मृदासीत्, सेदानीं
घटशरावादिकं समजनीतिवत् ब्रह्मणः पारमार्थिकमेव रूपं प्रपञ्च इति पर्यवस्ये-
दित्यर्थः । **प्राधान्यादिति ।** ततश्च तस्यैव सर्वनाम्ना परामर्शः । 'अपोऽश्नाति P. 273-4
तन्नैवाशित'मित्यादावशनस्येवेति भावः ।

ननु 'राज्ञः पुरुषस्तिष्ठति, तं पश्ये'त्यादौ, शब्दतः प्रधानस्यैव सर्वनाम्ना
परामर्शदर्शनात्, अर्थतः प्राधान्यमप्रयोजकमिति, कथं ज्ञानपरामर्श इत्याशङ्क्य,
स्वरसतः तथात्वेऽपि क्वचिदयोग्यतादिबाधकवशात् तत्परित्यागेनार्थतः प्रधान-
स्यापि परामर्शो दृश्यत इति वक्तुं **न चेदं**[1]**मित्यादिटीका ।** तत्र क्व तथा दर्शन-
मित्याकाङ्क्षायां, 'तप्ते पयसी'त्यादौ मन्त्रवर्णाद्यवधारितपयोरूपत्वामिक्षान्वया-
योग्यतया, 'अपोऽश्नाती'त्यादौ तदित्येकत्वान्वयायोग्यतया च, दध्यबादिपरि-
त्यागेन पयोऽशनादीनां परामर्शो दृश्यत इत्याशयेन **टीकाभिप्रायमाह—तप्ते**
**पयसीति ।** ततश्च प्रकृतेऽपि सेतुत्वान्वयायोग्यतया न ब्रह्मणः परामर्शः ।
किन्तु ज्ञानस्यैवेति भावः ॥ १ ॥

**टीकायां भयमोहग्रहणं** हृदयग्रन्थिश्रुतितात्पर्यार्थप्रदर्शकतद्विपर्यये-
णेत्यादिभाष्यगतादिशब्दगृहीतत्वादिति दर्शयितुमाह—**अविद्येति ।** ननु P. 273-6
'तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाती'ति पूर्वमन्त्रे निर्दिष्टस्य
साक्षात्कारस्य हृदयग्रन्थ्यादिभेदनफलप्रतिपादनार्थतया, तस्मिन् ब्रह्मणि दृष्टे सति,
भिद्यते हृदयग्रन्थिरित्येवं स्वरसत एव व्याख्यातुं शक्ये, किमर्थं **टीकायां** क्लेशेन
व्याख्यानमित्यतः तथा व्याख्याने हेतुमाह—**भाष्ये इति ।** P. 274-1

---

१. न चेदमिति टीकायाः पूर्वं 'व्यापारस्यैव व्यापारवतोऽमृतत्वसाधनत्वात्' इति वाक्यस्य, व्यापारस्यैव, व्यापारवतः पुरुषस्य मोक्षं प्रति साधनत्वादित्यर्थः । इति भाति ॥

इत्युक्त्वा ब्रवीतीति भाष्येण, पूर्वोत्तरमन्त्रयोरेकसूत्रार्थकथनोपयोग-
P. 274-3 प्रतिपादनादिति भावः। ततः किम्? तत्राह—ततश्चेति। ततश्च 'तद्वि-
ज्ञानेने'ति पूर्वमन्त्रे ज्ञाने निर्दिष्टे, कथं तज्ज्ञानं भवति? किञ्च तस्य फलमित्या-
काङ्क्षायां तदुभयं दर्शयितुमेतौ मन्त्रौ प्रवृत्तौ। तत्र च तस्मिन् दृष्ट इति
व्यधिकरणे सप्तम्यौ। तत्र च तस्मिन्निति विषयसप्तमी। दृष्टं दर्शनं तस्मि-
न्निति निमित्तसप्तमी 'निमित्तात् कर्मसंयोगे' इति वार्तिकेन विहिता। प्रयो-
जनवाचिनश्च शब्दात् हेतुक्रियासंयोगे सप्तमी भवतीति वार्तिकार्थः।[1]

हृदयग्रन्थ्यादीनां भेदश्च, परोक्षतया ब्रह्मभावनिश्चयेन शैथिल्यम्।
तस्यैव साक्षात्कारहेतुत्वात्। तथा च परावरब्रह्मसाक्षात्कारार्थं शास्त्रजन्येन ब्रह्म-
निश्चयेन हृदयग्रन्थिभेदनादिकं क्रियत इति, पूर्वमन्त्रार्थ इति व्याचष्टे इत्यर्थः।
ज्ञानादज्ञाननिवृत्तौ ब्रह्मणः प्राप्यत्वोक्त्या, तत्प्राप्तिं फलं निर्देष्टुं उत्तरमन्त्र इति
दर्शयितुं, तत्रत्यनामरूपनिवृत्तेः सविलासाविद्यानिवृत्तिरूपत्वप्रकटनाय नामरूप-
P. 274-5 शब्दार्थकथनमित्याशयेनाह—उत्तरमन्त्रस्थेति ॥ २ ॥

नानुमानमित्यस्योपलक्षणत्वे बीजं दर्शयितुं हेतोरिति टीका। तां
व्याचष्टे—साधारणेति। वाग्वाद्यपीति।[2] ततश्च टीकायामव्याकृतग्रहणं
P. 276-1 वाग्वाद्युपलक्षणमिति भावः। भ्रममिति।[3] हेत्वनुकर्षणार्थत्वप्रतिपादक-
पूर्वभाष्यविरोधादिति भावः। (यावतेत्यस्यानन्वयमाशङ्क्याह—यत इति।)[4]

---

१. निमित्तमिह फलं, योगस्संयोगसमवायात्मकः। 'चर्मणि द्वीपिनं हन्ति' इत्यत्र निमित्तकर्मणोः चर्मद्वीपिनोस्समवायः। 'सीम्नि पुष्कलको हतः' सीमज्ञानार्थं शंकुर्निखातः, इत्यर्थे संयोगः। योगविशेषे किं? वेतनेन धान्यं लुनाति। अत्र न सप्तमी। इति वैयाकरणसिद्धान्तकौमुदी। तद्रीत्या दृष्टे इत्यत्रापि न सप्तमी स्यादिति चिन्त्यमिदमिति प्रतिभाती।

२. कल्पतरौ 'अव्याकृतवादाद्यपि' इत्येतत् 'अव्याकृतवाग्वाद्यपि' इति शोधनीयमिति अनेन सूच्यते ॥

३. 'भ्रममपाकरोति न चेति' इति कल्पतरौ 'न चेति' इति 'चेनेति' इति शोधनीयम्।

४. कुण्डलितग्रन्थस्थः 'यत' इति प्रतीकः कल्पतरौ न दृश्यते। 'यावता' इति एकं पदं टीकाग्रन्थे अनन्वितं दृश्यते। परिमलेऽपि (यावतेत्येतत्पदं यत इत्याशङ्क्येत्यनेन विवृतम्) इति कुण्डलिता पङ्क्तिः दृश्यते। अनेन कल्पतरौ किंचित् वाक्यं त्रुटितमिति ज्ञायते ॥

**प्रकरणादिति सूत्रेण** हिरण्यगर्भपक्षोऽपि निराकृत इत्याह—**टीकायां—न खल्विति।** अवान्तरवाक्यविच्छेदादन्वयो दुर्ज्ञान इत्यतस्तं दर्शयति—**जीवात्मैवेति।** प्रसिद्धजीवाधिगमार्थत्वं श्रुतेरयुक्तमित्यतो व्याचष्टे—**प्रसिद्धमिति।** P. 275-6 P. 276-2

किं प्रकरणपाठाङ्गीकारेणापि पूर्वपक्षवर्णनसंभवात् किमर्थं कृत्वाचिन्ताश्रयणमिति ब्रवीषि? किं वा तस्मिन् पक्षे कथं सूत्रमिति?। आद्येऽपि किं प्रकरणोपमर्देन पूर्वपक्षवर्णनम्? किं वा तदविरोधेन? नाद्यः, प्रधानादीनां श्रुतिलिङ्गवाक्याभावेन ब्रह्मप्रकरणोपमर्दायोगात्। न हि सेतुत्वादिकं प्रधानादौ मुख्यं? येन तल्लिङ्गम्। प्रत्युत प्रकरणोपोद्बलकतया 'यस्मिन् द्यौ'रिति यच्छब्दश्रुत्यादिकमस्तीति न प्रकरणोपमर्दकथापि।

नान्त्यः, प्रकरणापेक्षितार्थकथने हि तदुपयोगादविरोधो भवेत्। यथा श्वेताश्वतरोपनिषदि जगत्कारणे प्रतिपादिते, कथं निर्विकारस्य जगत्कारणत्वमित्याशङ्कानिराकरणेन तन्निर्वाहाय मायाशक्तिप्रतिपादकस्यापि 'अजामेका'मिति मन्त्रस्य प्रकरणाविरोधः। यथा वा, भोक्तुर्जीवस्य कथमभोक्तृब्रह्मभाव इत्याशङ्कां निराकर्तुं भोगस्य परोपाधिकत्वप्रतिपादकस्य 'तयोरन्यः पिप्पल'मित्यस्य। नैवं प्रधानादिप्रतिपादनेन प्रकरणस्य कश्चिदुपयोगोऽस्ति। ऊर्णनाभ्यादिदृष्टान्तैरनन्याधीनोपादानत्वप्रतिपादनपूर्वकं सर्वज्ञत्वादिरूपेण प्रतिपादितस्य सर्वजगदधिष्ठानत्वंव्यतिरेकेण प्रतिपाद्यस्याभावात्। ततश्च स्वातन्त्र्येणैव प्रधानादिकं प्रतिपाद्यमिति प्रकरणबाधो दुरुद्धर एवेति युक्तैव कृत्वाचिन्तेत्यभिप्रेत्याद्यद्वितीयं निराकरोति—**कृत्वा चिन्तेति।**

ततश्च भाष्ये 'ब्रह्मैवेद'मित्यादिप्राकरणिकमन्त्रोपन्यासोऽनागतावेक्षणेन, **प्रकरणादिति** सूत्रावलंबनेन। स्थित्यदनसूत्रमविरोधात् (?) एतदनन्तरं

१. टीकायां—जीवात्मैव द्युभ्वाद्यायतनमिति न च इत्यन्वयः। तत्र हेतुः तथा सतीत्यादिः। इति भ्रमः स्यात्। तद्वारणाय कल्पतरौ अन्वयप्रदर्शनम् इत्यपि बोध्यम्।

२. 'पूर्वसूत्रेष्वपि आत्मश्रुतिः, वाग्विमुक्तैर्ज्ञेयत्वं, प्रधानादिपक्षगमकशब्दाभावश्चेत्येतन्मन्त्रपर्यालोचनामात्रलभ्या एवार्थास्सूत्रिताः। प्राकरणिकश्रुतिलिङ्गान्तरपरतया स्वशब्दादिव्याख्यानान्तरं तु प्रकरणोद्घाटनानन्तरं प्राकरणिकान्यपि श्रुतिलिङ्गान्यत्र प्रवर्तिष्यन्त इति हृदयेन प्रागेव सूत्रार्थतयोपन्यस्तानि। स्थित्यदनसूत्रस्य प्रकरणोद्घाटनानपेक्षो नास्त्यर्थ इति मत्वा तत्सूत्रमेकं प्रकरणसूत्रानन्तरं कृतम्' इति परिमलमत्रावधेयम्।

कृतमिति भावः । 'पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृत'मिति श्रुतिं व्याचष्टे—
P. 277-1 **इदं विश्वमिति** । अत्रात्मशब्दस्य द्युभ्वाद्यायतनत्वस्य च जीवादिसाधारण्याद-स्पष्टं ब्रह्मलिङ्गमिति पादसंगतिः । एवमुत्तरत्रापि द्रष्टव्यम् ।

**॥ इति द्युभ्वाद्यधिकरणम् ॥**

---

## ॥ अथ भूमाधिकरणम् ॥

**सू०॥ भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥**

**सू०॥ धर्मोपपत्तेश्च ॥ ९ ॥**

**नारदः खल्वित्यादिटीकाया अधिकरणशरीरोपयोगमाह—अत्राख्यायिकामिति** । नारदेन शोकनिवृत्तिहेतुभूतज्ञानार्थमात्मस्वरूपे पृष्टेऽपि चित्तैकाग्र्याभावे, तत्प्रतिपत्त्ययोगात् तदुपयोगिनामाद्युपासनोपदेशपूर्वकमात्म-
P. 277-5 स्वरूपमुपदिशतीत्याशयेनाह—**टीकायां—तदुपश्रुत्येति** ।

व्यवहितत्वादन्वयमाह—**प्राणेष्विति** । सहितशब्दसूचितमध्याहारं प्रकटयति—**तेजो वाव इति** । 'तेजो वाव अद्भ्यो भूयः, तद्वा एतद्वायुमागृह्याकाशमभितपती'ति श्रुतौ, तेजसः स्वव्यापिवायुद्वारैवाकाशसंबन्धकथनेन, तेजसो वायुर्भूयानित्यस्यार्थस्य सूचितत्वादिति भावः ।

**प्राणस्य चेत्यादिटीकया समस्तक्रियाकारकफलात्मत्वादिना** प्राणस्य भूयस्त्वं वर्णितम् । नामादीनामुत्तरोत्तरस्य भूयस्त्वे स्वयं हेतुं दर्शयति—**वर्णनिष्पादिनीत्यादिना** । **चित्तमिति** । **कारणमित्यनुषङ्गः** । ध्यानस्य चित्तं प्रति कारणत्वाभावात् कथं भूयस्त्वमित्यतः फलभूयस्त्वादित्याह—**फलत इति** । अपां नभ इति प्रामादिकः पाठः । अपां तेज इति तु समीचीन इति ध्येयम् ।

P. 278-3 **एवमिति** । तेजसो वायुर्वायोराकाशमित्येवं विज्ञेयमित्यर्थः । संमर्दनिवृत्तिफलकावकाशप्रदानादिफलोपहित[नभो]भोग्यत्वसंपादनस्य स्मरणाधीनत्वात् आकाशाद्भूयस्त्वं स्मरस्येत्याह—**आकाशस्येति** । **टीकायां** प्राणभूयस्त्वे अनेक-

हेतूपन्यासः पूर्वपक्षकोट्यनुन्मेषशङ्कावारणार्थ इत्याह—**भवत्वित्यादिना** । P. 278-5
एवमपि कथं परिहार इत्यत आह—**सर्वात्मत्वेति** । **तुशब्दस्त्विति** । न तु प्राणातिरिक्तसत्यातिवादिनः प्राणातिवाद्यपेक्षया विशेषार्थ इत्यर्थः ।

अपृष्टत्वस्य लिङ्गरूपतां दर्शयति—**यदीति** । अस्मिन् प्रकरणे, अर्थान्तरस्य प्रश्नपूर्वकमेव कथनादिति भावः । **टीकायां—सत्यादीन् कृतिपर्यन्तानिति** । भूमसुखप्रतिपत्त्यन्तरङ्गसाधनभूतानित्यर्थः । **भावभवित्रोरिति** । 'स य एषोऽणिमे'त्यादाविवेति भावः । भाष्यकृत्पदसूचितमर्थमाह—**इदं हीति** । **न प्राणादन्यस्येति** । न प्राणान्यधर्मिक इत्यर्थः ।

आशाभूमादौ व्यभिचारवारणाय हेतौ सत्यन्तम् । ग्रन्थान्तरस्थब्रह्मभूमनि तद्वारणायैतदिति । प्रथमप्रवृत्तस्य प्रश्नस्य कथं चरमानुरोधेन नयनमित्यत आह—**निर्णीतार्थेति** । आत्मविदित्यात्मदृष्टिरालंबनेऽपि संभवति, स्वातन्त्र्ये- P. 278-15
णापीति सन्दिग्धः प्रश्न इति भावः ।

ननु आत्मवेदनप्रश्नस्य (ब्रह्म)प्राणविषयेणोत्तरेण कथं नयनमित्याशङ्क्य, तस्य प्रतिवचनान्तराभावादिदमेव तद्विषयमित्याशयेनाह—**आत्मशब्दश्चेति** । न चैवं प्राणस्य कथमात्मत्वमिति वाच्यम् । सालंबन आत्मदर्शने पृष्टे, नामाद्यालंबनोक्तौ, तत्तदुत्कृष्टालंबनजिज्ञासया पुनः पुनः प्रश्ने, सर्वान्ते प्राणालंबनोक्त्या, तस्य सर्वातिशायित्वेन तदालंबनं दर्शनमिति निश्चये, प्रथमश्रुतस्यात्मशब्दस्य प्राणे पर्यवसानेन, तस्यात्मत्वावगमात् ।

ननु शोकतरणोपायप्रार्थनोपक्रमतदुपायकीर्तनोपसंहारानुसारेण ब्रह्मप्रकरणत्वनिश्चयात् कथं प्रकरणानुत्थानमित्याशङ्कां निराकर्तुं **अतद्विषयत्वे चेति** टीकेत्याह—**प्रश्नस्येति** । शङ्कावादिना उत्तरस्य प्रतीकविषयत्वानुक्तेः अनुक्तोपालंभ इत्यतो व्याचष्टे—**प्रश्नो यदीति** । P. 278-16

ततश्च शोकनिवृत्त्युपाये पृष्टे, परंपरया शोकनिवृत्त्युपायनामादिप्रतीकोपदेशे, तदासक्तिरहितस्य नारदस्य, सर्वात्मकं सुखरूपं प्राणस्वरूपमेव शोकनि-

---

१. टीकागते पूर्वपक्षश्लोके—उक्तात् अन्यतो भूयसः भूयः उच्यमानं यत् तत् इत्यन्वयः । भूयसः अन्यस्मादुक्तात् भूय इत्यर्थः । अन्यतः इति प्रथमार्थे तसिः । तथा च अन्यत् इत्यपि वक्तुं शक्यते ।

वृत्त्युपायतया प्रदर्शितम् । अत एव तत्र फलान्तरं न कथितम् । अनन्तरं च कथं प्राणोपासनायाः शोकनिवृत्तिफलकत्वमित्याशङ्कां निराकर्तुं, सत्याद्यन्तरङ्ग-साधनमहिम्ना सर्वात्मकप्रत्यगभिन्नब्रह्मविषयकत्वमहिम्ना च तत्फलकत्वसमर्थ-नार्थमुत्तरग्रन्थसन्दर्भ इति नोपक्रमोपसंहारविरोध इति भावः ।

ननु प्रकरणाभ्युपगमेऽपि लिङ्गेनावान्तरप्रकरणेन वा प्राणपूर्वपक्षवर्णन-संभवात्, किमर्थं प्रकरणाभाववर्णनमित्याशङ्कानिराकरणाय पूर्वपक्षसाधनमिद-मेवेति दर्शयितुं **तदेतदिति टीका** । तां व्याचष्टे—**प्रकरणानुत्थानमिति** ।

P. 279-1

न तावदिह प्राणस्यासाधारणलिङ्गमस्ति । भूयःप्रश्नप्रतिवचनाभाव-स्याकिञ्चित्करत्वात् । **एष त्वित्यादिना** कीर्त्यमानस्यातिवादित्वस्य, प्राणसंबन्धि-त्वनिश्चयाभावेन प्राणव्रतानुकर्षणलिङ्गस्याप्यभावात् । ब्रह्मलिङ्गानामपि सत्त्वेन, तेषां परस्परं प्रतिरोधाच्च । नाप्यवान्तरप्रकरणं प्राणस्यास्ति । भूमस्वरूपकथ-नानन्तरं प्राणकीर्तनाभावेन सन्दंशाभावात् । प्राणव्रतानुकर्षणमात्रेण तत्प्रकरण-त्वायोगात्, प्राणव्रतानुकर्षणानिश्चयाच्चेति भावः ।

**आत्मशब्दस्येति** । आत्मशब्दार्थस्येत्यर्थः । तर्हि सन्निध्यविशेषे कथं पूर्वपक्ष इत्यत आह—**पूर्वपक्षस्त्विति** । **उत्थित इत्युक्तमिति** । तात्पर्य-गत्येति भावः । **अपि त्विति** पदमव्यवहितेन उच्यत इत्यनेनान्वयायोगात् व्यवहितेन संबध्यत इत्याशयेनाह—**अपि त्वित्यस्येति** । **फलितमाहेति** । **नायं तुशब्दः प्राणातिवादित्वं व्यवच्छिनत्तीत्यनेन** फलितं, **तदति-वादित्वं अपरित्यज्येत्यादिटीकया** आहेत्यर्थः । **वाक्येनेति** । 'यस्सत्येनाति-वदती'ति वाक्येनेत्यर्थः ।

P. 279-4

**टीकायां—संवाद्येति** । संवाद्य तत्त्वं निश्चितवतस्तत्त्वविषयिणी या अभि-रुचिः, सा श्रद्धेत्यर्थः । **श्रुतौ निष्ठाकृत्योः पाठक्रमो न विवक्षितः** । **किन्त्वार्थ** इत्याशयेनाह—**टीकायामनन्तरं चेति** । **नच प्रश्नप्रतिवच-नेत्यतः प्राक्तनेन भाष्येण** श्रुत्यवलंबनेन सिद्धान्तो वर्णितः । तदभिप्राय-माह—**टीकायां—एष तु वा इत्यादिना** । प्रकरणोपमर्दं निराकर्तुं **एवं चेत्यादिटीकेत्याह—यद्वादीति** ।

P. 279-5

प्रश्नस्य सन्दिग्धत्वमसिद्धम् । 'सोऽहं भगवो मन्त्रविदेवास्मि नात्म-वि'दित्यात्मज्ञानाभावप्रदर्शनपूर्वकं शोकपारतारणफलकत्वेन प्रवृत्तस्य प्रश्नस्यात्म-

वेदनविषयकत्वनिश्चयादित्याशयेन परिहरति—**तत्राहेति**। तर्हि, प्रश्नोत्तरयोः P. 280-1
वैयधिकरण्यमित्याशङ्कां निराकर्तुं **परमात्मानमेवेत्यादिटीका**। तां व्याचष्टे—**तत्त्वे बुद्धीति**। पूर्णानन्दात्मना प्रतिपिपादयिषितात्मप्रतिपत्तिशेषत्वात् नामादिकीर्तनस्य न प्रश्नविरोध इति भावः। एवमप्युपास्तिविधिविरोध इत्यत आह—**उपास्तिस्त्विति**। ब्रह्माश्रित्य, तत्प्रतिपत्त्युपयोगितयैव फलान्तरप्रदर्शनेन विहितेत्यर्थः।

**सोपाधिकमिति**। प्राणान्यधर्मिकत्वाभावे प्राणत्वसमानाधिकृतत्वं तन्त्रम्। यथा 'प्राणो ह पिते'त्यादिश्रुत्युक्तपितृत्वादौ। न चेह तदस्तीति भावः। व्याख्याबीजमाह—**सर्वेति**। ततश्च, तदनन्तरभाविन्यात्मप्रकरणे P. 281-1
प्राणस्यान्यायत्ततोक्तिः न पूर्वसन्दर्भस्य प्राणप्रकरणत्वविरोधिनीति भावः।

नन्वस्तु नामादिक्रमेण प्रतिपादितस्य भूम्नः 'स भगव' इति तच्छब्देन परामृष्टस्यैव 'स एवाधस्ता'दित्यादिना सार्वात्म्यादिप्रतिपादनादाध्यायपरिसमाप्तेः भूम्न एवैकं प्रकरणमिति, स एव भूमा प्राणः किं न स्यादिति, प्रागुक्तं प्राणस्य भूमरूपत्वायोगं विस्मृत्य, शङ्कते—**नन्विति**। पुरस्तादुपरिष्टाच्च तदीयगुणविध्यभावात् कथं सन्दंशः, इत्यतः प्रकृते विवक्षितं सन्दंशमाह—**पुरस्तादिति**। प्रागुक्तं स्मारयितुं **तच्चायुक्तमिति टीका**। सा अव्यवहितभाष्योक्तलिङ्गाभिप्राया, व्यवहितभाष्योक्तश्रुत्यभिप्राया वेति व्याचष्टे—**प्राणस्येति**। **भूमेति तावद्बहुत्वमभिधीयत इत्यादि** भाष्यं व्याचष्टे—**बहोर्भाव इति**।

**इकारस्येति**। 'आदेः परस्ये'ति सूत्रादिति भावः। '**प्राणाग्नय** P. 282-2
**एवैतस्मिन् पुरे जाग्रती'ति** श्रुतिं व्याचष्टे—**गार्हपत्य इति**। 'अत्रैष देवः स्वप्नान्न पश्यत्यथैतस्मिन् शरीरे सुखं भवती'ति श्रुतिं व्याचष्टे—**देव इति**। **तथा बृहदारण्यके च स्वप्नजागरितस्थानाभ्यां सह पाठादिति** भाष्यं तच्छ्रुतिप्रदर्शनेन व्याचष्टे—**स वा एष इति**। '**तं मा भगवान् शोकस्य पारं तारयतु' इति चोपक्रम्य इत्यादिभाष्ये**, तमश्शब्दव्याख्याने बीज- P. 282-4
माह—**उपक्रमेति**।

॥ इति भूमाधिकरणम् ॥

---

## ॥ अथ अक्षराधिकरणम् ॥

सू०॥ अक्षरमम्बरान्तधृतेः ॥ १० ॥

सू०॥ सा च प्रशासनात् ॥ ११ ॥

सू०॥ अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अक्षरत्वधर्मप्रकारकबोधजनकत्वादक्षरशब्दस्य वर्णे **रूढिः**। ब्रह्मण्यपि प्रचुरप्रयोगाधीनो योगो **निरूढिः**। अतः संशय इत्याह—**रूढीति**। **स्वार्थ इति**। 'भागरूपनामभ्यो धेय' इति स्वार्थे विधानादिति भावः। **नहि धूमोपायेत्यादिटीकया** उपेयधीरुपायसंभिन्नेत्यस्य लैङ्गिकस्थले व्यभिचारित्वात् **अपि चेत्यादिटीकावैयर्थ्यमित्याशङ्क्य**, पूर्वमुपायोपेयभावापन्नधूमवह्निबोधजनकवाक्यस्थले, सत्यपि धूमवह्न्योरुपायोपेयभावे, न संभेद इत्युक्तम्। इदानीं तु, शब्दार्थयोः उपायोपेयभावाभावेऽपि संभेदो दृश्यत इत्युच्यत इति न वैयर्थ्यमित्याह—**अर्थस्येति**।

P. 282-6

**धारयितुमिति**। 'यस्मिन् द्यौ'रित्यादिश्रुतौ, 'मयि सर्वमिदं प्रोत' मित्यादिस्मृतौ च तदाधेयत्वमेव तदोतत्वमित्यवगमादिति भावः। अर्हतीत्यस्याध्याहारेऽपि धारयितुमित्येतदपेक्षया अनुषंगोक्तिः। **टीकायामुपायशब्दः** प्रमाणपर इत्यभिप्रेत्याह—**स्वरूपप्रमाणेति**। तस्यानुभवविरोध इति शङ्कते—**नन्विति**। किं शब्दतादात्म्यानुभवविरोधः? किं वा अर्थानुभवे शब्दोल्लेखविरोधः? नाद्यः, तदनुभवस्य शब्दतादात्म्यानवगाहित्वादित्याह—**तत आहेति**।

P. 283-4

**टीकायां**—समानाधिकरणप्रत्ययत्वाभावमुपपादयति—**न खल्विति**। द्वितीयं शङ्कते—**यदीति**। उपनीतस्य भावनमित्यपि न संभवति। तदानीं शब्दोपनायकाभावादित्याशयेनाह—**न हीति**। संज्ञांशे स्मृतिरिति परिहरति—**अत आहेति**। श्लोकापेक्षितं दर्शयन्नेव श्लोकमादत्ते—**गृहीतसंबन्धैरिति**।

P. 284-3

---

१. टीकायां 'संज्ञातु पिण्डाभिनिवेशिन्येव' इत्यत्र 'पिण्डानिवेशिन्येव' इति युक्तमिति भाति। पिण्डतादात्म्यशून्येति तदर्थः। २. गृहीतसंबन्धैरित्यस्य पूर्ववाक्यस्थस्य विशेष्यकथनाय कल्पतरावुपादानम्। तस्य श्लोकेऽपि स्मरणमित्यत्र संबन्धः॥

द्वितीयश्लोकस्य प्रकृतानुप्रयोगमाशङ्क्य, शङ्कोत्तरत्वेनावतारयति—**नन्विति। अर्थानिर्दिष्टेति।** ततश्च तद्विशिष्टत्वमर्थस्यासिद्धमिति भावः। P. 284-5 ततश्च 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे'त्युपक्रमगताम्बरान्तधारयितृत्वलिङ्ग-बलेन रूढित्यागान्नाक्षरं वर्णा इत्युपसंहरति—**टीकायां—तस्मादिति। साधारण-त्वादिति।** प्रधानेऽपि सत्वादित्यर्थः। साधारणत्वमसिद्धम्। श्रुतावाकाश-शब्दस्य अव्याकृतपरत्वेन, सूत्रे अम्बरशब्दस्यापि तत्परत्वे, प्रधाने अव्याकृते वा तदाधारत्वायोगादिति शङ्कते—**यच्चिति।**

अव्याकृतपरत्वे हेतुः—**भूतेति।** 'यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते, आकाश एव तदोतं च प्रोतं च' इति सर्वलोकाधारत्वेन भूताद्याधारत्वेन च कीर्त्यमानं न भूताकाशम्। तस्यापि निर्दिष्टमध्यपातित्वात्। नापि ब्रह्म। 'कस्मिन्नु खल्वा-काश ओतश्च प्रोतश्चे'ति प्रश्नस्य तदभ्युपगमेन प्रतिवचनस्य चायोगात्। अत आकाशशब्देन अव्याकृतमुच्यत इत्यर्थः।

**वैयर्थ्यादिति।** तस्य सूत्रस्याम्बरान्तधृतिर्ब्रह्मभिन्नेऽपि संभवतीति शङ्का- P. 284-8 निराकरणार्थत्वेन, त्वत्पक्षे शङ्कानुन्मेषादिति भावः। अंबरान्तधृतिर्मुख्याकाशान्त-धृतिरेव। ततश्च प्रधानं किं न स्यादिति शङ्कानिराकरणार्थत्वेन सार्थक्यं शङ्कते—**अत्रेति। फलं**—उत्तरसूत्रस्येत्यर्थः। तस्य कथं तत्फलकत्वमित्याशङ्क्य, यद्यत्र नभआश्रय एव विवक्षितः स्यात्, तदा तस्य प्रशासितृत्वकीर्तनं न स्यात्।

न चाप्रयोजकत्वम्। तदाश्रयाश्रयस्य तदाश्रयत्वाभावेन साक्षान्नभ-आश्रयस्याव्याकृतस्यैव निर्दिष्टत्वापत्त्या, तत्र शासितृत्वश्रुतिबाधापत्तेः। आकाश-शब्दलक्षिताव्याकृताश्रयत्वविवक्षायां तु, न दोष इत्येवं तर्कविधयेत्याशयेनाह—**नभआश्रयस्येति।** शासिधातोस्सेट्त्वेपि शास्तेति बहुलं प्रयोगदर्शनादाग-मानुशासनमनित्यमितीडागममकृत्वैव, **प्रशास्तृत्वे**त्युक्तम्।

अप्रयोजकस्तर्क इति परिहरति—**तच्च नेति।** किं ब्रह्मणः साक्षादेव आकाशशब्दार्थाश्रयत्वलाभाय रूढिभङ्गः? किं वा प्रधानस्य तद्व्यावृत्तये? नाद्य इत्याह—**आत्मन इति।** नहि शक्तिः शक्तिमतः शक्याधिकरणत्वं विहन्तुं P. 284-9 शक्नोतीति भावः। न च द्वितीय इत्याह—**किञ्चेति। [अपि चेति।]** उप-

क्रमगतस्याकाशाद्याश्रयत्वस्य ब्रह्मप्रधानोभयसाधारण्येन सन्देहे "एतस्य वा अक्षरस्य प्रशासने गार्गी"ति वाक्यशेषावगतप्रशास्तृत्वबलेन निर्णयसंभवान्निष्फलो P. 284-10 रूढिभङ्ग इत्याह—**अभग्नायामपीति** ।

न च सिद्धान्तेप्याकाशपदे रूढिभङ्ग एव, तस्याव्याकृतपरत्वात्, भूताकाशस्य भूतभविष्यदाद्याधारत्वायोगादिति वाच्यम् । सर्वेषामपि लोकानां भूतभविष्यदादीनां च भूतविकारत्वेनादिभूताकाशाश्रयत्वाविरोधात् । अव्याकृतस्याप्याधेयकोटिनिवेशो मानाभावादाकाशशब्दस्य तत्परत्वेऽप्यनिर्वाहाच्च । न चैकैकस्य भूताकाशस्य भूतभविष्यद्वर्तमानकल्पसंबन्धिसर्वाधारत्वायोगः । तत्तत्कल्पसंबन्ध्याकाशस्य तत्तत्कल्पसंबन्धिसर्वाधारत्वे आकाशमात्रस्य तत्सिद्धेः । अन्यथा वायूपादानत्वस्याप्यनापत्तेः ।

एवं च सत्यानुमानिकाधिकरणभाष्ये आकाशशब्दस्याप्यव्याकृतपरत्ववर्णनं परं प्रति स्वाभिमतमव्याकृतं श्रुतिषु बहुधा निर्दिश्यते, न त्वदभिमतं प्रधानमिति स्फोरयितुं, प्रौढिवादेन, एतदधिकरणसूत्रभाष्यन्यायविरोधात् । ततश्च वर्णपूर्वपक्षनिराकरणार्थमम्बरान्तधृतौ कथितायामेवमपि प्रधानं किं न स्यादिति पक्षान्तरनिराकरणार्थं सा च प्रशासनादिति सूत्रमित्येव युक्तमिति भावः ।

P. 285-1 **तत्प्रकृतिकत्वे**—अभिधानप्रकृतिकत्वे । अभिधेयस्य सांख्यमतरीत्या अभ्युपगते अभिधानप्रकृतिकत्वे हेतुरभिधानेति । अस्तु ततः किं तत्राह—**प्रकृतीति** । ततश्च विकारगतानां स्थौल्यादीनां प्रकृतावपि प्रसक्तिरित्यर्थः । विकारप्रलयावस्थायां तद्गतानां स्थौल्यादीनां प्रकृतिगामित्वावश्यंभावात् इदानीमपि तत्प्रसक्तिरवर्जनीयेत्याशयेनाह—**प्रलयावस्थेति** । ततश्च तद्भ्रमव्युदासाय श्रुतौ तन्निषेध इति भावः ।

**वाचस्पतिमते** किं ब्रह्मणो मुख्यं प्रशासनम् ? किं वा अध्यस्तम् ? नाद्य इत्याह—**प्रपञ्चेति** । मिथ्याभूतजीवाविद्यापरिणामप्रपञ्चाधिष्ठानत्वमात्राP. 285-2 भ्युपगमेन, तत्र स्वाभाविकप्रशासनायोगादित्यर्थः । नान्त्य इत्याह—**प्रशासनेति** । मुख्याश्रयत्वायोगादारोपाधिष्ठानत्वमात्रस्यातिप्रसक्तत्वादिति भावः ।

---

१. परिमलखण्डनमिदम् ।

द्वितीयं कल्पमादाय परिहरति—**तन्नेति** । श्रुतिबलेन कल्प्यमानं प्रशासनं योग्य एव कल्प्यत इति परिहरति—**नैतदिति** । इतोऽपि ब्रह्मण एव नियन्तृत्वमित्याह—**आरोपितमपीति** ।  P. 285-3 P. 286-2

॥ इति अक्षराधिकरणम् ॥

---

## ॥ अथ ईक्षतिकर्माधिकरणम् ॥

### सू० ॥ ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥

**पर्युदासित इति**[1] । अंबरावधिकाधारेण प्रयोजकेन त्याजित इत्यर्थः । **स ब्रह्मलोकस्तथेति** । कार्यब्रह्मजन इत्यर्थः । ततः षष्ठीतत्पुरुषगर्भं बहुव्रीहिमाह—**तत्प्राप्तिरिति** । **ततो हेतोरिति** । इह विहितस्य ध्यानस्य कार्यब्रह्मलोकफलकत्वादपरं ब्रह्मैव ध्येयम् । परब्रह्मविषयकत्वे ध्यानस्य निदिध्यासनरूपत्वापत्त्या, तस्य साक्षात्कारद्वारा ब्रह्मभावफलकत्वेन देशपरिच्छिन्नफलत्वायोगादित्यर्थः । तदुक्तं भाष्ये—**न हि परब्रह्मविदेशपरिच्छिन्नं फलमश्नुवीतेति युक्तम् । सर्वगतत्वात् परस्य ब्रह्मणः इति** ।

**तदेवेति** । 'तदैक्षते'त्यादावभावादित्यर्थः । **नाद्य इत्याहेति** । 'द्रष्टव्यो' 'मन्तव्य' इति भेदनिर्देशादित्यर्थः । **ईक्षणध्यानयोरिति** । ध्यानस्य चित्तैकाग्र्यद्वारा ध्येयसाक्षात्कारफलकत्वेन, तत्कारणत्वात् तयोरेकविषयत्वमित्यर्थः । **औत्सर्गिकं**[2]—स्वारसिकम् । ननु प्रणवप्रतीकस्य सगुणध्यानस्य कथं निर्विशेषसाक्षात्कारकारणत्वमित्याशङ्क्य, साक्षात्कर्तव्यनिर्विशेषस्यैव प्रतीके ध्येयत्वान्न दोष इत्याशयेनाह—**तत्कारणस्येति** । हिरण्यगर्भपक्षे तु—तस्य भिन्नत्वान्नैवमित्याह—**अन्यथेति** ।  P. 287-4 P. 287-6

---

१. 'पर्युदासित इति णिजर्थो न विवक्षितः, पर्युदस्त इत्यर्थः । तारकादेराकृतिगणत्वे संजातपर्युदास इति वा तदर्थो वर्णनीयः ।' इति परिमलम् ।

२. 'यद्यपि प्रायिकत्वमौत्सर्गिकत्वमिति विवक्षायां ईक्षणस्यातत्वविषयत्वमेवौत्सर्गिकं, परब्रह्मसाक्षात्कारमेकं विना प्रपञ्चान्तर्गतवस्तुजातविषयस्य सर्वस्येक्षणस्यातत्वविषयत्वात् । तथाप्यपवादाभावे अत्यन्ताबाध्यविषयकत्वं ग्राह्यम् मुख्यत्वादित्येवंरूपमौत्सर्गिकत्वमिह विवक्षितम् ' इति परिमलम् ।

ईक्षणध्यानयोः कार्यकारणभावेन तद्वाक्ययोरर्थभेदो निराकृतः। एकवा-
P. 288-1 क्यत्वेनापि तन्निराकरोतीत्याशयेनाह—**प्रकारान्तरेणेति**। समभिव्याहारमात्रेण नैकवाक्यतेत्यत आह-**स इति**। **अयमर्थः**—सत्यकामेन 'स यो ह वै तद्भगव'न्नित्यादिना य ओङ्कारमभिध्यायीत, कतमं वाव स तेन लोकं जयतीति लोकफलकमुपासनं पृष्टम्। पिप्पलादेन च, 'ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः' इत्युपक्रमात् 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसी'त्युपसंहाराच्च तेषां मुमुक्षुत्वान्मुमुक्षुं सत्यकामं प्रति तत्प्रश्नोत्तरेण सहैव मोक्षोपायमपि कथयितुं न केवलमोङ्कारध्यानेन लोकजयः, किन्तु परब्रह्मप्राप्तिरपीत्यभिप्रायेण 'तस्मै स होवाचे'त्यादिना प्रणवस्य परापरब्रह्मभेदकथनपूर्वकमुक्तम्—'तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेती'ति।

ततश्च प्रणवध्यानेन लोकजयो मोक्षप्रकारश्चेति द्वयं कथनीयम्। तत्र **'स यदी'त्यादिना** एकमात्रद्विमात्रप्रणवयोरपरब्रह्मध्यानेन पृथिव्यन्तरिक्षलोकजयात् तदवयवकापरब्रह्मप्राप्तिमभिधाय, 'यः पुनरेत'मित्यादिना, त्रिमात्रप्रणवे परपुरुषध्यानेन ब्रह्मलोकजयमभिधाय, तत्र गतस्य साक्षात्कारप्रतिबन्धकपापाभावं च 'यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुच्यते' इति प्रदर्श्य, 'यः पुन'रिति यच्छब्दपरामृष्टमेव तच्छब्देन परामृश्य, तस्य ब्रह्मलोके साक्षात्कारसंपत्तिमभिधाय, प्रागुक्तार्थानुवादपूर्वकं 'मोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं चेती'त्युपसंहारादेकवाक्यत्वमिति। **प्रमाणद्वयेति**। प्रत्यभिज्ञानं समभिव्याहारश्चेत्यर्थः।

P. 289-1 **तदिदमुक्तम्, न चात्रेत्यादिटीकाया** एषोऽर्थः—जीवघनशब्देन हिरण्यगर्भजीवो ध्यातव्यपरपुरुषत्वेन न परामृश्यते चेत्, तर्हि किमर्थं तत्परामर्श इत्याशङ्कां **कस्तर्हीत्यादिभाष्याभिप्रायकथनेन** परिहरति—**किन्त्वित्यादिना**। **खिल्यभावं**—घनीभावम्। **अपर आहेत्यादिभाष्याभिप्रायमाह—स सामभिरिति**। कथं ब्रह्मलोकस्य जीवघनत्वमित्याशङ्क्य जीवानां घनस्संघातो यस्मिन्निति व्युत्पत्त्येत्याशयेनाह—**स हीति**। **सूत्रात्मन इति**। सूत्रे मणीनामिव व्यष्टिजीवानां समष्टिजीवे हिरण्यगर्भे अन्तर्भूतत्वेन तत्र प्रोतत्वादिति भावः।

P. 289-5 **अत्रोच्यते त्रिमात्रेणेत्यादिभाष्यं** व्याचष्टे—**तदेवमिति**। **अत एव** ओङ्कारायतनत्वादेव। ओङ्कारायतनत्वमात्रेण कथमल्पफलत्वमित्यत आह—

उपाधिमत्त्वादिति। ननूपाधेरपि प्रणवस्य महामहिमत्वान्न तदुपाधिकब्रह्मोपासनस्य ब्रह्मलोकप्राप्तिफलकत्वं युक्तमित्यत आह—**क्रमेण चेति**। ननु 'यः पुनरेत'मिति वाक्यस्यापि परविषयत्वे अपरब्रह्मोपासनं प्रतिज्ञातमनुक्तमेव भवेदित्याशङ्क्य त्रिमात्रप्रणवोपासने परमिति विशेषणादेव पूर्वोक्तमुपासनमपरब्रह्मविषयमित्यर्थादेव गम्यत इत्याशयेनाह—**अपरं त्विति**। परब्रह्मालंबनप्रणवापेक्षया एकैकमात्राहीनप्रणवायतनमुपास्यमित्यर्थः। P. 289-6

'एतद्वै सत्यकामे'त्यादिश्रुतिं व्याचष्टे—**हे सत्यकामेति**। वक्ति पिप्पलादो यः पुनरिति, इत्येवमितिशब्दोऽध्याहर्तव्यः। ओमित्येतदक्षरमिति। 'त्रिमात्रेणोमित्येतेनैवाक्षरेणे'ति तृतीया ओमित्येतदक्षरं त्रिमात्रमित्येवं द्वितीयात्वेन विपरिणेया इत्यर्थः। 'स तेजसि सूर्ये संपन्न' इति सूर्ये संपत्तिवचनादक्षरे प्रणवे सूर्यान्तस्स्थत्वमपि चिन्त्यमित्याह—**तथाविधमक्षरं सूर्यान्तस्स्थमिति**। 'स सामभिरुन्नीयते ब्रह्मलोक'मिति श्रुतिं व्याचष्टे—**स सूर्यं प्राप्त इति**। प्रापयते इति प्रामादिकः पाठः। प्राप्यते इति तु समीचीन इति द्रष्टव्यम्॥ P. 288-3 P. 289-2

॥ इतीक्षतिकर्माधिकरणम्॥

---

## ॥ अथ दहराधिकरणम्॥

सू०॥ दहर उत्तरेभ्यः॥ १४ ॥

सू०॥ गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १५ ॥

सू०॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

सू०॥ प्रसिद्धेश्च ॥ १७ ॥

सू०॥ इतरपरमर्शात् स इति चेन्नासंभवात् ॥ १८ ॥

सू०॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

सू०॥ अन्यार्थश्च परामर्शः ॥ २० ॥

सू०॥ अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

P. 289-5 आक्षेपसङ्गतिमाह—**प्रागुदाहृतेति** । **दहरवाक्यशेषगतेति** । यद्यपि नायं दहरवाक्यशेषगतः । किं तु प्राजापत्यविद्यावाक्यशेषगतः । सा च निर्गुणविद्या । सगुणदहरविद्यावाक्यं तु ततः पूर्वमेव परिसमाप्तम् । तथापि पूर्वपक्षिणा एकप्रकरणत्वाश्रयणेनैकजीवविद्यात्वाशङ्कनात् तदनुरोधेन सङ्गतिरुक्तेति न दोषः ।

**विजिज्ञासितव्यमित्यत्र विज्ञानं न ध्यानम्** । किन्तु साक्षात्कारः । तस्यैव परमपुरुषार्थसाधनत्वेनेच्छाया विषयत्वसंभवादिति वक्तुं P. 290 2 **विशिष्टं हीति टीका** । तत्र श्रुतावन्वेष्टव्यमित्यनेन द्वयोरेव श्रवणमननयोर्निर्दिष्टत्वात्, विजिज्ञासितव्यमितिश्रुतिगतविशब्दार्थवैशिष्ट्यावधौ, कथं पूर्वेभ्य इति बहुत्वनिर्देश इत्याशङ्क्य, श्रुतार्थापत्तिलभ्यध्यानस्यापि श्रौतत्वात्, P. 290-1 तथा श्रुतिव्याख्यानमित्याशयेनाह—**श्रवणेति** ।

न चात्र **दहरस्याकाशस्येत्यादिभाष्ये**, पक्षान्तरस्यापि प्रतिभानात् तदनुरोधेन संशयान्तरमाह—**टीकायां—तत्र प्रथमं तावदिति** । प्रथमसंशयपूर्वपक्षस्य फल्गुत्वात्, तदुपेक्ष्य, द्वितीयसंशयपूर्वपक्षमादौ दर्शयतीत्याशयेनाह—**टीकायां—तत्र प्रथममिति** । आकाशपक्षापेक्षया, जीवपक्षे अतिशयं दर्शयितुं भाष्ये पुनरपि **प्राप्तमिति** पदमुपात्तमित्याशयेनाह—**टीकायां—युक्तमित्यर्थ** इति । **पुरमित्यस्य युज्यत** इत्यनेन, **देह** इत्यस्य **युक्त** इत्यनेन च प्रत्येकमन्वय इति भ्रमं व्यावर्तयन् व्याचष्टे—**ब्रह्मपुरेति** ।

**भाष्ये स्वकर्मोपार्जितत्वलक्षणजीवासाधारणलिङ्गेन ब्रह्मशब्दो जीवपर** इत्युक्तम् । तदयुक्तम् । लिङ्गाच्छ्रुतिबाधायोगादित्याशङ्क्य, अनेकलिङ्गानुरोधेन श्रुतिबाधं वक्तुं **आधेयत्वलिङ्गमप्युक्तम्—टीकायाम्** । तदनुपपन्नम् । ब्रह्मपुर इति सप्तमीबललब्धाधेयत्वस्य समभिव्याहृतवेश्मगतत्वेन जीवगतत्वाभावात् । ब्रह्मपुरशब्दे षष्ठीसमासाभ्युपगमेन ततस्तदप्रतीतेः ।

कथञ्चित्प्रतीतावपि, **ब्रह्मपुरे इति सप्तम्यधिकरणे स्मर्यते । तेन** अधिकरणेन सह **अनेन** ब्रह्मशब्दार्थेन **आधेयेन संबद्धव्यमिति, टीकायां** जीवे, पुर इति सप्तमीबललब्धाधेयत्वप्रतिपादनविरोधादित्याशङ्क्य, सत्यं षष्ठीसमास एव, तदभिहितश्च संबन्धः क इति जिज्ञासायां योग्यतया स्वस्वामिभाव-

वत् अन्यार्थसप्तम्या स्मारितत्वादाधाराधेयभावोऽपीत्याधेयत्वसमानाधिकरणं स्वामित्वं षष्ठ्यर्थ इत्याश्रीयते। अविरोधात्, पुरत्वरूपणसाफल्याच्च। एतदर्थमेव सप्तम्यधिकरणे स्मर्यते इत्युक्तम्। यतः स्मर्यते, अतः, तेन पुरेण सह तत्संबन्धितया श्रुतेन ब्रह्मणा, आधेयेन आधेयात्मना संबद्धव्यमिति च तेनेत्यादिटीकार्थ इत्याशयेन व्याचष्टे—तेनाधिकरणेनेति। P. 290-4

गुणे च भक्तिशब्दो यौगिक इत्याह—तेन हीति। जीवस्य चेतनत्वे, तत्र ब्रह्मशब्दो न गौणः स्यात् ब्रह्माभेदादिति शङ्कते—यदीति। उपधानप्रयुक्तभेदसद्भावात् गौणत्वमिति परिहरति—तत्राहेति। वाच्यत्वं गम्यत्वमिति टीकाभिप्रायमाह—भक्त्या चेति। आकाशस्य सन्दिग्धत्वादिति। 'दहरोऽस्मिन्नन्तराकाशः' इति वेश्माधेयतया निर्दिष्टस्याकाशस्य, भूताकाशः, परमात्मा वेति सन्दिग्धत्वादित्यर्थः। ततश्च 'दहरोऽस्मि'न्निति निर्दिष्टस्य वेश्माधेयस्य प्रथमनिश्चितदहरत्वलिङ्गानुगृहीतसन्निधिबलादाकाशश्रुतिर्जीवपरतया नेयेति भावः। . 291-1

अन्यथासिद्धिम्। भेदारोपेण निर्वाहम्। भेदारोप इति। जयपराजयफलकव्यापारविशेषनिचयात्मकस्य युद्धस्यैकत्वेन, तस्योपमानोपमेयभावविवक्षणे, तन्निर्वाहाय पूर्वेद्युस्तनाद्यतनत्वेन, प्रातःकालीनमध्याह्नकालीनत्वेन वा, तदेकदेशे तत्वारोपात् भेदारोप इत्यर्थः। न बाह्याकाशतुल्यत्वमिति। ततश्च टीकायामनवच्छिन्न[परिमाण]मित्येतदनवच्छिन्न[परिमाण]तुल्यमित्येवंपरमिति भावः। P. 292-1

उपमानविरोधो ब्रह्मपक्षेऽपीति शङ्कते—यदीति। उपमानश्रुतितात्पर्यार्थस्य न विरोध इति परिहरति—अत आहेति। मुख्याधेयत्वत्याग इति। ततश्च प्रथमश्रुतब्रह्मशब्दमुख्यार्थत्वानुरोधेन चरमश्रुतपुरशब्दमहिमलब्धमाधेयत्वमुपलब्धिद्वारकं भाक्तमेव। षष्ठ्यर्थसंबन्धश्चाप्यसाधारणत्वादयमेवेति, न तद्बलेन श्रुतिबाध इति भावः। P. 292-4

ननु सन्निधिरपि दहरत्वलिङ्गोपोद्बलितः? नेत्याह—सन्निधिरिति। एकलिङ्गोपोद्बलितोऽपि सन्निधिर्बहुभिर्लिङ्गैः बाध्यत इत्यर्थः। बहुत्वमकिञ्चित्करम्। अन्यथासिद्धत्वादित्याशयेन शङ्कते—नन्विति। ब्रह्मपुरेत्यादिटीकामभ्युपगमत्यागार्थत्वेन व्याचष्टे—अपि चेति। उपासनया साक्षात्कार P. 293-1

P. 293-6 एव विदेरर्थः इत्याशयेनाह—**साक्षात्कृत्येत्यर्थ इति । उपलब्धिः ।** प्राप्तिः । **टीकायां–तथा [तत्र] विचार इति ।** स किं भूताकाशो वा ? जीवो वा ? परमात्मा वेति विचार इत्यर्थः । आचार्यवाक्ये, तदनन्तरभाविनि प्रश्ने च पर्यालोच्यमाने, आकाशकीर्तनस्य तदन्तर्वर्तिवस्तुप्रदर्शनार्थत्वमवगम्यत इत्याह—

P. 293-9 **टीकायां–आचार्येण हीति ।**

यदिदमस्मिन् ब्रह्मपुरे वेश्म तद्दहरं, वेश्मन्यपि योऽन्तराकाशः स दहरः । अर्थात्ततोऽपीति गम्यते । एवं च सति, तत्र किमन्यद्वर्तितुमर्हति । यद्विजिज्ञास्यं भवेदित्येवमाक्षेपश्रुतिं व्याचष्टे—**टीकायां–पुण्डरीकमेवेति । यस्मादाकाशोपमानोपक्रमं वचः उभे अस्मिन्नित्यादिरूपं, तस्मादिति टीकार्थः ।** न्यायविरोधे अभ्युपगमोऽकिञ्चित्कर इति शङ्कत इत्याह—**भाष्य इति ।** (आदौ) [आद्यसंशयस्थपूर्वपक्षे दहराकाशे] वाक्यशेषगतात्मश्रुतिविरोधं फलवत्त्वलिङ्गविरोधं च दर्शयति—**टीकायां–वाक्यशेषो हीति ।**

एवमपि दहराकाशो नात्मेत्याशयेन **टीकायां शङ्का–स्यादेतदिति ।** तत्र द्यावापृथिव्योरात्मत्वे, **आत्मानमित्येकवचनान्तशब्दानुपपत्तिरिति** शङ्कते—**तर्हीति ।** लक्षितस्यैकत्वान्न दोष इति परिहरति—**अत आहेति ।** तद्ध्यायातं ब्रह्मण उपास्यत्वमित्याशङ्क्य, दहराकाशोपास्यत्वभङ्ग एव तदभिलषित इत्याशयेनाह—**तथा चेति । अस्मिन्नित्यस्य** व्यवहिताकाशपरामर्शित्वे हेतुमाह—**अस्मिन्निति ।** एष इत्यादेस्तु सन्निधिरेवेत्याशयेनाह—**तथा चेति । आकाशनिर्देशानन्तर'मुभे अस्मि'न्नित्यादिना पूर्ववाक्ये द्यावापृथिव्यादिनिर्देशादित्यन्वयः ।**

दहराकाशात्मवेदनस्यापि फलाकाङ्क्षित्वात् तस्यापीदं फलं किं न स्यादि-

P. 294-5 त्यत आह—**एतांश्चेति ।** तत्क्रतुन्यायोपोद्बलितेनात्यन्तसन्निधिना श्रुतस्य फलस्य गुणविज्ञानफलत्वे आत्मवेदनस्य फलान्तरं कल्प्यमिति भावः । 'अस्मिन् कामास्समाहिता' इति श्रुत्या दहराकाशस्य कामानां च गुणगुणिभावावगमात्, तेन रूपेण विशिष्टविषयमेकमेवोपासनम् । अन्यथा, चशब्दविरोधात् । तथा च न न्यायविरोधो, नापि सन्निधिवैषम्यमिति परिहारतात्पर्यमाह—**चकारादिति ।**

**हेत्वन्तरमिति ।** एकवचनश्रुतिमित्यर्थः । लक्षितस्यैकत्वादेकवचनमिति

P. 294-9 प्रागुक्तं निरस्यति—**लक्षितेति ।** लक्ष्यविशेषणानामपि लक्षकलिङ्गवचनभाक्त्व-

स्यैव दर्शनादिति भावः। इदमेतदात्मशब्दैः दहराकाशस्यैव परामर्शाभ्युपगमेन तस्यैव ज्ञेयत्वे, उपक्रमस्थश्रुतिविरोध इति शङ्कते—यदीति। सर्वोपक्रमे दहराकाशस्यैव ज्ञेयत्वकथनात् न विरोध इति परिहरति—अत आहेति। P. 294-9 P. 295-1

अयं भावः—अत्र तावत्क्रममुक्तिफलकमुपासनं विधित्सितम्, कामावाप्तिब्रह्मभावयोरुभयोरपि फलयोः कीर्तितत्वात्। तद्विधिरपि 'तद्वाव विजिज्ञासितव्य' मित्यत्रैव। 'य इहात्मानमनुविद्य'त्यत्र तु यच्छब्दोपबन्धेनानुवादत्वावगमात्, तदनुवादेन फलविधिरेव। अन्यथा तत्र विशिष्टविध्यङ्गीकारे उपक्रमस्य निरर्थकस्तावकत्वापत्तेः। अतः 'तद्वाव विजिज्ञासितव्यमित्यत्रैव साक्षात्कारेच्छोपदेशमुखेन तद्धेतूपासनाविधिः।

एवं च सति, 'तस्मिन् यदन्त'रित्यत्र तच्छब्देन यदि दहराकाशः परामृश्येत, तदा तदन्तर्वर्तिन एवोपास्यत्वं स्यात्। ततश्च, 'य इहात्मानमनुविद्य'त्यनुवादविरोधः। अब्रह्मोपासनस्य, सत्यलोकद्वारा क्रममुक्तिफलकत्वविरोधश्च। न चैवं कामानामुपास्यत्वासिद्धिः, उपक्रमे तदकीर्तनादुद्दिश्य फलविधौ कामविध्ययोग(श्चे)श्चेति वाच्यम्।

'दहरोऽस्मिन्नन्तराकाश' इत्यनेन दहराकाशं प्राधान्येन निर्दिश्य, द्यावापृथिव्यादिगुणगणोपेतस्यैव तस्योपासनं विधातुं पुनरपि 'तस्मिन् यदन्त'रिति वाक्येन तच्छब्देन वेश्म परामृश्य, तदन्तर्गतसर्वसंग्रहाय सामान्यरूपं विवक्षित्वा, यदिति यच्छब्देन तत्र वेश्मनि यदस्ति आकाशो वा, अन्यद्वा तद्द्वारा, तदाधेयं सर्वमन्वेष्टव्यं विजिज्ञासितव्यं चेति. विधानेन गुणानामप्युपास्यत्वसिद्धेः।

अनन्तरं च दहरस्य कथंचिदुपास्यत्वेऽपि, तद्गतस्य कथमुपास्यत्वम्? अतिसूक्ष्मे तस्मिन् कस्याप्यभावादिति, शङ्कापरिहारमुखेन तद्गतगुणप्रपञ्चनपूर्वकं तत्फलप्रदर्शनार्थमुत्तरस्सन्दर्भ इति। तथा च भाष्यम्—**तस्माद्वाक्योपक्रमेऽपि दहर एवाकाशो हृदयपुण्डरीकाधिष्ठानः सहान्तस्समाहितैः पृथिव्यादिभिः सत्यैश्च कामैर्विज्ञेय उक्त इति गम्यते इति।**

व्यवहितत्वादन्वयं दर्शयति—एतमेवेति। धनमात्मन इच्छतीति विग्रहे, 'सुप आत्मनः क्य'जिति सूत्रेण क्यच्प्रत्यये, शत्रन्तस्य रूपमिति स्फोर- P. 295-1

यन्नाह—**धनेच्छावद्भिरिति** । **लोकशब्दः** तद्विशेषपरः । **स्थापनञ्च** तत्र
P. 295-2. तात्पर्यज्ञापनमित्याह—**वेदसंस्कृतेति** । **अभ्युच्चयार्थत्वेनेति** । प्रसिद्धिविरोधे न्यायस्याकिंचित्करत्वात्, ब्रह्मलोकशब्दस्य च सत्यलोके प्रसिद्धेः न निषाद[1]स्थपतिन्यायेन कर्मधारये ब्रह्माभिन्नलोकपरत्वमिति शङ्कावारणायेत्यर्थः ।

P. 296-5 **रौद्रीम्**—रुद्रदेवताकाम् । **संबन्धो लक्ष्येतेति** । संबन्धप्रकारकबोधस्यानुभवसिद्धतया, तस्य पदप्रतिपाद्यत्वावश्यंभावादिति भावः । निषादशब्दादुपरि लुप्तापि विभक्तिरुपस्थितत्वात्, द्वितीयैवेति कल्प्यते इत्याशयेनाह—**द्वितीयायाश्चेति** । अत एव नीलघटमित्यादौ नीलं घटमित्येव विग्रह इति केचिदिति भावः । **तदप्युक्तमिति** । **अपिशब्दात्** कर्मधारयबलीयस्त्वमप्युक्तमिति प्रति-
P. 296-7 भाति । तदयुक्तम् । सूत्रकारेण तदनुक्तेरित्याशङ्क्य, तच्छब्देनाधिक्यं गृह्यते । तच्च लिङ्गेन सहात्र **सूत्रकारेणोक्तमेव**, लिङ्गस्य दहराकाशब्रह्मप्राप्तिलिङ्गत्वदृढीकरणार्थेन चशब्देन तत्सूचनादित्याशयमाह—**तदपीति** ।

P. 297-1 **पञ्चम्योः** सामानाधिकरण्यभ्रमं वारयन्नाह—**विपक्षादिति** । कमलासनलोकप्राप्तेः कथं विपक्षत्वमित्याशङ्क्य, षष्ठीसमासप्रतिपाद्यत्वात् कर्मधारयप्रतिपाद्याभेदस्य न विपक्षो युक्त इत्याशयेनाह—[2]**षष्ठीसमासो विपक्ष इति** । व्याख्याबीजं सोपपत्तिकमाह—**सेतुरिति** ।

रथाङ्गनामशब्दस्यैव चक्रवाके लक्षणोच्यत इति, भ्रमं व्यावर्तयति—
P-297-4 **रथाङ्गमिति नामेति** । शक्यसंबन्धमाह—**रथाङ्गशब्देति** । स्वार्थवाचकशब्दावयवकशब्दवाच्यत्वं संवन्ध इति भावः। **टीकायां-नभोवदिति** । नभसीवेत्यर्थः ।
P. 298-5 **प्रोद्गातृनयं** मनसि निधाय परिहरति—**तन्नेति** । **अभ्युच्चयार्थमिति** । पारवस्त्वगुणयोगेन ब्रह्मभिन्ने प्रधानादावेव किमिति न वर्तेत, इत्याशङ्कायां उपस्थितत्वेन, वैषम्यं वक्तुमित्यर्थः । **स्यान्तेनेति** । **संबन्धस्येत्यन्तेन ग्रन्थेनेत्यर्थः** ।

---

१. 'निषादो नाम ब्राह्मणात् शूद्रायामुत्पन्नः । स तु शूद्रधर्मयुक्तः' इति सोमनाथीये ।

२. कल्पतरौ 'असंभवादिती'ति मूलप्रतीकग्रहणानन्तरं केषुचित् कोशेषु 'षष्ठी समासो विपक्षः, इति वाक्यं दृश्यते । इति परिमले उक्तम्, तत्पाठमवलम्ब्य आभोगः ।

भेदनिर्देशस्य लक्षणाभावगमकत्वं दर्शयति—**अन्तर्हृदय इति**। लक्षणास्थले सादृश्यप्रतीत्यभावेन दृष्टान्तवैषम्यमाशङ्क्याह—**यत्रेति**। **गङ्गायाः कूलमित्यर्थे विवक्षिते गङ्गायां कूले च गंगेति प्रकृतिप्रयोगो नेत्युक्तं टीकायाम्**। तद्व्याचष्टे—**गङ्गापदमेवेति**। P. 298-9

ननु तत्किमित्यादिरसङ्गतः परिहारः। पौर्णमास्यमावास्यावाक्यगतयोः पौर्णमास्यमावास्याशब्दयोरेकैकस्य त्रिकस्य साङ्गस्य तत्तत्कालसंबन्धबोधनार्थकत्वेन सप्रयोजनत्वादित्याशङ्क्य च, तर्हि, प्रकृतेऽप्यन्तर्हृदय आकाश' इत्येतावत्युक्ते नित्यनिर्लेपत्वादिनापि आकाशसाम्यसंभवात् व्यापकत्वेनैवाकाशसाम्यं न लभ्येत। ततश्च तात्पर्यविषयीभूता दहरत्वनिवृत्तिर्ब्रह्मणो न सिद्ध्येत्। अत एव विप्रे अग्निशब्दप्रयोगलभ्येऽपि शुचित्वे गुणान्तरशङ्कावारणाय पुनरग्नौ विप्रे च शुचित्वं लोकवेदयोः प्रदर्श्यते। एवं सप्रयोजनत्वेऽपि लक्ष्यस्य पृथङ्निर्देशे सति न लाक्षणिकः प्रयोग इति येयमाशङ्का, तां परिहरतीत्याशयेनाह—**परिहरतीति**।

**अधिकरणबाध इति**। अमावास्याशब्दस्य कर्मणि मुख्यत्वे, अपराह्णे विधीयमानस्य पितृयज्ञस्य, समभिव्याहारलक्षणवाक्येन तदङ्गत्वापत्तेरित्यर्थः। यथाश्रुते, गङ्गाशब्दस्य पूरेऽपि लक्षणा स्यादित्यतो व्याचष्टे—**अन्यत्रेति**। P. 299-3

---

१. टीकायां—'नहि भवति गङ्गायाः कूलमिति विवक्षिते' इत्यनन्तरं 'गङ्गाया गङ्गेति प्रयोगः' इति, 'गङ्गाकूलयोः गङ्गेति प्रयोगः' इति च पाठद्वयं परिमलात् ज्ञायते। तत्र द्वितीयपाठमभिप्रेत्य आभोगप्रवृत्तिरिति भाति। परिमले द्वितीयपाठः न साधुरित्युक्तम्। हेतुर्नोक्तः तत्साधुत्वे न दोष इति आभोगाशयः। गङ्गायाः कूलमिति विवक्षिते सति गङ्गाकूलयोरुभयत्र गङ्गा इति प्रयोगः गङ्गापदप्रकृतिप्रयोगः। स न' गङ्गाया गङ्गा इति प्रयोग एव। स न भवतीत्यर्थः। एवं च साधुरेव स पाठः गङ्गा इति प्रयोग इत्यस्य प्रकृतिप्रत्ययोभयप्रयोग इत्यर्थं मत्वा गङ्गाकूलयोः गङ्गा गङ्गा इति प्रयोगो नेति टीकार्थं अभिप्रेत्य तथा सति गङ्गासंबन्धबोधकषष्ठ्यभावेन तथा प्रयोगप्रसक्तेरेवाभावात् निषेधो न संगच्छते। अतः स पाठोऽसाधुरिति परिमलाशय उन्नीयते। गङ्गेति प्रकृतिप्रयोग इति आभोगोक्त्या तस्यापि पाठस्य साधुत्वं समर्थितं भवतीति बोध्यम्॥

२. 'यत्र शब्दादर्थप्रतीतिस्तत्र लक्षणा यत्र पुनः (अन्यार्थे निश्चिते) अन्यतो निश्चिते अर्थे शब्दप्रयोगः तत्र वाचकत्वमेव' इति टीका। तस्याः कल्पतरुरीत्या एवमर्थः—अन्यत्र मुख्यत्वेन निश्चितस्य शब्दस्य अन्यत्रार्थे प्रयोगे, अर्थश्चेदन्यत्राऽधिगतः तर्हि मुख्यत्वम्। न चेदमुख्यत्वम्। अन्यतोऽनधिगतस्यार्थस्य शब्दादेव प्रतीतौ लक्षणा इति फलितम्।

P. 300-1 **गङ्गापदादेवेति।** ततः पूर्वं तीरप्रत्यायकाभावादिति भावः। दहरवाक्ये, आकाशशब्दात् पूर्वं ब्रह्मणः प्राधान्येनानिर्दिष्टत्वात्, कथमाकाशशब्दस्य तद्वाचकत्वमित्याशङ्क्य, श्रुत्यन्तरे ब्रह्मवाचकत्वेन निश्चितस्याकाशशब्दस्य दहरवाक्येऽपि तद्वाचकत्वमेव युक्तमित्याशयेनाह—**आकाशशब्दस्त्विति।**

सोमशब्दस्य सोमवति लाक्षणिकत्वात् कथं—**न चात्रेति** टीकेत्याशङ्क्य, लतांशे व्यभिचारो विवक्षित इत्यभिप्रेत्य, तत्र व्यापकाभावं दर्शयति—**सोमशब्दो हीति।** उभयत्रापि प्रयोगबाहुल्यसाम्यादिति भावः। **टीकायां—वाक्यार्थादिति।** सोमसंबन्धादित्यर्थः। तत्र व्याप्यं दर्शयति—**एतदिति।** व्यापकीभूतस्य मुख्यत्वस्याभावं स्फोरयितुं **लाक्षणिकौ न न भवत इति** नञ्द्वय-
P. 301-1 प्रयोगः। तत्र व्याप्यं दर्शयति—**यागषट्कं चेति।**

ननु लक्ष्यस्य पृथङ्निर्देशेऽपि यदि लक्षणा, तर्हि "यावान्वा अयमाकाश' इत्याकाशशब्दोऽपि तद्गतगुणलक्षणया ब्रह्मपरः स्यात्। तथा च भेदाभावादुपमानोपमेयभावविरोध इत्याशङ्क्य[1] सादृश्यप्रतियोगिनिर्देशकस्य पदस्य न क्वचिदपि गुणे लक्षणा। किन्तु तदनुयोगिनि प्रयुक्तस्यैव तस्य पदस्येत्याशयेनाह—**अग्निरितिवत् इति।** एवं 'यावा'नित्यत्रापीत्यर्थः। अस्मिन्नर्थे वैदिकमप्युदाहरणमाह—**यथा वा इति। क्रतौ श्येन इति।** क्रतौ प्रयुक्तो हि श्येनशब्दो गुणलक्षको न सादृश्यप्रतियोगिनि पक्षिणि प्रयुक्त इति भावः।

**टीकायां सम्यक्प्रसीदतीत्यस्यैव** विवरणं—**विषयेन्द्रियेति। नासंभवादिति** परिहारस्सूत्रभागभाष्यस्यानन्यथासिद्धबहुलिङ्गानुरोधेन अन्यथासिद्धं

---

१. अत्र टीकायां—'न चात्र कस्यचिल्लाक्षणिकत्वमृते वाक्यात्' इति वा, 'नचात्र कस्य चिल्लक्ष्यत्वम् ऋते वाक्यार्थात्' इति वा पाठश्चेत् सुबोधो भवति। अथवा लाक्षणिकत्वमित्यस्य लक्ष्यत्वमिति वा, वाक्यार्थादित्यस्य वाक्यादिति वा लक्षणया अर्थो वक्तव्यः। यद्वा वाक्यार्थमृते वाक्यार्थभिन्नस्य कस्यचित्। यस्य कस्यचिदर्थस्य यं कंचिदर्थं प्रतीत्यर्थः, लाक्षणिकत्वं, लक्षकत्वं, कस्यचित् शब्दस्येति शेषपूरणेन कथं चिदर्थो वक्तव्यः। भट्टमते वाक्यार्थस्य लक्ष्यत्वमङ्गीक्रियते अतः वाक्यार्थमृते इत्युक्तमिति भाति। आभोगकारस्तु वाक्यार्थपदस्य सोमसंबन्धं सोमवतेति मतुबर्थरूपं सोमपदलक्ष्यार्थमर्थमाह॥

२. अत्र आभोगे धृतं 'अग्निरितिवत् इति' 'यथा वा इति' 'क्रतौ श्येन इति' इति प्रतीकत्रयमपि कल्पतरौ कुत्रापि कोशे नोपलभ्यते। कश्चन कल्पतरुग्रन्थभागः कोशेषु त्रुटित इति भाति, परिमलेऽपि प्रतीकं न धृतम्॥ अहो लेखकप्रमादः॥

लिङ्गद्वयं नेयमिति तात्पर्यं स्फोरयन्नाह—**टीकायां-संप्रसादसमुत्थनाभ्यां** P. 300-7
**हीति**। **टीकायां दहराकाशमेव प्रकृत्येति** पूर्वपक्षाभिप्रायेण। सिद्धान्ते विद्याभेदेन प्रकरणभेदात्। श्रुतितात्पर्यार्थं संग्रहेण दर्शयितुं **यमात्मानमित्यादिटीका**। तत्रान्विष्य, **विविदिषन्ताविति**—श्रवणादिकं कृत्वा, साक्षात्कर्तुमिच्छन्तावित्यर्थः।

**टीकायां-ब्रह्मचर्यमूषतुरिति**। ब्रह्मविद्याग्रहणार्थं व्रतं पुरस्कृत्य, वासं P. 301-3
कृतवन्तावित्यर्थः। **टीकायामेतदमृतमभयमित्यनन्तरं** इतिशब्दोऽध्याहर्तव्यः। **प्रजापतिरुवाचेत्यन्वय इति**। वक्ष्यमाणेनेति शेषः। **साध्वलङ्कृतावि**त्याद्युपन्यासेन कथं विभ्रमापनयनमित्यत आह—**यथेति**[1]। **एष आत्मेत्येत**च्छब्देन प्रकृतस्य देहस्य परामर्शे, प्रजापतेः प्रतारकत्वं स्यात्, इत्याशङ्क्य, तत्साक्षित्वेन, स्वबुद्धिस्थमात्मानं तथा निर्दिशतीत्याशयेनाह—**देहादिति**।

अव्यवहितप्रतिबिंबस्वरसस्यैतच्छब्दस्य देहपरत्वेन विरोचनस्य भ्रमे निमित्तमुक्तम् **टीकायां-देहानुपातित्वादिति**। तदुपपादयति—**यथा**[2]-**खल्विति**। **अक्ष्युपलक्षिते इति**। 'अक्षिस्थं नाग्रतं विद्या'दिति श्रुतेरिति P. 302-1
भावः। कर्तरि क्तप्रत्यय इत्याशयेन व्याचष्टे—**अभिप्रतीतिवानित्यर्थ इति**। **अक्षिणि, स्वप्ने, सुषुप्ते, चेत्यस्य** पर्यायत्रयविषयत्वात्, **चतुर्थे पर्याय** इत्येतत्साकाङ्क्षमित्यत आह—**प्रतीकत आदत्ते इति**। **अस्य जीवस्य पाप्मादिर्वागादिक्रियाजन्यत्वात् तदभावे न भवतीत्युक्तमयुक्तम्**। जीवस्वभावत्वशङ्काया अपरिहारादित्यत उक्तं-**अपूर्वस्येति**। पूर्व[3]मविद्यमानस्य आग- P. 303-1
न्तुकस्येत्यर्थः। ततश्च, नानादिजीवस्वभावत्वमागन्तुकस्य पाप्मादेरिति भावः।

उपनिषदामद्वितीयब्रह्मपरत्ववर्णनं प्रकृतासङ्गतमित्यतो विकल्प्य योजयति—**जीववादीति**[4]। **दृष्टविरोधाच्चेति**—युक्त्यन्तरभाष्यं व्याचष्टे—

---

१. कल्पतरौ-साधु-अलङ्काराद्युपन्यासेन इत्यत्र उपन्यासः विन्यासः।

२. कल्पतरौ 'न प्रतिबिंबमेवात्मेति प्रतिपेदे' इत्यत्र नञ् अधिकोऽशुद्धः।

३. पाप्मादेरित्यादिशब्दगृहीतस्य जरादेरदृष्टलक्षणापूर्वत्वाभवादेवं व्याख्यानमिति बोध्यम्।

४. 'जीववादी प्रष्टव्यः, किमीश्वरमेव न मन्यते' इति नञ् कल्पतरुकोशे त्रुटितः।

P. 304-2 **टीकायां—न च संसारावस्थायामिति ।** अन्यासंसृष्टस्य कुतो विवेचनमिति शङ्कायाः कथं भाष्येण परिहार इत्यत आह—**टीकायामयमर्थ इति ।** वास्तव-संसर्गतदभावाभ्यां वैषम्यं शङ्कते—**भाष्य इति ।**

**ननु भाष्यटीकयोः स्वरूपाभिनिष्पत्तिः साक्षात्कारः उपसंपत्तिः तदात्मतापत्तिरित्येवं** किमर्थं व्याख्यायते ? क्त्वाप्रत्ययविरोधात् । **उपसंपत्तिः साक्षात्कारः, अभिनिष्पत्तिः—प्राप्तिः,** इत्यपि व्याख्यातुं शक्यत्वादित्याशङ्क्य, किं व्याख्यानान्तरं युक्तमिति ब्रवीषि ? किं वा, अस्मिन् व्याख्याने क्त्वाप्रत्ययस्य गतिं पृच्छसि ? नाद्यः । तथा व्याख्यानायोगात् ।

तथाहि । **नोपसंपत्तिः, साक्षात्कारः ।** परं ज्योतिरिति कर्मनिर्देशात् । साक्षात्कारस्य च स्वरूपविषयकत्वावश्यंभावात् । संपत्तेः प्राप्तित्वेनैव लोके प्रसिद्धेः । 'ब्रह्मविदाप्नोति पर'मित्यादाविव परशब्दनिर्दिष्टस्य ब्रह्मणः प्राप्तेरेव-स्वरसतः प्रतीतेः । निष्पत्तेरुत्पत्तित्वप्रसिद्धेश्चेति निराकृत्य, द्वितीयं शङ्कते—**नन्विति ।** बहुश्रुत्यनुरोधेन क्त्वाश्रुतिस्वारस्यभङ्गो न दोषायेति परिहरति—

P. 304-4 **अत आहेति ।**

ननु श्रुतिस्वारस्यानुरोधेन समुत्थानं शरीरापादानकं गमनमित्येव किमिति न व्याख्यायते इत्याशङ्क्य, तथा सति, जीवन्मुक्तिशास्त्रवैफल्यं स्यादित्यभिप्रायेण **तथेति भाष्यमिति** दर्शयितुं **यदा चेति टीका ।** तत्र व्याख्यानान्तरं क्रियत

P. 305-7 इति भ्रमं वारयति—**पूर्वमिति । न विरोध इति ।** श्रुतिगतसमुत्थानाभि-निष्पत्त्योः उभयोरपि **टीकायां** समुत्थानत्वेनानुवादेऽपि श्रुतिगतसमुत्थानस्य तथात्वाकथनान्न श्रुतिविरोध इति भावः ।

अपूर्वशङ्कोत्तरत्वेन भाष्यावतारणं भाष्यस्य अप्रासङ्गिकत्वेन वैयर्थ्य-वारणार्थमित्याह—**नापीति । जीवदृष्टान्तेति ।** जीवशङ्कादृष्टान्तेत्यर्थः । अक्षिपर्यायस्य दृष्टान्तपरत्वे, कथं दार्ष्टान्तिकसिद्धिरित्यत आह—**अक्षिपर्याय**

P. 305-3 **इति ।** श्रुतावात्मविशेषणं अहंपदं न दृश्यत इत्यत आह—**अहेत्यत्रेति । टीकायां—अहंकारोऽहंशब्द** इत्याशयेनाह—**अहंशब्देति ।**

---

१. भामत्यां 'सन्निधानं च संयुक्तसंयोगात्मकम्' इति पाठः । 'संयुक्तसंयोगात्मत्व'मिति पाठमभिप्रेत्य 'जपाकुसुमादिना' इत्यादिकल्पतरुवाक्ये बहुव्रीहिप्रदर्शनमिति बोध्यम् ।

तर्हि किमर्थं **टीकायां**–बिन्दुरध्याहृत इत्यत आह—**सुषुप्त इति**। P. 305-5
यद्यप्ययमहमस्मीत्येवं न जानातीति, विशेष[ण]निषेधान्नायं दोषः, तथाप्यहमात्मानमिति वि(शे)शिष्यानुक्तौ ज्ञानसामान्यस्य विशेषोल्लेखस्य चेत्युभयोरपि निषेधः स्यादिति, तद्व्यावृत्त्यर्थं तथा व्याख्यातमिति भावः। **टीकायां–यथा जागरित इति। यथा जागरिते स्वप्ने वा अयमहमस्मीति जानाति, एवं सुषुप्तौ न जानातीति पूर्वेणान्वयः।** कथमुक्तमित्याशंक्यार्थापत्तिविषयेत्याह—**असिद्धस्थापीति**।

अत्र भाष्ये **केचित्त्वित्यादिस्सन्दर्भो न पूर्वपक्षिणः**। तेन प्राजापत्यवाक्यस्य सर्वस्यापि जीवपरत्वाभ्युपगमेन, ब्रह्मपरसन्दर्भानभ्युगमात्। नाप्येकदेशिनः। सिद्धान्तादत्यन्तविलक्षणत्वात्। ईषद्भेद एव तदेकदेशिमतत्वव्यवहारात् 'एतं त्वेव ते' इति, प्रतिज्ञाय, प्राक् चतुर्थात् पर्यायादन्यमन्यं व्याचक्षाणस्य प्रजापतेः प्रतारकत्वं प्रसज्येतेति, दूषणभाष्यानुसारेणात्यन्तवैलक्षण्यावगमादित्याशङ्क्य,

पूर्वपक्ष्येव जीवपरात् प्राजापत्यवाक्याद्दहराकाशो जीव इति शङ्कायां, जीवस्य पारमार्थिकं रूपं प्राजापत्यवाक्येन प्रतिपाद्यते। तच्च ब्रह्मैवेत्येवं निराकृतायां, पुनरपि सिद्धान्त्येकदेशिवेषधारणेन प्राजापत्ये वाक्ये ब्रह्माभिधानमङ्गीकृत्य, जीवोऽपि तत्र प्रतिपाद्यत इति दहराकाशो जीवो वा ब्रह्म वेत्यनिर्धारणेन शङ्कितुमुपक्रमत, इत्याशयेनावतारितं **टीकायामाचार्यदेशीयव्याख्यानमाहेति**। तदनुपपन्नम्। निराकृतायाः शङ्कायाः पुनरुत्थानायोगादित्याशङ्क्याह—**एकदेशीति**। P. 306-1

ननु यदि **ह्येतमित्यादिटीकायामेतमित्यनेन नाक्षिस्थानः पुरुषः परामृश्यत इत्युक्तम्**। एतावता कथं जीवशङ्कोत्थानमित्याशङ्क्य, [आह—**उक्तं हीति**] **नापि प्रतिच्छायात्मायमिति**, भाष्यनिवर्तितायाः शंकायाः पुनरुज्जीवनं क्रियते। तत्र जीवे अमृतत्वाभयत्वादिकं छायापुरुष इवारोपेण, स्वत एव वा देहाद्युपाधिविनिर्मुक्तरूपाभिप्रायेण, उभयथापि प्रथमे पर्याये छायापुरुषः, एवं द्वितीयतृतीयपर्याययोः जीवो निर्दिश्यत, इत्यस्त्वित्युक्तमेवेत्यर्थः। तर्हि तत्रत्यं निराकरणमपि स्यादित्याशङ्क्य, नेत्याह—**एतन्त्विति**। **छाया-** P. 303-3

**पुरुषानुकर्षणमङ्गीकृत्य पूर्वं तदुक्तं,** तत्प्रजापतेर्मृषावादित्वप्रसङ्गदूषणेन निराकृतमिति शेषः ।

**इदानीमेतमित्यस्य परमात्मपरामर्शकत्वाभ्युपगमेनैव** तन्मध्ये छायापुरुषवत् जीवस्यापि प्रतिपादनाभ्युपगमान्न प्रागुक्तदूषणप्रसक्तिरित्यर्थः । एवमपि
P. 306-5 दहरो जीव एवेति न निर्धारणमिति शङ्कते—**नन्विति । अतीतानन्तरसूत्रेति ।** 'इतरपरामर्शा'दिति सूत्रेत्यर्थः । उपक्रमगतप्रतिज्ञाविरोधात् न जीवप्रतिपादनं संभवतीति शङ्कते—**नन्विति ।**

किं जीवप्रतिपादनस्य प्रयोजनं पृच्छसि ? किं वा प्रतिज्ञाविरोध इति नाद्य इत्याह—**सूक्ष्म इति । चतुर्थे पर्याये वक्ष्यमाणे परमात्मनि धीनिवेशायेति श्लोकपदानामन्वयः ।** न द्वितीय इत्याह—**अत एवेति ।** अभेदवादी त(दिन)मेकदेशिनं प्रति शङ्कते—**नन्विति ।** ततश्च जीव एवोपक्रमगतः पारमार्थिकरूपेण व्याख्यास्यामीत्युक्त इति, **आविर्भूतस्वरूपस्त्वित्यनेनैव** परिहृता शङ्केति भावः । औपाधिकस्य नोपक्रमस्थत्वं संभवतीति परिहरति—**अत आहेति ।**

जीवानुवादेन ब्रह्मभावबोधनेऽपि जीनिवेशसिद्धेः अश्रुतोपास्तिपरत्वक-
P. 307-1 ल्पनायामदृष्टार्थत्वं स्यादिति परिहारतात्पर्यमाह—**दृष्ट इति ।** मतद्वयेऽपि जीवब्रह्मभेदाभ्युपगमाविशेषात् कथं मतभेद इत्यत आह—**अस्यं चेति । टीकायां—तिसृष्ववस्थास्विति ।** यद्यपि दहरवाक्यशेषे 'य एष संप्रसाद' इति सुषुप्त्यवस्थैव श्रूयते । तथापि **जागरितव्यवहार इत्यादिभाष्येण** जाग्रत्स्वप्नयोरपि प्रदर्शितत्वेन श्रुतेरुपलक्षणार्थत्वमाश्रित्य, **तिसृष्वित्युक्तम् ।**

P. 307-7 'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशय' इति श्रुतिं व्याचष्टे—**स वा अयमिति ।** 'तं चेद्ब्रूयुः' इत्यादिश्रुतिं व्याचष्टे—**तमाचार्यमिति ।** 'तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाती'ति श्रुतिं व्याचष्टे—**तद्यत्रेति ।**

---

१. कल्पतरौ 'औपाधिको जीवः' इत्यस्य तात्त्विकोपाध्यवच्छिन्न इत्यर्थः । अन्यथा सिद्धान्तादविशेषप्रसंगात् । एवमेव परिमलम् ।

एतच्छब्दार्थं दर्शयन् क्रियाविशेषणत्वं स्पष्टयति—एतत्स्वप्नं सुप्त इति। स्वप्नं स्वापं यथा भवति तथा सुप्त इत्यर्थः। अभेदेऽपि क्रियाविशेषणतया कर्मता पाकं पचतीतिवदिति भावः। P. 308-1

॥ इति दहराधिकरणम् ॥

---

## ॥ अथ अनुकृत्यधिकरणम् ॥

### सू०॥ अनुकृतेस्तस्य च ॥ २२ ॥

### सू०॥ अपि च स्मर्यते ॥ २३ ॥

साधारण्यादिति। सति सप्तम्यां 'यस्य च भावेन भावलक्षण'मिति सूत्रविहितायामुपपदविभक्तित्वकृतं दौर्बल्यं, विषयसप्तम्या 'स्वसप्तम्यधिकरणे चे'ति सूत्रविहितायाः कारकविमक्तित्वेऽपि, प्रकृतेर्णिजर्थाध्याहारसापेक्षत्वकृतं दौर्बल्यमिति, साधारण्यमित्यर्थः। जीवतानिरासीति। चिण्णन्तश्शब्दः। एतदुक्तं भवतीत्युपक्रम्य, एतं त्वेव त इति पुनः पुनस्तमेव व्याख्येयत्वेनाकृष्येत्यादिना, यत्परं ब्रह्म तद्रूपतयैनं जीवं व्याचष्टे, न जैवेन रूपेणेत्यन्तेन भाष्येण जीवता निरस्तेत्यर्थः। तदसाध्विति। एतच्छब्दस्य वक्ष्यमाणपरामर्शित्वाभ्युपगमेन चतुर्थपर्यायस्य ब्रह्मपरत्वं, तत्पूर्वसन्दर्भस्य दहरजीवपरत्वमित्यापत्तेरिति भावः। P. 308-4

अनेकत्र स्वबुध्यनुरोधिणिजध्याहारापेक्षया, व्याकरणशिक्षितसतिसप्तम्याश्रयणमेव युक्तमिति, पूर्वपक्षाभिप्रायमाह—तत्रेतीति। तस्मादित्यवधिपञ्चमीति, भ्रमं वारयन् व्याचष्टे—तस्मात्तेज इति। तदभिभावकत्वादिति। तदीयस्पष्टप्रकाशविघटकत्वादित्यर्थः। तच्च सूर्येऽपीति न दृष्टान्ते साधनवैकल्यम्। भासयितुमीशते इत्यनेन सूचितं व्यभिचारपरिहारं व्यनक्ति—भासकत्वे सतीति। तेजोभासकत्वे सतीत्यर्थः। तेन विषयतया स्वभासके कुड्यादौ न व्यभिचारः। विमतं न तेजः, इन्द्रियान्यत्वे सति, तेजः प्रकाशकत्वादिति शङ्कते—नन्विति। आगमबाधितमनुमानमित्याह—अस्येति। P. 309-1 P. 310-1

ननु तेजसस्तेजोऽन्तरप्रकाशकत्वमदृष्टमपि श्रुतिबलाच्चेत् कल्प्यते, तर्हि
P. 310-2 प्रकरणाविरोधाय ब्रह्मण्येव तत्कल्प्यतामित्यत आह—**अभिभवेति**। ब्रह्मणि द्वयं कल्प्यम्। अत्र त्वेकमिति वैषम्यमिति भावः। न चात्र धर्म्यपि कल्पनीय इति गौरवम्। अत्रिवृत्कृतस्य तेजसोऽपि क्लृप्तत्वादिति भावः। तेजोऽभिभावकत्वं ब्रह्मण्यबाधितत्वात् कल्पानार्हम्। सर्वज्ञत्वं तु तेजोधातौ न कल्पनार्हमित्याशयेन शङ्कते—**नन्विति**। निर्दिष्टपरामर्शीदंशब्दसमभिव्याहृतस्य सर्वशब्दस्यापि तन्मात्रपरत्वेन तावत्प्रकाशकत्वमेव श्रुत्यर्थो न तु सर्वज्ञत्वमिति परिहरति—**अत आहेति**।

श्रुत्या लिङ्गं बाध्यं इत्याशयेन शङ्कते—**नन्विति**। सर्वनाम्नः उक्त-
P. 310-4 वक्ष्यमाणसाधारण्ये लिङ्गाबाधाय, वक्ष्यमाणपरत्वमेवेत्याशयेनाह—**उपरिष्टादिति**। न च तस्य तेजस उत्तरत्राप्रतिपादनात् कथं वक्ष्यमाणत्वमिति वाच्यम्। श्रुतार्थापत्तिकल्प्योपासनाविध्यभिप्रायेण वक्ष्यमाणत्वकथनात्। तथा च टीकायामुक्तं **शब्दादुपास्यत्वेन गम्यत इति**। सर्वनाम्नः पूर्वोक्तपरामर्शित्वनियमाभावे दृष्टान्तयोपन्यस्तं **पाणिनिसूत्रद्वयं** व्याचष्टे—**रागवाचिन इति**।

**तृतीयासमर्थादिति**। तृतीयान्तसमर्थादित्यर्थः। **कषायेण**—रञ्जकद्रव्येण **रक्तः काषायः** उपगोर्देवदत्तस्यापत्यं **औपगव** इत्यर्थः। **तदनुभानसंभवादिति**। यद्यपि ब्रह्मभानव्यतिरेकेण न सूर्यादीनां भानमस्ति। तथा 'प्यग्निमनुदहत्ययःपिण्डः' 'शरीरमनुसञ्ज्वरे' दित्यादाविव तद्गतक्रियामादायैव तदनुकारव्यपदेशः संभवतीति भावः। **अनिश्चितत्वाच्च वेदे इति**। सर्वस्यापि तेजसः त्रिवृत्कृतत्वेन तच्छेषणे मानाभावादिति भावः।

P. 311-2 सहानवस्थानादिविरोधाभावात् व्याचष्टे—**अनपेक्षेति**। अपेक्षाभावद्वारकमित्यर्थः। **किं भान इति**। तेजो न तेजोऽन्तरापेक्षं तेजस्त्वादित्यत्रेत्यर्थः। **क्रमेण दूषयित्वेति**। **नन्वित्यादिना** दूषयित्वा, तच्छङ्कोत्तरत्वेन भाष्यमवतार्य समाधत्ते इत्यर्थः। तेजःस्वभानाय न भासमानतेजोऽन्तरापेक्षमिति विवक्षितत्वान्न दोष इति **न हीत्यादि**टीकाभिप्रायमाह—**भासमानेति**। **विरोधः**—भास्यभासकत्वविरोधः। **सोऽसिद्ध इति** टीकां
P. 311-7 व्याचष्टे—**ब्रह्मण इति**। क्रियाभेदकल्पनाप्रकारं दर्शयति—**एकैवेति** अवि-

शेषणे बाधकमाह—इन्द्रियेणेति । एवं च सत्यप्रसिद्धिरसिद्धैव स्यादिति भावः । P. 312-2

रूपेति । रूपं च रूपि च रूपैकार्थसमवायिनः संख्यादयश्चेत्यर्थः । तर्हि रूपमात्रप्रकाशक इति कथं टीकेत्याशङ्क्य रूपादिष्वेव संकोचे हेतुकथनपरं तद्वाक्यमित्याशयेनाह—अलौकिकेति । रूपादिषु पञ्चसु मध्य इत्यर्थः । इदंशब्दस्यापि प्रत्यक्षादिसन्निधापितजगन्मात्रवाचित्वेन, [ न ] तद्वशेनापि सर्वशब्दस्य संकोचो युक्त इति भावः । प्रत्ययाधस्तनेति । काषाय औपगव इत्यादिशब्दानुशासनार्थं प्रवृत्तः पाणिनिः कषायादिप्रकृत्यर्थमादौ पर्यालोच्य, तेन रक्तः पट इत्यर्थे प्रत्ययमनुशास्ति । ततश्च प्रत्ययानुशासनकाले प्रयुज्यमानस्य तेनेत्यादितच्छब्दस्य न प्रस्तुतंपरामर्शित्वविरोध इत्यर्थः ।

एवमिति । अनुकारे क्रियासाम्यमेव तन्त्रम् । क्वचि'द्दूराहं[1] गावोऽनुधावन्ती'त्यादौ स्वरूपसाम्यमपि संभवन्न त्याज्यमिति, तथा स्वीकृतमिति भावः । ननु णिजध्याहारं परिहरता टीकाकृता प्रकाशकतयेति पदमेव कथमध्याहृतमित्यत आह—तत्रेतीति । अपि तु व्याख्येति । अर्थलभ्यस्य कथनमित्यर्थः । 'अगृह्यो न हि गृह्यते' इति टीकास्थश्रुत्यर्थमाह—अगृह्य इतीति । सूक्ष्माणां सूर्यादीनामप्यतिसूक्ष्मब्रह्मप्रकाशनासामर्थ्ये स्थूलस्य वह्नेः का प्रसक्तिरिति, कैमुतिकन्यायसूचनार्थं कुत इत्युक्तमित्याशयेनाह—अस्मद्गोचर इति । P. 313-1

॥ इति अनुकृत्यधिकरणम् ॥

---

१. 'गावो हि सूकरं चतुष्पात्त्वेनानुकुर्वन्ति । वत्सबुद्ध्या वा अनुधावन्ति । न तु वायसम् । इति सोमनाथः ।

## ॥ अथ प्रमिताधिकरणम् ॥

**सू०॥ शब्दादेव प्रमितः ॥ २४ ॥**

**सू० ॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥**

नन्वङ्गुष्ठमात्रशब्दस्य अङ्गुष्ठपरिमाणवन्मात्रवाचकत्वेऽपि, जीववाचकत्वाभावात् कथं जीवश्रुतित्वमित्याशङ्क्याह—**परिमाणेति** । अङ्गुष्ठः प्रमाणमस्येति विग्रहवाक्यान्तर्गतेन सर्वनाम्ना सन्निहितपुरुषशब्दाभिधेयस्य श्रुतपरिमाणान्वययोग्यस्य जीवस्यैव परामर्शादित्यर्थः । P. 314-2

नन्वङ्गुष्ठमात्रत्वं जीवेऽपि न मुख्यम् । कथञ्चिदुपपादनं तु ब्रह्मण्यपि स्यादित्याशङ्क्य, परिच्छिन्नस्य जीवस्यैव हृदयादिपरिच्छेदकान्तरप्रयुक्तमपि परिच्छिन्नत्वं स्वारसिकं नापरिच्छिन्नस्य ब्रह्मण इत्याह—**यद्यत्रेति** । नन्वेवमपि प्रथमश्रुतस्य मुख्यत्वं न्याय्यमित्यत आह—**सा चेति** । प्रथमश्रुतमपि पदान्तरसापेक्षत्वेन दुर्बलमिति भावः । दृष्टान्तसंगतिमाह—**प्रागिति** । **शङ्कानिरास इति** । ब्रह्मणो दहरत्ववत् अङ्गुष्ठमात्रत्वमपि स्यादिति शङ्कानिरास इत्यर्थः ।

परमात्मनो दहरत्वे समर्थनीये हृत्पुण्डरीकस्थानत्वसमर्थनं प्रकृतानुपयुक्तमित्यतो व्याचष्टे—**परमात्मन इति** । तर्हि परमात्मनो हृत्पुण्डरीकोपाधिकं दहरत्वमिव, तदुपाधिकमङ्गुष्ठमात्रत्वमपि स्यादित्यत आह—**उपाधिमिति** । उपाधिसंकीर्तनपूर्वकं यत्राल्पत्वमुच्यते, तत्र तदौपाधिकं वस्तुतोऽनन्तस्यैवेति प्रथममेव निश्चीयते । अन्यथा, उपाधिकीर्तनवैफल्यात् । यत्रत्वाहत्यैव तदुच्यते तत् स्वाभाविकमेवेति स्वरसतो गम्यते । तादृशं चेद्वस्तु, नोपलभ्येत, तदा, प्रचुरप्रसिद्ध्यनुरोधेन निर्णीयत इत्यङ्गुष्ठमात्रत्वं जीवस्यैवेति निश्चीयत इत्यर्थः । P. 314-7

**स्वस्य च भवितुरिति टीकां** व्याचष्टे—**स्वीय इति** । **न च जीवेति टीकां** व्याचष्टे—**जीवपरयोरिति** । **उदासीने स्वरूप इति** । औपाधिकस्य जीवस्य निरुपाधिकस्वरूपनिष्ठत्वादित्यर्थः । **सकनिष्ठिक इति** । प्रसा-

---

१. 'अपि च युक्तं' इत्यादि टीकावाक्ये 'दहरत्वे कारणं' इत्यध्याहार्यमिति कल्पतरुवाक्यात् ज्ञायते इति परिमले उक्तम् ।

रितकनिष्ठिकासहित इत्यर्थः । **प्रत्यक्षं जीवरूपमिति** टीकया एतच्छब्दस्य गतिरुक्ता । स्वयं तच्छब्दस्य गतिमाह—**येयमिति** । **प्रकृतत्वात्** । तस्यैव चाङ्गुष्ठमन्त्रोपक्रमे कीर्तितत्वादिति भावः ।

एतन्निराकरणपरत्वेन **प्रश्नोत्तरत्वादिति** टीकामवतारयति—**यदवादीति** । ननु 'येयं प्रेत' इति जीवोऽपि प्रस्तुतः । नेत्याह—**तत्सापेक्षत्वादिति** । जीवस्वरूपप्रश्नस्य परमात्मप्रश्नतापादनेनैव 'अन्यत्र धर्मा'दिति प्रश्नः प्रवृत्तः । अन्यथा, जीवप्रश्नस्य तृतीयवरत्वोक्त्या, ततोऽधिकवराभावेन ब्रह्मप्रश्नस्याकस्मिकत्वापत्तेः । ततश्च तदुत्तरस्यास्य मन्त्रस्य तत्सापेक्षत्वमित्यर्थः । P. 315-3

ननु सिद्धान्तेऽप्यङ्गुष्ठमात्रस्य जीवत्वे पूर्वपक्षसिद्धान्तयोः को भेद इत्याशङ्क्य, वाक्यस्य तत्परत्वातत्परत्वाभ्यां भेद इत्याशयेनाह—**उपहितेति** । (वि)**अफलमिति** । **हृद्यपेक्षयेति**—सूत्रभाष्य--- इत्यर्थः । तर्हि, कथं भाष्ये (ब्रह्म)परमात्मशब्दः? अत आह—**जीवभावेति** । **कस्यचिन्मुमुक्षोरिति** । मोक्षेच्छामात्रवतो गृहस्थस्येत्यर्थः । **उक्तदिशा**[1] वेदार्थज्ञानाद्यभावेनेत्यर्थः । **तेषामेवेति** । ततश्चाग्निविद्योपसंहारसमर्थानां त्रैवर्णिकानामेवाधिकार इति भावः । भाष्यव्याख्याने बीजमाह—**सिद्धान्तिनापीति** । अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा ' इति श्रुतिं व्याचष्टे—**धैर्येणेति** । P. 317-2

॥ इति प्रमिताधिकरणम् ॥

---

## ॥ अथ देवताधिकरणम् ॥

**सू०॥ तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥**

**सू०॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥**

**सू०॥ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥२८॥**

**सू० अत एव च नित्यत्वम् ॥ २९ ॥**

---

१. 'उक्तदिशा' इति कल्पतरौ प्रतीको नोपलभ्यते । वेदार्थज्ञानादिसामग्र्यभावेति दृश्यते । तत्स्थाने उक्तदिशा इति आभोगरीत्या स्यात् ।

सू०॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्
स्मृतेश्च ॥ ३० ॥

सू०॥ मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥

सू०॥ ज्योतिषि भावाच्च ॥ ॥ ३२ ॥

सू०॥ भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

विचारप्रयोजनमाक्षिपति—**अधिकारीति**। एतदधिकरणन्यायाभावेऽपि तेषामर्थित्वादिभिरधिकारज्ञानेन प्रवृत्तिसंभवादित्यर्थः। मनुष्याणामेव देवतात्वप्राप्तितदवस्थोदितविद्याजन्यमोक्षफलकोपासनासु प्रवृत्त्यर्था चिन्तेति परिहरति—**तथापीति**। वेदार्थज्ञानरूपाया विद्वत्ताया आगमाधीनत्वादाह—P. 318-1 **आगमादेरिति**। आदिपदेन तदर्थनिर्णायकन्यायकलापो गृह्यते। **गुरुमुखादिति**। गुरुमुखादगृहीतस्य वेदस्य निष्फलत्वस्मरणादिति भावः। अध्ययनपूर्वकत्वमात्रमेव तन्त्रम्। तच्च देवादीनामप्यस्तीति परिहरति—**अत आहेति**।

**स्मर्यमाण इति**। उपनयनानन्तरमेव कर्माधिकार इति नियमस्यापि त्रैवर्णिकविषयत्वाद्देवादीनां तदभावेऽपि न विद्याधिकारविरोध इति भावः। विग्रहवद्देवतासत्त्वे अग्न्यादिशब्दार्थस्य वह्न्यादेरेव देवतात्वं स्यात्। तदसत्त्वे तु, कथञ्चित्कल्प्यं देवतात्वं शब्दोपहिते अर्थे अर्थोपहिते वा शब्दे कल्प्यत इत्युक्तम्—**टीकायां**; तर्ह्यस्मिन्नपि पक्षे, एकस्यानेकत्र सन्निधानप्रयुक्तो विरोधः कुतो न भवेदित्याशङ्क्य, निराकारायास्तस्या उद्देश्यत्वमात्रेणैव क्रत्वङ्गभावान्न सन्निधानप्रसक्तिरित्याशयेन परिहरति—**चतुर्थ्यन्तेति**।

P. 318-2 माभूदित्यादिटीकामपेक्षितं पूरयन् व्याचष्टे—**स्वर्गादीति**। **यूका** वस्त्रस्थो जन्तुविशेषः। इच्छामात्रनिर्माणत्वं परं प्रत्यापाद्य शङ्कत इत्याह—P. 319-1 **नन्विति**। **न देवादीनामिति**। इन्द्रादीनां यदा यदा क्रतुदेशजिगमिषा तदा

---

१. अत्र भाष्ये उदाहृतं 'न देवानां देवतान्तराभावात्' 'न ऋषीणामार्षेयान्तराभावात्' इति ( जै-६-१-५ ) जैमिनिसूत्रद्वयं जैमिनीयसूत्रपाठे नोपलभ्यते। शावरभाष्ये तु दृश्यते। तस्मात् शाबरं भाष्यवाक्यं स्यात्। यद्वा सूत्रपाठे प्रमादतः परित्यक्तं स्यादिति ज्ञायते।

तदा, देहारंभकसमवधाने मानाभावादित्यर्थः। **स चायुक्त इति।** उपादानेन विना कार्यारंभस्य लोकविरुद्धत्वादिति भावः। भूतानामुपादानत्वसंभवेऽपि, कायनिर्माणेच्छावतामिन्द्रादीनां तदधिष्ठातृत्वासंभवात् न कायारंभकत्वमिति शङ्कते—**भूतानामिति।** P. 319-1

किं भूतानामस्वाधीनत्वेन तदधिष्ठातृत्वासंभवः? उत स्वाधीनत्वेऽपि दूरस्थेषु तेषु कायिकव्यापारासंभवात्? अथवा, तज्ज्ञानासंभवात्? इति विकल्प्य प्रथमद्वितीयौ कल्पौ **भूतवशिनां हीति टीकया, दृष्टा चेति टीकया च,** निराकृत्य, तृतीये, किं व्यवधानमात्रमदर्शने तन्त्रम्? किं वा अस्वच्छद्रव्यव्यवधानम्? अथवा अस्मदादिदृष्टान्तेन व्यवहितपदार्थज्ञानाभावानुमानमिति, विकल्प्य, प्रथममाशङ्क्य, निराकर्तुं **न च विषविद्येत्यादिटीका।** तदभिप्रायमाह—**पर्वतादीति।**

**टीकायां भौमशब्देन** घटादिकं गृह्यते। द्वितीयं शङ्कते—**नन्विति।** कर्मोपासनासमर्जितः सिद्धिविशेषः **प्रभावः।** तृतीयमागमबाधेन निराकृत्य, तर्हि क्रतुदेशे इन्द्रादय उपलभ्येरन्नित्याशङ्कां **निराकर्तुममन्तर्धानं चेति टीका।** तत्र कर्मोपासनासमर्जितमैश्वर्यं नियमनसामर्थ्यं प्रभाव इत्याशयेनाह **प्रभवतामीश्वराणामिति।** P. 319-5

ननु श्रुतौ प्रश्ने निविदिति शब्दाभावान्निविदि कति देवा इति उपक्रम्येति कथं टीकेत्यत आह—**कति देवा इति। एवकारदर्शनादिति। एतयैव निविदेत्येवकारस्य** यस्यां निविदि देवतासंख्या पृष्टा तयैवेत्येवंपरत्वादित्यर्थः। **श्रुतौ त्रीति सहस्रेति च** पदयोरर्थमाह—**त्रीणीति। निविच्छब्दः पदविशेषः संख्यावाचक इत्युक्तम् टीकायाम्।** तद्व्युत्पत्त्या साधयति-**निवेद्यत इति।** वस्वादिस्वरूपप्रश्नोत्तरश्रुत्यर्थं दर्शयितुं **तत्राग्निश्चेत्यादिटीका।** तत्र P. 319-7

---

१. टीकायां शनैश्चरसमभिव्याहृतः भौमः अङ्गारकग्रहः इत्येव वक्तुं शक्यम्। तथापि तस्मिन्नर्थे स्थित एव भौमः घटादिः काचपिहितः, शनैश्चरादिः अभ्रपटलेन स्वच्छमेघसमूहेन पिहितः तस्यापि दर्शनेन इत्यर्थमभिप्रेत्य आभोगे व्याख्यातम्। टीकायां अभ्रपटलमपि काचवत् स्वच्छं वस्तुतोऽतिरोधायकं, न मेघसमूहः काचाभ्रपटलपिहितमित्यस्य विशेष्यस्य स्फुटत्वेन ज्ञानसंभवादनुपादानम् विप्रकृष्टस्याङ्गारकशनैश्चरादेरपिदर्शनात् इत्येव टीकार्थ इति भाति।

तद्वृत्तित्वादित्यस्य प्रयोजनमाह—**इन्द्रियेष्विति**। इन्द्रियाणां प्राणनिष्ठत्वाभा-
P. 320-1 वात् व्याचष्टे—**तस्मादिति**।

इन्द्रप्रजापत्योर्द्विरूपत्वेन व्याख्याने हेतुमाह—**श्रुतौ त्रयस्त्रिंशत इति**। पशूनां यज्ञरूपत्वमुपपादयति—**अरूपमिति**। **द्रव्यतयेति**। स्वयं द्रव्यतयेत्यर्थः। **यदस्मिन् सतीत्यादिटीकया कथमेक एवाध्यर्ध** इति प्रश्नस्य कथमुत्तरं
P. 320-8 दत्तमित्यत आह—**अध्यर्धशब्द इति**। **द्वितीयामिति**। उद्देशनक्रियाद्वारा अनेकत्राङ्गभावप्रतिपत्तिरित्येवं **विविनक्तीत्यर्थः**।

ननु गुर्वाद्युद्देशेन कृतस्य नमस्कारस्यादृष्टद्वारैव फलजनकत्वाद्युक्तं स्वस्थान-स्थितस्यापि गुर्वादेः नमस्कारभाक्त्वम्। कर्मणस्तु देवताप्रीतिद्वारा फलजन-कत्वात् कथमसन्निहितायाः कर्मफलसंबन्ध इत्याशङ्क्य, मामुद्दिश्य हविस्त्यक्तवा-नयं यजमान इत्येवमध्यवसायस्यैव देवताप्रीतितया, तासामप्रतिहतज्ञानाना-मस्ति नानादेशस्थितयजमानकृतकर्मसंबन्धिहविस्स्वीकरणसामर्थ्यमित्याशयेनाह—**टीकायां—अस्ति हि तस्या इति**।

**अत एवेति**। पूर्वापरामर्शासंभवादेवेत्यर्थः। उपाधेरपि यत्किञ्चिद्घटक-पदार्थगतजात्यवच्छेदेनैवानुगतीकर्तव्यत्वात्, घटकपदार्थेष्वप्यलौकिकेषु प्रत्य-भिज्ञाराहित्येन जात्यभावे तद्घटितैकोपाध्यभाव इति भावः। **वसुत्वादिजाति-**
P. 321-1 **वाचकादिति टीका**भिप्रायमाह—**मन्त्रादीति**। इन्द्रादिशरीराणामेकाकारत्वे जातिपक्षमुपन्यस्य विलक्षणत्वे जातिघटितैकोपाधिपक्षमाह—**त्रिदिवत्वादीति**। **(ए)तच्छब्दार्थ**माह—**आक्षेपेति**।

अप्रामाण्ये प्रमाणान्तरापेक्षत्वमात्रस्यैव तन्त्रत्वात् वाक्यत्वादिति स्वरूप-
P. 322-1 कीर्तनमित्याशयेनाह—**प्रमाणान्तरेति**। शब्दप्रभवत्वप्रसङ्गात् तत्स्वरूपनि-र्णयाय प्रश्न इत्येव किमित्ति भाष्यं न व्याख्यायत इत्यत आह—**शब्दं प्रतीति**। **नित्यशब्दादिति**। वर्णप्रभवत्वनिराकरणपूर्वकं स्फोटप्रभवत्वसमर्थनेन सूत्रव्या-ख्यानात् स्फोटात्मकशब्द इति स्वरूपकथनमात्रपरत्वे तद्वैयर्थ्यादिति भावः। तर्हि स्फोटपक्षस्य कथमुपयोग इत्यत आह—**स्फोटपक्षस्त्विति**।

अपूर्वस्य विध्येकगम्यत्वात् कथं शब्दस्थले, तदङ्गीकार इत्यतो व्याचष्टे—
P. 323-1 **यथेति**। **अन्यथानुपपत्त्या सिद्धिरवगतिर्यस्येत्यर्थः**। अनुक्तोपालंभतां परि-

हर्तुं विकल्पोत्तरत्वेन व्याचष्टे—**अर्थधीति**। अंगतोऽविदित इत्यनेनैवा(गृहीत) विदितसङ्गतित्वलाभात् पुनस्तद्विशेषणं व्यर्थमित्यत आह—**स्वरूपेणेति**। P. 323-4 अविदितसङ्गतिरिति नार्थधीहेतुरित्यनेन सहितो व्यतिरेकमुखेन हेतुप्रयोजनक इत्यर्थः। तद्धेतुकमनुमानं दर्शयति—**शब्द इति**। **सहाङ्गेनेति**। यावदङ्गेनेत्यर्थः। तेन योग्यतारूपमङ्गमादाय न सिद्धसाधनम्। **संबन्धग्रहमिति**। बोध्यबोधकत्वसंबन्धग्रहमित्यर्थः। तेन, 'संयुक्तौ घटपटा'विति प्रत्यक्षे, विशेषणज्ञानविधया संबन्धग्रहापेक्षणेऽपि न व्यभिचारः। **वैधर्म्योपमा** P. 323-6 व्यतिरेकदृष्टान्तः। गृहीतस्य चेत्यत्र बधिरस्यान्वयायोगादध्याहरति—**अबधिरेणेति**।

किमर्थधियः प्रागेव (सङ्गति) अपूर्वाख्यसंस्कारग्रहः? अनन्तरं वा? आद्यं निराकर्तुं तथा चेति टीका। तदभिप्रायमाह—**अपूर्वाख्येति**। द्वितीयं शङ्कते—**अथेति**। दृष्टान्तं विघटयति—**आग्नेयादीनां त्विति**। **वर्णानां त्विति**। (सङ्गति) संस्कारग्रहात्प्रागर्थधीहेतुत्वज्ञापकं प्रमाणं नास्तीति न तदन्यथानुपपत्त्या (सङ्गति) संस्कारग्रह इत्यर्थः। भावनाभिधानस्त्विति टीकां व्याचष्टे—**भावनाख्यस्त्विति**। न चेत्यादेरनुक्तोपालंभतां परिहर्तुमाह—**यदि पुनरिति**। P. 323-10

किं ज्ञातस्स्फोटोऽर्थधीहेतुरुताज्ञात इति विकल्प्य नाद्य इत्युक्तम्—टीकायां—तस्यानुभवेत्यादिना। तत्रोक्तप्रायत्वं विशदयति—**अपूर्वेति**। द्वितीयं शङ्कते—**सत्त्वयेति**। एकत्वे प्रस्तुते साहित्यकथनमसङ्गतमित्यत आह—**साहित्यमेकत्वमिति**। तं च ध्वनय इति टीकां शङ्कोत्तरत्वेन व्याख्यातुं तच्छङ्काप्रसञ्जकाशङ्कापरिहारौ दर्शयति—**नन्वित्यादिना**। **न शब्दान्तरेति**। अन्यथा वर्णवैयर्थ्यादिति भावः।

टीकायां ध्वनिशब्दस्तदभिव्यङ्ग्यवर्णपरः, उत्तरत्र भाष्ये वर्णानां स्फोटव्यञ्जकत्वपक्षे गरीयसी कल्पनेति वक्ष्यमाणत्वादित्यभिप्रेत्याह—**समुदितेति**। **संस्कृतपरिपाकः**[1]—संस्कारपरिपाकः। दृढसंस्कार इत्यर्थः। P. 324-4 **चरमचेतसीति**। चरमप्रत्यय इत्यर्थः। **ध्वनिभिरिति**। वर्णैरित्यर्थः।

---

१. 'संस्कारकृतपरिपाक' इति कल्पतरौ पाठो दृश्यते।

पूर्वेति । पूर्वपूर्वार्थव्यक्तिजनितसंस्कारसहितं चरमपरिणामरूपं चेतः P. 324-9 पदार्थस्य तत्वं व्यनक्तित्वत्यर्थः ।

प्रत्यक्षशाब्दयोर्वैषम्ये को हेतुरित्यतस्तदुपपादयति—अभिहितश्चेदिति । संबन्धनिश्चयस्यैकरूपत्वेन सन्देहनिश्चयोभयजनकत्वायोगादिति भावः । सन्निकर्षस्य तु भूयस्त्वाभूयस्त्वाभ्यां तदुभयजनकत्वमविरुद्धमित्याशयेनाह—प्रत्यक्षे त्विति ।

प्रमाणसिद्धस्य स्फोटस्य कथमेवं हीत्यादिटीकायां निराकरणमित्यत आह—स्फोट इति । ननु वर्णवाचकत्वासंभवो न स्फोटवादिना प्रमाणत्वेनोपन्यस्तः । अतः कथं विकल्प इत्यत आह—वर्णेष्विति । ततश्च टीकायामसंभवोऽनुपपत्तिरिति भावः । उत प्रत्यक्षमिति । तथा च स चेति टीकायां यदीत्यनुषज्यत इति भावः । द्विधा चेति टीकायामवाचकत्वं वाचकत्वानुपपत्तिरित्याशयेनाह—वर्णेष्विति । वर्णानां व्यस्तसमस्तप्रकारयोः P. 325-1 द्वयोरपि संभवात् कथं तदभाव इत्यत आह—व्यस्तानामिति ।

ज्वालादिप्रत्यभिज्ञाया बाधदर्शनात् भाष्यायोगमाशङ्क्याह—प्रत्यभिज्ञानस्येति[1] । सामान्यतो दृष्टस्येति । 'सोऽयं गकार' इति प्रत्यभिज्ञा जातिविषयिणी प्रत्यभिज्ञात्वात् 'सेयं दीपज्वाले'ति प्रत्यभिज्ञावत् इति सामान्यतो दृष्टस्येत्यर्थः । अतिप्रसङ्गादिति । सोऽयं घट इत्यादिप्रत्यभिज्ञानमपि तथात्वापत्त्या घटाद्यैक्यमपि न सिद्ध्येदिति भावः । अभिधायेति । तत्र क्वचिदित्यादिटीकयेति भावः ।

प्रथमं निराकर्तुं न चेदमिति टीकेत्याह—वर्णभेदेति । कल्पान्तरनिराकरणपरतां स्फोरयन्नन्वयमाह—इदमिति । शङ्काया एवेति । शङ्कागतप्रतिज्ञाया इत्यर्थः । औपाधिकभेदवती या एका व्यक्तिः, तद्विषय इत्यर्थः । तत्रेत्यादिटीकायामपिशब्दः किञ्चार्थक इत्याशयेनाह—व्यक्तिभेदेति । श्लोकगतं तेनेतिपदं व्याख्याय यदित्यादिकं व्याचष्टे—यदिति । योग्यताबललभ्यविशेष्यं दर्शयति—भेदज्ञानमित्यर्थ इति । गवादिव्यक्तिभेदस्य स्पष्टं भासमानत्वान्न गोत्वाद्यवच्छेद इति वैषम्येण परिहरति—आशङ्क्याहेति ।

---

१. ज्वालाप्रत्यभिज्ञास्थले बाधोपलंभेऽपि प्रकृते तदभावादित्यर्थः । न तु सर्वत्र प्रत्यभिज्ञाबाधो नास्तीति तदर्थः । इति बोध्यम् । अत एव तत्रेति कल्पतरावुक्तिः ।

एकत्वप्रतीत्यन्यथासिद्धेः प्रागेव निरस्तत्वान्न चेत्यादिटीकावैयर्थ्यमाशङ्क्य, मुखभेदान्न दोष इत्याशयेनाह—**दशवारमिति** । पूर्वं प्रत्यभिज्ञाबललब्धस्यैक्यस्यान्यथासिद्धिः परिहृता । इदानीं त्वावृत्तिप्रतीतिसिद्धस्येति भेद इति भावः । **टीकायां सोऽस्ताडमित्येतद**तितारत्वलक्षणार्थमुक्तमित्याशयेनाह—**साविष्कारमिति** । P. 326-3

**न पूर्वहेत्वर्थमिति** । न पूर्वप्रस्तुते हेतुकथनार्थमित्यर्थः। **तद्धेतुत्वे चेति** । तत्र हेतुकथनार्थत्वे चेत्यर्थः । **एकत्वस्येति** । अकारादिवर्णैकत्वस्येत्यर्थः । **प्रकृतासङ्गतेरिति** । स्फोटवादिना तदनङ्गीकारेण तन्निषेधायोगादिति भावः । **उक्तमपीति** । 'ननु वर्णा अपी'त्यादिभाष्येणोक्तमप्यभेदबाधकमित्यर्थः । वर्णव्यञ्जकत्वयोग्यान् वायून् दर्शयन्नाह—**कण्ठादीति** । P. 326-8

**ग्रन्थाद्बहिरेवेति** । तावदिति शेषः । **न चेत्यादिटीकया** अस्मिन्नर्थे भाष्ययोजनात् । तदेतदाह—**अनेनेति** । अत एव परिहारान्तरसूचकं अथवेति भाष्यमिति भावः । **आवृत्त्येति** । 'कं संजघान कृष्णः' इत्यादिवदेकस्यैवाशङ्कापरिहारोभयपरत्वमिति भावः । ततश्च भाष्ये एक एव सन्नित्यस्य शङ्काग्रन्थत्वे, **एकश्चेदित्यर्थकत्वं**, परिहारग्रन्थत्वे, **प्रत्यभिज्ञया एकत्वेन सिद्धः इत्येवमर्थकत्वमिति** भावः ।

उपक्रमे उदात्तादीनां वायुधर्मत्वमुक्तम् । तत्कथमुपसंहारे **व्यञ्जकध्वनीति** टीकेत्यत आह—**ध्वनयन्तीति** । **टीकायां पूर्वपक्षमिति** आवृत्त्या पूर्व- P. 326-12

---

१. अत्र कल्पतरौ 'केचिद्व्याख्यातारः' इत्यनूद्य दूषितः पक्षः प्रकटार्थविवरणकारोक्त इति बोध्यम् ॥

२. तावदित्यस्य प्रथमत इत्यर्थः। तावदिति शेषपूरणाभावे ग्रन्थात् बहिरेव दूषणं क्रियते । ग्रन्थे (भाष्ये) दूषणं न कृतमिति स्फुरेत् । भाष्येऽपि च दूषितम् । न चेत्यादि टीकया दूषणरूपे अस्मिन्नर्थे भाष्यं योजितमिति कल्पतरौ 'अनेन' इत्यादिग्रन्थेन प्रतिपादितम् । तस्मात् प्रथमतः ग्रन्थात् बहिः दूषयति । पश्चात् भाष्ययोजनया दूषयिष्यतीत्यर्थः । वस्तुतः तावदिति शेषपूरणमनावश्यकमत्र । अस्मिन्नेव कल्पतरुवाक्ये 'उपक्रमे उक्तं' इति वाक्यारंभे वर्तते । उपक्रमे इत्यस्य प्रथमत इत्यर्थः । उक्तमिति मतमित्यत्रान्वेति । उक्तं मतं उपक्रमे (प्रथमतः) ग्रन्थात् बहिरेव दूषयतीति कल्पतरावेव उक्तत्वात् आभोगकारीयं शेषपूरणमनावश्यकमेव कल्पतरोरयमर्थः अर्थान्तरस्यायोगात् । उक्तमिति सबिन्दुकतया शोधनीयम् ।

P. 327-1 **भाष्योक्तं** परिहारप्रकारमित्यर्थः । तदेवाह **टीकायां-भवेतामिति**। **भाष्य इति** । **यो दूरादित्यादिभाष्य** इत्यर्थः ।

ननु प्रत्यभिज्ञानाभावोऽसिद्धः । 'स एवायं ध्वनि'रिति प्रतीतेः । न च सादृश्यविषयकत्वम् । वर्णप्रत्यभिज्ञाया अपि तथात्वापत्तेरित्याशङ्क्य, नेयं-ध्वनिव्यक्तिप्रत्यभिज्ञा । उदात्तादिविरुद्धधर्मसमावेशेन ध्वनीनां भेदात् । न च वर्णधर्माणां तत्रारोपः । वीणावेणुमृदङ्गादिध्वनिस्थले तादृशवर्णाभावात् वर्ण-स्थले च सर्वत्र ध्वनिनियमात् । ततश्च परिमितानां वर्णानामेव नित्यत्वाभ्युपग-मात् तत्प्रत्यभिज्ञा व्यक्तिविषयिणी । न ध्वनिप्रत्यभिज्ञेत्याशयेनाह—**तस्य-ध्वनेरिति** ।

एवं च सतीत्यादिभाष्यस्य दूषणाङ्गीकारवादत्वं **टीकायामाग्रह-**
P. 327-2 **पदेन** सूचितं प्रकटयति—**एवं चेति** । 'गौरित्येकं पद 'मिति, बुद्धिर्वर्णरूषितै-वानुभूयते । न तदतिरिक्तवस्तुरूषितेति, प्रागुक्तेऽर्थे, **पदतत्वमित्यादिशङ्काया** अनुपयोगमाशङ्क्य, किं प्रतीतेर्नानात्वविषयकत्वांशे विरोधः ? उत सभागत्वांशे ? अथवा, वर्णरूषणांशे इति विकल्प्य, सर्वमेतदस्मदभिमतस्फोटविषयत्वेऽपि
P. 328-2 संभवतीति, न विरोध इत्याशयेनाह—**पदबुद्धाविति** । **विभागारोप इति** । नानात्वारोप इत्यर्थः ।

**अन्योन्यविसदृशानां तत्तत्पदानां स्फोटानां व्यञ्जका** इत्येवं व्याचष्टे—**ये हीति** । **तुल्यस्थानेति** । स्थानं ताल्वादि, **करणं** संवृतविवृता-दिप्रयत्नः । फलितमाह—**भिन्नपदेति** । **भेदभ्रम इति** । इदमुपलक्षणम् । तैरेव ध्वनिभिः सावयवत्वारोपोऽपीत्यर्थः । **एकविधेति** । अव्यवधानेनेति शेषः । अ इति दशवारसमुच्चारणेऽपि पदभेदाप्रतीतेरिति भावः । मिलितानां ध्वनीनां व्यञ्जकत्वमुक्तमिति, मत्वा, शङ्कते—**नन्विति** ।

**कियतां केषां** चिदपीत्यर्थः । आशुतरविनाशिनां ध्वनीनां मेलनासंभ-
P. 328-3 वेन प्रत्येकमेव व्यञ्जकत्वमित्याशयेनाह—**गकारादीनामिति** । **व्यङ्ग्यभागे-ष्विति** । गकारौकारविसर्जनीयव्यङ्ग्यत्वेन कल्पितेषु गौरिति पदस्फोटभागेष्वि-त्यर्थः । नानात्वमेवौपाधिकं कुतो न भवेदित्याशङ्क्योपाधिप्रत्यवमर्शमन्तरेणापि
P. 329-1 वर्णानां स्पष्टं भेदप्रतीतेरेकत्वमेवौपाधिकमित्याशयेनाह—**औपाधिकत्वेति** ।

एकोपाधिबलादेकत्वे प्रागुक्तमतिप्रसङ्गमुद्धरति—**उपचारे हीति**। P. 329-2
समुदितानां वाचकत्वसमर्थनान्न प्रागुक्तो दोष इत्याह—**एतेनेति**। अन्वय- P. 330-1
व्यतिरेकाभ्यामेव बालेन वर्णानां अर्थधीहेतुत्वनिश्चयात् नैकपदत्वज्ञानं तद्धेतुरिति, नान्योन्याश्रय इत्याह—**बालेनेति**। बहुवक्तृभ्यो युगपदुत्पन्नो वर्णानां प्रयोगः अक्रम इत्यर्थः। यावन्त इति श्लोकं व्याचष्टे—**यावन्त इति**। नन्वित्यादिशङ्कायाः भाष्यसंबन्धं दर्शयति—**भाष्य इति**। बृहदारण्यकस्वरविधायको ग्रन्थो भाषिकाख्यः। तद्विहितस्वरो भाषिकादिः 'यस्मिन् पञ्चपञ्चजना' इति मन्त्रे पञ्चजना इत्येकं पदमित्यत्र नियामक इत्यर्थः।

'गन्ता [अश्वः] गच्छती'त्यत्र **गन्तेति** [अश्व इति] न लुडन्तमित्यर्थः। **समानाधिकरणश्रुतीति**। यजिश्रुतिसामानाधिकरण्यगम्यमित्यर्थः। **सर्ववर्णविषयेति**। तदभावे बहूनां वर्णानां एकपदत्वनिश्चयायोगादिति भावः। **कल्पना स्यादित्यन्तमिति**। अथापीत्यादि भाष्यस्य पृथग्व्याख्यानादिति भावः॥२८॥

शास्त्रयोनित्वाधिकरणे वेदस्य सकर्तृकत्वसमर्थनात्, कथं कर्तुरस्मरणादीति भाष्यमित्यतो व्याचष्ट इत्याशयेनाह—**शास्त्रयोनित्वेति**। अदृष्टे साध्यस्यापि सत्वान्न व्यभिचार इत्याशयेनाह—**अतोऽदृष्टेनेति**। **अत एवेति**। P. 331-2
तर्कस्य साध्यानुगुण्यावश्यंभावादिति भावः। कथमनर्हत्वमित्याशङ्कायां—**असतः कारणत्वायोगात्**। अन्यतस्तदुत्पत्त्यभ्युपगमे तस्यान्यस्य नित्यत्वे वेदस्यैव नित्यत्वौचित्यात्। अनित्यत्वे तस्माप्यन्यत उत्पत्तिरित्यनवस्थापत्तेः इत्याह—**तदानीमिति**।

इति सिद्धमेवेति टीकायामव्यवधानादनुमानसिद्धत्वमुक्तमिति भ्रमः स्यात्। तं व्यावर्तयति—**कर्तुरिति**। **दृढीकृतमिति**। काठकादिसमाख्या- P. 332-1
बलात् कठादिजन्यत्वमेव वेदस्य स्यादित्याशङ्कां उक्तन्यायानुरोधेन भाष्योदाहृतश्रुतिस्मृतिभ्यां सिद्धवेदप्रवचनेन समाख्योपपत्तेश्च निराकृत्य दृढीकृतमित्यर्थः॥

ननु भाष्यटीकयोः समाननामेति सूत्रं शब्दार्थसंबन्धस्य वेदस्य चानित्यत्वशङ्कापरिहारार्थत्वेन व्याख्यातम्। तदनुपपन्नम्। शब्दार्थस्य जातेर्नित्यत्वेन तत्संबन्धस्यापि नित्यत्वात्। समाननामरूपत्वमात्रेण वेदनित्यत्वासिद्धेश्चेत्याशङ्क्य महाप्रलये प्रकृतिमात्रस्यैव शेषेण कस्याश्चिदपि व्यक्तेरभावे कथं निरा-

श्रया जातिः स्यात्। ततश्च तस्या अपि नाशान्न शब्दार्थसंबन्धस्य नित्यत्व-मिति शङ्का।

तन्निराकरणं च **समाननामरूपत्वादिति** हेतुना क्रियते। व्यक्तीनां तदानीमपि सूक्ष्मरूपेणावस्थानाभावे समाननामरूपत्वायोगात् श्रुतिस्मृत्यवगत-समानामरूपत्वबलेन महाप्रलयेऽपि व्यक्तिसिद्धौ तन्निष्ठां जातिमादाय शब्दार्थ-संबन्धस्य नित्यत्वमिति, अर्थाद्वेदानित्यत्वशङ्कापि परिहृता भवति समाननाम-रूपतया सृष्ट्यर्थं पूर्वकल्पवेदानुसन्धातुर्महाप्रलयेऽपि सत्त्वावश्यंभावादित्येवमभि-

P. 332-1 प्रायं सूत्रमित्याशयेनाह—**समानेति**।

नन्वध्यापकाद्यभावेऽपि वेदवर्णानां नित्यत्वस्य का हानिरित्यत आह—**वाक्येति**। **टीकायां** वेदः किं महाप्रलये स्थूलरूपेणैव वर्तते? उत वासना-त्मना? नाद्यः। तदानीमध्यापकादेराश्रयस्याभावात्। द्वितीये-सा वासना किं जीवनिष्ठा? उत ब्रह्मनिष्ठा? अथवा जीवादीनां प्रादुर्भावकाले पूर्ववासनासहिता-नामेव प्रादुर्भाव इति विकल्प्य, न च जीवा इत्यादिना प्रथमं निराकृतम्। द्वितीयं शङ्कते—**नन्विति**।

शुद्धस्वभावस्येति पदसूचितं हेतुमाह—**निरवयवस्येति**। तृतीयं शङ्कते—**अथेति**। **जगत्सृजेदिति**। पूर्ववासनायुक्तं जगत् सृजेदित्यर्थः। कारणे विशेषाभावे कथं कार्ये विशेष इत्याशयेन परिहरति—**तत्राहेति**। उक्तावित्येत-द्योगशक्त्यभिप्रायं न लक्षणाभिप्रायमित्याशयेनाह—**अव्यापकेति**। भावरूपाया

P. 333-3 मृदो दृष्टान्तीकरणात् भावरूपेत्यर्थः। आगमाद्यगोचरत्वे हेतुमाह—**साक्षि-सिद्धस्येति**। श्रुतेरज्ञात एवार्थे प्रामाण्यात् अनुमानस्य तर्कशब्दनिर्दिष्टाया अर्था-पत्तेश्च सिद्धसाधने सत्यनुदयादान्तरे तत्र चक्षुरादेरप्रवृत्तेश्च न तेषां तत्सत्तागोचर-त्वम्। किन्तु, साक्षिसिद्धस्य तस्य ज्ञानाभावरूपत्वाशङ्कायां, तन्निरासेन तस्या-सत्वनिवृत्तिमात्रं क्रियत इत्यर्थः।

**अज्ञातेति**। अज्ञातशुक्तिविवर्तत्वेन रजतभ्रमस्य अज्ञातब्रह्मविवर्तत्वेन जगद्भ्रमस्य चासिद्धेरित्यर्थः। किं प्रकाशाभाव एवाज्ञातत्वं? किं वा प्रमाण-

P. 333-5 जन्यवृत्त्यभावः? नाद्य इत्याह—**स्वयंप्रभेति**। द्वितीये, वृत्तेरज्ञातत्वापत्तेः तद्विषयकप्रमाणजन्यवृत्त्यभावादित्याह—**न हीति**। एवं भावरूपाविद्याया ब्रह्म-

ण्यावरणं प्रयोजनमुक्तम् । परिणामोऽपि प्रयोजनमिति दृष्टान्ते स्थित्वा दर्शयति—**यद्यपीति** । भावरूपत्वे प्रमाणमाह—**प्रमाणं त्विति** । P. 333-7

दृष्टान्ते साध्यसिद्धयर्थं सत्यन्तम् । पक्षे भावरूपाज्ञानसिद्धयर्थं अनधिकरणान्तं, तादृशसंशयादिनिवर्तकत्वेनार्थान्तरता माभूदित्यनादीत्युक्तम् । डित्थगतत्वसमानाधिकरणस्य प्रमाभावत्वानधिकरणत्वं च दृष्टान्ते डित्थगतत्वानधिकरणत्वम् पक्षे च प्रमाभावत्वानधिकरणत्वं चादाय पर्यवस्यतीति, भावरूपाज्ञानसिद्धिरिति भावः ।

**निवृत्तिरिति पठितव्यमिति** । भावरूपाज्ञाननिवृत्तेरपि प्रमारूपत्वाभ्युपगमादिति भावः । न चाप्रयोजकत्वम् । प्रागुक्ताया आवरणाद्यनुपपत्तेर्बाधकतर्कत्वादिति भावः । अर्थापत्तिरपि भावरूपाज्ञाने प्रमाणमित्याह—**त्वदुक्तमिति** । अज्ञानविषयत्वेन भासमानस्य परोक्तार्थस्य ज्ञानाभावाङ्गीकारायोगात् भावरूपाज्ञानमेव तदर्थविषयकं सिद्धयतीत्यर्थः ।

अथ ज्ञानविशेषाभाव एव तद्विषयः । तत्र वक्तव्यम् । किं प्रमाणज्ञानाभावः? किं वा विशेषधर्मप्रकारकज्ञानाभावः? आद्यमाशङ्क्य निराकरोति—**न चेति** । **व्यपदेशार्थ इति** । **त्वदुक्तमर्थं न जानामीति** व्यवहारस्य प्रमाणजन्यज्ञानाभावो विषय इत्यर्थः । **न च शक्नोतीति** । अनुवदितुमिति शेषः । द्वितीयमाशङ्क्य प्रत्याह—**न च सामान्येनेति** । तदा ज्ञानाभावव्यावर्तकत्वेन भासमानोऽर्थः किं सामान्यरूपः? उत विशेषरूपः? नाद्यः—ज्ञातस्य सामान्तस्य ज्ञानाभावव्यावर्तकत्वायोगादित्याशयेनाह—**सामान्यस्येति** । द्वितीये, विशेषः किं प्रमितः? उत न? अन्त्य आह—**विशेषस्य चेति** । आद्य आह—**प्रमितत्वे वेति** । नप्रमितम्, किन्तु स्मृतमित्यत आह—**स्मृतत्वे वेति** । P. 334-1

P. 333-12

ननु भावरूपाज्ञानपक्षेऽपि न सामान्यं तद्विषयः । तस्य निश्चितत्वात् । नापि विशेषः । तस्यानिश्चितस्य व्यावर्तकत्वायोगात् । निश्चये वा अनुवादापातादित्याशङ्क्य, तदुच्चारितपदजन्यपदार्थज्ञानादिसहकारिमहिम्ना, अर्थविशेषविषयकस्यैवाज्ञानस्य साक्षिण्यध्यासान्न दोष इत्याह—**मम त्विति** ।

नन्वेवं साक्षिणा विशेषस्य निश्चितत्वात्, को मदुक्तोऽर्थ इत्युक्तेः तदनुवादापत्तिः । साक्षिभास्यानां सुखदुःखादीनां व्यवहारदर्शनात्, प्रतिभासे सत्य-

P. 334-1 ज्ञानविषयत्वानुपपत्तिश्चेत्यत आह—**न मानत इति**। आवृते वस्तुनि प्रमाणज्ञानादेव विशिष्य व्यवहारो न साक्षिमात्रात्। सुखादौ त्वावरणाभावात् साक्षिमात्रेण विशिष्य व्यवहारः। आवृते वस्तुनि प्रमाणवृत्त्यनुदयादेवाज्ञानविषयत्वमप्यविरुद्धमिति भावः। सविषयस्य प्रमाणज्ञानाभावस्यैव साक्षिण्यध्यासोऽस्त्विति स्वैकदेशिशङ्कां निरस्यति—**न चेति**।

अविद्याश्रयो जीव इति वदता वाचस्पतिना, तत्परिणामेक्षणादिकमपि तन्निष्ठमेवेत्यभ्युपगतमासीदिति, सर्वविषयकज्ञानादिमानीश्वरो निह्नुत इति केचित्। तत्राह—**ईक्षितुरिति**। अनुपपत्तिं निराकरोति—**ईक्षणं चेति**।

सुहितशब्देन तृप्तिवाचकेन ब्रह्म लक्ष्यत इत्याशयेनाह—**बृंहितानीत्यर्थ इति**। न चेति चशब्दस्ततश्चार्थक इत्याशयेन व्याचष्टे—**ततश्चेति**।

P. 335-2 लयलक्षणेत्यनेन मूलाविद्योच्यत इत्याह—**लीयत इति**।

**टीकाया** एषोऽर्थः। प्रकारान्तरेण सुप्तिप्रलययोर्वैषम्यं शङ्कते—**नन्विति**। **ग्रहणसंभवादिति**। व्यवहारहेतुपदार्थग्रहणसंभवादित्यर्थः। हेत्वन्तरमप्याह—**प्रायणकालेति**। **सुषुप्तवदिति**। सुषुप्तस्येव महाप्रलयस्थस्यापि पूर्वप्रबोधव्यवहारवत् उत्तरप्रबोधव्यवहार इति कुत इत्यर्थः। अद्य जातस्य पूर्वाभ्यस्तस्तन्यपानसुखहेतुत्वस्मृतिरूपानुसन्धानादित्यर्थः।

**मनुष्यजन्मेति**। तथाच विष्णुपुराणे—शुनकादिसप्तजन्मव्यवहितस्य राज्ञो मनुष्यशरीरप्राप्तिरुक्तेति भावः।

ननु प्राणित्वाविशेषात् अस्मदादीनामिव हिरण्यगर्भादीनामपि न जन्मान्तरीयवेदाद्यनुसन्धानं इत्याशङ्क्य तां निराकर्तुं—**न प्राकृतवदिति भाष्यम्**। तद्व्याचष्टे—**यथा चेति**। सत्यपि जन्मान्तरीयानुसन्धानसामर्थ्ये, त एवेत्यत्र नास्ति प्रमाणमिति शङ्कते—**स्यादेतदिति**। सामर्थ्ये प्रमाणमुपन्यस्य, श्रुत्या-

P. 336-6 दिकमपि प्रमाणमुपन्यस्तमागमाश्चेति **टीकायां**, तत्र कोपशब्दो विरोधपर इत्याह—**श्लोक इति**[1]। **योऽग्निर्निरवपदिति भाष्ये अग्नित्वं भाविनीं वृत्तिमाश्रित्येत्युक्तं टीकायाम्**। ततश्च श्रुतावपि तथा तन्निर्देशबलादेव समान-

P. 336-1 नामरूपत्वावगतिरपीति तदभिप्रायमाह—**यजमान इति**।

---

१. 'उक्तो यो' इत्ययं कल्पतरुः कोप इति शोध्यः।

**इदानीमग्नये**—वर्तमानाग्नये । अग्निशब्दो यजमानेऽपि मुख्य एवा-स्त्विति शङ्कते—**नन्विति** । निर्वापकर्तुरग्नित्वे तदधिकारप्रार्थनवैफल्यमिति परिहरति—**नेत्याहेति** । अग्नेः स्वाभिलषितसिद्धये यष्टव्यं देवतान्तरं नास्ती-त्यर्थः । **पराचीन**[1] **इति** । निर्वापकर्तेत्यर्थः । तस्यापि योऽग्निरभिलषितं ददाति, स एवास्माभिरपि यष्टव्यः । न हि भिक्षुको भिक्षुकं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुक इति भावः ॥ ३० ॥ P. 335-3 P. 336-2

भाष्ये देवादीनामविशेषेणैव सर्वविद्यास्वनधिकारप्रतिपादनाद्विशेषविषय-त्वेन **टीकायां** विकल्पानुपपत्तिरित्यत आह—**देवादीनामिति** । **असौ वा आदित्य** इत्यादिभाष्यस्य व्याख्यातत्वात् **पुनश्चेति** भाष्यव्याख्यानावसरे पुनस्तद्ग्रहणानुपपत्तिरित्यत आह—**मधुविद्यावाक्यमिति** । मधुविद्यावाक्यार्थ-कथनेन पुनश्चेत्यादिभाष्यार्थं दर्शयितुं तद्याचष्ट इत्याशयेनाह—**तद्याचष्ट इति** । स्वर्गस्य तिरश्चीनवंशत्वे सादृश्यमाह—**तिर्यग्गतेति** । यानि चेत्यादिटीकाव्या-ख्येयश्रुतिमाह—**एवं हीति** । **तस्य ये प्राञ्च इति** श्रुतिगतं तच्छब्दं व्या-कुर्वन्नाह—**तस्यादित्यस्येति** । अथ येऽस्य दक्षिणा रश्मयः" इत्यादिशब्दार्थः । "ता अमृता" इति श्रुतौ कथं प्रकृतपरामर्शी तच्छब्दः ? अपामप्रस्तुतत्वादि-त्याशङ्क्य, 'ऋग्वेद एव पुष्प'मिति पूर्ववाक्ये शब्दमात्रात् भोग्यरसनिष्यन्दा-योगात् ऋग्वेदशब्देन तन्मन्त्रसहितकर्मलक्षणाभ्युपगमेन, तदन्तर्गतानां सोमा-दीनां तच्छब्देन परामर्श इत्युक्तं **टीकायाम्** । स्वयं तु **मधुकृत** इत्यत्र विशेषणतया निर्दिष्टं मधु तच्छब्दार्थं इति भङ्ग्यन्तरेणापि व्याख्यातुं शक्य-मित्याशयेनाह—**यादृङ्मधुकरैरिति** । P. 337-1

पाकेनापि कथममृतत्वमित्यत आह—**ता आप इति** । **यथा हि भ्रमरा** इत्यादिटीकया रसस्य पुष्पेभ्य आहरणपूर्वकं स्वस्थाननयनमृचां मधुपसाम्य-मित्युक्तम् । स्वयं 'तावा एता ऋच एतमृग्वेद'मित्यादिश्रुत्युक्तं साम्यं दर्श-यति—[2]**ऋङ्मन्त्रैरिति** । पुष्पसंबन्धिरसस्रवणप्रयोजकव्यापारवत्त्वं साम्यमिति भावः । P. 337-9

---

१. प्राचीन इति पाठः एवं शोध्यः ।

२. कल्पतरौ ऋङ्मन्त्रैरिति पाठ ऊह्यः ।

ननु नाडीनामतिकृष्णत्वं न श्रुतावुक्तम्। ततश्च कथं टीकेत्यत आह—

P. 338-1 **परः कृष्णमितीति**। अतिशब्दसमानार्थः परश्शब्द इति भावः। तथा चामृतस्य रोहितत्वादिकमपि रश्म्युपाधिकमेवेति ध्येयम्।

ननु श्रुतावथर्ववेदस्य पुष्पत्वं इतिहासपुराणमन्त्राणां भ्रमरत्वं च नोक्तम्। अतः कथं टीकेत्यत आह—**चतुर्थेति**। ननु 'पारिप्लवं शंसती'ति विधाय मनुर्वैवस्वतो राजेत्यादिना केषांचिदाख्यानानामाम्नातत्वात्, तेषामेव शंसनं नान्येषाम्। तथैव च पारिप्लवाधिकरणे वक्ष्यत इत्यत आह—**सर्वाणीति**। वाक्यशेषानुरोधेन सर्वश्रुतिसंकोचो न युक्तः। पारिप्लवाधिकरणे च विशेषितत्वं अभ्युच्चययुक्तिः। तथा **चैकवाक्योपबन्धादिति सूत्रेण** प्रयोजनाकाङ्क्षाणामेवाख्यानानां एतद्विध्येकवाक्यत्वं न सप्रयोजनानामपि औपनिषदाख्यानानां इत्येवं मूल्युक्तेरभिधानात्। तथा च **छान्दोग्यविवरणे भाष्यम्**—"तयोश्चेतिहासपुराणयोः अश्वमेधे पारिप्लवादिषु कर्माङ्गत्वेन विनियोगः प्रसिद्ध इति" इति भावः।

P. 338-7 ननु पुष्पभ्रमरादिद्वैविध्ये, कथमुपासनमित्यत आह—**विकल्पेनेति**। ननु विकल्पपरिहाराय, सर्वमेकप्रकारकतयैव व्याख्यायतामित्याशंक्य, किं लक्षणया, तथा व्याख्यानं ? किं वा मुख्यवृत्त्यैव ? नाद्यः। लक्षणायामितिहासपुराणशब्देन श्रुत्यन्तरे, तत्सहचरितोऽथर्ववेदो लक्ष्येत। न च तत्संभवति—अभ्यासेन निर्दिष्टस्येतिहासपुराणस्य लाक्षणिकत्वायोगात्; पञ्चमवेदत्वेन निर्दिष्टस्येतिहासपुराणस्यापि, मधुनिर्वर्तकत्वं वक्तुं श्रुतेरेवं प्रवृत्तिरित्युपपत्तौ, त्रिषु पर्यायेषु मुख्यवृत्त्या, पुष्पं निर्दिश्य, चतुर्थपर्याये, लक्षणया पुष्पं निर्दिशतीत्येवं श्रुतिवैरूप्यकल्पनायोगाच्चेत्यभिप्रेत्य, द्वितीयं निराकरोति—**यथाश्रुतमिति**। पूर्वपर्यायेष्वेकदेशैकदेशिभावापन्नयोरेव, पुष्पभ्रमरत्वरूपणादिहाप्यथर्वाङ्गिरसमन्त्राणां भ्रमरत्वज्ञानकाल एव सामर्थ्यबलेन, तदेकदेशिनः पुष्पत्वं ज्ञातमिति, न समभिव्याहारलभ्यमितिहासपुराणं पुष्पमिति, तदनुरोधेन तदन्तर्गतानामेव मन्त्रप्रसिद्धिभाजां भ्रमरत्वमिति भावः।

P. 338-9 **असाधारणसंबन्धेति**। एकदेशैकदेशिभावेत्यर्थः। ततश्च, दृष्टार्थत्वेन समुच्चयासंभवात्, व्रीहियवयोरिव विकल्प एवेत्याशयेनाह—**अत इति**। उपा-

**सनानीति** । कर्मावबद्धानीत्यर्थः । स्वतन्त्रोपासनानां सोमादिद्रव्यसंस्पर्शाभावेन P. 338-11 अमृता आप इत्यस्यासंगतत्वापत्तेः । **रोहितादीन्यमृतान्यनुक्रम्येति भाष्याननुगुणा रोहितादयो रश्मिनाड्य** इति **टीके**त्यत आह—**नाडीनिर्देश इति** ।

ननु यश आद्यमृतोपलब्ध्या चेद्वस्वादीनां तृप्तिः कथमादित्यस्य मधुत्वमित्यत उक्तं **टीकायां—तेन खल्विति** । **विदधदादित्यो मध्वित्यन्वयः** । उपास्योपासकभावव्यतिरेकेण श्रुतौ ज्ञातृज्ञेयभावानिर्देशात् टीकाऽयोगमाशङ्क्य, अद्वितीये एकस्मिन्नुपास्योपासकभावस्य विरोधमुक्त्वा, वस्वादावेकस्मिन्नन्यसमुच्चितस्य, तस्यैव विरोधं वक्तुं पुनः कीर्तनमिति, व्याचष्टे—**एकस्मिन्निति** ।

**टीकाया** एषोऽर्थः । अग्निः पाद इत्यादिश्रुतिवाक्यस्य प्रयोजनं दर्शयति—**अधिदैवतमिति** । अध्यात्मं मनसि ब्रह्मदृष्टिं विधाय तदनन्तरमथाधि- P. 339-4 दैवतमाकाशो ब्रह्मेत्यनेनाकाशे ब्रह्मदृष्टिं विधाय पुनश्च चतुष्पद्याकाशे ब्रह्मदृष्टिविधानपर्यवसानार्थं आकाशस्य चतुष्पात्त्वमुक्तमित्यर्थः । आकाशे ब्रह्मदृष्टावग्न्यादिषु पाददृष्टौ च सादृश्यं दर्शयति—**आकाशस्य हीत्यादिना** । 'वायुर्वाव संवर्ग' इति संवर्गविद्यावाक्यमुदाहृतं भाष्ये । तद्व्याचष्टे—**तदेतस्येति** । अग्न्यादिपादचतुष्टयोपेते आकाशे ब्रह्मदृष्टिं विधाय प्रत्येकमेव वायुं संवर्गगुणमुपास्यं विधातुमित्यर्थः ।

एवमादित्ये पादे ब्रह्मदृष्टिं विधातुमादित्यो ब्रह्मेति श्रुतिरिति व्याचष्टे—**टीकायां—तथेति** ॥ ३१ ॥ द्वितीयकल्पनिराकरणार्थत्वेन उत्तरसूत्रमवतारयति **टीकाकार** इत्याशयेनाह—**देवादीनामिति** । टीकोदाहृताः श्रुतीः व्याचष्टे—**हे इन्द्रेति** । 'जगृभ्माते दक्षिणमिन्द्रहस्त'मिति श्रुतिं व्याख्याय, 'इमे चिदिन्द्र रोदसी अपारे यत्संगृभ्णा मघवन् काशिरुक्त', इति श्रुतिगतं काशिरुक्त इत्यंशं पूर्वभागेन सह व्याचष्टे—**इमे इति** । 'तुवि ग्रीवो वपोदर' इत्यादिश्रुतिं व्याख्याय, 'अद्धीन्द्र पिब च प्रस्थितस्ये'ति श्रुतिं व्याचष्टे—**प्रस्थितस्येति** । P. 339-8 'तुभ्यं सुतो मघवन् तुभ्यं पक्व', इति पूर्वपादानुरोधेनाह—**पक्वस्येति** ।

**भागमिति** । तथा च प्रस्थितस्येत्यवयवव्यतिरेकजनिता षष्ठीति भावः । **सुतस्य अभिषुतस्य** । तथेशनामिति टीकां व्याचष्टे—**ईशनामिति** । अभि त्वा शूर नोनुम इत्यनेनान्वयमाह—**त्वां नोनुम इति** । हुताद इति देव-

P. 339-12 विशेषणम् । प्रीणातीत्यस्य स्पष्टीकरणम्—प्रीणयतीति । पञ्चकस्मरणं क्रमेण दर्शयति—टीकायां तथा चेति ।

नन्वसति विरोधे अन्यपरादपि देवताविग्रहादि सिद्ध्यतु, नेत्याह—टीकायां—अतत्परश्चेति । प्रमाणभावाननुप्रवेशिन इति टीकार्थं दर्शयन्नेवाह—ये सिद्धवादिन इति । मन्त्राणां दृष्टार्थत्वं परिशेषात् स्मारकत्वं वक्तव्यम् । तच्च न संभवति । मन्त्रप्रतिपाद्यस्य पूर्वमननुभूतत्वादित्याशयेन शङ्कते—नन्विति । मन्त्राणां द्रव्यदेवतादिपदांश एव स्मारकत्वम् । इतरांशे तत्स्तावकत्वमेवेति परिहाराभिप्रायमाह—प्रयोगेति ।

P. 340-3 प्रमाणाभावान्न स्मृतेरङ्गत्वमिति शङ्कते—नन्विति । लिङ्गादीनामपि श्रुतिकल्पनेनैव शेषशेषिभावबोधकत्वादविहिताया इत्युक्तम् । द्रव्यदेवतादेरिव देवताविग्रहादेरपि मन्त्रैरवगमात् तत्परत्वाभावे को हेतुरिति शङ्कते—नन्विति । एवं च सत्यनुभावकत्वेन प्रामाण्यमपीत्याह—मन्त्राश्चेति । किमुभयपरत्वं मन्त्राणां ब्रवीषि, किं वा देवताविग्रहमात्रपरत्वम्? नाद्य इत्याह—अत आहेति । नान्त्यः । द्रव्यदेवतास्मरणाभावे, विध्यर्थानुष्ठानासंभवेन, तस्यावश्यं विध्यपेक्षितत्वात् । देवतायास्तु कर्मण्युद्देशमात्रेणैवोपयोगेन तस्य स्मरणमात्रं विध्यपेक्षितम् । न तु तत्स्वरूपविशेषोऽपि । ततश्च विध्यपेक्षितस्मरणपरत्वमेव मन्त्राणामित्याशयेनाह—उद्देशेनेति[1] ॥ ३२ ॥

श्लोषादिस्थले तात्पर्यापेक्षणेऽपि, न वाक्यमात्रे तदपेक्षेति शङ्कां निराकर्तुं उदाहरणान्तरमित्याशयेनाह—वेदेऽपीति । प्रत्यक्षादिष्वपि । प्रमाणत्वाविशेषादिति भावः । अनुभवविरोधान्नैवमिति परिहरति—अत आहेति । साध्याविशिष्टत्वादिति । साध्यवत् सन्दिग्धत्वादित्यर्थः । दण्डमिति । बाधकतर्कमित्यर्थः । ततश्च तद्बलाद्धेतुनिश्चय इति भावः ।
P. 341-2

पदार्थभिन्नत्वात् सुरापानकर्तव्यत्वे पर्यवसानं कुतो न भवेदिति शङ्कते—माभूदिति । उद्देश्यभिन्नत्वेन पदार्थतुल्यत्वादवान्तरवाक्यार्थेऽपि न पर्यवसानमिति परिहरति—तत्राहेति ।
P. 342-2

---

१. एतेन कल्पतरौ उद्दिश्येति पदस्थाने उद्देशेनेति आभोगाभिमतः पाठ इति गम्यते ।

विध्यर्थवादयोर्वाक्यैकवाक्यतामसहमानः शङ्कते—**नन्विति**। किमियं P. 342-3 भट्टस्य शङ्का' उत गुरोरिति, विकल्प्य, प्रथमं निराकृत्य, द्वितीयं आशङ्कापूर्वकं निराकरोति—**नन्वित्यादिना**। कुतश्चिद्धेतोरित्यनेन यो हेतुः सूचित इत्यन्वयः। अध्ययनविधेरर्थवादपदानां लक्ष्यतात्पर्यग्राहकत्वकथनस्य प्रयोजनमाह—**अनेनेति**। अर्थवादानामपि विशिष्टार्थबोधकत्वे सत्याकाङ्क्षाराहित्यात् विध्येकवाक्यत्वमेव न स्यात्, इति या शङ्का, सा प्रयोजनपर्यवसानलिप्सया तेषामपि तदपेक्षेत्येवं वार्यत इत्यर्थः।

स्वाध्यायविधिरित्यादिना, तर्कं विशदीकृत्य, तस्य विपर्यये पर्यवसानमाह—**प्रापयतीति**। असत्यप्यालंबने, यथा प्रत्यक्षादिविरुद्धार्थानामर्थवादानां लक्षणा, तथा तदविरुद्धार्थानामप्यस्त्विति शङ्कते—**नन्विति**। तत्र निरालंबनत्वमसिद्धमिति परिहरति—**तत्राहेति**। **तत्सिद्धिपेटिकायां** जागरूकायां निरालंबनत्वशङ्का नोन्मिषतीत्यतो भङ्ग्यन्तरेणावतारयति—**अथवेति**। यथाक्रममन्वयं दर्शयति—**यथेति**। तत्सिद्धिजातिसारूप्येत्यादिसूत्रोक्तानां गुणानां विषयभेदेन पृथक्करणमभिप्रेत्य, तत्सिद्धिरित्यनेनेत्युक्तं; तत्सिद्धिसूत्रेणेति भावः। अमुमर्थमधिकरणप्रदर्शनेन स्पष्टयति—**यजमान इति**। **सूत्रमिति**। तदर्थं सूत्रं सामानाधिकरण्यनिर्वाहार्थमर्थवादाधिकरणस्थं सूत्रमित्यर्थः।

तत्सिद्धिरित्येतद्व्याचष्टे—**तस्य यजमानस्येति**। **जुह्वाधारतयेति**। P. 343-6 प्रस्तरे जुहूं सादयतीति विधानादिति भावः। आदित्ययूपयोस्तु सारूप्यं गुण इत्याशयेनाह—**आदित्य इति**। किमभिधेयाभावान्न लक्षणा? किं वा तदविनाभावाभावात्? नाद्यः। प्रत्येकं पदानामेव लक्षकत्वेन तदभिधेयसत्वादित्याशयेनाह—**यजमानादिशब्दैरिति**। द्वितीयं निराकरोति—**लक्षितेनेति**।

ननु मानान्तराविरुद्धार्थेनार्थवादस्थले, तदालंबनीभूतोऽर्थः किं मानान्तरबलात् सिद्ध्यति' किं वा अर्थवादबलादेव? आद्ये न श्रुतालंबनमुखेन विध्येकवाक्यत्वम्, अनुवादकत्वेन तस्मिन्नर्थे अप्रमाणत्वात्। प्रमाणाप्रमाणयोश्चैकवाक्यत्वायोगादिति शङ्कते—**नन्विति**। अनुवादकत्वमसिद्धमिति परिहरति—**अत आहेति**। तदुपपादयति—**न स्मृतिवदिति**। P. 343-10

द्वितीये, मानान्तरविरुद्धार्थानामप्यर्थवादानां स्वत एव स्वार्थनिश्चायकत्वे तद्बलेन मानान्तरस्यैव बाधोऽस्त्विति शङ्कते—**यदीति**। अनपेक्षत्वं न

बाधकत्वे तन्त्रम् । चन्द्रप्रादेशिकप्रत्यक्षस्यापि तत्परिमाणबोधकस्मृतिबाधकत्वापत्तेः । किन्तु, निरवकाशत्वमिति दर्शयितुं **अत्रोच्यत इत्यादिटीकेत्याह**—

P. 343-13 **तत्परतयेति । अद्वैतविषयैरिति** टीकागतमद्वैतं तच्छब्दार्थः । इदं निरवकाशत्वे हेतुः । प्रत्यक्षादि बाधन्त इत्यन्वयः । **नार्थवादा इति** । मुख्यार्थे तात्पर्याभावेन तात्पर्यविषये प्राशस्त्ये, सावकाशत्वादित्यर्थः ।

ननु कथमिष्टप्रसङ्गता भिन्नवाक्ययोरेकवाक्यत्वायोगादित्यत आह— **विध्यन्वित इति** । तथा सतीत्यादिशङ्काया इष्टप्रसङ्गतां परिहरन्नाह— **वाक्यद्वित्वमिति । किंत्विति** । वज्रहस्तेन्द्रदेवताकत्वात् प्रशस्तमित्येवं स्तोतुं आलंबत्वेनाश्रितमर्थं न त्यजाम इत्यर्थः ।

तात्पर्यविषयत्वस्य व्यापकस्याभावे कथं तद्व्याप्यं प्रमितत्वमित्याशयेन शङ्कते—**नन्विति** । विशिष्टपरस्य कथं विशेषणेष्वप्रामाण्यमित्यतः तदुपपादयति—**यद्वाक्यमिति** ।

P. 343-19 विशिष्टतात्पर्यकविध्याक्षिप्तविधिविहितत्वाद्विशेषणानामपि प्रमितत्वमिति शङ्कते—**नन्विति । न्यूनाधिकेति** । न्यूनाधिकार्थपरत्वकल्पन इत्यर्थः । असौ दोषोऽनुमिते न हीत्यन्वयः । प्रमिते हि विशेषणे विशिष्टप्रमितिः । नाप्रमिते । **नागृहीतविशेषणेति** न्यायात् । विशेषणप्रमितिश्च किं विशिष्टविध्याक्षेपादेव ? किं वा मानान्तरात् ? नाद्य इत्याह—**प्रमितो हीति** । द्वितीयं शङ्कते—**नन्विति** । क्रियाकारकभावस्य लोकसिद्धत्वादित्यर्थः । असार्वत्रिकत्वेन परिहरति—**सत्यमिति** ।

**एतस्यैवेति** । 'त्रिवृदग्निष्टुदग्निष्टोम' इति पूर्ववाक्यविहितं यत्कर्म तद्धर्मकस्येत्यर्थः । **रेवतीषु**—रेवतीशब्दवतीष्वृक्षु वारवन्तीयं अग्निष्टोमस्तोत्रसाधनं साम कृत्वेत्यर्थः । ततश्च तात्पर्याविषयस्यापि प्रमाणविषयत्वेनैव प्रमितत्वं वक्तव्यमित्याशयेनोपसंहरतीत्याह—**इति भावेनेति** ।

P. 344-8 एवमपि न देवताविग्रहादिसिद्धिरिति शङ्कते—**नन्विति** । अर्थवादानां स्वप्रतिपाद्यदेवताविग्रहादिविषयकमानान्तराभावेऽपि प्रामाण्यं विधीनामिव कुतो न भवेदित्याशङ्क्य सापेक्षत्वे सति मूलमानरहितत्वमप्रामाण्ये तन्त्रमित्याह—

P. 344-10 **यद्वीति** । उक्तमित्येतद्विशदयति—**वाक्यस्य सत इति** । तथा च पक्षधर्मावच्छिन्नसाध्यव्यापक उपाधिरिति भावः ।

तात्पर्यविषयीभूतार्थभेदाभावान्न वाक्यभेद इति शङ्कते—**यदीति**। P. 345-1
अर्थभेदमात्रमेव वाक्यभेदप्रयोजकमस्त्वित्याशङ्कां निराकर्तुमधिकरणं दर्शयति—**द्वितीये स्थितमिति**। **अवाचकत्वादिति**। **एतदुपलक्षणम्**। तत्तत्पदार्थनिरूपितसंसर्गभेदादित्यपि द्रष्टव्यम्।

विशिष्टार्थस्य तात्पर्यविषयार्थस्य विशिष्टार्थतात्पर्यग्रहणार्थतया सूत्रे विभज्यमानसाकाङ्क्षत्वमर्थैकत्वं चोक्तमित्याह—**तच्चेति**।

(१) किमेकवाक्यतामापन्नस्य भिन्नवाक्यत्वं विरुद्धमिति ब्रवीषि? (२) किं वा पृथक्क्तस्य विशिष्टार्थबोधकत्वम्? (३) अथवा तर्हि तत्रैव पर्यवसाने विध्येकवाक्यत्वं न स्यादित्येकवाक्यत्वाभावः? (४) यद्वा भिन्नवाक्यत्वे सूत्रोक्तलक्षणानुरोधेन तत्र तात्पर्यावश्यंभावे तदभावकथनं विरुद्धमिति? (५) अपि वा तात्पर्याविषयार्थभेदेऽपि अतिप्रसङ्ग इति विकल्प्य **यथा हीत्यादिना** प्रथमं **त्वयापीत्यादिना** द्वितीयं च निराकृत्य तृतीयं निराकरोति—**तथा चेति**। विध्यपेक्षितप्राशस्त्यसमर्पणेन प्रयोजनवदर्थपर्यवसानाय विध्येकवाक्यत्वमपीत्यर्थः। **चतुर्थं शङ्कते—एवं तर्हीति**। भिन्नवाक्ययोरेव एकवाक्यत्वे लक्षणसूत्रानुरोधेन P. 345-10 प्रयाजादिवाक्यानामिव अर्थवादानामपि स्वार्थे तात्पर्यावश्यंभावादित्यर्थः।

**को भेद इति**। ततश्च तात्पर्यं नास्तीति, साहसमिति भावः। लक्षणसूत्रे विशिष्टार्थैक्यमेव विवक्षितम्। न तु तस्य तात्पर्यविषयत्वमपि। गौरवादित्यभिप्रेत्य परिहरति—**अत आहेति**।

नन्वेवं क्वचिदपि तात्पर्यकल्पनं न स्यादित्याशङ्क्य, स्वविरुद्धार्थकप्रमाणबाधनक्षमत्वाय लक्षणादिसिद्धये वा, तात्पर्यकल्पनम्। तच्च प्रयाजादिवाक्ये बाधकाभावात् कल्प्यते। अर्थवादेषु तु प्राशस्त्यपरेषु स्वार्थेऽपि तात्पर्यकल्पने गौरवं प्रयोजनाभावश्चेत्याशयेनाह—**स्तुतीति**। चरममाशङ्क्य निराकरोति—**यदीति**।

नन्वेवं यत्र प्रतीतिपर्यवसानमवान्तरवाक्यार्थे, यथा, अरुणयैकहायन्येत्यादौ, तत्र कारकाणां परस्परापेक्षाभावेन प्रत्येकमेव क्रयान्वयबोधपर्यवसानात्। ततश्च तत्र वाक्यभेदो दुरुद्धर इत्याशङ्क्य, परिहरति—**यद्यर्थवादेष्विति**। P. 345-13
**तत्रेति**। तावद्विशेषणविशिष्टक्रयस्यैकस्यैव वाक्येन बोधनान्न वाक्यभेद इत्यर्थः।

P. 346-3　**प्रधानभेदे त्विति टीकायाः** प्रकृतानुपयोगमाशङ्क्याह—**विशेष्यैक्य इति। उपपादयतीति।** क्लृप्तिस्थल इव क्रयस्थलेऽपि वाक्यभेदः कुतो न भवेदिति शङ्कां निराकर्तुमित्यर्थः। उदाहरणप्रदर्शनेन तदुपपादयति—**आयुरिति। प्रधानभेदादिति। क्लृप्तीर्वाचयतीति** क्लृप्तिक्रियाबहुत्वावगमादित्यर्थः।

नन्वेवमपि तात्पर्यविषयीभूतस्य, तदुपयोगिनो वा, अर्थस्य प्रमितत्वं वक्तव्यम्। न तु मानान्तराविरुद्धत्वमात्रेण प्रमितत्वं संभवति, रुद्ररोदनादेरपि प्रमितत्वप्रसङ्गात् देवताविग्रहादिकं च न तथेत्युक्तमिति शङ्कते—**नन्विति**।

**शङ्कापनुत्यर्थमिति।** किं चेतनदेवताभ्युपगमेन तस्यापेक्षा नेत्युच्यते? किं वा शब्द एव देवतेति न देवताविग्रहापेक्षेति, विकल्प्य, क्रमेण, निराकर्तुमपि चेत्यादिभाष्यमित्यर्थः। **व्याख्यातीति।** आद्येऽपि किं रूपमेव नापेक्षितं? उत रूपसत्तेति, विकल्प्य, क्रमेण निराकृत्य, **स्यादेतदित्यादिना**, द्वितीयमप्याशङ्क्य निराकुर्वन् व्याख्यातीत्यर्थः।

P. 346-7　**दृष्टानुसारादिति।** दृष्टव्यापारानुसारादित्यर्थः। फलभावनायामनेकव्यापारात्मिकायां यागस्य करणत्वसंभवेन तत्करणत्वं श्रुतं फलोत्पत्त्यंशे पर्यवस्यतीत्याशयेनाह—**तदीयेति।** यागभावनाया एव फलवत्याः फलोत्पत्तिपर्यन्ताया यागेन जनयितव्याया योऽयं यागलक्षणस्वकरणजन्योऽवान्तरव्यापारः, तद्रूपत्वाद्देवताभोजनप्रसादादीनामिति टीकार्थः। पूर्वपक्षप्रदर्शनपूर्वकं

P. 347-6　सिद्धान्तसूत्रार्थं विशदयति—**नवमे स्थितमिति। गुणत्वस्वीकारादिति।** यागस्य देवताप्रीतिद्वारा देवताशेषत्वे हि भोजनतुल्ययोगक्षेमता। न च तदस्माभिराश्रीयते। देवताप्रीतेर्यागजन्यस्वर्गावान्तरव्यापारत्वेऽपि देवतायाः यागगुणत्वाविरोधादित्यर्थः।

भाष्यस्थश्रुतीर्व्याचष्टे—**एत इति।** स्तोत्रादौ विनियुक्ताया अस्या ऋचः तदनुगुणविशिष्टार्थप्रतिपादिकाया अपि प्रत्येकपदानुरोधेन स्रष्टव्यविशेषस्मारकत्वमपि विनियोजकश्रुत्यनुसारेणेत्याशयेनाह—**अस्या ऋचः पदैरिति।** तत्पदस्य तत्तत्स्रष्टव्यविशेषस्मारकत्वे नियामकं दर्शयति—**सन्निहितेति।** 'स मनसा वाचं मिथुनं समभवदि'ति श्रुतिं णिजध्याहारेण व्याचष्टे—**प्रजापतिरिति।** फलितमर्थ-

माह—**त्रयीप्रकाशितामिति**। नामरूपं च भूतानां, इति स्मृतेः, सर्वेषां तु स नामानीति स्मृतेश्च भिन्नार्थकत्वं प्रकटयति—**नामरूपं चेति स्मृताविति**। P. 348-5

"यज्ञेन वाच" इत्यादिश्रुतिं व्याचष्टे—**पुण्येनेति**। ऋषय आदौ लब्धवन्तः तदनु लब्धवन्तः इतरे जना इत्यर्थः। "यदा सुप्तः स्वप्नं" इत्यादिश्रुतिं व्याचष्टे—**यदेति**। अदर्शनमात्रेण कथं लयः? प्रबोधमात्रेण वा कथं सृष्टिरित्यत आह—**वाक्य इति**। दृष्टिसृष्टयभ्युपगमेन प्रपञ्चस्य प्रातीतिकत्वं कथमभ्युपगम्यते? सृष्टिश्रुतिबलेन व्यावहारिकत्वस्यैव न्याय्यत्वादित्याशङ्कय, मन्दाधिकारिणं प्रति व्यावहारिकत्वाभ्युपगमेन सृष्टिश्रुतिः प्रवृत्ता। इयं तु मुख्याधिकारिणं प्रति दृष्टिसृष्टिं प्रतिपादयितुं प्रवृत्तेति, व्यावहारिकसत्वमपि प्रपञ्चस्य नानुमन्यते श्रुतिरित्याह—**व्यावहारिकेति**।

"यो ब्रह्माण"मित्यादिश्रुतिं व्याचष्टे—**य इति**। "आत्मबुद्धिप्रकाशमित्यस्यार्थमाह—**आत्मा बुद्धिरिति**। **अखण्डाकारेति**। अखण्डाकारा वृत्तिरात्मबुद्धिशब्देनोच्यत इत्याशयेनाह—**तत्त्वमसीत्यादीति**। **इत्येतदिति**। अनेन समानार्थकमेतदात्मबुद्धिप्रकाशमिति पदमित्यर्थः। दाशतय्यो दृष्टा इत्येतद्व्याचष्टे—**दशतय इति**। दशावयैवा अस्येत्यर्थे, संख्याया अवयवे तयबिति, तयप्प्रत्यय इति भावः। 'यो ह वा अविदितार्षेये'त्यादिश्रुतिं व्याचष्टे—**आर्षेयमिति**। शर्वर्यन्ते प्रसूतानां इत्यादिस्मृतिं व्याचष्टे—**शर्वर्यन्त इति**।

'तद्यो यो देवानां' इत्यादिश्रुतिं व्याचष्टे—**तत्रेति**। तदित्यव्ययं सप्तम्यर्थ इति भावः। "ते होचुः हन्त तमात्मानं" इत्यादिश्रुतिं व्याचष्टे—**देवा इति**। 'पृथिव्यप्यतेजोऽनिलखे समुत्थित' इत्यादिश्रुतिं व्याचष्टे—**पादतलमिति**। जिते—वशीकृते। भूमण्डलादीनीति चतुरश्रधनुराकारत्रिकोणषट्कोणबिन्दुरूपाणि मण्डलानि पृथिव्यादीनामित्यर्थः। **निवृत्त्याद्या इति**। निवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीताख्याः प्रपञ्चसार एव प्रसिद्धा इत्यर्थः।

**॥ इति देवताधिकरणम् ॥**

---

## ॥ अथ अपशूद्राधिकरणम् ॥

सू०॥ शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ ३४ ॥

सू०॥ क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

सू०॥ संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

सू०॥ तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

सू०॥ श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥

P. 349-4 विषयविशयसंगतीराह—ब्रह्मविद्येति । अध्ययनस्य प्रधानकर्मत्वे हिरण्यभरणादिवत् स्वतन्त्रत्वेन संस्कारकर्मत्वाभावे, अध्ययनेनैवाप्तव्यः स्वाध्याय इति नियमाभावात्, अध्ययनेनैव पुस्तकदर्शनादिना वा, शूद्रोऽपि वेदं गृहीत्वा तद्विहितासु विद्यासु अधिक्रियेतैव । इतरथा, तु नेत्यर्थः । शास्त्रीयमिति । ततश्च निजं सामर्थ्यं लौकिकमिति भावः ।

नन्वध्ययनाभावेन शूद्रस्यानधिकारशङ्कायामग्न्यभावादित्यादिरसङ्गतः परिहार इत्याशङ्क्य, यच्च कर्मस्वित्यादिभाष्योक्तगतार्थताशङ्कापरिहारपरत्वेन टीकां व्याचष्टे—अधिकारेति । अवैद्यत्वादिति । विद्यैव वैद्यम्, तद्यस्य नास्ति, सोऽवैद्यः तस्य भावः तत्त्वं तस्मादित्यर्थः । अभाव इति । कर्मण्यधिकाराभाव इत्यर्थः ।

पूर्वतन्त्राधिकरणेन गतार्थतां वदन् प्रष्टव्यः । किं तदधिकरणोक्तप्रथमयुक्त्या किं वा द्वितीयया? नाद्य इत्याह—एतदिति । नान्त्य इत्याह—तत्रानग्नेरिति । अवैद्यत्वयुक्तेः सम्यगुपपादितायाः कथमभ्युच्चयत्वमित्यत आह—

P. 349-9 अभ्युच्चयत्वं चेति ।

शूद्रस्यापि भवत्वाधानेनाहनीयादिकमिति, शङ्कानिरासफलकद्वितीयाध्यायगताधानाधिकरणसिद्धस्यार्थस्य षष्ठे अपशूद्राधिकरणे निर्देशात्, "त्रयाणां स्यादग्न्याधेय" इति सूत्रेण पुनर्निर्देशात् सा मूलयुक्तिः अध्ययनाभावेऽपि

लिखितपाठादिना वेदः शूद्रेणापि सुसंपादः। अध्ययनविधेः पुरुषार्थतया अध्ययनविधायकत्वेन वेदोऽध्ययनेनैवावाप्तव्य इति, नियमपरत्वाभावादिति शङ्कानिरासस्य तत्रासूत्रितत्वादियमभ्युच्चययुक्तिरित्यर्थः।

इह मूलयुक्तित्वे, किं नियामकमित्यत आह—**इहेति**। **अथातो धर्मजिज्ञासेति सूत्रे** यदध्ययनविधेः पुरुषार्थत्वनिरासेन संस्कारकर्मत्वं साधितम् तदिह शूद्रस्य ब्रह्मविद्याधिकारं व्यावर्तयितुं 'शुगस्ये'ति सूत्रेण तात्पर्यगत्या, सूत्रितम्। इदं च 'संस्कारपरामर्शादि'त्यादिसूत्रैरध्ययनसंस्कारविषयत्वेन स्वरसतो भासमानैः अन्यविषयत्वेन व्याख्यायमानैरपि स्फुटीक्रियत इति तत्समर्थनार्थत्वोक्तिः। तथा च तस्मिन् सूत्रे टीका—**न केवलमुपनीताध्ययनविधिपरामर्शेन न शूद्रस्याधिकार इति**। तट्टीकावाक्यावतारणार्थमाचार्यवाक्यमपि—आद्यसूत्र एव अध्ययननियमस्य सूत्रितत्वादिति। **आद्यसूत्रे**—अधिकरणाद्यसूत्रे। शुगस्येति सूत्र इत्यर्थः। अगतार्थत्वमुपसंहरति—**अत इति**। P. 350-1

ननु षष्ठाधिकरणे असूत्रितत्वेन गतार्थत्वाभावेऽपि धर्मजिज्ञासासूत्रे अध्ययनस्य विद्याङ्गत्वसमर्थनात् कथं पूर्वपक्षोन्मेष इति शङ्कते—**नन्विति**। तदाक्षेपेण पूर्वपक्षप्रवृत्तेः न दोष इत्याशयेनाह—**अग्निरिति**। **अध्ययनं त्विति**। तस्य पुरुषार्थतया अर्थावबोधफलकत्वाभावादिति भावः। लिखितपाठादिवदध्ययनमपि कदाचिदिच्छया विद्याङ्गं भवन्न निवार्यत इत्याशयेनाह—**न नियत इति**।

अभ्युपेत्याप्याह—**संभवति चेति**। उपनयनाङ्गकाध्ययनस्य पुरुषार्थत्वात् विद्याङ्गमध्ययनमुपनयनरहितस्य शूद्रस्यापि संभवतीत्यर्थः। **अध्ययननियम इति चेदित्यतः** प्राक्तनटीकाया एकान्वयमाह—**आहवनीयादीति**। विद्याङ्गमलौकिकं साधनं किमध्ययनम् उत तन्नियम? इति विकल्प्य, प्रथमं निराकृत्य द्वितीयं निराकरोतीत्याह—**विद्यायामिति**। P. 350-3

**आद्यमनिरस्येति**[1] विकल्पदशायामभ्यर्हितत्वेन प्रथमनिर्दिष्टस्यापि[2] पुरुषार्थपक्षस्य बहुवक्तव्यतया पश्चान्निराकरणादिति भावः। P. 351-1

---

१. एतेन कल्पतरौ उत क्रत्वर्थे इति विकल्प्य आद्यमनिरस्य द्वितीयं निरस्यति इति पाठो ज्ञेयः। २. R. पुस्तके कापीत्यधिकं दृश्यते।

P. 351-2 पर्णतावैषम्यं स्पष्टयति—**व्याप्तया हीति**। इषे त्वेत्यादिमन्त्रविशेषाणां क्रतुविशेषेण व्याप्तत्वेऽपि न तेषामिह निर्देशः। निर्दिष्टस्तु स्वाध्यायोऽवयवी न कर्मविशेषेण व्याप्त इत्यर्थः। अयमुपाय इति विशिष्याज्ञातत्वेऽपि फलाक्षिप्ते तदुपायसामान्ये, अनुष्ठानानुकूलव्यापाररूपा प्रवृत्तिः संभवतीत्याह—**फलमभिलषन्निति**। अनुष्ठेयत्वनिश्चयात्मिका सामान्यरूपैव प्रवृत्तिः किमर्थमिष्यते ? अनुष्ठानमेव कुतो न भवेदित्याशङ्क्य, तद्योग्यस्य विशेषरूपाज्ञानादित्याशयेनाह—**विशेषं त्विति**। ततश्च नानुष्ठानमिति भावः।

तर्हि, करणवदितिकर्तव्यताया अपि पुरुषार्थत्वं स्यादिति, शङ्कते—**तर्हीति**। तृप्त्यादिकरणानां भोजनादीनामितिकर्तव्यतानपेक्षत्वेन तदुपकार्यत्वाभावात्, इत्यर्थः।

नन्वङ्गेषु विधिबलादेकरूपैव प्रवृत्तिः। अनुष्ठापकविधिप्रवृत्तिदशायामङ्गानां विशिष्य ज्ञातत्वेन, तत्र सामान्यरूपप्रवृत्त्यसंभवात्। ततश्च **सामान्यतो विशेषतश्च प्रवृत्तिर्विधिपराधीनैवेति टीकानुपपत्तिरि**त्याशङ्क्य, सामान्यविशेषशब्दौ साधारणासाधारणपराविति कर्तव्यताविशेषणमित्याह—**तत्र चेति**।

ननु पुरुषाधीनप्रवृत्तिकत्वेन, पुरुषार्थत्ववत् क्रत्वधीनप्रवृत्तिकत्वेनैव क्रत्व-
P. 352-3 र्थत्वं वक्तव्यमित्याशयेन शङ्कते—**नन्विति**। तदभिधायकं इष्टसाधनत्वेन तदभिधायकम्। **ज्ञायत इति**। प्रयोगविधिरूपेण तेन प्रवृत्तिविषयता ज्ञायते। अङ्गजातमित्यर्थः। ततश्च विध्यर्थत्वमेव क्रत्वर्थशब्देन व्यवह्रियत इति भावः।

एवं पुरुषार्थस्वरूपं प्रदर्श्य, प्रकृते अध्ययनादेः पुरुषार्थत्वाभावान्न तत्र नियमविधिः संभवतीति वक्तुं—**न चेत्यादिटीका**। तत्र वेदार्थज्ञानमात्रस्य पुरुषार्थत्वाभावेऽपि फलवत्कर्मानुष्ठानशिरस्कस्य वेदार्थनिश्चयस्य पश्वादिवत् पुरुषार्थत्वात्, तत्र नियमविधिरस्त्विति शङ्कते—**मा भूवन्निति**। **टीकायां**
P. 352-5 **तस्माच्छब्दः** प्रकरणसिद्धार्थपरामर्शीत्याशयेनाह—**यस्मादिति**। न्यायेन त्रैवर्णिकानामेवाधिकारात् शूद्रशब्दो लाक्षणिकोऽस्त्विति शङ्कां निराकर्तुं **तस्माद्यथेति टीका**। तत्र विधिगतत्वेन निषादस्थपतिशब्दस्य निषादाधिकारपरत्वेऽपि तद्विलक्षणस्य शूद्रशब्दस्य, कथं शूद्राधिकारपरत्वमित्याशङ्क्य, विध्यपेक्षितोऽधिकारी यावन्न्यायेन त्रैवर्णिको निश्चीयते तावत् झटिति प्रवृत्तेन विधिनेव वाक्यशेषेणापि, तन्निश्चयात् न न्यायावतार इत्येतत्तुल्यमित्याशये-

नोक्तम्—**वचनसामर्थ्यादिति** । फलशिरस्कतया पुरुषार्थे अर्थावबोधे अध्ययननियमविधिः, नियमादृष्टस्य च तत्साध्ये फले उपयोग इति सिद्धान्तटीकाभिप्रायमाह—**वाक्यप्रकरणयोरिति** । P. 352-8

**टीकायां—स्वाध्यायेनाधीयीतेत्येवमर्थकः कल्प्यतां किं वेत्यर्थः** । **अनुष्ठानत इति** । अनुष्ठानेनेत्यर्थः । **अवाप्तिरिति** । अक्षरावाप्तिरित्यर्थः । **सुवर्णेनेति कृत्वेति** । सुवर्णेन हिरण्येन बिभृयादिति कृत्वा आर्थवादिकं भ्रातृव्यदौर्वर्ण्यं फलं कल्प्यत इत्यर्थः ।

**टीकायां—न्यायस्य चेति** । विचाराहित्यरूपस्य कर्मब्रह्मविषयोः साम्यादित्यर्थः। **सिद्धान्ते त्विति** । वाक्यस्यार्थबोधे जनयितव्ये तात्पर्यानपेक्षणादिति P. 353-4 भावः। बाधकसद्भावाद्विधेयसामर्थ्यादेव त्रैवर्णिकाधिकारिलाभेन विध्यनपेक्षितत्वाच्च, शूद्राधिकारस्य न प्रमितत्वमिति परिहरति—**अत आहेति** । **प्रमाणान्तरेण बाधकप्रत्यये असत्यन्यपरादपि वाक्यादवगम्यमान इति टीकान्वयः** ।

असति बाधके अन्यपरादर्थप्रतीतावपि, तस्य प्रमितत्वं प्रयोजनाधीनमिति, **विधिना चापेक्षित** इत्यनेन सप्रयोजनतोक्तेत्याह—**असतीति** । आख्यायिकानुक्रमणं शूद्रशब्दावयवार्थसद्भावप्रदर्शनायेत्याह—**शूद्रशब्दस्येति** । **जानश्रुतिरिति** । 'अत इञ्'इत्यनेन सूत्रेणेञ्प्रत्यय इति भावः । **पुत्रसंज्ञस्येति** । राज्ञ इत्यर्थः । तथा चानृषित्वात् "अनृष्यानन्तर्ये बिदादिभ्योऽञि"त्यनेन सूत्रेण बिदादित्वादनन्तरापत्ये, अञ्प्रत्यये पौत्र इति रूपमित्यर्थः ।

**तस्यापत्यमिति** । अस्मिन्नर्थे "हरितादिभ्योऽञि"ति सूत्रेण फक्प्रत्यये पौत्रायण इति रूपमिति भावः । तथा च छान्दोग्यभाष्यम्—पुत्रस्य पौत्रः पौत्रायण इति ध्येयम् ।

अनुग्रहप्रकारमेवाह—**उत्तमविधेति** । **यदिति** । अज्ञानात् सक्तिं करोषि चेत् , तदानीमपि त्वां मा धाक्षीदित्यर्थः । श्रुतौ धाक्षीरिति मध्यमपुरुषप्रयोगो व्यत्ययेनेति भावः ।

प्रथमान्तस्य वरकशब्दस्य कथमन्वय इत्यत आह—**एष तावदिति** । **टीकायां सन्तमित्यस्यैव** प्राणिमात्रमित्यर्थः । एतदित्यस्य तु आत्थेति क्रियया अन्वय इत्याह—**एनमल्पमिति** । कमुद्दिश्यैतद्वचनमात्थेत्यर्थः । P. 353-10

P. 354-1 **क्वनिपि कृत इति ।** ततश्च जकारस्य कुत्वे युग्वेति रूपमित्यर्थः । अपारत्वे हेतुमाह—**चिन्तेति ।** ब्राह्मणमित्येव सिद्धेऽपि गन्तोच्चारणं[1] यन्तारं प्रति चिह्नतया वेषोपदेशार्थमित्याह—**ब्राह्मणवेषमिति ।** नडादिभ्यः फगित्यनेन गोत्रापत्ये फक्प्रत्यये सति ब्राह्मणवंश्यत्वावगमादर्थात् ब्राह्मणवेषत्वमप्यवगम्यत इति भावः ।

**धनेच्छेति ।** धनमात्मन इच्छतीति, विग्रहे, 'सुप आत्मनः क्यजि'ति क्यजन्ता'दप्रत्ययादि'ति स्त्रियामकारप्रत्यये सति, निष्पन्नत्वादिति भावः । **निष्क-व्याख्येति ।** उत्तरत्र हारेत्वेति निर्देशादिति भावः । **अश्वतरी**—अश्व-गर्दभजातिद्वयसमुत्पन्ना । आहरे पदयोरानर्थक्याभावादाह—**त्वा इत्यस्येति ।**

P. 355-1 त्वा(मि)इत्यनेन निर्दिष्टस्येत्यर्थः । **अस्ति संबन्धी इति ।** इत्वशब्दनिर्दिष्टस्य शकटस्येति भावः ॥ ३४ ॥

उत्तरसूत्रतात्पर्यमाह—**एवमिति ।** ननु कापेययाज्यत्वप्रत्यभिज्ञाना-दभिप्रतारी चित्ररथ एवास्तु । किमिति तद्वंश्यत्वेन चैत्ररथित्वमित्याशयेन शङ्कते—**नन्विति । नामभेदादिति ।** प्रथमावगतिकालीनस्य नाम्नो भेदक-त्वादिति भावः । व्याप्त्यभावेऽप्यसति बाधके, सन्दिग्धार्थनिर्णायकं लिङ्गमिति परिहरति—**तथापीति ।**

**क्षत्रियत्वनिश्चयादिति ।** वैश्यात् ब्राह्मण्यामुत्पन्नस्य क्षत्रराजान्तः पुररक्षणे विनियोगादिति भावः । **प्रष्ठस्येति** पाठे वदान्यानां प्रष्ठो अग्रगामीति स्पष्टोऽर्थ इति मत्वा, वदान्यपृष्ठस्येति पाठं व्याचष्टे—**अन्ये वदान्या इति ।** यत्तच्छब्दाध्याहारेण टीकां योजयति—**अर्थसंभवे चेति** ॥ ३५ ॥

ननु संस्कारपरामर्शादित्यादिसूत्रमध्ययनस्य संस्कारकर्मत्वसाधनार्थत्वेन

P. 356-4 किमिति न व्याख्यायत इत्यतः आह—**आद्यसूत्र इति ।** शूद्रशब्दस्य रूढिप्रच्याव-कन्यायोपन्यासमन्तरा योगार्थप्रदर्शनायोगाच्छुगस्येति सूत्रेणैव संस्कारत्वमध्य-यनस्य तात्पर्येणैव सूचितमित्यर्थः ।

किं विद्याङ्गमुपनयनमेव नास्तीति शूद्रस्याधिकारं ब्रवीषि ? किं वा विद्याङ्गोपनयनसद्भावेऽपि यस्यां विद्यायां उपनयनं निषिध्यते, तस्यामधिकार

1, सयुग्वा-इति गन्त्रीसाहित्योक्तिरित्यर्थः ।

इति? नाद्य इत्याह—**उपनयनमिति। अपरं चेति।** अधीतवेदानामपि P. 357-1
पुनरुपनयनस्य बहुषु प्रदेशेषु श्रुतत्वादिति भावः। **उपसदनापरपर्यायमिति।** शिष्यकर्तृकोपसदनस्यापि गुरुकर्तृकस्वसमीपप्रापणान्ततया, उपनयनपर्यायत्वमुक्तम्।

न द्वितीय इत्याह—**हीनवर्ण इति।** तत्र न विद्याङ्गत्वमुपनयनस्य निषिध्यते। किन्तु, विद्याङ्गस्यैव सत उपनयनस्य हीनवर्णाचार्यस्थले निषेध इत्यर्थः।

"ब्रह्मपरा ब्रह्मनिष्ठा इत्यादिश्रुतिं व्याचष्टे—**ते हैत इति।** "तान् हानुपनीयैवे"ति श्रुतिं व्याचष्टे—**तानिति।** "त्रपुजतुभ्या"मिति स्मृतिं व्याचष्टे—**त्रपुजतुभ्यामिति।** वङ्गं सीसम्। 'द्विजातीना'मिति प्रतिग्रहवैलक्षण्यप्रदर्शनपरा नतु शूद्रस्य दानाभावपरेत्याह—**द्विजातीनामिति। न त्विति।** P. 353-4
न त्वेव वार्यते "दानं च दद्याच्छूद्रोऽपी"ति स्मृतेरिति भावः।

॥ इति अपशूद्राधिकरणम् ॥

---

## ॥ अथ कंपनाधिकरणम् ॥

### सू०॥ कंपनात् ॥ ३९ ॥

प्रत्युदाहरणसंगतिमाह—**शब्दादेवेति। प्रातर्दनविचारेणापीति।** P. 359-4
अगतार्थत्वमित्यनुषङ्गः। प्रमाणद्वयानुरोधेन प्राणशब्दो ब्रह्मपर एवास्त्विति शङ्कते—**स्यादेतदिति।** प्रबलश्रुतिद्वयानुरोधेन वाक्यप्रकरणयोर्बाध इति परिहरति—**अत आहेति।**

ननु वज्रशब्दस्य वायुविकारविशेषे शक्तस्य वायौ लाक्षणिकत्वात् कथं श्रुतित्वमित्यत आह—**वायुपरिग्रह इति।** वायुपरिग्रहे अशन्याकारपरिणतस्यैव वायोरुपास्यत्वात् वज्रशब्दमुख्यार्थविकारापरित्यागेनैव वायौ वृत्तत्वाभ्युपगमात् श्रुतिरित्यर्थः।

P. 359-6 ननु वायोरुपास्यत्वे प्राणशब्देनैव तस्य निर्दिष्टत्वात् वज्रशब्दानर्थक्यमित्यत आह—**प्राणश्रुतीति**। ननु प्राणे सति 'वज्रमुद्यत'मित्येवमेकान्वयसंभवे किमिति द्वयोरुपास्यत्वमिष्यत इत्यत आह—**न हीति**। बाधितत्वान्नायं वाक्यार्थ इति भावः। तर्हि वाक्यभेदः स्यादित्यत आह—**उभयोश्चेति**। व्यवहितस्यानुषङ्गेण संबन्धे आकाङ्क्षा कारणमिति सूचयितुं मण्डूकप्लुत्येत्युक्तमित्याशयेनाह—**यथेति**।

**शब्दादिति**। **प्रतिज्ञेति**। शब्दात् प्रमित इति प्रतिज्ञा सूत्रान्तरैर्व्यवहितापि कंपनादित्यनेन स्वकीयेन हेतुना सर्वशब्दात् सर्वजगत्कंपयितृत्वेन यः प्रमित सोऽत्र परमात्मैवेत्येवं संबध्यत इत्यर्थः।

पूर्वपक्षबीजमनुभाषते—**नन्विति**। प्रमाणद्वयोपोद्बलितत्वादेकापि श्रुतिः प्रबलेति परिहरति—**आहेति**। टीकागतप्रधानशब्दसूचितमङ्गं दर्शयति—**तस्येति**। आदिशब्देन प्रशासितृत्वादिकं गृह्यते। अनेन च दृष्टद्वारा प्रतिपत्त्युपायत्वसंभवान्नादृष्टार्थोपासनाविधिकल्पनाक्लेशोऽपीति सूचितम्।

P. 360-6 'यदिदं किञ्चे'ति श्रुतिं व्याचष्टे—**यदिदमिति**। कार्यस्य कथमुपादानभिन्ने चेष्टेत्याशङ्कां निराकर्तुं निस्सृतमित्युक्तमित्याशयेनाह—**तच्च तत एवेति**। **सूचयतीति**[1]। दृष्टान्तकथनेनेत्यर्थः। ततश्च सिद्धान्ते वज्रशब्दस्य सादृश्यलक्षकत्वात् पादद्वयमुख्यार्थत्वं पुरस्कृत्य पूर्वपक्षो वर्णित इत्याशयेनाह—**पूर्वपक्षे त्विति**।

तर्हि पूर्वपक्ष इव सिद्धान्तेऽपि तथा किमिति न व्याख्यायत इत्यत आह—**यदा त्विति**। ब्रह्मणि निमित्ते वज्रस्यैवोद्यमे हेत्वभावेन वज्रशब्दः छत्रिन्यायेन लाक्षणिकः स्यात्, प्राणे निमित्ते वज्रस्यैवोद्यमे तयोः प्रकृतिविकारभाववद्वज्रब्रह्मणोरसाधारणसम्बन्धाभावादित्याह—**तदापीति**। 'वायुरेव व्यष्टि'रित्यादिश्रुतिं व्याचष्टे—**वायुरेवेति**। **विशेष इति**। विशेषात्मना व्याप्तिरित्यर्थः। P. 361-4

---

१. एतेन कल्पतरौ भयहेतुत्वं रूपयतीति अपपाठः, सूचयति इति तु शुद्धः पाठ इति सूच्यते।

**सामान्यमिति**—सामान्यात्मना सूत्रात्मना व्याप्तिरित्यर्थः। 'तदेव शुक्र'मिति श्रुतिं व्याचष्टे—**शुक्रमिति**। 'भयादस्याग्निः' इत्यादिश्रुतिं व्याचष्टे—**अस्येश्वरस्येति**। **निर्दिष्टान्**[1] अग्न्यादीन्॥ P. 361-4

॥ इति कम्पनाधिकरणम्॥

---

## ॥ अथ ज्योतिर्दर्शनाधिकरणम्॥

### सू०॥ ज्योतिर्दर्शनात्॥ ४०॥

तत्र ज्योतिश्शब्दस्य प्रसिद्धत्वादिति भाष्योक्तं पूर्वपक्षहेतुमाक्षिपति—**नन्विति**। ब्रह्मणि ज्योतिश्शब्दो निरूढो, न तु रूढ इति परिहरति—**तत्राहेति**। ननु पूर्ववदिहापि वाक्यभेदपरिहाराय प्रकरणाच्छ्रुतिः बाध्यतामिति शङ्कते—**प्रकरणादिति**। प्रकरणोपोद्बलिता सर्वश्रुतिरेव तत्र बाधिकेति परिहरति—**तत्राहेति**। नन्विहापि तादृशी परश्रुतिरेव बाधिकास्तु, नेत्याह—**परमिति त्विति**। P. 361-9

सङ्गतिः प्रत्युदाहरणरूपा। अपहतिप्रसङ्गादित्यनुषङ्गे इति वक्तव्ये **पीडनप्रसङ्गादिति** तद्व्याख्याय निर्दिष्टम्[2]।

नन्वर्चिरपेक्षया कथमुत्कृष्टत्वमादित्यस्येत्याशङ्क्य, परशब्दोऽयमानन्तर्यार्थ इति टीकाभिप्रायमाह—**परमितीति**। आदित्यसमीपभवनमात्रेण न स्वरूपाभिनिष्पत्तिरित्यतो व्याचष्टे—**आदित्यस्येति**। आदित्यसमीपे यो ब्रह्मलोकः, तत्रेत्यर्थः। आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतमिति, पर्वद्वयमात्रान्तरितत्वादादित्यसमीपवृत्तित्वं ब्रह्मलोकस्येति भावः। P. 362-1

उपसंपत्तिः प्राप्तिः, साक्षात्कारो वा? आद्ये अभिनिष्पत्तिः प्राप्तिः साक्षात्कारो वा? तत्राद्ये उपसंपत्त्यभिनिष्पत्त्योरभेदान्न क्त्वाप्रत्ययोपपत्तिरित्युक्त्वा

---

१. कल्पतरौ निर्दिष्टानित्यपपाठः।

२. एतेन भामतीकल्पतर्वोः पीडनप्रसङ्गादित्यत्र अपहतिप्रसङ्गादिति पाठः आभोगकारसम्मतः ज्ञायते।

P. 362-4 द्वितीये पौर्वापर्यव्यत्ययान्न यथाश्रुतोपपत्तिरिति शङ्कापूर्वकमाह—**नन्वित्यादिना**। आद्यविकल्पद्वितीयमाशङ्क्य निराकरोति—**न चेति**। **उत्कर्षवाचीति**। ज्योतिश्शब्दस्य ब्रह्मपरत्वे तस्यानन्तर्ययोगेन तद्विशेषणस्य परशब्दस्योत्कर्षवाचित्वे ब्रह्मविदाप्नोति परमित्यादाविव तदुपसंपत्तेः फलत्वावगमेन प्राप्तिरूपत्वावश्यंभावादित्यर्थः। तिसृभिः श्रुतिभिरिति **टीकां** व्याचष्टे—**ज्योतिरितीति**।

**पूर्वं पूर्ववच्छ्रुतिसंकोचस्यात्राभावादिति टीकया** प्रत्युदाहरणसंगतिर्दर्शितेत्युक्तम्। इदानीमनया टीकया दृष्टान्तसंगतिरपि सूचितेत्याह—

P. 362-7 **अनेनेति**।

**नाडीखण्डेति**। **यद्यपि** नाडीखण्डस्य दहरविद्यान्तर्गतत्वात् अस्य च प्राजापत्यविद्यान्तर्गतत्वेन परस्परसंबन्धाभावादादित्यस्य च प्राधान्ये हेत्वभावान्न प्रधानस्याङ्गाकाङ्क्षस्य वचनं प्रकरणमादित्यस्यास्ति। **तथापि** क्रममुक्तिफलकदहरविद्याफलब्रह्मलोकप्राप्त्युपयोगितया आदित्यं दर्शयितुं नाडीखण्डः प्रवृत्तः। तत्र चादित्यप्राप्त्युपयोगितया नाडीनामादित्यरश्मिद्वारा लोकद्वयसंबन्धं "तद्यथा महापथ आतत" इत्यादिना प्रदर्श्य, "स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छती"ति तत्प्राप्तिमभिधाय, तस्य लोकद्वारत्वेन प्राधान्यं च प्रदर्श्य, तेन ब्रह्मलोकं प्राप्य भोगान् भुक्तवतो ज्ञानान्मुक्तिं दर्शयितुं "तद्यथैतानी"ति दृष्टान्तपूर्वक"मेष संप्रसाद" इत्यादिवाक्यशेषः प्रवृत्तः।

तत्र च परं ज्योतिरादित्यमुपसंपद्य, तत्समीपवर्तिब्रह्मलोके साक्षात्कारेण स्वेन रूपेणाभिनिष्पद्यत इत्युक्ते, कथं साक्षात्कार इत्याकाङ्क्षायां चतुर्मुखब्रह्मनिकटे, श्रवणादिप्रणाड्येति, तत्प्रकारोपदेशार्थं "य आत्मा अपहतपाप्मे"ति सन्दर्भः प्रवृत्त इति कृत्स्नमेतदादित्यस्यैव प्रकरणमिति, पूर्वपक्षाशय इति भावः।

तात्पर्यविषयत्वेन प्रकरणार्थः प्रधानम्। श्रुत्यर्थस्तु तदभावान्न प्रधानम्। ततश्च प्रमेयबलाबलज्यायस्त्वेन प्रकरणेनापि श्रुतिबाध इति सिद्धान्तटीकाभिप्रायमाह—**[उप]प्रक्रमेति**। प्रक्रमादिकं प्रकटयति—**अत्र हीति**। **अह्नः ख इति**। अहन् शब्दात् खप्रत्ययो भवति अहस्संघाते वाच्य इति सूत्रार्थः। **ईनादेशादिति**। आयनेयीनीत्यादिसूत्रेण खकारस्येनादेशे, टिलोपे चाहीनशब्दो निष्पन्न इवि भावः। **स्वरार्थमिति**। ईनिति प्रत्ययस्य आद्युदात्तश्चेति सूत्र-

विहिते स्वरे अहीनशब्दस्य मध्योदात्तत्वसिद्ध्यर्थमित्यर्थः । अन्यथा तस्य रूढ-शब्दस्य प्रातिपदिकस्वरेणान्तोदात्तत्वमेव स्यादिति भावः ।

ननु पूर्वतन्त्रे उत्कर्षस्य सिद्धान्तितत्वात्, कथं टीकायामनुत्कर्षप्रदर्शन-मित्यत आह—**अहीनशब्दस्येति** । भाष्यकारसिद्धान्ते अननुज्ञातमंशमाह— P. 363-3 **द्वादशोपसत्ताया इति** । तर्हि, प्रकरणादनपकृष्टं सदत्रैव स्थित्वा, अहीनोद्देशेन द्वादशोपसत्तां विधत्तामित्याशङ्कां निराकर्तुमाह—**प्रतिज्ञाद्वयमिति** । **नापकृष्येत** न पृथक्क्रियेत । **अपकृष्टमिति** । प्रकरणादित्यनुषज्यते । तत उत्कृष्टं च सदित्यर्थः । **मध्ये प्रकृतासंगतेति** । प्रकरणादपकर्षेण प्रकरणसंबन्ध्यर्थाप्रतिपादकत्वेऽपि पदसामर्थ्यसिद्धस्य द्वादशोपसत्ताविधायकत्वस्य त्यक्तुमशक्यत्वादिति भावः । **औचित्येन** लाघवेन । तदेवाह—**अहीन इति** । समर्थनमेवाह—**प्राप्तत्वादिति** ।

मालिकारूपेण कण्ठे धारणं **निव्यानमिति** केचित् । नाभिदेशे बन्धनमित्यन्ये । तदुभयमप्याश्रित्याह—**कण्ठलंबीति** । न्यायविरोधात् जैमिनीयं न्यायसूत्रमन्यपरमित्याशयेनाह—**द्वादशोपसत्ताया इति** । फलितमाह—**तदेवमिति** । P. 363-19

इष्टानां देवतानामनुस्मरणाख्यं, यदनुमन्त्रणं, तन्मन्त्राणामित्यर्थः । प्रकरणे कथञ्चिदप्यन्वयाभावादुत्कर्ष इत्याशयेनाह—**दार्शपूर्णमासिकेति** । न केवलं प्रकरणे अनन्वयादुत्कर्षः । किन्तु प्रकरणान्तरस्थस्याकाङ्क्षाबलादपीत्याशयेनाह—**यत्र चेति** । प्रकृतानन्वयान्यत्रोपयोगौ ज्योतिर्वाक्येऽपि तुल्याविति शङ्कते—**अस्तु तर्हीति** । **इह त्वित्यादिटीकावाक्यस्यैकान्वये** हेतोरेव प्रदर्शनेन प्रतिज्ञा न निर्दिष्टा स्यादित्यत आह—**तुशब्द इति** ।

एवमपि ज्योतिश्शब्दस्य न परब्रह्मपरत्वमिति शङ्कते—**नन्विति** । P. 364-1 कृत्स्नस्यापि वाक्यस्य, मुख्यार्थत्यागप्रसङ्गान्न स्तावकत्वमिति परिहरति—**अत आहेति** । निराकृतमपि दूषणान्तराभिधानाय, पुनः शङ्कते—**अस्तु तर्हीति** । समुच्चयशङ्कां निराकर्तुं दृष्टार्थमाह—**उपसद इति** । समुच्चयपक्षमभ्युपेत्यापि दूषणमाह—**समुच्चय इति** । इष्टापत्तिं वारयति—**तिस्र एवेति** । पदद्वयानर्थक्यापातादपि न विधिरित्याह—**अपि चेति** । P. 364-7

ननु सिद्धान्ते स्तुतिसिद्ध्यर्थमहीनपदावश्यंभावेऽपि साह्वपदं व्यर्थम् । त्रित्वस्य प्रकरणादेव ज्योतिष्टोमगामित्वादित्यत आह—**यदा त्विति** । **आनन्तर्यादिति** । प्रकरणाद्वाक्यस्य बलीयस्त्वादित्यर्थः । ज्योतिर्वाक्ये तु, न स्तावकत्वम् । बाधकाभावादित्याह—**ज्योतिर्वाक्ये त्विति** । पूर्वं प्रमेयबलाबलज्यायस्त्वेन प्राकरणिकं ब्रह्मैव ज्योतिरित्युक्तम् । इदानीं प्रमाणबलाबलज्यायस्त्वेऽपि, प्रकरणस्य प्राबल्यमाह—**प्रकरणादिति** । अत एव व्रीहीन्प्रोक्षतीत्यादौ, श्रुतिस्वारस्येन प्रोक्षणस्य व्रीहिस्वरूपार्थत्वे, आनर्थक्यं स्यादिति, प्रकरणानुरोधेन व्रीहिपदमपूर्वीयस्वरूपलक्षकमिति भावः । **उक्तत्वादिति** । स्तुतिरप्यनर्थकप्रायेति भावः ।

P. 364-9

आदित्यपक्ष एव प्रकरणानुगुण्यमिति शङ्कते—**नन्विति** । अपिरेवकारार्थकः । **उक्तमिति** । तथाच नाडीखण्ड इत्यादिभाष्यगतं पूर्वपक्षोपसंहारटीकायामुक्तमित्यर्थः । आदित्यस्य दहरविद्याप्रकरणस्थत्वात् द्वारत्वाच्च न प्रकरणित्वमित्याह—**दहरविद्याफलमिति** । ज्योतिर्वाक्यस्य भिन्नप्रकरणस्थत्वादपि नादित्यवाक्यसंबन्ध इत्याशयेनाह—**इदं त्विति** । नन्वादित्यप्रकरणानुरोधेन दहरविद्याया एवोत्कर्षात् न प्रकरणस्थत्वमित्यत आह—**दहरविद्या चेति** । प्रथमप्रस्तुतत्वाद्दहरविद्याया एव प्रकरणमिति भावः ।

P. 364-13

ननु सत्यं दहरविद्या प्रस्तुता । किन्तु, तदपेक्षितमार्गकथनप्रणाड्या, नाडीखण्डमारभ्य, परमपुरुषार्थमोक्षोपयोग्यादित्यप्राप्तिरभिहितेति भवत्यादित्यस्य प्रकरणमित्याशयेनाशङ्कते—**नन्विति** ।

फलपरत्वासिद्धेरन्यप्रकरणशेषत्वमेवेति परिहरति—**तत्र वक्तव्यमिति** । अव्यवहितपूर्वकालतायामेव क्त्वाश्रुतेराञ्जस्यान्न त्वत्पक्षेऽपि तच्छ्रुत्युपपत्तिरित्याह—**आदित्यमिति** । **प्राप्तेति** तृजन्तः शब्दः । स इति सर्वनामश्रुतेः प्राप्तृप्राप्यसाधारणत्वेऽपि प्रत्यभिज्ञालिङ्गेन प्रकृतस्यैव परामर्शो न युक्त इत्याशयेनाह—**परत्वेनेति** ।

P. 365-3

प्रकरणात् ज्योतिश्शब्दः स्वार्थं परित्यज्य ब्रह्मणि वर्तत इति भाष्यमनुपपन्नम् । प्रकरणाच्छ्रुतिबाधायोगात् अतो विषममिदं भाष्यमिति स्वयं व्याचष्टे—

भाष्य इति[1] । तथा च नाडीखण्ड इत्यादिभाष्यगतां(मय) यत्रैतदित्यादिश्रुतिं P. 365-4
व्याकुर्वन् योजयति—अथवा एता इति ।

॥ इति ज्योतिर्दर्शनाधिकरणम् ॥

---

## ॥ अथाकाशार्थान्तरत्वाधिकरणम् ॥

### सू०॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

तद्वदत्रेति टीकोक्तं व्यतिरेकदृष्टान्तं विशदयति—**सर्वाणीति** । उत्पत्तेरित्यस्यापि दर्शनादित्यनेनान्वयः । **अकस्मादिति** । टीकोक्तं पूर्वाधिकरण-वैषम्यं दर्शयति—**पूर्वत्र हीति** । लिङ्गोपोद्बलिता ब्रह्मश्रुतिरेव रूढिपरित्यागे P. 366-3 कारणमित्याशयेन शङ्कते—**तर्हीति** । **अन्यत्वमिति** । अन्तराशब्दोक्तमध्यत्वो-पलक्षितं सारत्वमित्यर्थः ।

भिन्नवाक्यस्थत्वान्नाकाशश्रुतित्यागे कारणमिति परिहारटीकाभिप्रायमाह—**नामरूप इति** ।

ननु "न तु निर्वोढैव ब्रह्म"त्यनेन कथमाकाशस्य ब्रह्मत्वनिषेधः । अन्त-रालस्य ब्रह्मणो निर्वोढृत्वेन तन्निषेधो वा कथमित्यतो व्याचष्टे—**निर्वोढेति** ।

प्रथमं तावदनन्यथासिद्धं ब्रह्मलिङ्गं सिद्धान्तियुक्ति **नामरूपमात्रेत्या-दिटीको**पपादितामाह—**अभिधानेति** । शब्दस्वरसावगतंसकलनामरूपेत्यर्थः । **नियन्तृत्वमिति** । अस्येदं वाच्यमिति नियमनरूपव्याकर्तृत्वस्यैव तन्निर्वाह-कत्वरूपत्वादिति भावः । अवकाशदातृत्वमपि भूताकाशस्य न सर्वत्र । स्वात्मनि तदभावादिति सूचयति—**सत्यपीति** ।

ह वै नामेति निपातसमुदायेन प्रसिद्धिद्योतकेन श्रुत्यन्तरप्रसिद्धनामरूप-व्याकर्तृत्वशालिब्रह्मैव प्रत्यभिज्ञाप्यत इति प्रत्यभिज्ञालिङ्गमपि दर्शयितुमने-नेत्यादिटीकेत्याह—**नामरूपेति** । P. 366-8

---

१. कल्पतरौ 'भाष्ये कारणादि'ति इति पाठोऽशुद्धः प्रकरणादाविति शोधनीयम् । एवं "अथ या एता इति नाडीखण्डः" इति शोधनीयम् ।

P. 367-1 व्याकर्तृत्वस्य जीवधर्मत्वान्न ब्रह्मप्रत्यभिज्ञापकत्वमिति शङ्कते—**नन्विति**। **जीवः कर्तेति**। तस्य परिच्छिन्नत्वेन प्रवेशसंभवादिति भावः। अहं व्याकरवाणीति ब्रह्मसंकल्पानुरोधेन ब्रह्मण एव जीवभावमापन्नस्य, व्याकर्तृत्वात् जीवे प्रतीयमानमपि तद्ब्रह्मण एवेति परिहाराभिप्रायमाह—**जीवस्येति**। एकवाक्यत्वलिङ्गं, यच्छब्दश्रुतिं ब्रह्मशब्दश्रुतिं च दर्शयितुं **एवं चेत्यादिटीका**। सा स्पष्टत्वान्न व्याख्याता।

॥ इति आकाशार्थान्तरत्वाधिकरणम् ॥

---

## ॥ अथ सुषुप्त्युत्क्रान्त्यधिकरणम् ॥

सू०॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

सू०॥ पत्यादिशब्देभ्यः ॥ ४३ ॥

नन्वङ्गुष्ठमात्रः पुरुष इत्यत्र जीवानुवादो ब्रह्मभावबोधनार्थ इति, शब्दादेव प्रमित इत्यत्र निर्णीतम्। ततश्च कथमिह जीवप्राधान्यशङ्केत्यत आह—**अङ्गुष्ठमात्र इति**। आक्षेपसंगतिमाह—**पूर्वत्रेति**। महानज इत्यादीत्यादिपदेन सर्ववशित्वादिकं गृह्यते। **संपिण्डितत्वं** घनीभावः। तत्र कथं विषयाभावस्य हेतुत्व-
P. 367-8 मित्यतः आह—**संपिण्डितेति**।

**कर्तृस्तुतिरिति**। 'स न साधुना कर्मणा भूयान्' इत्यादिभिः पदसन्दर्भैः उपचयापचयराहित्येन नित्यो जीव इत्यादिप्रकारेण स्तूयत इत्यर्थः।
P. 368-1 विकल्पस्य प्रसक्तिं संपादयितुं विस्मरणशीलस्य शङ्कामाह—**नन्वसिद्ध इति**। वाक्यानर्थक्यपर्यवसायित्वात् लाघवमकिञ्चित्करमित्याशयेन परिहरति—**नेत्याहेति**। अभ्यासाज्जीवपरत्वे निश्चिते, प्रज्ञाप्रकर्षादिकं जीव एव कथञ्चिन्नेयमिति शङ्कते—**नन्वभ्यासादिति**। अन्यथासिद्धोऽभ्यास इति परिहरति—**नेत्या-**
P. 369-2 **हेति**। **अनर्थकमिति**। भिन्नप्रकरणस्थत्वादसङ्गत्वादिकीर्तनविरोधाच्च न स्तुतिरपि प्रयोजनमिति भावः।

**शक्तिरिति**। प्रभुत्वशक्तिरित्यर्थः। तथैव करणं व्यूह्यावस्थापनम्। P. 370-1
ततस्सर्वाधिपतित्वस्य भेदमाह—**कृतं जगदिति**[1]। कतम आत्मा योऽयं विज्ञान-
मयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष इति श्रुतिं व्याचष्टे—**विज्ञानमिति**। **तत्प्राय
इति**। अभ्यासेन तद्भावमापन्नः इत्यर्थः। प्राचुर्ये मयडिति भावः। आधारा-
धेयभावसूचितं व्यतिरेकं प्रकटयति—**प्राणबुद्धीति**। 'प्राज्ञेनात्मनान्वारूढ
उत्सर्जन्याती'ति श्रुतिं व्याचष्टे—**अन्वारूढ इति**। 'ध्यायतीव लेलायतीवे'ति
श्रुतिं व्याचष्टे—**बुद्धाविति**। भाष्यस्थबुद्धान्तशब्दार्थमाह—**बुद्धान्तो जाग्र-
दिति**। 'अत ऊर्ध्वं'मित्यादिश्रुतिं व्याचष्टे—**अत इति**। 'अनन्वागतस्तेने'-
त्यादिश्रुतिं व्याचष्टे—**तेनेति**। 'तीर्णो हि तदे'त्यादिश्रुतिं व्याचष्टे— P. 370-8
**तदेति**।

॥ इति सुषुप्त्युत्क्रान्त्यधिकरणम् ॥

इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डभट्टमहोपाध्यायतनूभवेन
श्रीमन्नारायणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशगृह्यमाणेन
लक्ष्मीनृसिंहचरणारविन्दचञ्चरीकेण लक्ष्मीनृसिंहेन
विरचितायां कल्पतरुप्रदीपिकायां
आभोगाख्यायां प्रथमाध्यायस्य
तृतीयः पादः ॥

---

१. ततश्च कल्पतरौ प्रकृतं जगदित्यपपाठ इति सूच्यते।

|| श्रीः ||

|| श्रीलक्ष्मीनृसिंहाय नमः ||

# || अथ प्रथमाध्यायस्य चतुर्थः पादः ||

## || अथ आनुमानिकाधिकरणम् ||

सू०|| ओम्—आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च || १ ||

सू०|| सूक्ष्मं तु तदर्हत्वात् || २ ||

सू०|| तदधीनत्वादर्थवत् || ३ ||

सू०|| ज्ञेयत्वावचनाच्च || ४ ||

सू०|| वदतीति चेन्न प्राज्ञो हि प्रकरणात् || ५ ||

सू०|| त्रयाणामेव चैवमुपन्यासः प्रश्नश्च || ६ ||

सू०|| महद्वच्च || ७ ||

नन्वत्र परशब्दः श्रैष्ठ्यवचनः, न पूर्वकालत्ववचनः। 'इन्द्रियेभ्यः परा ह्यर्था' इत्यादाविन्द्रियापेक्षया अर्थादीनां तदयोगात्। तथा च कथं टीकेत्यत आह—अर्वाचीनेति। सत्यमुत्कृष्टत्वं परशब्दार्थः। स एव चोत्कर्षः, क्वचिद्वशीकरणसामर्थ्येन, क्वचिद्व्यवहारमूलत्वेन, क्वचिन्नियतपूर्वकालवर्तित्वेन, क्वचिच्च सूक्ष्मत्वेन। ततश्च महतः परमव्यक्तमित्यत्र योग्यतया अव्यक्तस्य [1]नियतपूर्वत्वेन श्रैष्ठ्यं ब्रुवन् परशब्दः कारणत्वमर्थादाहेत्यर्थः।

P. 371-2 एवमपि गतिसामान्यसूत्रविरोधान्न विचारारंभ इति शङ्कते—नन्विति। गतिसामान्यसूत्रविषयादत्रत्यो विचारविषयो भिन्न इत्याह—असाधीति। श्लोकं व्याचष्टे—पूर्वत्र हीति। ईक्षत्यधिकरण इत्यर्थः। समन्वयविषय इति। वेदान्ततात्पर्यविषय इत्यर्थः। एकेशब्दप्रयोगलब्धमर्थमाह—काचित्कश्चेति।

P. 372-2 विषयादिकं दर्शयति—अव्यक्तपदमिति।

---

1. R नियतपूर्वकालशब्देन।

ननु स्मार्तक्रमश्रौतपारिशेष्याभ्यां संशय इत्ययुक्तम्। श्रुतेः प्रबलत्वादित्यत आह—**सांख्यानामिति**। यद्यपि सांख्यमतेऽपि 'त्रिविधं प्रमाणमिष्ट' मिति सप्तत्यामुक्तत्वात् शब्दोऽपि पृथक्प्रमाणमेव **तथापि** 'तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्ध'मित्यनुमानासिद्धस्य स्वर्गापूर्वदेवतादेरेवाप्तागमैकप्रमाणकत्वाभ्युपगमेन प्रधानादेरनुमानसिद्धत्वे, तत्सिद्धानुवादित्वेन 'महतः पर'मित्यादिश्रुतेः सांख्यस्मृतेश्च तुल्यतेत्यर्थः। P. 372-3

**भाष्य इति**। स्मृतिप्रसिद्धेरिति भाष्य इत्यर्थः। प्रधानावस्थायां शान्तादिशब्दहीनत्वे को हेतुरित्याशङ्क्य, सत्वोद्रेकादेः तद्वाच्यस्य तदानीमभावादित्याशयेनाह—**शान्त इति**। **सात्विक इति**। सत्वगुणपरिणाम इत्यर्थः।

'भेदानां परिमाणा'दित्यादिसांख्यश्लोकं व्याचष्टे—**भेदानामिति**। ननु घटकारणस्य मृदादेः व्यक्तत्वात् अव्यक्तकारणकत्वसाध्यविकलो दृष्टान्त इत्यत आह—**सत्कार्यवाद इति**। कारणे मृदादौ सदेव घटादिकार्यम्। तत्रासतोऽपि तत उत्पत्तावतिप्रसङ्गात्। असतःसत्त्वसंपादनायोगात् कार्यासंबन्धिनस्तदुपादानत्वायोगात्। शक्तेरपि शक्यसंबन्धेनैव नियामकत्वाच्च। न चैवं मृदवस्थायामपि घटोपलंभप्रसङ्गः। चूर्णपिण्डकपालाद्यवस्थाभिर्विरोधिनीभिरावृतत्वात्। दण्डचक्रादिभिः विरोध्यवस्थापनये तु घटावस्था प्रतीयत एव। एवं च सत्यस्मिन् वादे अव्यक्तकार्याश्रयत्वात् कारणमव्यक्तमिति, न साध्यवैकल्यमित्यर्थः।

**अन्यत्रापीति**। उत्तरहेतुष्वपीत्यर्थः। **तदनुरागेति**। सुखदुःखमोहात्मकाव्यक्तानुरक्तबुद्धिगम्यत्वादित्यर्थः। यद्यपि महदादिवत् घटादेरपि सुखदुःखमोहात्मकत्वेन, विशेषव्याप्तिरपि सुवचा। **तथापि**, सांख्यवाचस्पत्यानुरोधेन सामान्यव्याप्तिमाह—**यद्येनेति**। यद्येन समन्वितं, तत्तत्कारणकम्। यथा मृदन्वितं घटादि मृत्कारणकमित्यर्थः। **शक्तितः प्रवृत्तेरि**त्यनेन शक्तकारणजन्यत्वं हेतुरुक्त इत्याह—**कारणशक्तित इति**। अनेन हेतुना कथमव्यक्तकारणकत्वसिद्धिरित्याशङ्क्य, शक्तेः अव्यक्तकार्यरूपत्वात् शक्तस्याप्यव्यक्तत्वमित्याशयेनाह—**कारणगतेति**। P. 373-1 P. 373-2

---

१. एतेन कल्पतरौ "तावेव प्रतिज्ञादृष्टान्तौ इत्यतः पूर्वं 'अन्यत्रापि' इति पदं लेखकप्रमादात् गळितमस्माभिः पूरणीयमिति गम्यते।

**कारणकार्यविभागादित्यनेन** कारणाद्विभज्यमानत्वं हेतुरुक्तः, तस्य कथमव्यक्तकारणकत्वसाध्यसाधकत्वमित्यत आह—**अव्यक्तेति**। तत्र सत एव तस्मात् प्रादुर्भावः, नासत इत्यर्थः। **वैश्वरूप्यं**—विश्वरूपम्, स्वार्थे ष्यञ्। **विश्वरूपस्य** नानारूपस्य, **अविभागात्** एकीभावादित्यर्थः। अनेन लीयमानत्वं हेतुरुक्त इत्याशयेनाह—**प्रलयावस्थायामिति**। अस्य साध्यसाधकत्वं कथमित्यत आह—**लीनानभिव्यक्तेति**। अन्यथा कथं अनन्तरकल्पे सत उत्पत्तिः स्यादिति भावः।

P. 373-3

सिद्धान्तटीकां व्याचष्टे—**अव्यक्तपद इति**। शाबरवाक्यार्थमधिकरणानुक्रमेण दर्शयति—**लोकवेदयोरिति**। **बोधकत्वोपपत्तेरिति**। अन्यथा वेदे वृद्धव्यवहाराद्यसंभवेन वैदिकपदानां शक्तिग्रहाभावे, बोधकत्वं न स्यादिति भावः। **टीकायां—सिद्धौषधवादिवाक्यवदिति**। सिद्धौषधवाचकानामग्निकुमारभूपत्यादिशब्दानां वैद्यकपरिभाषामात्रसिद्धा रूढिः यथा न वेदार्थनिर्णयोपयोगिनी, तथा साङ्ख्यपरिभाषामात्रसिद्धापीति तदर्थः।

P. 373-8

प्रकरणपरिशेषाभ्यां अव्यक्तशब्दस्य शरीरपरत्वप्रकारं दर्शयति—**अयं भाव इति**। तत्र प्रकरणबलादिन्द्रियादयो रूपकवाक्योपन्यस्ता एव गृह्यन्त इति वक्तुं प्रकरणं दर्शयति—**इह विष्णुपदमिति**। 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति। 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिः', इति च प्राप्यत्वेनं गतित्वेन च श्रवणादिति भावः। वशीकृतानामिन्द्रियाणामनुकूलत्वेन तत्प्रतिपत्त्यङ्गत्वमाह—**तत्प्रतिपत्तीति**।

ननु परत्वेन प्रतिपिपादयिषितपुरुषप्रतिपत्त्युपयोगित्वाविशेषात् सांख्याभिमतानामेव ग्रहणं कुतो न भवेदित्यत उक्तं **रथादिरूपितान्येवेति**। बुद्धिविपरिवृत्तेर्निर्दिष्टपदार्थसाम्याच्च, त एव गृह्यन्त इत्याह—**एवं स्थित इति**।

P. 374-2 आकाङ्क्षोपपादनेन शरीरप्रत्यभिज्ञायाः प्राबल्यं प्रकटयति—**तथा हीति**। **इतरथेति**। रथिरथादिरूपककल्पनस्य तद्वशीकारद्वारा पुरुषप्रतिपत्त्येकप्रयोजनकत्वादिति भावः।

---

१. मुद्रितभामत्यां 'औषधादिप्रसिद्धिवत्' इति दृश्यते। आभोगकाराभिमतः पाठो युक्ततरः।

**विषयानुद्दिश्येति**। स्रक्चन्दनवनितादीन् विषयानुद्दिश्य इन्द्रियहय- P 374-5
मार्गत्वमिन्द्रियैरात्मनो भोगे संपादनीये द्वारत्वं विधेयमित्यर्थः। '**इन्द्रियहया**' इत्यस्य बहुवचनान्तत्वात् अनुषक्तेन चलतीत्यनेनानन्वयमाशङ्क्याह—**चलन्तीतीति**। चलतीत्यस्य विभक्तिविपरिणामेन चलन्तीति रूपं संपाद्य, तस्याध्याहृतस्य पश्चात् संबन्ध इत्यर्थः। ननु श्रुतौ योगशब्दाभावात् कथं **योगो यथेति** टीकेत्यत आह—**युक्तमिति भावे निष्ठेति**।

ननु **टीकायां** प्रकरणस्वरूपकथनमनाकाङ्क्षिताभिधानमित्याशङ्क्य, प्रकरणात् परिशेषाच्चेति भाष्यव्याख्यानार्थस्य **प्रकरणपरिशेषाभ्यामिति टीका**-वाक्यस्य भाष्यगतश्रुतिव्याख्यानानन्तरं बुद्धिस्थत्वात्, तत्र शङ्कायां तन्निराकरणाय तत्कथनमित्याशयेनाह— **प्रकरणेति**। ननु लक्षणप्रविष्टा आकाङ्क्षा किंविष- P. 374-7
यिणीत्यत आह—**प्रधानस्येत्युक्त इति**[1]। कर्मब्रह्मकाण्डद्वयव्यापित्वादिदमेव लक्षणं प्रकरणस्येत्याह—**काण्डद्वयेति**। इन्द्रियादीनामङ्गत्वं च परत्वज्ञानापेक्षितावधिज्ञानद्वारा विक्षेपनिराकरणद्वारा चेत्याह—**इन्द्रियादयश्चेति**।

**तत्प्राप्तावपीति**। परमपदप्राप्तावप्यङ्गमित्यर्थः। श्रुत्युक्तमसंयमं प्रतिपादयतो भाष्यस्य व्याख्याने को हेतुरित्याशङ्क्य, श्रुतेरपि वैयर्थ्यं परिहर्तुं व्याख्येत्याशयेनाह—**यस्त्विति**। विशदीकरणप्रकारं दर्शयति—**संयमाभाव इति**। P. 375-1
किं परशब्द आहत्यैव कारणत्वं ब्रवीति ? किं वा अर्थात् ? नाद्यः। प्रायपाठविरोधादित्याह—**मनआदाविति**। द्वितीयं निराकुर्वन्नेवोत्तरटीकामवतारयति—**इहेति**। **गन्धरसनामेत्यत्र नामपदस्यार्थमाह—शब्द इति**।

तर्हि कथमेक एव शब्दो वाक्श्रोत्रयोरुभयोरपि विषय इत्याशङ्क्य, व्यङ्ग्यत्वग्राह्यत्वरूपभेदादित्याशयेनाह—**वागिति**। **तत्प्रत्यभिज्ञानादिति टीकाभिप्रायं** दर्शयन् व्याख्याबीजमप्याह—**आत्मानमिति**। **टीकायां** भोग्याधिकरणत्वेन बुद्धेः पूस्साम्यमुक्तम्। तदुपपादयति—**इन्द्रियद्वारेति**। अस्म- P. 376-1
दादिबुद्धेर्हिरण्यगर्भबुद्धेश्चाश्रयाश्रयिभावेन भेदादेव 'बुद्धेरात्मे'ति श्रुतौ पृथक्करणमित्युक्तम्—**अत एवेति टीकायां**।

---

१. अत्र कल्पतरौ अर्थादाकाङ्क्षा इति पाठः शोध्यः।

तत्र बुद्धिमात्रादिति मात्रचा बुद्ध्याश्रयत्वं व्यवच्छिद्यत इत्याशये-
P. 376-2 नाह—**अस्मदादीति** । परमार्थदृष्ट्या तथा निर्देश इति परिहरति—
**अत आहेति** । नियमने वाचः कर्मत्वात् द्वितीयालोप उक्त इत्याशयेनाह—
**भाष्योदाहृतायामिति** ।

ननु रूपकविन्यस्तत्वस्य शरीरविशेषणत्वेन, तद्वाचकस्य पदस्य पूर्वनि-
पाते, रूपकविन्यस्तशरीरगृहीतेरिति भवितव्यत्वात्, कथं सूत्रमित्याशङ्क्य,
तथात्वे रूपकाविन्यस्तमपि किञ्चिच्छरीरं परिकल्प्य, तद्व्यावृत्त्यर्थं विशेषणमिति
स्यात् । न च तत्संभवति । शरीरमात्रस्य रथत्वेन रूपितस्य प्रकृते ग्रहणाभ्युपग-
मात् । अतः शरीरभिन्नरूपकविन्यस्तग्रहणव्यावृत्त्यर्थतया शरीरस्यैव विशेषणत्वं
P. 376-3 विवक्षित्वा तथा निर्दिष्टं सूत्र इत्याशयेनाह—**शरीरमेवेति** ॥ १ ॥

'गोभिः श्रीणीत मत्सर'मिति श्रुत्यर्थमाह—**मत्सरमिति** । व्यवहितमपि
प्रकृतिविकारानन्यत्वमेवंशब्देन योग्यत्वात् परामृश्यत इत्याशयेनाह— **कार्येति** ।
नन्वस्फुटत्वस्यैवाव्यक्तपदप्रवृत्तिनिमित्तत्वेन प्रसिद्धत्वात् भाष्यटीकयोरनिर्व-
चनीयत्वमव्यक्तत्वमिति कथमुक्तमित्याशङ्क्य, प्रत्यक्षादिभिः प्रमाणैः स्पष्टमवगम्य-
मानाया अविद्याया अस्पष्टत्वायोगेन प्रमाणैः तत्त्वेन तदन्यत्वेन वा अनिरूप्यत्व-
P. 377-1 मेवाव्यक्तत्वं ग्राह्यमित्याशयेनाह **प्रमाणैरिति** । स्वयमेव व्याख्याबीजमप्याह—
**आधारवाचीति** । अविद्याधारत्वं च ब्रह्मणो नाभ्युपगम्यते **टीकाका-
रेणेति** भावः ।

नन्वविवेकख्यात्या कथं प्रधानवैयर्थ्यशङ्का ? अविवेकप्रतियोगित्वेनैव
तदवश्यंभावादित्यत आह—**पूर्वपूर्वेति** । [1]प्रधानेनेति पाठेऽपि शक्तिरूपेणा-
ज्ञानेनेत्येवार्थः । अव्यक्तमित्यव्याकृतमिति चैकवचनं श्रुत्या कथं निर्दिष्ट-
मित्यर्थः । निर्विकारस्य कथं प्रेरकत्वमित्यत आह—**अविद्येति** । निरवद्यमिति
श्रुत्या, अविशेषेण कामकर्मादीनामिवाविद्याया अपि प्रतिषिद्धत्वान्न ब्रह्मण्यविद्या
संभवतीत्याशयेनाह—**निरवद्यमिति** ।

एतेन—विद्यास्वभावत्वं यदि चिद्रूपत्वं, तदा जीवेऽप्यविद्या न स्यात् ।
P. 378-3 यदि वाक्यजन्यप्रमारूपत्वं तदा, ब्रह्मण्यसिद्धिरिति दूषणं परास्तमित्याह—

---

१. अज्ञानेनेति पाठान्तरम् ।

**एवं चेति**। निरवद्यश्रुतिर्बिंबविषया, न शुद्धचैतन्यविषयेति शङ्कते—**स्वरूपमिति**। **कल्पितत्वादिति**। तथा च तस्यैवावद्यत्वेन निरवद्यत्वं तत्र व्याहतमिति भावः। **स्वरूपस्यैवेति**[1]। तथा च न तस्याविद्याश्रयत्वमिति भावः। P. 378-3 P. 378-5

ननु बिंबप्रतिबिंबसाधारण्येन मुखमात्रस्य यथा दर्पणाद्युपाधियोगः, तथा चिन्मात्रस्याविद्यायोगः कुतो न भवेदित्यत आह—**मुखमात्रस्य त्विति**। मुखस्य परिच्छिन्नत्वेन, तेन साकं दर्पणस्य कार्त्स्न्येन योगसंभवेऽप्यपरिच्छिन्नेन ब्रह्मणा नाविद्यायाः कार्त्स्न्येन योगः संभवति। घटादीनां स्वोपहिताकाशादिप्रदेशेनैव संयोगदर्शनेन, प्रकृतेऽपि तथैव युक्तत्वात्। ततश्चाश्रयत्वमपि तस्यैवेति भावः। न केवलं निरवद्यत्वश्रुतिबलात् ब्रह्मणोऽविद्यानाश्रयत्वम्। किन्तु दृष्टान्तबलादपीत्याशयेनाह—**अपि चेति**।

मुखमात्रस्येव स्वरूपमात्रस्योपाधिसंबन्धः अस्मदभिमत एव, तदाश्रयत्वं तु परं नेष्यत इत्याशयेनाह—**अस्यैवेति**[2]। एवकारव्यवच्छेद्यमाह—**न त्विति**। ब्रह्मणोऽविद्याश्रयत्वमेव निरस्तम्। न तु तत्संबन्धसंभवोऽपीत्यर्थः। अविद्यासंबन्ध इत्येव वक्तव्ये, संभवोक्तिः बाधकाभावसूचनार्था। ततश्च योग्यतया जीव एवाविद्याश्रयः। न च जीवस्य सतोऽविद्याश्रयत्वं, तस्मिंश्च सति जीवत्वमिति, परस्पराश्रयत्वमिति वाच्यम्। यथा अविद्याया अविद्यात्वं स्वरूपावारकत्वं तत्संबन्धाधीनम्,-संबन्धश्चाविद्याधीन इति, परस्पराश्रयः अनादित्वेन परिह्रियते, तद्वत्प्रकृतेऽपीत्याशयेनाह—**इत्यनादीति**। P. 379-1

इदानीमविद्यानानात्वमभ्युपेत्य, तदतिरिक्तामीश्वरोपाधिं मायां ये मन्यन्ते, तन्मतमाह—**ये त्वाहुरिति**। **जीवभ्रमः** जीवाविद्या। **न स्यादिति**। निर्लेपस्य मायोपाधिमन्तरेण कामकृत्योः स्वातन्त्र्यलक्षणकर्तृत्वायोगादित्यर्थः। किञ्च, असाधारणैरज्ञानैः साधारणजगदारंभे हेत्वभावेन तदेकत्वानुभवविरोध इत्याह—**प्रतिजीवं चेति**। किञ्चैवमाकाशादेरज्ञातसत्वं न स्यात्। असाधारणदोषजन्यस्य प्रातीतिकत्वनियमादित्याह—**भ्रमजस्य चेति**। P. 379-2

---

१. कल्पतरौ स्वरूपस्यैव निरवद्यत्वादिति पाठो ज्ञेयः।

२. अयं प्रतीको मूले न दृश्यते। 'एवं ब्रह्मस्वरूपस्याविद्याश्रयत्वमेव निरस्यते, न तु अविद्यासंबन्धसंभवः' इति कल्पतरुपाठः आभोगरीत्या ज्ञायते। तद्रीत्या-एवमिति प्रतीकः॥ अहो सर्वत्र लेखकप्रमादः॥

किं ब्रह्मणो मायानभ्युपगमे विवर्तरूपः कामादिर्न संभवति? किं वा औपाधिकपरिणामरूपः? अथवा कामादेर्विवर्तत्वे, प्रपञ्चहेतुत्वायोग इति विकल्प्य, नाद्य इत्याह—अकामयतेति। जीवाविद्याविषयीकृतब्रह्मविवर्त इत्यर्थः।

P. 379-4

द्वितीयमनभ्युपगमेन परिहरति—न चेति। तृतीयं निराकरोति—विवर्तश्चेति। सर्प इव रज्जुसर्प इव। प्रतिमाणवकेति। उदात्तादिस्वरविशेषविशिष्टानुपूर्वीकवर्णसमुदायो वेदः। तत्र ध्वनिधर्माणामुदात्तादीनां वर्णेष्वारोपः। ततश्च प्रतिमाणवकवर्त्यविद्याकल्पितोदात्तादिवैषम्यस्य यद्वैशेष्यं[1] तेन क्लृप्तस्य, वेदस्य प्रतिमाणवकं भिन्नत्वेऽपि, यथा एकत्वप्रसिद्धिः, तद्वद्भिन्नानामपि प्रपञ्चानामेकत्वप्रसिद्धिरित्यर्थः। वैषम्यमाशङ्क्य, साम्येन परिहरति—अधिष्ठानेति।

ननु प्रपञ्चे सर्वत्र नाधिष्ठानैक्यम्। देहेन्द्रियादीनां जीवाधिष्ठानकत्वस्य ज्योतिरधिकरणटीकायामुक्तत्वादित्याशङ्क्य, वास्तवमधिष्ठानैक्यमस्तीत्याशयेनाह—सर्वप्रत्यक्त्वादिति। अज्ञातसत्वे च व्यावहारिकत्वं तन्त्रम्। न तु मायिकत्वम्। मायाभावादित्याशयेनाह[2]—अज्ञातसत्वमिति। असाधारणदोषजन्यस्य प्रातीतिकत्वनियमात् व्यावहारिकत्वमेव न स्यादित्याशङ्क्य, परिहरति—न चेति। एकाविद्यापक्षोक्तं दूषणमपि नास्मन्मत इत्याह—यच्चेत्यादिना।

P. 379-7

प्रत्युत मायाप्रतिबिंब एवेश्वर इति पक्षे मुक्त्यनुपपत्तिः। तथाहि 'सदेव सोम्येद'मित्यादिना जगत्कारणत्वेन लक्षितं यत्सत्यं ब्रह्म, तदैक्यप्रतिपादनेन तत्प्राप्तिर्मुक्तिरित्युक्तम्। एवं श्रुत्यन्तरेऽपि जगत्कारणत्वोपलक्षितब्रह्मप्राप्तिरेव मुक्तिरुक्ता। ततश्च, प्रतिबिंब एवेश्वर इति पक्षे, तस्यैव जगत्कारणतया, तस्य च कल्पितत्वेन असत्यत्वात्, कथं तत्प्राप्तिः मुक्तिः स्यात्? एवं तद्विज्ञानेन सर्वविज्ञानानुपपत्तिरपि, मिथ्याभूते कस्मिंश्चित् प्रतिबिंबे ज्ञाते, प्रतिबिंबान्तरवास्तवस्वरूपज्ञानायोगादित्याह—अपि चेति। असंभवे हेतुरवच्छेदादिति। पृथग्भावादित्यर्थः। कल्पितत्वादिति यावत्।

P. 379-9

१. A. यद्वैषम्यं।

२. R. मानाभावात्।

ननु त्वमतेऽपि ब्रह्मणो जगत्कारणत्वानुपपत्तिः। असंगोदासीनस्वभावस्य स्वतस्तदयोगादित्याशङ्क्य, जीवगताविद्यावृतस्य शुक्तिकादेः रजतादिविवर्तोपादानत्ववत्, ब्रह्मणोऽपि जगदुपादानत्वमुपपन्नमित्याह—**अधिष्ठाने त्विति**। P. 379-10 अन्यनिष्ठस्य कथमन्यावरणेन कार्यान्तरजनकत्वमित्याशङ्कां दृष्टान्तेन निराकरोति—**ग्रहीतृस्थाया इति**। **अत एवेति** टीकायामतश्शब्दस्य व्यवहितपरामर्शित्वमाह—**यत एवेति**। अविद्याया जीवाश्रयत्वाभावेन प्रबोधाभावस्य हेत्वपेक्षत्वेन च सतिसप्तम्याश्रयणमित्याशयेनाह—**उपाधिभूतेति**। P. 380-2

अविद्याया लयविक्षेपोभयहेतुत्वप्रदर्शनार्थं भाष्ये विशेषणद्वयमित्याशयेनाह—**टीकायां—शेरत इतीति**। अनादित्वेन पौर्वापर्यमात्रे निषेध्ये नियमनिषेधस्य किं प्रयोजनमित्यतो व्याचष्टे—**जीवाविद्ययोरिति**[1]। किं तयोः स्वाभाविकं पौर्वापर्यं? किं वा तदध्यासाधीनमिति विकल्प्य, प्रथमं निराकृत्य, द्वितीयं निराकरोति—**पौर्वापर्ये चेति**। जीवाविद्याध्यासयोरपि बीजाङ्कुरवदनादित्वान्न पौर्वापर्यनियम इति न तदधीनमपि नियतं पौर्वापर्यमित्यर्थः। विवक्षायां बीजं दर्शयन् व्याचष्टे—**तथापीति**। **उपचरितमिति**। पौर्वापर्यप्रत्यायकेन भाष्यगतेनाधीनशब्देनेत्यर्थः।

दूषणभाष्यतात्पर्यमाह—**टीकायां प्रकरणपारिशेष्ययोरिति**। शङ्का- P. 380-5 त्वसूचकाभावादाह—**टीकायां-शङ्कत इति**। **टीकायां—अव्यक्तपदमेवेति**। एतन्मते अव्यक्तपदस्य नानिर्वचनीयत्वमर्थः, येन स्थूलशरीरेऽपि तुल्यता स्यात्। किं तु सूक्ष्मत्वमित्यर्थः। प्रधानत्वात् वाक्यस्य तदनुरोधेन तदन्तर्गतं पदमन्यथा नेयमिति परिहरति—**टीकायां—निराकरोति—नेति**।

**टीकायां—प्रकृतहानीति**। शरीरमात्रस्य प्रकृतस्य हानिः। तद्विशेषस्याप्रकृतस्य प्रक्रियेत्यर्थः। **एकवाक्यत्वे** इत्यनेनैवाव्यवहितेनान्वयलाभार्थमाह—**अप्रसंगेनेति छेद इति**। शरीरद्वयेऽपि लक्षणाभ्युपगमात् न वैरूप्यमिति परिहरति—**अत आहेति**। तदेव विशदयति—**अन्नोपघातीति**।

---

१. जीवाव्यक्तयोरिति कल्पतरौ मुद्रितः पाठः। स युक्ततरः। अत्र कल्पतरौ 'जीवाव्यक्तयोरनादित्वेन नियतं पौर्वापर्यं नास्तीति' इति भामतीप्रतीकधारणम्। तदनन्तरञ्च 'न पौर्वापर्यं, पौर्वापर्ये च न तन्नियम इति यद्यपि' इति पाठ इति ऊह्यते॥

कथमव्यक्तशब्दस्य सूक्ष्मवाचकत्वाभ्युपगमेन लक्षणाङ्गीकारः ? पूर्वोक्त-
P. 332-2 विरोधादित्याशङ्क्याह—**पूर्वमिति**। अनास्थावादत्वादस्य न विरोध इति भावः।
**स्नायवः** सिराः। अस्थ्यन्तर्गतस्नेहो **मज्जा**।

ननु 'देवैरत्रापि विचिकित्सितं पुरे'त्यादेर्महतः सन्दर्भस्य मध्ये सत्वेन, 'हन्त ते' इत्यर्धमात्रव्यवहितत्वं कथं टीकायामुक्तमित्याशङ्क्य न व्यवधायके-यत्तामभिप्रेत्य टीका। किं तर्हि? भाष्ये 'हन्त त' इत्यादिकमनुक्रम्य जीव-विषयकं प्रतिवचनमित्युक्तत्वेन कृत्स्नस्यापि जीवविषयत्वं भाति। न च तत्संभवति। ब्रह्मसनातनादिशब्दस्वारस्यानुरोधेन प्रथमार्धस्य पुनरपि प्रकारान्तरेण ब्रह्मस्वरूप-प्रतिपादनप्रतिज्ञापरत्वात्। 'यथा चे'त्यत्र चशब्दश्रवणेन, हे गौतम! आत्मा मरणं प्राप्य यथा भवति तथा च वक्ष्यामीति प्रतिज्ञान्तरपरत्वावगमाच्च। ततश्च ब्रह्म-प्रपञ्चेन व्यवधानं सिद्धवत्कृत्य भाष्योदाहृतांशगतव्यवधानकथनाभिप्रायेण टीके-
P. 382-4 त्याशयेनाह—**हन्तेत्यादीति**। प्रतिज्ञावाक्यमेव। (?) अतस्तेन भाष्यनिर्दिष्टेन **व्यवहितं यथेत्याद्यर्धत्रयं प्रतिवचन**मित्यर्थः।

**त्रिशब्दविरोध इति**। त्रयाणां स्वरूपप्रश्नप्रतिवचनाभावादित्यर्थः। 'त्रीन् वरान् वृणीष्वे'त्युपक्रमानुरोधेन, 'वराणामेष वरस्तृतीय' इत्यत्र तस्याव-शिष्टत्वप्रतीतेः वरान्तरकल्पनमयुक्तमित्याह—**तत्राहेति**। **चशब्द एवेति**। 'तवैव नाम्ना भवितायमग्निः सृङ्कां चेमामनेकरूपां गृहाण' इति मृत्युवाक्ये अग्नेर्नचिकेतोनाम्ना प्रसिद्धिसमुचितायाः सृङ्काया अवृताया एव चशब्देन गृहा-णेत्यादिपदसमभिव्याहृतेन स्वयं दत्तत्वसूचनादित्यर्थः।

ननु टीकायामेक एव प्रश्न इत्युक्तम्। तर्हि कथं द्विःकरणमित्यत
P. 383-2 आह—**एक एवेति**। विशेष्यैक्यमेव प्रतिवचनैक्येऽपि हेतुरित्याह—**जीवपर-योरिति**। तत्तत्कामविषयमिति टीकार्थमाह—**शतायुष इति**। प्रश्नस्य स्वात-न्त्र्येण प्रशंसा न दृश्यत इत्यत आह—**त्वादृङ्न इति**। **विशेषणपरत्वा-दिति**। विशेष्यस्य नचिकेतसो 'विद्याभीप्सिन'मित्यादिना पूर्वमेव प्रशंसित-त्वादिति भावः।

**यदि पुनरित्यादिटीकां** तदभिप्रायं दर्शयन्नवतारयति—**जीवे पृष्ट इति**। **टीकायां—यदि तमेवेति**। जीवमेव तदीयपरमार्थस्वरूपजिज्ञासया यदि

भूयः पृच्छेदित्यर्थः। तस्येति। तस्य मृत्योः प्रश्नोत्तर इत्यर्थः। यत्प्रश्नेत्यत्र कर्मधारयानाश्रयणे हेतुमाह—यत्प्रश्नेति भाष्य इति। P. 383-7

नन्वधिकरणारंभे सांख्यप्रसिद्धिर्वेदे नादर्तव्येत्युक्तम्। 'महद्वचे'त्यत्रापि तदेवोच्यत इति पौनरुक्त्यमित्यत आह—अधिकरणादाविति। अधिकरणादौ P. 384-1 सांख्यप्रसिद्धेः पौरुषेयत्वादप्रयोजकत्वमुक्तम्। इदानीं तु प्रकरणपरिशेषाभ्याम-व्यक्तशब्दस्य वेदे शरीरपरत्वावधारणेन वेदविरोधादनादेयत्वमुच्यत इति न पौन-रुक्त्यम्। तत्र च यत्प्रकरणादिकमुक्तं, तदिहत्यमेवोक्तमिति न दोष इति भावः।

ननु भोगापवर्गलक्षणपुरुषार्थक्रियाकारिणो महत्तत्वस्य सद्रूपत्वात् कथं सत्तामात्रमिति धर्मरूपत्वमुक्तमित्याशङ्क्याह—तत्प्रत्ययोऽपीति। स्वरूप- P. 385-1 विशेषावधारणनिवृत्तिपरो मात्रशब्दोऽपीत्याह—कार्यानुमेयमिति।

'एष सर्वेषु भूतेषु गूढ' इत्यादिश्रुतिं व्याचष्टे—गूढ इति। 'अशब्द-मस्पर्श'मित्यादिश्रुतिं व्याचष्टे—शब्दादीति। प्रागिति। प्रागभावप्रध्वंसा-भाववर्जितमित्येत'दनाद्यनन्त'मिति श्रुतिगतेन पदद्वयेनोच्यत इत्यर्थः। 'स त्वमग्निं स्वर्ग्य'मित्यादिश्रुतिं व्याचष्टे—स्वर्गायेति। 'लोकादिमग्नि'मित्यादिश्रुतिं व्याचष्टे—लोककारणेति। 'हन्त त' इत्यादिश्रुतिं व्याचष्टे—हन्तेदानीमिति। जीवं चाहेति। ब्रह्माभेदोपदेशायेति भावः। 'स्वप्नान्तं जागरितान्तं चे'ति श्रुतिं व्याचष्टे—स्वप्नजाग्रतोरिति। 'यदेवेह तदमुत्रे'त्यादिश्रुतिं व्याचष्टे—इह देह इति। 'विद्याभीप्सिन'मित्यादिश्रुतिं व्याचष्टे—त्वां बहव इति। P. 385-11 'वेदाहमेतं पुरुषं महान्त'मिति श्रुतिं व्याचष्टे—वेद जान इति।

इत्यानुमानिकाधिकरणम्।

---

## ॥ अथ चमसाधिकरणम् ॥

### सू०॥ चमसवदविशेषात् ॥ ८ ॥

### सू०॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥

### सू०॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

संशयबीजमाह—अजाशब्दस्येति। छागार्थस्य प्रकृते अनन्वयादिति P. 386-1 भावः। प्रत्युदाहरणसंगतिमाह—पूर्वत्रेति। त्रिगुणत्वादिनेत्यादिपदेन

'सृजमाना'मित्यनेनोक्तं सृष्टौ स्वातन्त्र्यं, 'जहात्येना'मित्यनेनोक्तं मुक्तजीवपरित्यक्ताया अवस्थानं च, विद्यानाश्यायामविद्याशक्तावसंभवद्गृह्यते। उपचारकल्पनापक्षयोर्भेदमाह—**उपचार इति**। ननु **तामेवाविद्यया आत्मत्वेनोपगम्येति** भाष्यमनुपपन्नम्। सांख्यै'रचेतनं चेतनावदिह लिङ्ग'मिति वदद्भिः बुद्धिसत्वस्यैव कल्पितात्मत्वोपगमात्, 'अहं सुखी'त्यादिव्यपदेशस्य बुद्धितादात्म्ये सत्येवोपपत्तेश्चेत्याशङ्क्य, तद्व्याख्यातुं **विषया हीत्यादिटीका**। तत्र बुद्धिसत्वस्य सुखदुःखमोहात्मकत्वप्रतिपादनेन तत्र तच्छब्दस्य लक्षणां दर्शयितुं **परिणमत इत्यन्ता टीके**त्याशयेनाह—**तामेवेति**।

P. 386-5

**विपर्यासेनाविद्ययेति** पदद्वयप्रयोगो निरर्थक इत्याशङ्क्य, व्याख्यानपूर्वकं भाष्यस्थपदनिर्देश इत्याशयेनाह—**अविद्ययेत्येतदिति**। ननु सांख्यानामख्यातिवादित्वात् कथं विपर्यास इत्यत आह—**सांख्यानामपीति**। अगृहीतासंसर्गकधर्मधर्मिगोचरज्ञानद्वयरूपो विपर्यासः तन्मतेऽपीति भावः। नन्वेवं भ्रमाधीनत्वे बन्धस्य लाघवात् प्रधानाविवेककृत एव किं न स्यादित्यत आह—**स त्विति**। नित्यानुमेयत्वात् प्रधानस्य न तत्राहंममाभिमानसंभव इति बुद्धिसत्व एव स इति भावः।

ननु धर्म्यध्यासाभावे कथं धर्माध्यास इत्यत आह—**विपर्याससिद्धेति**।

P. 387-3 अपवर्गशब्दस्य तदुपायपरत्वेन व्याख्याने बीजमाह—**कृतत्वोपपत्तय इति**॥

**मुख्यवदिति**। 'गुणवचनेभ्यो मतुपो लुगिष्यत' इत्यनुशासनान्निरूढेयं लक्षणा शक्तितुल्येति भावः। रूढिपूर्वकलक्षणास्थले रूढ्यत्यागमुपपादयति—**रूढेरिति**। तेजोऽबन्नलक्षणा प्रकृतिरजेति पक्ष एव युक्त्यन्तरमुच्यत इति भ्रमं व्यावर्तयन् व्याचष्टे—**न केवलमिति**। **प्रकरणादिति**। प्रकृतसन्दर्भादित्यर्थः। **टीकायामपेक्षितं पूरयति—साध्यायामिति**। 'किंकारणं ब्रह्मे'ति प्रश्नस्य ब्रह्मकारणत्वानुपपत्तिपूर्वकत्वात्, बहुव्रीहिणा तदनुपपत्तिं प्रकटीकुर्वन्नाह—**किंसहकारीति**। किं सहकारि यस्येत्यर्थः। **योजकत्वात्** प्रापकत्वात्।

P. 388-2

ननु ध्यानयोगेन यद्यात्मानं प्राप्ताः, तर्हि मुक्ता इति कथमविद्यादर्शनमित्यत आह—**आत्मप्राप्तिस्त्विति**। **अनात्मविरहेण**—अनात्मन्यासक्तिविरहेण। कुत्रोक्तमित्यत आह—**आनुमानिकेति**। सिद्धान्ते एकामिति श्रुत्यनानुगुण्यमुक्तं परिहरति—**नानेति**। न च मुख्यत्वहानिः। गुणसंघाते प्रधानेऽपि तुल्यत्वात्।

P. 388-5

एतच्चोपलक्षणम्। प्रयोज्यत्वेऽपि न स्वातन्त्र्यहानिः, नष्टायाश्च न त्यक्तत्वहानिरित्यपि द्रष्टव्यम्। 'देवात्मशक्ति'मित्यत्र 'मायिन'मित्यत्र च विषयितालक्षणः संबन्ध इत्याह—देवात्मेति। भाष्येऽपि तथैवेत्याह—भाष्य इति। वाचस्पतिमतस्य भाष्यश्रुत्युभयानुगुण्यं श्लोकेनाह—एवं चेति। P. 388-6

॥ इति चमसाधिकरणम् ॥

---

## ॥ अथ न संख्योपसंग्रहाधिकरणम् ॥

सू०॥ न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

सू०॥ प्राणादयो वाक्यशेषात् ॥ १२ ॥

सू०॥ ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

योगरूढ्यविनिगमादिति। वक्ष्यमाणयुक्त्युपोद्बलितस्य योगस्य रूढ्या समबलत्वादिति भावः। दृष्टान्तसंगतिमाह—पूर्वत्रेति। रूढेति। रूढिबलादवगतायाः छागाया इत्यर्थः। छागशब्दस्य जातिवाचित्वेन जातेरस्त्रीविषयादिति ङीषा भवितव्यत्वेऽपि प्रचुरप्रयोगानुरोधादजादिगणमाकृतिगणं मत्वा, छागेति टाबन्ततया निर्दिष्टम्। पञ्चसंख्याविषया अपरा पञ्चसंख्येति भाष्यमुपपादयितुमाक्षिपति—नन्विति। विशेष्येति। ततश्च पञ्चसंख्याविषयविषयेति मध्यमपदलोपिसमासो भाष्य इति भावः। P. 389-3

ननु पञ्चत्वेन निश्चितानां जनानां संख्याकाङ्क्षाविरहात् कथं तत्र संख्यान्वय इत्यत आह—न च पञ्चसंख्येति। 'रक्तः पटो भवती'त्यत्र भवनक्रियान्वितस्यापि पटस्य यथा रक्तपदानुरोधेन तदाकाङ्क्षोत्थापनं, तथा प्रकृतेऽपि पञ्चशब्दान्तरश्रवणेन[1] महासंख्यालाभाय'पञ्चपञ्चाशतस्संवत्सरा' इत्यादाविव तदाकाङ्क्षोत्थापनमित्यर्थः। निस्तात्पर्यशब्दार्थं दर्शयन्नेव सर्वस्यैवेति टीकामवतारयति—वाक्यस्येति। तात्पर्याभाव इति। तथा च तात्पर्यस्याभाव इत्यर्थे P. 389-6 P. 390-1

---

१. A. पञ्चसङ्ख्याश्रवणेन।

अर्थाभावेऽव्ययीभावसमासे, 'तृतीयासप्तम्योर्बहुल'मिति बहुलग्रहणात् अभावाभावे रूपमिति भावः।

P. 390-2 **जनशब्दश्चेति** टीकाभिप्रायमाह—**जायन्त इतीति**। ननु रूढ्यसंभवेऽपि न योगग्रहणं न्याय्यम्। रूढिपूर्वकलक्षणाया एव न्याय्यत्वादिति शङ्कते—**नन्विति**। **तथा चेति**। आत्मनः प्राणादिव्यतिरेकप्रतिपादनपरत्वादिति भावः। **तत्रापीत्यस्य** रूढिपुरस्कारेऽपीत्यर्थः। फलितमर्थं कथयति—**निरूढार्थेति**[1]। ननु गुणानामेकीकरणं पृथक्करणं च कथमेकस्मिन्नेव मते स्यात् विरोधादित्याशङ्क्य, श्रुतिस्मृतिनिर्देशभेदाय तथाश्रयणान्न दोष इत्याशयेनाह—**आत्माकाशेति**। **आर्या**[2]—आर्यावृत्तश्लोकम्।

ननु क्रियाया रजोधर्मत्वात्तेन विना कथं सत्वतमसोरारंभकत्वमित्यत P. 391-3 आह—**रजस्त्विति**। तत्वान्तरं वा कुतो न भवेदित्याशङ्क्य, वैलक्षण्याभावादित्याशयेनाह—**उभयेषामिति**[3]। ननु भूततन्मात्रज्ञानेन्द्रियकर्मेन्द्रियत्वरूपेण चतुर्णां पञ्चकानां प्रधानपुरुषमहदहङ्कारमनसामाध्यात्मिकत्वेन सूक्ष्मत्वेन वा क्रोडीकारसंभवात् कथं साधारणधर्माभाव इत्यत आह—**आकाशात्मानाविति**।

ननु समासान्तर्गतेन शुद्धेन च पञ्चशब्देन कथं पञ्चविंशतिसंख्या लक्ष्यते? तथात्वे सामर्थ्याभावेन समासस्यैवायोगात्। तथा च कथं भाष्यमित्याशङ्कां निराकर्तुं **पूर्वपक्ष्येकदेशिनमित्युक्तं टीकायाम्**। तदभिप्राय- P. 391-8 माह—**समासार्थ इति**। नन्वसमासेऽपि नानाभावदोषतादवस्थ्यात् कथं पञ्चसंख्याः पञ्च निर्दिश्येरन्, याभिर्महासंख्या लक्ष्यते, इत्यत आह—**अस्यायमिति**। स्यादेवं, यदि पञ्च पञ्चेति विशेषणविशेष्यभावपरः स्यात्। न त्वेवम्।

---

१. कल्पतरौ 'रूढ्यर्थग्रहेपीत्यर्थः' इति पाठो दृश्यते। आभोगरीत्या 'निरूढार्थग्रहेऽपी'ति पाठः। रूढिपूर्वकलक्षणया प्राह्योऽर्थः निरूढार्थः। इति बोध्यम्।

२. अनेन कल्पतरौ 'भाष्ये उदाहृतां आर्यां' इति शुद्धः पाठो बोध्यः। मायामिति तु न लगति।

३. अव्यक्तमहदादीनां मिथः स्थूलत्वसूक्ष्मत्वतारतम्यात्, तन्मात्राणां मिथः इन्द्रियग्राह्यत्वतारतम्याच्च, तत्वान्तरत्वम्। पृथिवीगोघटादीनां तु तन्नास्ति। अतो न तत्वान्तरत्वमिति कल्पतरुभावः प्रतिभाति॥

किन्तु वीप्सा। ततश्च वीप्सावलान्नानापञ्चसंख्याप्रतीतौ योग्यतया सांख्यतत्व-गताः पञ्चैव पञ्चसंख्या इह निर्दिष्टा इति निश्चीयत इति भावः।

**अर्थात्मनेति**। अनभिव्यक्तस्वरूपेणेत्यर्थः। विद्यमानानामेव द्वित्वा- P. 391-13 दीनां अपेक्षाबुद्धिर्व्यञ्जिकेति भावः। अनभिव्यक्तत्वादेव न व्यावर्तिकेत्या-शयेनाह—**परं त्विति**। ननु समस्तत्वसाधने असमासाभ्युपगमविरोध P. 392-1 इत्यत आह—**असमासमिति**। भाषिकेण स्वरेण कथमेकपदत्वनिश्चयो P. 392-1 भाष्यटीकयोरुक्त इत्यत आह—**भाष्य इति**। अत्र भाषिकग्रन्थानुरोधेन पञ्चजना इत्यत्र त्रयाणामाद्यानामुदात्तत्वम्, चरमस्यानुदात्तत्वं, तच्च समास-व्याप्यस्वरवत्त्वेन (व्याप्यत्वेन) समासज्ञापकमिति दर्शयितुं शतपथब्राह्मणा-नन्तःपातिशुद्धमन्त्रतादशायामाहत्य समासव्याप्यं स्वरं दर्शयति—**अत्र मन्त्र इत्यादिना**।

उभयत्रापि क्रमेण प्रमाणमाह—**समासस्येति**। तदुपजीवनेन प्रवृत्तं भाषिकस्वरं दर्शयति—**भाषिकेति**। **मन्त्रदशायामिति**। ब्राह्मणानन्तः-पातिमन्त्रतादशायामित्यर्थः। **ब्राह्मणे**। ब्राह्मणान्तःपातदशायामित्यर्थः। **तत्त इति**। अपवादसूत्रादाकारादितरेषां व्याकरणस्वरेणानुदत्तानां ब्राह्मणे उदात्तत्व-मित्यर्थः। **अनन्त्यमिति** सौत्रपदलब्धमर्थमाह—**अनन्त्यस्य परसंलग्नत-येति**। संहितयेत्यर्थः। एवं च सति फलितं भाष्यार्थमाह—**सति चैवमिति**। P. 392-9 आहत्य समासव्याप्यं व्याकरणस्वरमेव भाषिकस्वरं ये मन्यन्ते, तन्मतमाह—[1]**ये त्विति**।

कथं तर्हि तस्य भाषिकत्वमित्याशङ्क्य, पारिभाषिकत्वं भाषिकशब्दार्थ इत्याशयेनाह—**छन्दोगा इति**। अस्य[2] मन्त्रस्याज्यग्रहणे विनियोगादाज्यं संबो-ध्यमित्याशयेनाह—**हे आज्येति**। **पञ्चजनानां** कृते पञ्चजनार्थं, **यन्त्राय धर्त्रायेति** तच्छेषः। शरीरादीनां नियमनाय धारणाय चेति तदर्थः।

---

१. प्रकटार्थविवरणकारा इत्यर्थः।

२. पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामीति मन्त्रस्येत्यर्थः।

भवतु वा वीप्सा। तथापि द्वयोरेव पञ्चकयोर्ग्रहणं स्यात्। अतिरिक्तग्रहणे मानाभावात्। न चैवं 'तासां स्वसॄरजनयत्पञ्चपञ्चे'त्यत्रापि दशानामेव ग्रहणं स्यादिति वाच्यम्। 'इयमेव सा ये'त्यादिना या निर्दिष्टास्तासां पञ्चानामपि पञ्च पञ्च स्वसॄरजनयदित्युक्त्वा, उत्तरत्र 'त्रिंशत्स्वसार' इति सर्वासामपि संख्यान्तरं प्रचयशिष्टं निर्दिष्टमिति, तदनुरोधेन वीप्सायाः पञ्च[विंशति]त्वपर्यवसानात्। न चेह तथा किञ्चिदस्ति नियामकम्। ततश्च श्रुतिप्रसिद्धयोरिन्द्रियपञ्चकयोः, संवर्गविद्यायां 'पञ्चान्ये पञ्चान्ये दशे'ति प्रसिद्धयोर्वा पञ्चकयोर्ग्रहणं स्यादिति न सांख्यतत्वप्रत्यभिज्ञानम्।

वस्तुतस्तु **समस्तत्वेन वीप्साया अभावात्तदपि नेत्येवं भाष्यं व्याख्यातुमपि चेत्यादिटीका**। तां योजयति—**असमासमिति**। न चेत्यादिटीकाप्यसमासाभ्युपगमाभिप्रायेत्याह—**असमासेति**। **वीप्सां विहायेति**। तथा च **द्विःपञ्चशब्देति** पूर्ववाक्यं वीप्सायामपि पञ्चशब्दद्वित्वात् दशानामेव ग्रहणं न्याय्यमित्येवंपरमिति, तदनुरोधेन भाष्यटीकयोः वीप्साग्रहणमविवक्षितमिति न व्याख्येयम्। वीप्साया अपि असति नियामके, शब्दद्वित्वानुरोधेन द्विरित्येवं नियमसंभवादिति ध्येयम्।

P. 392-12

अत्र 'स्वसॄरजनयत्पञ्चपञ्चे'त्यत्र वाक्यशेषानुरोधेन अगत्या विशेषणान्वयेपि प्रकृते दशानामेव ग्रहणसंभवात् न तथेति न ग्रन्थार्थो वर्णयितुं युक्तः। तत्र वीप्साश्रयणसंभवेनागत्यभावात्, इहैकपदत्वेन वीप्सात्व[भाव]निश्चयाच्चेति ध्येयम्।

ननु प्रागुक्तनानाभावदूषणापरिहारात् कथं पुनरुत्थापनमित्यत आह—**नानाभावेनेति**। उपसर्जनं विशेषणान्विततया न विवक्ष्यत इति यो न्यायस्सोऽयं नोपसर्जनन्यायः (अविवक्षितोपसर्जनन्यायः)। निस्तात्पर्यकत्वदोषेण मुख्यार्थग्रहणायोगात् कथं टीकेत्यत आह—**तद्द्वारेति**।

P. 393-2

---

१. अत्र भाष्यटीकयोः वीप्सापदं स्वतन्त्रस्य पञ्चशब्दस्य द्विःप्रयोगमात्रपरम्। न तु व्याप्तिविवक्षापरमिति बोधयितुं 'द्विः पञ्चशब्दप्रयोगे' इति कल्पतरावुक्तमिति परिमलम्।

२-३. परिमलखण्डनमिदमुभयम्।

ननु पञ्चपूलीत्यत्र कथं समुदायस्य समासगम्यत्वमित्याशङ्क्य, ङीबन्त-द्विगुबलात् समाहाराभिन्नसमुदायप्रतीतिरित्याह—ईबन्तेति । उत्पत्तिशिष्टया समानवित्तिवेद्यया । तत्र हेतुमाह—समानेति । ईबन्तत्वाश्रवणादिति । छान्दसो ङीबभाव इति कल्पनं तु निष्प्रमाणकमिति भावः । P. 393-5

उत्थाप्यतामाकाङ्क्षेत्यत आह—विजातीयेति । यद्यपि 'पञ्चपञ्चाशतस्संवत्सराः' इत्यादौ सजातीयस्थलेऽप्यस्त्याकाङ्क्षोत्थापनम् । तथापि तत्र सहस्रसंवत्सरमिति वाक्यशेषबाधकानुरोधेन तदुत्थापनेऽपि नोत्सर्गस्य कश्चिद्विरोध इति भावः । निराकृतशङ्कायाः पुनरुत्थापने हेतुमाह—इहेति । आत्माश्रयेति । विशेषणस्य विशेष्याश्रयत्वावश्यंभावादिति भावः । विशेषतस्त्विति टीकाभिप्रायमाह—समासे त्विति । असामर्थ्यमुपपादयति—नैरपेक्ष्यं हीति । समासभेदात् कथं दृष्टान्तत्वमित्याशङ्क्य सापेक्षस्य समासाभावमात्रे दृष्टान्ततेत्याह—सापेक्षस्येति ।

ननु सापेक्षत्वेनेति टीकाया अव्यवहितत्वात् ऋद्धस्य राज्ञः पुरुष इत्येतद्व्याख्यायत इत्याभाति । तदयुक्तम् । तस्य भाष्यानुक्तत्वेनाव्याख्येयत्वादित्याशङ्क्य उक्तोऽत्रेत्यादिका कृत्स्नापीयं टीका तत्र चोक्तो दोष इति भाष्यस्य व्याख्येति परिहरति—उदाहृतेति । P. 393-14

अभ्युच्चयत्वे हेतुं दर्शयन् यदीत्यादिटीकामवतारयति—प्रधानमिति । अतिरेकसमाधानादिति । पञ्चपञ्चजना इत्यनेन निर्दिष्टानां तत्वानामात्माकाशव्यतिरेकेणैव पञ्चविंशतित्वसंपत्त्यर्थं द्वयोस्तत्वयोरङ्गीकारे अतिरेकः स्यादिति दोषस्य प्रधानत्रित्वेनैव संख्यासंपत्त्या समाधानादित्यर्थः । गमनिकेति । अतिरेकाच्चेति सूत्रभागस्येत्यर्थः ।

नन्वाकाशाधारत्वेन पुरुषस्योपास्यत्वसिद्ध्यर्थमाकाशस्य पृथक्करणं सार्थकमित्याशङ्कां निराकर्तुं तथापीत्यादिटीका । तदभिप्रायमाह—प्रधानं भित्वेति ।

कथं चेत्यादिभाष्यं, न तावत् पञ्चविंशतिसंख्यालाभमभ्युपेत्य, तथापि न सांख्यतत्वानामिह ग्रहणम्, तत्र किं जनशब्दबलात् तत्प्रतीतिः? उत, संख्येयान्तराभावेन परिशेषादिति विकल्प्य, क्रमेण निराकरणपरम् । समासे

असमासे च न कथंचिदपि पञ्चविंशतिसंख्यालाभ इत्युक्तत्वेन तदभ्युपगमस्य निर्मूलत्वात्। अत्यन्तासंभाविताभ्युपगमेऽपि, **अश्रुतानां तत्वानां कथमुपसंग्रह** इत्येव वक्तव्यतया **पञ्चविंशतेरित्यस्य** वैयर्थ्याच्च। किंच, अस्मिन् पक्षे **अर्थान्तरोपसंग्रहेऽपीति** भाष्यं नोपपद्यते। सांख्यस्मृताविव पञ्चविंशतिधा विभक्तानां केषांचिदर्थानामप्रसिद्धत्वात्। प्रसिद्ध्यतिक्रमेण यथा कथंचित्पञ्चविंशतिसंख्याकार्थग्रहणस्य न्यायविरुद्धत्वात्। (तथा च भाष्यम्।) **स्मृतिप्रसिद्धानां पञ्चविंशतेस्तत्वानामिति** पूर्वभाष्यार्थोपजीवि-'**कथं तर्हीं**'त्यादिभाष्यासामञ्जस्याच्च।

यत्तु [1]कैश्चिद्व्याख्यातं—**कथं चेत्यादि**भाष्येण, पञ्चविंशतिसंख्यालाभमभ्युपेत्य, ततः सांख्यतत्वोपसंग्रहस्य, वस्तुतः पञ्चविंशतिसंख्यालाभस्य चाक्षेपः प्रतिज्ञातः। तत्र प्रथमाक्षेपे **जनशब्दस्येत्यादिना** हेतुद्वयमुक्तम्। द्वितीयाक्षेपे **कथं तर्हि पञ्चपञ्चजना इतीति** भाष्येण, क्लप्ते योगे सति न रूढिकल्पना न्याय्या, ततश्च पञ्चसंख्यान्वितेषु जनेषु पुनः पञ्चसंख्याश्रवणवैयर्थ्यपरिहाराय कथञ्चिदाकाङ्क्षोत्थापनेन तदन्वयात् पञ्चविंशतिसंख्यालाभ इत्येवंपरेण अनुपपत्तिमुद्भाव्य, रूढिरपि क्लप्तैवेति तत्समर्थनं **उच्यत** इत्यादिभाष्येण क्रियत इति।

तन्न। **कथं चेति** भाष्ये अपिशब्दाद्यभावेन मात्रग्रहणेन च संख्याक्षेपपरत्वायोगात्। **कथं तर्हीत्युत्तरभाष्ये तर्हीति** तच्छब्देनाव्यवहितस्य सांख्यतत्वादर्थान्तरोपसंग्रहेऽपि संख्योपपत्तेरित्यस्य परामर्शे, योगे संभवति न रूढिरित्याद्यनुपपत्तौ तस्य हेतुत्वायोगाच्च।

तस्मात् भाष्यमिदं पञ्चविंशतिसंख्याऽलाभपरमेव। तत्र **संख्यामात्रश्रवणे सति पञ्चविंशतेः कथं लाभः ?** पञ्चसंख्यामात्रलाभेन तदलाभादिति भावः।

ननु पञ्चजनशब्देन पञ्चानां तत्वानां प्रतीतौ तत्र पुनः पञ्चसंख्यान्वये पञ्चविंशतिसंख्यालाभ इत्याशङ्क्य, किं रूढ्या तत्प्रतीतिः ? उत योगेनेति विकल्प्य, प्रथमं निराकर्तुं **जनशब्दस्य चेति भाष्यम्।** पञ्चजनशब्दस्येति तदर्थः। तथा चोत्तरत्रैतद्भाष्यार्थकथनपरायां **टीकायां न चैष तत्वेषु रूढ** इत्यत्रै-

---

1. परिमलकारैः।

तच्छब्देन पूर्ववाक्यनिर्दिष्टस्य पञ्चजनशब्दस्यैव परामर्शो दृश्यते। शङ्कोत्तरत्व-सूचनायैव चशब्दः प्रयुक्तः।

द्वितीयं निराकर्तुं **अर्थान्तरेति भाष्यम्**। वक्ष्यमाणरीत्या वाक्यशेषगत-प्राणादिपरिग्रहेऽपि पञ्चसंख्योपपत्तेः यौगिकपञ्चजनशब्दबलेन न पञ्चविंशति-संख्यालाभ इति तदर्थः। पुनश्च, ननु वाक्यशेषगतप्राणादिपरिग्रहे तेषामेकैक-त्वेन तत्र पञ्चसंख्यान्तरान्वयायोगात् 'पञ्चपञ्चजना' इति श्रुत्यनुपपत्तिरिति शङ्कामुद्भाव्य, पञ्चजनशब्दस्य रूढ्या सप्तर्षिशब्दवदेकैकस्मिन्नपि वृत्तेः, तत्र पञ्चसंख्यान्वयो न विरुद्ध इति वक्तुम्, 'कथं तर्हि'त्यादि 'सप्तेति यथे'त्यन्तं भाष्यम्। एवं स्थिते **कथं चे**त्यादिभाष्यव्याख्यानाय तस्य **टीकायां** प्रतीकतो ग्रहणे हेतुमाह—**कथं चेति भाष्यमयुक्तमिति**। तत्र हेतुः—**पञ्चसंख्या-द्वयादिति**। P. 394-3

यद्यपि पञ्चसंख्यान्वितेषु जनेषु पुनः पञ्चसंख्यान्वयो नानाभावा-काङ्क्षाविरहासामर्थ्यहेतुभिः दूषितः। तथापि पञ्चजनशब्दस्य रूढत्वात् पञ्चसंख्याद्वयमेव नास्तीति दूषणान्तराभिधानाय, पुनराशङ्क्यत इति न दोषः। अत एव तत्र **टीकायामुक्तम्—'अत्र तावद्रूढौ सत्यां न योगस्संभवतीति वक्ष्यते। तथापि यौगिकं पञ्चजनशब्दमभ्युपेत्य दूषयती'ति**। उक्तानुपपत्तेः उच्यत इत्यादिभाष्यव्याख्ययैव परिहारो नान्यथेति मनसि निधाय, तद्भाष्यव्या-ख्यानेनेदमपि भाष्यं व्याख्यातं भवतीति चाभिप्रेत्य टीका प्रवृत्तेत्याशयेनाह— **इत्याशङ्क्याहेति**। P. 394-3

अनया **टीकया कथं चेति** भाष्यगतानुपपत्तिः कथं परिहृतेत्यत आह— **एकैवेति। न संख्यार्थतेति**। ततश्च न पञ्चविंशतिसंख्यालाभ इति भावः।

**अथ त्वसौ न वाक्ये संबन्धार्हः, पूर्वापरवाक्यविरोधी** वेत्यनयोः क्रमेणोदाहरणे दर्शयति—**इह मनुष्या वाक्य इति**। ब्रह्मपरे 'यस्मिन् पञ्च पञ्चजना' इति वाक्ये इत्यर्थः। पञ्चजनशब्दस्य लाक्षणिकत्वात् श्येनशब्दस्य च गौणत्वात् कथं दृष्टान्ततेत्यत आह—**रूढेरिति**। P. 395-1

पञ्चजनशब्दे रूढिरेव समर्थ्यते। न तु तत्पूर्वकं वृत्त्यन्तरम्। ततश्च कथं दार्ष्टान्तिकत्वमित्यत आह—**दार्ष्टान्तिकमाहेति**। उक्तेऽर्थे उपपत्तिं दर्शयन् अपेक्षितं पूरयति—**अवयवार्थेति**।

**नन्विति**। तत्वेष्वपि रूढिरस्तु। ततश्च तेषां वाक्यार्थे समन्वयोपपत्तौ, किं लक्षणया प्राणादिपरत्वमाश्रीयते, इति भावः। प्रचुरप्रयोगाद्यभावान्न रूढिरिति परिहरति—**अत आहेति** ॥ ११ ॥ **लाक्षणिक इति**। तत्वानामपि पञ्चजनशब्दवाच्यमनुष्यसंबन्धित्वादिति भावः। ननु 'मनसैवानुद्रष्टव्य'मित्यत्र नोपास्तिविधिः। विधिशक्तेर्मनसैवेति गुणाकृष्टत्वात्, अद्वितीयब्रह्मप्रकरणे तत्प्रतिपत्त्युपायतया विधित्सितस्योपासनस्यान्वयव्यतिरेकसिद्धत्वाच्चेत्यत आह—**तत्रान्वयेति**। एकाग्रमनोरूपसाधनविधानार्थमनूद्यमानाप्युपास्तिः क्रियात्वात् पुरुषेण कर्तुमन्यथा च कर्तुं शक्येत्यर्थः।

**जनवाचकश्शब्दो जनशब्द इति टीका** न मध्यमपदलोपिसमासप्रदर्शनपरा, षष्ठीतत्पुरुषेणैव तदर्थसिद्धौ तदाश्रयणायोगात्। किन्तु षष्ठ्यर्थसंबन्धप्रदर्शनपरेत्याह—**जनानामिति**। **अर्थो नास्तीति**। समुदायस्य केवलरूढत्वादिति भावः।

P. 396-2

कथं लक्षणार्हत्वमुक्तमित्यतस्तदेवाह—**वाक्येति**। ततश्च स्मृतिप्रसिद्धानामसन्निहितानां च केषां चित् पञ्चानां न ग्रहणमिति भावः। **रूढ्यपरित्यागेनैवेति टीकासूचितमर्थमाह—रूढार्थेति**। **सूत्रादिति**। 'दिक्संख्ये संज्ञाया'मिति व्याकरणसूत्रादित्यर्थः। **संभवति चेति टीका** प्रौढिवादेनेत्याह—**नोपसर्जनेति**। (**अविवक्षितेति**)। सूत्रविरोधात् कथं शङ्केत्यत आह—**प्रयोगेति**। मनुष्येषु लोकप्रसिद्धस्यैव पञ्चजनशब्दस्य प्राणादिषु लाक्षणिकत्वेऽपि **वाक्यशेषो**पपत्तेः कथं भाष्ये तद्बलात् **प्राणादिषु रूढिसाधन**मित्याशङ्क्य, **तद्भाष्यं व्याख्यातुं जनेष्विति टीका**। तदभिप्रायं दर्शयन्नवतारयति—**मनुष्येष्विति**।

P. 396 5

**वैरूप्यापातादिति**। साधनत्वेनोपस्थितिमन्तरा फलेन, साध्यत्वेनोपस्थितिमन्तरा गुणेन चान्वयायोगात्, एकदा तदुभयरूपेणोपस्थितौ वैरूप्यमित्यर्थः। कालभेदेन तदुपस्थितौ दोषमाह—**विध्यावृत्त्येति**। **अत्राधिकरणे** यौगिकनाम-

P. 397-1

मात्रस्योदाहरणत्वात्, दर्शादिनामस्थले अधिकरणप्रयोजनं दर्शयति—**अत्रेति**। सर्वसाधारणं तु प्रयोजनं व्यवहार इति भावः। **रूढित्वोक्तिरिति**। **शक्योद्भि-दादिवदिति** भाष्ये रूढिरित्यस्यानुषङ्गादिति भावः।

'यस्मिन् पञ्च पञ्चजना' इति श्रुतिं व्याचष्टे—**यस्मिन्निति**। 'प्राणस्य प्राण'मित्यादिश्रुतिं व्याचष्टे—**प्राणादीनामिति**। प्राणचक्षुरादीनां जीवन-**दर्शनादिहेतूनां** तत्सामर्थ्यप्रदमित्यर्थः। 'ये विदु'रित्यस्य 'ते निचिक्युर्ब्रह्म पुराणमग्र्य'मित्यनेनान्वयं दर्शयति—**ते तस्य स्वरूपमिति**।

'यत्पाञ्चजन्यया विशेन्द्रे घोषा असृक्षते'ति श्रुतिं व्याचष्टे—**पाञ्चजन्य-येति**। पञ्चजनसंबन्धिन्या।, 'विशे'त्यनेन प्रजानां मनुष्यरूपत्वमुच्यत इत्याह—**विशतीति विशेति**। **घोषाः** शब्दाः। अस्मिन् पक्षे, संकरसहिताश्चत्वारो वर्णाः पञ्चपञ्चजना इति **भाष्याभिप्रायो** बोध्यः। 'तं देवा ज्योतिषां ज्योतिः' इत्यादिश्रुतिं व्याचष्टे—**यत्पूर्वार्धे इति**। 'यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तत' इति पूर्वार्धे इत्यर्थः। **षष्ठचन्तज्योतिषेति**। ज्योतिष्ट्वैनैकीकृत्य, सूत्रे निर्देश इति भावः।

P. 397-9

॥ इति न संख्योपसंग्रहाधिकरणम् ॥

---

## ॥ अथ कारणत्वाधिकरणम् ॥

### सू०॥ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः॥ १४ ॥

### सू०॥ समाकर्षात् ॥ १५ ॥

लुडन्तत्वस्फोरणायाह—**भविष्यतीति**। **नाना च एका चेति** द्वन्द्व-समासमाह—**नानेति**। प्रसङ्गं प्रदर्शयन् प्रयोजनं प्रकटयति—**विप्रतिषे-धादिति**। ननु समन्वयसिद्धचर्थं कारणश्रुतीनामिव, कार्यश्रुतीनामपि विरोध-समाधानस्यात्रैव कर्तव्यत्वात् कथं प्रसङ्गमात्रेण तत्र निरूपणमित्याशङ्कय प्रदेशान्तरस्थेनापि अर्थेन स्वसिद्धान्तो निर्वोढुं शक्यते। परोद्भावितो दोषस्तु

P. 398-1

तदानीमेव परिहर्तव्यः । अन्यथा, तत्वनिर्णयासिद्धिप्रसङ्गादित्याशयेनाह—परै-रिति ।

ननु 'अतस्तेषामन्यपरत्वं दर्शयितुं परस्सन्दर्भः प्रवर्तते' इति पादारंभस्थभाष्यानुरोधेन प्रधानवादानुकूलत्वेन प्रतिभासमानानां वाक्यानां तत्परत्वनिराकरणेन ब्रह्मणि समन्वयप्रतिपादनं पादार्थः । ततश्च कथमस्याश्चिन्तायाः पादसङ्गतिरित्याशङ्क्य लाघवात् वादान्तरपरत्वेन प्रतिभासमानवाक्यसमन्वय एव पादार्थः । भाष्यं च सर्ववादोपलक्षणार्थं इत्याशयेनाह—काचित्कस्येति । P. 398-6

ननु यथाश्रुतभाष्यानुरोधेन प्रधानवादनिराकरणमेव पादार्थो वक्तव्यः । अन्यथा जीवादिपरत्वनिराकरणेन ब्रह्मसमन्वयसाधकानां आनन्दमयाद्यधिकरणानामप्यत्रैव सङ्गतत्वापत्तेरित्यस्वरसादाह—अथवेति । टीकायां—तस्माद्वाक्यानामिति । यस्मात् सृष्टिवाक्यानां परस्परविरोधे ब्रह्मणि समन्वयाद्यसिद्धिः, तस्माद्वाक्यानां विरोधाविरोधहेतुके ये उक्तस्य समन्वयस्याक्षेपसमाधाने ताभ्यामित्यर्थः । कार्यविगानस्य कारणसमन्वयविरोधद्वारा निर्विशेषब्रह्मसमन्वयविरोधित्वं कारणविगानस्य त्वाहत्यैवेति व्याचष्टे—वाक्यानामिति ।

ननु विभिन्नक्रमादिप्रतिपादकत्वमात्रेण कथं विरोधः ? सृष्टिभेदेन तदुभयोपपत्तेरित्यत आह—युगपदिति । सृष्टिश्रुतीनां स्वरसत एकसृष्टिविषयकत्वमेव । भिन्नविषयकत्वे मानाभावादिति भावः । क्वानिचित् स्वयंकर्तृकामिति टीकार्थमाह—तन्नामरूपाभ्यामिति । P. 399-1 P. 399-2

ननु कर्मण्ययं लकारः कुतो न भवेदित्याशङ्क्य तथात्वे अश्रुतः कर्ता अध्याहर्तव्यः । कर्मकर्तरि तु श्रुतस्यैव कर्मणः सौकर्यातिशयं[3] पुरस्कृत्य कर्तृत्वविवक्षणान्न कर्त्रन्तरप्रसक्तिरिति लाघवमित्याशयेनाह—कर्मकर्त्रभिधानादिति । सर्गे तत्क्रमे चेति योजयति—स्वयंकर्तृकत्वेति ।

---

१. 'परै'रिति कल्पतरौ 'न तु बाधितसामान्यादुपेक्ष्यं वेददर्शनम्' इन्यर्धं त्रुटितमिति ज्ञेयम् । तत् ब्रह्मविद्याभरणे दृश्यते ॥

२. अत्र कल्पतरौ 'वाक्याना'मित्यतः पूर्वं 'सिद्धे कारणे विकल्पायोगात्' इति शोधनीयम् ॥

३. A. सामर्थ्यातिशयम् ।

ननु स्वयंकर्तृत्वपक्षेपि स्रष्टरि कथमविगानम्? प्रपञ्चस्यैव कर्तृत्वप्रतिपादने तद्व्यतिरिक्तस्य सर्वज्ञस्य कर्तुः विगीतत्वात्। सर्गे स्वयंकर्तृत्वमित्यप्यसङ्गतमेव। उत्पत्त्यनुकूलव्यापारो हि सर्गः। न तत्र प्रपञ्चस्य कर्तृत्वम्। किन्तूत्पत्तौ। कर्मकर्तृस्थले धातुना प्रयोज्यव्यापारस्यैवाभिधानाभ्युपगमात्। अत एव 'देवदत्तो लुनाती'त्यादौ द्विधाभवनानुकूलव्यापारवाचकस्यापि धातोः 'लूयते केदारः स्वयमेवे'ति कर्मकर्तृस्थले द्विधा भवनमात्रवाचकत्वमिति, शाब्दिकानां मर्यादा। न च 'तदात्मानं स्वयमकुरुते'त्यादिश्रुतिसिद्धं ब्रह्मणः प्रपञ्चात्मना परिणामं सिद्धवत्कृत्य, प्रपञ्चस्य परमेश्वरात्मना कर्तृत्वप्रतिपादनान्न स्रष्टरि विगानमिति वाच्यम्। श्रुत्यन्तरार्थोपजीवनेन, वेषान्तराभ्युपगमेन च पूर्वपक्षप्रवृत्तिकल्पनस्य, सति संभवे निष्प्रमाणकत्वात्। स्वभावादेव प्रपञ्चस्योत्पत्तिश्रवणाद्विरोधे[2] इत्येव पूर्वपक्षप्रवृत्तिसंभवात्। प्रपञ्चस्य परमेश्वरात्मनापि कर्तृत्वं स्वोत्पत्तावेवेति सर्गे स्वयंकर्तृकत्वासिद्धितादवस्थ्याच्च। एवं स्रष्टर्यपि विगानं तदवस्थमेव। प्रपञ्चस्य परमेश्वरात्मना कर्तृत्वे शुद्धस्वरूपेण ब्रह्मकर्तृत्वप्रतिपादकश्रुतिविरोधात्। तस्मादसङ्गतमेतदिति चेत्।

न, सर्गे सृष्ट्यर्थकधातुप्रतिपाद्ये, क्वचित् सृज्यकर्तृकत्वं क्वचित्तदतिरिक्तकर्तृकत्वं च प्रतिपाद्यत इति, तत्र विगाने सत्यपि, स्रष्टरि ब्रह्मणि विगानं नास्त्येव। कर्मकर्तृस्थले सौकर्यातिशयेन कर्मणः कर्तृत्वाश्रयणेऽपि ततोऽतिरिक्तस्य कर्तुरप्रतिक्षेपात्, पूर्वोत्तरसन्दर्भपर्यालोचनया स्वतन्त्रकर्तुरवगम्यमानत्वेन स्वभाववादपर्यवसानायोगादिति यथाश्रुत एव ग्रन्थः स्वरसः। तथा च श्लोकपूर्वार्धव्याख्यानटीका—'सृष्टौ खल्वेतद्विगानम्। स्रष्टा तु सर्ववेदान्तवाक्येष्वनुस्यूतः परमेश्वरः प्रतीयते। नात्र श्रुतिविगान'मिति। अन्ते च—'व्याक्रियत इति च कर्मकर्तरि कर्मणि वा रूपन्न चेतनमतिरिक्तं कर्तारं प्रतिक्षिपती'ति। 'वाक्यानां कारणे कार्य' इति पूर्वपक्षोक्तं कार्यविगानं परिहृत्य कारणविगानं परिहरतीत्याह—कारणेति। निराकरणीयत्वेनानुवाद इति।[1] 'कथमसतस्सज्जायेते'ति तन्निराकरणादिति भावः। P. 399 6

---

१. परिमलोक्तानुवादोऽयम्।

२. A श्रवणाविरोधः।

**विभिन्नक्रमत्वं तावदिति।** अक्रमत्वं 'स इमान् लोकान्' इत्यादिना परिहरिष्यतीति भावः। उभयथा व्यपदेशसंभवे निमित्तमाह—**क्रमेणेति।** ननु युक्तं कुंभादावपि देवदत्तस्यैव कर्तृत्वात् तथा व्यपदेशः। प्रकृते तु वाय्वादावाकाशादेरेवोपादानत्वात् कथं तेजसो ब्रह्मोपादानकत्वेन निर्देश इत्यत आह—**एवमिति।** इत्येवं सिद्धं कृत्वा, दार्ष्टान्तिकमाहेत्यन्वयः। अविरोधमेव व्यतिरेकमुखेन द्रढयितुं **यदि त्वित्यादिटीके**त्याशयेनाह—**तर्हीति।** तमेवाशयमाविष्करोति—**आकाशेति। न ह्यनेनेति।** क्रमबाधे तात्पर्याभावादिति भावः।

P. 400-4

सत्यज्ञानादिरूपेणोक्तस्य ब्रह्मणः पुनः स्रष्टृत्वेनापि प्रतिपादने हेतुमाह—**सत्यादीति।** देशतः कालतो वस्त्वन्तराच्च परिच्छेदराहित्यरूपं यदानन्त्यं 'सत्यं ज्ञानमनन्त'मित्यादिश्रुतिनिर्दिष्टं तदुपपादनेच्छया ब्रह्मव्यतिरिक्तस्य सर्वस्यापि वस्तुत्वाभावप्रकटनाय सृष्टिव्याजेन ब्रह्मणि कल्पितत्वं प्रतिपाद्यत इत्यर्थः। **व्याख्यातं चेति। साक्षात्** ब्रह्मस्रष्टृत्वाभिप्रायेण 'तत्तेजोऽसृजते'ति निर्देशः। न तु प्रथमस्रष्टृत्वाभिप्रायेणेत्युक्तत्वादित्यर्थः।

P. 400-11

**तत्रशब्दसमानार्थेति।** तदित्यव्ययं सप्तम्यर्थ इति भावः। **असंबद्धमिति।** जगत्कारणे सद्रूपे ब्रह्मणि प्रतिपादकत्वेनावतारितेन **श्लोकेन** तदतिरिक्तार्थप्रतिपादने असङ्गतत्वापातादित्यर्थः। **चशब्दस्य** समुच्चयार्थकत्वाभावे हेतुमाह—**यदेति।**

ननु **तुशब्दसमानार्थकेन चशब्देन** पूर्वपक्ष्युक्तसमन्वयाभावनिषेधकेन निर्दिष्टायां समन्वयप्रतिज्ञायां कथं सौत्रहेतोरन्वय इत्याशङ्क्य, **सूत्रगताभ्यां कारणत्वनञ्पदाभ्यां** सौत्रहेत्वनुगुणप्रतिज्ञान्तरनिर्देशमुखेन पूर्वपक्ष्युक्तहेत्वसिद्ध्या तत्प्रतिज्ञासाधन (पादन) सामर्थ्यं हेतोः दर्शयितु**माकाशादिष्विति** टीकेत्याशयेनाह—**कारणत्व इति। विवक्षित्वेति। केन रूपेणेति** प्रश्नप्रदर्शनादिति भावः।

**तुशब्द** एव प्रयोक्तव्ये चशब्दप्रयोगाद्व्याख्यानान्तरमपि **सूत्रस्य** सूचितमित्याशयेन टीकेत्यभिप्रेत्याह—**एवमिति। कारणपदेन** कार्यस्याप्युपस्थापितत्वात् **समुच्चयो**पपत्तिरित्याशयेनाह—**कारणत्व इति।**

P. 401-5

**टीकायामनपबाधनेनेत्येतत्सौत्रयथाशब्दार्थकथनमिति** स्फोरयितुमाह—**यथाशब्द इति।** 'आत्मन आकाश' इत्यादाविव 'तत्तेज' इत्यादावपि

स्वरसावगतमव्यवधानमादाय विगानं शङ्कते इत्याह—**परस्त्विति**। कार्यान्तर-सर्गस्य प्रामाणिकत्वान्न स्वरसावगताव्यवधानमात्रेण तदभावसिद्धिरिति परिहरतीत्याह—**सिद्धान्ती त्विति। साक्षात्पदमिति। आत्मन** इत्येतत्तु प्रकृतत्वादेव लब्धमिति भावः। P. 401-11

ननु कर्मकर्तरि कर्मणि वेति कथं टीका? 'तद्धेदं तर्ह्यव्याकृतमासीत्' इति पूर्ववाक्ये कर्मणि प्रयोगदर्शनेन, तदैकरूप्याय तदनन्तरप्रयोगस्यापि कर्मण्येव युक्तत्वादित्याशङ्क्य, तत्रापि स्वतो वा परतो वा अव्याकृतमासीदित्युभयथापि संभवान्न निर्णय इत्याशयेनाह—**नामरूपाभ्यामिति**।

तर्हि कर्त्रन्तरसत्वे किमर्थं कर्मणः कर्तृत्वविवक्षेत्यत आह—**लूयत इति**। P. 402-1 भिन्नकर्तृकमेव लवनं कर्मकर्तृकमुच्यत इत्यर्थः। **कर्मकर्तृ** इत्येव पाठे, तादृशलवनं प्रति कर्म कर्तृ इत्युच्यत इत्यर्थः। विपक्षे परसमवेतक्रिया-जन्यफलशालित्वाभावेन कर्मत्वमेव न स्यादिति भावः। **द्वितीये, कर्मणि लकार इति पक्षे**।

'असदेवेदमग्र आसीत् तत् सदासीत् तत्समभवदि'ति श्रुतिं व्याचष्टे—**इदमिति**। 'तद्धेक आहुरसदेवेदमग्र आसीदि'ति श्रुत्यर्थमाह—**तत्त्रेति**। P. 403-1 'तद्धेदं तर्ही'त्यादिश्रुतिं व्याचष्टे—**इदं जगदिति। अपरप्रयोज्यत्वेनेति** भाष्यार्थमाह—**अपरेति। तद्विषयेणैव परेणात्मशब्देनेति** भाष्यभावमाह—**तस्मादिति**।

**वीप्सा द्रष्टव्येति**। ततश्च 'मृल्लोहविस्फुलिङ्गाद्यै'रितिं नानादृष्टान्तकथन-मुपपद्यत इति भावः। 'यथा सोम्यैकेन लोहमणिने'ति श्रुतौ, मणिशब्द-स्वारस्यानुरोधेन लोहशब्दस्य सुवर्णपरत्वात्, तदनुवादके श्लोकेऽपि, लोहशब्दः स्वर्णपर इत्याशयेनाह—**लोहं सुवर्णमिति**। 'नास्ति भेदः कथंचन' इत्यस्यार्थ-माह—**प्रतिपाद्ये इति**। P. 403-5 'तमेव विदित्वाति मृत्युमेति' इत्यत्रातिशब्दस्य क्रिया-यामन्वयमाह—**मृत्युमिति**। P. 403-6 'असन्नेव स भवति' इति श्रुतावसाधुत्वमसच्छ-ब्दार्थ इत्याह—**असदिति**। 'पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वनो मन' इति श्रुतिं व्याचष्टे—**पश्यन्निति**। आत्मेति विशेष्यनिर्देशः।

**॥ इति कारणत्वाधिकरणम् ॥**

१. परिमलकारशङ्का।

## ॥ अथ जगद्वाचित्वाधिकरणम् ॥

सू०॥ जगद्वाचित्वात् ॥ १६ ॥

सू०॥ जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥

सू०॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

P. 403-9 **हैरण्यगर्भमतद्योतीति** । यद्यपि हिरण्यगर्भ एव मुमुक्षूपास्यं परं ब्रह्मेति हैरण्यगर्भमतेन नात्र पूर्वः पक्षः । न वा सिद्धान्ते तन्निरसनम् । तथापि 'यस्य वैतत्कर्मे'ति कर्मशब्दबलेन हिरण्यगर्भजीवपूर्वपक्षमुपन्यस्य तन्निरसने अर्थात् हैरण्यगर्भमतमप्याशङ्क्य निरस्तं भवतीति, तथोक्तम् । अत्र न्यायसापेक्षस्योपक्रमस्य स्पष्टेनोपसंहारेण समबलत्वात् संशय इत्याशयेनाह—**इहेति** । एवमपि प्राणपक्षस्य कथमुन्मेष इत्यत आह—**ब्रह्मशब्दश्चेति** । वाक्यभेदेन वाक्यैकत्वाभ्युपगमेन च पूर्वपक्षप्रवृत्तेः, पक्षद्वयेऽपि पूर्वाधिकरणेन सङ्गतिमाह—**एकवाक्य इत्यादिना** ।

**अवच्छेदके** विशेषके । एतट्टीकावाक्यापरिज्ञानात् कैश्चित् वाचस्पतिमतं दूषितम् । तदनादेयमित्याह—**जगत्कर्तृत्वमिति** । [1]घुष्यतीति सप्तम्यन्तं पदम् । परोक्तमेव दर्शयति—**जीवादिति** । **सकारणं** सूक्ष्मभूतसहितम् । ततश्चैवं वदता, जीवाश्रिताविद्यापरिणामस्य प्रपञ्चस्य जीवगतत्वात्, अध्यारोपापवादाभ्यां निष्प्रपञ्चस्वरूपं प्रतिपादयितुं प्रवृत्तानां वेदान्तानां समन्वयोऽपि प्रपञ्चाधिष्ठाने जीव एवेत्युक्तं स्यात् । एवं वदन् पुनश्च जीवे समन्वयं निराकुर्वन् कथं न लज्जितवानित्यर्थः ।

जीवगताविद्यापरिणामस्यापि प्रपञ्चस्य ब्रह्मैवाधिष्ठानमिति **अधिष्ठानं** P. 404-4 **विवर्तानामित्यादिना** प्रागेवोक्तमिति न दोष इत्याशयेनाह—**अधिष्ठानं हीति** । न तावदिति टीकासूचितं विकल्पं दर्शयति—**अत्रेति** । **राजा** अजातशत्रुः ।

---

1. एतेन कल्पतरौ, नेति दुष्यति इति पाठः नेति घुष्यति इत्येवं शोधनीयः ।

अग्निभिरुपकोसलं प्रति स्वोक्तविद्याशेषवक्तृत्वेन तदाचार्यनिर्देशादेकवाक्यत्वमनुमतमिति वैषम्यमाह—**तत्र हीति**। उत्तरत्र कथमपि ब्रह्मणोऽप्रतिपादने प्रक्रमस्थब्रह्मशब्दविरोध इति शङ्कते—**नन्विति**। भ्रान्तवाक्यगतत्वान्न विवक्षितार्थतेति परिहरति—**अत आहेति**। **पूर्वपक्षत्वादिति**। 'मृषा वै खलु मा संवदिष्ठा' इति निन्दया तन्निरसनादिति भावः। नन्वेवमजातशत्रोरप्यब्रह्मवक्तृत्वे, मृषावादित्वं स्यादिति तत्परिहाराय कर्मशब्दस्य यौगिकत्वमङ्गीकृत्य, तत्सन्दर्भस्य ब्रह्मपरत्वमेव वक्तव्यमित्याशयेन शङ्कते—**नन्विति**।

तेन 'ब्रह्म ब्रवाणी'त्यप्रतिज्ञातत्वात् बालाकिं प्रति ब्रह्मप्रतिपत्तिप्रतिबन्धकीभूतकल्मषनिवृत्तिफलकमुपासनमुपदिश्यत इत्यप्युपपत्तेः तदीयपदसन्दर्भपर्यालोचनयैव कश्चिदर्थो निर्णेतव्य इति परिहरति—**अत आहेति**। **अस्पन्दतोक्तेति**। P. 404-11 अन्यथा कौटस्थ्यभङ्गादिति भावः। ततश्च स्पन्दलक्षणस्य, परिणामलक्षणस्य वा व्यापारस्य ब्रह्मण्यसंभवान्न तन्निष्ठव्यापारविषयत्वलक्षणं तत्कार्यत्वं जगत इत्याह—**ब्रह्मणीति**।

ननु कल्पितव्यापारेण ब्रह्मण एव कर्तृत्वं वक्तव्यम्। अन्यस्यासंभवादिति शङ्कते—**ब्रह्मण इति**। गूढाभिसन्धिः परिहरति—**ननु प्राणस्येति**।

अभिसन्धिमजानानः शङ्कते—**ननु सोऽपीति**। तमुद्घाटयति—**तस्येति**। 'कतम एको देव' इति टीकोक्तं हेतुं विशदयति—**त्रयस्त्रिंशदिति**। P. 405-1 **टीकायां भूतानामिति च यः सर्वशब्द इत्यन्वयः**। **नन्वपच्छेदन्यायादुपसंहारस्यैव प्राबल्यं कुतो न भवेदित्याशङ्क्य, राजवाक्यस्य स्वरसत एकत्वावगमात् वेदोपक्रमन्याय एव प्रकृत इति दर्शयितुमेकस्मिन् वाक्य इति टीका**।

**विप्रनृपवचनयोरिति**। बालाक्यजातशत्रुवाक्ययोरित्यर्थः। पूर्वपक्षत्वादग्राह्यत्वं प्रागुक्तं निरस्यति—**यद्यपीति**। **न भ्रान्त इति**। न हि बालाक्यजातशत्रुसंवादप्रदर्शनपरा श्रुतिः। P. 405-3 किन्तु सुखप्रतिपत्त्यर्थमाख्यायिकारूपेण विवक्षि-

---

१. अत्र कल्पतरौ 'रूढ्याऽपहारमुक्त्वा योगासंभवमाह—न च ब्रह्मण इति।' इति अवतारितायां टीकायां ब्रह्मणि रूढोऽर्थः व्यापारः न संभवतीति आर्जवेन भासमानोऽर्थः सिद्ध एव। अन्योऽप्यर्थः कल्पतरावुच्यते इति बोध्यम्॥

तार्थप्रतिपादनपरा। ततश्च ब्रह्मोपासनविधित्सया प्रवृत्तो ब्रह्मोपक्रमो न भ्रान्तः। अत एव तस्य मृषावादित्वव्यपदेशोऽपीति भावः।

P. 405-4 इतोऽपि न भ्रान्तो ब्रह्मोपक्रम इत्याह—**सहस्रमिति**। **दत्तत्वादिति**। दातुं प्रतिज्ञातत्वादित्यर्थः। ततश्च श्रुत्या अन्यवाक्यमुखेनापि तदप्रतिपादने तदुपक्रमविरोध इत्याशयेनाह—**अत उपक्रान्तमिति**।

अनन्यथासिद्धोपसंहारानुरोधेन जीवनिर्णयादुपक्रमे ब्रह्मशब्दस्तत्रैव नेय इत्याशयेनाह—**उपसंहार इति**। आमन्त्रणशब्दाश्रवणेन विशिष्य प्राणादिव्यतिरेकस्यैव बोधने को हेतुरित्यत आह—**प्राणो हीति**। सुषुप्तिकाले प्राणो व्याप्रियमाणो वर्तत इत्यर्थः। अस्यामेव विद्यायामनन्तरसन्दर्भोऽपि जीवपर एवेति दर्शयतीत्याह—**उपसंहारोऽपीति**। **उपचर्यत इति**। स्वरसावगतस्य साक्षात्संबन्धस्य जीवे अभावादिति भावः। **टीकायां**—**वाच्यत्वं** लाक्षणिकत्वं इत्याशयेनाह—**लाक्षणिक इति**। पूर्ववाक्यनिर्दिष्टमादित्यादिकर्तृत्वमदृष्टद्वारेति, तन्निर्वाहार्थं प्रवृत्तत्वादस्य वाक्यस्य तदनुरोधेन लक्षणा न दोषायेति भावः।

P. 40 -10 योगापेक्षया रूढिपूर्विका लक्षणैव न्याय्येत्याशयेनाह—**रूढ्यर्थमिति**।

P. 406-1 ननु रूढिपूर्विका लक्षणा जगत्येव कुतो न भवेदित्यत आह—**जगदिति**[2]। **तत्संबन्धिनि** रूढार्थसंबन्धिनि? ब्रह्मविवर्ते जगति क्रियाऽविनाभावाभावादिति भावः।

**ये चेत्यादिटीकया** वाक्यान्तरबलादपि न ब्रह्मप्रतीतिरित्युक्तम्। तत्राशङ्कते—**यद्यपीति**। सत्यं सिध्यति भेदः। स तु न ब्रह्मधर्मिक इति परिहरति—**अत आहेति**। ततश्च आधाराधेययोः अन्यतर इह वेदितव्यत्वेनोच्यत इत्युपसंहरति—**इत्यस्माकमिति**।

**श्लोके ब्रह्मवादिन**मित्येतत्पदमब्रह्म ब्रह्मत्वेन **वादिन**मित्येवं योजयति—**आदित्यादीनिति**। **अपोद्येत्येव सिद्धे आङुपसर्गः** पादसौकर्यायेत्याशये-

---

१. अत्र कल्पतरौ 'अनारंभवादी' इत्यस्य पूर्वपक्षाभावात् अधिकरणानारंभवादीत्यर्थः॥

२. अत्र कल्पतरौ अग्रहे हि इति पाठो दृश्यते। स च जगद्ग्रहे हि इत्येवं शोधनीयः। अग्रहे हि इति पाठसत्वेऽपि तस्य रूढ्यर्थाग्रहे हि इत्यर्थकरणे न दोषः।

नाह—**निरस्येति**[1]। **जीवप्राणाभिधान** इत्यस्यार्थमाह—**यदि स्वरूपेणेति**। P. 406-5
**ब्रह्माभिधान** इत्यत्र ब्रह्मपदं भावपरमित्याशयेनाह—**ब्रह्मत्वेनेति**।

ननु भिन्नवक्तृकत्वेन वाक्ययोर्भेदात् कथं **ब्रह्मोपक्रमादिति टीके**त्याशङ्क्य, यत्र भ्रमप्रसक्तिं संपाद्य तन्निरसनेन तत्त्वं प्रतिपिपादयिषितम्, यथा वैश्वानरविद्यादिषु, तत्र भिन्नवक्तृकत्वमेकवाक्यतायामनुगुणमेवेत्याशयेनाह—**एवं चेति**। ब्रह्मपरत्वनिश्चये हेतुत्वायोगादाह—**सर्वश्रुतेरिति**।

'क्वैष एतद्बालाके पुरुषोऽशयिष्टे'ति जीवाधिकरणप्रश्न इति दर्शयति—**हे बालाक इति**। **इत्थमित्यर्थ इति**। आमन्त्रणशब्दाश्रवणादिप्रकारेणेत्यर्थः।

नन्वधिकरणे तादात्म्येन वर्तनरूपस्य शयनस्यैव भवनरूपतया 'क्वाशयिष्टे'ति प्रश्नेनैव चारितार्थ्ये, श्रुतौ 'क्व वा एतदभू'दिति भवनप्रश्नः किमर्थं पृथगुक्तः। ततश्च **जीवाधिकरणभवनेति टीका**नुपपत्तिरित्याशङ्क्य, शयनभवनयोर्भेदं दर्शयति—**भवनमित्यादिना**। 'तदैनं वा'गित्यनेन वागादीनामेतच्छब्दनिर्दिष्टे प्राणे अप्ययप्रतिपादनेन तदुपाधिकस्य पुरुषस्यापि प्राणे अप्ययप्रतिपादनादधिकरणप्रश्नोत्तरमित्यर्थः। एवं 'यथाग्ने'रित्यादेर्वागाद्यपादानत्वेन प्राणप्रतिपादकत्वाद्वागाद्युपाधिकपुरुषापादानप्रतिपादकत्वमित्याह—**यथाग्नेरिति**। P. 407-1

**जीवान्तरात्मत्वेति**। अप्ययरूपस्य शयनस्य, यथोक्तभवनस्य, स्वापदेशान्निर्गमनस्य च भेदे अनुपपत्तेरभेद एव वक्तव्यः। द्वयोश्च जीवयोरभेदायोगान्न हिरण्यगर्भे तदुपपत्तिरित्यर्थः। **ब्रह्मण्येवोपपत्ते**रित्यनेन हेतोरुक्तत्वादाशङ्कानुपपत्तिरित्यत आह—**न केवलमिति**। **आत्मशब्दादपीति**। तस्य त्रिविधपरिच्छेदरहितवस्तुबोधकत्वादिति भावः। प्रधानभूतवाक्यानुरोधेन गुणभूतपदस्वारस्यबाधो युक्त इत्याशयेनाह—**निर्णीतार्थेति**। **टीकायां व्यापाराभिधान इति** सतिसप्तमीत्याह—**सतीत्यर्थ इति**।

**आदित्यादेरिति**। आदित्यादिपुरुषेषु बालाकेः ब्रह्मत्वभ्रमादविशेषोक्तेरादित्यादिव्यतिरिक्ते जगति संकोचोऽस्त्विति भ्रमः स्यादिति तन्निरसनार्थं विशेषोक्तिरित्यर्थः। **जीवशब्दस्य लक्षकत्वोक्त्या प्राणशब्दस्य** मुख्यत्वं सूचितं, तदाह—**प्राणयतीति**। प्राणवत् करोतीति विग्रहे **विन्मतोर्लुगिति** मतुपो P. 408-4

---

1. एतेन भामत्यां "मृषावादिनमापोद्य" इति श्लोकपाठो ज्ञेयः।

लुकमभिप्रेत्य प्राणयतीत्युक्तम् । 'को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' इति ब्रह्मणः प्राणनरूपसत्ताप्रदत्वश्रुतेरिति भावः । श्रुतौ जीवशब्दाभावात् जीववाचकः पुरुषशब्दो जीवशब्दस्येत्यनेनोच्यत इति वदन् P. 408-4 लक्षणोपयोगितया शक्यसंबन्धं च दर्शयन्नाह—**जीववाचीति** ।

न पुनरिति टीकाभिप्रायमाह—**ब्रह्मभावेति** । **मृषावादीति** । मृषावादित्वेन बालाकेरपवादो निन्देत्यर्थः । न चेति चशब्दः किमर्थ इत्याशयेनाह—**प्रत्यक्षत्वादिति** । ब्रह्मणो वेदान्ताधिगतत्वादनधिगतेनेति कथमित्यत आह—**लोकेति** ।

प्रसिद्धत्वमनूद्य विधावनुगुणमेवेत्याशयेन शङ्कते—**नन्विति** । **प्रसङ्गादिति**[1] । शङ्काप्रसङ्गादित्यर्थः । स्यादेतदिति शङ्काया अनवसरत्वं परिहरति—**पूर्वत्रेति** । तर्हि तत्रैवेयमाशङ्का कर्तव्येत्याशङ्क्य, सिद्धान्तयुक्तिसंकलनानन्तरकर्तव्यभाष्यव्याख्ययैव परिहर्तुं शक्यत्वात्, तत्र न कृतेत्याशयेनाह—**भाष्यव्याख्ययेति** । टीकायां ते यस्येदमिति । कृतितत्फले 'यस्यदं कर्मे'ति निर्दिश्येते इत्यर्थः ।

उपात्तत्वादिति भाष्यस्याक्षिप्तत्वादित्येवं व्याख्याने बीजमाह—P. 408-13 **उपात्तत्वन्नाभिधेयत्वमिति** । कार्योत्पत्त्यनुकूलशक्तिमत एव कर्तृशब्दवाच्यत्वेन कृतेस्तदनभिधेयत्वादिति भावः । अर्थादेव निराकृतायाः शङ्कायाः पुनरुत्थापने हेतुमाह—**शब्दोक्तेति** । **कृतप्रतिवचनमपीति** । व्यापकोक्तिसन्निधावेकदेशोक्तिर्बालाकिभ्रमापोहार्थमित्येवं कृतप्रत्युत्तरमपीत्यर्थः ।

**व्याचष्ट इति** । शङ्कोद्भावनेन परिहारभाष्यमवतार्य, व्याचष्ट इत्यर्थः । नन्वित्यादिटीकाया अपि भाष्यव्याख्यानार्थत्वादेव न पौनरुक्त्यमित्याशयेनाह—**इदानीमिति** । **हिरण्यगर्भं वक्तीति** । मुख्यं प्राणं वेति शेषः । तथा च, कुत इत्यर्थः । **आत्मशब्दादिति** । त्रिविधपरिच्छेदराहित्यपरादात्मशब्दादिति भावः। भाष्यगतस्य वेदान्तशब्दस्य सर्ववेदान्तपरत्वेन व्याख्याने हेतुP. 408-17 माह—**एतस्मादिति** ।

---

१. कल्पतरौ प्रसङ्गागतं इति वर्तते। तत्तु प्रसङ्गादागतमिति शोधनीयम् एतदनुरोधात् ।

समुदाचरद्वृत्तीति टीकां व्याचष्टे—अमेति। स्वस्थतारूपः स्वाप इति भाष्ये स्वस्थताशब्दनिर्दिष्टया मुक्त्या रूपशब्देन सुषुप्तेरुपमानं कृतमित्यर्थः। विभजत इत्यनन्तरं, केषुचित्पुस्तकेषु प्रतीकग्रहणं न दृश्यते। अत आह—उपाधिजनितेति। उपाधिजनितत्वविशेषणेनैव स्वरूपज्ञानव्यवच्छेदसिद्धेः विशेषेति व्यर्थमिति शङ्कते—नन्विति। तद्विशेषणाभावे उपाधिजनितत्वस्यैव तत्रान्वयो न स्यादित्याशयेनाह—एतद्विशेषणेति। P. 409-1 P. 409-3

श्रुतिषु जीवाधारत्वेन ब्रह्मैवोच्यत इति नायमस्ति नियम इति शङ्कते—नन्विति। परिच्छिन्नत्वादन्तःकरणस्यैव तन्निर्देश इति परिहरति—अत आहेति। सूचनाऽज्ञानादिति। तज्ज्ञाने ह्यामन्त्रणाज्ञान(द्वाःस्थ)यष्टिघातोत्थापनादिना प्राणव्यतिरेकोऽपि सुज्ञानः। न च तस्य व्यष्टिप्राणव्यतिरेकेणापि चरितार्थत्वान्न समष्टिप्राणाभिमानिहिरण्यगर्भव्यतिरेकपरत्वमिति वाच्यम्। 'बृहन् पाण्डरवासस्सोमराज'न्निति विशेषणावगतस्य महत्त्वादेः समष्टिप्राणाभेदेनैव व्यष्टौ वक्तव्यतया, तद्व्यतिरेके अर्थाद्धिरण्यगर्भव्यतिरेकस्यापि सिद्धेः। अत एव भाष्ये अभ्युच्चय इत्युक्तमिति भावः।

पाण्यापेषमिति टीकापाठं व्याचष्टे—आपेषमिति। 'अथास्मिन् प्राण एवैकधा भवती'ति श्रुतिं व्याचष्टे—यदा पुरुष इति। 'स ब्रह्म त्यदित्याचक्षते' इति श्रुतिं व्याचष्टे—प्राणः सर्वदेवानामिति। भाष्ये एतच्छ्रुत्युदाहरणस्य प्रयोजनं न दृश्यत इत्यतः स्वयं दर्शयति—अस्माद्ब्रह्मशब्दादिति। 'सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येती'ति श्रुतिं व्याचष्टे—सर्वेषामिति। 'प्राणबन्धनं हि सोम्य मन' इति श्रुतेरर्थमाह—मन इति। P. 410-6 P 410-9

॥ इति जगद्वाचित्वाधिकरणम् ॥

---

१. स्वच्छतारूपः इति भाष्ये टीकायां च पाठो दृश्यते।

## ॥ अथ वाक्यान्वयाधिकरणम् ॥

सू०॥ वाक्यान्वयात् ॥ १९ ॥

सू०॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

सू०॥ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥

सू०॥ अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

P. 411-1 दृष्टान्तसङ्गतिमाह—**पूर्वत्रेति**। **जीवमात्रेति** मात्रग्रहणाज्जीवमुद्दिश्य विधीयमाने ब्रह्मणि पर्यवसानं वार्यते। **यातुमिच्छतेत्येतदर्थतो दर्शयति—गन्तुमिच्छतेति**। 'यन्नु म इयं भगो'रित्यत्र यच्छब्दो यद्यर्थक इति दर्शयन्नाह—**यत् यदीति**। एवं च **टीकायां** 'किमहं तेनामृता स्यामि'ति श्रुतौ तच्छब्द-दर्शनात् तदनुरोधेन [1]येनेति यच्छब्दः कल्पित इति ध्येयम्।

**वेदनमेव** तच्छब्दार्थ इति दर्शयतीत्याह—**श्रुताविति**। ततश्च, **टीकायाममृतत्वसाधनमित्यस्य** श्रुतिपूर्वोक्तपर्यालोचनलभ्यत्वेन कण्ठतोऽनु-

P. 411-6 पात्तत्वाच्छेषत्वोक्तिरिति भावः। **वाक्यसन्दर्भं व्याख्यातीति**। वैराग्योत्पाद-कत्वप्रकटनायेति शेषः।

**वा इत्येवं श्रुतश्शब्दः** इति व्युत्पत्त्या वैशब्द एव तथोक्त इत्याशयेनाह—**आत्मा वा इति**। विध्यनभ्युपगमादाह—**विधिवदिति**। **वाक्यशेष** इत्यनेन क्रियतोऽध्याहार उक्त इत्यत आह—**आत्मन इति**। ततश्च, श्रवणेन मत्या विज्ञानेन च जातं यद्दर्शनं तेनेति श्रुत्यर्थ इत्याह—**श्रवणादिनेति**। **अनात्मदृष्टौ**। जगतः स्वरूपेणानात्मरूपेण दृष्टावित्यर्थः। ब्राह्मणाद्यभिमान-स्यापि नियोज्यत्वादिद्वारा कर्मसु प्रवृत्तिसंपादनेनैव भ्रंशकत्वमित्याह—**ब्राह्मण्यादीति**। **अमृतत्वपदशब्देन** प्रत्यगभिन्नं ब्रह्मैवोच्यत इत्याशयेनाह—**आत्मतत्वादिति**।

**टीकायामन्यत्रात्मन** इति। आत्मनोऽन्यत्वेनेत्यर्थः। 'स यथे'ति श्रुतौ

P. 412 5 'स' इत्यस्यार्थमाह—**स दृष्टान्त इति**! आत्मव्यतिरेकेण न प्रपञ्च इत्यत्र साधको-

---

1. अत्र टीकायां येनेति शब्दो न दृश्यते।

पपत्तिसूचको वक्ष्यमाणो दृष्टान्त इत्यर्थः । एतदेव दर्शयितुं **टीकोक्तमर्थं** श्रुत्यारूढं करोति—**यथेति**। **बाह्यत्वेन**। विविक्तत्वेन। **दुन्दुभ्याघातसंज्ञक इति**। भयङ्कर इत्यर्थः। तथा च वार्तिकं—'वीरादिरससंयुक्तो दुन्दुभ्याघात उच्यते' इति। नन्वेवं क्लिष्टयोजनापेक्षया दुन्दुभेर्हन्यमानस्य बहिर्निस्सरन्तो ये शब्दाः तान्निरोद्धुं न शक्नुयात्। किं तु दुन्दुभेर्निरोधेन दुन्दुभ्याघातकस्य पुरुषस्य वा निरोधेन ते शब्दाः निरोद्धुं शक्यन्ते। इत्येवं योजना कुतो न भवेदित्याशङ्क्य, तथात्वे ग्रहणशब्दस्य निरोधार्थकत्वक्लेशापत्तेः, 'इदं सर्वं यदयमात्मे'ति प्रकृतानानुगुण्याच्च न तथा श्रुत्यर्थ इत्याशयेनाह—**इति श्रुत्यर्थ इति**। P. 413-1

**पञ्चम्यर्थे षष्ठ्याविति**। यद्यपि **चतुर्थाध्यायगते मैत्रेयीब्राह्मणे** पञ्चम्यन्त एव पाठः। तथापि चतुर्थषष्ठगतयोरुभयोरपि ब्राह्मणयोरेकहेलयैव व्याख्यानात् षष्ठानुरोधेन तथोक्तमिति ध्येयम्। **धूमग्रहणमिति**। अग्न्युपादेय-मात्रस्यैव वक्तव्यतया धूमत्वेन धूमग्रहणे प्रयोजनाभावादिति भावः। अत एव **टीकायामुत्तरत्र विष्फुलिङ्गोक्तिः**। **अथर्वाङ्गिरसोऽन्त इति**। **अथर्वाङ्गिरस** इत्येतदन्त इत्यर्थः। **ऐळं** इळापत्यं पुरूरवसं कामितवतीत्यर्थः। **इत्यादिः इतिहास इत्यन्वयः**। 'सदेव सोम्ये'त्यादेः कथं पुराणत्वमित्याशङ्क्य, सर्गादि-कथनरूपत्वात् पुराणत्वमित्याशयेनाह—**सर्गादिकथनमिति**। P. 413-2

**देवयंजनविद्येति**। देवयजनोभयसंबन्धिनी विद्येत्यर्थः। तत्र **देवविद्या** यज्ञाङ्गदेवतास्वरूपसमर्पको वेदभागो 'वज्रहस्तः पुरन्दर' इत्यादिः। **यजन-विद्या**—इष्टिपशुसोमादिविधिप्रपञ्चात्मको वेदभागः। **इतिहासपुराणादिं-** P. 413-5

---

१. अयमर्थः श्रुतप्रकाशिकायामुक्तः। तत्र 'ग्रहणशब्द इह निरोधपरः। उपादान-निरोधयोरपि वाचकत्वात्। यथा गृहीतानि पुष्पाणि, गृहीतश्चोर इति' इत्युक्तम्। परि-मलेऽपि अयमर्थः खण्डितः।

२. अत्र कल्पतरौ देवयजनविद्येति लेखकप्रमादागतं पाठमभिप्रेत्य आभोगे परि-मले च व्याख्यातम्। वस्तुतस्तु देवजनविद्या इति पाठश्शोध्यः। बृहदारण्यकभाष्ये चतुर्थे 'विद्या देवजनविद्या' इति व्याख्यातम्। तत्र आनन्दगिरीये 'देवजनविद्या नृत्यगीतादि-शास्त्र'मिति व्याख्यातम्। छान्दोग्यभाष्येऽपि भूमविद्याप्रकरणे 'देवजनविद्यां गन्ध-युक्तिनृत्यगीतवाद्यशिल्पादिविज्ञानानि' इत्युक्तम्। गन्धयुक्तिः कुङ्कुमादिसंपादनमिति आनन्दगिरीये।

शब्दानां लोकप्रसिद्धेतिहासादिपरित्यागेन वेदैकदेशपरत्वेन व्याख्याने किं बीजं ? इत्याशङ्क्य, टीकायामितिहासपुराणादीनां ब्राह्मणत्वकथनादेवं व्याख्यातमित्याशयेनाह—इत्यष्टविधमिति । अर्थादर्थसृष्टिरिति । षष्ठे 'इष्टं हुतमाशितं पायितमयं च लोक' इत्यादिना अर्थसृष्टेः कण्ठोक्तत्वेऽपि, चतुर्थे तदभावादार्थिकत्वमुक्तम् । तदनुरोधेनैव च नामरूपप्रपञ्चकारणतामिति भाष्यपाठोऽपि । नामरूपकर्मप्रपञ्चकारणतामिति भाष्यपाठस्तु षष्ठानुरोधेनेति ध्येयम् ।

P. 413-8

ननु गतार्थत्वादधिकरणमनारंभणीयमिति शङ्कावसरे कथं सिद्धान्तभाष्यव्याख्यानं टीकायामित्यत आह—सिद्धान्त इति । भाष्यगतपूर्वपक्षसिद्धान्तावलोकनेन शङ्कोत्थानात् सिद्धान्तस्य प्रकटत्वं दर्शयितुं तद्भाष्यव्याख्यानं युक्तमिति भावः । स यथा सैन्धवखिल्य इति । 'स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानु विलीयेते'त्यादिचतुर्थगतेन दृष्टान्तोक्तिपूर्वकवाक्येन 'स यथे' त्यादिदृष्टान्तप्रबन्धानन्तरभाविना वाक्येनेत्यर्थः ।

ननु 'स यथा सर्वासामपां समुद्र एकायन'मित्यस्य प्राकृतलयप्रतिपादकत्वाभावात् कथं दृष्टान्ततेत्याशङ्क्य, 'एवं सर्वेषां स्पर्शाना'मित्यादिरेव दृष्टान्तप्रबन्धः । तत्रापि दृष्टान्तं दर्शयितुं इदं वाक्यमित्याशयेनाह—समुद्रे इति । एवं च, दृष्टान्तपूर्वकेण दृष्टान्तप्रबन्धेनाहेति टीकार्थ इति भावः । ननु दृष्टान्तस्यापि दृष्टान्तवचनं किमर्थमित्याशङ्क्य, त्वगादिवाक्यजातस्य कथं ब्रह्मणि प्राकृतप्रपञ्चलयप्रतिपादकत्वमिन्द्रियाणां स्वस्वविषयायतनत्वमात्रस्यैव तत्र प्रतिपादनादित्याशङ्कायां, 'यथा नद्यः स्यन्दमाना' इत्यादिश्रुतिप्रतिपादितस्य नद्यादिल-

P. 413-11

१. 'सिद्धान्तस्य स्फुटत्वात् न पूर्वपक्षोऽस्तीति खल्वत्र शङ्का क्रियते । अतः सिद्धान्तस्फुटत्वोपपादनसमये सिद्धान्तभाष्यव्याख्यानस्य प्रासङ्गिकी सङ्गतिरित्यर्थः' इति परिमलम् ॥

२. इयमाशङ्का श्रुतप्रकाशिकायां दृश्यते । तत्समाधानाशयः परिमले—'सर्वासामपामित्यादिदृष्टान्तवचनेन समुद्रस्य नद्यादिसकलसलिललयाधारत्वमुच्यते । 'यथा नद्यस्स्यन्दमाना' इत्यादिश्रुत्यन्तरेषु तथैव समुद्रसलिलदृष्टान्तवर्णनदर्शनात् । ततश्च तदनुसारेण दार्ष्टान्तिकवचने त्वगादिशब्दैः स्पर्शादिसामान्यानि लक्षयित्वा तेषु तद्विशेषाणां लयप्रतिपादनद्वारा क्रमेण परमकारणे ब्रह्मणि स्पर्शादिसामान्यानामपि लयप्रतिपादने तात्पर्यं वर्णनीयम् । प्राकृतस्य लयस्यापि परमकारणपर्यन्ततायाः श्रुत्यन्तरेषु पुराणेषु च प्रतिपन्नत्वादिति भावः' इति ॥

यस्य 'समुद्र एकायन'मित्येकायनत्वव्याजेन प्रतिपादनवत्, स्पर्शादिलयस्यापि प्रकृते प्रतिपादनीयतया, तस्य च त्वगाद्यधिष्ठानत्वायोगेन तैः स्पर्शत्वादिसामान्यद्वारा ब्रह्म लक्ष्यत, इत्येतदर्थज्ञापनार्थत्वान्न वैयर्थ्यमित्याशयेनाह—**तत्र हीति**। P. 414-1

ननु 'एवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती'ति वाक्यस्य, लवणं समुद्रे क्षिप्तमौपाधिकखिल्यभावनिवृत्त्या समुद्रभावमिव, जीवोऽप्यौपाधिकजीवभावनिवृत्त्या ब्रह्मभावं प्राप्नोतीत्येव, अव्यवहितखिल्यवाक्यार्थदार्ष्टान्तिकपरत्वात्, कथमेकायनवाक्योक्तप्राकृतलयापेक्षया दार्ष्टान्तिकपरत्वमित्याशङ्क्य, तच्छ्रुत्यर्थे पर्यालोच्यमाने जीवोपाधिभूतप्रपञ्चलयब्रह्मभावयोः उभयोरपि प्रतीयमानत्वात् उभयदार्ष्टान्तिकत्वमविरुद्धमित्याशयेनाह—**एवं वा अर इति**।

**साम्येनोत्थानं** खिल्यभावः। कार्यकरणभावावस्थितभूतसंपिण्डितत्वम्। तदेतत् अवच्छेदपदव्याख्यानेन सूचयति—**अवच्छेदोऽल्पत्वमिति**। **नश्यन्त्यनु तदुपाधेरिति टीकायां नश्यन्तीति** शत्रन्तं द्वितीयान्तं पदम्। आत्मनः खिल्यभावविनाशोऽपि भूतविनाश एव पर्यवस्यतीति मनसि निधायाह—**टीकायां—ततो न प्रेत्य कार्यकरणभूतनिवृत्ताविति। टीकायां—संज्ञामात्रेति**। ज्ञप्तिमात्रनिषेधादित्यर्थः। P. 414-7

**वाक्यं विभजत इति**। यत्र यस्यामवस्थायां, अर्थात् अज्ञानावस्थायामिति पर्यवस्यति। **इवशब्दो** मिथ्यात्वपरः। यस्यामवस्थायां द्वैतं ब्रह्मभिन्नं प्रातीतिकं भवति **तत्** तस्यामवस्थायां **इतर इति, इतरमिति, पश्यतीति च**, भवतीत्येतदर्थकं 'यत्र ही'त्यादिवाक्यं तात्पर्यकथनेन **विभजत** इत्यर्थः। **वाक्यं विवृणोतीति**। अस्य विदुषो यस्यां प्रत्यगभिन्नब्रह्मसाक्षात्कारावस्थायां, तेन सविलासाविद्यानाशे (तथा च) प्रातीतिकं सर्वं जगत्तदधिष्ठानभूतात्मस्वरूपमेवासीत्, तदा तस्यामवस्थायां, केन कं पश्येत् केन कं जिघ्रेत्। कर्तृकर्मक्रियाकरणभेदाभावादित्याद्यर्थकमिदं वाक्यं तात्पर्यकथनेन विवृणोतीत्यर्थः।

**तदेवमित्यादिटीकां** व्याचष्टे—**येनाहमिति। आख्यातप्रतिरूपकमिति**। अत एव 'जातेरस्तित्वनास्तित्वे न हि कश्चिद्विवक्षती'त्यादिप्रयोग इति भावः। जीवलिङ्गानां ब्रह्मणि संभवस्य, जीवस्य जीवत्वप्रहाणेन ब्रह्मभाववर्णनस्य P. 414-7

च प्रातर्दनादिनयसिद्धत्वेऽपि, जीवब्रह्मणोः भेदाभेदाविति, मतनिराकरणमेतद्-
P 414-7 धिकरणप्रयोजनमाह—**यद्यपीत्यादिना**।

**सन्देहः** मेळनम् ब्राह्मणे। पूर्वपक्षसिद्धान्तयोरभावात् कथं **टीके**त्यत आह—**[मैत्रेयीब्राह्मण] विषय इति**। **कृतमिति**। भाष्य इति शेषः। भोक्तृत्वादीनां वा किमर्थं समाधानमित्याशङ्क्य तेषामैकान्तिकाद्वैतविरोधित्वं दर्शयति—**भेदाभेदेति**। **जीवरूपेणेति**। 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाये'ति श्रुतं **समुत्थानमुत्पत्तिः**। 'तान्येवानुविनश्यती'त्युत्तरत्र विनाशश्रवणा-
P. 415-4 दिति भावः। **मुखत एवेति**। **विज्ञानघनशब्दस्य** ब्रह्मपरत्वादिति भावः।

**उपोद्बलनमात्र**मित्येतद्विशदयति—**भाष्य इति**। आभासत्वे हेतुमाह—**दुन्दुभ्यादिभिरिति**। नानादृष्टान्तमुखेन पुनः पुनः उपपादितस्य तस्यौपचारिकत्वायोगादिति भावः। **श्लोकोक्तमिति**। श्लोके कर्तव्यत्वेन निर्दिष्टमित्यर्थः। देशीयर्प्रत्ययप्रयोगसूचितमनिष्टत्वं प्रकटयति—**पूर्वपक्षमिति**। **निरूपणमिति**। वह्नित्वेन निर्धारणमित्यर्थः। **सर्वज्ञं प्रत्युपदेशवैयर्थ्याच्चेति** हेतुं व्याचष्टे—**ब्रह्मव्यतिरिक्तेति**। तस्यैव तत्संबन्ध्येव तं प्रत्येवोपदेशः
P. 416-2 स्यादित्यर्थः। **अयुक्तत्वादिति**। सर्वज्ञं प्रत्युपदेशवैफल्यादिति भावः।

**अभेदमादायेति**। अभेदांशमादायेत्यर्थः। ब्रह्माभिन्नस्यैव जीवस्य देहेन्द्रियाद्युपाधिकृतं चेत् कालुष्यं कथमस्य मतस्य सिद्धान्तात् भेद इत्यत आह—**उपाधिसंपर्क इति**। अस्मिन् मते जीवपरभेदो निरुपाधिक एवेति भावः। मुक्तिकालव्यावृत्त्यर्थमाह—**अनादिकाल इति**। अस्मिन् मते भेदस्य स्वाभाविकत्वाभ्युपगमेन हेत्वनपेक्षत्वादाह—**गमकस्येति**।

ननु पार्थिवपरमाणुगतस्य श्यामत्वस्य कथमनादित्वम्? पाकजत्वादित्याशङ्क्य, संसारस्यानादेरप्यनित्यत्वे अणुश्यामताऽनित्यत्ववदिति दृष्टान्तत्वेन तदुदाहरतां **वृद्धतार्किकाणां** मतेनैतदित्याह—**वृद्धेति**। भाष्योदाहृतं मुण्डकवाक्यं
P. 416-6 विहाय प्रश्नवाक्योदाहरणे हेतुमाह—**अर्थसाम्यात्त्विति**। **अर्थसाम्यात् हेतोः**—अर्थसाम्यप्रकटनायेत्यर्थः। ततश्च दृष्टान्तमात्रेण कथं स्वाश्रयत्वं नामरूपस्योक्तं भाष्ये? औपाधिकत्वेनापि तदुपपत्तेरिति शङ्काया अनवकाशः। अभ्यस्तदृष्टान्तबलेन सकलांशसाम्यसिद्धेरिति भावः।

'अनेन जीवेने'ति श्रुत्या अभेदावगमात् कथं विकारत्वशङ्केत्यत आह—**अनेनेति**। कार्यकारणभावस्य न्यूनत्वमौपाधिकत्वं, तदाश्मरथ्यमते न संभवतीति शङ्कते—**आश्मरथ्येति**। **कियानपीति** भेदविशेषणमिति परिहरति—**आशङ्क्याहेति**। तर्हि कथं भाष्ये **कार्यकारणभावः कियानपि भेद** इति सामानाधिकरण्यनिर्देश इत्याशङ्क्य टीकार्थं दर्शयन् लक्षणयेति परिहरति—**आस्थिते इति**। तथा च **टीकायामनात्यन्तिकोऽभेद इति** पदच्छेद इति भावः। P. 417-1

काशकृत्स्नीयमतस्य श्रुत्यनुसारित्वं भाष्योक्तं दर्शयति—**टीकायामात्यन्तिके हीत्यादिना**। **तात्त्विके सतीति** सतिसप्तमीसूचितं भेदस्य कल्पितत्वमुपपादयन्नाह—**टीकायामनाद्यविद्येति**। तत्त्वमसीत्येवंरूपस्य तत्त्वोपदेशस्य यच्छ्रवणादि, तत्प्रकर्षानन्तरजन्मनेत्यर्थः। चेतनदृष्टान्तमप्याह—**टीकायां—राजपुत्रस्येव चेति**। **राजपुत्रोऽसीत्याप्तोपदेशेनेति**। शक्यस्ससमूलकाषं कषितुमित्यनुषङ्गः।

कल्पितस्यैव ज्ञाननिवर्त्यत्वमित्येतद्व्यतिरेकप्रदर्शनेन द्रढयितुमाह—**टीकायां—न तु मृद्विकार इत्यादिना**। भाष्ये—**एवं चेति** चशब्दः किमर्थक इत्याशयेनाह—**टीकायामपि च जीवस्येति**। **टीकायां—अप्यये सतीति**। तद्भिन्नस्य सतो नामरूपप्रहाणेन तत्प्राप्तेरप्ययरूपत्वादिति भावः। **अतश्चेत्युपसंहारभाष्ये** चशब्दप्रयोगात् शङ्कोत्तरमपि तद्भाष्यमित्याशयेनाह—**टीकायां—नन्वित्यादिना**। **व्याख्यातार्थं चेति** टीकाभिप्रायमाह—**ननूच्छेदेति**। भाष्ये योऽयमेवकारस्तस्याभिप्रायमाहेत्यर्थः। P. 417-4

**कर्मकरणे निषिद्धे इति**। तत्त्वसाक्षात्कारावस्थायां कर्मकरणादिनिषेधोक्त्या तस्य कल्पितत्वप्रकटनेन वस्तुतः कालत्रयेऽपि तदभावप्रकटनादिति भावः। **कर्मत्वं प्रतिषिद्धमिति**। 'केन विजानीया'दित्यधिक्षेपेण सर्वस्यापि तदधीनभानत्वात् तस्य कथमन्याधीनं भानमिति कर्मत्वप्रतिषेधादित्यर्थः। P. 417-3

'सर्वमात्मैवाभू'दित्यनेन सर्वस्याप्यात्माभेदमात्रमुच्यते। न त्वत्यन्ताभेदः। एवं च सत्यात्मनोऽत्यन्तभिन्नं कं तादृशेन केन पश्येदिति पूर्ववाक्यार्थः। विज्ञातारं जीवमत्यन्तभिन्नत्वेन केन विजानीयादित्युत्तरवाक्यार्थ इति केचित्,

P. 417-8 तन्मतमनूद्य, निराकरोति—**अत्यन्तभिन्नस्येति**। अध्याहारदूषणे स्थित एव दूषणान्तरमाह—**आत्मैवाभूदिति**। अन्यथा एवकारवैयर्थ्यादिति भावः।

अपि चेत्यतः प्राक्तनभाष्ये भूतपूर्वगत्या विज्ञातृत्वमित्यनुक्तत्वात् न केवलमिति टीकानुपपत्तिरित्यत आह—**श्रुत्यनुसारीति**। **भूतोदन्तः** अतीतवृत्तान्तः। केषुचित् आचार्येष्वविश्वासे सर्वेष्वप्यविश्वासः स्यादित्याशयेन शङ्काभिप्रायमाह—**यदीति**। मूलश्रुतिप्रत्यक्षपर्यन्तं तन्मतं नादेयमिति परिहाराभिप्रायमाह—**पुंगौरवेणेति**। **उत्तरेति**। उत्तरं यच्छ्रुत्युदाहरणभाष्यं सदेव सोम्येत्यादिभाष्यं तस्येत्यर्थः। श्रुतिप्रबन्धोपन्यासेन कथं स्मृतिमत्त्वकथनमित्यतोऽध्याहारेण योजयति—**स्मृतिमत्त्वं चेति**। P. 418-7

आदावुपसंहारकथनस्य प्रयोजनमाह—**उपसंहारेति**। न केवलं भिन्नभिन्नश्रुत्युदाहरणेन। अपि तु **अजामित्वाय** आलस्यपरिहारायोपसंहारद्वारापीत्यर्थः। आवश्यकत्वकथनस्य प्रयोजनमाह—**बहुप्रमाणेति**। **अमृत** इत्यनेन पौनरुक्त्यमाशङ्क्याह—**श्रुताविति**। **विरोधादित्यनेन** सूचितं अविरोधपक्षनिरासं दर्शयति—**अविरोधश्चेदिति**। अविरोधेऽपि नात्यन्तभेदो युक्तः। घटेऽपि घटभेदबुद्ध्यापत्तेः। किन्तु भेदाख्यं कञ्चिद्धर्ममभ्युपेत्य प्रतीतिबलादत्यन्ताभेद एवाभ्युपेयः। ततश्च न व्यावृत्तिव्यवहारप्रयोजकभेदसिद्धिरित्यर्थः। P. 419-5

भेदाभेदवादिमते परमात्मभिन्नाभिन्नत्वेन जीवात्मविषयकं तत्वज्ञानं मोक्षसाधनमभ्युपगन्तव्यम्। तत्तु न संभवति। भेदाभेदयोः विषमबलत्वे प्रबलपक्षावलंबिज्ञानांशेन दुर्बलपक्षावलंबिज्ञानांशस्य बाधादित्येवं **नात्मनीत्यादिटीकाभिप्रायं** भाष्यगतनिरपवादपदव्याख्यानव्याजेनाह—**भाष्य इति**। ननु भेदाभेदयोः समबलत्वमात्रेण कथं संशय इत्यत आह—**समबलेति**। तयोः समबलत्वे, तद्बोधकप्रमाणयोरपि समबलत्वेन संशायकत्वमेवेत्यर्थः।

विरुद्धयोः समबलयोरपि कार्यकारणरूपभेदेन समावेश इति भेदाभेदवाद्युक्तं निरस्यति—**भेदाभेदेति**। **श्लोकं** व्याचष्टे—**यथेति**। तदुक्तं भेदाभेदसाधकमपि निरस्यति—**सामानाधिकरण्यमिति**। न केवलं भेदाभेदमते युक्तिविरोधः। श्रुतिविरोधोऽपीत्याहेति दर्शयति—**भाष्यस्थेति**। **निस्संशयतेति**। तथा च संशयत्वानाक्रान्तप्रज्ञावान् स्थितप्रज्ञशब्देनोच्यत इति भावः। लोकप्रसिद्धिविरोधात् श्रुतीनां भेदनिषेधकानामन्यपरत्वमिति शङ्काशयमाह—**लोकेति**। P. 420-1 P. 420-1

**टीकासूचितमनुमानमाह—यद्विरुद्धेति**[1]। 'तस्मान्नाने'ति निगमनमपि द्रष्टव्यम्। भट्टरीत्या अवयव[त्रय]प्रयोगावश्यंभावात्।

शङ्काया अनुमानदूषकत्वं प्रकटयन्नाह—**स्वाभाविकमिति**। ननु भेदाभेदौ चेदेकत्राभ्युपगतौ, तर्हि तयोर्भाविकत्वमपि कुतो न भवेदित्याशङ्कां निराकर्तुं **न तावदिति टीके**त्याह—**भाष्यकृद्भिरिति**। अनुमानोपोद्बलितप्रसिद्धिप्राबल्यमादाय शङ्कते—**मा भूतामिति**। **वास्तवे इति**। अनुमानादेः स्वरसतो वास्तवभेदविषयकत्वादिति भावः। अन्यथासिद्धप्रसिद्ध्याद्यपेक्षया श्रुतिरेव बलवतीति परिहरति—**नेत्याहेति**।

**अन्यथासिद्धयति**—अन्यथासिद्धं करोति। **अनेकान्तयति**—अनेकान्तं व्यभिचरितं करोतीत्यर्थः। ब्रह्मणोऽविद्याश्रयत्वानङ्गीकारात् तत्समर्थनं व्यर्थमित्यत आह—**प्राचीनैरिति**। एकैकजीव[वाविद्या]विषये, अविद्याजीवव्यक्तिनानात्वाभावात् कथं दृष्टान्तदार्ष्टान्तिकयोस्तुल्यतेत्यत आह—**अनादित्वेति**। तर्हि कथमन्योन्याश्रयपरिहार इत्यत आह—**उत्पत्तौ हीति**।

**यद्युपाधीति**। विशेषणपक्षे मुक्त्यनुपपत्तिः। उपलक्षणपक्षे ब्रह्मण एव संसारः स्यादिति भावः। **विभेदकमिति**। व्यावर्तकमित्यर्थः। **अनन्वयित्वेनेति**। कार्यान्वयित्ववेषेण विनेत्यर्थः। **तत्रेति**। कार्यानन्वयित्वेन व्यावर्तकानां मध्य इत्यर्थः। **कादाचित्कतयेति**। यावत्कार्यावस्थाननियममन्तरेणेत्यर्थः। P. 420-9

[3]प्रथमश्लोकतात्पर्यमाह—**नीलोत्पलमित्यादिना**। **व्यावृत्त्यर्थं** प्रयुक्तमित्यर्थः। **अलक्तककाकौ त्विति**। लोहितःस्फटिकः तमानय, काकवद्देवदत्तगृहं तद्गच्छेति प्रयोगयोरित्यर्थः। **द्वितीयश्लोकतात्पर्यमाह—अलक्तकं त्विति**। **त्वयापीति**। वस्तुतो ब्रह्माभिन्नस्यैव जीवस्य लिङ्गशरीरोपाधिकृतो भेद इति त्वयाभ्युपगमात् विशेषणोपलक्षणविकल्पचोद्यमुपाधित्वेन परिहारश्च समावित्यर्थः। **वस्तुतस्तु** त्वन्मते परिहारो न युक्तः। औपाधिकत्वे संसारस्य सत्यत्वायोगादित्याशयेनाह—**नचेति**। P. 421-1 P. 421-5

---

१. अत्र कल्पतरौ 'यद्विरुद्धधर्मवत् तन्नाना दहनतुहिनवत्। तथा च' इति पाठः शोध्यः।

२. इदमपि पदं कल्पतरौ द्रष्टव्यम्।

३. अत्र 'कार्यान्वयित्वेन' इत्यादिः 'उपाधिता लक्षणता च सिद्धा' इत्यन्तः प्रथमश्लोकः कल्पतराविति बोध्यम्॥

P. 421-5 टीकोक्तं परिहारं विशदयति—**अविद्याधीनेति**। 'इन्द्रो मायाभि'रित्यादिश्रुत्यनुरोधेन भाष्यं लक्षणया नेयमित्याशयेन परिहरति—**आशङ्क्याहेति**। नामाविद्योभयसाधारणमुपलक्ष्यरूपमाह—**अवस्तुत्वेनेति**। **कैवाविद्याया इति**। सच्चिदखण्डानन्दस्वरूपभानाभानघटने का कथेत्यर्थः।

नन्वेवमपि गुहानिहितस्य भानाभाने विरुद्धे इत्यत आह—**अविद्यागुहेति**। **असंभावनीयेति**। इदानीन्तनमायाविप्रेरिताया अपि मायायास्तथात्वदर्शनादिति भावः। **ऐक्यसिद्धाविति**। जीवाभिन्नस्य ब्रह्मणो गुहानिहितस्य चेत्यर्थः। **टीकायां—गुह्यमिति**। गुहानिहितमित्यर्थः। **टीकायां—ये त्वित्यादिना** गृहीतः प्रतीको भाष्ये न दृश्यत इत्यत आह—**ये तु निर्बन्धमिति**। **व्याख्यानेति**। यच्छब्दव्याख्यानपूर्वकमित्यर्थः। **यदि त्वेवमिति टीकाभिप्रायमाह—न्यायेनेति**। परिणामित्वेन कार्यत्वे सति कृतकत्वनित्यत्वयोः व्याघातादित्यर्थः। **विकत्थनं** निरर्थकं वचः।

नदीपाथःपरमाणूनां किं समुद्रपाथःपरमाणुभिः ऐक्यं, उत तदारब्धेनावयविना? इति विकल्प्य, **नदीपाथ इत्यादिना** प्रथमं निराकृतम्।

P. 422-1 द्वितीयं शङ्कते—**अथेति**। सावयवत्वसांशत्वयोः भेदाभावात् कथं **निष्कलमितीत्यादि**शङ्केत्यत आह—**सावयवत्वमिति**। **भागवत्त्वमात्रमिति**। अग्नेर्यथा विस्फुलिङ्गभागवत्त्वं तद्वदिति भावः।

**श्रोत्ररूपस्य नभसः शब्दश्रवणयोग्यत्वकथनं** निरर्थकमित्याशङ्क्य, कार्यकरत्वादौपाधिकस्यापि सत्यत्वमस्तीति कथयितुं तद्विशेषणमित्याह—**शब्दश्रवणयोग्यमितीति**। **अनेन विशेषणेन सत्यत्वमुक्तमित्यन्वयः**। **दिगारभ्यमिति**। यद्यपि **कौमारिलमते** कर्णनेम्यवच्छिन्नदिगेव श्रोत्रम्। तथापि तदेकदेशिमतं तादृशं संभाव्यत इति तथोक्तम्। **प्राप्ताप्राप्तेत्यादिटीकां** व्याचष्टे—**नेम्याकारेति**। ततश्च, **प्राप्ताप्राप्त**पदार्थनिमित्तकेन सांशत्वव्यपदेशसदसद्भाव**विवेकेनेति टीकार्थ** इति भावः।

P. 422-4 सिद्धान्तेऽप्ययं दोषः कुतो न भवेदित्यत आह—**कल्पितेति**। कर्णनेम्युपाधिकल्पितनभोऽवच्छेदानभ्युपगमादित्यर्थः। तथा च सिद्धान्ते नभोऽपेक्षया तत्वान्यत्वाभ्यामनिर्वचनीयं कल्पितमस्ति श्रोत्रं, न तथा त्वन्मत इति भावः।

**प्रतिसंबन्धिनं** दर्शयन्नाह—**कर्णस्येति** । **अंशमात्र इति** । सत्यांशमात्र P. 422-8 इत्यर्थः । **एकवदिति** । एकस्य परमाण्वादेरिवेत्यर्थः । नभोंऽशो यदि प्रातीतिकत्वे सति अज्ञायमानः स्यात्, तर्हि असन्नेव स्यादिति तर्कपरतामाक्षेपटीकाया दर्शयति—**यत्काल्पनिकमिति** ।

ननु ज्ञातस्यैव श्रोत्रस्य शब्दश्रवणहेतुत्वसंभवात् कथं **टीकेत्या**शङ्क्य तत्पूर्वं तज्ज्ञानमनुभवविरुद्धमित्याह—**अज्ञातत्वेनेति** । **आपादकेति** । आपा- P. 423-1 दके विशेष्यासिद्धिमित्यर्थः । ननु शब्दश्रवणात्प्राक् श्रोत्रानुमितिरनुभवविरुद्धेत्युक्तम्, अत आह—**निगूढ इति** । पूर्वकार्यलिङ्गकानुमितिरप्यनुपलब्धिबाधितेति शङ्कते—**पूर्वकार्येति** । नन्वेतदपेक्षया तस्य वास्तवत्वकल्पनमेव लघ्वित्यत आह—**एतदुक्तमिति** । संस्कारोपाधिकत्वेनाप्युपपत्तौ न्यायविरुद्धं वास्तवत्वं न कल्पनीयमिति भावः ।

यद्यपि जातिपुरस्कारेण प्रथमपाद एव प्रवाहानादित्वपक्षे दूषणं परिहृतम् । तथापि परिहारान्तरमाह—**अत आहेति** । **टीकायामनुपपत्तिरेवेति** तत्सिद्धवत्कारो न युक्तः । उपपत्तेरुक्तत्वात् । उपपत्त्यन्तरसद्भावाच्चेत्याशङ्क्य तस्याभ्युपगमवादत्वं दर्शयति—**नोपपद्यते अर्थ इति** । उपपद्यमानो वा न भवेदित्यर्थः । एवं च **श्रोत्रादेरर्थस्यानुपपत्तिरेव वास्तु** । **कार्यकारणप्रपञ्चस्य मायात्मकत्वादिति टीकार्थ** इति भावः । कर्मधारयभ्रमं व्यावर्तयति—**अनुपपद्यमान इति [नोपपद्यते इति]** ।

स्वयं परिहारान्तरमाह—**कर्णनेमीत्यारभ्य परिहार इत्यन्तेन** । **टीकोक्तं** परिहारमपेक्ष्य **वाशब्दः** । उपाधिमपेक्ष्य नभसैवारब्धत्वान्न सत्त्वविरोध इति परिहारान्तरमाह—**किञ्चेति** । **अस्माकमिति** । न वैशेषिकाणामिव कर्णशष्कुल्यवच्छिन्नं नभः । नापि कौमारिलानामिव तदवच्छिन्ना दिगिति भावः । प्राणे तु नोपाध्यपेक्षापीत्याह—**वायोरिति** । **सांशत्वतः** । सावयवत्वात् । **सत्यः** व्यावहारिकः । 'सर्वाणि रूपाणी'त्यादिश्रुतिं व्याचष्टे—**रूपाणीति** । पूर्वार्धेन P. 423-11 योजयति—**एतमिति** । **अहं वेदेति** मन्त्रद्दशो वचनम् ।

॥ इति वाक्यान्वयाधिकरणम् ॥

## ॥ अथ प्रकृत्यधिकरणम् ॥

सू०॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

सू०॥ अभिध्योपदेशाच्च ॥ २४ ॥

सू०॥ साक्षाच्चोभयाम्नानात् ॥ २५ ॥

सू०॥ आत्मकृतेः परिणामात् ॥ २६ ॥

सू०॥ योनिश्च हि गीयते ॥ २७ ॥

वृत्तसंकीर्तनं हि संगतिकथनार्थम् । तथा च तत्पादादावेव युक्तमिति P. 424-1 शङ्कायामाह—**मध्येपादमिति** । व्यवहितेनापि जन्माद्यधिकरणेन सामर्थ्यात् संबन्धः, विशेषस्य तत्रानिरूपितत्वात् अपौनरुक्त्यं चेति दर्शयितुं वृत्तकीर्तनमित्याह—**व्यवहितेति** । **जन्मादिसूत्रेति** । **जन्मादिसूत्रेणास्याधिकरणस्य सङ्गत्यभिधित्सायामित्यर्थः** । लक्षणस्य विचारप्रतिज्ञया सङ्गतिकथनस्य प्रकृतोपयोगमाह—**आकस्मिके हीति** । **अत एवेति** । ब्रह्मणि कारणवाक्यसमन्वयपर्यवसायित्वादस्याधिकरणस्येत्यर्थः । **पादसङ्गतिरिति** । कारणे विशेषविप्रतिपत्तिनिरासेन गतिसामान्यसमर्थनार्थत्वात् पादस्येति भावः ।

P. 424 6 **अवशेषशब्दः** कर्मणि व्युत्पन्न इत्याशयेनाह—**अवशिष्यमाणमिति** । **उपादानकारणानुसरण इति टीकासूचितं** विकल्पं विशदयति—**तदेति** । **अवश्येति** । उपादानाभावे कार्यस्य सत्वायोगादिति भावः । ननु जगन्निमित्तत्वमात्रस्यापि लक्षणत्वसंभवे, किमर्थमुपादानत्वमपीत्याशङ्कां निराकर्तुं **नाप्यव्याप्तिरिति टीका** । तदभिप्रायमाह—**अद्वैतेति** । उभयकारणत्वमेव प्रथमसूत्रप्रतिज्ञातमद्वितीयं ब्रह्म लक्ष्यं व्याप्नोति । न निमित्तत्वमात्रम् । तथा सति ब्रह्मव्यतिरिक्तमुपादानं तदुपादेयं च जगत्सत्यमेव स्यादित्यद्वितीयत्वक्षतेरिति भावः । अव्याप्तिनिराकरणेनैवासंभवोऽपि निरस्त इत्याह—**न चेति** ।

यद्यप्युपादानाधिष्ठातृत्वेन निमित्तत्वं नाभेदे संभवति । तथापि विवर्त- P. 424-11 स्थले न तथा नियमः इति भावः । **समन्वयावसान इति** । 'प्रकृतिश्चे'त्यधिकरणस्य समन्वयावसाने लेखने निमित्तं वक्ष्यत इति 'कारणत्वेन चे'त्यधिकरणे

यत्प्रतिज्ञातं तदिदं दर्शितम्। एवं तर्हि जन्मादिसूत्रमत्रैव किमिति न लिखित-मित्यत आह—**अप्रदर्शिते त्विति**। जगत्कारणे ब्रह्मणि **समन्वयो दुष्प्रति-पाद** इत्यर्थः। P. 424-11

भाष्यसूचितं सहेतुकं संशयं संगतिं च सिद्धवत्कृत्य, पूर्वपक्षभाष्यार्थ-माहेत्याशयेनाह—**ईक्षितृत्वश्रुतेरित्यादिना**। **प्रतिज्ञामिति**। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञामित्यर्थः। **टीकासूचितमनुमानमाह—ब्रह्मेति**। **प्रभुत्वाच्चेति**। नियन्तृत्वादित्यर्थः[१]। **असरूपत्वं** न पूर्वोक्ते साध्ये हेतुर्भवितुमर्हति, कथञ्चि-त्सारूप्यस्य ब्रह्मणि पक्षेऽपि सत्वात्। सर्वथा सारूप्यस्य मृदादावप्यभावादित्यत आह—**ब्रह्म न पृथिवीति**। ब्रह्म न जलप्रकृतिः, निस्स्नेहत्वात् तेजोवत्। ब्रह्म न तेजःप्रकृतिः, उष्णस्पर्शविधुरत्वात्, वायुवदित्यादिप्रयोगमभिप्रेत्ये-त्यर्थः। **अतीतकालतामागमबाधाम्**।

नन्वागमस्य कारणसामान्यविषयकत्वमसिद्धम्। 'यतो वा इमानी'ति श्रुतौ यत इति प्रकृतिपञ्चमीबलादुपादानत्वप्रतीतेरित्यत आह—**आगमे हीति**। P. 424-16 ननु हेत्वर्थकत्वे 'हेता'वित्यनेन सूत्रेण तृतीयया भवितव्यत्वात् कथं पञ्चम्यन्तते-त्याशङ्क्य, हेतावपि ज्ञापकसिद्धा पञ्चम्यस्तीति दर्शयति—**हेतुमनुष्येभ्य इति**। P. 425-1 ब्रह्मणि ज्ञातेऽपि वियदादिषु, मृदादिषु ज्ञातेषु घटादिष्वपि च, संशया-दिदर्शनात् प्रतिज्ञादृष्टान्तौ त्वयापि गौणावास्थेयौ। तथैव ममापीत्याशयेन परिहरति—**तत्राहेति**।

ननु मुख्यार्थसंभवोऽसिद्धः। अनुमानबाधकत्वापेक्षया गौणत्वस्यैव न्याय्यत्वादित्याशयेन शङ्कते—**नन्विति**। दुर्बलप्रमाणानुरोधेन प्रबलप्रमाण-स्वारस्यहानिरयुक्तेति परिहरति—**अत आहेति**। अन्यपरत्वादागमस्य नास्मिन् विषये प्राबल्यमित्याशयेन शङ्कते—**अस्त्विति**। निमित्तमात्रपरत्वमसिद्धमिति परिहरति—**तत्राहेति**। **कार्यस्य विवर्तत्वेनेति**। तथा च जगत्तत्त्वस्य ब्रह्म-रूपत्वेन वाचारंभणे मिथ्याभूते वियदादौ संशयादिसत्वेऽपि ब्रह्मज्ञानेन जगत्त-त्वस्य मृत्सुवर्णकृष्णायसज्ञानैः तन्मात्रसत्ताकतया तदभिन्नानां घटमकुटखनित्रादीनां च ज्ञानसंभवादद्वैतवादे प्रतिज्ञादृष्टान्तौ मुख्याविति भावः। P. 426-1

---

१. 'न चानुमानिकं युक्तमागमेनापवादितम्' इति टीकाया अयमर्थः—आनु-मानिकं न च युक्तम्, यतः तत् आगमेन अपवादितं बाधितमित्यर्थः॥ इति भाति॥

ननु दृष्टान्तानुरोधेन ब्रह्मज्ञानेन सर्वज्ञानं कार्यविषयमेव। ततश्च लोक-
P. 426-2 दृष्टयनुसारादुपादानादन्यदेव निमित्तमस्त्वित्याशयेन शङ्कते—**यदीति**। 'येनाश्रुतं श्रुतं भवती'त्याद्युपक्रमानुरोधात् श्रुत्यन्तरानुरोधाच्च ब्रह्मविज्ञानेन सर्वविज्ञानमविशेषेण सर्वप्रपञ्चविषयमेव। ततश्च कथमेकस्मिन् विज्ञाते सर्वं जगद्विज्ञातं स्यादिति शङ्कायां, कार्यस्य कारणमेव स्वरूपमिति दर्शनेन कार्यप्रपञ्चस्य ब्रह्माभेदप्रदर्शनेन चेतनवर्गस्य च [ब्रह्माभेदात् ब्रह्मणो] ज्ञानात् सर्वविज्ञानमुपपद्यत इति दर्शयितुं परः सन्दर्भः प्रवर्तते। तत्र कथं दृष्टान्तमात्रेण श्रुतितात्पर्यावगतस्य सर्वविज्ञानस्य कार्यमात्रविषयतया सङ्कोच इति परिहरति—**अत आहेति**।

ज्ञापकसिद्धत्वान्न स्मर्यत इति कथमित्यत आह—**ज्ञापकेनेति**। ज्ञापकसिद्धत्वमभ्युपेत्य हेतुपञ्चम्या अनुपादानमुक्तम्। इदानीं ज्ञापकसिद्धत्वमेव नास्ति। 'विभाषा गुणेऽस्त्रियाम्' इति सूत्रविहितहेतुपञ्चमीमादायापि, हेतुमनुष्यसूत्रगतहेतुग्रहणोपपत्तेः इत्याशयेनाह—**अपि चेति**। तर्हि तेनैव सूत्रेण यत इति हेतुपञ्चम्यस्तु। नेत्याह—**न च ब्रह्मेति**। 'जनिकर्तुः प्रकृति'रित्यस्य पंचमीविधायकत्वाभावात् कथं टीकेत्याशङ्क्य परंपराभिप्रायत्वान्न दोषः इत्याशयेनाह— **जनिकर्तुरिति**।

अभिध्यायाः स्वविषयत्वमात्रेण कथमुपादानत्वमुक्तमित्यत आह—
P. 427-1 **कार्यकारणाभेदसूचनादिति**। टीकायां—व्याचष्टे इत्यनन्तरं श्रुतं आकाशादेवेतीत्येतन्न तदुपयोगिप्रतीकग्रहणम्। तस्य श्रुतित्वेन भाष्यकारवाक्यत्वाभावात्। उत्तरटीकयान्वितत्वाच्च। अतः प्रतीकमध्याहारेण दर्शयति—**उपादानान्तरेत्यादिनेति शेषः इति**। ननु सूत्रे साक्षादिति पदस्य उपादानान्तराभावं (साक्षादेव)दर्शयतीत्येतावदर्थप्रतिपादनासामर्थ्यात् कथं टीकेत्याशङ्क्य, सूत्रावयवेनोपादानान्तरव्यवधाननिषेधकेन सूचितमित्येवं टीकार्थमाह—**आकाशादेवेति**।

अव्यवधानेन निर्दिष्टे सूत्रे प्रकृतिपदाभावात् टीकाऽयोगमाशङ्क्याह—
P. 428-1 **भाष्य इति**। **टीकायां कर्मत्वेनेति**। घटशरावाद्यात्मना क्रियमाणाया मृद इव वियदाद्यात्मना क्रियमाणस्य ब्रह्मणोऽप्युपादानत्वावश्यंभावादिति भावः। **अभिन्न इवेति**। मिथ्याभूतस्य विकारस्य मुख्याभेदासंभवादिवकार इति भावः। **निरुक्तपदव्याख्येति**। भाष्योदाहृतश्रुतिगतनिरुक्तपदव्याख्येत्यर्थः।

ननु सामानाधिकरण्यमात्रेण कथं प्रकृतिविकारभावावगमः। 'तत्त्वमसि' 'दण्डी पुरुष' इत्यादौ तदनवगमादित्याशङ्क्य, तत्र कल्पितस्य तेन सामानाधिकरण्यं तदुपादानकत्वे सत्येवेत्यन्वयव्यतिरेकाभ्यां दर्शयितुं **कथं चेति टीका**। तत्र पृथिव्यादीनां कल्पितत्वं वा कथमवगम्यत इत्याशङ्क्य श्रुत्यन्तरा-[1]नुरोधेनेति दर्शयति—**द्वे वावेति। कथं च तद्ब्रह्मणो रूपमिति टीकया** तद्रूपत्वाभावनिर्देशेन तदुपादानकत्वाभावोऽपि सिद्धवत्कृत इत्याह—**यदीति**। P. 423-2

एवं तदुपादानकत्वकथनेन तद्रूपत्वमप्युक्तप्रायमित्याह—**तर्ह्येवेति। टीकायां—पक्षश्चेति**। प्रतिज्ञावयवोऽप्रसिद्धविशेष्य इत्यर्थः। **विशेष्याश्रयग्राहीति** टीकाभिप्रायमाह—**साध्यं प्रतीति। अनिष्पाद्यत्वादिति**। असतः कदाचिदपि सत्त्वायोगादिति भावः। सत्त्वपक्षे तन्निष्पत्त्यर्थप्रवृत्त्यानर्थक्यमित्याह—**प्रवृत्तीति**।

ननु केवलं युक्तिमात्रेण कथं सौत्रपरिणामशब्दान्यथाकरणमित्याशङ्क्य, श्रुतिसंमतत्वात् युक्तेरपि सूत्रस्वारस्यविघटकत्वमित्याशयेनाह—**उदाहरिष्यमाणेति**। **'मृत्तिकेत्येव सत्य'मिति** कारणसत्यत्वप्रतिपादिकया श्रुत्या, निर्विकारत्वमनुमतमित्यर्थः। **नित्यत्वादितीति**। **नित्यत्वादनेकदेशत्वादि**त्येतद्धेतुगर्भनिर्देशयोर्नित्यस्य निष्कलस्येत्येतयोर्विवरणमित्यर्थः। P. 429-5

**एवमिति**। समानसत्ताकान्यथाभावरूपमपि परिणाममभ्युपेत्य, विषमसत्ताकान्यथाभावरूपविवर्तपरतया सौत्रपरिणामशब्दो योजितः। इदानीं तु विषमसत्ताकान्यथाभावरूप एक एव परिणामः[2]। अन्यादृशस्य परिणामस्य लोके P. 429-7

---

१. श्रुत्यन्तरे 'अथात आदेशो नेति नेती'त्यनन्तरवाक्येन ब्रह्मातिरिक्तमूर्तामूर्तनिषेधात् पृथिव्यादीनां कल्पितत्वमवगम्यत इति बोध्यम्।

२. अत्र कल्पतरौ छान्दोग्यवाक्यकारः ब्रह्मनन्दी वृद्धः विवर्तवादावलम्बी इति तदीयवाक्यप्रदर्शनेन निर्धारितम्। अतः केषांचित् ब्रह्मनन्दी विशिष्टाद्वैतसिद्धान्तमूलपुरुष इति वादो निर्मूल इति ज्ञेयं प्रामाणिकैः। ब्रह्मनन्दिना छान्दोग्यवाक्यमेव रचितम्, न तु ब्रह्मसूत्रोपरि स्वातन्त्र्येण वा, बोधायनकृतत्वेन परैराघुष्यमाणब्रह्मसूत्रभाष्यसंग्रहात्मकत्वेन वा कोऽपि ग्रन्थः कृत इत्यपि अवधेयम्। द्रविडाचार्यैरपि ब्रह्मनन्दिकृतछान्दोग्यवाक्योपरि भाष्यमेवारचितम्। तस्मात् तेऽपि विवर्तवादावलम्बिनः, न विशिष्टाद्वैतसिद्धान्तमूलपुरुषाः। मिथ्याप्रचारमात्रेण परेषां, न मोहमाप्नुयुः प्रामाणिका इति भूयो भूयो निवेद्यते।

P. 429-9 अप्रसिद्धेरित्याहेत्यर्थः । **कार्यमिथ्यात्वमिति** । इतिशब्दस्य प्रकारार्थकत्वेन मृत्तिकाप्रकारापन्नं यत्तदेव सत्यमित्युक्त्वा, घटशरावाद्यपेक्षया, मृत्तिकायास्तदपेक्षया तत्कारणस्येत्येवं परमकारणस्य ब्रह्मण एव सत्यत्वे श्रुतेस्तात्पर्यमिति भावः ।

क्वचित् साक्षादित्यादिटीकाभिप्रायमाह—**एकमेवेति** । **प्रधानानुरोधेनेति** । स्वर्गकामविध्यनुरोधेन 'को हि तद्वेदे'ति, स्वर्गसन्देहवाक्यस्य पामरप्रसिद्धसन्देहानुवादकत्ववत्, सृष्टिश्रुतेरप्यविद्याकल्पितपरिणामानुवादकत्वमित्यर्थः । **भ्रान्ते इति** । उपादानत्वस्य भ्रममात्रसिद्धत्वे, ब्रह्म नोपादानम्, किन्तु निमित्तमेवेति पूर्वपक्ष एव समर्थितः स्याद् । अतः प्रमितमेवोपादानत्वमिति जगत् सत्यमित्यर्थः । तर्हि श्रुतिविरोध इत्यत आह—**निर्विकारत्वेति** ।

निमित्तकारणमेव ब्रह्मेति पूर्वपक्षिमते, ब्रह्मण उपादानत्वं प्रातीतिकम् । सिद्धान्ते तु, व्यावहारिकं तदित्यभ्युपगमेन भ्रमसिद्धस्यापि ब्रह्मोपादानत्वस्य सृष्टिश्रुतिभिरवान्तरतात्पर्येण प्रतिपादितत्वेन व्यावहारिकत्वस्यैव सिद्ध्या पूर्व-P. 429-12 पक्ष्यभिमतप्रातीतिकत्वस्य न प्रसक्तिरित्याशयेनाह—**वाक्याभासोत्थेति** । कथं तर्हि ब्रह्मणः सविकारत्वं निर्विकारत्वं चेत्यत आह—**निर्विकारत्वमिति**[1] । **असत्य इति** । घटस्थले असन्नित्यर्थः । **न चाद्वैतमिति** । तस्य ब्रह्माभेदादिति भावः ।

॥ इति प्रकृत्यधिकरणम् ॥

---

# ॥ अथ सर्वव्याख्यानाधिकरणम् ॥

## सू०॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥

अतिदेशत्वेऽप्यस्याधिकरणस्य पूर्वाधिकरणन्यायातिदेशकत्वाभावात् तेन सङ्गतिर्वक्तव्या । अतिदेशस्य विशेषशङ्कानिराकरणार्थत्वात् सापि वक्तव्या ।

---

१. 'निर्विकारत्वं विकारात्यन्ताभावो ब्रह्मधर्मः । न चानिर्वाच्यो विकारः तं निर्वाच्यं न सहते । असत्य इव तव घटाभावः सत्यघटम्' इति कल्पतरौ पाठः शोधनीयः॥

ते उभे अपि श्लोकेन दर्शयति—जगत इति। आदिशब्देन शून्यस्वभावौ गृह्येते। दृष्टान्तबललब्धं दार्ष्टान्तिकमाह—अत्र न किञ्चनेति। P. 430-2

शून्यादिवादपक्षे 'एतस्याणिम्न' इत्यसङ्गतं स्यादित्यतः पक्षान्तरमाह—अणिम्न इति। अस्मिन् पक्षे 'न किञ्चने'त्यप्रत्यक्षपरमित्याह—अदृश्यमानेति। सूक्ष्मता चोक्तेति। 'स य एषोऽणिमे'त्यादाविवेति भावः। लक्ष्यमाण इति। अनेन वैदिकः पदसमन्वय इत्यत्रापि लक्ष्य इत्यस्यानुषङ्गो दर्शितः। एतदध्यायार्थावगतावे(तस्यै)व मुख्याधिकारिणः परमपुरुषार्थसिद्ध्या कृतकृत्यतेत्याशयेनाह—इत्येतत्सर्वमिति।

॥ इति सर्वव्याख्यानाधिकरणम् ॥

इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डुभट्टमहोपाध्यायतनूभवेन
श्रीमन्नारायणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशगृह्यमाणेन श्रीलक्ष्मी-
नृसिंहचरणारविन्दचञ्चरीकेण श्रीलक्ष्मीनृसिंहेन
विरचितायां कल्पवृक्षप्रदीपिकायां
आभोगाख्यायां प्रथमाध्यायस्य
चतुर्थः पादः॥

॥ समाप्तश्चाध्यायः ॥

॥ शुभमस्तु ॥

---

श्रीः

॥ श्रीलक्ष्मीनृसिंहचरणारविन्दाभ्यां नमः ॥

# ॥ अथ द्वितीयाध्यायस्य प्रथमः पादः ॥

सर्ववेदान्तसंवेद्यं सच्चिदानन्दलक्षणम् ।
ब्रह्माहमस्मि निर्दोषं गुरुदेवप्रसादतः ॥

## सू०॥ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्य-स्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

## सू०॥ इतरेषां चानुपलब्धेः ॥ २ ॥

P. 432-1 सोपपत्तिकं संशयं दर्शयति—**चेतनेति**। **सङ्कोच्यतामिति**। स्वरसावगतमुख्यत्वांशप्रहाणेन प्रधानगतं जगदुपादानत्वं चेतने उपचर्यते तदुपासनानुष्ठानार्थमित्येवमित्यर्थः। **सर्वज्ञेति**। 'ज्ञानैर्बिभर्ती'ति श्रुत्या कपिलस्यापि सर्वज्ञत्वेन सर्वज्ञभाषितयोर्वेदस्मृत्योस्तुल्यत्वमित्यर्थः। **अर्थापहारेणेति**। स्पर्शनबोधिकया प्रत्यक्षश्रुत्या तद्विरोधिनः सर्ववेष्टनरूपस्यार्थस्य अभावनिश्चयेनेत्यर्थः॥

ननु अधिकरणारम्भे तटस्थेनाक्षिप्ते तदारम्भः सिद्धान्तिनैव समर्थनीयो न पूर्वपक्षिणेति कथं टीकेत्यत आह—**पूर्वपक्षीति**। **टीकायां—प्रसाधितोऽपीति**। पूर्वमीमांसायामित्यर्थः। अपौरुषेयत्वमसिद्धमिति परिहरति—**इत्याशंक्याहेति**। P. 433-7 **पौरुषेयत्वेनेति**। एवञ्च, शास्त्रयोनित्वाधिकरणे वेदस्य पौरुषेयत्वाशङ्कासमाधाने अत्रत्ये एवोक्ते इति भावः

ननु स्फुटतरं प्रतिपादकत्वं श्रुतीनामप्यविशिष्टमित्यत आह—**अनन्यपरत्वमिति**। तदप्यर्थान्तरराहित्यादिति भावः। क्रमप्राप्तं सूत्रव्याख्यानभाष्यं P. 434-2 विहाय **दर्शितं तु श्रुतीनामिति** भाष्याभिप्रायवर्णने हेतुमाह—**अन्यस्मृतीति**। **विलक्षणा इति**। वेदेन सार्वज्ञ्यबोधनादिति भावः। 'ज्ञानैर्बिभर्ती'ति श्रुतेः उत्पत्तिसिद्धज्ञानवत्त्वेनाप्युपपत्तेर्न तावता नित्यज्ञानसिद्धिरिति परिहरति—**इत्याशंक्याहेति**। तर्हि कथमाजानसिद्धाः कपिलादय इति प्रथेत्यत उक्तम् P. 434-9 **टीकायां—अत एवेति**।

ततश्च पूर्वसिद्धाया इति भाष्याभिप्रायमाह—टीकायां—तथा चेति । P. 434 10 तच्छब्देनेति । तद्विरुद्धार्थेति तच्छब्देनेत्यर्थः । तदपबाधितमिति तच्छब्देन तु वेदप्रामाण्यावधारणं विवक्षितमिति भावः । विप्रतिपत्ताविति । यदि स्मृतीत्यादिसिद्धान्तादिम(हा)भाष्योक्तं विप्रतिपत्तौ चेत्यादि-भाष्येण स्मारयतीत्यर्थः ।

ननु सांख्यस्मृतिः श्रुत्यवगमिताऽऽसभावेन कपिलेन प्रणीतत्वात् प्रमाण-मेवेति शङ्कते टीकायाम्—ननु श्रुतिश्चेदिति । अज्ञानावरणरहितं सिद्धार्थ-गोचरं यत् ज्ञानं तदतिशयमित्यर्थः । भाष्ये सांख्यप्रणेतुः कपिलादन्य एव कपिलः श्रुतावुक्त इत्युक्तम् । तत्र किं नियामकमित्याशंक्य मन्वादिस्मृत्य-प्रामाण्यपरिहाराय तथात्वं निश्चीयत इत्याशयेनाह—टीकायां—न तावदिति ।

श्रुतिसामान्येत्यत्र श्रुतिशब्दः शब्दपर इत्याह—सगरपुत्रेति । ननु P 435-1 सांख्यप्रणेतैव सगरपुत्रदाहकोऽपि, भेदे प्रमाणाभावात् । 'कपिलस्तत्वसंख्याता भगवानात्ममायया' इति तस्य परमेश्वरत्वस्मरणाच्च । ततश्च तत्प्रणीतस्मृत्यनु-रोधेन मन्वादिस्मृतय एव हेया इति शङ्कते—टीकायां—स्यादेतदिति ।

मन्वादीनामश्रौतत्वमसिद्धमिति परिहरति—टीकायामत आहेति । श्रुतिप्रख्यापितमाहात्म्यपुरुषप्रणीतत्वाविशेषे कपिलस्मृत्यपेक्षया मन्वादिस्मृतेः प्राबल्ये किं नियामकमित्याशंक्य स्मृत्यन्तरसंवादात् श्रुतिसंवादाच्च प्राबल्यमित्या-शयेनाह—टीकायां—तस्याश्चेत्यादिना । श्रुतिसंवादोऽकिञ्चित्कर इति शङ्कते टीकायां—स्यादेतदिति । P. 435-8

ननु वेदे परमेश्वरादन्यस्य स्वतन्त्रस्य कर्तुरभावात् कथं परमेश्वरस्यास्वा-तन्त्र्यम् ? आप्तप्रणीतत्वाभावे वेदस्य प्रामाण्यं वा कथं स्यादित्याशंक्य, न कर्तृत्वप्रयोजकीभूतं स्वातन्त्र्यमिह वार्यते, किन्त्वनन्यापेक्षत्वलक्षणं, तदर्थज्ञान-

---

१. 'पूर्वोक्तं स्मारयति—सिद्धव्यपाश्रयकल्पनायामपीति' इति टीकातः 'सिद्धव्य-पाश्रये'त्यादिभाष्येण स्मारयति इत्यवगम्यते । पूर्वोक्तमित्यस्य च 'सिद्धव्यपाश्रये'त्यादि-भाष्यात् पूर्वं 'विप्रतिपत्तौ चे'त्यादिभाष्येण उक्तमिति कल्पतरुवाक्यात् स्वरसतः अवगम्यते । एवं च आभोगकारोक्तिः अनुपपन्ना, टीकावाक्यानालोचनमूला च । इति ध्येयम् । परं तु 'सिद्धव्यपाश्रये'त्यादिभाष्यं, 'विप्रतिपत्तौ चे'त्यादिभाष्यम् 'यदि स्मृत्यनवकाशे'त्यादि-भाष्यं च समानार्थकमिति तावता सन्तोष्टव्यमिति भाति ।

पूर्वकप्रणेतृत्वलक्षणं च। प्रामाण्यं च वेदस्य बोधकत्वप्रयुक्तं, नाप्तप्रणीतत्वप्रयुक्तम्। भ्रान्तप्रतारकवाक्यस्यापि प्रमाणत्वा[पाता]दिति **टीकाभिप्रायमाह—**

P. 435-4 **यथेत्यादिना**। कार्यकारणभावानादित्वेन द्वितीयमपि स्वातन्त्र्यं निरस्तमित्याशयेनाह—**फलितमाहेति**।

परमेश्वरस्य वेदार्थज्ञानपूर्वकमेव वेदकर्तृत्वमिति वदन् प्रष्टव्यः—(१) किं लोके वाक्यरचनं तदर्थज्ञानपूर्वकमेव दृश्यत इति? (२) किं वा वेदरचनातः पूर्वं तदर्थज्ञानं वर्तत इति? अथ वा ज्ञानपूर्वकविरचनानभ्युपगमे माणवकवदीश्वरस्यापि वेदकर्तृत्वं न स्यादिति? (४) अपि वा वेदार्थज्ञानानपेक्षणे तदानीं तदभावादीश्वरस्य सर्वज्ञत्वं न स्यादिति? (५) यद्वा अर्थज्ञानाऽभावेऽपि वेदरचनोपपत्तौ ईश्वरस्य वेदार्थज्ञानसद्भावे प्रमाणं न स्यादिति।

(६) अथ वा वेदतदर्थज्ञानयोः कार्यकारणभावाभावे परमेश्वरस्य शास्त्रयोनित्वेन शास्त्रविषयाधिकविषयज्ञानवत्त्वानुमानं प्रागुक्तं न स्यादिति? (७) किं वा वक्तृज्ञानलक्षणगुणजन्यत्वाभावे वेदस्य प्रमाजनकत्वमेव न स्यादिति? (८) अथ वा कपिलादीनामपि तर्हि तदर्थज्ञानेन विनापि तत्प्रणेतृत्वे सांख्यादिस्मृतीनामपि वेदतुल्यत्वं स्यादिति?

नाद्यः—अभिनवविरचनानभ्युपगमादित्याह—**येनानादिरिति**। द्वितीयं शङ्कते—**नन्विति**। अतः **कपिलतुल्यः किं न स्यादित्यर्थः**। आवश्यकशास्त्रविज्ञानेनैव तद्रचनोपपत्तेरर्थज्ञानमन्यथासिद्धमिति परिहरति—[पूर्व]**वर्णानुपूर्वी हीति**। तदर्थस्फुरणकाले अवश्यं शास्त्रमपि स्फुरतीत्यत्र हेतुमाह—**आदर्शेति**। प्रतिबिम्बस्फुरणकाले आदर्शस्येव शास्त्रार्थस्फुरणकाले शास्त्रस्यापि स्फुरणमवर्जनीयमिति भावः।

स्वयमेव दृष्ट्वा विरचनादीश्वरस्य वेदकर्तृत्वं न माणवकस्येति वैषम्यान्न

P. 436-1 तृतीय इत्याह—**स्वकृतेति**। **शास्त्रस्येत्यादिना** चतुर्थं निराकृत्य, पञ्चमं निराकरोति—**तदर्थेति श्लोकेन**। सर्गादौ श्रुतिसिद्धवेदकर्तृत्वबलाद्वेदज्ञातृत्वे, अपेक्षणीयान्तराभावादवर्जनीयतया तदर्थस्यापि स्फुरणमस्तीति स्वतो वेदज्ञातृत्वादेव तदर्थज्ञानवत्त्वमपि निश्चीयते। नैवं माणवक इत्यर्थः।

P. 436-4 षष्ठं निराकरोति—**सति चैवमिति**। **तद्भावनियतेति**। कृत्तिकोदयसद्भावस्य रोहिणीसन्निधानसद्भावेनेव शास्त्रयोनित्वसद्भावस्य शास्त्रविषयाधिक-

विषयज्ञानसद्भावेन व्याप्तिरित्यर्थः। ततश्च ततस्तदनुमानमिति भावः। सप्तममाशङ्कते—नन्विति। वेदस्य बोधकत्वे दोषशङ्कानिरासे वा न वक्तृज्ञानस्योपयोग इति परिहरति—स्वत इत्याहेति। P. 436-5

चरमं शङ्कते—प्रमाणानामिति। कपिलादिस्मृतीनां स्वतो बोधकत्वेऽपि, तत्र कपिलादीनामभिनवविरचनाकर्तृत्वेन स्वातन्त्र्यात् तदर्थज्ञानजन्यत्वावश्यम्भावे तस्य भ्रमत्वशङ्कायां तद्वाक्यजन्यज्ञानेऽप्यप्रामाण्यशङ्कोदयात् तत्परिहाराय मूलप्रमाणगवेषणान्न वेदतुल्यतेति परिहरति—अत आहेति।

ननु विलम्बितप्रवृत्तेरपि स्मृतेरनुमितश्रुतिमूलकत्वात् तदर्थबाधे श्रुत्यर्थबाध एव स्यादित्याशंक्य प्रत्यक्षश्रुतिविरोधे स्मृतीनां मूलभूता श्रुतिर्नास्तीत्येव पर्यवस्यतीति दृष्टान्तमुखेनाह—यथा अनपेक्षत्वेनेति। इह यावच्छब्दस्य साकल्यार्थकत्वायोगात् कालविलम्बार्थकत्वमाह—कथञ्चिदित्यर्थ इति। तथा च तावदित्यस्य ततः प्रागेवेत्यर्थ इति भावः॥ १॥ P. 436-10

प्रधानादितराणीत्यादिभाष्योक्तं महदादीनां लोकवेदप्रसिद्धत्वाभावं प्रकटयति—टीकायां—प्रधानस्येत्यादिना। तत्र आत्यन्तिकत्वं सामस्त्यम्। ततश्च समस्तप्रमाणान्तरविसंवादान्मूलाभावाच्च कपिलादिस्मृतीनां स्वरूपतो विषयतश्चाभाव इति टीकार्थः। तत्र वन्ध्याया इवेति दृष्टान्तं विशदयति—दौहित्रस्येत्यादिना। ब्राह्मणादेराकृतिगणत्वात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि चे'ति ष्यञ्प्रत्यये दौहित्र्यमिति रूपमिति भावः। सा अप्रमाणमिति। मूलस्य विषयस्य दुहितुः, मूलस्य पूर्वानुभवस्य चाभावात् स्वरूपतो विषयतश्चाप्रमाणमित्यर्थः।

उपजीव्येति। आर्षज्ञानप्रामाण्यार्थमुपजीव्यवेदजातीयतया वियदादिपदार्थबोधकवेदस्य प्रबलत्वेन, तद्विरोधे आर्षज्ञानस्यापि महदादिपदार्थबोधकस्याप्रमाणत्वादिति भावः। जगतः प्रधानोपादानकत्वेन ब्रह्मोपादानकत्वाक्षेपे तत्समर्थनार्थं प्रधानोपादानत्वबोधकस्मृतेरप्रामाण्ये वक्तव्ये, प्रधानपरिणाममहदादिबोधकस्मृत्यप्रामाण्यवर्णनमसङ्गतमित्याशङ्कां निराकर्तुं कार्यस्मृतेरिति भाष्यम्। तद्भाष्यं तात्पर्यतो व्याचष्टे टीकायां—तस्मादिति।

'अव्यक्तं पुरुषे ब्रह्मन्निष्कले सम्प्रलीयते' इति स्मृतिं ज्ञानादित्यध्याहृत्य व्याचष्टे—अव्यक्तमिति। 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इति P. 437-1

P. 437-1 स्मृतिं व्याचष्टे—प्रभवतीति। इति च व्युत्पन्नौ प्रभवप्रलयशब्दावित्यर्थः। 'तस्मात् कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकस्स नित्य' इत्यापस्तम्बवचनं व्याचष्टे—तस्मादिति।

'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानञ्च पश्ये'दित्यत्र सर्गादौ स्वस्मात् प्रसूतमृषिं कपिलं कनकवर्णं हिरण्यगर्भं ज्ञानैः ज्ञानसाधनैः वेदैर्यो बिभर्ति पुष्णाति, तं जायमानावस्थमेव सकलवेदार्थज्ञोऽयं भवत्विति पश्येत्पश्यति चेति श्रुत्यर्थं सिद्धवत्कृत्य बिभर्तीत्यनेनोक्तं पोषणं पूरणरूपमिति दर्शयन् यच्छब्देन परमात्मोच्यत इति दर्शयति—ज्ञानैरिति।

सर्वस्यात्मेति। 'योऽयोनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः' इति पूर्वार्धे, अयोनिं कारणरहितां, योनिमविद्यां, विश्वानि रूपाणि, शरीराणि, वियदाद्याः सर्वा इतराश्च योनीरधितिष्ठतीत्युक्त्या प्रतिपादितं सर्वात्मत्वं यच्छब्देन निर्दिश्यत इति भावः।

एवञ्च यो मूलाविद्यायाः सत्तास्फूर्तिप्रदः सर्वस्यात्मा हिरण्यगर्भस्य स्रष्टा स विद्याविद्याभ्यामन्य इति, पूर्वमन्त्रगत'सोन्य'पदानुषङ्गेण योजना द्रष्टव्या। अथ वा यच्छब्दनिर्दिष्टस्य परमेश्वरस्य सर्वात्मत्वमनुसन्धेयत्वेन बोध्यते। तथा च श्वेताश्वतरोपनिषद्विवरणे उक्तम्—'स एव मुमुक्षुभिरात्मत्वेन ज्ञातव्य इति वाक्यशेषः' इति।

एवञ्च परिमले परिदृश्यमानेषु बहुषु कल्पतरुग्रन्थकोशेष्वविद्यमानस्य लेखकप्रमादादपि सम्भावितस्य क्वचित्कोशे विद्यमानस्य स सर्वस्यात्मेति पाठस्य प्रामाणिकत्वेन परिकल्पनं, कल्पितस्यापि तस्य श्रुतावविद्यमानस्य ग्रन्थे श्रुतित्वसूचकरहितस्यापि श्रुतित्वं परिकल्प्य 'मन्त्रगतयच्छब्दप्रतिनिर्देशकतच्छब्दघटितं वाक्यं दर्शयती'त्यवतारणं, पुनश्च 'यद्यपी'त्यादिना श्रुतावेतादृशवाक्याभावप्रकटनेन, 'प्रदेशान्तरस्थितमन्त्रप्रतिपन्नस्यार्थस्य विधेयत्वेन ग्रहण'मिति क्लेशेन व्याख्यानञ्च किमर्थमिति न विद्मः।

'बहवः पुरुषा ब्रह्म'न्नित्यादिमहाभारतवचनानि[1] व्याचष्टे—पुरुषा इति। 'बहूनां पुरुषाणा'मित्यत्र पुरुषशब्दो देहपर इत्याह—बहूनां देहाना-

P. 437-3

---

१. महाभारते मोक्षधर्मपर्वणि नारायणीये जनमेजयस्य वैशंपायनं प्रति प्रश्नरूपमिदम्।

मिति । योनिरिति स्वरूपमित्यर्थः । तथा एकम् (एकत्र) व्याख्यास्यामी- P. 437-3
त्युत्तरार्धे एकस्वरूपत्वेनाख्यानावसरे जीववर्गस्य सकलोपाधिपरित्यागेन ब्रह्मरूप-
त्वाश्रयणात् पूर्णत्वं, सर्वज्ञत्वादिगुणाधिक्यं, विराड्रूपत्वञ्च सम्पन्नं भवतीति
तत्कथनार्थं विश्वमित्यादिविशेषणजातमित्याशयेन व्याचष्टे—विश्वं पूर्णमिति ।

भाष्यगता 'यद्वै किञ्चे'ति श्रुतिर्न व्याख्याता। यद्वै किञ्च, यद्यत् मनु-
रवदत्तद्भेषजं सर्वोपद्रवशामकमिति स्पष्टार्थकत्वेन विशदत्वात् । 'श्रुतीरविशदाः
काश्चि'दित्यविशदश्रुतिव्याख्यानस्यैव प्रतिज्ञातत्वात् ।

यद्यपि भट्टभास्करभाष्ये 'मननान्मनुः मनस्वी प्रजापतिः तेनोक्तं सर्वं
भेषज'मिति मनुशब्दो हिरण्यगर्भपरत्वेन व्याख्यातः । तदनुरोधेन परिमले
'मक्षू देववत' इति ऋचोः स्वायम्भुवमनुप्रकाशकत्वाभावात् समष्टिमनोऽभिमानि-
हिरण्यगर्भप्रकाशकत्वात्तद्विधिशेषभूते 'यद्वै किञ्चे'ति वाक्येऽपि मनुशब्दो हिरण्य-
गर्भपर एवेत्यभिधाय भाष्ये तदुदादरणमनादरेणेत्युक्तम् ।

तच्चिन्त्यम् । भट्टभास्करोक्तिं पुरस्कृत्य ततोऽपि प्रत्ययिततरभाष्यकृ-
दुक्त्यन्यथाकरणस्यायुक्तत्वात्, स्वारसिकार्थपरित्यागे हेत्वभावात्, मनुप्रकाश-
कत्वाभावेऽपि मनुदृष्टत्वमात्रेण मानवीत्वोपपत्तेः । 'मनुरवद'दित्यनुरोधेन
तत्प्रोक्तत्वस्यैव भेषजत्वे तन्त्रत्वाच्च ।

॥ इति स्मृत्यधिकरणम् ॥

---

## ॥ अथ योगप्रत्युक्त्यधिकरणम् ॥

### सू०॥ एतेन योगः प्रत्युक्तः ॥ ३ ॥

ननु शिष्टपरिगृहीतानां योगसांख्यस्मृतीनां कथं सर्वथैवाप्रामाण्यं सूत्र-
कृता व्युत्पाद्यते इत्याशंक्य वेदविरुद्धांशे तासां तात्पर्याभावव्युत्पादनार्थं सूत्रकृतः
प्रवृत्तेर्न दोष इति वक्तुं नानेनेत्यादिटीका । तत्र न चैतावतैतेषामित्यत्रै-
तच्छब्देन हैरण्यगर्भपातञ्जलादिशब्दनिर्दिष्टानां योगशास्त्राणां परामर्श
इत्याह—एतेषामिति । P. 438-1

P. 438-1 **किन्तु योगस्वरूपेत्यादिटीकार्थमाह—योगस्वरूपमिति।** ननु चित्तस्य सालम्बनत्वस्वाभाव्येन बाह्यविषयकवृत्तिनिरोधार्थमान्तरं किञ्चिदालम्बनमस्तु। नेत्याह—**पुरुषे चेति।** तत्कर्मेति वंशस्थपुरुषव्यापार इत्यर्थः।

**टीकायां—अतत्प्रतिपादनपरेष्विति विशेषणेन** सर्गादिप्रतिपादनपरत्वाभावो नोच्यते, देवताधिकरणन्यायेन पुराणानां सर्गादिप्रतिपादनेऽपि तात्पर्यात्। किन्तु नञस्तत्पदेनैवान्वयमाश्रित्य सर्गादिभिन्नकैवल्यतत्साधनपरत्वमुच्यत इत्याशयेनाह— P. 438-3 **अतत्प्रतिपादनेत्यतच्छब्देनेति।**

**न तु तद्विवक्षितमिति टीकायां तच्छब्देन** प्रधानं सविकारं परामृश्यते। **अत एवेति टीकायामतश्शब्देन** व्यवहितमपि, **न तु तद्विवक्षितमिति टीकोक्तमेव** योग्यतया परामृश्यत इत्याशयेनाह—**यत एवेति।** **वार्षगण्यश्लोकं** व्याचष्टे—**गुणानामिति।** न्यायाभासग्रहणमुपलक्षणमित्याशयेन व्याचष्टे—**वैदिकेति।**

**टीकायां—बहुलं हीति।** **योगशास्त्राणां** 'समकायशिरोग्रीव' इत्याद्यंशे'त्र्युन्नतं स्थाप्य समं शरीर'मित्यादिना वेदेन संवादो दृश्यत इत्यर्थः। यमादीनां पञ्चानां चित्तशुद्धिफलकत्वात् बहिरङ्गत्वम्। धारणादित्रयस्य तु श्रवणादिरूपत्वादन्तरङ्गत्वमिति विवेकः। **वेदेन संवादबाहुल्याच्चेत्यन्वयः।**

**टीकायां—तस्मादिति।** वेदान्तश्रुतिविरोधेनाप्रामाण्यप्रसङ्गात्, तदनुरोधेन यमादिष्वप्यनाश्वासप्रसङ्गात्, तत्स्वरूपप्रतिपादने प्रयोजनाभावाच्च, न प्रधानादिपरं योगशास्त्रमित्यर्थः। **टीकायां बौद्धार्हतेति।** बौद्धी, आर्हती, कापालिकी च, P. 439-4 स्मृतिराद्या यासामित्यर्थः। **तदुपपादयतीति।** **सांख्ययोगिपराभ्यामपि** ताभ्यां विशेषणतया ज्ञानध्याने निर्दिष्टे इत्येवमुपपादयतीत्यर्थः।

**टीकायां योगो ध्यानमित्यनन्तरं** तद्वन्तो योगा इति द्रष्टव्यम्। **अष्टकादिस्मृतिवदिति टीकासूचितमधिकरणं** बुद्धिसौकर्यार्थं प्रस्तुताधिकरण-

---

१. अत्र टीकायां 'तत्प्रतिपादनपरेषु' इति, कल्पतरौ च 'तत्प्रतिपादनेति तच्छब्देन' इति पाठो दृश्यते।

२. टीकायां 'बोद्धार्हतकापालिकादीना'मिति पाठो दृश्यते।

व्याख्यानान्ते दर्शयति—अष्टका इत्यादिना। 'त्र्युन्नतं स्थाप्य समं शरीर'मिति P. 439-1
श्रुतिं व्याचष्टे—शरीरेति। शरीरशब्दो वक्षःपरः। श्वेताश्वतरोपनिषद्वि-
वरणानुरोधात्।

'विद्यामेतां योगविधिञ्च कृत्स्न'मिति श्रुतिं व्याचष्टे—एतामिति।
'मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा' इति पूर्वपादेनान्वयं दर्शयन् 'ब्रह्म प्राप्तो
विरजोऽभूद्विमृत्यु'रिति तृतीयपादेनान्वयमाह—मृत्योर्लब्ध्वेति। 'तत्कारणं
सांख्ययोगाभिपन्न'मिति श्रुतिं तच्छब्दार्थनिर्णयाय पूर्वश्रुतिप्रदर्शनपूर्वकमुपादाय
व्याचष्टे—एको बहूनामिमि। योगशब्दस्य योगिपरत्वमाश्रित्याह—
ध्यानिभिरिति। प्राप्तं लब्धं, देवं ज्ञात्वा अन्योऽपि मुच्यत इत्यर्थः॥

॥ इति योगप्रत्युक्त्यधिकरणम्॥

---

## ॥ अथ न विलक्षणत्वाधिकरणम् ॥

सू०॥ न विलक्षणत्वादस्य तथात्वञ्च शब्दात्॥ ४॥

सू०॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्॥ ५॥

सू०॥ दृश्यते तु॥ ६॥

सू०॥ असदिति चेन्न प्रतिषेधमात्रत्वात्॥ ७॥

सू०॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्॥ ८॥

सू०॥ न तु दृष्टान्तभावात्॥ ९॥

सू०॥ स्वपक्षदोषाच्च॥ १०॥

सू०॥ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति
चेदेवमप्यविमोक्षप्रसङ्गः॥ ११॥

चेतनेति। चेतनोपादानकत्वेन जगतो मुख्यया वृत्त्या प्रतिपाद- P. 440-1
कस्य वेदान्तपदवृन्दस्य मुख्ययेत्यंशं विहाय प्रतिपादकत्वमात्रे सङ्कोचसन्देह

---

१. कल्पतरौ अष्टका इत्यादिग्रन्थात् अनन्तरमेव 'तदुपपादयती'ति ग्रन्थो दृश्यते। आभोगे व्यत्यासेन प्रतीकधारणं कृतम्॥

P. 440-1 इत्यर्थः । **गगनादीति** । न चाविद्याप्रकृतिकत्वेन सिद्धसाधनम् । अविद्यायाः श्रुतिबोधितब्रह्मप्रकृतितानिर्वाहकत्वेन स्वतः प्रकृतित्वासिद्धेः । अज्ञाने ध्वंसे च व्यभिचारवारणाय **हेतौ** पदद्वयम् ।

**परिमले** त्वविद्याप्रकृतिकत्वेन सिद्धसाधनमाशङ्क्य तत्परिहाराय चेतनप्रकृतिकं न भवतीत्यर्थकल्पने सिद्धान्तिमते दृष्टान्ते साध्यवैकल्यं, हेतुविशेषणवैयर्थ्यञ्चेत्युक्त्वा, कार्यद्रव्यं चेतनप्रकृतिकं न भवति, द्रव्यत्वात्, अविद्यावदित्यनुमानमत्र विवक्षितं, कार्यद्रव्यमात्रपक्षीकरणज्ञापनाय हेतुविशेषणम्। घटस्यापि पक्षत्वान्न तत्र साध्यवैकल्यशङ्का । घटवदित्यनेनापि घटयतीति व्युत्पत्त्या घटेर्ण्यन्तात् पचाद्यचि "णेरनिटी"ति णिलोपे अघटितसङ्घटनापटीयोऽज्ञानमेव दृष्टान्तत्वेनोक्तमिति व्याख्यातम् ।

प्रागुक्तरीत्या सिद्धसाधनपरिहारसम्भवे किमर्थं व्याख्येयग्रन्थव्याकुलीकरणमिति न विद्मः । न चाविद्याया उपादानत्वम् । उपादानभूतब्रह्मशक्तिरूपायास्तस्या उपादानत्वासिद्धेः । 'मायान्तु प्रकृति'मित्यादौ ब्रह्मप्रकृतितानिर्वाहकत्वेन प्रकृतित्वोपचारात् । अत एव 'देवात्मशक्ति'मित्यादौ शक्तित्वकीर्तनम् । अस्तु वा मायाया अप्युपादानत्वम् । तथाऽपि चेतनप्रकृतिकत्वाभावः साध्यः । लोकदृष्टिमनुसृत्य घटो दृष्टान्त इत्येवमप्युपपत्तेर्न ग्रन्थान्यथाकरणं युक्तमिति ध्येयम् ।

**स्मृतिनिमित्ताक्षेपे** परिहृते **तर्कनिमित्तस्याऽऽक्षेपस्य** दूरोत्सारितत्वात् कथं भाष्यमित्याशङ्कां निराकुर्वन्, प्रस्तुताधिकरणसन्निधिमनादृत्य भाष्यसामर्थ्यलक्षणलिङ्गानुरोधात् उत्तराधिकरणस्तोमविषयं सङ्गतिकथनमित्याशयेन **टीके**त्याह—**वेदविरुद्धेति** । **सङ्गतिं** प्रत्युदाहरणलक्षणाम् । स्वयमस्याधिकरणस्य **दृष्टान्तसङ्गतिमाह—वेदविरुद्धार्थत्वेनेति** ।

आक्षेपानवकाशे, चोदकेनैव **ननु धर्मे इवे**त्यादिभाष्येण कथितामुपपत्तिं विशदयति—**टीकायां—समानविषयत्वे हीत्यादिना**। **टीकागत-**

P. 440-5 **श्लोके सिद्धन्तु ब्रह्म मानान्तरस्य गोचर इत्यन्वयः**। **निमित्तकारणे इति**। प्रधानगतजगदुपादानत्वोपचारेण ब्रह्मणो निमित्तकारणत्वबोधनपराः श्रुतय इत्यर्थः। एतच्च योगिमतेन। सांख्यमते उपासनमात्रपरत्वमेवेति पूर्वाधिकरणोक्तमेव बोध्यम् ॥

नन्वाभासत्वेनापि तर्कस्योपपत्तेः, कथमनवकाशत्वमित्यत आह—**तर्कस्येति**। नन्वनुमानस्य दृष्टसाधर्म्येणादृष्टविषयकत्वेऽपि, ब्रह्मसाक्षात्काराजनकत्वात् कथमन्तरङ्गता इत्यत आह—**प्रत्यक्षेति**। यद्यत्रारोपितं तत्तत्साक्षात्कारनिवर्त्यं, यथा शुक्तिरजतम्, प्रपञ्चश्च ब्रह्मण्यारोपितः, अतो ब्रह्मसाक्षात्कारनिवर्त्य इत्याद्यनुमानात्पक्षे प्रतिज्ञातेऽर्थे गमिते सति, तस्यापि प्रत्यक्षता सम्भाव्यत इति, तत्सम्भावनाहेतुत्वादन्तरङ्गतेत्यर्थः। तथा च प्रधानप्रत्यासन्नतर्कजातीयत्वादुपादानानुमानस्यापि श्रुतेः प्राबल्यमिति भावः ॥ P. 440-5

जगन्न ब्रह्मविकारः, तदसरूपत्वात् यद्यदसरूपं तन्न तद्विकारः, यथा घटो न जलादिविकार इत्यनुमानं दर्शयतीत्याह—**तर्कमाहेति**। हेतोरसिद्धिं परिहर्तुं द्वितीयश्लोक इत्याह—**ब्रह्मासारूप्यमिति**। **आनुश्रविके इति**। अनुश्रवो वेदः तद्गम्ये इत्यर्थः। तथा च जगत् प्रत्यक्षादिप्रमाणगम्ये स्त्रीकायादावैहिकविषये सुखदुःखमोहात्मकतया, वेदसमधिगम्ये पारलौकिके विषये स्वर्गनरकरूपानेकभेदभिन्नप्रपञ्चशालितया च सातिशयत्वादशुद्धमिति तस्मादित्यादिटीकार्थ इति भावः ॥ P. 441-2

अणुपरिमाणादिविषये निरतिशयत्वं परमाण्वादावपि, तथा च न शुद्धत्वव्याप्यत्वमित्यत आह—**आगमेति**। अचेतनत्वादिना जगतो ब्रह्मवैलक्षण्यं वदन्तं पूर्वपक्षिणं प्रति भाष्ये जगदचेतनत्वसाधनं व्यर्थमित्याशङ्क्य पूर्वपक्ष्येकदेशिनं प्रति तत्साधनमित्याशयेनाह—**टीकायां ये तु चेतने इति**। **टीकायां व्यभिचारमिति**। जगन्न चेतनं, चेतनोपकारकत्वात्, इत्यस्य व्यभिचारं चोदयतीत्यर्थः। P. 441-7

---

१. इदमेकदेशिमतं महाभाष्ये वार्तिके च प्रतिपादितम्। तथाहि—महाभाष्ये तृतीयाध्यायप्रथमपादप्रथमान्हिके 'धातोः कर्मणस्समानकर्तृकादिच्छायां वा' इति सूत्रभाष्ये 'सर्वस्य वा चेतनावत्त्वात्' (वार्तिकमिदम्) अथ वा सर्वं चेतनावत्, एवं हि आह—कंसकास्सर्पन्ति। शिरीषोऽयं स्वपिति। सुवर्चला आदित्यमनुपर्येति। आस्कन्द कपिलकेत्युक्ते तृणमास्कन्दति। अयस्कान्तमयस्संक्रामति। ऋषिः पठति—श्रृणोत ग्रावाणः' इति। तत्र कैयटः—'सर्वस्य वेति। आत्माद्वैतदर्शनेनेति भावः। ऋषिरिति। वेदः सर्वभावानां चैतन्यं प्रतिपादयतीत्यर्थः। वैचित्र्येण च पदार्थानामुपलंभात् सर्वचेतनधर्मप्रसंगः सर्वत्र नोद्भावनीयः।' इति।

P. 441-8 **टीकायां—परिहरतीति**। बुद्ध्यावंशे साध्यस्यापि सत्त्वात्, चेतनांशे च हेतोरेवाभावात् न व्यभिचार इति **परिहरतीत्यर्थः**। चेतनांशे हेत्वभावोऽसिद्धः। परम्परया चेतनोपकारकत्वादिति शङ्कते **टीकायां—नन्विति**। तदप्यसिद्ध-मिति परिहरति—**टीकायां—अत आहेति**। **टीकायां—चोदकानुशयबीज-मिति**। **चोदकस्य**—व्यभिचारचोदकस्य जगदचेतनत्वे योऽयमनुशयोऽस्वर-सस्तद्बीजमित्यर्थः।

**तद्व्याचष्ट इति**। चेतनप्रकृतिकत्वश्रवणबलादेव जगतः चेतनत्वावगम-सम्भवादनवगम्यमानत्वमसिद्धमिति शङ्कां निराकर्तुं **व्याचष्ट** इत्यर्थः। **टीकायां—शब्दार्थादिति**। शब्दावगतादित्यर्थः। एवञ्च सत्युपोद्बलकप्रत्यक्ष-मानाभावपरं भाष्ये अनवगम्यमानग्रहणमिति तद्भाष्यं व्याख्यातमित्याशये-नाह—**आर्थस्येति**। श्रौतत्वाविशेषे चेतनत्वश्रुतेः प्राबल्ये को हेतुरित्यत आह—**श्रुतार्थापत्तीति**। श्रुतचेतनप्रकृतिकत्वान्यथानुपपत्तिप्रसूतजगच्चेतनत्वा-र्थापत्तिसहकृताभि'स्तत्तेज ऐक्षत' 'मृदब्रवी'दित्यादिश्रुतिभिरीक्षणाभिलापादि-कर्तृत्वलक्षणचेतनत्ववादिनीभिरित्यर्थः।

**टीकायां—भोक्तृणामित्यादिना** भाष्योक्तं चेतनाचेतनविभाग-लक्षणं प्रागभिहितं विशेषं प्रकटीकृत्य, सर्वचेतनताप्रश्वासौ नोपपद्यत इति भाष्यं योजयति—**स नोपपद्यत इति**। **टीकायां—रूपत इति**। चेतनदेव-तातादात्म्याध्यासेनैव चैतन्यं, न स्वरूपत इत्यर्थः। प्रथमेऽध्याये क्वेत्यत

P. 443-1 आह—**ईक्षत्यधिकरण इतीति**। ईक्षत्यधिकरण इत्येतत्प्रथमेऽध्याये इत्यनेनेनोक्तमित्यर्थः। **तेजआदिशब्दानां** तदधिष्ठातरि **लाक्षणिकत्वमेव कथञ्चि**दित्यनेनोक्तमित्याह—**तदिदमिति**।

P. 443-8 **टीकायां—प्रकृतिविकारभावहेतुमिति**। **यदुक्तमित्यादिभाष्येण** वैलक्षण्यं प्रकृतिविकारभावाभावे न तन्त्रं, चेतनाचेतनत्वेन लोकप्रसिद्धानां, चेतना-धिष्ठितत्वतदनधिष्ठितत्वेन प्रसिद्धानां, परिणामप्रयुक्तरूपरसादिस्वभावविप्रकर्ष-शालिनां च, पुरुषकेशनखादीनां प्रकृतिविकारभावदर्शनादित्येवं **सौत्रं** हेतुं व्याख्याय, तुशब्दसूचितं पूर्वपक्षदूषणं प्रकटयितुं, विलक्षणत्वे प्रकृतिविकार-भावाभावोक्त्या सूचितं **प्रकृतिविकारभावे सारूप्यं हेतुं**, किमत्यन्तसारूप्यं तन्त्रं, उत सारूप्यमात्रमिति मनसैव **विकल्प्य दूषयतीत्यर्थः**।

भाष्ये अशेषब्रह्मस्वभावानुवृत्तिलक्षणं वैलक्षण्यमिति प्रथमविकल्पे समस्तप्रकृतिविकारोच्छेदप्रसङ्ग इति कथं दूषणमुक्तम्? मृद्घटादिप्रकृतिविकारभावे बाधकाभावादित्याशंक्य, प्रकृताभिप्रायेण ब्रह्मपदं प्रयुक्तम्। कारणगतसर्वस्वभावानुवर्तनमित्येव विवक्षितमित्याशयेन भाष्यतात्पर्यमाह—**टीकायां—सर्वस्वभावेति**। P. 443-9

ननु चैतन्यानुवृत्तिराहित्यलक्षणस्य तृतीयस्य वैलक्षण्यस्य कथमसाधारण्यं? सति सपक्षे पक्षमात्रवृत्तेरेव हेतोरसाधारण्यात्। अन्यथा केवलव्यतिरेकिणोऽपि तथात्वापत्तेरित्याशंक्य, शब्दोऽनित्यः शब्दत्वादित्यादेरपि व्याप्त्यादिप्रतिसन्धानदशायामनुमितेरनुभवसिद्धत्वेन [न] तल्लक्षणमित्याशयेनाह—**साध्यासाधक इति**। एतच्च व्यतिरेकिहेतुव्यावृत्त्यर्थं, एवं लक्षणे सत्यनुपसंहारिणोऽप्यसाधारण एवान्तर्भावेन लाघवमित्याशयेन तदेवोदाहरति—**यथा सर्वमिति**।

नन्वेवमपि यत् यद्विशेषगुणानुगतिरहितं तन्न तत्प्रकृतिकं, यथा सुवर्णविशेषगुणानुगतिरहितं पटादि न सुवर्णप्रकृतिकमिति सामान्यव्याप्तौ न कोपि दोषः। एवं गगनादिकम् अचेतनप्रकृतिकं कार्यद्रव्यत्वात् घटवदित्याद्यनुमानानामपि निर्दुष्ट(त्वात् तत्साधारण्यं) [त्वमतस्तत्साधारण्याय आगमबाधितविषयत्वमनुमानस्य] भाष्यकृता किमिति नोद्भाव्यते इत्याशयेन शङ्कते—**टीकायामथेति**। स्फुटत्वादनुद्भावनमिति परिहारः।

नन्वागमस्य तर्कविरोधे दौर्बल्यमुक्तम्। अत आह—**टीकायां—न चास्मिन्निति**। मानान्तरयोग्यत्वतदभावावेव तद्गोचरत्वतदगोचरत्वयोः प्रयोजकौ, न तु सिद्धत्वकार्यत्वे इति दर्शयितुं **रूपाद्यभावादित्यादिभाष्यं**, तद्व्याचष्टे—**टीकायां—यथा हीति**। अनेन, ब्रह्मणि तर्कस्य प्रवृत्तेरेवाभावान्न निरवकाशत्वप्रधानप्रत्यासत्तिभ्यां तस्य प्राबल्यमित्युक्तम्। P. 444-3

ननु **टीकायां प्रमाणविषयविवेचकतयेत्ययुक्तम्**। तर्कस्य ब्रह्मणि प्रवृत्तेरेवाभावेन वेदान्तार्थविवेचकत्वायोगादित्यत आह—**प्रमाणविषयस्येति**। P. 444-1 आपाततस्तद्विरोधित्वेन भासमानवचनयुक्त्याभाससमुत्पन्नचित्तविक्षेपनिरासेन श्रुतिविषयस्य दृढीकरणं विवेचनं, तत्सम्पादकतयेत्यर्थः। **टीकायां तदाश्रये असति प्रमाण इति छेदः**[1]।

---

१. तदाश्रयः इति टीकायां पाठः दृश्यते। तदा तर्कविशेषणं बहुव्रीहिः।

**तर्कस्य श्रुत्यनुगृहीतत्वं भाष्योक्तमसङ्गतम्** । श्रुतेरेव तर्कानुगृही-
P. 444-2 तत्वादित्यतो व्याचष्टे टीकायां—**श्रुत्या इति । असम्भावनेति ।** अद्वितीयत्वा-
सम्भावनेत्यर्थः । **वाचारम्भणत्वादित्यादिपदेन** प्रागुत्पत्तेः कारणमात्रत्वादि-
परिग्रहः । **न ह्यचेतनस्येति टीकां** व्याचष्टे—**अचेतनस्येति ।** नन्वचेतनस्य
चेतनभाववदुद्भूतचैतन्यस्यानुद्भूतचैतन्यजगद्भावोप्ययुक्त इत्याशङ्क्य, चेतनस्यावस्था-
भेदेनोद्भूतचैतन्यानुद्भूतचैतन्यदर्शनात् जगदवस्थायामपि तदनुद्भव उपपद्यत इत्या-
शयेनाऽऽह—**टीकायां—चेतनस्येति ।**

कार्यस्य कारणात् भेदं सिद्धवत्कृत्य भाष्ये **जगतो ब्रह्मोपादानकत्वे
असत एवोत्पत्तिः** स्यादित्युक्तम् । तदुपपादयितुं **न कारणादित्यादिटीके**-
त्याशयेनावतारयति—**प्रागुत्पत्तेरिति ।** न केवलं कार्यस्य कारणाभेदे कारण-
स्वरूपस्यैव तत्कार्यत्वविरोधः । किन्तु तद्वृत्तित्वविरोधोऽपीत्याह—**टीकायां—
स्वात्मनीति ।** तथा च परिशेषात् भेद एव कार्यस्य कारणादित्याह—**टीका-
यामतश्चिदात्मन इति ।**

पारमार्थिकरूपेण कार्यस्य कारणादभिन्नत्वम्, कल्पितरूपेण तु न भेदो
नाप्यभेद इति परिहरति—**तत्राहेति ।** सत्वासत्वाभ्यामनिर्वचनीयत्वकथनेनैव
P. 445-3 कार्यस्य कारणात् भेदाभेदौ निराकृतावित्याह—**पृथुबुध्नोदरेति ।** कार्यरूपस्य
स्थितिलयकालयोरसत्त्वाभिधानमनवसरदुःस्थमित्याशंक्य कैमुतिकन्यायप्रदर्शनार्थ-
मित्याह—**न केवलमिति ।**

किं कार्यस्य कारणे अविभागमात्रं लयः? उत निस्स्वरूपत्वमिति विकल्प्य
प्रथमं **यथा हीत्यादिटीकया** निराकृतम् । द्वितीयं शङ्कते—**नन्विति ।**
निस्स्वरूपत्वलक्षणनाशानभ्युपगमात् मृदादेरपि घटादिरूषणं भवन्मते स्यादिति
P. 446-3 परिहाराभिप्रायमाह—**निरन्वयेति ।** यूषे हिंगुलवणतिन्त्रिण्यादिनां अविभागो
न लय इति न स दृष्टान्त इत्याशयेनाह—**टीकायां—नाविभागमात्रं लय
इत्यादिना ।**

P. 447-1 **न तवेति ।** सान्वयनाशवादिनस्तव मते दृष्टान्तेष्वपि कार्यधर्मरूष-
णस्यापाद्यत्वादिति भावः । **कार्यस्य कल्पितरूपहानेन** वास्तवरूपमात्रेणावस्थानात्

सान्वयनाशव्यपदेश इत्याह—कार्यस्येति[1]। कारणतावन्मात्रत्वादिति। P. 447-1 कारणमात्रत्वादित्यर्थः। अस्ति चायमिति भाष्यस्य यथा च स्वप्नदृगित्यत्रा-प्यनुषङ्ग इति दर्शयन्, स्वप्नदृक्छब्देन न ब्रह्माभिधीयत इति दर्शयति—टीकायामस्ति चायमित्यादिना। तत्र, लौकिकः पुरुष इति न शरीरपरम्। किन्तु जीवपरमित्याह—लौकिकः पुरुषो जीव इति।

स्वप्नदृक्छब्दस्य ब्रह्मपरत्वं विहाय जीवपरत्वेन व्याख्याने बीजमाह—अतश्चेति। ब्रह्मणि जाग्रत्प्रपञ्चदोषारूषणे ब्रह्मणि स्वप्नप्रपञ्चदोषारूषणस्य न दृष्टान्तत्वम्। तस्याप्यापाद्यत्वेन साध्यसमत्वापातात्। अतस्तत्परिहाराय लोकानु-भवसिद्धं जीवे तदरूषणमेव दृष्टान्ततया व्याख्यातमित्यर्थः। सुप्तप्रबोधदृष्टान्त-मात्रेण कथं विभागनियमसिद्धिः? तत्रापि पर्यनुयोगसम्भवादित्यत आह—टीकायामविद्याशक्तेर्नियतत्वादिति। टीकायां—प्रतिनियमादिति। निय- P. 448-1 तत्वादावश्यकत्वादित्यर्थः। कारणाभावमेव दर्शयति—टीकायां—तत्त्वज्ञाने-नेति।

टीकायां गुडजिह्विकयेति। गुडजिह्वासम्बन्धिन्या नीत्येत्यर्थः। तथा च यथा बालस्य प्रथमं जिह्वायां गुडमालिप्य तदाशया पुनरास्ये विवृते कटुकषायादिकं निक्षिप्यते, तथा प्रतिवादिनोऽपि स्वपक्षदूषणव्यग्रमनस्कस्य दोष-साम्यापादनेन किञ्चिच्चित्तसमाधाने, त्वत्पक्ष एव दोषो नास्मत्पक्ष इति सूपपाद-मिति भावः।

भाष्यगतमुपादानपदं कारणपरमित्याशयेन, टीकायां—क्लेशकर्मेति। तत्र क्लेशा अविद्यास्मितारागद्वेषाभिनिवेशाः। कर्म पुण्यापुण्यलक्षणं, आशयो वासना, आदिशब्देन भोक्तव्यं फलं गृह्यते। टीकायां सांख्यादिवदिति न पुरुषपरम्। तस्यैव पूर्वपक्षित्वेन दृष्टान्तत्वानुपपत्तेः। किन्तु स्मृतिपरम्। तथा च यथा मूलप्रमाणरहितैव सांख्यादिस्मृतिः प्रणीता। तथा मूलप्रमाणरहितस्त-र्कोऽपि न प्रवर्तनीय इति तदर्थः।

टीकायामपि च येनेति। यो येन तर्केण पुरुषमतिवैश्वरूप्या- P. 448-11 दिना तर्काणामप्रतिष्ठामाह—तेन स एव तर्कः प्रतिष्ठितोऽभ्युपेय इत्यर्थः।

---

१. कल्पतरौ 'कार्यस्ये'त्यादिवाक्ये 'सान्वयनाशोक्तिरस्माकमित्याह' इति शुद्धः पाठः॥

सिंहावलोकितन्यायेन चरमे पुनर्दूषणाभिधानमित्याह—**चरम इति**। टीकायां **जगत्कारणभेदमिति**। जगत्कारणविशेषं प्रधानपरमाण्वादिरूपमित्यर्थः।

'नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठे'ति श्रुतिं व्याचष्टे—

P. 448-2 **नैषेति**। 'आप्लृ व्याप्ता'वित्यस्य धातोरनीयर्प्रत्ययान्तस्य छान्दसं रूपमित्येवं व्याख्याय, प्रकारान्तरेण व्याचष्टे—**अथ वेति**। "को अद्धा वेद क इह प्रवोचत्। इयं विसृष्टिर्यत आबभूव" इति पादयोरर्थमाह—**कः अद्धा इति**। **अवोचदिति** लिङ्वगतं भूतत्वं न विवक्षितम्, इत्याह—**छन्दसीति**।

P. 449-1 **स एवेति**। जगत्स्रष्टैव सर्वदा स्वरूपं वेद, नान्यः अविद्यावृतत्वादिति मन्त्राद्यपादयोरर्थ इत्यर्थः। 'अचिन्त्याः खलु ये भावा'इत्यर्धस्योत्तरार्धं 'प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षण'मिति। तत्र **प्रकृतिभ्य** इत्यस्य व्याख्यानमविद्यादिभ्य इत्यर्थ इति।[1] यद्यपीदमर्धमिदानींतनेषु भाष्यकोशेषु प्रायेण न दृश्यते। तथापि केषुचित्कोशेषु दृष्ट्वा व्याख्यातमिति मन्तव्यम्।

'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदे'ति श्रुतिं व्याचष्टे—**तं सर्वमिति**। 'अन्यत्र आत्मन' इत्यत्र प्रथमार्थे त्रलित्याशयेनाह—**आत्मव्यतिरेकेणेति**।

P. 449-3 'अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा' इति वाक्यं[2] व्याचष्टे **अजमिति**। **तदा** प्रबोधकाले साक्षात्कारकाल इत्यर्थः।

॥ इति नविलक्षणत्वाधिकरणम् ॥

---

१. अयं प्रतीकः कल्पतरौ न दृश्यते। केषुचित् कोशेषु स्यात्।

२. अस्मिन्नधिकरणे भाष्ये 'अनादिमायया सुप्तः' इति कारिका माण्डूक्यागमप्रकरणगता, 'अत्रोक्तं वेदान्तार्थसंप्रदायविद्भिराचार्यैः—'अनादिमायया ... बुध्यते तदा' इति' इत्युक्तत्वेन गौडपादाचार्यप्रणीतत्वेन व्यवहृता। अतः माण्डूक्यागमप्रकरणकारिकायाः गौडपादाचार्यप्रणीतत्वमेव भाष्यकृदभिमतम्। कैश्चिदर्वाचीनैः मध्वाचार्यकूरनारायणप्रभृतिभिः तस्यां श्रुतित्वमभिमन्यमानैः क्लिष्टकल्पनया स्वमतानुसारेण व्याख्यानमारचितम्। गुरुचन्द्रिकायां ब्रह्मानन्दसरस्वतीभिरप्ययमर्थ उक्तः—तत्र हि आगमप्रकरणगतं 'अन्यथा गृह्णतः' इत्यादिश्लोकचतुष्टयमनूद्य 'इति माण्डूक्योपनिषद्व्याख्यारूपगौडपादाचार्यग्रन्थस्य प्रथमप्रकरणोक्तश्लोकेभ्यः श्रुतित्वेन वैदिकप्रसिद्धेभ्यः परकीयेऽपि माण्डूक्यभाष्यादौ व्याख्यातेभ्योऽपि द्वैतमिथ्यात्वम्' इत्युक्तम्। एवं यदीयग्रन्थस्य श्रुतित्वेन वैदिक-

## ॥ अथ शिष्टपरिग्रहाधिकरणम् ॥

**सू०॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥**

**उपदेशवदिति।** यथा हि **पूर्वाधिकरणस्य स्मृत्यधिकरणेन** P. 450-1 स्मृतेर्मूलाभावेऽपि तर्कस्य व्याप्त्यादिमूलसत्वात् तद्विरोधेन समन्वयः सङ्कोचनीय इति प्रत्युदाहरणसङ्गतिः, तथैवातिदेशस्यापीत्यर्थः। तेन दृष्टान्तसङ्गतिमपि दर्शयन्नभ्यधिकाशङ्कामाह—**यथा हीति।** अभ्यधिकाशङ्कायामतिदेशः स्यादिति मनसि निधाय इत्येवंरूपां तामाहेत्यन्वयः। **अभ्युच्चयत्वेनेति।** कार्यस्य कारणाभेदात् कथं न्यूनपरिमाणारब्धत्वनियम इति शङ्कापरिहारार्थमिह निर्दिश्यत इत्यर्थः।

**टीकायां** कार्यस्य कारणाभेदे, किं सत्वमेव, उतासत्वमपि? आद्ये, किं पुरुषव्यापारः कार्यस्योत्पत्त्यर्थः, अभिव्यक्त्यर्थो वेति विकल्प्य, प्रथमं **न कार्यमित्यादिना** निराकृत्य, द्वितीयेपि, किमभिव्यक्तिः सती, उतासतीति विकल्प्य, प्रथमं निराकृत्य, द्वितीये, असत्या अभिव्यक्तेरिव, कार्यस्याप्यसत उत्पत्तिसम्भवात् सत्त्वाभ्युपगमो निरर्थक इत्युक्त्वा, आद्यद्वितीयं निराकरोति—**नहि तदेव तदानीमिति।**

**किञ्चेत्यादिटीकासूचितमनुमानं दर्शनन्नाह — कुलालादीति।** P. 450-1 अजातानिरुद्धातिशयादिरूपमपि कार्यं तादृशस्यापि पुंसः कदाचित्

---

प्रसिद्धिः, तान् श्रीगौडपादाचार्यानधिकृत्य वेङ्कटनाथेन शतदूषण्यामेवं कथितम्—'अथ गौडपादहरिप्रभृतिभिराचरितत्वात् सर्वाश्रमपरित्यागोऽस्माभिः स्वीकृत इति चेत्, हन्त सदाचारनिदर्शनतया महान्त इमे दुर्ब्राह्मणशूद्रसन्तानादयः शिष्टा निर्दिष्टाः। यदनुविधायिनोऽपि यूयं शिष्टैर्बहिष्क्रियन्ते' इति। अहो धाष्टर्यं, इतो भागवता इतो ब्राह्मणा इति भेदेन व्यपदेशात् येषामब्राह्मण्यमाशङ्कितं आगमप्रामाण्ये यामुनेन, तदन्तर्गतस्य, स्वाचार्यपरंपरायां तुरीयत्वेन गणितं वस्तुतः प्रथमं तुरीयजातिसंभवं परमाचार्यं परिगृहीतवतो वेङ्कटनाथस्य। तदिदं प्रामाणिकाः परिशीलयन्तु। अधिकमस्मदीये शतदूषणीशकलीकरणे अवगन्तव्यम्॥

१. कल्पतरौ अतुल्यत्वाशङ्कायामिति पाठो दृश्यते। अभ्यधिकाशङ्कायामिति आभोगानुसारी पाठ इति ज्ञायते॥

प्रत्यक्षं कदाचित्परोक्षमिति यदिदमस्ति, तदिदं कार्येण मणिमन्त्रौषधेन्द्र-जालाद्येव शिक्षितमिति सत्कार्यवादिनं प्रत्युपहासः किञ्चेत्यादिटीकार्थः। कदाचिदनुमानमिति टीकार्थमाह—घटादीति। अनुमितिलक्षणमनु-मानं मानमित्यन्वयः।

P. 450-6

'असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्। शक्तस्य शक्यकर-णात् कारणभावाच्च सत्कार्यमि'ति सांख्यश्लोकः। अस्यार्थः—कार्यं सदेव, असतः सत्त्वेन करणायोगात्। न हि नीलं शिल्पिसहस्रेणापि पीतं कर्तुं शक्यम्। तत्रैव हेत्वन्तरमुपादानग्रहणादिति। उपादानैः कारणैः कार्यस्य ग्रहणात्सम्बन्धादपि सत्कार्यम्। असतः सम्बन्धायोगात्। मास्तु कार्यस्य कारणैः सम्बन्ध इत्याशङ्कां निराकर्तुं, सर्वसम्भवाभावादिति। तेनासम्बद्ध-स्यापि तत उत्पत्तौ सर्वस्यापि सर्वस्मात्सम्भवः स्यात्। तदभावान्नैवमित्यर्थः।

यत्कार्यजननशक्तं यत्कारणं तत्तदेव करोति, न कार्यान्तरमिति न सर्व-सम्भवदोष इत्याशंकां निराकर्तुं शक्तस्य शक्यकरणादिति। शक्तस्य कारणस्य स्वनिष्ठशक्तिविषयताश्रयरूपशक्यकरण एव सामर्थ्यम्। अन्यथा, अतिप्रसङ्गात्। तन्निष्ठशक्तिविषयताश्रयत्वं च तदसम्बद्धस्य न सम्भवतीत्यर्थः।

कार्यस्य सत्त्वे हेत्वन्तरमाह—कारणभावाच्चेति। कार्यस्य कारणा-त्मत्वात्, कारणस्य च सत्वात् सत् कार्यमित्यर्थः। कार्यस्य कारणात्मत्वं च, पटस्तन्तुभ्यो न भिद्यते, तद्धर्मत्वात्, यद्यतो भिद्यते तत्तस्य न धर्मः। यथा गौरश्वस्येत्याद्यनुमानसिद्धमिति भावः। कदाचिदागम इति टीकायामागम-शब्द आगमजन्योपलम्भपर इत्याह—जगतस्त्वति। पूर्वटीकोक्तौ शङ्का-परिहारौ स्पष्टीकर्तुमथापि स्यादित्यादिटीका। तत्र कुम्भस्यात्यन्तानुप-लब्धीति। घटसत्तायामपीत्यर्थः। टीकायां—नित्यत्वानित्यत्वेति। कादा-चित्कत्वाकादाचित्कत्वेत्यर्थः।

P. 450-9

सर्वमेतत् भेदाभेदाभ्यामुपपद्यत इत्यत आह—टीकायां भेदाभेदयो-रिति। न च कूर्मे कूर्मावयवानामिवाविर्भावतिरोभावाभ्यां प्रत्यक्षत्वाप्रत्यक्षत्वा-द्युपपत्तिः। आविर्भावतिरोभावयोरपि सदसत्त्वविकल्पदोषग्रासात् सदेव कार्य-मुत्पद्यत इति पक्षभङ्गाच्चेति भावः।

प्रतिबन्धा अनुत्तरत्वाद्भेदेऽपीत्यादिटीकानुपपत्तिरित्यतस्तत्तात्पर्यं दर्शयन्नाह—**घटो यदीति**। **मूलशैथिल्यमिति**। आपाद्यापादकयोर्व्याप्तिरूपतर्कमूलशैथिल्यं व्यभिचारप्रदर्शनेनाहेत्यर्थः। P. 450 8

**प्रकृतौ हीति**। यद्यपि नैतादृशं वाक्यं प्रसिद्धशाखास्वस्ति। तथापि शाखान्तरस्थं पूर्वतन्त्रोदाहृतमिहापि लिखितम्। विधिवाक्यगतस्य संवत्सरशब्दस्य क्वचिच्छाखाया'महरेव संवत्सर' इत्यहनि दृष्टप्रयोगस्य लक्षणयाप्युपपत्तेर्न विधेस्तावदायुष्करौषधादिकल्पनाक्लेशोऽपीत्याशयेनाह—**औषधादीति**। P. 451-5 P. 452 1

टीकायामप्रयोजकत्वमुपेक्षायां हेतुत्वेनोक्तम्, स्वयमप्रयोजकत्वे नियामकं दर्शयन्नाह—**आरम्भे हीति**। महतापि तूलपिण्डेन तन्तोरल्पस्याप्यारम्भान्नियमोऽयमसिद्धः। सिद्धौ वा आरम्भपक्षे, न विवर्तपक्ष इत्यर्थः।

॥ इति शिष्टापरिग्रहाधिकरणम् ॥

---

## ॥ अथ भोक्त्रापत्त्यधिकरणम् ॥

### सू०॥ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥

**अद्वयेति**। अद्वितीयब्रह्मणः सकाशाज्जगत्सर्गं प्रतिपादयतो वेदान्तसन्दर्भस्येत्यर्थः। **भेदग्राहीति**। भोक्तृभोग्यरूपेण भेदग्राहिप्रत्यक्षानुमानादिमानविरोधसन्देह इत्यर्थः। **अद्वैतविरोधेनेति**। भोक्तृभोग्ययोरद्वितीयब्रह्मानन्यत्वे लोकप्रसिद्धभेदायोगादिति भावः। **मुख्यनिरोधादिति**। 'विज्ञानञ्चाविज्ञानञ्चाभवत्' इत्यादिश्रुतेः भोक्तृभोग्यरूपस्य जगतो ब्रह्मात्मत्वनिर्णायकशक्तिनिरोधादित्यर्थः।

श्रुतेरनादिकालप्रवृत्तत्वात् कथं प्रवर्तमानत्वमित्यत आह—**स्वविषयेति**। **बलाबलविवेकमन्यतस्सिद्धमिति** शेषः। **प्राबल्यमिति**। प्राबल्यकारणमित्यर्थः। अस्थूलादिरूपब्रह्मगोचरत्वाच्छ्रुतेः स्फुटतरपदव्यावर्त्यमस्फुटतरत्वं सिद्धवत्कृत्य, प्रतिष्ठितपदव्यावर्त्यमप्रतिष्ठितत्वं दर्शयति—**आम्नायो हीति**। **वर्तमानविभागसत्यत्वमिति**। वर्तमानविभागस्य दृढसत्त्वमित्यर्थः। P. 4[illegible]3 5

॥ इति भोक्त्रापत्त्यधिकरणम् ॥

## ॥ अथ आरम्भणाधिकरणम् ॥

सू०॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

सू०॥ भावे चोपलब्धेः ॥ १५ ॥

सू०॥ सत्त्वाच्चावरस्य ॥ १६ ॥

सू०॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥१७॥

सू०॥ युक्तेःशब्दान्तराच्च ॥ १८ ॥

सू०॥ पटवच्च ॥ १९ ॥

सू०॥ यथा च प्राणादि ॥ २० ॥

P. 454-2 **पूर्वाधिकरण इति** । पूर्वाधिकरणेऽपीत्यर्थः । **रूपभेदेनेति** । औपाधिकस्वाभाविकत्वेनेत्यर्थः । ननु तत्वावेदकत्वप्रच्युतिरूपविशेषाभिधानोपक्रममधिकरणमित्यत्र किं नियामकमित्यत आह—**तदनन्यत्वेति** । तदनन्यत्वं तत्सत्ताव्यतिरिक्तसत्ताराहित्यलक्षणं मिथ्यात्वमेव न त्वभेदः । जडाजडयोरभेदानुपपत्तेः । **आरम्भणशब्दादिभ्य** इति हेतुविरोधाच्चेति भावः ।

**आरम्भणशब्दव्याख्यानभाष्ये** एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाकथनं शङ्कान्तरनिराकरणार्थमिति दर्शयितुमेवं हीत्यादिटीकेत्याह—**श्रुताविति** । **नेयत्वं स्यादिति** । दृष्टान्तस्य परिणामिविषयत्वेऽपि विवर्तविषयत्वेन नेयत्वं स्यात् । यदा तु घटशरावादिविकाराणां शब्दव्यतिरेकेणासत्त्वप्रतिपादनपूर्वकं मृत्तिकादिप्रकाराणां कारणानामेव सत्यत्वप्रतिपादनेन विवर्तविषयत्वमेवावगम्यते, तदा न कथञ्चिदपि शङ्काया अवकाश इति भावः ।

श्रुतेर्भेदाभेदपरत्वेन परिणामिविषयत्वेऽपि न प्रतिज्ञाविरोध इति शङ्कते—**नन्विति** । 'भिन्नाभिन्नपरिणामवदिद'मिति ज्ञानं ज्ञानमेव न भवति । तत्वाविषयकत्वात् । तथा च प्रतिज्ञाविरोध इति परिहरति—**अत आहेति** । तत्वावि-

P. 454-5

---

१, नेयत्वादिति कल्पतरौ पाठो दृश्यते ।

षयत्वे हेतुमाह—**भेदाभेदेति** । **दृष्टनष्टत्वयोरेकदा** असम्भवादाह— **कदाचिदिति** । P. 454-6

अत्र दृष्टिर्दर्शनं तदेव सत्त्वं, तदनुगुणतया **नष्टशब्देनाप्यदर्शनम**सत्त्वमुच्यते । तथा च कदाचित् सत्त्वे सति कदाचिदसत्त्वं परमार्थतोऽसत्त्वे हेतुरित्याशयेन नष्टशब्दार्थमाह—**अदृष्टमित्यर्थ इति** । **अनित्यमित्यर्थ इति** P. 455-2 **पाठेऽपि** असत्त्वमेवार्थ इति न विरोधः । तर्हि कदाचिदसत्त्वस्यैव हेतुत्वसम्भवाद्दृष्टग्रहणं व्यर्थमित्यत आह—**दृष्टग्रहणमिति** । अदर्शनमात्रस्य हेतुत्वे, यदा अदर्शनं सदा असत्त्वेनापि साध्यं पर्यवस्येत् । दृष्टग्रहणे तु दर्शनादर्शनकालयोरुभयोरप्यसत्त्वं सिध्यतीत्यर्थः ।

व्यतिरेकव्याप्तिप्रदर्शकटीकोक्तमनुमानं दर्शयन्नुत्तरटीकामवतारयति—**विमतमिति** । हेतौ सत्वं दर्शनं, साध्यञ्च मिथ्यात्वं बाधितत्वं, अतः, सत्त्वेन कथं सत्त्वाभावः साध्यत इति शङ्काया अनवकाशः । **क्रमेण निराकुर्वन्निति** । द्वितीयेपि, किमसत्त्वसमये विकारजातमस्ति, उत P. 455-4 नेति विकल्प्य, क्रमेण निराकर्तुं **तत्तर्हीत्यादिटीकेति** द्रष्टव्यम् । अर्थान्तरभूतमप्यसत्त्वमभावरूपतया भावप्रतिक्षेपकत्वात् तद्विरोधीति शङ्कत इत्याह— **अर्थान्तरत्वेऽपीति** ।

यत्किञ्चिदसत्त्वमात्रस्य यत्किञ्चिद्भावप्रतिक्षेपकत्वाभावात् तदसत्त्वमेव तत्प्रतिक्षेपकमिति वक्तव्यम् । एवञ्च सति विकल्प इत्याशयेनाह—**विरोधिभूतमिति** । **तत्राप्यसत्त्वे** तदनुयोगसम्भवादिति टीकाभिप्रायमाह— **किञ्चित्करत्व इति** ।[3] P 456-1

---

१. अत्र कल्पतरौ भेदालीकताया इति दृश्यते । भेदाभेदालीकताया इति पाठ इति ज्ञायते ।

२. आभोगे सावधिकसत्त्वात् इति कल्पतरुपाठः आदृतः । न तु सावधिकत्वादिति । कल्पतरौ 'विपक्षे बाधकमाह' इति, 'अनुकूलतर्कमाह—सत्त्वभावं चेदित्यादिना' इति च शोधनीयम् । विपक्षे बाधकं, अनुकूलतर्कश्च उभयमेकमेव । पूर्वोक्तस्यैव विकल्पपूर्वकं पुनः स्पष्टीकरणं, नार्थान्तरमिति वेदितव्यम् ।

३. अत्र कल्पतरौ 'असत्त्वं भावस्य किमकिंचित्करं, उतासत्त्वकरं, स्वरूपं वेति विकल्प्य क्रमेण दूषयति' इत्यत्र 'स्वरूपं वा' इति प्रामादिकमिति ज्ञायते । ननु तृतीयविकल्पपरं, तस्य टीकायां खण्डनादृष्टेः। विकल्पद्वयस्यैव क्रमेण दूषणदर्शनात् । स्वरूपं वेति

ननु विकार एवासत्स्वभाव इत्यभ्युपगमात् तद्व्यतिरिक्तमसत्त्वमलीकमे-
P. 455-14 वेति चतुर्थं कल्पमाशङ्कते—**टीकायां—अथास्येति** । स एव न भवतीति प्रसज्यप्रतिषेधः किं भाविकः ? उत काल्पनिकः । आद्ये तत्र प्रतिषेधप्रतिषेध्ययो-रुभयोरप्युल्लेखदर्शनात्, प्रतिषेध्यस्य वा प्रतिषेधस्वभावत्वं ? विपरीतं वेति विकल्प्य, दूषयति—**टीकायामथैष इति** । द्वितीयं दूषयति—**टीकायां-कल्पनामात्रेति** ।

विकारस्य सर्वस्यापि सत्त्वासत्त्वाभ्यामनिर्वचनीयत्वं दर्शयितुं **टीकायां** प्रथमद्वितीयविकल्पौ सत्वसाधारण्येनैव दर्शितौ । तथा च तृतीयचतुर्थ-
P. 456-2 विकल्पयोरसत्त्वग्रहणं सत्त्वस्याप्युपलक्षणमित्याह—**असत्त्ववदिति** । तत्कल्प-द्वयदूषणं सत्त्वे दर्शयति—**अर्थान्तरत्वादिति** । **दृष्टान्तत्वोक्तेरिति** । **अक्षपादादिभिरिति** भावः । **टीकायां—वैनयिकत्वं** शास्त्रशिक्षाजन्यत्वम् ।

ननु शङ्काभाष्ये **यथा वृक्ष इत्येकत्वं शाखा इति च नानात्वमि-**त्येको दृष्टान्तः, **यथा च समुद्रात्मनेत्यादिना** च तद्विलक्षणौ द्वौ दृष्टान्तावुक्तौ, अतः उभयविधदृष्टान्तानुरोधेन 'कारणमेकं कार्याणि नाने'त्येवं कश्चिदनेकान्त-वादः, 'भिन्नानामपि कार्याणां कारणात्मना एकत्वं, कारणस्य स्वत एकस्यापि कार्यात्मना नानात्व'मित्यपरः । तत्र प्रथमः किमिति **टीकायां** न दूषित इत्या-
P. 456-5 शंक्य स्पष्टदूषणत्वादुपेक्षित इत्याशयेनाऽऽह—**मृदेकेति** ।

**अभ्युपगमेऽपीत्यपिशब्देन—नन्वनेकात्मकं ब्रह्मेत्युपक्रमभाष्या-नुरोधात्, तत्रैकत्वांशेनेत्याद्युपसंहारभाष्यानुरोधाच्च, यथा वृक्ष** इत्यस्यापि भाष्यस्य **यथा वृक्ष इति** वृक्षात्मना शाखानामेकत्वं, वृक्षस्यापि **शाखा इति** शाखात्मना नानात्वमित्येवंपरत्वादस्य पक्षस्य नोन्मेष इति दर्शयति । **अभेद**
P. 456-5 **एव स्यादिति** । कारणस्य मृदादेरेकत्वमेव स्यादिति नानेकान्तवाद इत्यर्थः ।

---

विकल्पस्य 'सत्त्वासत्त्वे विकारस्य स्वरूप'मित्यनेन पौनरुक्त्यात् । अर्थान्तरत्वपक्षे स्वरूपत्वव्याघाताच्च । अतः 'किमकिंचित्करमुतासत्त्वकरमिति विकल्प्य' इत्येव ग्रन्थः इति भाति । उपरि 'असत्त्ववत् सत्त्वेऽपि अर्थान्तरत्वादिविकल्पा द्रष्टव्याः' इत्यत्र बहुवचनमविवक्षितम् । अर्थान्तरत्वालीकत्वविकल्पद्वयस्यैव सत्त्वादिति ज्ञेयम् ।

१. अपिशब्दरहितः पाठो मूले दृश्यते ।

क्वचित् कोशे अत्यन्तभेद एव स्यादिति पाठः। तत्रापि नानेकान्तवाद इत्येवार्थः।

भेदाभेदयोरिति। कार्यात्मना भेदः, कारणात्मना अभेद, इत्येवं भेदाभेदयोर्या व्यवस्था, सा न स्यात्। अत्यन्ताभेदे सति कार्यात्मना अभेदः कारणात्मना भेद इत्यपि प्रसङ्गादित्यर्थः। न भवेदपीति। भेदमाश्रित्य भवनवदभेदमाश्रित्याभवनस्यापि वक्तुं शक्यत्वादित्यर्थः। टीकायां–तदेतच्छ्रुतीति। 'वाचारम्भणं विकारो नामधेय'मिति श्रुत्या, ये हि दृष्टनष्टस्वभावा न ते वस्तुसन्त, इत्यादियुक्तिभिश्च, निराकृतं कार्यस्य सत्यत्वमेवकारेणानुवदन्तीमित्यर्थः। P. 256-7

भाष्ये शारीरात्मत्वस्य स्वाभाविकत्वं पारमार्थिकत्वं न सम्भवतीत्यतो व्याचष्टे—टीकायामनादेरिति। मिथ्याभूतस्य व्यवहारस्य मिथ्याज्ञानेनापि सिद्धेर्न तदर्थं नानात्वांशकल्पनमित्याशयेन परिहरति—टीकायां–तत्राहेति। टीकायां–कुतः इतीत्यनन्तरमत आहेति शेषः। तस्करदृष्टान्तः छान्दोग्यषष्ठे प्रसिद्धः। व्याहन्येरन्निति भाष्योक्तं प्रमाणानां व्याहतत्वमुपपादयति—टीकायामबाधितेति। टीकायां–भावकरणेति। भावनाकरणेत्यर्थः। P. 453-5

टीकायामभेदैकान्ताभ्युपगमहानिरिति। प्रमाणाभावादिति भावः। टीकायां किन्तु स्वरूपेणा[स्या]पीत्यर्थः। एकत्र व्याघातस्स्यादिति। हिरण्यादावहमभिमानाभावादिति भावः। भाष्यानुक्तमपि दूषणान्तरं स्वयं दर्शयति–टीकायां–शक्यमत्र वक्तुमित्यादिना। टीकायां–निरोधधर्मेति। निवृत्तिधर्मेत्यर्थः। अचोद्यत्वमेव प्रकटयति—टीकायां–यत्खल्वित्यादिना।

ननु सांव्यवहारिकसत्यत्वस्य पारिभाषिकत्वात् तावता कथं बाधितात् कार्यक्षमपदार्थोत्पत्तिरित्यत आह—असत्यादपीति, असत्यादपि रज्जुसर्पज्ञानान्मरणकार्यक्षमभयोत्पत्तेर्वक्ष्यमाणत्वाद्यथा कथञ्चित्सत्यत्वमात्रमेव तत्र प्रयोजकमिति भावः। टीकायामहिरूषितत्वेनाभिज्ञानं भयहेतुरित्युक्तम्। P. 258-2

---

१. अत्र कल्पतरौ 'न भवेदपीति' इति टीकाप्रतीकधारणे नञ्पदमधिकमशुद्धम्।

२. 'तदेतद्युक्तिनिराकृत'मिति टीकायां पाठो दृश्यते। 'श्रुतियुक्तिनिराकृत'मिति आभोगानुसारी पाठः।

P. 458-22 तत्र ज्ञाने अहेरुपलक्षणत्वमेव कुतो नेष्यत इत्यत उक्तम्—**टीकायामन्यथा त्विति।**

अहित्वस्मरणजन्यत्वादेर्दुर्ग्रहतया ज्ञानत्वस्यैवोपलक्ष्यतावच्छेदकत्वे, रज्जुज्ञानादपि भयप्रसङ्ग इत्यर्थः। उत्कृष्टापकृष्टसर्पज्ञानजन्ये भये उत्कर्षापकर्षदर्शनादपि विशेषणत्वमेवेत्याशयेनोपसंहरति—**टीकायां—तस्मादिति।** न च ब्रूम इत्यादेः पूर्वग्रन्थासम्बन्धमाशंक्याह—**यद्यसत्यादिति।** धूम्येति पाठं

P. 459-2 दृष्ट्वा व्याचष्टे—**धूममहिषीति।** टीकातात्पर्यं विशदयति—**असत्यादपीति।** नहीत्यादेः प्रतिबन्दीमुखेन पूर्वटीकार्थोपपादकत्वमित्याह—**यदि पुनरिति।**

**यतो नियमादिति।** कार्यकारणभावनियमादित्यर्थः। ततश्च, यथा कारणादेव सत्यात् कार्यमेव सत्यं जायते, नान्यस्मादन्यत्, तथा असत्यादपि कारणादबाधितविषयसम्बन्धात् सत्यं, ततोऽन्यस्मादसत्यं, इति नियम इति भावः। **टीकायां—कुतश्चिदसत्यात् सत्यं, कुतश्चिदसत्यमित्यत्र** दृष्टान्त उक्तो—**यथेति।** तत्र अजीनमिति शब्दस्वरूपं दर्शयति—**ज्या वयोहानाविति।** 'ग्रहिज्यावयी'त्यादिसूत्रेण सम्प्रसारणे, यकारस्थाने इकारे, 'सम्प्रसारणाच्चे'ति सूत्रेणाकारस्य पूर्वरूपे, 'हल' इत्यनेन सम्प्रसारणस्य दीर्घे, 'ल्वादिभ्यश्चे'ति निष्ठानत्वे, नञ्समासे च रूपमिति भावः।

P. 459-5 **सत्यमिति** क्रियाविशेषणस्य, सत्या अवगतिर्भवतीत्यर्थः। **अवगतेः** सत्यत्वञ्च वक्तृतात्पर्यार्थविषयकत्वात्, तदभावाच्च भ्रान्तित्वम्। **चर्मवचन इति।** चर्मपर इत्यर्थः। ततश्च चर्मवाचकस्यापि लक्षणया वयोहानिपरतायां कथं तदवगतेः भ्रान्तित्वमिति शङ्काया नावकाशः।

ननु व्यञ्जकध्वनिगतानां दीर्घत्वादीनां वर्णेषु परम्परया भानसम्भवात् कथं समारोपितत्वमित्याशङ्क्य 'ह्रस्वो वर्णो दीर्घो वर्ण' इति सार्वलौकिकानुभवविरोधात् नैवमित्याशयेनाऽऽह—**अत्र यथेति।** **सत्यबोधकमिति।** सत्यबोधजनकमित्यर्थः। **टीकायां—जाग्रदिति।** पुरुष इत्यर्थः। **टीकायां—स्वप्नान्ते।** स्वप्ने। शङ्कायाः फलमाह—**टीकायामेवमपीति।** प्रसङ्गाल्लो-

P. 459-12 कायतमतनिराकरणं भाष्य इत्याशयेनाह—**टीकायामत्रान्तर इति।**

---

१· टीकायां धूममहिष्या इति पाठो दृश्यते।

स्तब्धेति पाठं स्पष्टत्वादुपेक्ष्य ध्वस्तेति पाठं व्याचष्टे—ध्वस्त इति। P. 459-9
'अभ्यमित्राच्छ चे'ति खप्रत्यये अभ्यमित्रीणशब्द इत्याशयेनाह—अमित्रमभीति। अभीत्यस्य व्याख्यानं प्रतीति। प्रमादात्मतनुममित्रमिति (ध्याय) धावन्तीं व्याघ्रतनुं सुप्तिदशायामास्थितः प्रबुद्धस्सन् यदा मानुषीं तनुं पश्यतीत्यर्थः। टीकायां—देहवदिति। देहवत उभयदेहानुगतस्य 'योऽहं सोऽह'मिति प्रतिसन्धानाभावप्रसङ्ग इत्यर्थः।

टीकापेक्षितं पूरयति—तर्ह्येवेति। असत्यात्सत्यप्रतीतिर्न केवलं युक्तिसिद्धा, अपि तर्हि श्रुतिसिद्धा, अन्वयव्यतिरेकसिद्धा चेत्याह—टीकायामसत्याच्चेति। ननु बाधिते चेति भाष्यावतारणार्थं प्रवृत्तया यदुक्तं नानात्वांशेन तु कर्मकाण्डाश्रय इत्यादिटीकया पुनरुक्ता यच्चोक्तमेकत्वांशेनेत्यादिटीकेत्यत आह—भेदाभेदेति। तर्हि तत्र किमित्यभेदांशो नोपन्यस्त इत्यत P. 460-1
आह—तत्र चेति।

एवञ्च टीकागतं ग्रन्थमुपादाय तत्र विशेषस्यापि कथनेन, स्यादेतन्माभूदित्युत्तरटीकायास्तेन ग्रन्थेन पौनरुक्त्यं परिहर्तुं, पूर्वं नानात्वांशेनेत्यादिना, उत्तरत्र पुनरुपादानेन च, टीकायामेतद्ग्रन्थसद्भावे स्पष्टेऽपि, टीकायां यच्चोक्तमित्यतः प्रागयं ग्रन्थ एव नास्तीति परिमले कथमुक्तं वेति न विद्मः।

---

१. टीकायां 'कथं चैतत्' इत्यादि प्रश्नार्थे। 'यदि स्वप्नदृशः' इत्यादि उत्तरम्। इत्यप्युपपादयितुं शक्यम्। एवमेव 'तत् कस्य हेतोः' इत्यादिप्रश्नतदुत्तररूपग्रन्थशैलीदर्शनात्।

२. 'तत्र च तत्वज्ञानात्प्राक्' इति कल्पतरुपाठः, तत्र चेति त्रुटितं कल्पतरौ। इति अनेन ज्ञायते प्रतीकधारणेन।

३. यद्यपि 'बाधिते च' इति भाष्यावतारिकाभूतव्यवहितटीकावाक्ये पूर्वं 'नानात्वांशेन' इत्यादिवाक्यं अस्ति, अथापि 'यच्चोक्त'मिति टीकावाक्याव्यवहितपूर्वं इदं वाक्यं नास्तीति परिमलाशय इति बोध्यम्। अत्र स्थले लेखकप्रमादादिभिः शुद्धकल्पतरुकोशानुपलंभमूलकः परिमलस्य प्रमादः। अत एव परिमले 'केषु चित् कोशेषु नानात्वांशेनेत्यादिप्रतीकग्रहणमेव नास्ति' इत्युक्तम्। अनेन, नानात्वांशेनेत्यादिः प्रतीकरूप इति भ्रान्त्या, तस्य च प्रतीकस्य टीकायां पूर्वमनुपलंभेन, अयं ग्रन्थ एव नास्तीत्युक्तं परिमले। प्रतीकत्वभ्रान्तिमुत्पादयामास लेखकक्रूरः। 'तत्र च' इत्यंशश्च लेखकेन कल्पतरौ परित्यक्तः। तदपि मूलं भ्रान्तेः। वास्तविकः कल्पतरुवाक्यार्थस्तु आभोगरीत्या—नाथ इत्युक्तं पूर्वं (बाधिते चेति भाष्यावतारिकाटीकायां) 'नानात्वांशेन कर्मकाण्डाश्रय' इत्यादिना। तत्र च

न च सिद्धान्तग्रन्थतया नास्तीति वाच्यम्। यदुक्तमित्युपक्रमानुरोधेन दूषणार्थानुवादग्रन्थतया तस्यापि सिद्धान्तग्रन्थत्वात्। न च सिद्धान्तार्थकथनपरः तादृशग्रन्थो नेत्युक्तमिति वाच्यम्। **नाद्य इत्युक्तमित्याचार्यग्रन्थस्य नानात्वांशेनेत्यादिना** अनुवादपूर्वकमाद्यो न सम्भवतीत्युक्तमित्येवंपरतया सर्वस्यापि सिद्धान्तार्थकथनपरत्वस्यानुक्तत्वेन तदुपालम्भायोगात्। स्वरसतोऽवगम्यमानस्यार्थस्य वृथा चर्चया कथनायोगाच्च।

P. 460-4 **स्मृत्या हीति**। तथा चाहुः—'ईक्षणध्यानसंस्पर्शैः मत्स्यकूर्मविहङ्गमाः। पुष्णन्ति स्वान्यपत्यानी'ति। वृत्तिरूपाया अवगतेर्नाविद्यानिवृत्त्यात्मत्वं सम्भवतीत्यत आह—**अवगतिरिति**। **तस्य तुच्छत्वेनेति**। मुद्गरपातानन्तरं कपालव्यतिरिक्तः कश्चित् ध्वंसो नाम जायत इत्ययुक्तम्। तस्य निष्प्रमाणकत्वेन कार्यत्वायोगात्। 'ध्वस्तो घट' इति प्रतीतेः कपालगोचरत्वादिति भावः।

P. 461-2 **टीकायां—प्रतिकूलं पराचीनमिति**। ब्रह्मात्मैकत्वज्ञानात् **पराचीनमित्यर्थः**। ततश्च तन्निवृत्त्यर्थमन्यत् किञ्चिदाकांक्ष्यमिति नान्त्यत्वमिति भावः। **प्रागिति** भाष्यानुगुण्येन **टीका**भिप्रायमाह—**न वयमिति**। अध्याहारेण **टीकां** योजयति—**पूर्वमिति**। ज्ञानात् प्रागित्यर्थः। **माभूदिति**। तस्यैवाभावादिति भावः। तर्हि पौनरुक्त्यमित्यत आह—**पूर्वमिति**। **टीकायां—तात्विकत्वेनेति**। किञ्चित्प्रयोजनमित्यर्थः।

सर्वस्यापि मिथ्यात्वात् कथं **सत्यानृतव्यवहार इति भाष्य**मित्याशङ्कय, **सत्यानृतेति** न द्वन्द्वः, किन्तु कर्मधारयः, ततश्च मिथ्याभूतस्यापि व्यावहारिकं सत्यत्वमादाय **भाष्य**मित्याशयेनाऽऽह—**टीकायां—सत्यञ्च तदिति**।

P. 461-6 **अन्त्यत्वमात्रेण** न बाधकत्वमित्याशङ्कय, **भाष्यगतैकत्वपदसूचितमात्मैकत्व-**

---

ग्रन्थे तत्वज्ञानात् प्राक् अभेदव्यवहारस्याप्राप्तत्वात् न स उपन्यस्तः। नानात्वांशेन इति भेदव्यवहारः परं उपन्यस्तः। इति। अत्र परिमलरीत्या अर्थवर्णने 'तत्रच तत्वज्ञानात्' इति कल्पतरुवाक्यं सर्वथा नोपपद्यते। 'सर्वव्यवहाराणामेव' इत्यादिभाष्यतद्व्याख्यानग्रन्थयोः अभेदव्यवहारस्यापि उपन्यासात्। इति परिशीलनीयं पण्डितैः।

1. 'पूर्वं एकत्वनिबन्धनः' इति कल्पतरुः। तत्र पूर्वमिति पदं त्रुटितमिति ज्ञायते।

ज्ञानस्य प्राबल्यम्, भेदपदसूचितं नानात्वज्ञानस्य दौर्बल्यञ्च प्रकटयन्नाह— टीकायामन्त्यस्येति। P. 461-6

ब्रह्मणः परिणामित्वसाधनस्य प्रकृतोपयोगं दर्शयन्नाह—टीकायां—स्यादेतदिति। शङ्कामूलस्य मृदादिदृष्टान्तस्यानपबाधनात् परिहारस्याभासत्वमाशङ्क्याह—टीकायां—परिहरतीति। आभासत्वं निराकर्तुं नेत्युच्यत इति भाष्यसूचितं परिहारमाह—टीकायां—मृदादीति। टीकायां—कार्यस्यानृतत्वप्रतिपादनादिति। तथा च घटादीनामपि मृद्विवर्ततया न तद्दृष्टान्तेन परिणामोन्नयनमिति भावः।

कथञ्चिदुन्नयनमभ्युपेत्य दूषणमाह—टीकायां—साक्षादिति। कालभेदेन कौटस्थ्यतदभावयोरविरोधमभिप्रेत्य शङ्कते—टीकायामथेति। गूढाभिसन्धिः परिहरति—टीकायामत आहेति। अभिसन्धिमजानतः शङ्कां निराकर्तुमुद्घाटयति—टीकायां—कूटस्थनित्यता हीति। ननु परिणामस्य तद्गतधर्मत्वमेव, न तु तद्विकारत्वम्। येन धर्मिणः स्वभावात् प्रच्युतिः स्यादित्यत आह—टीकायां—न च धर्मिण इति। P. 461-14

टीकायां—अतो न परिणामेति। कूटस्थब्रह्मभावरूपमोक्षोपयोगिकूटस्थब्रह्मात्मैकत्वज्ञानोपायतया प्रतिपाद्यमानस्य जगतो ब्रह्मयोनित्वस्य विवर्तपरत्व एव संभवेन, परिणामपरत्वे असम्भवादित्यर्थः। टीकायां—प्रतिज्ञाविरोधमिति। तदनन्यत्वमित्यस्य ब्रह्मव्यतिरेकेण जगतोऽसत्त्वप्रतिपादकस्य जन्मादिसूत्रकृतजगत्कारणत्वप्रतिज्ञाविरोधमित्यर्थः।

दोषं दृष्ट्वेति। नापि वह्निभावाभावेति वक्ष्यमाणमित्यर्थः। तत्कथमिति। उभयत्र। सूत्रनिर्दिष्टभावोपलब्धविषये। भावविशिष्टाया उपलब्धेः, उपलब्धिविशिष्टस्य भावस्य च हेतुशरीरप्रविष्टत्वमित्यर्थः। सविशेषणहेताविति। तद्भावोपलब्धिनियतभावोपलब्धिकत्वहेतावित्यर्थः। प्रभारूपानु- P. 463-2

---

१. अत्र कल्पतरौ दण्डिन्यायेन इति छत्रिन्यायेनेत्यर्थः।

२. अत्र रूपपदं संपातायातं, स्वरूपपरं वा। अत एव कल्पतरावुपरि प्रभाशुरकेत्युक्तम्।

विद्धेत्यनुविद्धत्वविशेषणं यथाश्रुतभाष्यहेतावपि व्यभिचारप्रदर्शनार्थमित्या(त

P. 463-7 आ)ह—**येदेति** ।

**तत्रापि व्यभिचारस्येति** । ननु तत्तादात्म्यबुद्धिबोध्यत्वं **भाष्ये** हेतुरुक्तः । न च प्रभातादात्म्यं घटादेरस्ति । ततः कथं तत्र व्यभिचारः? नचैवं **सत्सु च तन्तुषु पट इति** भाष्यानुपपत्तिः, पटे तन्तुतादात्म्यबुध्यभावादिति वाच्यम् । 'तन्तुमयः पटः' 'तन्त्वात्मा पटः' 'तन्तवः पट' इति च तन्तुसमवेतत्वेन पराभ्युपगते पटेऽपि तन्तुतादात्म्यबुद्ध्यनपायात् । तथा च भाष्यकारो वक्ष्यति—**तन्तुसंस्थाने पटे तन्तुव्यतिरेकेण पटो नाम कार्यं नोपलभ्यत** इत्यादीति चेन्न ।

'भाति घट' इत्यत्रापि घटे प्रभातादात्म्यभानेन व्यभिचारतादवस्थ्यात्। अत एव '**भाति घट**' इत्युदाहृतम् । अन्यथा 'आलोके घट' इत्येवोदाहरणसम्भवे तावत्पर्यन्तधावनवैफल्यादिति ध्येयम् । **किन्त्विति** । तथा च, **भाष्ये कार्यकारणयोरिति** सप्तम्यन्तं षष्ठ्यन्तं च तन्त्रेणोच्चारितमिति भावः ।

**टीकायां उखा,** स्थाली । भेदसमवाययोरपि नित्यत्वाभ्युपगमेन नोत्पत्तौ परस्पराश्रयः । किन्तु ज्ञप्तावित्याशयेन, तदुपपादयति—**सम्बन्धस्येति** । कल्पिताकारांशस्य पटस्य पक्षत्वे, तत्र कल्पितभेदस्यापि सत्त्वेन सिद्धसाधनमित्यभि-

P. 464-4 प्रेत्य, पारमार्थिकरूपस्य पटस्य पक्षत्वे दूषणमाह—**अभेदवादिन इति** ।

ननु तन्त्वादेरपि कारणस्य सत्यत्वे अद्वैतक्षतिरिति शङ्कते—**कारणेति** । तन्तुव्यतिरेकेण पटानुपलम्भवदंश्वादिव्यतिरेकेण तन्त्वाद्यनुपलम्भस्यापि भावान्न

P 464-5 तेषामपि सत्यत्वमिति परिहरति—**इत्याशङ्क्याहेति** । **इत्याहेति शेष इति** । तथा च केषुचित्पुस्तकेषु **टीकायामित्याहेति पाठः कल्पित इति** ध्येयम् ।

ननु **प्रत्युत्पन्नो हीत्यादिटीकया** उत्पत्तेः पूर्वं घटस्य मृदात्मना सत्त्वे तैलस्य सिकतात्मना असत्त्वे च हेतुरुच्यत इत्याभाति । तदयुक्तम् , उत्पत्त्यनन्तरं तदात्मना तदुपलम्भभावाभावयोरुत्पत्तेः पूर्वं तत्सदसद्भावासाधकत्वात् । पूर्वत्रापि हिशब्दश्रवणेन तदेकवाक्यत्वायोगाच्चेत्याशंक्य, **नहीति** हिशब्दसूचितं

१. 'भाति घट इति प्रभानुरक्तधीगम्ये' इति कल्पतरौ भातीति भानं प्रभा । अत एव 'आलोकसंयुक्तत्वेनैव चाक्षुषधीवेद्यत्वनियते घटे' इति परिमलोक्तिः ।

हेतुं दर्शयति—**तद्धीति** । अन्यसत्तया कथमन्यसत्तेति शङ्कते—**नन्विति** । यो यदात्मनोपलभ्यते स तदभिन्न एव । तथा च नान्यत्वमित्याशयेनाह—**उत्पन्न-स्येति** । **अभेदेपीति** । प्रयुज्यत इत्यनुषङ्गः । P. 464-7

कदाचित्सतः कदाचिदसत्त्वासम्भवहेतुमाह—**कार्यस्येति** । **कादाचित्कत्वव्याहतिरिति** । असत्त्वधर्मान्वयाय धर्मिणः सत्त्वावश्यंभावादित्यर्थः । **उक्ताभिप्रायेति** । 'कारणसत्वमेव कार्यसत्व'मित्यादिप्रागुक्तेत्यर्थः । **सत्त्वं चेदिति** वाक्यस्य साकांक्षत्वादध्याहारेण व्याचष्टे—**त्रिष्वपीति**। **एवञ्च किमतो यद्येवमिति** वाक्यं तस्यैव विवरणरूपमिति भावः । सत्त्वस्य कार्य-कारणाभ्यां भेदानभ्युपगमात् कथं षष्ठीत्यत आह—**कार्येति** । **कार्यकारणयोः** अबाधितस्वरूपभूतं यत्संत्त्वं तच्चैकमित्यर्थं इति भावः । **तस्यापीत्यपिशब्दः** सम्भावनायाम् । तथा च विनिगमकाभाव इति भावः । P. 465-2

ननु **तथा सतीत्यादिटीका** एतच्छंकापरिहारासमर्थत्वादयुक्तेत्याशङ्क्य, यथोक्तशङ्कापरिहारं शङ्कान्तरं च मनसि निधाय तत्परिहाराय **टीका** प्रवृत्तेत्या-शयेनाऽऽह—**नहि वयमिति** । **साक्षादिति** । स्वरूपेणेत्यर्थः । **तत्र तयो-रिति** । मूलकारणब्रह्माभिन्ने सत्त्वे मृद्घटादिकार्यकारणयोर्भिन्नतया कल्पि-तत्वेनेत्यर्थः । **सत्वमेवेति** । अभिन्नत्वेनारोपितं अस्त्वित्यर्थः । स्वरूपेणैव सत्त्वस्यारोपितत्वे कार्यकारणयोः सत्यत्वासिद्धेरिति ध्येयम् ।

ननु सिद्धान्तिना कार्यकारणयोः, पूर्वपक्षिणा सत्वस्य च समारोपितत्वाङ्गी-कारात् कथं तत्प्रसञ्जनमित्यत आह—**स्वीकृतस्यैवेति** । उभयोरप्यारोपयोर्मध्ये **अयुक्तमारोपं दर्शयितुमित्यर्थः** । **अयुक्तिं अयुक्ततामिति क्वचित्पाठः** । तदा सत्वारोपस्येत्यर्थः । **तमेवेति** । अयुक्तमारोपमाहेत्यर्थः । **तामेवेति क्वचित् पाठः** । स तु **अयुक्तिमित्यादिस्त्रीलिङ्गपाठ**माश्रित्येति ध्येयम् । P. 465-5

ननु भेदाभेदयोर्मध्ये कस्यारोपितत्वमिति विमर्शः प्रकृतासङ्गत इत्यत आह—**भेद इति** । कार्यकारणयोः स्वरूपेण सत्यत्वात्तदारोपः तद्भेदारोप एव P. 465-6

---

१. अनेन 'तद्धि उपादानोपादेयस्वभावाभावकृतम्' इति कल्पतरौ पाठः इति ज्ञायते ।

२. 'स्वकृतस्यैव' इत्येतत् 'स्वीकृतस्यैव' इति शोधनीयम् ।

पर्यवस्यतीति भेदग्रहणमिति भावः। भेदस्य सत्यत्वे तत्प्रतीतिरेव न सम्भवति। अन्योन्याश्रयापत्त्या लोकमर्यादानुरोधितत्कारणस्यैवासम्भवात्। अतोऽनिर्वचनीयो भेदः कथञ्चिदविद्यया स्वप्ने स्वकरकलितस्वशिरोवद्भासत इत्येव वक्तव्यमित्यभिप्रायेण वयन्त्वित्यादिटीका।

P. 465-3

तत्र भेदग्रहाभावेऽपि प्रतियोगिनो घटादेर्ग्रहणसम्भवात् कथमन्योन्याश्रयत्वमित्याशङ्क्य, पञ्चम्यवगतप्रतियोगित्वविशेषेण तद्ग्रहस्यैव भेदग्रहहेतुत्वादस्ति तादृशस्य प्रतियोगिग्रहस्य भेदग्रहापेक्षेत्याशयेनाह—अस्मादयमिति। धर्मिणोऽपीति। स्तम्भकुम्भयोः संयोग इव भेदोऽप्येक एव। स च परस्परप्रतियोगिकः परस्परस्मिन् भासते। तथा च धर्मिभिन्नप्रतियोगिज्ञानानपेक्षणे कुम्भेऽपि कुम्भभेदो भायादिति भावः।

प्रतियोगित्वेनेति। यस्मिन् वस्तुनि प्रतियोगित्वेनाप्रतीतिः तस्मिन्नधिकरणत्वेन प्रतीतिरित्यर्थः। उक्तं नियामकमुदाहरणे दर्शयति—स्तंभाद्भिन्न इति। किं भेदाधिकरणत्वादिना तज्ज्ञानं कारणत्वेनाभिमतम्? उताधिकरणत्वादिनैव, अथ वा अधिकरणादिज्ञानमात्रमिति, विकल्प्य प्रथमं टीकोक्तदूषणेन निराकृत्य, द्वितीयं निराकरोति—यस्य कस्यचिदिति। भ्रमानुदयेति। न च सत्यपि भेदग्रहकारणे दोषात् [तदग्रहात्] भ्रमोदय इति वाच्यम्। भेदाग्रहातिरिक्तदोषसद्भावे मानाभावादिति भावः।

तृतीयं निराकरोति—वस्तुवृत्तेनेति। तथाभूतयोरिति। भेदाधिकरणतत्प्रतियोगिभूतयोरित्यर्थः। ननु शुक्तित्वादेरसाधारणधर्मस्य स्वरूपेणैव ज्ञानमपेक्षितम्, न त्वसाधारणत्वेन। येन तस्यैव भेदस्यापेक्षणे आत्माश्रयो, भेदान्तरापेक्षणे अभ्युपगमभङ्गश्च भवेदित्यत आह—इति दिगिति। रजतव्यावृत्तत्वेन शुक्तित्वज्ञानाभावे द्रव्यत्वज्ञानादिव शुक्तित्वज्ञानादपि भ्रमानिवृत्त्या असाधारणत्वेन तज्ज्ञानस्यैव भेदज्ञानत्वं वक्तव्यमिति भावः।

P. 466.3

---

१. 'घटपटयोरभेदग्रहे भेदं प्रति प्रतियोग्यनुयोगिभावाग्रहात्, एकस्मिन्नपि दीर्घवंशादौ भेदभ्रमे तं प्रति तदग्रहात्, अन्वयव्यतिरेकाभ्यां भेदधीः भेदप्रतियोग्यनुयोगिभावधीहेतुरिति' इति लघुचन्द्रिकायामुक्तमत्र वेदितव्यम्।

२. कल्पतरौ सत्ताधिकरणत्वेनेत्यादिवाक्ये स्फुरत इति पदं षष्ठ्यन्तं पञ्चम्यन्तञ्च। तेन सत्ताधिकरणत्वेन स्फुरतः शुक्तीदमंशस्य, पुरोदेशादन्यदेशगतसंसर्गाभावं प्रति प्रतियोगित्वेन स्फुरतः रजतात् भेदग्रहप्रसंगेन भ्रमानुदयप्रसंगादित्यर्थः।

**भेदेनोपजीव्यत्वादिति।** कार्यकारणलक्षणेन भेदेन स्वात्मलाभार्थं सद्रूपस्याभेदस्योपजीवनादिति[अर्थः]भावः। ननु सत्स्वरूपस्यैकत्वात् कथं भेदगर्भा वीप्सेत्यत आह—**वीप्सयेति। तदनुवादश्च, न भेदोपादाना अभेदकल्पनेति निषेधानुगुण्येन** निषेध्यप्रसक्तिसम्पादनार्थमिति भावः। **अत एवेति।** वास्तवभेदपरत्वाभावादेव, तदनन्तरमेकाभाव इत्येवोक्तमित्यर्थः। P. 466-8 P. 467-1

**साङ्ख्यमते** व्याकृतत्वाव्याकृतत्वयोर्धर्मयोस्सत्यत्वादस्माभिः तदनभ्युपगमान्न तन्मतप्रवेश इति परिहरति—**इत्याशङ्क्याहेति। असतीति भाष्यस्य** कार्यात्मना इत्यध्याहारेण योजनायां निमित्तमाह—**तथा सतीति।** कार्यस्य हि असत्त्वं प्रतिक्षेप्यम्। न तु शक्तेरिति भावः। **भाष्योक्ते मिथो विच्छेदप्रसङ्गे** हेतुमाह—**टीकायाम्–न हीति।** अतिप्रसङ्गादिति भावः।

अवयवावयव्यादिसमवायस्य संबन्धान्तरमन्तरेण स्वत एव तदीयत्वान्नानवस्थेत्यभिप्रेत्य शङ्केत्याह—**टीकायां शङ्कत इति।** समवायस्य सम्बन्धान्तरानपेक्षत्वे किं सम्बन्धत्वं प्रयोजकं? किंवा नित्यसम्बन्धत्वमिति विकल्प्य, प्रथमं तदेतदित्यादिटीकाभिप्रायवर्णनेन निराकुर्वन्नेव द्वितीयं शङ्कते—**स्वपरेत्यादिना। तस्यासिद्धिमिति।** समवायस्यासिद्धिमित्यर्थः। क्वचिदजसंयोगमनिच्छन्तं प्रति सर्वत्र संयोगस्य नित्यत्वापादनेन समवायस्यासिद्धिमाहेत्याह—**अजसंयोगमिति।** P. 468-2

**टीकायाम्–न भिद्यते** न[1] नश्यतीत्यर्थः। समवायस्य निमित्तकारणमात्रजन्यत्वसिद्धवत्कारे हेतुं दर्शयन्नाह—**अस्तु संयोगेति।** अवयविद्रव्यस्यावयवेषु वृत्तिविचारो भाष्ये अनवसरदुःस्थ इत्यत आह—**टीकायाम्–वृत्तिविकल्पेनेति।** P. 468-12

सर्वेष्ववयवेषु वर्तत इति पक्षेऽपि, किं तेषु व्यासज्य वर्तते? किं वा प्रत्यवयवं परिसमाप्तम्? आद्येपि, किं स्वरूपेणैव व्यासज्य वर्तते? किं वा अवयवश इति विकल्प्य, स्वरूपेण वर्तत इति पक्षेऽपि, किं सर्वावयवावच्छेदेन सन्निकर्षे सत्येव तदुपलब्धिः? उत कतिपयावयवावच्छेदेनापीति विकल्प्य, प्रथमं

---

१. इदमर्थवर्णनं टीकायां उपरि 'न नश्यती'ति कथनात् प्रामादिकं, नानेकमित्यर्थः करणीयः।

निराकर्तुं यदि तावदित्यादिभाष्यम्। तत्र समस्तावयवसन्निकर्षस्याशक्यत्वे हेतुमाह—**टीकायां—मध्यपरभागयोरिति** । P. 468-13

द्वितीयं शङ्कते—**टीकायामथ समस्तेति** । अतिप्रसङ्गान्नैवमिति परिहरति—**टीकायामत आहेति** । अवयवशो वर्तेत इति पक्षेपि, किमारम्भकावयवव्यतिरिक्तानवयवानादाय तैरवयवैरवयवश आरम्भकावयवेषु वर्तेत? किं वा आरम्भकावयवानेवादाय? द्वितीये, आरम्भकावयवेषु वर्तनस्य व्यासङ्गित्वं किं प्रत्यवयवं पर्यायेण वर्तनात्? किं वा युगपद्वर्तनेऽपि तस्यैकत्वादिति विकल्प्य, क्रमेण निराकृतं भाष्ये अथावयवश इत्यादिना ।

तत्रावयवशो वर्तमानस्यापि व्यासङ्गित्वाविशेषात् बहुत्वस्येव सर्वाधिकरणावच्छेदेन सन्निकर्षापेक्षा कुतो न भवेदित्याशङ्क्य बहुत्ववैषम्यप्रदर्शनेन शंकाभाष्यतात्पर्यमाह—**टीकायां—बहुत्वसंख्या हीत्यादिना** । **टीकायां—निराकरोतीति** । यथोक्तविकल्पपूर्वकमिति भावः। **टीकायां—शङ्कत इति** । प्रथमविकल्पद्वितीयमित्यर्थः[1]। **टीकायां—निराकरोतीति** । शृङ्गाद्येकैकावयवग्रहणेऽप्यवयविनो गवादेरग्रहणात्, 'गां दोग्धी'ति दोहनादिकार्येण गवादेरेव कर्मत्वेन स्वीकृततया स्तने विद्यमानस्यैवावयविनोऽवयवान्तरेऽपि सत्त्वेन शृङ्गादपि स्तनकार्यदोहनप्रसङ्गाच्चेति **निराकरोतीत्यर्थः** ।

**घटशब्दस्यालाक्षणिकत्वाभिधानं** 'उत्पद्यते घट' इति प्रयोगाभिप्रायेण दर्शयन्, व्यापाराविष्टतयेत्यादिविशेषणप्रयोजनं च दर्शयन्नाह—**यद्यपीत्यादिना** । व्यासक्तत्वादिति पूर्वापरीभूतत्वादित्यर्थः । उत्पत्त्युत्पादनयोः सकर्मकत्वाकर्मकत्वाभ्यां भेदमभिधाय, प्रयोज्यप्रयोजकव्यापारत्वाभ्यामपि भेदं दर्शयितुं **तस्मादिति टीका** । तत्र भृत्यस्वामिसमवेतयोरित्यस्य पूर्वेणान्वयं दर्शयन्नाह—**भृत्यो हीति** । **एवं चेति चशब्दः किमर्थ** इत्याशयेनाह—**धातूपात्तेति** । P. 469 5

---

१. प्रथमविकल्पे यो द्वितीयः, तत्रापि विकल्पे द्वितीयमिति वक्तव्यम्। आरंभकावयवानेवादायेति प्रथमविकल्पद्वितीयः। तत्रापि विकल्पद्वये प्रथमः प्रत्यवयवं वर्तनादिति। स च भाष्ये 'अथ प्रत्यवयवं वर्तेत' इत्याशङ्क्य खण्डितः। एवं च द्वितीयद्वितीयः विकल्पः युगपद्वर्तनेऽपि तस्यैकत्वादिति, 'शङ्कते—गोत्वादिवदिति' इति टीकायामुक्तः। इति पर्यालोचनीयम्।

असतः कर्तृत्वं न सम्भवतीति पूर्वोक्तदोषापरिहारात् अथेति शङ्का-भाष्यमनुपपन्नमित्यतः तात्पर्यं दर्शयितुमेतदुक्तमित्यादिटीका। तत्र भाष्ये सत्तासमवायमात्रस्यैवोत्पत्तित्वसम्भवे स्वकारणेति व्यर्थमित्यतो लक्षणद्वय-परत्वेन तद्भाष्यं टीकायां व्याख्यातम्। तत्र स्वस्य कारणसत्ताभ्यां सम्बन्ध इति भाष्यार्थे एकत्र सम्बन्धः प्रतियोगित्वमपरत्राधिकरणत्वमित्याशयेन व्याचष्टे—स्वकारण इति। P. 469-7

ननु प्रागुत्पत्तेः असत्त्वमित्यसत एव मर्यादाकरणादभावस्येति कथ-मुक्तं भाष्ये? इत्याशंक्य कार्यस्यासत्वमभाव एव नाधिकमित्याशयेनाह—टीकायामपि चेति। वन्ध्यापुत्रः कारकव्यापारदूर्ध्वं यद्यभविष्यत् सत्तां लभेत, तत इदं मर्यादाकरणमुपापत्स्यत न त्वेतदस्ति कार्याभावस्तु कारकव्यापारादूर्ध्वं भविष्यतीति इति भाष्यार्थमभिप्रेत्य तदभिप्रायमाह—टीकायां—स्यादेतदिति।

वयन्त्विति भाष्याभिप्रायमाह—टीकायामुक्तमेतदिति। स्वपक्षो-क्तदोषापरिहारात् भाष्ये चोद्यानुपपत्तिरित्याशंक्य वैतण्डिकवेषेण चोदयतीत्याशयेनाह—टीकायामत्रासत्कार्यवादीति। अनिर्वचनीयकार्याकारसम्पत्त्यर्थं P. 470-2 कारकव्यापारस्यार्थवत्त्वमिति परिहारभाष्याभिप्रायमाह—टीकायामुक्तमेत-दिति।

कार्यस्य कारणात् भिन्नाभिन्नोभयरूपेणावभासने 'मृद्घट' इति सामा-नाधिकरण्यं नियामकमित्याह—सामानाधिकरण्येनेति। इतरथा हीति। P. 470-1 यथाश्रुतभाष्यानुरोधेन कार्यस्य कारणादनिर्वचनीयभेदानङ्गीकारे इत्यर्थः। भाष्ये द्रष्टृगताज्ञानविषयनटदृष्टान्तोपादानात् जीवगताज्ञानविषयीभूतं ब्रह्म जगत्कारणमिति वाचस्पतिमतं भाष्यानुमतमेवेत्याह—अज्ञातमिति। P. 471-1

द्रष्टृभिरविज्ञातनिजरूप एव नटो यथा अभिनेयतत्तदसत्यरूपं प्रति कारणमेवं जीवैरज्ञातं ब्रह्म जगतः कारणमब्रवीदित्यर्थः। व्यभिचारार्थमिति।

---

१. अत्र कल्पतरौ 'स्वशक्त्या नटवत्' इति श्लोकः कल्पतरुकोशेषु केषुचित् न दृश्यते। अत एव आभोगेऽपि न धृतः। स च श्लोकः भामत्या भाष्यविरोधप्रदर्शनेन खण्डनरूपः परकीयः इति भाति। तत्समाधानरूपः भाष्यभामत्योरविरोधप्रदर्शकः अज्ञात-मित्यादिः श्लोकः कल्पतरुकृतः। इति ज्ञेयम्।

यदुपलब्धावपि यन्नोपलभ्यते तत्ततो भिद्यते, यद्यस्मादधिकपरिमाणं तत्ततो भिद्यते, इत्यनयोः **संवेष्टितप्रसारितपटे व्यभिचारप्रदर्शनार्थमित्यर्थः।**

P. 471-3 **तस्यामेवेति।** प्राणवृत्तिषु व्यभिचारप्रदर्शनार्थमित्यर्थः।

॥ इति आरम्भणाधिकरणम् ॥

---

## ॥ अथ इतरव्यपदेशाधिकरणम् ॥

**सू०॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥**

**सू०॥ अधिकं तु भेदनिर्देशात् ॥ २२ ॥**

**सू०॥ अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥**

P. 471-6 **ब्रह्मैक्यमुक्तमिति।** विषयवाक्यश्रुतसर्वविज्ञाननिर्वाहार्थं **न त्वयं भोक्तृभोग्यविभागः परमार्थतोऽस्तीत्यादिभाष्येण** परमकारणब्रह्मव्यतिरेकेण जीवानामप्यभावस्योक्तत्वादित्यर्थः। **भाष्ये तस्माद्यत् ब्रह्मणः स्रष्टृत्वं तच्छारीरस्यैवेत्यादिना** कथितः पूर्वपक्षप्रकारः प्रौढ्या। अविद्यातिरोहितशक्तेः जीवस्य हिताहितकरणपरिवर्जनस्वातन्त्र्याभावेन तं प्रति हिताकरणादिदोषोद्घाटनायोगात्। **किन्तु नहि कश्चिदित्यादिभाष्योक्त** एवेति दर्शयितुं **तेनेत्यादिटीकेत्याशयेनाऽऽह—ननु स्वाभाविकमिति।** यद्यपि जीवानां स्वाभाविकं ब्रह्मणा एकत्वं, तथापि जीवा अविद्योपहिताः ततश्च (ते) स्वेषामित्यर्थः।

P. 472-5 **टीकायां—सत्यमयं परमात्मा जीवानात्मनोऽभिन्नाननुभवतीति। तथापि, यथा जीवान्वस्तुत आत्मनोऽभिन्नान् पश्यति, एवं तद्वदभिमान इति, तथा च न क्षतिः काचिन्ममेति च पश्यति। अतो न हिताकरणादिदोषप्रसक्तिरिति राद्धान्त इत्युक्तम्।** तत्रैकस्यान्वयप्रदर्शने, अन्यस्याप्यन्वयः सुज्ञान इति मनसि निधायाह—**तद्वदभिमान इति पश्यतीत्यन्वय इति। अतः पश्यतीति।** शुद्धस्यापि तत्तद्विषयोपरक्तप्रकाशाश्रयत्वसम्भवादिति भावः।

---

१. अत्र कल्पतरौ क्वचित् कोशे स्वेषामिति पदं नास्ति। स्वेषां परमात्मतामिति शेषः।

ननु पूर्वभाष्येण ब्रह्मणः स्रष्टृत्वं दर्शितम्। अपि चेत्यादिभाष्येण तु तस्य स्वाभिन्नजीवगतेन बन्धनेन[न]बन्धः। तस्य मिथ्याभूतस्य अविद्याधीनत्वेन तद्रहिते ब्रह्मणि तदयोगात्। ततश्च न हिताकरणादिदोषप्रसक्तिरित्युक्तम्। ततश्च द्वयोरपि भाष्ययोर्मिलितयोरेव सिद्धान्तनिर्वाहकत्वात् कथं अपि चेति भाष्यमित्यत आह—टीकायामपि चेति चः पूर्वोपपत्तीति। P. 472-8

शारीरस्य स्रष्टृत्वाकरणान्न हिताकरणादिदोषप्रसक्तिरिति पूर्वोपपत्तिसाहित्यं, बन्धस्य मिथ्यात्वात् न तेन मम काचित् क्षतिरित्येवमनुसन्दधानस्य ब्रह्मणोऽपि जगत्स्रष्टुर्न हिताकरणादिदोषप्रसक्तिरित्यस्यार्थस्य द्योतयतीत्यर्थः। सूत्रे तदनुपपत्तिरिति तच्छब्दनिर्दिष्टं परपरिकल्पितं दोषं प्रकटयन्नेव सूत्रमवतारयति—टीकायां—स्यादेतदिति।

॥ इति इतरव्यपदेशाधिकरणम् ॥

---

## ॥ अथ उपसंहारदर्शनाधिकरणम् ॥

सू०॥ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

सू०॥ देवादिवदपि लोके ॥ २५ ॥

सम्मतवदिति। एकपरमाण्वादिवदित्यर्थः। सहकारिनिषेध इति। P. 473-4 मायाऽदृष्टादिकमपारमार्थिकत्वान्न सहकारीति भावः। न चेति चशब्दः किमर्थ इत्याशयेनाह—न केवलमिति। भाष्यस्थेति। अनेककारकसाधनोपसंहारेण सङ्गृहीतसाधनाःसन्त इति भाष्यस्थेत्यर्थः। साधयत्येवेति साधनमिति। ल्युटः करणार्थकत्वादतिशयितकारणस्यैव च करणत्वात् साधनशब्देन फलायोगव्यवच्छेदरूपातिशयाभिधानमिति भावः। परित्यज्य वासः परिवासः इति व्युत्पत्तिमभिप्रेत्याह—एकस्मिन्निति।

नन्वज्ञानस्य ब्रह्मनिष्ठत्वानभ्युपगमात् कथं तद्धर्मत्वलक्षणमान्तरत्वमित्यत आह—अज्ञातत्वस्येति। तस्या मायाया इति। अदृष्टादिरूपेण परिणताया P. 474-4

इत्यर्थः। अधिष्ठातृत्वसमर्थकमिति। साङ्ख्यं प्रति देवादिदृष्टान्तेन ब्रह्मणोऽपि
P. 474-7 सङ्कल्पमात्रेण प्रपञ्चाधिष्ठातृत्वसाधकमित्यर्थः।

॥ इति उपसंहारदर्शनाधिकरणम् ॥

---

## ॥ अथ कृत्स्नप्रसक्त्यधिकरणम् ॥

सू०॥ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

सू०॥ श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

सू०॥ आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

सू०॥ स्वपक्षदोषाच्च ॥ २९ ॥

इतरथा हीति। अस्तीति, तत्वत इति च, पदानुपादान इत्यर्थः। मायामयेति। ब्रह्मणोऽविकृतत्वोक्तौ, स्वरसतः सर्वप्रकारेणापि विकाररराहित्य- पर्यवसानादिति भावः। भाष्यगतशङ्कायाः कृत्स्नप्रसक्तिफलकत्वाभावे हेतुं दर्शयन् P. 476-1 व्याख्याबीजमाह—निरवयवेऽपीति। भाष्ये दुर्घटत्वमात्रमुक्तम्। तर्हि

---

१. अस्मिन्नधिकरणे भाष्ये 'स्वयमपि हि क्षीरं यां च यावतीं च परिणाममात्रा- मनुभवति तावत्येव, त्वार्यते त्वौष्ण्यादिना दधिभावाय' इति पाठो दृश्यते। स च क्लिष्टो भावति। 'तावत्येव' इत्यस्य स्थाने 'तामनुभवत्येव' इति तु सम्यक्पाठः। अस्य पाठस्य अनुकूलं प्रकटार्थविवरणं दृश्यते—'यद्रूपां यत्परिमाणां च परिणाममात्रां क्षीरमनुभवति, तां स्वयमपि अनुभवत्येव' इति। 'तामनुभवत्येव' इत्येतत् प्रमादात् लेखकेन तावत्येव इति लिखितं मध्ये 'मनुभ' इत्यक्षरत्रयलोपेन। लेखकेन एवं लेखनानन्तरं शुद्धपाठपरि- ज्ञानमेव कष्टसाध्यं भवति ॥

एवं भाष्ये 'पद्मिनी च चेतनप्रयुक्ता सती अचेतनेनैव शरीरेण सरोऽन्तरात् सरो- न्तरमुपसर्पति वल्लीव वृक्षम्, न तु स्वयमेवाचेतना सरोन्तरोपसर्पणे व्याप्रियते' इति वाक्यस्य भावः वार्तिकाख्यव्याख्याने दृश्यते—'नागा एव पाताल(स)मार्गेण पद्मिनीं सरो- न्तरात् सरोन्तरं प्रापयन्तीति लोकप्रसिद्धम्। लोकप्रसिद्धमेव युक्त्या द्रढयति 'न तु स्वय- मेवाचेतन' इति। पद्मषण्ड इति बोध्यम्।' इति। तथा च पद्मिन्याः अचेतनत्वावगमात् 'अचेतनेनैव शरीरेण' इत्यस्य स्थाने 'अचेतनैव' इति युक्तं वार्तिकव्याख्यारीत्येति भाति। चेतनप्रयुक्ता नागप्रयुक्ता इति तद्रीत्या अर्थः। यद्वा चेतनप्रयुक्ता इत्यस्य स्थाने चैतन्ययुक्ता, इति भाव्यम्। पद्मिन्याश्चैतन्यमभ्युपेत्य तथोक्तम्। पण्डिताः परिशीलयन्तु।

श्रुतेः का गतिरित्यतः, तात्पर्यमाह—**टीकायां नहि निरवयवत्वेत्यादिना।** P. 476-3

ननु सावयवस्य सत्वादिसमुदायस्यैव केनचिदंशेन परिणामाभ्युपगमे सति न मूलोच्छेद इत्यत आह—**अवस्तुत्वादिति।** एवञ्च, यद्यपि समुदायः सावयवः, तथापि तस्यावस्तुतया परिणामायोगेन परिणामयोग्याः सत्वादयः प्रत्येकं निरवयवा इति टीकार्थ इति भावः। **टीकायां सम्भूय परिणामाभ्युपगमादिति।** घटादिषु सुखदुःखमोहरूपगुणत्रयकार्यदर्शनादिति भावः।

ननु **तथाचेत्यादि**टीकायामुपर्यधःपार्श्वचतुष्टयगतानां षण्णामपि परमाणूनां मध्यवर्तिपरमाणुना समानदेशत्वात् प्रथिमानुपपत्तिरित्युच्यते, तदयुक्तम्। द्व्यणुकस्य परमाणुद्वयात्मकत्वात्। न च सप्तपरमाण्वारब्धद्रव्यापादनेन टीकेयं प्रवृत्तेति वाच्यम्। **वैशेषिकाणां हीत्यादिना** तत्प्रक्रियाप्रदर्शनविरोधात्, विजातीयसंयोगस्यैव तैरारम्भकत्वाभ्युपगमेन संयोगमात्रेण द्रव्यारम्भापादनायोगाच्चेत्याशङ्क्य, कैमुतिकन्यायेन द्व्यणुके प्रथिमानुपपत्तिप्रदर्शनार्था टीकेत्याशयेनाह—**द्व्यणुकमिति।** P. 477-1

**अणुना संयुज्यमानोऽणुर्यदि स्वोपर्यधःपार्श्वगतैरप्यणुभिः कदाचित् कैश्चित्संयुज्यते, तदा ते च तेन समानदेशा एव भवन्तीति,** कैमुतिकन्यायेन द्व्यणुकारम्भकविजातीयसंयोगशालिनोऽप्येकस्याणोस्तेन समानदेशत्वात् द्व्यणुके प्रथिमानुपपत्तिरित्यर्थः।

नन्वव्यापनपक्षस्य **अव्याप्नुवन्वेत्यादिना** दूषितत्वात्, पौनरुक्त्यमित्याशंक्य, किमव्याप्यवर्तनं अवर्तनं, एकदेशेन वर्तनं वेति विकल्प्य, प्रथमं पूर्वं निराकृतम्। द्वितीयमिदानीं निराकरोतीत्याह—**अव्याप्यवृत्ताविति।** P. 478-1

निराकर्तव्यस्य सावयवत्वस्य प्रसञ्जकमाह—**मूर्तत्वेति।**[1] **विपक्षे दण्डमिति।** प्रतिकूलतर्कपराहतिमित्यर्थः। नचानन्तपरमाण्वारब्धयोर्मेरुभूगोलयोर्व्यभिचारात् नायं सत्तर्क इति वाच्यम्। तेषामनन्तत्वासिद्धेः। न ह्यस्मदादि-

---

१. 'मूर्तत्वेति' इति, 'विपक्षे दण्डमिति' इति, 'यदीति' इति च प्रतीकत्रयमपि आभोगे धृतं कल्पतरुकोशेषु नोपलभ्यते। तेन कल्पतरौ कियानपि ग्रन्थः त्रुटित इति निर्णीयते। अहो कल्पतरुकोशलेखकस्य प्रमादः। परिमलेऽपि 'यदि प्रत्यक्षेति' इति

परिगणनायोग्यत्वमनन्तत्वम् । किन्तु वस्तुत(न) इयत्ताराहित्यम् । तच्च तत्र नास्तीति भावः ।

यद्यपि परमाणुपूर्वभाविकार्यकारणपरम्परायाः एवाविश्रान्त्या कार्योत्पत्तिरेव न सम्भवति । यदि वा परमाणुतत्कारणादीनां सावयवानामपि पूर्वसिद्धत्वेन तदारभ्य कार्योत्पत्तिः सम्भवतीत्युच्येत, तर्हि तादृशबह्वल्पारब्धत्वेन परिमाणभेदोऽप्युपपद्यते, तथापि मेरुसर्षपयोः अनन्तावयवकत्वे एतावत्परिमाणवैलक्षण्यं न स्यादित्यत्र तात्पर्यम् ।

बाधितत्वेन तर्कस्याभासत्वमाशंक्य, साम्यं दर्शयति—**यदीति** । प्रत्यक्षविरुद्धत्वेन कालातीतत्वादित्यर्थः ।

ननु बाधो न तर्कस्य दूषणं, अनुमानदूषणत्वात्तस्य । कथमन्यथा 'यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्या'दित्यादितर्क इति चेन्न । तर्कप्रवृत्तिविघटकत्वेन तत्रापि तस्य दोषत्वात् । किन्तु तर्कमूलव्याप्तिग्रहविघटनेन यत्र तर्कप्रवृत्तिर्विहन्यते, तत्र तर्कस्य बाधितत्वम् । यथा, 'यदि बीजजातीयमङ्कुरकारि स्यादक्षेपकारि स्या'दिति तर्के आपाद्यापादकयोर्व्याप्तिग्रहणदशायामेव बीजजातीये क्षेपकारित्वस्य, क्षेपेण विलम्बेन कार्यकारित्वस्य, प्रत्यक्षसिद्धत्वात् तस्य कालातीतत्वम् ।

पर्वते धूमप्रत्यक्षं तु न वह्न्यभावधूमाभावव्याप्तिग्रहविघटकम् । अनन्तावयवत्वपरिमाणवैलक्षण्याभावयोस्तु घटादावेव व्याप्तिर्ग्राह्या । सा च प्रत्यक्षबाधितेति वैषम्यमिति भावः । हेत्वाभासानां तर्केऽपि दोषत्वमात्मतत्त्वविवेकादौ वैशेषिकैः स्पष्टमुपपादितम् । **परिणामेऽपि कार्यकारणभावसत्त्वात्** भेदायोगमाशंक्याऽऽह—**कार्येति** ।

॥ इति कृत्स्नप्रसक्त्यधिकरणम् ॥

---

प्रतीको धृतः । कल्पतरौ स न दृश्यते । कल्पतरौ त्रुटितो ग्रन्थः इत्थं स्यादिति आभोगपरिमलव्याख्यानुसारेण ऊह्यते—स च त्रुटितो भागः 'अव्यापने वेति' इत्यनन्तरं 'कार्यकारणभावः' इति प्रतीकात् पूर्वं निवेश्यः । 'मूर्तत्वलिङ्गकपरमाणुसावयवत्वानुमानस्य विपक्षे दण्डमाह—तथा सतीत्यादिना । यदि प्रत्यक्षविरुद्धत्वेन तर्कस्याभासत्वमाशङ्क्येत, तदा मूर्तत्वलिङ्गकपरमाणुसावयवत्वानुमानस्यापि धर्मिग्राहकानुमानेन विरुद्धत्वेनाभासत्वं समम् । धर्मिग्राहकानुमानेन परमाणोर्निरवयवत्वेन सिद्धेः' । इति त्रुटितो भाग इति ज्ञायते । पण्डिताः परिशीलयन्तु ।

## ॥ अथ सर्वोपेताधिकरणम् ॥

सू०॥ सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

सू०॥ विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

अशरीरस्येति । शरीरपदं स्थूलसूक्ष्मशरीरद्वयपरम् । सङ्गतिमिति । P. 479-1 निर्वाहकत्वलक्षणामित्यर्थः । अशरीरस्याप्यविद्याबलान्नियन्तृत्वसाधनेनैव स्रष्टृत्वस्यापि सिद्धत्वात्, गतार्थमिदमधिकरणमित्याशंक्याऽऽह—अन्तर्यामीति । ननु 'श्रुतेस्तु शब्दमूलत्वा'दित्यत्र श्रुत्येकसमधिगम्यत्वात् ब्रह्मणो न तत्र शङ्कावकाश इत्युक्तत्वात् कथं 'विकरणत्वा'दिति सूत्रमित्याशंक्य, न्यायविरोधे श्रुतिरन्यपरैवेति वदतः शङ्कां समाधातुं सूत्रमित्याशयेनाऽऽह—टीकायामेतदाक्षेपेति । सूत्रे करणशब्दः शरीरद्वयपरः ।

ननु ब्रह्म न शक्तिमत्, शरीररहितत्वादिति शंकाया देवादिदृष्टान्तेन कथं परिहार इत्याशंक्य, हेतोरप्रयोजकत्वमनुमानदूषणम्, तत्र यदि ब्रूयात् ब्रह्मणः शक्तिमत्त्वे शरीरित्वमपि स्यात् दृष्टत्वादिति, तर्हि, देवादयो यदि कर्तारः स्युः, तदा बाह्यसाधनापेक्षा अपि स्युः दृष्टत्वादिति प्रतिबन्दीबलादप्रयोजकत्वदृढीकारेण सम्भावितस्य शक्तिमत्त्वस्य श्रुत्या दृढीकरणात् अनुमानं बाधितमित्याह—शक्तिमन्त इत्यादिना । तद्दृष्टमित्यत्र P. 479-5 तदित्यव्ययं सप्तम्यर्थे ।

॥ इति सर्वोपेताधिकरणम् ॥

---

१. अत्र टीकायां प्रथमं सूत्रमिति पदं प्रथमसूत्रपरं, द्वितीयं सूत्रमिति पदं द्वितीयसूत्रपरम् ।

२. तत्र दृष्टमित्येव कल्पतरौ पाठो दृश्यते ।

57

## ॥ अथ न प्रयोजनवत्त्वाधिकरणम् ॥

सू०॥ न प्रयोजनवत्त्वात् ॥ ३२ ॥

सू०॥ लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

P. 480-4 **आक्षेपसङ्गतिं** दर्शयन्नाह—**पूर्वत्रेति**। किं परमात्मा बुद्धिपूर्वकारी जगद्बिम्बं विरचयति ? किं वा अबुद्धिपूर्वकारीति विकल्प्य, क्रमेण निराकृतं भाष्ये चेतनो हीत्यादिना, तत्र द्वितीयपक्षस्य फल्गुत्वात्तन्निराकरणभाष्यमादौ व्याकुर्वन् प्रथमपक्षं परिशेषयन् तद्भाष्यं व्याचष्टे—**टीकायां—न तावदित्यादिना**। **टीकायामत एवेति**। जगत्प्रवृत्तिर्ब्रह्मणो [न] लीला, अतः प्रयोजनाभावेऽपि जलताडनादिवदुपपद्यत इति न शङ्का कर्तव्या, महाप्रयासप्रवृत्तेरेव प्रयोजनवत्त्वनियमेन लीलायास्तथात्वाभावादेव निरासादि[1]त्यर्थः।

**टीकायां लीलायाः** सुखप्रयोजनकत्वमुक्त्वा, **तादर्थ्येन वेत्यादिना** लीलोद्देशेन प्रवृत्ता(विति)वपि कौतूहलप्रतिघातप्रयुक्तखेदानुत्पत्तिः प्रयोजनमित्युक्तम्। तत्र लीलाया असुखादिरूपायाः कथमुद्देश्यत्वमित्याशंक्य, P. 480-5 कौतूहलविष्टस्य तत्रैव सुखाभिमानात् उद्देश्यत्वं उपपद्यत इत्याशयेनाह—**सुखार्थत्वेनेति**। आभिमानिकसुखाभिन्नलीलार्थत्वेनेत्यर्थः। **प्रवृत्तेः प्रागिति**। प्रागेव लीलायाः सुखरूपत्वाभिमानाभावे प्रवृत्तेरेवानिष्पत्त्या खेदानुत्पत्तिफलकत्वानुपपत्तेरित्यर्थः।

**अदृष्टहेतुकेति**। स्वरूपकथनमात्रं निष्प्रयोजनं, अदृष्टमात्रहेतुकत्वं तु तत्र बाधितम्, श्वासादिक्रियायां चेतनस्यापि कर्तृत्वात्। अतो यौगिकत्वेन व्याचष्टे—**न दृष्ट इति**। तत्र हेतुकथनपरमौत्पत्तिकेति पदं व्याचष्टे—**पुरुषस्येति**। **स्वापादाविति**। प्रयोजनाभिसन्धिरहित[2]स्वापादौ यः श्वासस्तत्रेत्यर्थः। P. 480-7 **श्वासादाविति पाठः**। स तु सुगमः।

---

१. जगद्रचनायाः महाप्रयासत्वेन लीलात्वनिरासादित्यर्थः। इति भाति।

२. सर्वज्ञानोपरमरूपो हि स्वापादिः प्रयोजनानभिसंधिरूपोऽपि भवति। श्वासादौ प्रयोजनानभिसंधिरूपे साध्याभाववदिति क्वचित् पाठः। इति परिमलादर्थोऽनुसन्धेयः।

**चेतनकर्तृकत्वस्येति** । साध्यस्याभावो यथा तत्र, तथा हेतोरप्यभावादित्यर्थः । चैतन्यपूर्वककर्तृत्वं हेतुर्विवक्षित इति भावः । **सुषुप्तेऽपि तस्या इति** । श्वासादिक्रियाया इत्यर्थः । **स्वरूपचैतन्येति** । विलीनान्तःकरणोपहितस्य स्वरूपचैतन्यस्येत्यर्थः । P. 480-8

सूत्रे लीलाशब्दः क्रियार्थ इत्याश्रित्य, प्रयोजनरहितयादृच्छिकाङ्गुल्यादिचेष्टायां श्वासादिक्रियायाञ्च, व्यभिचारं प्रदर्श्य, 'लीला क्रिया विलासश्च'ति स्मरणानुसारेण विलासार्थकत्वेऽपि, सुखोद्रेकप्रयुक्तहासगानादिक्रियायां व्यभिचारं दर्शयितुं **यथा चेत्यादिटीका** प्रवृत्तेत्याशयेनाह—**यदुक्तमिति** । तत्र प्रयोजनवत्त्वसाध्यस्यापि सत्त्वात् कथं व्यभिचार इत्याशंक्य प्रयोजनाभिसन्धिमत्त्वसाध्याभिप्रायेणैतदित्याह—**अनुद्दिश्येति** । **सव्यभिचारमिति** । हासगानादिस्थले श्रोतॄणां स्वस्य वा सुखदुःखाभावप्रयोजनसत्त्वेऽपि न तत्कर्तुस्तदभिसन्धिरस्ति । दुःखोद्रेके रोदनवत् सुखोद्रेके हासगानादेरपि स्वत एव प्रवृत्तेरिति भावः । P. 481-3

बह्वायाससाध्यत्वं हेतुविशेषणमित्यभिप्रेत्य शङ्कते—**नन्विति** । यस्य कस्यचित् बह्वायाससाध्यत्वं यस्य कस्यचित् प्रयोजनाभिसन्धिपूर्वकत्वे अप्रयोजकम्, तस्य बह्वायाससाध्यत्वं तु प्रकृते असिद्धम्, सर्वस्या अपि सृष्टेर्निश्वसितमात्रत्वश्रवणात् । अथ महासत्वानामप्यसाध्यतया, बह्वायाससाध्यतया वा तस्याप्यसाध्यत्वं बह्वायाससाध्यत्वं वा अनुमीयत इति मतम्, तत्रेदमुच्यत इत्याशयेनाह—**तत्राहेति** ।

असाध्यत्वशंकापरिहारयोर्दृष्टान्तार्थत्वं मनसि निधाय परिहारटीकार्थमाह—**यद्यपीति** । **शक्यत्वे निदर्शनमिति** । ततश्च प्रथमहेतोरस्मदादिमहाबलासाध्ये वानरसाध्ये पर्वतसेतुबन्धने व्यभिचार इति भावः । P. 481-6

---

१. सुषुप्तेऽपि श्वासक्रिया अस्ति । चैतन्यं च सुषुप्ते नास्ति । अतः चैतन्यस्य जाग्रतो विद्यमानस्यापि श्वासादिप्रवृत्तावनुपयोग इति शंकितुर्भावः ।

२. पूर्वं क्रियासामान्यमर्थ उक्तः । इदानीं विलासरूपक्रियाविशेषः अर्थ उच्यते इति ध्येयम् । तदर्थमेव हासगानादिक्रियायामित्युक्तम् ।

३. अत्र कल्पतरौ 'तदपि' इत्येतत् 'यद्यपि' इति, उपरि 'तत्तर्हीत्यन्वयः' इत्येतत्, 'न नहीत्यन्वयः' इति च शोधनीयम् ॥

द्वितीयहेतोर्हनुमदादिबह्वायाससाध्ये अर्जुनकृतशरसेतुबन्धे अगस्त्यकृतसमुद्रपाने
P. 481-7 च तयोरीषत्करे व्यभिचार इत्याशयेनाह—**ईषत्करत्वे निदर्शनमिति ।**

**मह्हीचकारेति[1] ।** महः पूजा सा अतिशयेनास्येति विग्रहे अर्शआदेराकृतिगणत्वादच्प्रत्यये ततश्च्विप्रत्ययः । अनेन महीपतिना आचार्यवाचस्पतिविषये यावती कृता पूजा तावती पूजा पूर्वं केनापि न कृतेत्यभूततद्भाव इति भावः । **स एवेति ।** नियतनिमित्तमनपेक्ष्य प्रवृत्त्युदय एवेत्यर्थः । **अपि चेत्यादिटीकायां** सृष्टेरपारमार्थिकत्वान्न प्रयोजनापेक्षा इत्युक्तम् । तदयुक्तम् अपारमार्थिकत्वेऽपि प्रेक्षावत्कार्यत्वेन प्रयोजनावश्यंभावादित्याशङ्क्य, भ्रान्तप्रमत्तादिसाधारण्या[ण्यवारणा]र्थमविद्या[न]धीनकार्यसृष्टेरेव प्रयोजनापेक्षत्वकल्पनात् न जगत्सृष्टौ तदपेक्षेति वक्तुं टीकेत्याशयेनाऽऽह—**यदुक्तमिति ।**

P. 482-2 प्रसङ्गात् प्रतिबिम्बेश्वरवादे सौत्रलीलाशब्दासामञ्जस्यमाह—**प्रेति विम्बगता इति । एवमिति । लीलासूत्रसम्बन्धिनी सङ्गतिः,** सामञ्जस्यं, **लीला ।** लीलामात्रमित्यर्थः । **अस्वतन्त्रत्वत इति ।** जीवेशयोः प्रतिबिम्बयोरस्वतन्त्रत्वाविशेषादित्यर्थः ।

ननु लयविक्षेपलक्षणाविद्यात्वमेव प्रयोजनानपेक्षत्वे तन्त्रं, न त्वविद्याधीनत्वमिति शङ्कते—**विभ्रमाणामिति । भ्रमकार्यस्येति ।** अविद्याकार्यस्येत्यर्थः ।

दृष्टानुरोधादविद्याधीनत्वमेव प्रयोजनानपेक्षत्वे तन्त्रम् । न चैवं प्रासादादिकार्यस्यापि मूलाविद्याकार्यत्वात् प्रयोजनापेक्षा न स्यादिति वाच्यम् । यस्य स्रष्टुः यस्मिन् कार्ये अविद्यायाः स्वातन्त्र्यं, तस्य तस्मिन्न प्रयोजनापेक्षेति नियमः। ब्रह्मणः प्रपञ्चसृष्टौ जीवानां प्रातीतिकसृष्टौ चाविद्यास्वातन्त्र्यम् । न तु शिल्पिप्रभृतीनां प्रासादादिसृष्टावित्याशयेन परिहरति—**आशंक्याहेति ।**

नन्वविद्याया एव स्वातन्त्र्येण परिणामे ब्रह्मणो जगदुपादानत्वं न
P. 482-5 स्यादिति शङ्कते—**नन्विति ।** अविद्याया अपि स्वतः सत्त्वाभावेन सद्ब्रह्मैकलोलीभावेनैव कार्यजनकत्वादस्ति ब्रह्मणोऽप्युपादानत्वमिति परिहरति—**अत**

---

१. महयांचकारेति पाठान्तरम् ।

२. अत्र कल्पतरौ 'जीवभ्रान्त्ये'ति श्लोकः केषु चित् कोशेषु नास्ति, स च भामत्यास्सूत्रविरोधप्रदर्शनद्वारा भामतीखण्डनपरः परकीयः ।

आहेति । अनुपपद्यमानार्थालम्बनेनापि तात्पर्यविषयीभूतार्थप्रतिपादनसम्भवान्न सृष्टावनुपपत्तिर्दोषायेति वक्तुमपिचेत्यादिटीका । तत्र निर्विषयत्वं तात्पर्यविषयीभूतविषयराहित्यादित्याह—वेदान्तेति । P. 482-6

॥ इति नप्रयोजनवत्त्वाधिकरणम्[1] ॥

---

## ॥ अथ वैषम्यनैर्घृण्याधिकरणम् ॥

सू०॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥

सू०॥ न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥

सू०॥ उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

य इति । विषमकार्यकारीत्यर्थः । सापेक्षस्येति । कर्मसापेक्षस्येत्यर्थः । टीकायामुच्चावचमध्यमेति । उच्चनीचमध्यमेत्यर्थः । उत्तमाधममध्यमेति यावत् । व्यभिचारमाहेति । विषमकार्यकारित्वस्य हेतोर्युक्तवादित्वायुक्तवादित्ववचनकर्तरि निग्रहानुग्रहकर्तरि च व्यभिचारमाहेत्यर्थः । न सापेक्षत्वमनीश्वरत्वे तन्त्रम् । राजादौ व्यभिचारापत्तेः । किन्तु प्रदानासामर्थ्यमित्याशयेनाह—सापेक्षत्व इति । (यदिति ।) [न हीति] निरपेक्षत्वे सति एवमकार्यकर्तृत्व- P. 482-9

---

१. 'क्रीडार्थं सृष्टिरित्यन्ये' इति माण्डूक्योपनिषदि तात्कालिकानन्दप्रयोजनलीलात्वमेव क्रीडार्थं सृष्टिरित्यन्य इत्यनेन अनभिमतं प्रदर्शितं, न तु हासगानादितुल्यप्रयोजनोद्देशरहितलीलात्वम् । इति न श्रुतिविरोधः लीलापक्षस्येति परिमलम् । परिमले गौडपादाचार्यप्रणीतकारिकायाः माण्डूक्योपनिषदिति व्यवहारः, एवं सायणादीनामपि व्यवहारः, माण्डूक्योपनिषदर्थाविष्कारकत्वादादरातिशयादौपचारिकः । मध्वादीनां तु भ्रमादुपनिषदिति व्यवहारः । गौडपादाचार्यैः 'अत्रैते श्लोका भवन्ति' इति पठित्वा उपनिषद्विवरणभूतस्वीयकारिकाणां कथनात् श्रुतिषु 'तदप्येष श्लोको भवति' इति निर्दिश्य कथितश्लोकानामिव एतेषामपि श्रुतित्वमेवेति परेषां भ्रमस्संजातः । अस्मदीयौपचारिकप्रयोगः परेषां परमभ्रमाधायकस्संजातः । गुरुचन्द्रिकायामपि माण्डूक्यकारिकाणां गौडपादाचार्यप्रणीतानां श्रुतित्वेन वैदिकप्रसिद्धत्वमुक्तम् । आनन्दगिर्याचार्यैः माण्डूक्योपनिषद्भाष्यविवरणे इत्थमुक्तम्—'आचार्यैर्माण्डूक्योपनिषदं पठित्वा तद्व्याख्यानश्लोकावतारण 'अत्रैते श्लोका भवन्ती'ति कृतम् । तदत्रेत्यनूद्य भाष्यकारो व्याकरोति—एतस्मिन्निति' इति । माण्डूक्यकारिकाविषये बहूनां विमर्शकानां भिन्नभिन्नव्यवहारा भवन्ति । तदर्थमिदमुक्तम् ।

P. 483-1 स्यैव सावद्यताप्रयोजकत्वादिति भावः । व्यवहितत्वादन्वयं दर्शयति—**वैषम्यादिति** ।

ननु विषमस्रष्टृत्वस्य शङ्कायामङ्गीकृतत्वात् कथं **विरोधादिति** परिहार इत्याशङ्कय, किं शङ्काग्रन्थे तदुक्तिरापादकविधया ? किं हेतुविधया ? इति विकल्पेन व्याचष्टे—**यदीश्वर इति** । **वैषम्यमिति** । वैषम्यमात्रमनुमीयत इत्यर्थः । ईश्वरस्य वैषम्याङ्गीकारो न युक्त इत्यत आह—**यद्येवमिति** । तथा च विषमकार्यस्रष्टाविव विषमकर्मस्रष्टावपि कर्मसापेक्षत्वादीश्वरस्य न वैषम्य-

P. 483-6 मित्याह—**ईश्वर इति** ।

किं तात्त्विकविषमकार्यकर्तृत्वं हेतुः ? किं वा विषमकार्यकर्तृत्वमात्रमिति विकल्प्य, प्रथमे असिद्धिः । अभ्युपेत्य तु व्यभिचार उक्तः । द्वितीये तु, मायाकर्तरि व्यभिचार इति कथयतीत्याह—**अपि चेति** । **आगताविति** । पुण्यपापयोरकृतयोरपि तत्फलाभ्युपगम इत्यर्थः ।

ननु **अकृताभ्युपगमप्रसङ्गश्चेति** भाष्यमकृतयोरेव पुण्यपापयोः फलाभ्युपगमे, **विधिनिषेधशास्त्रानर्थक्यमिति** सङ्कोचेन किमिति व्याख्यायते ? अकृते पुण्ये पापे श्रवणादौ वा तत्फलानां स्वर्गनरकमोक्षाणामागमे, विधिनिषेधमोक्षशास्त्राणामानर्थक्यमित्येवमेव व्याख्यातुं शक्यत्वादित्याशङ्कय, **मोक्षशास्त्रानर्थक्यस्य पूर्वभाष्येणैवोक्तत्वात्**, न तत्साधारण्येनेदं भाष्यव्याख्यानमित्याशयेनोक्तं **टीकायां—मोक्षशास्त्रस्येति** । तत्र भाष्ये कण्ठतो

P. 484-1 ऽनुक्तत्वेऽपि तात्पर्येत उक्तमित्याशयेनावतारयति—**वेदान्तेति** ।

चक्रकाश्रयप्रसक्तिरेव चित्तस्य व्याकुलतेति दर्शयन् **टीका**भिप्राय-

P. 484-6 माह—**विभ्रमेति** । **चक्रकभ्रमणमिति** द्वितीयान्तं पदम् । **टीकायां क्लिश्य-**

---

१. अत्र कल्पतरौ 'अकृते इति' इति प्रतीकधारणानन्तरं 'आगतौ दोषमाह—तथा चेति' इति पाठः । आगतौ इत्यस्य पुण्यपापे विना फलभोगाभ्यागतावित्यर्थः । इति परिमले व्याख्या । एवमेव आभोगेऽपि व्याख्यातम् । 'तदङ्गीकारे आगतौ दोषावाह' इति पाठः प्रामादिकः । आगताविस्यस्य सप्तम्यन्तस्य द्वितीयाद्विवचनान्तत्वभ्रमेण दोषाविति पाठं कल्पितवान् लेखकः । तदनुसारेण 'तदङ्गीकारे' इति आगताविति स्थाने कोशान्तरस्थमपि पदं एकत्रैव लिलेख । अहो लेखकचातुरी ॥

२. अत्र टीकायां 'न च रागद्वेषावन्तरेण कर्म' इति वाक्यात्पूर्वं 'न च कर्मान्तरेण शरीरम्' इति वाक्यं त्रुटितमिति ज्ञेयम् । कल्पतरौ 'अस्तु स तु संसारानादितामन्तरेण न स्यात्' इति शुद्धः पाठो ज्ञेयः ॥

न्तीति। क्लेशयन्तीत्यर्थः। टीकोदाहृतं पुरोडाशकपालेनेत्यादिवाक्यं व्याकुर्वन् कपालस्य भविष्यत्सम्बन्धमुपपादयति—अवघातेति। कपाले उपवपतीति P. 485-1 द्वारभूतार्थकीर्तनम्। कपालेन तुषान् कृष्णाजिनस्य अधस्तादुपवपता कपालेऽपि उपवापादिति ध्येयम्। पुरोडाशसम्बन्धकीर्तनमिति। पुरोडाशश्रपणोद्देशेनोपात्तत्वलक्षणसम्बन्धेत्यर्थः।

॥ इति वैषम्यनैर्घृण्याधिकरणम् ॥

---

## ॥ अथ सर्वधर्मोपपत्त्यधिकरणम् ॥

### सू०॥ सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

सूत्रस्य केवलोपसंहारार्थत्वे आनर्थक्यापत्तेः, तन्मुखेन न्यायसूचकत्वमभिप्रेत्य विषयादिकं दर्शयति—यन्निर्गुणमिति। रूपादिरहितमित्यर्थः। अनु- P. 485-3 पादानत्वेनाव्याप्तमित्यनुषङ्गः। अत्र किमपरिणामित्वं साध्यं? विवर्तानधिष्ठानत्वं वा? आद्ये सिद्धसाधनमित्यभिप्रेत्य, द्वितीयं व्यभिचारेण दूषयति—विवर्तेति। जात्यादाविति। घटे नष्टे तद्गतं रूपादिकमिव घटत्वमपि नश्य- P. 486-1 तीति न्यायसहकृतेन प्रत्यक्षेण घटत्वमनित्यमिति तदारोपोपलब्धेरित्यर्थः।

क्वचिन्नित्यत्वारोपेति पाठः। स तु स्वमतानुरोधेन नेयः। तदा जन्यभावस्यैव नाश इति न्यायानुगृहीतेन प्रत्यक्षेण घटत्वं नित्यमित्यारोपोपलब्धेरिति तदर्थः। आदिपदेन रात्रौ नीलोत्पलरूपे रक्तिमत्वारोपो, विभागादौ संयोगाभावत्वाद्यारोपश्च गृह्यते।

---

१. अत्र कल्पतरौ 'भवतु विषमस्रष्टृत्वं पक्षपातेनाव्याप्तं अनेकान्तं साध्येन तु. सगुणत्वे उपादानत्वम्' इति पाठो दृश्यते। तदशुद्धम्। शास्त्रदर्पणे कल्पतरुकारकृते 'भवतु विषमस्रष्टृत्वं पक्षपातेऽनेकान्तम्, न त्वनुपादानत्वे अगुणत्वमिति' इति दृश्यते। तदनुसृत्य शोधनीयम्। इत्थं शोधयितुं शक्यते—'भवतु विषमस्रष्टृत्वं पक्षपातेनाव्याप्तमनेकान्तं साध्येन। न तु अनुपादानत्वेनागुणत्वम्' इति। अत एव आभोगेऽपि उपादानत्वेनेत्येतत् अनुपादानत्वेनेति शोधितम्। अस्यैव व्यतिरेकव्याप्तिमवलम्ब्य 'नतु सगुणत्वेन उपादानत्वम्'। इत्यपि शोधयितुं शक्यते। 'भवतु विषमस्रष्टृत्वं पक्षपाते अव्याप्तमनेकान्तं साध्ये, न तु सगुणत्वे उपादानत्वम्' इत्यपि शोधयितुमुचितम्। इति बोध्यम्।

P. 486-1 भाष्यकारेणेति । ब्रह्मणो जगत्कारणत्वे अपेक्षितानां सर्वेषामपि धर्माणामुपपत्तेरेव तन्नानुपपन्नमित्येवं सूत्रार्थे, अनपेक्षितरूपादिधर्माभावेऽपि न दोष इत्यमुमंशं सिद्धं कृत्वा, अपेक्षितसर्वधर्मोपपत्त्यंशं व्याकुर्वतेत्यर्थः । लोके कर्तृधर्मत्वेन प्रसिद्धज्ञानाश्रयत्वोपपादने तस्य सर्वविषयकत्वमर्थादेव प्रकृते सिध्यतीति तदभिप्रायेण भाष्ये सर्वज्ञमित्यनेन सर्वविषयकत्वं ज्ञानस्योक्तम् । एवं लोके कार्यसूक्ष्मरूपात्मकशक्तिमत एवोपादानत्वं दृष्टमिति तदनुसारेण शक्तिमत्त्वे प्रदर्शनीये अर्थसिद्धं शक्तेः सर्वविषयकत्वं सर्वशक्तीत्यनेन दर्शितम् ।

एवमुपादानस्य विकारमन्तरा कथं कार्यात्मत्वम् ? कथमसहायस्य प्रपञ्चकर्तृत्वम् ? कथं वा क्षणमात्रेण वियदादीनामुत्पत्तिः ? एकरूपात् कारणाद्विचित्रकार्योत्पत्तिर्वा कथमित्येवमाद्यनुपपत्तिनिरासाय लोकरीतिमनुसृत्य मायावित्वे वक्तव्ये तस्यार्थसिद्धं महत्त्वमपि महामायमित्यनेन दर्शितम् । ततश्च सर्वानुपपत्तिपरिहारात् ब्रह्म निमित्तमुपादानं चेति सिद्धमित्येवं भाष्यं व्याख्यातम् टीकयेत्याशयेनाऽऽह—जडप्रेरकत्वमित्यादिना । P. 486-3

अनेन चात्र भाष्ये सर्वज्ञमित्यनेन चेतनाधिष्ठितस्यैव लोके प्रवृत्तिर्दृश्यत इति कृत्वा, लोकानुसारो दर्शितः । सर्वशक्तीत्यनेन पूर्वविशेषणसहितेन ब्रह्म निमित्तमुपादानं चेत्युपपादितमिति टीका योजिता ॥

॥ इति सर्वधर्मोपपत्त्यधिकरणम् ॥

इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डभट्टमहोपाध्यायतनूभवेन
श्रीमन्नारायणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशगृह्यमाणेन
लक्ष्मीनृसिंहचरणारविन्दचञ्चरीकेण लक्ष्मीनृसिंहेन
विरचितायां कल्पवृक्षप्रदीपिकायां
आभोगाख्यायां द्वितीयाध्यायस्य
प्रथमः पादः ॥

---

॥ श्रीः ॥

# ॥ द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

सू०॥ रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

सू०॥ प्रवृत्तेश्च ॥ २ ॥

सू०॥ पयोम्बुवच्चेत्तत्रापि ॥ ३ ॥

सू०॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

सू०॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

सू०॥ अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

सू०॥ पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥

सू०॥ अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

सू०॥ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

सू०॥ विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

'तं यथा यथोपासते स तथैव भवती'ति शास्त्रमनुसरन् करिष्यमाण-प्रतिवादिनिराकरणानुगुण्येन विशिष्टेष्टदेवतानुसन्धानरूपं मङ्गलं करोति—उद्दण्डैरिति । उद्दण्डैः उच्छृङ्खलैः । पृथुतराः परिघा इव प्रांशवः तैरित्यर्थः । उपदेहाः अङ्गानि । प्रलये घनानां निबिडानां घनानां मेघानां यो ध्वनिः तद्वत् गम्भीरनादमित्यर्थः । स्वस्य प्रतिवादिप्रयुक्तभयाभावाय निर्भयब्रह्माभेद-मनुसन्धत्ते—स्वबोधेति । अबोधोऽज्ञानं तदुद्भूतजगद्भ्रमश्च स्वबोधेन गलितो यस्मिन्नित्यर्थः । P. 487-1

ननु न विलक्षणत्वादित्यादिना सांख्यादियुक्तयोऽपि पूर्वमेव निराकृता इति किमनेन पादेनेत्याशंकां निराकर्तुं स्वतन्त्रा इति विशेषणमिति तदर्थ-कथनपूर्वकं दर्शयति—विलक्षणत्वादय इत्यादिना । इत्यनेनेति । एवमर्थ-कस्वतन्त्रा इति विशेषणेनेत्यर्थः । मुचेरिति । 'मुचोऽकर्मकस्य गुणो वे'ति गुणे, 'अत्र लोपोऽभ्यासस्ये'ति लुप्ताभ्यासस्य रूपमित्यर्थः । जातमपि ज्ञानं P. 487-9

P. 487 9 निर्विचिकित्सं न सम्भवतीति तदर्थं परपक्षप्रतिक्षेप इति परिहरति—**तत्राहेति** । तन्तूनां पटैकदेशद्वारा समुच्चयेऽपि, कृत्स्नजगदुपादानत्वेन प्राप्तानां प्रधानादीनां न समुच्चय इत्याशयेन परिहरति—**अत आहेति** ।

P. 488-1 **सर्वज्ञप्रणीततयेति** टीकाभिप्रायमाह—**वेदो हीति** । तथा च स्मृत्यधिकरणोक्तवेदापौरुषेयत्वाक्षेपेणाऽत्र पूर्वपक्षोत्थितिरिति भावः । **संयोगादाविति** । 'संयुक्तो घटो' 'महान् घटो' 'नीलो घट' इत्यादिप्रतीत्या घटादीनां संयोगादिस्वरूपान्वितत्वात् तदकारणकत्वाच्च तत्र व्यभिचार इत्यर्थः ।

घटतदवयवादिगतानां संयोगादीनां भिन्नत्वान्न कस्यचिदपि तावत्स्वनुगतत्वमिति परिहरति—**संयोगादयो हीति** । कणशब्दः सूक्ष्मपरः, सांख्यमते तामसाहंकारस्यैव पञ्चतन्मात्रादिकारणत्वेन, तस्य कणशब्दवाच्याणुत्वायोगादिति ध्येयम् । **टीकायां** सामान्यव्याप्तिमुखेन जगतः सत्वरजस्तमोगुणात्मकप्रधानप्रकृतिकत्वमुक्तम् । विशेषव्याप्तिपुरस्सरेणापि भङ्ग्यन्तरेण तत्साधयितुं शक्यमिति

P. 488-5 स्वयं दर्शयति—**कुम्भोपादानत्वमिति** । वक्ररीत्या[1] सुखभेदेन प्रधानप्रकृतिकत्वानुमानमित्यर्थः ।

सुखशब्दाप्रयोगेऽपि, तद्धर्मानुकूलत्वादियोगितया घटाद्युपलब्धिरस्ति [इति] सुखाद्यात्मत्वानुगतिरित्याह—**घटविषया हीति** । **निरन्तरेति** । भावमात्रस्य त्रैगुण्यवत्त्वेनोपलम्भ इत्युक्ते वने प्रत्येकवृक्षगतत्रैगुण्यवत्त्वोपलम्भव्यतिरिक्तस्वगतत्रैगुण्यवत्त्वोपलम्भरहिते भावत्वस्य व्यभिचार इत्यर्थः । प्रधानशब्दो न गुणत्वविरोधिप्रधानत्वपर इति परिहरति—**अत आहेति** । **टीकायां**—'पुरुषार्थ एव हेतु'रिति सांख्यश्लोकार्थः प्रवृत्तिपदप्रक्षेपेण दर्शितः । तद्व्याचष्टे—**करणमिति** ।

P. 489-2 नन्वेतावता प्रधानस्य चेतनाप्रेर्यत्वे किमायातमित्यत आह—**स चेति** । **टीकायां**—**एते चेति**[2] । '**भेदानां परिमाणात् समन्वयाच्छक्तितः प्रवृत्तेश्च** ।

---

१. वक्ररीतिः ऋजुरीतिरिति रीतिद्वयं तत्वप्रदीपिकाटीकायां नयनप्रसादिन्यां—'तदेवमृजुरीत्या अप्रसिद्धविशेषणतां परिजहार, ये तु वक्ररीतिं रोचयन्ते तान् प्रति महाविद्याभिरपि साध्यप्रसिद्धिं सुलभयति' इत्युक्तम् ।

२. एतेन टीकायां 'एतेच उपरिष्टाद्व्याख्याय निराकरिष्यन्त इति' इति शुद्धः पाठस्सूच्यते ।

कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य। कारणमस्त्यव्यक्त'मिति सपाद-सांख्यश्लोकोक्तहेतवः इत्यर्थः।

सांख्यानुमाने दूषणानभिधानात् भाष्यायोग इति शङ्कते—नन्विति। P. 489-2 ननु सांख्येन साध्ये चेतनानधिष्ठितत्वस्याप्रवेशितत्वात् कथं तदनुवादेन विरुद्धत्वाभिधानमित्याशङ्क्य, यथाश्रुतसाध्ये सिद्धसाधनापत्त्या तत्परिहाराय तथा विवक्षणमुच्यत इत्याशयेनाह—अयमत्रेति। व्याप्येन व्यापकापादने, नोत्कर्षसमेत्याशयेनाऽऽह—मूर्तत्वेति।

एवंशब्दस्येति। अन्यथा 'चन्द्र इव मुख'मित्यादौ चन्द्रतुल्यं मुखमितिवत्, कृतकत्वमिव समन्वयादिसाधनं विरुद्धमित्युपमीयमान-समन्वयादिपरत्वे एवंशब्दस्य पृथक्प्रयोगोऽनुपपन्नः स्यादित्यर्थः। तथा च यथा कृतकत्वं विरुद्धम्, एवं समन्वयादि चेतनानधिष्ठितत्वविशिष्टे साध्ये विरुद्धमिति टीकायोजनेति भावः। टीकायामेवं समन्वयाद्यपि सांख्योक्तं साधनं, चेतनानधिष्ठितत्वे साध्ये विरुद्धमित्यर्थः॥

ननु विरुद्धत्वोद्भावने कथं सूत्रयोजनेत्याशंक्य, चेतनाधिष्ठितत्वमन्तरा विचित्ररचनानुपपत्तेर्न समन्वयादिभिर्हेतुभिः स्वतन्त्रं प्रधानमनुमेयम्। किन्तु चेतनाधिष्ठितमेवाचेतनं, तेन सह व्याप्तेर्दर्शनादित्येवं भङ्ग्यन्तरेणैव सूत्रे विरुद्धत्वाभिधानमिति दर्शयितुं—रचनानुपपत्तेरिति दर्शितमिति टीका। तदभिप्रायं दर्शयन्नुत्तरटीकामवतारयति—यदि सत्वादीति।

ननु सोपाधिकत्वस्य हेतुधर्मत्वात् कथं साध्यस्य सोपाधिकत्वोक्तिरित्यत-आह—यथेत्यादिना। अन्तरङ्गत्वादिरिति। आदिपदेन व्यभिचारा- P. 490-2

---

१. कल्पतरौ 'कृतकत्वं हि न मूर्तत्वव्याप्तमित्यर्थः' इति शोधनीयम्।

२. अत्र कल्पतरौ, साधनप्रयुक्ता, साधननिष्ठा। निषिद्धत्वप्रयुक्ता, निषिद्धत्वनिष्ठा। अधर्मत्वस्य, अधर्मत्वनिरूपिता। अचेतनत्वप्रयुक्ता, अचेतनत्वनिरूपिता। समारोप्यते, निरूपकतासंबन्धेन समारोप्यते। इत्यर्थो ज्ञेयः। अत्र कल्पतरौ सोपाधिकतोपपादनं हेतोः साध्यसमव्याप्तरूपोपाधिमभिप्रेत्य। न तु साध्यव्यापकत्वमात्रवद्विषमव्याप्त-रूपोपाधिमभिप्रेत्येति बोध्यम्। तत्रोपाधेः साधने स्वनिष्ठसाध्यव्याप्यत्वरूपधर्मासंजकत्व-रूपोपाधिशब्दार्थासंभवात्। उपाधौ साध्यव्याप्यत्वस्याभावात्।

३. परत्र स्वगतधर्मासंजकत्वरूपोपाधित्वं जपाकुसुमादौ, तत्सादृश्येन आर्द्रेन्धन-संयोगादौ च भवेन त्वत्रान्तरङ्गत्वे। अत्रतु ''उपाधिर्ना धर्मचिन्ता'' ''उपाधिश्च

भावादिकं गृह्यते ॥ एवञ्च श्लोके प्रयोजकपदं प्रयोजकत्वावच्छेदकपरम् । 'अस्मिन् सत्यमुना भाव्यमिति शक्त्या निरूप्यते' इत्युत्तरार्धेन प्रतिपादनादिति भावः ।

किमन्तरङ्गत्वस्य व्यापकताप्रयोजकत्वं तद्व्यतिरेकप्रयोजकव्यतिरेकप्रति-
P. 490-3 योगित्वेन? किं वा तज्ज्ञानजनकज्ञानविषयत्वेन? नाद्य इत्याह—**नान्तरङ्गत्वेति**। वह्निसंयोगस्य नानात्मकत्वादेकात्मकमहानसादिस्वरूपापेक्षया बहिरङ्गत्वमित्याशयेनाह—**बहिरङ्गस्यापीति**। द्वितीयं शङ्कते—**नन्विति**।

किमनौपाधिकत्वांशे तद्धेतुः? किं वा सम्बन्धांशे? नाद्यः आवश्यकोपाधिनिरासेनैव तत्सिद्धेरिति परिहरति—**तत्राहेति**। उपाधिस्वरूपं दर्शयन् तन्निरासप्रकारं दर्शयति—**साधनाव्यापक** इत्यादिना। **पक्षेतरत्वस्येति**। पर्वतेतरत्वादेरित्यर्थः। किं पक्षेतरत्वस्य साध्यव्यापकत्वनिश्चये पक्षे तद्व्यतिरेकेण साध्यव्यतिरेकनिश्चयः स्यादिति ब्रवीषि? किं वा वस्तुतो लक्षणसत्वात् तत्रातिव्याप्तिरिति? नाद्य इत्याह—**यदि हीति**।

ननु व्यतिरेकव्याप्त्यनवधारणेऽपि अन्वयसहचारमात्रेणैव साध्यव्यापकत्वं
P 490-11 गृह्यतामित्यत आह—**इतरथेति**। तर्हि पक्षेतरत्वाभाववति क्वचित् साध्यसत्त्वे सम्भाविते सति तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वलक्षणं तद्व्यापकत्वं दुर्ग्रहमित्यर्थः। तर्हि व्यतिरेकव्याप्त्यवधारणेनैव साध्यव्यापकत्वं निश्चीयतामित्यत आह—

---

पुमानयम्" इत्यादाविव अन्यदेवोपाधित्वं निर्वचनीयमिति परिमले। यद्यपि अचेतनत्वरूपं साध्यान्तरमुपाधिर्वक्तुं शक्यते, तत्र उपाधिलक्षणमपि स्वधर्मासंजकत्वं भवति। तथापि अन्तरङ्गत्वादेव अचेतनत्वमुपाधिरुच्यत इति तस्योपाधित्वप्रयोजकमन्तरङ्गत्वमेव उपाधिरिति वक्तव्यम्। तत्र च स्वधर्मासंजकत्वं नास्तीति अन्यदेव प्रवृत्तिनिमित्तं किंचिदनुमानदूषणोपाधावस्तु इति परिमले उक्तमिति अवधेयम्॥

१. अत्र कल्पतरौ 'नान्तरङ्गत्वबहिरङ्गत्वकृते व्यापकत्वाव्यापकत्वे। किं तु अव्यभिचारव्यभिचारकृते' इति पाठश्शोधनीयः।

२. अत्र कल्पतरौ 'साध्यव्यापकत्वे सति साधनाव्यापक उपाधिः' इति शोधनीयम्। तदनुसारेण आभोगेऽपि 'साध्यव्यापकत्वे सतीत्यादिना' इति शोधनीयम्।

३. अत्र कल्पतरौ 'तत्र साध्यमिति' इत्यशुद्धम्। 'तत्र साध्यं नास्तीति' इति शोधनीयम्।

४. इदं च अन्यथा पक्षेतरत्वं इत्यत्र इतरथेति पाठाभिप्रायेण।

**न चेति**। द्वितीयं दूषयति—**एवञ्चेति**। साधने साध्यव्याप्यत्वनिर्णायकैरनु- P. 490 13
कूलतर्कैः शङ्कितोपाध्युद्धारप्रकारमेव दर्शयति—**शङ्क्यमानश्चेति**। व्यापकत्वं
व्याप्तिनिरूपकत्वमिति मनसि निधाय शङ्कते—**नन्विति**।

**नवीनपक्षे नवीनतरैर्दूषणमुक्तम्**। तदाह—**नवीनतरास्त्विति**।
साध्यत्वं हि साधनीयत्वम्। तच्च यत्र पक्षादन्यत्र साध्यव्यापकत्वाक्रान्त-
मुपाधिस्वरूपं गृह्यते, तत्र न सम्भवति, तत्र वह्न्यादेः सिद्धत्वेन साध्यत्वायोगात्।
अतोऽन्यत्र साधयितुं सम्भाव्यमानत्वं तदिति वक्तव्यम्। सम्भावना च न
साधनवन्निष्ठात्यन्ताभावाप्रतियोगित्वज्ञानमात्रेण, व्याप्तिनिश्चयं विना यथोक्तज्ञान-
मात्रेण कस्याप्यनुमानप्रवृत्तेरदर्शनात्। अथ व्याप्तिनिरूपकत्वनिश्चयात्तर्हि
तदवस्थं चक्रकमिति चक्रकं परिहर्तुं प्रवृत्तेन चक्रक एव पतितमिति। प्रभा-
तात्पूर्वमेव घट्टकुटीमतिक्रम्य गन्तुं प्रवृत्तस्य भारवाहिन आयग्रहणार्थायां घट्ट-
कुट्यामेव प्रभातं यथेदमापतितमित्यर्थः।

तर्ह्यस्य कः परिहार इत्याशङ्क्य दुर्निरूपत्वमस्मदनुकूलमेवेत्याह—
**अस्माकन्त्विति**। नन्वेमप्यन्तरङ्गत्वज्ञानमुपाधिनिराससहकृतं सम्बन्धांशनिश्चये P 490-21
कारणमस्त्विति द्वितीयं शङ्कते—**अस्त्विति**। सत्यप्यन्तरङ्गत्वे स्वतन्त्रान्वय-
व्यतिरेकाभावे व्याप्तिनिश्चयादर्शनात् तावेव तत्र कारणमित्याशयमाह—
**साध्येति**। **एतत्पर्वतेतरत्वादेरिति**। वह्निगतस्येति शेषः। तथा च धूमेन P. 491-3
वह्न्यनुमाने पर्वतेतरवह्नेरेवानुमानं स्यात्। वह्नौ सति धूमस्तदभावे तदभाव इत्य-
न्वयव्यतिरेकयोस्तत्रैव स्फुटत्वादिति भावः।

---

१. अत्र कल्पतरौ—'शङ्क्यमानश्च साध्यव्यापकः साधनाव्यापकश्च वाच्यः।
तत्र साध्यव्यापकत्वं स्यात्' इत्यत्र 'तत्र साध्यव्यापकत्वे साधनव्यापकत्वं स्यात्' इति शोध-
नीयम्। यद्युपाधेः साध्यव्यापकत्वं स्यात् तदा साधनाव्यापकत्वं निरस्य तस्योपाधित्वं निर-
सनीयमित्यर्थः। तत्प्रकारश्च कल्पतरौ एव।

२. अत्र कल्पतरौ 'साधनाव्यापकत्वादिरूपे'त्येतत् 'साध्यव्यापकत्वादिरूपे'ति
शोधनीयम्।

३. सामानाधिकरण्येन वह्निगतस्य महानसनिष्ठस्येति यावत्। उपरि 'पर्वते-
तरवह्ने' रित्यत्रापि सामानाधिकरण्येन पर्वतेतरत्वविशिष्टवह्नेः पर्वते अनुमानं स्यादित्यर्थः।
अन्यथा पर्वतेतरत्वस्य वह्नौ सर्वदा सत्त्वात् तादृशवह्नेरनुमाने 'तत्र बाधान्न तथे'ति बाधोक्ति-
रसङ्गता स्यात्।

P. 491-3 तत्र बौधान्न तथा, प्रकृते तु न किञ्चिदपि बाधकमिति परिहरति—अत आहेति। बाह्यत्वान्तरत्वाभ्यां भेदमभिधाय स्वरूपतोऽपि भेदं दर्शयतीत्याह—चन्दनादीति। अनुकूलवेदनीयादिस्वरूपव्यभिचारादित्यर्थः। पुंलिङ्गनिर्वाहार्थमाह—सुखयतीति। सुखवन्तं करोतीत्यर्थः। नैतु सुखं करोतीति। सांख्यैर्भावानां सुखरूपत्वाभ्युपगमेन सुखजनकत्वनिषेधे अनुक्तोपालम्भप्रसङ्गात्, टीकाविरोधापत्तेश्च। सुखवन्तं करोतीति विग्रहे तु, 'तत्करोती'ति इमनिचि 'विन्यतोर्लुगि'ति-लुकि सुखयतीति रूपम्। णिजन्तादेरचि सुख इति रूपञ्च सिध्यति। चन्दनादिकं यदि सुखस्वरूपं स्यात्, तदा हेमन्तेऽपि स्वसंसृष्टं पुरुषमनुकूलवेदनीयस्वरूपयुक्तं कुर्यादित्यापादनसम्भवान्नार्थानुपपत्तिरिति द्रष्टव्यम्।

प्रधानावस्थापुरस्कारे तस्या एकत्वात् संसर्गपूर्वकत्वसाध्यस्य परमाणुसंसर्गपूर्वकत्वेन भवेदर्थान्तरतेत्यतस्सत्वादिरूपपुरस्कार इत्याह—प्रधान इति। (P. 491-5) परिमितत्वं परिच्छिन्नत्वं, तत्किं योजनादिपरिमाणयोगित्वं? किं वा तादात्म्येन सर्वव्याप्तिराहित्यम्? अथवा कृत्स्नसंसर्गराहित्यमिति विकल्पयति—परिमितत्वमिति। स्वसत्तामतिक्रम्येति। स्वतादात्म्यमतिक्रम्य वर्तमानेन (P. 492-2) वस्तुना अतादात्म्यैमित्यर्थः। कात्स्न्येन तादात्म्याभाव इति यावत्। द्वितीयमाशङ्कत इति। द्वितीयमुत्थापयतीत्यर्थः।

नतु नभसि गन्धरसाद्यव्यापनेन लक्षणानुगतिः किमिति नोक्तेत्यत—आह—गन्धादीति। इतिशब्दः शङ्काभिप्रायवर्णनसमाप्तिद्योतकः। परिहरतीति। निराकरोतीत्यर्थः। परस्परशब्दस्य सत्वादिपरत्वे, चितिशक्ता- (P. 492-5)

---

१. परिमले तु लाघवसहकृततया वह्निमात्रनिरूपितव्याप्तिग्राहकप्रमाणविरोधात् न धूमेन पर्वतेतरत्वविशिष्टवह्नेरनुमानमित्युक्तम्।

२. परिमलोक्तनिरासोऽयम्।

३. अतादात्म्यमिति शोधनाभावे तादात्म्यमित्येवोक्तौ गगने लक्षणानुगतिप्रदर्शकोपरितनकल्पतरुवाक्ये 'गन्धाद्यव्याप्तिस्तस्य प्रसिद्धैवेति' इत्यत्र गगने लक्षणानुगतिरुक्ता बाधिता भवेत्। स्वतादात्म्यमतिक्रम्य वर्तमानेन गन्धादिना तादात्म्यस्य गगने अभावादिति बोध्यम्।

त्विति अनन्वितं स्यादित्यत आह—**सत्त्वादीनामिति**। चितिशक्त्येत्यस्य विवरण- P. 492-5
**मात्मनेति**।

सांख्यश्लोके 'कारणकार्यविभागादविभागाद्वैश्वरूप्यस्ये'त्यनेन वैश्व-रूप्यस्य, विश्वरूपस्य जगतः सर्गकाले कारणे तदभिन्नकार्यात्मनैव विभागात्, प्रलयकाले च कारणात्मनैवाविभागात् तिरोभावादित्यनेन, कार्यकारणभावोऽप्य-चेतनोपादानकत्वे हेतुरुक्तः। सोऽपि विरुद्धत्वेन दूष्यते भाष्यकृतेत्याह—**टीकायां—तथा कार्येति**[2]।

भेदशब्दसूचितं भेदं प्रकटयति—**कार्यगतेति**। **अपि त्वित्यस्य** वैषम्यमित्यनेनान्वये **प्रवृत्तेश्चेति** सूत्रविरोधः। वैषम्यस्य प्रवृत्तित्वाभावादित्यत आह—**अपि त्वित्यस्येति**। तच्छब्दबललब्धं यच्छब्दमादाय **या प्रवृत्ति-रित्युक्तं**, तर्हि **साम्येत्यादिटीकानन्वय** इत्यत आह—**प्रवृत्तेरिति**। वक्रो-क्त्या **विरुद्धत्वाभिधानमुपपादयति—चेतनानधिष्ठितेति**। स्वाभिमतसाध्य- P. 493-1
साधकत्वाभिधानेन फलतः पराभिमतसाध्यबाधकत्वोक्तिर्वक्रोक्तिरित्यर्थः। अस-म्भावनानिरासार्थमस्ति लोकानुसारापेक्षेत्याह—**उपनिषदर्थेति**। दर्शनानुरोधेन चेतनहेतुकत्वे प्रवृत्तेरङ्गीकृते, तत एव दर्शनादेव, आविद्यकद्वितीयदर्शनादेव, परमार्थतोऽद्वितीयस्यापि कारणत्वमुपपद्यत इति समाधास्यामीति **टीकार्थ** इत्याह—**अविद्येति**।

**सत्यमेतदिति भाष्यानुवादः**। तत्र **एतच्छब्दार्थकथनार्थं न केव-लस्येति** वाक्यमित्याशयेन **टीकार्थमाह—न केवलस्येति**। सत्यमित्यनेन सूचितपराभिमतासिद्धिप्रकटनेन **तद्भाष्यशेषत्वम् तथापीत्यादिभाष्यस्येत्या-शयेनाह—अत्र चेति**। **तथापीत्यादिभाष्योक्तार्थोपमर्दकत्वाभावात् भाष्य-** P. 493-5
**गतनन्वित्यादिशङ्कानुपपत्तिमाशंक्य, चेतनसंयुक्तस्यैवाचेतनस्य प्रवृत्तिरि-**

---

१. कल्पतरौ 'सत्वादीनां चितिशक्तेरात्मनश्च परस्परं संसर्गो नास्तीत्यर्थः' इति पाठस्साधुः। 'परस्परसंसर्गस्तु' इति टीकाग्रन्थे तस्यैवार्थस्य दृष्टेः। सत्वादीनां परस्पर-संसर्गाभावः 'हन्त' इत्यादिपूर्वटीकाग्रन्थ एवोक्तो यतः।

२. अत्र टीकायां कार्यकारणविभाग इति तदविभागस्याप्युपलक्षणम्। विमतं चेतनाधिष्ठिताचेतनपूर्वकं कार्यत्वात् घटवत् इति सांख्यं प्रति सत्प्रतिपक्षानुमानं वेदान्ति-नोद्भावनीयम्। तत्र विपक्षे बाधकतर्कः रचनानुपपत्तेरिति सूत्रेणोक्तः इति रत्नप्रभा।

त्युक्त्या चेतन एव मुख्यतया प्रवृत्तिरुक्तेति मत्वा शङ्कत इति दर्शयितुं
P. 493-6 टीकायां–सांख्य आहेत्युक्तमित्याशयेनाऽऽह—इत्थमिति ।

टीकायां–गूढाभिसन्धिरिति । प्रवृत्तेः चेतनाश्रितत्वाभावेऽपि तन्निमित्तकत्वात्तस्यैव सेति गूढाभिसन्धिः । षष्ठचन्तत्वभ्रमं वारयति—रचनाया इति । लोकायतिकसंवादोऽकिञ्चित्करत्वादनर्थक इत्याशंक्य तत्कथनं
P. 494-3 सांख्योपहासार्थं इत्याह—लोकायतिकोऽपीति । दृष्टान्तासिद्धिमिति । रथादिदृष्टान्तेऽपि चेतनाधीनप्रवृत्तिकत्वाभावादिति भावः । तदेव दर्शयति—रथादीति । अचेतनो देह एव प्रवर्तको न तु चेतन इत्यर्थः ।

तर्हि स्वयं चेतन इति कथं टीकेत्यत आह—स त्विति । एवञ्च कूटस्थनित्यश्चेतन इति टीकायां चेतनशब्दः साक्षाच्चेतनपर इत्याशयेनाऽऽह—साक्षादिति । तत्वत इत्यर्थः । सांख्येनाप्यात्मनोऽसङ्गत्वाभ्युपगमादाह—तवापीत्यर्थ इति ।

शब्दादिष्विति । पञ्चानां बुद्धीन्द्रियाणां शब्दादिपञ्चविषयकमालोचनमात्रं संमुग्धमात्रविषयकं ज्ञानं[1] वृत्तिरित्यर्थः । अध्यवसायस्य तन्मते बुद्धिधर्मत्वाभ्युपगमात् न चक्षुरादिवृत्तित्वमिति द्रष्टव्यम् ।

द्वितीयं वस्तु किं सर्वथैव नास्तीति ब्रवीषि ? किं वा परमार्थतः ? इति विकल्प्य प्रथमं भाष्याक्षरार्थकथनेन निराकृत्य, द्वितीयं तत्तात्पर्यार्थकथनेन निराकरोति–टीकायां–एतदुक्तमित्यादिना । तत्र—भवितव्यता भवितव्यस्वरूमित्यर्थः । शास्त्रञ्चेति भाष्यं व्याख्यातुं न चासाध्यमिति
P. 495-1 टीका । तदभिप्रायमाह—यदि पयोऽम्बुनोरिति । टीकायां–शङ्कानिराकरणार्थ इति । शङ्कानिराकरणभाष्ययोरर्थ इत्यर्थः ।

'निमित्तमप्रयोजक'मिति योगसूत्रं व्याचष्टे—निमित्तमिति । महदादयः प्रकृतिविकृतिरूपाः सप्त प्रकृतिशब्देन निर्दिष्टाः, तासाञ्चेत्यर्थः । पिप्लावयिषुः प्लावयितुमिच्छुः । ननु प्रतिबन्धनिवृत्तिकादाचित्कत्वेनापि कार्यकादाचित्कत्वमुपपद्यत इति शङ्कते—तर्हीति । प्रतिबन्धनिवृत्तावपि धर्माधर्म-
P. 495-7 व्यतिरिक्तस्य कस्यचिदनपेक्षणात् सापि सर्वदा स्यादित्याशयमाह—सदातना-

---

१. वस्तुस्वरूपमात्रगोचरज्ञानमित्यर्थः ।

दिति। प्राणिकर्मपरिपाकेति। प्राणिकर्मणां परिपाको विपाको जात्यायुर्भोगरूपः। तस्य वासना संस्कारः तदभिज्ञस्येत्यर्थः। P. 495-7

न च साङ्ख्यमतेऽपि परिपाकापेक्षणान्न सर्वदा प्रतिबन्धनिवृत्तिरिति वाच्यम्। तस्यापि सदातनत्वापत्तेः। अस्मन्मते तु परिपाकस्य मायिकतया कादाचित्कं तं कालविशेषे निश्चित्य परमेश्वरः सृजतीति न दोष इति भावः। ननु ईश्वरस्य प्राणिकर्मपरिपाकमपेक्ष्यैव स्रष्टृत्वात् कथं यदृच्छयेत्यादिटीकेत्याशङ्क्य नियतनिमित्तानपेक्षत्वमात्रेण यादृच्छिकत्वाद्युक्तिरित्याशयेनाह—यथास्मदादेरिति।

टीकायां—धेनूपयुक्तमिति। धेनुभक्षितमित्यर्थः। द्वितीयं निराकरोति—टीकायां—बुद्धिपूर्वकारी त्विति। भाष्यानुरोधेन सूत्रं द्वेधा योजयति—टीकायां—पुरुषार्थेत्यादिना। अवास्तवस्य न निषेध इति। साङ्ख्यैः P. 496-3 'तस्मान्न बध्यतेऽद्धा न मुच्यते' इत्यादिना पुरुषस्य भोगपरिणामित्वं निषिध्य बुद्धेस्तत्परिणामित्वसमर्थनेऽपि, विवेकाग्रहात् बुद्ध्यैक्यमिवापन्नस्य बुद्धिच्छायापत्त्या तद्दर्शनरूपो वास्तव एव भोगोऽभ्युपगतः। तथा चोक्तम्—'पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च' इति। स च निर्विकारस्य न सम्भवतीत्यर्थः।

क्रमेणेति। उभयोद्देशेन प्रवृत्तस्य तदुभयनिवृत्तिं विना चरितार्थत्वायोगादिति भावः। उभयोद्देश्यकत्वमसिद्धमिति परिहरति—इत्याशङ्क्याहेति। P. 497-2 भोगोद्देशेन प्रवृत्तावपि, भोगे समाप्ते मोक्षः सिध्येदिति कथमनिर्मोक्षप्रसङ्ग इति शङ्कां निराकर्तुं—भोगार्थन्त्विति टीका। तद्व्याचष्टे—किं निश्शेषमिति। अन्त्यकल्पमादाय कृतभोगमपीति शङ्का। तदभिप्रायमाह—यद्यपीति।

भोगस्यावश्यकत्वं किमपवर्गजननाय प्रवृत्त्यनुपपत्तेरिति? किं वा प्रधानपुरुषशक्त्यवैयर्थ्याय? तत्राद्यं निराकर्तुमथेत्यादिटीका। तदभिप्रायमाह—अपवर्गः किमिति। द्वितीयेऽपि, किं विवेकख्यातेरपवर्गसाधनतया अपवर्गत्वं? किं वा स्वरूपेणैव? नाद्यः। विवेकख्यातिसाध्यस्य कस्यचिदभावादित्यभिप्रेत्य, द्वितीयं निराकरोतीत्याशयेनाह—न द्वितीय इत्याहेति। P 497-7

P. 497-8 द्वितीयमुत्थापयति—**टीकायां—शङ्कत इति**। **भाष्यपाठो दृश्यत इति**। प्रायेणेति शेषः। तदानीमपि न विरोध इति भावः। **निबन्धनकारः** टीकाकारः। **अर्थवत्त्वाय पुरुषं प्रति** दृश्यत्वायेत्यर्थः। **एकपदशब्दः** कालकलायां लाक्षणिक इत्याह—**एकपदेति**। **टीकायां निर्मोक्षो** मोक्षः। **शक्त्यर्थवत्त्वस्येति** टीकापदप्रकृत्यर्थमाह—**शक्त्यर्थवत्त्वमिति**। पुरुषार्थमपेP. 498-2 क्ष्यैव गुणानां प्रवृत्तेर्भाष्यायोगमाशङ्क्याह—**भाष्य इति**। साम्यावस्थायां प्रासव्यायामप्यस्ति परस्परापेक्षा। अन्यथा साम्यानुपपत्तेरित्यत आह—**गुणेति**।

कार्यस्य कर्तृजन्यत्वनियमाभावान्न क्षोभयितुरभावेऽपि वैषम्यहानिरिति शङ्कते—**नन्विति**[2]। साम्यसंस्कारेण बाधितत्वात् वैषम्यसंस्कारोऽकिञ्चित्कर इति परिहरति— **अत आहेति**[3]। ननु सृष्टिप्रलयकालयोः समत्वात् कथं साम्यपरिणामस्य चिरकालत्वेन तत्संस्कारस्य प्राबल्यमित्यत आह—**द्वयोरिति**। **प्रत्ययशब्देन** निमित्तमुच्यत इत्याह—**कार्यं जनयितुमिति**।

**अनेकेति**। तत्तद्गोलकावच्छेदकभेदेन **रूपादिग्रहणसमर्थमित्यर्थः**। सर्वस्यापि धातोः सकर्मकत्वमिति नियमाभावात् तपिधातुरप्यकर्मकोऽस्त्विति P. 499-1 शङ्कते—**नन्विति**। **अस्तीत्यत्रेति**। कर्माभाव इत्यर्थः। येषां धातूनां क्रियाफलं कर्तृगामि न भवति तेषामस्ति सकर्मकत्वनियम इति परिहरति—**तत्राहेति**।

**तथा सतीति**। यद्यप्येकफलावच्छिन्नव्यापारनिचयस्यैव धात्वर्थतया अधोदेशसंयोगफलकव्यापारनिचय एव पततेरर्थः। तथा च विभागो न फलमधोदेशसंयोगश्च न वृक्षनिष्ठ इति नातिव्याप्तिः। तथापि 'वृक्षाद्वियुज्यते पर्ण'मित्यादिप्रयोगे वृक्षेऽतिव्याप्तिरिति **ग्रन्थार्थः**।

**पतनक्रियेत्यत्रापि** पतनहेतुविश्लेषक्रियेत्यर्थः। अत एव पतनक्रियावस्थाकालीनविभागभाज इत्युक्तम्। द्वितीयावाच्यश्च कर्मत्वं, साध्यत्वमात्रं,

---

१. कल्पतरौ 'निबन्धे तु' इत्येतत् 'निबन्धनकारः' इति शोधनीयम्।

२. कल्पतरौ मुद्रितपुस्तके 'पुनरवैषम्यहेतुरस्तु' इत्यपपाठः। 'पुनरपि वैषम्ये'ति पाठो युक्तः।

३. तत्राहेति कल्पतरुमुद्रितपाठः।

लाघवादिति तद्व्यापकमेवैतदिति भावः। 'आत्मानं विजानाती'ति प्रयोगे, अन्तः-करणोपहितस्य कर्तृत्वं मायोपाधिकस्य वृत्त्युपाधिकस्य वा कर्मत्वमिति न दोष इत्याह—**सोपाधीति**। P. 499-5

**कर्मत्वोपचारादिति**। 'लुनाति केदारम्' इति प्रयोगे द्विधा भावने वर्तमानस्य धातो 'र्लूयते केदारः स्वयमेवे'ति कर्मकर्तृप्रयोगे 'द्विधा भवने वर्तत' इत्यादिकैयटग्रन्थाद्यनुरोधेन 'पच्यते फल'मित्यत्रापि परिणतिमात्रवाची पचिधा-तुरिति तत्र फलस्य कर्तृत्वमेव मुख्यम्। कर्मकार्ययगात्मनेपदादियोगितया कर्मत्वमौपचारिकमित्यर्थः। अत्र साक्षित्वेन **पाणिनिसूत्रांशमुदाहरति—पाणिनिरिति**। सादृश्यार्थकेन वतिना मुख्यकर्मत्वाभावः स्पष्टीकृत इत्यर्थः। **नत्विति**। अपादाने वृक्षादावतिप्रसङ्गादिति भावः।

व्यापके **परसमवेतेति** विशेषणं व्यर्थमिति शङ्कते—**नन्विति**। ताव- P. 500-1 न्मात्रस्य कर्मत्वव्यापकत्वसंभवेऽपि प्रकृते कर्मत्वं न स्यादित्यतस्तद्विशेषणमित्या-शयेन परिहरति—**तत्राहेति**। ततश्च कर्मत्वव्यतिरेकप्रयोजकव्यतिरेकप्रतियो-गितया परत्वविशेषणमावश्यकमित्याशयेनाह—**स्वसमवेतेति**।

**स्वभावादपि भावो वियुज्यमानो दृश्यत इति शङ्कते–ननु यथेति**। जलधेर्वीचीतरङ्गादिभिर्न विमोक्षः। तेषां तिरोभावमात्रेण तद्विमुक्तत्वभ्रम इति परिहरति–**तत्राहेति**। **भाष्योक्तमिति**। **उभावप्यर्थानर्थावनर्थ एवेति** तापकस्स उच्यत इति भाष्योक्तमित्यर्थः। **टीकायां–अभेदे चेति**। **यद्य-र्थिनः स्वत इत्यादिभाष्येणेत्यर्थः**। **अविवेकदर्शनेति टीकायां**–न विद्यते विवेको ययोरिति विग्रहमभिप्रेत्य व्याचष्टे—**अविविक्तयोरिति**।

**टीकायां-तत्संयोगेति। तयोर्दर्शनादर्शनशक्त्योः यस्संयोगस्तस्य हेतुरविद्या तद्विवर्जनादित्यर्थः। न साक्षादिति। अपिशब्दस्य** सम्भा-वनामात्रपरत्वादिति भावः।

**अविवेको** विवेकाग्रहः। **गुणस्वरूपावधारणं, भोक्तृस्वरूपावधारणं च** विदर्शयन् तयोर्बुद्धिधर्मत्वे हेतुमाह—**अनुकूलेति**। मोक्षस्यैवोपपाद्यत्वात् भोगनिरूपणं प्रकृतासङ्गतमित्यत आह—**मोक्षेति**। **अत एवेति**। अन्यथा P. 500-10 बध्यत इत्यपि ब्रूयादिति भावः।

P. 501-1 **उपात्तमिति** । आद्यकल्प निराकरणार्थमुपात्तमित्यर्थः । **परोक्तदोषानुवाद एवेति** । नच तप्यतापकयोः परस्परं विषयविषयिभावाभावोक्त्या इष्टप्रसङ्गता सूचितैवेति कथं न दूषणाभिधानमिति वाच्यम् । तप्यतापकभावस्य लोकप्रसिद्धत्वेन तदभावोक्तेरेवायोगात् । अध्याहारे तु तस्य भ्रान्तिकल्पितत्वमेवास्मदभिमतमिति सूचनेन परमार्थतस्तदभावस्सुवच इति भावः । अत एव शङ्कते—**यदि भ्रान्तत्वमिति** ।

**भेदाश्रयमित्यस्य** वास्तवभेदाश्रयमित्यर्थकत्वात् [1]**सांख्योऽपीत्यपि**-**शब्दः** सिद्धान्तिसमुच्चयार्थो न सम्भवतीत्यत आह—**ब्रुवाणोऽपीत्यन्वय इति** । भोगस्य बुद्धिधर्मत्वाभ्युपगमात् सत्वमात्रस्य कथं तप्यत्वमित्यत आह—**सत्वमिति** । [क्षीरवत्] क्षीरनीरयोरिवेत्यर्थः ।

**अविभागो** न संश्लेषः । किन्तु विवेकाग्रहः । तस्यैवाविद्यात्वादित्याशयेनाऽऽह—**अविवेक इति** । **अनिर्मोक्षप्रसङ्ग इति** पदानुषङ्गेण तस्य भाष्यस्य व्याख्येत्यन्वयः । अदर्शनशब्दस्य तमसि वृत्तिं दर्शयति—**न दृश्यत इति** ।

P. 501 5

**अत्र भाष्ये सांख्यपक्षे अनिर्मोक्षप्रसङ्ग**मुद्भिद्य[द्भाव्य]तदनन्तर**मौपनिषदस्य त्वित्यादिना** स्वपक्षे नायं दोष इति मोक्षोपपत्तिप्रकारो दर्शितः, तत्र सांख्यपक्षाद्वैषम्यं दर्शयितुं तुशब्दः । तेन सांख्यस्य नायं प्रकारोऽस्तीति दर्शितम् । तत्प्रकटनार्थं च **सांख्यस्य त्वित्यादिटीका** । तथा च [तत्र च] **भाष्यगततुशब्दसूचितस्य** सांख्यपक्षे स्वपक्षोक्तप्रकाराभावस्यैव वक्तव्यतया पुनरपि वैषम्यद्योतितुशब्दानुपपत्तिरित्याशंक्य, निपातानामनेकार्थत्वादभावार्थकोऽयं तुशब्दः । नञ एव प्रयोगे कर्तव्ये, **भाष्यगततुशब्दव्याख्यात्वप्रकटनाय** तुशब्दप्रयोग इत्याशयेनाऽऽह—**नञ्शब्दसमानार्थ इति** ।

P. 502-1

॥ इति रचनानुपपत्त्यधिकरणम् ॥

---

१. कल्पतरौ 'न च त्वयापीति भाष्यम्' इति शोधनीयम् ,

## ॥ अथ महद्दीर्घाधिकरणम् ॥

### सू०॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

**प्रधानगुणानन्वयादिति । रचनानुपपत्तेश्चेति चशब्देन** प्रधानगुण- P. 502-1 सुखदुःखमोहान्वयस्य कार्येष्वभावात् न प्रधानमुपादानमित्युक्तत्वात् तदादाय सङ्गतिरिति भावः[1]। उद्देश्यसिद्ध्यर्थत्वात् अस्ति परमतनिरासेऽप्यवान्तरतात्पर्यं शास्त्रस्येत्याह—**श्रौतेति । रीतिसाम्यकृतेति ।** युक्तिविशेषविषयस्यापि P. 503-1 शिष्टापरिग्रहसूत्रस्य युक्त्यन्तरसाधारणसामान्यरीत्यैव प्रवृत्ततया **रीतिसाम्या**देतदधिकरणयुक्तेरपि तत्सूत्रविषयत्वप्रयुक्तजामितापरिहारार्थं तत्सूत्रविषयत्वयोग्यतामङ्गीकृत्य **प्रपञ्चत्वो**क्तिरित्यर्थः ।

**एवकार इति । टीकायामित्यर्थः ।** अनेन विमतं अचेतनैकोपादानकमिति साध्यं विवक्षितमिति सूचितम् । न च चेतनोपादानकं न भवतीत्येव साध्यपर्यवसानं कुतो न भवेदिति वाच्यम् । तथात्वे द्रव्यत्वमात्रस्यैव हेतुत्वसम्भवे शेषवैयर्थ्यप्रसङ्गादिति ध्येयम् ।

परमाणुभिराहत्यैव स्थूलारम्भोऽस्त्विति शङ्कते—**नन्विति । असंयु-** P. 503-6 **क्तानामिति ।** द्व्यणुकमनारभ्य स्थूलारम्भकत्वाभावस्य साध्यस्य संयोगाभावदशायां शङ्कावादिनाऽप्यभ्युपगमात् सिद्धसाधनमिति तद्व्यावृत्त्यर्थं **संयुक्ता इति** पक्षविशेषणमित्यर्थः[2] । **बाधोऽपोदित इति ।** स्थूलारम्भकत्वरूपविशेष्यसत्त्वेऽपि द्व्यणुकानारम्भपूर्वकत्वरूपविशेषणाभावप्रयुक्तविशिष्टाभावसम्भवान्न बाध इति भावः ।

**स्वापेक्षया स्थूलेति ।** तथा च **साध्ये स्थूलपदं** स्वाधिकपरिमाण- P. 503-8 वन्मात्रपरमिति भावः । **यदीत्यादिटीकोक्तस्यैवार्थस्य घटस्यैव त्वित्यादिना** पुनः कथनं व्यर्थमित्यतो द्वयोरपि भिन्नार्थकत्वं दर्शयितुं विकल्पयति—

---

१. परिमलनिरासोऽयम् ।

२. अत्र टीकायां 'घटोपगृहीतपरमाणवः' इत्यस्य घटस्य मूलावयवभूताः परमाणव इत्यर्थः । न तु घटेन संयुक्ताः परमाणव इत्यर्थः । इति बोध्यम् ।

P. 503-9 **परमाणवः किमिति । उतारभ्येति ।** द्व्यणुकादिकमारभ्य तदनपेक्ष्यैव कुम्भमारभन्ते वेत्यर्थः ।

**त्रसरेणुवदिति ।** त्र्यणुक इवेत्यर्थः । द्व्यणुकादीनामुत्तरोत्तरकार्यद्वारा घटानारम्भकत्वे, परमाणुभिस्तेषामारम्भासम्भवेन **घटस्यैवारब्धत्वप्रसङ्गादिति** टीकार्थं दर्शयितुं, परमाणूनामवयवावयविभावानापन्ननानाकार्यारम्भकत्वायोगं दर्शयति—**यदि हीति ।** उदकालोकादीनामवयवावयविभावरहितानामेकदेशस्थत्वदर्शनात् कथं नियम इत्यत आह—**मूर्तानामिति ।** कठिनद्रव्याणामित्यर्थः ।

प्रथमकल्पोक्तदूषणे सत्येव दूषणान्तरकथनपरत्वेन **तथा सतीत्यादि**टीकामवतारयति—**यदि चेति ।** पूर्ववदेव विकल्पं मनसि निधाय दूषयति—**यत इत्यादिना ।** अथ समानदेशत्वाय द्व्यणुकादीनामवयवावयविभावोऽप्यP. 503-19 भ्युपगम्येत तत्राह—**द्व्यणुकादिप्रक्रमेणेति ।**[2]

**ननु** बहूनां परमाणूनामिव बहूनां द्व्यणुकानां स्थूलानारम्भकत्वं नेष्यते । तथा च तैराहत्य स्थूलारम्भसंभवादान्तरालिककार्यानुपलम्भप्रसङ्गः । अथ तदुपलम्भबलादेव तेषां त्र्यणुकारम्भकत्वम्, तर्हि परमाणुभिरपि तत एव त्र्यणुकाP. 504-2 रम्भोऽस्तु । ततश्च हेतोरप्रयोजकत्वमिति शङ्कते—**नन्विति । विशेषो वेति ।** द्व्यणुकैरेव त्र्यणुकमारभ्यते, न परमाणुभिरित्यत्र नियामकं वक्तव्यमित्यर्थः ।

विशेषं वक्तुमुपक्रमते—**उच्यत इति ।** द्वित्वसंख्याया आरम्भकसंख्यावधित्वं दर्शयितुं संख्याभेदानामारम्भप्रयोजकत्वं तावदाह—**अस्ति तावदिति ।**
P. 504-6 **नचैकत्वमिति ।** आरंभकसंख्यावधिरित्यर्थः । पार्थिवाप्यादिपरमाणुभ्यां कार्यानारम्भात् **सजातीयेत्युक्तम् ।** विजातीयसंयोगस्यैवारम्भकत्वमिति दर्शयितुं **संयुक्तेति ।** अनेन संयोगविशेषो दर्शितः ।

**एतेन**—द्वयोरपि परमाण्वोः कदाचित्संयोगस्य अवर्जनीयतया समवाय्यसमवायिकारणसमवधाने द्व्यणुकोत्पत्तिरिति सुलभेनैव मार्गेण द्व्यणुकसाधनसम्भवाद्द्वित्वस्यारम्भकसंख्यावधित्वप्रसाधनं व्यर्थमिति **परिमलोक्तं चिन्त्यम् ।**

---

१. अत्र कल्पतरौ 'खण्डावयविन आरभ्य महावयविनम्' इति, 'समवेयुः' इति, 'घट एवारभ्यः' इति च शोधनीयम् ।

२, अत्र कल्पतरौ 'शुष्कवर्णन'मित्यस्य 'शुष्कचर्वण'मिति पाठान्तरम् ।

संयोगमात्रस्यारम्भकत्वाभावात् । अन्यथा विजातीयपरमाणुसंयोगस्य, प्रलयकालीनसजातीयपरमाणुसंयोगस्य, किं बहुना, अस्मदादिकृततन्त्वादिसंयोगस्याप्यारम्भकत्वापत्तेः[1]। अदृष्टविलम्बस्यापि कारणाभावसम्पादनमुखेनैव कार्यविलम्बहेतुत्वादिति द्रष्टव्यम्। **कारणेति** ।

P. 504-8

यत्तु **परिमले** नियमोऽयमसिद्धः, [3]तन्तुत्रयारब्धसूत्रत्रयनिर्मितत्रिवृत्सूत्रजातीयस्य तन्तुत्रयनिर्मितसूत्रस्य दर्शनात्। तन्तुनिर्मितसूत्रात् तन्तुनिर्मितसूत्रनिर्मितसूत्रस्य वैजात्ये वा, परमाणुत्रयारब्धत्र्यणुकात्परमाण्वारब्धद्व्यणुकारब्धत्र्यणुकेऽपि वैजात्यसम्भवात् परमाणूनां त्र्यणुकारम्भकत्वं न प्रत्याख्यातुं शक्यमित्युक्तम् ।

**तच्चिन्त्यम्** । सूत्रस्य तन्त्वाद्यवस्थाभेदमात्रत्वेन तन्त्वारब्धकार्यत्वानभ्युपगमात्। 'इह तन्तुषु पट' इतिवत्, 'इह तन्तुषु सूत्र'मिति बुद्ध्यभावात्। अन्यथा सूक्ष्मवस्त्रद्वयनिर्मितरज्ज्वादेरपि तदारब्धकार्यत्वे, पटादेरन्त्यावयवित्वसिद्धान्तभङ्गप्रसङ्गात् । सूत्रस्य तन्तुत्वाभावे, सूक्ष्मद्वित्रतन्तुनिर्मितसूत्रसमूहारब्धे तन्त्वा-

---

१. तन्तुसंयोगे वैजात्यं तार्किकैरनुक्तं कल्पनीयम् । उक्तापत्तीनां न्यायमते इष्टत्वसंभवः । विजातीयद्रव्यद्वयपरमाणुसंयोगस्तु नारंभकः, पार्थिववायवीयपरमाणुसंयोगस्यारंभकत्वे तदारब्धत्र्यणुकादेः अप्रत्यक्षत्वापत्तेश्च । एवं क्लेशेन समर्थनेपि "यदा बहवः परमाणवः" इति भाष्योक्तरीत्या परमाणुकारणतावादः समर्थयितुं अशक्य एव। इति तु चिन्त्यमिदम् ।

२. अत्र कल्पतरौ 'कारणजातीयस्य कार्यजातीयं प्रति अनारंभकत्वात्। न ह्यणुजातीयः तन्तुः कार्यं पटजातीयमारभत इति।' इति पाठो दृश्यते। स तु अशुद्धः। तस्य शोधनमित्थम्—कारणकारणजातीयस्य कार्यकार्यजातीयं प्रत्यनारंभकत्वात्। नह्यंशुजातीयः तन्तुकार्यपटजातीयमारभत इति। अत एव ब्रह्मविद्याभरणे 'नह्यंशूनां पटकारणीभूततन्तुकारणांशुजातीयानां अंशुकार्यभूततन्तुकार्यपटजातीयारंभकत्वं साक्षादेव दृष्टम्' इति दृश्यते। पण्डिता अपि शोधकंमन्याः अर्थमनालोचयन्त एव सहसा अबद्धपाठमेव ग्रन्थेषु मुद्रापयन्ति। एवं स्थिते पाठकानां का गतिः। कदा शुद्धपाठलाभः॥

३. ब्रह्मविद्याभरणे—'तन्तुद्वयसंयोगे हि द्वितन्तुकसूत्रमारभ्यते। द्वितन्तुकैः त्रिभिस्सूत्रैः त्रिवृद्रज्जुः। कदाचित्तु तन्तुत्रयेणैव त्रिवृद्रज्जुरारभ्यते। तत्र कारणकारणजातीयानां तन्तूनां कार्यकार्यजातीयत्रिवृद्रज्ज्वारंभकता दृष्टा' इत्युक्तम् ।

रब्धत्वाभावेन पटत्वाभावप्रसङ्गाच्च। अन्यथा लतादिसाचिव्येनापि तन्तूनां रज्ज्वादिकार्यजनकत्वापत्तिः। अविशेषादिति ध्येयम्।

P. 504 9 **तस्मादिति टीकायां**–द्रव्यपदस्य प्रयोजनमाह—**बहुत्वं प्रतीति। टीकायां–पारिमाण्डल्यादन्यदिति**। परमाणुगताणुत्वस्य पारिमाण्डल्यमिति नाम, तस्मादन्यत्। अणुत्वमिति द्वितीयान्तम्। **टीकायां–वैयर्थ्यप्रसङ्गादिति**। द्वित्वत्रित्वसंख्यागतारम्भकत्वस्य परमाणुद्वयारब्धं द्व्यणुकं द्व्यणुकत्रयारब्धं त्र्यणुकञ्चादाय चरितार्थत्वान्न त्रयाणां परमाणूनां द्वयोर्द्व्यणुकयोर्वा कार्यारम्भकत्वमित्यर्थः।

द्व्यणुकापेक्षया द्व्यणुकद्वयारब्धकार्येण भोगातिशयाभावादपि न तदारम्भ इति वक्तुं—**तदपि हीत्यादिटीका**। सा न युक्ता। द्व्यणुकगताणुत्वापेक्षया द्व्यणुकद्वयारब्धे अणुत्वातिशयसम्भवेन भोगभेदसम्भवादित्याशंक्य, तस्य द्रव्यस्य महत्त्वयोगित्र्यणुकारम्भेणैव भोगोपयोगो न स्वतः। तदारम्भश्च द्व्यणुकैरेव सिध्यति। तद्गतमहत्त्वञ्च द्व्यणुकबहुत्वेनैव सिध्यति। त्र्यणुकस्य द्व्यणुकद्वयारब्धकार्यारब्धत्वे हि तन्महत्त्वं तदारम्भकबहुत्वादेवेति वक्तव्यम्। द्व्यणुकद्वयारब्धे कार्ये महत्त्वहेत्वभावेनाणुत्वस्यैवोत्पत्तेः। ततश्च तत्कार्यं व्यर्थमित्याशयेन

P. 504-11 तट्टीकाभिप्रायमाह—**परिमाणस्येति**।

**समपरिमाणेति**। तादृशविलक्षणसंख्याकतन्त्वारब्धेत्यर्थः। **उद्रिक्तमुत्कृष्टम्। समसंख्याकेति**। तादृशविलक्षणपरिमाणतन्त्वारब्धयोरित्यर्थः। **समपरिमाणेति। तादृशदृढादृढसंयोगवत्तन्त्वारब्धयोरित्यर्थः। महत्तूलपिण्डयोरिति** द्विचत्वारः [कोशाः] दृश्यन्ते। तदा महत्त्वयुक्ततूलपिण्डयोरित्यर्थः। भोगातिशयाभावेऽपि सामग्रीबलात् कार्यमारभ्यतामित्याशंक्य नास्ति सामग्रीत्याह—**टीकायामदृष्टनिमित्तत्वाच्चेत्यादिना**।

ननु क्लृप्तत्वात् बहुत्वमेव चतुरणुकादिमहत्त्वकारणमित्याशंक्य, द्वितन्तु-

P. 505-1 कपटादिस्थले क्लृप्तत्वान्महत्त्वादिकमपि कारणमित्याशयेन परिहरति—**यदि द्व्यणुकगतेत्यादिना। समानजातीयमिति। कारणद्रव्यसमवायिनो गुणाः**

---

१. अत्र 'सूत्रगोवालैर्बहुनेकजातीयैरेका रज्जुः सृज्यमाना दृश्यते' इति वियदधिकरणभाष्यविरोधः, सूत्रस्य तन्त्ववस्थाभेदत्वे पटस्यापि तथात्वापत्तिः, इत्यादिकं चिन्त्यम्।

**कार्यद्रव्ये समानजातीयमित्यादिनोक्तं दूषणमित्यर्थः**। अपेक्षितं पूरयति— **भाष्यकार इत्यादिना**। अवतरणिकाया भाष्यपर्यवसितत्वेन कथं **सूत्रो**-P. 505-3 दाहरणमित्याशंक्य सूत्रार्थस्य भाष्ये स्पष्टमनवगमात् स्वयं सूत्रं पठित्वा व्याचष्ट इत्याशयेनाह—**सूत्रमिति**।

**यथाश्रुतसूत्र इति**। न च सूत्रे यथाक्रमं ह्रस्वस्य महदारम्भकत्वं, परिमण्डलस्य दीर्घारम्भकत्वं च दृश्यत इति कथं **परिमण्डलादपि महदारम्भ इत्युच्यते**? इति वाच्यं। महद्दीर्घशब्दस्यैकवस्त्वभिधायकत्वात्। तथा च टीकायामुक्तम्—**यथा वा तदेव त्र्यणुकादि दीर्घमिति**। न च महद्दीर्घशब्दयोः कर्मधारये 'आन्महत' इत्यादिसूत्रेणात्वे **महादीर्घ इति** स्यादिति वाच्यम्। परममहत्परिमाणवानित्यादिप्रचुरप्रयोगानुरोधेन तस्य काचित्कपरत्वात्। महच्छब्दस्य महत्त्वमात्रपरत्वेन महत्त्वयुक्तं दीर्घमिति मध्यमपदलोपिसमासे बाधकाभावाच्चेति भावः। **यथाक्रममिति**। महद्दीर्घञ्च अणु चेति द्वन्द्वाभ्युपगमेन कार्ययोरपि द्वित्वादिति भावः।

एवञ्च महद्दीर्घशब्दयोः द्वन्द्वसमास इति **परिमलोक्तमेतद्ग्रन्थविरुद्ध**-(मपि)मिति। कानिचित् त्र्यणुकानि महान्ति कानिचिद्दीर्घाणीति कल्पनमपि तदभ्युपगमविरुद्धं न्यायविरुद्धञ्च। सर्वेषामपि त्र्यणुकानां बहुभिर्ह्रस्वैः द्व्यणुकैरारब्धत्वाविशेषेण वैषम्यहेत्वभावादिति द्रष्टव्यम्।'

**अर्थादिति**। **द्व्यणुके पारिमाण्डल्यं नारभत** इत्युक्त्या ततोऽन्यत् P. 505-8 परिमाणमारभत इति प्रतीतेरिति भावः। **आकृत्यधिकरणन्यायेन ह्रस्वादिशब्दानां** परिमाणमात्रवाचित्वमादाय शङ्कते—**नन्विति**। **ह्रस्वपरिमाणेति**। अणुपरिमाणेत्यर्थः। महत्त्वदीर्घत्वयोरिवाणुत्वह्रस्वत्वयोरपि समनियतत्वात् सूत्रे **अणुग्रहणेन** ह्रस्वत्वमपि गृहीतमिति सूचयितुं **ह्रस्वेत्युक्तम्**।

**अनन्तरनिषेधादिति**। वैशेषिकानभ्युपगमेन भाष्यटीकयोर्निषिद्धत्वेन तदीयप्रक्रियानुसारेण दृष्टान्ततया तन्निर्देशानुपपत्तेरित्यर्थः। अनेन **महद्दीर्घाणुशब्दयोरपि** गुणिपरत्वमुक्तमित्याह—**परिमाणवदिति**। आरम्भकतावच्छेदकत्वादारम्भकत्वव्यपदेश इति परिहरति—**अत आहेति**। P. 505-12

P. 506-1 **स्वकारणं संख्येति ।** परमाणुद्व्यणुकगतद्वित्वबहुत्वसंख्येत्यर्थः । तथा च द्व्यणुकत्र्यणुकयोः पारिमाण्डल्याणुत्वपरिमाणान्यपरिमाणारम्भकद्वित्वत्रित्व-संख्यावशीकृतत्वात् न तत्र कारणगतपरिमाणजातीयारम्भ इति भावः ।

**व्याप्तेरिति ।** कारणगता गुणाः कार्ये समानजातीयं गुणान्तरमारभन्त इति व्याप्तेः परिमाण्डल्यद्व्यणुकाणुत्वयोः **व्यभिचार उक्ते** इत्यर्थः । **नाद्य-इत्याहेति ।** व्यभिचारप्रयुक्तखेदपरिहाराय व्याप्तित्याग एव युक्त इति भावः ।

कार्यगतविरोधिगुणारम्भकासमवहिताः कारणगुणाः कार्ये सजातीयं गुणान्तरमारभन्त इत्येवं व्याप्तिर्विशेष्यत इति पक्षे अप्रयोजकत्वम् । अथ एतद्दोषपरिहाराय विरोधिगुणाक्रान्ते तद्विरोधिगुणो(णाक्रान्तेरु)त्पत्तिर्विरुद्धेति तर्को विवक्षितः, तर्हि विकल्प्यत इत्याशयेनाह—**द्वितीये किमिति ।** **व्याप्तिः** आक्रान्तिः ।

**न च परिमाणान्तरारम्भे व्यग्राणीति भाष्यं** व्याख्यातुं **न च परिमाणान्तरारम्भे व्यापृततेति टीकावाक्यम्**[1] । तदुभयमप्यनुपपन्नम्, परमाणुद्वित्वद्व्यणुकबहुत्वयोरेव द्व्यणुकत्र्यणुकगताणुत्वमहत्त्वारम्भकत्वेन पर-माणुद्व्यणुकगतपारिमाण्डल्याणुत्वयोस्तदारम्भकत्वासिद्धेरित्याशंक्य, विकल्पेन तयोरपि तदारम्भकत्वं शङ्कमानं प्रति **भाष्यटीके** प्रवृत्ते इत्याशयेनाह—

P. 506-4 **परमाण्वादावित्यादिना ।**

**त्वराविशेषादिति ।** भोगोपयोगिस्थूलारम्भत्वराविशेषादित्यर्थः । **सन्नि-धानविशेषादिति ।** तादर्थ्येनैव तदुत्पत्तेरिति भावः ।

**शङ्कानिरासार्थं यत् भाष्यं नच परिमाणान्तरारम्भे व्यग्राणीति भाष्यं तद्व्याचष्ट इत्यर्थः ।** उभयकारणत्वे अकारणत्वे च **व्यापृततायास्तु-**ल्यत्वादकिञ्चित्करस्त्वराविशेष इति परिहाराभिप्रायमाह—**नच परिमाणान्तर इति ।** दृष्टानुरोधेन संख्यापरिमाणयोरुभयोरप्यारम्भकत्वतौल्यात् सन्निधान-

P 506-8 विशेषोऽसिद्ध इत्याह—**कारणबहुत्वादीनामिति ।**

---

१. अत्र टीकायां 'अपि च सत्परिमाणान्तरमाक्रामति, नासत्, उत्पत्तेश्च प्राक् परिमाणान्तरं असदिति कथमाक्रामेत्' इति शुद्धः पाठः ।

पररीतिमनुसृत्य वैलक्षण्येऽपि दृष्टान्तत्वमुपपद्यत इत्युक्तम्। वस्तुतस्तु वैलक्षण्यं नास्ति। द्वयोरप्यवस्थाभेदत्वादित्याह—**कारणावस्थेति**। **कारणावस्था द्रव्यमिति** वक्ष्यमाणमभिप्रेत्येत्यन्वयः। P. 506-9

**समवायिग इति**। समवायिकारणगत इत्यर्थः। विजातीयरूपस्पर्शवदवयवारब्धे चित्ररूपचित्रस्पर्शाङ्गीकारात्, विजातीयगन्धरसवदवयवारब्धे गन्धरसयोरेवानभ्युपगमादस्या अपि व्याप्तेस्तादृशावयवगतरूपरसादिषु व्यभिचारः स्फुट इति तमनुद्भाव्य दूषणान्तरमाह—**न तावदित्यादिना**।

**स्वाश्रयेति**। **स्वेषां**, विशेषगुणत्वेनाभिमतानां, ये **आश्रयास्तेषां, व्यवच्छेदे**, तत्तद्विशेषगुणकर्तव्ये इतरव्यावर्तने **उचिताः** अवच्छेदकीभूताः ये **अवान्तरसामान्यविशेषाः** पृथिवीरूपादिगतजातिविशेषाः **तद्वन्त** इत्यर्थः। अत्र घटगतरूपादिषु स्वाश्रयघटव्यवच्छेदोचितावान्तरसामान्याभावादसम्भव इत्यतो व्याचष्टे—**नवसु मध्य इति**। **व्यावर्तकाः** व्यावर्तकतावच्छेदकजातिमन्त इत्यर्थः। P 507-1

नन्वेवमपि रूपादौ यदि तादृशी जातिर्नीलत्वादिकं, तस्य कृत्स्नपृथिव्यादिव्यावर्तकतावच्छेदकत्वाभावादव्याप्तिः। अथ कृत्स्नपृथिवीरूपादिगता पाकजत्वादिप्रयोजिका जातिस्तादृशी; तदपि न, पृथिवीरूपस्य सर्वस्यापि पाकजत्वे मानाभावेन कृत्स्नपृथिवीरूपे तज्जात्यसिद्धेः, जलरूपे पृथिवीगतशुक्लरूपाद्वैलक्षण्यादर्शनेन जलरूपमात्रवृत्तिजातौ मानाभावाच्च। अतो लक्षणमेतावदेव वक्तव्यमित्याशयेनाऽऽह—**एवं[१]चेति** [ अत्र ] रूपादावव्याप्तिः, संयोगादावतिव्याप्तिश्च बोध्या। 'एकोऽयं न नवे'ति प्रतीतेः, "नवेमे नैकैक" इति प्रतीतेश्च, समुदितादेकैकस्य तस्मात्समुदितस्य च व्यतिरिक्तत्वादतिव्याप्तिरिति दूषयति—**नाद्यः इत्यादिना**। **गुणत्वेति**। गुणत्वजातिमादाय चक्षुर्मात्रग्राह्यरूपसजातीये P. 503-1

---

१. अत्र कल्पतरौ 'किं नवान्यतममात्रवृत्तित्वम्? नवसु मध्ये एकैकमात्रवृत्तित्वं वा' इति पाठः।

२. कल्पतरौ 'नवत्वविशिष्टव्यतिरिक्तव्यतिरिक्तत्वं वा' इति शुद्धः पाठः। नाद्य इत्यादिना दूषणग्रन्थे, गुणादिलक्षणानां नवत्वविशिष्टव्यतिरिक्तत्वात् नवत्वविशिष्टव्यतिरिक्तव्यतिरिक्तत्वं तेषु वक्तुमशक्यम्। तथा च कल्पतरूक्तदूषणमलग्नं भाति। तथापि तेषु गुणादिलक्षणेषु नवत्वविशिष्टपृथिव्यादिसमुदितलक्षणव्यतिरिक्तत्वावच्छिन्नव्यतिरेकासंभवे-

संयोगादावतिव्याप्तिवारणाय गुणत्वावान्तरेत्युक्तम् । धर्माधर्मभावनानामतीन्द्रियत्वात् सांसिद्धिकद्रवत्वस्य द्वीन्द्रियग्राह्यत्वात् पृथक् ग्रहणम् ।

P. 508-4 **स्वसमवेतेति** । एकघटजातीयव्यवच्छेदके घटत्वादावतिव्याप्तिवारणाय सत्यन्तम् । घटत्वादौ च स्वसमवेतस्य कस्यचिद्विशेषस्याभावात् नातिव्याप्तिरिति भावः । एकजातीयपदेन यत्किञ्चिदेकजातीयत्वं विवक्षितम् ? द्रव्यत्वव्याप्यजात्या एकजातीयत्वं वा ? नवान्यतमत्वं वेति विकल्प्य क्रमेण दूषयति— **स्वगतेत्यादिना** । **स्वाश्रयान्यव्यवच्छेदकेति** । द्रव्यत्वव्याप्यजात्या एकजातीयस्वाश्रयस्यैवाभावादिति भावः ।

भोगविरोधादपि जगति न चैतन्यारम्भ इति प्रति(बन्धि)बन्दीमुखेनाऽऽह— **किञ्चेति** । कारणगतमहत्त्वादेः कार्यं कार्यगतमहत्वादि, **तत्कारणेन कार्येण सहैकस्मिन्नर्थे समवायाविशेषादित्यर्थः** । एवमपि जगति जाड्यमाकस्मिकं स्यादित्यत आह—**अत इति** । उपादानगतस्य विशेषगुणस्यावश्यं यत्र क्वचिदा-

P. 508-11 रम्भकत्वेन भवितव्यमित्यभिनिविशमानं प्रत्याह—**जीवेषु त्विति** । **क्षेत्राणां** व्यष्टिसमष्टिशरीराणां, परस्य जगत्कारणत्वे जीवगतवासनाज्ञानकर्माणि निमित्तमित्याह—**भावनेति** ।

॥ इति महद्दीर्घाधिकरणम् ॥

---

ऽपि नवत्वविशिष्टव्यतिरिक्तानि यानि पृथिव्याद्येकैकलक्षणानि तेभ्यः व्यतिरेकः नवत्वविशिष्टव्यतिरिक्तत्वधर्मातिरिक्तप्रत्येकवृत्तिधर्मावच्छिन्नप्रतियोगिताको भेदः तस्य गुणादिलक्षणेषु सत्त्वमादाय दूषणं कथंचिदुपपादनीयम् । एवमेव उपरि दूषणानि संगमनीयानीति भाति । परिशीलयन्तु पण्डिताः ।

१. कल्पतरौ 'स्वाश्रयैकजातीयपदेन' इति शोध्यम् । 'गगनत्वजातिविरहेण' इत्यतः पूर्वं 'गगनभेदाभावात्' इति त्रुटितम् । परिमलात् ज्ञायते ।

२. अत्र कल्पतरौ 'ब्रह्मावच्छेदेषु चेतना' इति शोध्यम् । 'जीवेषु तु ब्रह्मप्रतिबिंबकल्पेषु ब्रह्मचेतना अनुवर्तिष्यत इति समानम्' इति शास्त्रदर्पणम् ।

## ॥ अथ उभयथापि न कर्माधिकरणम् ॥

सू०॥ उभयथाऽपि न कर्मातस्तदभावः ॥ १२ ॥

सू०॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

सू०॥ नित्यमेव च भावात् ॥ १४ ॥

सू०॥ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

सू०॥ उभयथा च दोषात् ॥ १६ ॥

सू०॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

**प्रासङ्गिकेनेति** । परपक्षनिराकरणार्थे पादे स्वपक्षदोषपरिहारस्य प्रासङ्गिकत्वादिति भावः । **कारणमितीति** । सङ्गतिरुच्यत इत्यन्वयः । नन्वदृष्टमणुसमवायीति न तैरिष्यत इत्याशंक्य युक्तिबलादापाद्य दूषणमुच्यत इत्याह—**अबोधरूप इति** । जडत्वाविशेषादिति भावः । P. 509-1

**इनिप्रत्यय इति** । आधारशब्दादुत्पन्न इनिप्रत्ययो नित्यसम्बन्धे वर्तते। 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥' इति स्मरणादिति भावः । ततश्च यावदवस्थानमाधारसंश्लेषरूपायुतसिद्धिलाभात्तत्सम्बन्धत्वं समवायस्यैव नान्यस्येत्याह—**अतश्चेति** । **इहप्रत्ययेति** । 'इह तन्तुषु पट' इत्याधार्याधारविषयकप्रत्ययरूपकार्यगम्य इत्यर्थः । P. 509-6

**संयोगविशेष इति** । वेगसमानाधिकरण इति भावः । **नोदनन्त्विति** । आदौ हस्तादिना संयुक्तस्य घटादेः प्रयत्नविशेषमपेक्ष्य तस्य तदेकदेशस्य वा देशान्तरसंयोगहेतुक्रियानुकूलः संयोगो जायते । स, नोदनमित्यर्थः । P. 510-1

न च वायुनापि नोदनदर्शनात् प्रायिकमेतदिति **परिमलोक्तं** युक्तम् । वायुघटसंयोगस्याभिघातत्वेन नोदनत्वाभावात् । तदुक्तम्—स्पर्शवेगोभयवद्द्रव्य-

---

१. टीकायां 'आधार्याधारभूत' इत्यस्य आधार्याधारभावप्रयोजक इत्यर्थो ग्राह्य इति भाति ।

संयोगस्याभिघातत्वमिति[1]। अभिघातेन समानयोगक्षेमाविति टीकां व्याचष्टे—निमित्तेति। आत्मशब्दस्य जीवपरत्वेन व्याख्याने बीजमाह—तदापीति[2]। सर्गाद्यकाल इत्यर्थः।

P. 510.2

यद्यपीत्यादिना शङ्कान्तरपरिहारसिद्धवत्कारेण भाष्यव्याख्याने बीजमाह—ननु परैरिति। वृत्त्यवृत्तिपक्षं तावदिति। तथा च टीकायामव्याप्यवृत्तिरित्यस्य, न व्याप्ता वृत्तिः, वृत्तिरेव परमाणुं व्याप्नोतीति न, किन्त्ववृत्तिसहितेत्यर्थः। घटादिषु प्रतीयमानं संयोगस्याव्याप्यवृत्तित्वं प्रदेशवृत्तित्वेनाप्युपपद्यत इति कथं वृत्त्यवृत्तिसिद्धिरित्यत आह—घटादिष्विति। स हीति। विरुद्धधर्मसंयोगस्यैव भेदत्वादिति भावः। कस्मादित्यनेन सूचितमादिसर्गवैषम्यं दर्शयति—प्राक्प्रलयादिति।

P. 511-1

ननु शरीरादिप्रलयकालीनदुःखविशेषस्य पृथिव्यादिलयहेतुकत्वात् तद्दुःखभोगारम्भकमेवादृष्टं तत्प्रलयनिमित्तं भविष्यतीत्यत आह—सत्यपीति[3]। इत्याहेति। इत्यभिप्रेत्याहेत्यर्थः।

टीकायां स्वतन्त्रविशेषणं स्वपक्षे दोषसाम्यं परिहर्तुमित्याशयेनाऽऽह—भवन्मत इति। टीकायां—सम्बन्धान्तरेणेति। इत्थंभावे तृतीया। तन्नियामकत्वादिति। तन्तुपटोभयसंश्लिष्टताप्रयोजकत्वादित्यर्थः। तत्कारणवदिति। तन्तुभ्यः पटोत्पादनद्वारा तदुभयसंश्लिष्टतापादकवेमादिवदित्यर्थः। न च प्रागभावे व्यभिचारः। तस्यैवाभावात्। संश्लिष्टताप्रयोजकभावत्वादिति वा हेतुरिति भावः।

P. 511-5

---

१. शब्दजनकः संयोगः अभिघातः। शब्दाजनकः संयोगो नोदनम्। इति मुक्तावलीकारः। एवं सति वायुघटसंयोगः नोदनमपि भवत्येव। स्पर्शेत्यादिलक्षणं चात्र युक्तमेव। वायोः तदुभयवत्त्वेपि वेगस्य नोदनजनने नोपयोगः। अभिघातजनने परं उपयोगः। अन्यथा 'वायुनोदनवशात् कर्म' इति ग्रन्थकृतां वचनं कथमुपपद्यताम्। इति परिमलोक्तं कथं न युक्तम्?

२. कल्पतरौ तथापीति पाठः तदापीति शोधनीयः।

३. कल्पतरौ 'दुःखच्छेदसिद्धे'रित्येतत् दुःखभोगसिद्धेरिति शोधनीयम्।

**पक्षेतरस्यापीति**[1]। यद्यपि पक्षमात्रव्यावर्तक उपाधिः पक्षेतरः, असम्बन्धत्वोपाधिश्च न तथा, अपक्षात्संयोगादपि व्यावृत्तेः। तथाऽपि पक्षे उपाधिव्यतिरेकेण साध्यव्यतिरेकसाधनदशायां सति सपक्षे तदवृत्तित्वेनासाधारण्यं पक्षेतरस्यानुपाधित्वे यन्नियामकं, तदिहाऽपि समम्। समवायः असम्बद्धः असम्बन्धत्वरहितत्वादित्यत्रापि हेतोः सपक्षावृत्तित्वात्। ततश्च पक्षेतरसाम्यात् पक्षेतरत्वोक्तिरिति द्रष्टव्यम्। P. 511-6

यद्वा सम्बन्धशब्दस्य समवायपरत्वमाश्रित्य पक्षेतरत्वोक्तिः। तथा च वक्ष्यति—**किमसम्बन्धत्वमुपाधिरसमवायत्वं वेति**। तादृशस्य पक्षेतरस्यापि प्रकृते उपाधित्वं सम्भवति। पक्षे साध्याभावनिश्चये तस्यैव सपक्षतया तद्वृत्तेरुपाधिव्यतिरेकस्यासाधारण्याभावादिति भावः।

पूर्वटीकानुगुण्याय योजयति—**सम्बन्धिनोरिति**। **सम्बन्धनात्मत्वे इति**। सम्बन्धिनोः परस्परं श्लिष्टत्वापादनात्मत्व इत्यर्थः। **सम्बन्धनाविनाभूतसत्ताकत्वं** टीकोक्तं हेतुं प्रकटयन्नाह—**स्वसत्तायामिति**। टीकायास्साध्याव्यापकत्वकथने पर्यवसानं दर्शयति—**न**[2] **चैवमिति**। द्वितीयं स्वयं दूषयति—**पक्षद्वयेऽपीति**। **उ**[3]**पाधिव्यतिरेके इति**। उपाधिना स्वव्यतिरेकेण साध्यव्यतिरेके साध्यमाने दृष्टान्ते अभावे हेतोरभावात्। दृष्टान्तस्यैव वा अभावादित्यर्थः। P. 511-8

प्रागुक्तं शङ्काबीजमनूद्य निराकरोति—**न चेति**। **तथेति**। इहप्रत्ययस्य कल्पिततादात्म्येनाप्युपपत्तेरिति भावः। **तथाचेति**। संयोगेप्यगुणत्वविशिष्टसम्बन्धत्वाभावरूपोपाधिसत्त्वादिति भावः। स्वमतानुरोधेनेदं दूषणमित्याशयेनाऽऽह—**सम्बन्धान्तरेति**।

**उभयसिद्धस्थल इति**। न च अनुमानवादिनः सिद्धान्तिनो मते साध्याव्याप्तिरप्युपाधिदोष एव। तं प्रति प्रतिपक्षोन्नयनासम्भवादिति **परिम-** P. 512-6

---

१. अत्र कल्पतरौ 'पक्षे साध्याभावनिश्चयात् पक्षेतरस्याप्युपाधिता' इत्येतदनन्तरं 'संबन्धिनो न घटयितुमर्हतीत्यर्थः' इत्यधिकमशुद्धं च।

२. अत्र कल्पतरौ 'संयोगोऽप्यसंबद्धः प्रसज्येत' इति पाठः।

३. कल्पतरौ 'यः संबन्धस्समवायो वा स संबन्धानपेक्षः' इति पाठः।

लोक्तं युक्तम् । तन्मते हेतुमति संयोगे सम्बन्धानपेक्षत्वसाध्यस्यापि सत्त्वेन प्रतिपक्षोन्नयनाविरोधात् । अत उभयसिद्धमेव साध्याव्यापकत्वं दोषायेति भावः ।
P. 512-7 **अयमिति** । वक्ष्यमाण इत्यर्थः । तमेव परिहारं दर्शयितुं—**द्रव्याश्रयीत्युक्तमिति टीका** । तत्र **भाष्ये उक्तमिति** भ्रमं वारयति—**न च द्रव्येति** । 'द्रव्याश्रयी संयोग' इत्यनेन कथं शङ्कायाः परिहार इत्यत आह—**अयं भाव इति** ।

**उपाधेर्व्यतिरेक इति** । उपाधेर्व्यतिरेकेण साध्यमनिः साध्यव्यतिरेक इत्यर्थः । **अनध्यवसितत्वमिति** । दृष्टान्ते हेतोरभावादसाधारण्यमित्यर्थः । सपक्षसत्त्वेन व्यतिरेकित्वायोगादसाधारण्यमेव इत्याशयेनाह—**अभाव इति** । संयोगे साध्यस्यापि सत्त्वेन व्यभिचाराभावात् **अगुणत्वे सतीति** व्यर्थमित्याह—**विशेषणेति** ।

**न च कार्यत्वादित्यादिटीकायाः** प्रकृतानुमानदूषणपर्यवसानं दर्शयन्नाह—**संयोगस्येति** । नन्वेवं पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधिव्यतिरेकादवच्छिन्नसाध्यव्यतिरेक एव सिध्येत् । न शुद्धसाध्यव्यतिरेक इत्याशंक्य, विशेषणवति विशिष्टव्यतिरेकस्य विशेष्यव्यतिरेकपर्यवसितत्वादिष्टसिद्धिरित्याह—
P. 512-12 **तथाचेत्यादिना** ।

समवायकार्यत्वसाधनस्य प्रकृतोपयोगं दर्शयन्नाह—**सम्बन्धत्वेनेति** । समवायस्य कार्यत्वे साध्ये सम्बन्धत्वं हेतुः । न तु विनाशित्वमुभयवादिसिद्धस्यैव हेतुत्वात् । **टीकायां** विनाशित्वसाधनं तु कार्यत्वदृढीकरणार्थमिति भावः । **न्यायमते** समवायस्य जन्यत्वानभ्युपगमात् **यथेत्यादिदृष्टान्तायोग** इत्यत आह—**ये त्विति** । **संयोगिनोरिति** सप्तमीति । **'तस्मात्संयोगः संयोगिनो'रिति टीकायामित्यर्थः** ॥ १३-१४ ॥

ननु मतद्वयसिद्धस्य मूलकारणमात्रस्य पक्षत्वेऽपि सिद्धान्ते तत्र रूपादिमत्त्वानभ्युपगमात् पक्षविशेषणासिद्धिरित्याशंक्य, न तस्य पक्षविशेषणत्वेनो-
P 513-6 पादानम् । किन्तु तर्कशरीरत्वेनेत्याशयेनाऽऽह—**तद्यदीति** ।

---

१· कल्पतरौ 'द्रव्याश्रितत्वप्रयुक्तेः गुणत्वोपपत्तौ' इति शुद्धः पाठः ।

तर्केऽप्यापादकस्य पक्षवृत्तित्वमावश्यकम्। अन्यथा आपाद्यस्य पक्षवृत्तित्वापादनायोगादिति शङ्कते—नन्वेवमपीति। पक्षे आपाद्यापादने आपादकस्य पक्षे आहार्यत्वमेव तन्त्रम्। न तु तत्र प्रमितत्वमिति दर्शयति—यदि पर्वत इति। तर्कस्य स्वतो वस्तुप्रमापकत्वाभावेऽपि स्वोपोद्बलितानुमानद्वारा तत्प्रमापकत्वमित्याह—विमतमित्यादिना। P. 513-7

ननु वैशेषिकैर्द्व्यणुकं पक्षीकृत्य तत्स्वाल्पपरिमाणद्रव्यारब्धमित्येवं स्पर्शादिमानणुपरिमाणः परमाणुः विशिष्यैव साध्यते। तत्र तर्कस्य कथं दूषकत्वमित्याशंक्य परमाणोः रूपस्पर्शाणुत्वादियोगित्वे सावयवत्वानित्यत्वाद्यापादनेन वैशेषिकाभिमतपरमाणुस्वरूपविपरीतस्वरूपमादाय तर्कस्य विपर्यये पर्यवसानादस्ति तद्दूषकत्वमित्याशयेनाह—जगदुपादानमिति। अनुमाने तर्कस्य पर्यवसानमित्यर्थः।

परमाणुनित्यत्वसाधनदूषणस्य प्रकृतोपयोगं दर्शयन्नाह—सत्यपीति। अर्थात्सत्प्रतिपक्षतामिति। साध्याभावेऽपि हेतुरन्यथा सिध्यतीत्यप्रयोजकत्वाशङ्काया अपि पक्षे साध्याभावसम्पादकत्वात् फलतः सत्प्रतिपक्षतेत्यर्थः। P. 514-1

नन्वद्रव्यत्वे सति सत्त्वं घटरूपादिषु व्यभिचारान्न नित्यत्वसाधकमित्य(र्थः) तः कारणाग्रहणात्मिका अविद्या विशेषणमित्याशंक्य सत्यन्तविशेषणार्थं 'यतोऽद्रव्यत्व'मिति पूर्वटीकोक्तं दर्शयन्नवतारयति—कारणाभावादेवेति। नाद्ये द्रव्यलयस्येति। काठिन्यस्य द्रव्यत्वाभावेन समवाय्यसमवायिकारणान्यतरनाशाभावेऽपि द्रव्यलयः सम्भवतीत्यत्र न तल्लयो दृष्टान्त इत्यर्थः। आद्यपक्षमादाय तावत्परिहार इत्याशयेनाऽऽह—तत्रेति। साध्यसमत्वमिति। काठिन्यनाशेऽपि अवयवसंयोगनाशजन्यत्वमस्त्विति शङ्कया प्रसक्तमित्यर्थः। P. 515-1

नन्ववस्थाविशेषात्मकद्रव्यनाशेऽपि संयोगनाशः कारणं सम्भवतीति न व्यभिचार इति शङ्कते—नन्विति। एकत्वादुपादानस्य तत्संयोगो बाधित इति परिहरति—नेत्याहेति। उपादानत्वे कार्यानुगतत्वमप्रयोजकमिति शङ्कते— P. 515-4

---

१. कल्पतरौ 'अत आह केति' इति दृश्यते, 'अत आह तस्य चेदिति' इति भाव्यमिति भाति।

२. अत्र कल्पतरौ 'कारणाग्रहणोक्तिः' इति शोधनीयम्।

P. 515-6 **ननु किमिति ।** कारणविशेषगतोपादानत्वप्रयोजकतादात्म्याविनाभूतत्वादनुगतत्वमुपादानस्यावश्यकमिति परिहाराभिप्रायमाह—**सत्यपीत्यादिना ।**

**प्राप्येति ।** निमित्तकारणत्वेन लब्ध्वेत्यर्थः । **कृतोपोद्घातमिति ।** द्रव्यस्वरूपापरिज्ञानादिति **टीकया** काठिन्यनाशस्य द्रव्यनाशे दृष्टान्तत्वसमर्थनेन **कृतोपोद्घातमित्यर्थः ।**

अनूदितं दूषयति—**तत्र घृतनाशः इति । काठिन्यसंस्थानविनाशस्त्विति । उपेयत** इत्यनुषङ्गः । द्रवत्वै[2]प्रयोजक इत्यत्र द्रवत्वग्रहणं काठिन्यनाशस्याप्युपलक्षणम् । परमाणौ काठिन्यानभ्युपगमात् **काठिन्यं[3]मपहायेति** कथमित्यत आह—**यथेति । नचेत्यादिटीकायाः** प्रकृतोपयोगमाह—**न केवलमिति ॥ १५ ॥**

पृथिव्यादीनां गन्धादिसमुदायात्मत्वप्रसाधनं प्रकृतानुपयुक्तमित्यत आह—

P. 516-1 **परमाणुष्विति । शान्ता घोराश्चेत्यर्थं** व्याचष्टे—**येन मिलितां[4] इति । परस्परानुप्रवेशादित्यर्थं** व्याचष्टे—**परस्परमिति ।** एकस्य शब्दस्य वाय्वात्मत्वं न सम्भवतीत्यत आह—**शब्दस्पर्शसमुदायश्चेति ।**

**उत्तरटीकाया** उपात्तभाष्यव्याख्यानत्वं दर्शयितुं व्याख्याबीजमाह—**उपचयमात्रेणेति ।** संघाताधिक्ये गुणोपचयोऽकिञ्चित्कर इति भावः । गुणोपचयस्यापि संहन्यमानोपचयात्मत्वात् तस्मिन् सति सङ्घातोपचयेन भवितव्यमित्याशयेनाह—**ततो व्याख्येति । अनुभवविरोधादागमविरोधाच्च कथं यस्तु**

P. 516-5 **ब्रूत** इति शङ्केत्याशंक्य, व्युत्थितस्येयं शङ्केत्याशयेनाऽऽह—**अनुभवा[5]गमाविति ।**

---

१. अत्र टीकायां 'सिध्येत् द्रव्यद्वयमेव तद्विनाशकारणमिति' इत्यत्र 'सिध्येत् द्रव्यस्य द्वयमेव विनाशकारणमिति' इति शोधनीयम् ।

२. कल्पतरौ 'न च तत्र विद्यमानोऽप्यवयवविभागः द्रवत्वप्रयोजकः' इति पाठ इति ज्ञायते ।

३. अत्र टीकायां 'एवं व्यवस्थिते यथा सुवर्णद्रव्यं' इत्यत्र 'घृतद्रव्य'मिति शोध्यम् । 'एवं मृद्वा सुवर्णं वा' इति उपरि सत्वात् । इति बोध्यम् ।

४. कल्पतरौ येन मिलिताः इति पाठः शोधनीयः ।

५. एतेन कल्पतरौ 'अनुभवागमावनादृत्ये'ति पाठः ऊह्यते ।

नचान्तरेणापीति भाष्ये परमाणुषु गुणोपचये मूर्त्युपचयप्रसञ्जनं मूर्तिशब्दस्य गुणसङ्घातपरत्वे सति नानिष्टमिति शङ्कते—**गुणसङ्घातेति**। **साध्यसमत्वादिति**। घटादिष्वपि गुणोपचयहेतुकद्रव्योपचयानभ्युपगमेन सन्दिग्धतया पक्षसमत्वादित्यर्थः। **व्यधिकरणत्वादिति**। यथोक्तदर्शनस्य कार्यवृत्तित्वेन परमाणवः उपचितस्वरूपा इति पक्षावृत्तित्वादित्यर्थः। कार्यस्य गुणसङ्घातात्मत्वे सौगतमतप्रवेश इति भ्रान्तप्रलापमाशंक्य यत्किञ्चित्साम्यं सर्वसाधारणम्, यावत्साम्यं तु नास्माकमपीत्याशयेनाह—**सौगतमत इति**। P. 516-7 P. 517-1

सूत्रशब्दस्य सूत्रवाक्यपरत्वेन व्याख्याने स्वयमेव हेतुमाह—**सौत्रचशब्देति**। अनुक्तसमुच्चयार्थत्वाच्चशब्दस्येति भावः। व्यावर्त्यं दर्शयन्व्याख्याबीजमाह—**न तदुत्पाद्यत्वमिति**।

यत्तु द्रव्याधीननिरूपणत्वमपि शब्दगन्धादिषु नास्तीत्यव्यापकत्वं तुल्यमिति **परिमले** उक्तम्। **तच्चिन्त्यम्**[1]। द्रव्याधीननिरूपणत्वं हि द्रव्याकारव्यतिरिक्ताकारवत्तया अप्रतीयमानत्वम्, तच्छब्दादीनामप्यस्ति। आकाशकुसुमाद्याकारव्यतिरिक्ताकारवत्तया तेषामप्रतीतेः। तथा च भाष्यं—**द्रव्यगुणयोरग्निधूमयोरिव न भेदप्रतीतिरस्तीति**। शब्दगन्धादीनामाकाशकुसुमादिसमवायाभ्युपगमेन, सिद्धान्ते शब्दादीनामाकाशादिसूक्ष्मरूपत्वाभ्युपगमेन च तद्रूषितप्रतीतिविषयत्वस्यावर्जनीयत्वाच्च।

तदधीननिरूपणत्वे तदुत्पन्नत्वमेव नियामकं कुतो न भवेदित्याशयेन शङ्कते—**ननु न तादात्म्येनेति**। तादात्म्येन हेतुना न भवतीत्यर्थः। भ्रान्तस्य शङ्केति परिहरति—**अत आहेति**।

ननु सामानाधिकरण्यप्रत्यक्षमात्रेण कथं द्रव्यगुणयोरभेदसिद्धिः? तस्य तदनवगाहित्वादित्यतः पूर्वभाष्याभिप्रायं दर्शयन्, **शङ्कत इति** टीकाभिप्रायमाह—**शुक्लत्वमित्यादिना**। P. 517-6

---

१. परिमलं तु यथाश्रुताभिप्रायेण नेयम्।

२. अत्र टीकायां 'एवं गुणादयो न द्रव्याद्यनधीननिरूपणाः' इत्यत्र 'न' इत्यधिकम्, 'न हि' इत्युपक्रमे सत्त्वात्।

अयुतसिद्धौ पदार्थौ न सामानाधिकरण्यप्रतीतिविषयौ भिन्नत्वादित्यभिप्रेत्य P. 518-1 शङ्कते—**अयुतसिद्धत्वेति**। अयुतसिद्धत्वलक्षणसम्बन्धेऽपीत्यर्थः। अन्यतर-सम्बन्धिपारतन्त्र्याभाव उपाधिरिति परिहारतात्पर्यमाह—**स्वतन्त्रवस्तुनोरिति**। साधनाव्यापकत्वं दर्शयति—**द्रव्यतन्त्राश्रेति**। परेण गुणादीनां द्रव्याकारत्वा-नभ्युपगमादाह—**द्रव्यधर्मतयेति**। रूपादीनां रूपत्वादिधर्मयोगित्वात् कथ-माकारान्तरायोग इत्यत आह—**स्वातन्त्र्येति**।[1]

ननु **तामिमांमयुतसिद्धिमिति टीका** अनुपयुक्ता धर्मधर्मिभावस्यैवायुत-सिद्धितया अपृथग्देशत्वादिविकल्पस्य तद्विकल्पत्वायोगादित्यत आह—**भवेदि-यमिति**।

रूपघटौ न धर्मधर्मिणौ भिन्नत्वात् हिमवद्विन्ध्यवदित्युक्ते, अपृथग्देशत्वादि-P. 518-6 राहित्यमुपाधिरिति शङ्कते—**अथ भिन्नानामिति**। **तर्हि तानिति**। साध्य-व्यतिरेकप्रयोजकोपाधिव्यतिरेकानित्यर्थः। कथं तर्हि **तामिमामयुतसिद्धिमिति टीके**त्यत आह—**तदर्थेति**। **तदादिशब्दा**स्तत्प्रयोजनकपरा इति भावः। **प्रकारान्तरेणेति**। अपृथग्देशत्वं पृथग्गतिमत्त्वाभावरूपमित्यर्थः। द्वयोरप्यन्य-देशत्वं युतसिद्धिः, न त्वन्यतरस्येत्याशयमाह—**ताभ्यामन्य इति**। **द्वयोरिति** यत्, तत् अविभुनोः। **अन्यतरस्येति** यत्, तत् विभ्वविभुनोः मध्ये अविभुन इत्यर्थ इति भावः।[2]

**तथा चेत्यादिटीकायां** पाठक्रमोऽकिञ्चित्करः। किन्त्वार्थ एव क्रम इत्याशयेनाह—**अत्रेति**। **आत्मवृत्तिसंयोगाश्रयत्वं साध्य**मित्येवं व्याख्या-नस्य प्रयोजनमाह—**तथा चेति**। **यथाश्रुते त्विति**। आत्मनिरूपितसंयोगा-श्रयत्वस्यात्मन्यसम्भवेन घटादावेव वक्तव्यतया तत्रोपाधेरपि सत्त्वादित्यर्थः।

**सङ्गित्वस्य सम्बन्धित्वमात्ररूपत्वे कृत्स्नो हेतुर्गुणादौ व्यभिचारी स्यादि-**त्याह—**सम्बन्धित्वमात्रस्येति**। तर्हि सङ्गित्वमेव हेतुरस्त्वित्यत आह—P. 519-1 **एतावानिति**। **अभ्युपेत्यापीति**। तन्मते अजसंयोगभावेन युतसिद्धिलक्षणस्य परीत्या नाव्याप्तिरिति मनसि निधायेत्यर्थः। तथा च **टीकायामुक्तम्—नाभ्यु-पेतविरोधमावहतीति**।

---

१. 'स्वातन्त्र्यप्रयोजकधर्मायोगेन' इति कल्पतरौ शोध्यम्।

२. कल्पतरौ 'अविभुनोर्द्वयोर्विभ्वविभुनोस्तु' इति पाठः।

किं सामानाधिकरण्यप्रत्ययस्य तादात्म्यं विषयः, तदुपपादकश्च समवायः? किं वा समवाय एव तद्विषय इति विकल्प्य प्रथम**मेवंलक्षणेऽपीत्यादि-टीकायां** निराकृतम्। द्वितीयं शङ्कते—**स्यादेतदिति। वैशेषिकमते** समवायस्यातीन्द्रियत्वान्न प्रत्यक्षगोचरतेति परिहरति—**नेत्याहेति।** P. 519 3

समवायप्रत्यक्षत्वमतेऽपि न तद्गोचरत्वमिति वक्तुं **तद्विरुद्धार्थत्वादिति टीकया** समवाय**विरुद्धा**भेद**विषयकत्वा**दित्युक्तम्। तस्यासिद्धिं शङ्कते—**नन्विति।** शुक्लशब्दस्य निरूढलक्षणया सर्वत्र गुणिपरत्वमेवेत्यत्र युक्तिमाह—**शुक्लत्वमित्यादीति।** 'घटे शुक्लत्वं शुक्लता शुक्लिमे'त्यादिभावप्रत्ययान्तैरेव गुणाभिधानात्, घटस्य शुक्ल इति प्रयोगाभावेन शुक्लादिपदैर्गुणमात्रानभिधानाच्च गुणिनं लक्षयतीत्यर्थः।

ननु **टीकायां** द्रव्यगुणाभेदप्रत्यक्षस्य भ्रमत्वमाशङ्क्य, **सर्वाभावप्रसङ्गा-दिना** निराक्रियते, तदयुक्तम्। भेदप्रत्यक्षस्य भ्रमत्वेऽपि तत्प्रसङ्गतौल्यादित्या-शंक्य, नास्त्यत्र भेदप्रत्यक्षं 'घटतद्रूपे भिन्ने' इति लौकिकानां प्रतीत्यदर्शनात्। 'घटस्य शुक्ल' इत्यादिपरीक्षकव्यवहारस्य 'राहोश्शिर' इतिवदौपचारिकत्वात्। ततश्च भेदानुमानबलादेव प्रत्यक्षस्य भ्रमत्वमास्थेम्। तत्तु न सम्भवति। असिद्धिविरुद्धत्वयोरन्यतरापातादिति तदभिप्रायमाह—**अभेदप्रत्ययस्येत्यादिना।** P. 519-3

अनुमाने पक्षप्रसिद्ध्यर्थं च प्रत्यक्षमुपजीव्यमिति दर्शयितुं **गुणादिसद्भावे तद्भेदे चेति टीका।** तत्र तद्भेद इत्यत्र गुणगुणिभेद इति नार्थः। तत्प्रत्यक्षाभावात्। किन्तु गुणादीनां कर्मादिषु यो भेदस्तत्रेत्यर्थः।

**टीकायां—कारणातिरेकेणेति।** कारणात् पृथग्भावेन कार्यस्यासत्त्वा-दित्यर्थः।

किं कार्योत्पत्त्यपेक्षया अन्यस्समवायः? उतानन्यः? आद्येपि स किमनित्यः? उत नित्यः? इति विकल्प्य क्रमेण निराकृतं **सम्बन्धि-द्वयेत्यादिटीकया।** द्वितीयं शङ्कते—**नन्विति। पूर्वपक्षिण एव ग्रन्थ इति।** P. 520-1 न चेत्यंशोऽपि पूर्वपक्षिण एव न सिद्धान्तिन इत्यर्थः। अस्मिन् पक्षे निराकरणहेतूपन्यासबलादेव निराकरणप्रतिज्ञालाभ इत्याशयेनाऽऽह—**एवं हीति।** P. 520-1

---

१, अत्र 'प्रागसिद्धस्यालब्धात्मकस्य' इति भाष्यपाठः।

P. 520-2 प्रथमपक्षोक्तं दूषणं परिहरन् शङ्कते—**अथेति**। एवं तर्ह्यपृथगुत्पत्तिलक्षणाऽयुतसिद्धिर्न स्यादिति परिहरति—**तत्राहेति**। मुख्यायुतसिद्ध्यभावेऽपि गौणी साऽस्त्विति शङ्कते—**नन्विति**।

**मा भूदित्यादिटीकया** अयुतसिद्धिलक्षणस्य किं दूषणमुक्तमित्यतस्तात्पर्यमाह—**एवंभूतेत्यादिना**[1]। परस्पराश्रयं प्रकटयति—**कार्यकारणेत्यादिना**।

**अप्राप्तिपूर्वकेति**। अत्र **त्रीणि लक्षणानीति पाठे** स्पष्ट एवार्थः। केषुचित्पुस्तकेषु तु **अप्राप्तिपूर्विका प्राप्तिरित्येकं लक्षणम्**। **अन्यतरकर्मजोभयकर्मजप्राप्त्योरन्यतरेत्यपरं युतसिद्धिलक्षणम्**। **तद्भावश्च न कार्यकारणसम्बन्धस्य भवतीति पाठान्तरं** दृश्यते। तत्र, **कर्मजा प्राप्तिरित्येव** लक्षणं विवक्षितम्। कर्मद्वैविध्यप्रकटनाय तु तथा निर्दिष्टमिति ध्येयम्। **अन्यतरकर्मजेत्यादिलक्षणदूषणाय संयोगजोऽपीति टीका**। तदभिप्रायमाह—

P. 520-12 **वैशेषिकैरिति**। **तत्क्षण एवेति**। पट उत्पन्ने सत्यनन्तरक्षण एवेत्यर्थः। **पटसत्ताक्षणे** पटोत्पत्तिक्षणे।

P. 521-1 प्रथमलक्षणं निर्दुष्टमिति शङ्कते—**तर्हीति**। **असति प्राप्तरीति**। नच समवायनित्यत्वपक्षे पूर्वक्षणे प्राप्तर्यसत्यपि जन्मसमय एव समवायरूपा कारणप्राप्तिरुपपद्यत इति **परिमलोक्तं युक्तम्**। न समवायमात्रं तत्प्राप्तिः। अतिप्रसङ्गात्। किन्तु तन्निरूपितः समवायस्तत्प्राप्तिः। स च निरूपकसिद्ध्यनन्तरभावीति तस्य पूर्वक्षणे सत्त्वावश्यंभावादिति ध्येयम्।

**नापि संयोगस्येत्यादिभाष्यं** युक्त्यन्तरपरत्वेन व्याचष्टे—**टीकायामपि च सम्बन्धीति**। अस्तु, प्रस्तुते किमायातमित्यत आह—**टीकायां—संयोगस्य चेति**। भेदाभेदाभ्यामनिर्वचनीयस्य संयोगस्य स्वीकारात् भाष्यगतशङ्कानुपपत्तिरित्याशंक्य, **पूर्वभाष्यतात्पर्यानभिज्ञस्य** शङ्केत्याह—**टीकायां—विचारासहत्वेनेति**। **स्वरूपबाह्यरूपाणां सत्यत्वमभिमतमिति** भ्रमं व्युदसितुं

P. 521-7 **भाष्यभावमाह टीकायां—तत्तदिति**। **(तदेतदिति)**। **इति यत्तदेतदुपा-**

---

१. कल्पतरौ 'एवंभूते'ति वाक्यात्पूर्वं 'पूर्वमप्राप्तिः, ततस्संयोगः, इत्यप्राप्तिसंयोगौ' इति शुद्धः पाठः।

त्तभाष्योक्तमित्यर्थः । विशेषाश्चावस्थाश्चेति विग्रहः । टीकायां—स्वगत-क्रियाभेदापेक्षयेति वेदाध्ययनक्रियापेक्षया श्रोत्रिय इत्यर्थः ।

निदर्शनान्तरमिति । आन्ध्रा[1] एकत्वव्यञ्जिकां यां रेखां कुर्वन्ति, सैव दक्षिणत आरभ्य गणनायां द्वितीयस्थानगता सती दशेति, तृतीयस्थानगता सती शतमिति, चतुर्थस्थानगता सती सहस्रमिति, पञ्चमस्थानगता सती दशसहस्रमित्येवमादिभेदप्रत्ययमनुभवतीत्येवंरूपं निदर्शनान्तरमाहेत्यर्थः । P. 521-9

तथा च विष्णुपुराणम्—

स्थानात्स्थानं दशगुणमेकस्मात् गण्यते द्विज ।
ततोऽष्टादशमे स्थाने परार्धमभिधीयते ॥ इति ॥ (६-३-४)

तथाऽण्वात्ममनसामित्यादिभाष्यं व्याचष्टे टीकायां—अपि चादृष्टवदिति ।

सम्बन्धमात्रं संश्लेष इति मत्वा शङ्कते—नन्विति । घट्टनात्मकः सम्बन्धविशेषः संश्लेषो न सम्बन्धमात्रं इति परिहरति—अत आहेति । संग्रहस्य यथोक्तरूपत्वे प्रत्यक्षं प्रमाणमित्याशयेनाऽऽह—एकाकर्षण इति । P. 521-3

सिद्धान्ते स्थूलतमपृथिव्या वस्तुत्वाभावादाह—टीकायां—भवन्मत इति । तथा च भवन्मते वस्तुभूतापीति भाष्यार्थ इति भावः । अवस्थानाशेऽपि संयोगनाशाभावं दृष्टान्तेन दृढयति—यथेति । न नश्यन्तीति । परैरपि तन्नाशानभ्युपगमादिति भावः । P. 522-2

॥ इति उभयथापि न कर्माधिकरणम् ॥

---

1. अनेन ग्रन्थकारोऽयं आन्ध्र इति सूच्यते ।

## ॥ अथ समुदायाधिकरणम् ॥

सू०॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

सू०॥ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥१९॥

सू०॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

सू०॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

सू०॥ प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

सू०॥ उभयथा च दोषात् ॥ २३ ॥

सू०॥ आकाशे चाविशेषात् ॥ २४ ॥

सू०॥ अनुस्मृतेश्च ॥ २५ ॥

सू०॥ नासतोऽदृष्टत्वात् ॥ २६ ॥

सू०॥ उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

बौद्धादिप्रक्रियाया अतिगहनत्वात् तद्व्याख्यया निर्विघ्नेन परिसमाप्त्यर्थं P. 523-1 **गणाधिपतिं** स्तौति—**अभिमतेति** । **वितृषि** तृष्णारहिते । **गण्डभेदेन** गण्डस्थलेन । **जनतायां**–जनसमूहे । **नूनमित्युत्प्रेक्षा** ।

**वैशेषिका निरन्वयनाशमुपयन्तीत्यनेन** स्वमते निरन्वयनाशाभाव उक्तः । तमुपपादयति—**अभेदे हीति** । **कार्यनाशेऽपीति** । कल्पितकार्यावस्थानाशेऽपि, कार्यं कारणरूपेण तिष्ठतीत्यर्थः । **निमित्ताभावाविशेषादिति** । द्व्यणुकारम्भकपरमाणुसंयोगे अदृष्टादेर्निमित्तत्वस्य निराकृतत्वादिति भावः । **जनकत्वमिति** । सम्भावितमिति शेषः ।

**टीकोक्तहेतोर्भाष्यगतप्रतिपत्तिभेदव्याख्यानत्वात् तद्गतप्रतिज्ञायामन्वय** इत्याशयेनाह—**वादिबुद्धीति** । **वादिनः** आदिबुद्धशिष्याः सौत्रान्तिकादयः

---

१. वादिवैचित्र्यादिति टीकोक्तहेतुः ।

२. अनेन वादिबुद्धिभेदात् बहुप्रकारः इति कल्पतरुपाठः उन्नीयते ।

तेषां बुद्धिभेदात्प्रस्थानभेदः। तत्र **सौत्रान्तिकाः वैभाषिकाश्च** बाह्यमपि वस्त्वस्तीति प्रतिपन्नाः। तत्रापि **सौत्रान्तिका** विज्ञानाकारानुमेयं बाह्यमित्याहुः। **वैभाषिकास्तु** प्रत्यक्षमेव तदिति। **योगाचारास्तु** विज्ञानमात्रास्तित्वं प्रतिपन्नाः। **माध्यमिकास्तु** शून्यमेव तत्त्वमिति। तदेतद्दर्शयतीत्याह—**बहुप्रकारत्वमेवेति**। P. 523-6

एकरूपे गुरूपदेशे न प्रतिपत्तिभेदः सम्भवतीति **टीकाभिप्रायमाह—अत्रभवतामिति**। बुद्धस्य विज्ञानास्तित्वादावप्यवान्तरतात्पर्यसद्भावे प्रमाणमुक्तं **यथोक्तमित्यादिना**। तद्व्याचष्टे—**बोधी बुद्ध इति**। **प्राण्यभिप्रायवशानुसारिण्यस्सत्यो भिद्यन्त इत्यन्वयः। अगाधो गम्भीर इति**। मध्यमाधिकारिबोधयोग्यप्रकार इत्यर्थः। **उत्तानस्तु** प्रकारो हीनबुद्धियोग्य इत्याह—**स्थूलेति**। P. 523-10

देशनानामेवंभूतप्रकारात्मत्वेन तद्धेतुकत्वं न सम्भवतीत्यतः इत्थंभावे तृतीयेत्याशयेनाह—**तद्रूपेणेति**। तदेव रूपद्वयं दर्शयितुं **क्वचिच्चेति पादं** व्याचष्टे—**क्वचिद्ग्रन्थप्रदेश इति**। **क्वचिच्चेत्यनेन** साक्षादेव शून्यताप्रतिपादिन्योऽपि काश्चित् देशनाः उत्तमाधिकारविषयिण्य इति सूचितम्। **तत्तात्पर्यवतीति**। तत्र महातात्पर्यवतीत्यर्थः।

**यद्यपीत्यादिटीकोक्तमवान्तरभेदं** व्यनक्ति—**प्रत्ययेति**। **टीकायां—चित्तचैत्तानाहेति**। **चित्तावस्थारूपवेदनास्कन्धोक्त्या चित्तमप्युक्तमिति** भावः। **रूपविज्ञानेत्यत्र** कर्मकरणव्युत्पन्नं **रूपशब्दद्वयं** तन्त्रेण निर्दिष्टमित्यभिप्रायेण **रूप्यन्ते एभिरिति टीका**। तत्र करणव्युत्पत्तावपेक्षितं दर्शयति—**विषया इति शेष इति**। P. 524-1

---

१. कल्पतरौ 'शून्यतैव अद्वया, तल्लक्षणा, तत्तात्पर्यवती अभिप्रेत्यर्थः।' इति शुद्धः पाठः। शून्यताया अद्वयात्मत्वादेव बौद्धानामद्वयवादिन इति संज्ञा अमरसिंहेन कथिता। बौद्धानां अद्वैतं, न द्वैतमद्वैतमिति तत्पुरुषसमाससमस्यमानाद्वैतपदबोध्यम्। वैदिकशिरोमणीनामौपनिषदानामद्वैतं, न द्वैतं यत्र तदद्वैतमिति बहुव्रीहिसमाससमस्यमानाद्वैतपदबोध्यम् द्वैताभावोपलक्षितात्मस्वरूपमिति विद्वांसो विदांकुर्वन्तु। द्वैताभावापेक्षया तदुपलक्षितात्मस्वरूपात्मकाद्वैतपदार्थस्याखण्डस्य पार्थक्यादेव गौडपादकारिकायां वैतथ्यप्रकरणापेक्षया पार्थक्यमद्वैतप्रकरणस्य। अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वादिति च अद्वैतसिद्धिकारोक्तिः।

P. 524·1 **असंहतानामिति**। न चास्मिन् पक्षे आध्यात्मिकत्वानुपपत्तिः। इन्द्रियसम्बन्धद्वारा चित्तनिरूप्यत्वेन चित्ततया तदुपपत्तेरिति भावः। अहमित्यालयविज्ञानस्य रूपादिविषयत्वायोगादभेदानुपपत्तिरित्यतश्चशब्दाध्याहारेण व्याचष्टे—**अहमिति**। वेदनास्कन्ध इत्यस्य द्विरुच्चारणं व्यर्थमित्यत आह—**वेदनास्कन्ध इति भाष्योपादानमिति**।

**अनुपलब्धिलिङ्गकमिति**। कार्योत्पादानुगुणकारणसमवधानाभावलिङ्गकं कार्यानुत्पादानुमानमाहेत्यर्थः। **एकां व्याप्तिमुक्त्वेति**। व्यापकाभावेन व्याप्याभावानुमानार्थमेकां व्याप्तिमुक्त्वा, तदनुगुणकारणसमवधानमपि तत्रास्तीति तदभावोऽसिद्ध इति शङ्कानिराकरणाय, तद्व्यापकाभावेन तदभावं दर्शयितुं, तदनुगुणकारणसमवधानस्य चेतनप्रेक्षया साकं द्वितीयां व्याप्तिमाहेत्यर्थः।

एवं कार्योत्पादस्य व्यापकं तदनुगुणकरणसमवधानम्, तस्यापि व्यापकं चेतनप्रेक्षाधीनत्वम्। ततश्च व्यापकव्यापकस्य सुतरां व्यापकतया तदभावेन तदभावसिद्धौ, न केवलं पराभिमतकार्योत्पादासिद्धिः, किन्तु तद्द्वारा स्वाभिमतचेतनप्रेर्यत्वसाधकव्याप्तिसिद्धिरपीति दर्शयितुं—इति **कार्योत्पत्तिरिति टीका**, तां व्याचष्टे—**या कार्योत्पत्तिरित्यादिना**। अस्यां व्याप्तौ प्रयोगः प्रदर्श्यत इत्याह—**अत्र प्रयोग इति**।

P. 524·7

**टीकायां—इन्द्रियादीति**। इन्द्रियलिङ्गादीनां रूपादिवह्न्यादिविषयसम्बन्धे सतीत्यर्थः। **टीकायां—न खल्विति**। इन्द्रियादीनां विषयसंबन्धे सत्येव चित्तस्य वृत्तिविशेषात्मकमभिज्वलनं भवतीत्यभ्युपगतत्वेन विषयादिसिद्धिमन्तरेण तदयोगादित्यर्थः।

ननु सिद्धान्ते चिरातीतादपि कर्मणो यथा स्वर्गादिकमुत्पद्यते, तथा चिरातीतयापि चित्ताभिदीप्त्या सङ्घातो जायतामित्याशंक्य, मन्मते कर्तुर्जीवस्य नियन्तुरीश्वरस्य च स्थिरत्वात् तदुत्पादनसम्भवेऽपि, त्वन्मते तदभावान्नैवमित्याह—

P. 525·7 **टीकायां—अस्मद्राद्धान्तवदिति**।

नन्तु कार्यघटने कर्तैवापेक्षितो न तु तस्य स्थिरत्वमपि, व्यर्थत्वादित्यत आह **टीकायां—कारणविन्यासेति**। **टीकायां—प्रतिसन्धातृ** समवधापयितृ

भविष्यतीत्यर्थः। टीकायां—कर्मानुभवेति। पुण्यपापात्मकं कर्म, रूपाद्यनुभवः, तयोर्वासनाश्चेत्यर्थः।

तत्कार्यं प्रति हेतुरित्यपि द्रष्टव्यमिति। न चैवं व्यापारवदाश्रय इति विशेषणं व्यर्थम्, तत एव कुम्भस्य कुम्भकारव्यापारत्ववारणादिति वाच्यम्। नेदमवान्तरव्यापारमात्रस्य लक्षणं, तस्येह प्रसक्त्यभावात्। किन्तु कारणप्रवृत्तिरूपस्य कारणसमवेतव्यापारस्य। तत्र च तद्विशेषणाभावे, यागादिजन्ये तज्जन्यस्वर्गादिजनके तदसमवेते अपूर्वादावतिव्याप्तिरिति तस्यावश्यकत्वादिति भावः। निरुद्धगतिकः शङ्कते—अथेति॥ १८॥ P. 525 4

ननु सङ्घातनिमित्ताभावात् सङ्घातो न स्यादिति पूर्वसूत्रोक्ते परमतदूषणे एतत्सूत्रभागभाष्याभ्यां न कश्चिदपि परिहारोऽभिहितो दृश्यत इत्याशंक्य, सामर्थ्यबलादेवाविद्यादीनां सङ्घाताक्षेपकत्वसम्भवान्न निमित्तापेक्षेति सूत्रभागभाष्ययोरभिप्रायं दर्शयितुमयमर्थ इत्यादिटीका। तत्र प्रतीत्यसमुत्पादलक्षणमुक्तं बुद्धेनेत्युक्त्वा, सूत्रद्वयं पठितम्। प्रतीत्यसमुत्पादश्च, प्रत्ययोपनिबन्धपहेतूपनिबन्धरूपेण द्विप्रकारः। तत्र तस्य केन सूत्रेण लक्षणमुच्यत इत्यतो विविच्य दर्शयति—प्रत्ययोपनिबन्धस्येति। P. 526-1

नन्वेकेन धर्मशब्देन कथं कार्याणां कारणानाञ्च परामर्श इत्याशंक्य, कर्तृकर्मव्युत्पन्नयोरुभयोर्धर्मशब्दयोस्तन्त्रेण निर्देशादित्याशयेनाऽऽह धत्त इति। उत्पादादनुत्पादाद्वेत्येतदन्वयव्यतिरेकप्रदर्शनपरतया व्याचष्टे-यस्मिन् सतीति। तदिति, तस्येति च, तच्छब्दद्वयेन यच्छब्दार्थयोर्द्वयोरपि परामर्शात्, योग्यतानुसारेण कार्यं कारणं चेत्यनयोरन्वयः।

विभजत इति। सूत्रशेषेणेति शेषः। तन्त्रनिर्दिष्टधर्मशब्दार्थयोर्मध्ये केनांशेन कोऽर्थो विभक्त इत्यतो विविच्य दर्शयति—धर्मस्थितितेत्यादिना। अनुपलब्धिबाधितत्वान्न चेतनापेक्षेति परिहरति—तत्राहेति। उपनिबन्ध इति। जनकतालक्षणस्वभाव इत्यर्थः। P. 526-6

हेतूपनिबन्धे उदाहरणमिति। अनेन, प्रतीत्यसमुत्पादस्य योऽयं हेतूपनिबन्धः प्रकारः स उदाह्रियत इति टीका योजिता। बीजादीनां

१. परिमलनिरासोऽयम्।

P. 526-13 **चैतन्यनिराकरणं** प्रकृतासङ्गतमित्यतो विकल्प्य योजयति—**चैतन्यमिति**। कार्यमात्रं प्रति निमित्तत्वेनोच्यमानं चैतन्यमित्यर्थः ।

नन्वङ्कुरादेः पुष्पपर्यन्तस्य फलं निर्वर्तयामीति ज्ञानप्रसक्तिरेव नास्ति। पुष्पस्यैव फलनिर्वर्तकतया अङ्कुरादेस्तद्धेतुत्वाभावात्। तथा च कथं तन्निषेध इत्यत आह—**फलेऽपीति**। प्रमाणाभावादसत्त्वमिति दर्शयति—**अङ्कुरादीति**। कारणसमुदायस्य कार्येण सम्बन्धः प्रत्ययोपनिबन्ध इति दर्शयितुं, **प्रत्ययो हेतूनामित्यादिटीका**। तत्र **प्रत्ययशब्दस्य** कथं भावार्थकत्वमित्यत आह—**प्रत्ययेति**। **अच्प्रत्ययान्तस्येति**। 'एरजि'ति सूत्रविहितेत्यर्थः। **अयमानानां** परस्परं प्रति गच्छतां मिलतामित्यर्थः ।

P. 526-10 प्रत्ययोपनिबन्धमुदाहरति **टीकायां—षण्णां धातूनामित्यादिना**। **सङ्ग्रहकृत्यमिति**। अवयवान्तरवशीकरणकार्यमित्यर्थः। **स्नेहयतीति**। द्रवीभावाभावे वायुना तदवयवानां नोदनानुपपत्त्या उच्छूनतानुपपत्तेरिति भावः। **परिपाचयतीति**। अवस्थान्तरापत्त्यभावे आकारवैलक्षण्यायोगादिति भावः। **परिणाममिति**। बाल्याद्यवस्थापरिणामाभावे रूपरसादिवैलक्षण्यायोगादिति भावः। **बीजे रोहतीति**। बीजे सङ्गति[ते] सतीत्यर्थः।

पृथिव्यादिभिरङ्कुरोत्पत्तावपि न चैतन्यापेक्षेत्याह **टीकायां—पृथिवीधातोर्नैवमित्यादिना**। **अस्य**। **आध्यात्मिकप्रतीत्यसमुत्पादस्य**। **हेतूपनिबन्धः तत्रेति** टीकान्वयभ्रमं वारयितुमाह—**उच्यत इति वाक्यशेष इति**। तथा च, **तत्रेत्यस्य** तयोर्मध्य इत्यर्थ इति भावः। अध्याहारेण **टीकां** योजयति—**एतदारभ्येति**। नन्वविद्यादीनां चेतनान्तराधिष्ठितत्वाभावः कथमवगत इत्याशङ्क्य, प्रतीत्यसमुत्पादशब्दार्थं दर्शयन्ननुपलब्ध्या तदभावमाह **टीकायाम्—इदं प्रतीत्येति**।

ननु **नामरूपाश्रयत्वाच्छरीरं नामरूपश्चेत्तस्य** षड्धातुसमुदायजन्यत्वात् कथं विज्ञानधातुमात्रस्य तदभिनिर्वर्तकत्वमित्यत आह—**तस्य चेति**। P. 527-3 **तस्य** शरीरस्य, या **सूक्ष्मावस्था** योनौ निषिक्तस्य रेतसः शोणितसम्बन्धेन **कललबुद्बुदाद्यवस्था,** दधिसंसृष्टस्य तप्तस्य पयस इव वृक्णतावस्था कलिलावस्था, अन्तर्गर्भितघटांशस्य ससूक्ष्मांशस्य तद्व्याप्त्यवस्था बुद्बुदावस्था। घटां-

शस्य बुद्बुदात्मतापन्नविरलांशैकलोलीभावः पेश्यवस्थेत्यादिशब्दार्थः। एवं रूपा अवस्था नामरूपं विवक्षितम्। तद्रूपमङ्कुरं योऽभिनिर्वर्तयतीत्यर्थः। P. 527-5
द्रव्यादिधातूनां तज्जनकत्वे सत्यपि, विज्ञानधात्वनधिष्ठितत्वे योनौ निषिक्तमपि रेतः पूयेन्न शरीरभावमापद्येतेति, प्राधान्याद्विज्ञानधातोरारम्भकत्वव्यपदेश इति भावः।

**सास्रवश्चेति** चशब्दस्य **विज्ञान**मित्यत्रान्वयं दर्शयन्ननुषङ्गेण योजयति—**विज्ञानतत्त्वंश्चेति**। **ते चाविद्यादय इति** भाष्योक्तमविद्यादिस्वरूपं दर्शयितुं—**तत्रैतेष्वित्यादिटीका**। तदभिप्रायमाह—**देहाकारेति**। कर्तृत्वभोक्तृत्वाद्यालयविज्ञानधात्वपेक्षया **विज्ञानस्य** भेदं दर्शयितुं **वस्तुविषयेति** विशेषणमित्याशयेनाऽऽह—**नालयत्वादीति**। P. 527-7

विज्ञानस्य पृथिव्यादिजनकत्वाभावात् व्यवहितान्वयमाह—**विज्ञानाद्धेतोरिति**। पृथिव्यादिषु **नामशब्दो** लाक्षणिक इत्याह—**नामाश्रयत्वाच्चेति**। रूपशब्दोऽपि लाक्षणिक इत्याह—[3]**सितासितादीति**। **धाप्रत्ययस्येति**। 'एकाद्ध' इत्यत्र, 'ध' इति षष्ठ्यन्तपदेन धाप्रत्ययस्य निर्दिष्टत्वादिति भावः। भिन्नयोरैकध्यं वा कथमित्यत आह—**कार्यकारणे इति**।

**जातेरिति**। देहोत्पत्तेरित्यर्थः। **करणवृन्दस्येति**। प्राणादीनां मनोऽन्तानामिन्द्रियाणामित्यर्थः। **टीकायां—तद्धेतुक इति**। धर्माधर्महेतुकः शरीरप्रादुर्भाव इत्यर्थः। **उपक्लेशाश्चोपायाः**, ते च भाष्ये **एवञ्जातीयका** इत्यनेन गृह्यन्त इति टीकान्वयमभिप्रेत्याह—**उपक्लेशा इति**।

**टीकायां—हेतूपनिबन्धे चैतन्यानपेक्षोक्तिरभ्युपगमवादेन**। चेतनेन विना एकैकस्यापि कारणस्य कार्यजननानुकूलव्यापारायोगादित्याशयेनाह—**अङ्गीकृत्येति**। P. 528-3

---

१. कल्पतरौ 'कललबुद्बुदादिकाक्रान्तनामरूपम्' इत्यत्र क्रान्तेत्यधिकमिति भाति।

२. अत्र कल्पतरौ 'पुद्गलसंज्ञा वृद्धिह्राससंज्ञेत्यर्थः।' इति शोधनीयम्। पुद्गलसंज्ञा इत्यस्य वृद्धिह्राससंज्ञेति विवरणम्।

३. कल्पतरौ तु सितादीति पाठो दृश्यते। कल्पतरौ 'विकृत्य' इत्येतत् स्वीकृत्य इति शोधनीयम्।

P. 528-4 **टीकासन्दर्भसूचितं सूत्रव्याख्यानं स्पष्टयति—चेतनमिति** । तर्हि सूत्रे हेतूपनिबन्धे दूषणानभिधानान्न्यूनतेत्याशंक्याह—**हेतूपनिबन्धस्त्विति** । ननु अङ्कुरस्य चेतनेन विनाप्युत्पत्तिदर्शनात् तद्वदेव देहोत्पादोऽपि भविष्यतीति देहोत्पत्तावुपलभ्यमानोऽपि चेतनो न हेतुरिति शङ्कते—**नन्विति** ।

किमङ्कुरे चेतनस्य व्यतिरेकनिश्चयान्न हेतुत्वम् ? किं वा तद्व्यतिरेकेण कार्यव्यतिरेकादर्शनात् ? नाद्य इत्याह—**तत्रापीति** । द्वितीयमाशंक्य निराकरोति—**न चेति** । **संलग्नज्ञानेति** । पूर्वज्ञानसंलग्नेदानीन्तनज्ञानेत्यर्थः । तर्हि P. 529-1 कारणाभावे गर्भस्थस्य प्रथमज्ञानं कथं स्यादित्यत आह—**शुक्रादीति** । यदि च प्रत्यक्षेण कारणताग्रहे अन्वयव्यतिरेकापेक्षायामपि, इदानीन्तनज्ञानदृष्टान्तेन जन्माद्यज्ञाने ज्ञानान्तरजन्यत्वानुमाने न तदपेक्षा, तर्ह्यङ्कुरेऽपि घटादिदृष्टान्तेन चेतनकारणकत्वानुमानान्न तदपेक्षेति तुल्यमिति भावः ।

**ततश्चेति** । यतस्सङ्घातस्याप्रयोजकत्वं कार्यं प्रत्यकारणत्वम्, ततः, 'कार्यं संहन्तृजन्यं, संहतजन्यत्वा'दिति नानुमानमित्यर्थः । **अनपेक्षा इति** । परस्परमनपेक्षा इत्यर्थः । अनपेक्षितस्यापि सङ्घातस्य कारणबलादुत्पत्तिरिति परिहरति—**तत्राहेति** । उक्तमर्थं टीकाव्याख्यानेन दर्शयति—**उपसर्पणमिति** । **कारणान्तरापेक्षेति** । कारणान्तरमेलनमित्यर्थः । अर्थसिद्धं मेलनं न निवारयितुं शक्यमिति परिहरतीत्याह—**न द्वितीय इत्याहेति** । **उपसर्पणप्रत्ययाधीनौ परस्परसन्निधानोत्पादौ येषां** क्षित्यादीनामिति विग्रहमभिप्रेत्याह—**परस्परं सन्निधानमिति** ।

नानाकार्याणि किं सजातीयान्यापाद्यंते ? उत विजातीयानि ? नाद्य इत्याह—**बीजेन हीति** । द्वितीयं शङ्कते—**नन्विति** । हेतूनां परस्परनैरपेक्ष्येण कार्यजननसमर्थत्वे प्रत्येकं सामग्रीत्वमपि कुतो न स्यादित्यत आह—**अस्मन्मत इति** । आर्थिकमपि मेलनं यावतां तावतामेकसामग्रीत्वं, दृष्टानुरोधित्वात् कल्प-P. 529-15 नाया इति भावः । **अन्ये च बीजक्षणा इति** । भक्षणाद्युपयुक्ता इत्यर्थः ।

---

१. कल्पतरौ 'कुसूलनिहितबीजादिभ्यः' इति पाठः ।

२. अत्र कल्पतरौ 'परस्परसंनिधानमप्रयोजकम्' इति पाठः ।

३. कल्पतरौ 'विजातीयकार्यजन्म' इति शुद्धपाठः ।

**विमतेति** । अङ्कुरोपयोगिबीजसन्तानान्तःपातीत्यर्थः । **अनन्तरजन्येति** । P. 529-18 अनन्तरजनयितव्यबीजक्षणजनन इत्यर्थः । योग्यताबलादेव **स्वस्वेति** वीप्सालाभमाश्रित्याह—**अनुषङ्ग इति** । नन्वङ्कुरफलशिरस्कबीजक्षणपरंपरा क्षेत्र एव, न कुसूल, इति, कथं कुसूलस्थबीजस्य कृषीवलस्य कृतित्वमिति शङ्कते—**नन्विति** ।

कुसूले अङ्कुरशिरस्कबीजक्षणानुत्पत्तौ को हेतुः ? किं ततः पूर्वमेव बीजमुद्धृत्य क्षेत्रे उप्तमिति ? किं वा देशभेदोऽपि हेतुरिति ? **नाद्यः** । पुनश्च मान[मास]मात्रं कुसूल एव निक्षेपे तावत्क्षणपरम्परोत्पत्त्या अङ्कुरावश्यम्भावादित्याह—**तत्राहेति** । द्वितीयं निराकरोति—**अनपेक्षस्येति** । **कार्यमिति** प्रथमान्तं पदम् । **अन्यथाऽनुपपद्यमानमित्येतत्** तद्विशेषणमिति दर्शयन् व्याचष्टे—**यत्कार्यमिति** ।

ननु कार्यस्यासत्त्वे तत्सामर्थ्यस्याप्यसत्त्वात् कथं सामर्थ्यस्य जनकत्वाभ्युपगम इत्याशंक्य, साध्याहारं व्याचष्टे—**यदि जनकमिति** । अविद्यमानं, जन- P. 530-2 कमेव न भवति, यदि वा जनकं, तदानीमपि स्वसामर्थ्येनैव जनकं स्यात् । तच्चाविद्यमानस्य न सम्भवतीत्यर्थः ।

**किमङ्ग पुनः क्षणिकेष्विति** भाष्यं योजयित्वा, **भोक्तृरहितेष्विति** विशेषणं योजयति टीकायां—**भोक्तुर्भोगेनापीति** । **आश्रयाश्रयिशून्येष्विति** विशेषणं योजयितुमपि च **बहव** इत्यादिटीका । तत्र घटतद्रूपयोरेकसमयभावित्वेऽपि यथा घटस्य तद्रूपास्पदत्वं, तथा भावस्याप्युपकारास्पदत्वं कुतो न भवेदित्याशंक्य, नाश्रयत्वनिषेधपरा **टीका** । किं तूपकारस्य सतो नाश्रयो भाव इत्येवमुपकार[राश्रय]त्वनिषेधपरा । तन्निषेधश्च तल्लक्षणाभावादित्याशयेनाऽऽह—**यो ह्येकस्मिन्निति** ।

नन्वेकस्यापि क्षणस्य पूर्वोत्तरभागयोरनुपकृतत्वोपकृतत्वे स्याताम् । तथा च न तस्य स्वभावत्वमित्यत आह—**तत्र तु मत इति** । **अणुविशेषणमिति** । P. 530-8

---

१. कल्पतरौ 'अङ्कुरोपजननोपयोगिबीजक्षणम्' इति पाठान्तरम् ।

२. कल्पतरौ 'तत्कृतमुपकारं' इत्येतत् 'अन्यकृतमुपकारं' इति शोध्यम् ।

३. अत्र कल्पतरौ 'आश्रयाश्रयिभूतेष्वित्येतदणुविशेषण'मिति पाठः, आश्रयः उपकारकः । आश्रयी उपकार्यः इत्यर्थः। अत्र कल्पतरौ 'संबन्धनीयः' इत्यनन्तरं, 'आशया-

P. 530-9 कारणान्तरकृतोपकारस्य समवायिकारणनिष्ठत्वौचित्यादिति भावः। **भावप्राधान्यमिति**। अन्यथा अणूनामाश्रयित्वनिवृत्त्यलाभादिति भावः। पूर्वभाष्यगतं पाठान्तरं व्याचष्टे—**आशयेति**।

**टीकायां—हेतुरिति**। केवलो हेतुः स्वसामर्थ्यादेव कार्यसङ्घातं करिष्यतीत्यर्थः। **तद्विशदयतीति**। **नासंहतस्य सामग्रीत्वमिति** प्रागुक्तदूषणस्य स्थितत्वोद्घाटनेन तदज्ञानेन शङ्केत्यस्य विशदीकरणादिति भावः। तथा च केवलात् हेतोः कार्यं नोपजायत इति इदं दूषणं तिष्ठतु तावदिति टीकार्थ इति भावः।

**स खल्वित्यादिटीकायां—अविद्यादिसन्ततिमध्यवर्तिनो धर्माधर्माख्यसंस्कारसन्तानरूपस्य सङ्घातस्य कारणान्तरमनपेक्ष्य सुखदुःखजनकत्वे तद्व्यवस्थानुपपत्तिः। अपेक्ष्य जनकत्वे च प्रत्ययोपनिबन्धत्वव्याघात** इत्युक्तम्। तस्य प्रयोजनमाह—**अदृष्टादिति**।

**टीकायां—तस्मादनेनेति**। शङ्कावादिनेत्यर्थः। स्वयमेव विवरणे,

P. 531-2 बीजमाह—**इतरथा हीति**। भोक्तुर्भोगाभेदे, किं स एव तमेव प्रति भोगः? किं वा अन्यं प्रतीति विकल्प्य, प्रथममात्माश्रयसूचनेन निराकृत्य, द्वितीयं

---

श्रयिभूतेष्विति तु पाठे भोक्तृविशेषणम्। आशयश्चादृष्टमिति' इति वाक्यम्। तदनन्तरं 'आश्रयाश्रयिशून्येष्वित्यत्र च भावप्राधान्यम्। आश्रयाश्रयित्वशून्येष्वित्यर्थः' इति वाक्यम्। इति आनुपूर्वी ज्ञेया। लेखकप्रमादात् कल्पतरौ वाक्यविपर्यासस्संजात इति ऊह्यते। अन्यथा यथास्थितक्रमाङ्गीकारे कल्पतरौ 'नित्येष्वणु'ष्विति प्रथमभाष्यव्याख्या प्रथमं, ततः 'किमङ्ग पुन'रिति द्वितीयभाष्यव्याख्या, पुनरपि प्रथमभाष्ये पाठान्तरव्याख्या, इत्यचातुरीप्रसङ्गात्। आभोगेऽपि 'पूर्वभाष्यगतं पाठान्तरं' इत्येवोक्तम्। यथास्थितपाठक्रममेव मन्वानः परिमलकारस्तु कल्पतरोरचातुरीप्रसङ्गवारणाभिप्रायेणैव पाठान्तरं द्वितीयभाष्यगतमेव मनसि निधाय 'यद्यपि भोक्तृरहितेष्विति भाष्यपाठे उपसर्जनानां भोक्तृणामिदं सप्तम्यन्तं विशेषणं भवितुं नार्हति तथापि भोक्तृष्वसत्स्विति पाठान्तरमाश्रित्य तद्विशेषणत्वमुक्तम्' इत्यवोचत्। परंतु तत् पाठान्तरं कुत्रापि नोपलभ्यते। पूर्वभाष्य एव च भोक्तृविशेषणतया आशयाश्रयिभूतेषु इति विशेषणं रामानन्दीयेऽपि व्याख्यातम्। एवं च कल्पतरुकोशलेखकानां प्रमादः महतामपि भ्रमाधायकस्समजनि। इत्येतत् पण्डिताः सुनिपुणं परिशीलयन्तु। द्वितीयभाष्येऽपि 'आशयाश्रयिशून्येषु' इति पाठान्तरमभिप्रेत्य रामानन्दीये आशयाश्रयी संघातकर्ता अदृष्टाश्रयः इति व्याख्यातम्।

निराकर्तुं नाप्यन्य इति टीका। तामनुषङ्गेण योजयति—**अन्यस्येति**। P. 531-2 **कर्तुर्हि[1] हेतुतेति**। सङ्घातसिद्धावित्यर्थः।

**निरुध्यमानस्य कथमिति**। तस्य निष्पन्नाभावकत्वाभावेन ग्रस्तत्वव्यपदेशायोगादिति भावः। तर्हि वर्तमानत्वबोधकशानच्प्रत्ययानुपपत्तिरित्याशयेन शङ्कते—**नन्विति**। 'वर्तमानसामीप्ये वर्तमानवद्वे'ति तदुपपत्तिरित्याशयेन परिहरति—**तत्राहेति**। विनाशग्रस्तत्वमुद्दिश्य तस्याचिरनिरुद्धत्वरूपत्वं विधीयत इति भ्रमं वारयति—**यद्विनाशग्रस्तत्वमिति[2]**।

मृदादीनामपि पूर्वकालसत्त्वेनैव कारणत्वम्, नतु कार्यानुगतत्वमपि तत्र तन्त्रम् अप्रयोजकत्वात्, मृदादीनां कार्यानुगतत्वासिद्धेश्च। न चैवं 'मृद् घट' इति प्रतीत्यनुपपत्तिः। तस्य मृत्सादृश्यविषयकत्वादित्याशयेन परिहरति—**तत्राहेति**। **क्रियाज्ञानेति**। तयोः क्षणमात्रावस्थायित्वेन भवनानन्तरं व्यापृत्य कार्यजनकत्वाभावादिति भावः। भूतिर्येषामित्यर्थं व्याचष्टे—**एषामिति**। **क्रियेति**। व्यापार इत्यर्थः। भाष्यव्याख्यानेनैव प्रतीकत्वं सुज्ञानमित्याशयेनाह—**टीकायां—तथापीति**।

अनुगतरूपस्य कारणत्वं टीकोक्तमुपपादयति—**सामान्यं हीति**। P. 532-1 घटरुचकादिष्वनुगतं मृदादिसामान्यमेव घटरुचकादिकल्पितविशेषाधिष्ठानत्वेन तदुपादानमित्यर्थः[3]। हेतुफलभावानुरोधेन वास्तवमेव सादृश्यमुपेयते इत्याशयेन परिहरति—**अत आहेति**। अन्यथासिद्धो हेतुफलभावो, न सादृश्यमपेक्षत इति शङ्कते—**नन्विति**।

अन्वयव्यतिरेकाधीनं कारणत्वं किं व्यक्तौ? किं वा जाताविति विकल्प्य, प्रथमं निराकरोति—**एकस्मिन्निति**। द्वितीयमाशङ्क्य निराकरोति—**अथेत्यादिना**। पर्यायत्वापादनेऽपीति टीकां व्याचष्टे—**भाष्य इति**। तथा P. 532-5

---

१. अत्र कल्पतरौ 'कर्त्रभावो हेतुर्वाच्यः' इति पाठो ज्ञेयः।

२. कल्पतरौ 'चिरनिरुद्धत्वरूपं सत् निरुद्धत्वं विवक्षितम्' इति पाठः शोधनीयः।

३. अत्र परिमले 'तदन्यापोहभ्रमाधिष्ठानत्वेन कारणमित्यर्थः' इत्युक्तम्। तदपेक्षया आभोगव्याख्यैव ज्यायसी। परिमलोक्तार्थस्य प्रकृतासङ्गतेः।

सतीति। उत्पादनिरोधशब्दयोर्वस्तुशब्दपर्यायत्वे सति, ताभ्यां वस्तुन उत्पत्त्याद्यबोधनेन तयोरभावाद्वस्तुनो नित्यत्वसिद्धिरित्यर्थ इति भावः। **टीकायां—वस्तूत्पादे**-त्यादि प्रसङ्ग इत्यन्तं भाष्यम्, संसर्गेऽपीत्यादि तत्पूरणमिति द्रष्टव्यम्।

P. 532-7 **नीलाभासस्य हीत्यादिटीकायां** प्रकृतासाङ्गत्यं परिहरति—**प्रतिज्ञोपरोधमिति। रूपनियामकमिति।** रूपीयत्वे नियामकमित्यर्थः। ननु ज्ञानकारणानां नीलादीनां सुखादिकारणत्वासम्भवात् कथं **चित्तहेत्वभिन्नहेतु**-जत्वमित्याशङ्क्य, सुखादीनामपि ज्ञानत्वान्न दोष इत्याह—**सुखं ज्ञानमिति।**

ननु चित्तहेतुभिरेव सुखादीनामप्युत्पत्तौ, **चतुर्विधानित्यादिबौद्धसूत्रे**[1] कथं सुखादीनां चैत्तत्वव्यपदेश इत्यत आह—**एकविधेति।** पूर्वोक्तचतुर्विधकारणकत्वाच्चित्ताभिन्नहेतुजत्वमिति हेतुहेतुमद्भावनिर्देशान्न पौनरुक्त्यमित्याशयेनाह—**चत्वारीति। चित्तचैत्ता उत्पद्यन्त इति येयं प्रतिज्ञा सेयमभावकारणत्वे उपरुध्येतेति टीकाया** अन्वयो बोध्यः।[2] उत्पत्तेरुत्पद्यमानाभेदकथनस्य

P. 533-5 प्रयोजनमाह—**उत्तरक्षणेति। एकक्षणेऽपीति।** उत्तरक्षणोत्पत्तेः पूर्वक्षणस्थ च पूर्वक्षण[3] एव सम्भवादित्यर्थः। क्रियाकर्त्रोः कथमैक्यमित्याशङ्क्य, तदभ्युपगमस्य तथात्वान्न तत्र पर्यनुयोगावकाश इत्याशयेनाह—**भूतिर्तत्कर्त्रोरिति**[4]।

सन्तानान्त्यक्षणस्य विजातीयक्षणोत्पत्त्यनुकूलव्यापाराचरणेन प्रतिसंख्यानिरोधित्वमपि सम्भवतीत्याशयेन शङ्कते—**नन्विति। विशुद्धविजातीयेति।** सोपप्लवसंसारिसन्तानस्य निरुपप्लवो मुक्तक्षणो **विशुद्धो विजातीय** इत्यर्थः।

P. 534-1 **नाद्य इति।** रूपत्वरसत्वाभ्यां व्याप्यजातिभ्यां विजातीयरूपरसविषयकस्य[5] चैत्रसन्तानस्य भवद्भिरेकत्वेनाभ्युपगतस्यापि भेदप्रसङ्ग इत्यर्थः। **सोपप्लवेति।** अविद्यारागादिरुपप्लवः। नचैवमुपप्लुतविषयकत्वमेव सादृश्यमस्त्विति वाच्यम्। नानाविषयेष्वनुगतैकधर्मेण विना उपप्लुतत्वस्यैव दुर्ज्ञानत्वादिति भावः।

---

१. अत्र कल्पतरौ 'चतुर्विधान् इत्यादिप्रतिज्ञां' इति शोधनीयम्।

२. अनेन 'चैत्तानां चित्तहेत्वभिन्नहेतुजानां' इति टीकापाठ इति सूच्यते।

३. कार्यस्य उत्पत्तिः पूर्वक्षणे, कार्यं तु द्वितीयक्षणे, उत्पत्तिः उत्पद्यमानाद्भिन्ना, इति शङ्कितुराशयः। 'उत्तरक्षणस्तु द्वितीयक्षणे भवतु' इति कल्पतरौ पाठः।

४. 'उत्पद्यमानोत्तरक्षणतदुत्पत्ती' इति कल्पतरुपाठ इति भाति।

५. कल्पतरौ 'चैत्तसन्ताने' इत्येतत् 'चैत्रसन्ताने' इति शोधनीयम्।

भाष्ये निरन्वयत्वनिरुपाख्यत्वयोर्व्याख्यानव्याख्येयभावेनाभेद एव **टीकाकृता** किमिति नोच्यत इत्यतस्तयोर्भेदं दर्शयति—**अपरिशिष्यमाणेति**। अन्वयविनाशयोर्विरुद्धत्वान्न सान्वयत्वं विनाशस्येति शङ्कते—**नन्विति**। विनश्यतामपि तात्त्विकरूपेणान्वयाद्विनाशस्य सान्वयत्वमिति परिहरति—**अत आहेति**। **अनुमानादिति**। उदबिन्द्ववयवा अन्वयिनः, उपादानत्वान्मृदादिवदित्यनुमानादित्यर्थः। अनुपलब्धिबाधं निराकर्तुमुक्तं **टीकायां**—**तत्तोयं तेजसेति**। P. 534-4

**मार्गोपदेशेति** भाष्यगतमार्गस्वरूपं दर्शयितुं **मार्गः क्षणिकेति टीका**। तत्र भावनाया मोक्षद्वारत्वान्मार्गत्वमित्याह—**मोक्षोपीति**। शब्दस्य द्रव्यादिषट्कान्यत्वे बाधकाभावात् कथं **टीके**त्याशंक्य षडतिरिक्तभावपदार्थकल्पने मानाभावान्नान्यत्वमित्याशयेन **टीके**त्याह—**तस्य(चे)हीति**। द्रव्यकर्मानन्तर्भावस्तु गुणत्वसाधकेनार्थादुक्त इत्याह—**द्रव्यकर्मणोरिति**। शब्दस्याकाशाश्रयत्वसिद्धये यद्गुणत्वं साध्यते तेन द्रव्यकर्मणोरनन्तर्भावश्चाहेत्यन्वयः। P. 535-2

**कालः** षडिन्द्रियवेद्य इति मते अनेकेन्द्रियग्राह्यकालव्यावृत्त्यर्थमेकेति पदमित्याह—**द्वीन्द्रियेति**। अवस्तुभूतेनैवाकाशेनावरणाभावो विशेष्यताम्। तथा च कथं **तर्हि वस्तुभूतमिति** भाष्यमित्याशङ्क्य, सद्भ्यामेवाधिकरणप्रतियोगिभ्यामभावो निरूप्यते, तथैव दर्शनादित्याशयमाह—**टीकायां**—**निषेध्येति**।

**टीकायामतिरोहितार्थमन्यदिति**। **सन्निश्रयशब्दस्य** सम्यक्निश्रय आश्रयो यस्येत्यर्थस्य योगशक्तिबलेनैव ज्ञातुं शक्यत्वात्, **निरोधद्वयशब्दस्य** च प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधद्वयार्थकत्वस्य **प्रतिसङ्ख्यासूत्रभाष्यपरिशीलनेन** ज्ञातुं शक्यत्वादिति भावः। P. 535-4

---

१. टीकायां 'उत्पन्नमात्राप्रवृत्तस्य' इत्येतत् 'उत्पन्नमात्रापवृत्तस्य' इति शोधनीयम्। अपवृत्तस्य ध्वंसिन इत्यर्थः। यद्वा बौद्धमते सर्वस्य क्षणिकत्वेन उत्पन्नमात्रं सद्वस्तु अप्रवृत्तमेव नश्यति। तन्नाशस्य च पुरुषप्रयत्नापेक्षा नास्ति स्वरसत एव तस्योदयात्। अतः प्रतिसंख्यानिरोधो न संभवतीति टीकार्थः।

सत्यप्येतस्मिन्नित्येतदन्यत्वेपीत्यनेन न सम्बध्यते। अपिशब्दयोर्द्वयोर-
P. 535-6 न्वयादतो व्याचष्टे—अनुस्मरण इत्यर्थ इति। एवञ्च, सत्यप्यनुस्मरणे,
तत्रोपलब्धृस्मर्त्रोरन्यत्वेऽपि च, स्मृतिरुपपत्स्यत इति टीकान्वय इत्याह—
उपलब्धृस्मर्त्रोरिति। सौगतैरुपलब्धिव्यतिरिक्तस्योपलब्धुरनङ्गीकारात् कथं
भाष्यटीके इत्यत आह—अस्मिन्मत इति।

न भासन्त इति पक्षं निराकरोति—नाद्य इत्याहेति। एकस्य
नानात्वं व्याहतमिति। ज्ञानातिरिक्ताकारानभ्युपगमादाकारनानात्वं ज्ञाननानात्व
एव पर्यवसन्नम्। तच्च ज्ञानैकत्वपक्षे न सम्भवतीत्यर्थः। ननु प्रत्याकारपरि-
समाप्तेष्वपि घटपटादिज्ञानेषु नानात्वव्यपदेशदर्शनात् कथं नानेति न
स्यादिति टीकेत्यत आह—एकज्ञानेनेति।

नानेत्युल्लेखो नानाकारं ज्ञानमिति व्यपदेशः, स च एकेन ज्ञानेन
नानापदार्थोल्लेखे सत्येव भवति नान्यथेत्यर्थः। एकस्मिन्नेव ज्ञाने तदाकारतया
P. 536-6 तत्तेदन्तासादृश्यानि भासन्त इति पक्षावलम्बनेन शङ्कते—ननु न वयमिति।
ततश्चेति। कल्पितनानात्वस्य वास्तवैकत्वाविरोधादित्यर्थः।

ननु लोकप्रसिद्धपदार्थापलापे बाधकमुक्तं भाष्यटीकयोस्त-
दनुपपन्नम्। परेणापि कल्पितानामभ्युपगमादित्याशंक्य, परपक्षे पदार्थापलापं
दर्शयति—कल्पितोऽपीत्यादिना। ततश्च कल्पितत्वं वदता ज्ञानाभेद एव
वक्तव्य इति, तस्मिन् पक्षे सिद्धः पदार्थापलाप इत्याह—तथा चेति। तथा
च धर्मिभेदेनेति। नित्यत्वं कस्यचित् ज्ञानस्याकारः, अनित्यत्वं च ततोऽन्यस्य
ज्ञानस्येति, भिन्नधर्मिगतत्वेनैकस्मिन् धर्मिणि विरुद्धद्वयाप्रसङ्गात् विवादो न
स्यादित्यर्थः। विवादानुपपत्तिसिद्ध्यर्थमेकधर्मिनिष्ठत्वमेव निषेध्यम्। न त्वेक-
P. 537-4 विषयत्वमित्याशयेनाऽऽह—आश्रितत्वाभावादिति।

---

१. अत्र कल्पतरुवाक्यस्यायं भावः—अनिर्वाच्यत्वाङ्गीकारे 'भिन्नाप्यभिन्नाप्यु-
भयात्मिका नो' इत्युक्तरीत्या भिन्नत्वमभिन्नत्वं वा न वक्तव्यम्। अन्यथा तु वक्तव्यमिति।
इति भाति।

२. कल्पतरौ 'ओमिति वदन्तं प्रति स्वपक्षसाधनपरपक्षाक्षेपाद्युपपत्तिः' इति
शुद्धः पाठः।

अलौकिकार्थेनेति सिद्धवन्निर्देशानुपपत्तिमाशंक्याह—अनित्यशब्दः P. 537-5 इति। ननु स्वग्राहकस्येति। आन्तरस्य ज्ञानाभिन्नज्ञानाकारस्यैव तद्ग्राह्यत्वादित्यर्थः। आन्तरत्वबाह्यत्वाभ्यामर्थस्य द्वैरूप्याभ्युपगमान्न दोष इति परिहरति—अत आहेति। स्वप्रतिभासे इति वाक्यं व्याचष्टे—स्व(य)मेवेति। विकल्पाकारस्य ग्राह्यस्य सिद्धत्वात् कथं करणादिविकल्प इत्यतो व्याचष्टे—आन्तरस्येति। तस्यानभिधेयत्वञ्च सामान्यरहिते शुद्धे शब्दस्य सङ्गतिग्रहायोगादिति भावः।

ईशत इत्यस्यानुषङ्गे दर्शिते, शिल्पिन इत्यस्यापि तद्बलादनुषङ्गः सिध्यतीति मनसि निधायाऽऽह—आन्तरं बाह्येनेति। टीकायां—न चास्तीति। प्रत्यय इत्यर्थः। विकल्पगोचरत्वयोग्ये सामान्यरूप एव बाह्ये आरोपोऽस्त्विति शङ्कावारणाय पुनर्विकल्पयति—प्रथम इति।

अशक्याभिलापसमयत्वमुपपादयति—अभिलापस्य चेति। अश- P. 537-17 क्यसमयो हीति श्लोकं व्याचष्टे—सुखादीनामिति। अन्याननुगतो हीति। देशकालभेदाननुगत इत्यर्थः। उक्तमार्गेणेति। न तावद्विकल्प इत्यादिना स्वलक्षणस्य सविकल्पकवेद्यत्वानभ्युपगमप्रकटनादित्यर्थः। स्वाकार इत्येवं प्रतीत्यभिलापापादने न कोऽपि हेतुरित्यत आह—अधिष्ठानाग्रहण इति। तथा च, स्वस्य वस्तुतो य आकार आरोप्यं तन्मात्रोल्लेख एव स्यादिति टीकार्थ इति भावः। तथा च नारोपणमिति टीकार्थमाह—नारोप इत्यर्थ इति। अतस्मिंस्तद्बुद्धित्वाभावादिति भावः।

ज्ञानस्वरूपस्येति। ज्ञानाभिन्नस्य स्वलक्षणस्येत्यर्थः। परोक्तबाह्यारोपांशानुवादेन क्रममात्रविषयःप्रश्नो न त्वारोपांशोऽपि इति दर्शयितुं योजनामाह—स्वसंवेदनमिति। वक्ष्यमाणदूषणोपयोगितया तन्मतसिद्धं स्वसंवेदनत्वमप्यनू- P. 538-6 दितमिति द्रष्टव्यम्। विकल्पं विकल्पाकारं स्वलक्षणमिति यावत्। स्वाकारस्य ग्रहणं बाह्यत्वेनारोपणमित्येतद्द्वयं युगपदिति पक्ष इत्यन्वयः।

---

१. टीकायां 'यथान्या सोच्यतां' इत्यत्र 'अथान्या' इति शोध्यम्। 'कोऽयमध्यवसाय' इत्यत्र च 'कोऽयमर्थाध्यवसाय' इति शोध्यम्।

टीकायां—तस्माद्यदैवेति । स्वाकारमनर्थमबाह्यं यदा गृह्णाति; तदैव तमर्थात्मना बाह्यात्मना आरोपयतीति वक्तव्यमित्यर्थः । ननु वैशद्यावैशद्याभ्यां भेदे सत्यपि, तदग्रहणे तयोरैक्यारोपो न विरुध्यत इत्यत आह—
P. 538-9 स्वप्रकाशत्वेति । उभयग्रहणाधीनत्वादैक्यारोपस्य तदुभयावभासकाले भेदोऽपि भासत इति नारोपसम्भव इत्यर्थः । स्वाकारस्य बाह्यात्मना समारोपितत्वसत्त्वात् कथं तन्निषेध इत्याशंक्य स्वाकारस्य यत्समारोपितत्वं बाह्यैक्यं तन्न स्फुरेदित्येव टीकार्थ इत्याह—यः स्वाकार इति ।

टीकायामबाह्यात्स्वलक्षणादिति च्छेदः । कल्पितज्ञानाकारस्यैव सतोऽलीकस्यापि इति टीकासूचितं हेतुमाह—तस्यापीति । स्वप्रकाशज्ञानस्यैव भेदग्रहरूपत्वादिति भावः । टीकायाम्—ननु ज्वालादाविति । असत्यामपि सादृश्यबुद्धौ सादृश्याद्यस्तद्भावावगमस्तन्निबन्धन इत्यर्थः । आत्मज्ञानायेति । स्वयं पाशुपत इति सर्वेषामपि ज्ञानाय जङ्घायां किङ्किणी-
P. 538-15 बन्धादिकं चिह्नं कुर्वत इत्यर्थः । उपहासादिति । इतरविविक्तत्वेनात्मज्ञानाय चिह्नं कृतमित्यारोप्योपहासादित्यर्थः । तथा च, चिह्नं विदधतं कृत्वा पृथक्जना अप्युपहसन्ति पाशुपतमिति टीकार्थो बोध्यः ।

अभावाद्भावोत्पत्तिरित्येतदापद्येतेति भाष्यभावं दर्शयतीत्याशयेनाह—आपाद्यानुवादोऽमिति । उक्तमेतदधस्तादित्येतदेव वाक्यं कल्पद्वयनिराकरणपरत्वेन व्याचष्टे—नाद्य इत्यादिना । एवमपि कथमक्षणिकत्वप्रसङ्ग इत्याशंक्य, सापेक्षत्वपक्षस्य प्रथमकल्पाभ्युपगमेनैव निर्वाह्यत्वात् सिद्धमक्षणिकत्वमित्याह—ततश्चेति ।

प्रसिद्ध्यर्थकः किलशब्दः प्रकृते न सम्भवति । बीजावस्थामात्रनाशस्य दृष्टत्वेपि बीजस्वरूपनाशस्यादृष्टत्वादित्यत—आह—टीकायां किलकार
P. 539-10 इति । किलशब्दः काका अनिच्छासूचक इत्यर्थः । नियतशक्तित्वादिति ।

---

१. टीकायां ' विशदाविशदरूपतया ' इति पाठः ।

२. कल्पतरौ ' तस्यापि स्वप्रकाशज्ञानत्वेन ' इति पाठः ' स्वप्रकाशज्ञानबलेन ' इति पाठान्तरम् ।

नियतकार्यविषयशक्तित्वादित्यर्थः । अभेदे तदेवेति[1] टीकां व्याचष्टे—अन्य P. 539-11
कृतेति । भावादिति । पदार्थापेक्षया अभेद इत्यर्थः ।

वर्षातपजन्यमृदुत्वकठिनत्वफलशालिचर्मोपमश्चेत् भाव इत्यनेन तस्य फलाश्रयत्वमुक्तम् । तदयुक्तम् । क्षणस्य तदयोगादित्याशंक्य, स्थिरत्वाभ्युपगमेन तदनुवाद इत्याह—स्थिरः कारणत्वाभिमत इति । प्रागुक्तसकलकल्पनिरासपरतया सोऽनित्य इत्यादिकं योजयति—उपकारादिति । अभावाच्चेति भाष्ये चशब्दः किञ्चार्थक इत्याशयेनाऽऽह—टीकायामपि च यद्येनेति । स्थिरस्वभावानामेवेत्यादिपरिहारभाष्यं व्याचष्टे—टीकायां—स्थिरोऽपि भाव इत्यादिना । मा भूदुपादानमित्यत आह—परमार्थेति ।

अपि चेत्यादिटीकाया युक्त्यन्तरपरत्वासम्भवाच्छङ्कोत्तरत्वेन व्याचष्टे—भेदाभेदाभ्यामिति । द्वितीयद्वितीयं निराकरोति—अवस्तुनो वेति[2] । तृतीये कल्पितस्य सामान्यस्य भेदाभेदाभ्यामनिर्वचनीयत्वावश्यंभावादुपकारेऽपि तदभ्युपगमो न दोषायेत्याह—अवस्तुसामान्येति । सामान्योपधानस्यावश्यकत्वं P. 540 8
दर्शयितुमन्यथेति टीकेत्याह—यदि सामान्येति ।

॥ इति समुदायाधिकरणम् ॥

---

## ॥ अथ अभावाधिकरणम् ॥

सू०॥ नाभाव उपलब्धेः ॥ २८ ॥

सू०॥ वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

सू०॥ न भावोऽनुपलब्धेः ॥ ३० ॥

सू०॥ क्षणिकत्वाच्च ॥ ३१ ॥

सू०॥ सर्वथानुपपत्तेश्च ॥ ३२ ॥

---

१. अत्र टीकायां 'तदेवाभिहित'मिति पाठः ।

२. अत्र कल्पतरौ 'अवस्तुनोरेव' इति वाक्यात्पूर्वं 'अभिसंधाय' इत्येतत् 'अभिधाय' इति शोधनीयम् । टीकायां 'न हि बीजाद्बीजान्तरस्य वा' इत्येतत् 'न हि बीजादंकुरस्य वा' इति शोधनीयम् ।

P. 541-3 **विज्ञानमिति । विज्ञानं नीलाद्याकारं,** तद्भेदरहितप्रतिभासत्वात्, व्यतिरेकेण घटपटवदित्यनुमानेत्यर्थः । । **नह्यस्ति सम्भव इति टीकोक्तं** व्याघातं व्यनक्ति—**वस्त्विति** । तत्त्वव्यवस्थार्थमित्यर्थः। **टीकायां—यद्यपीति । अनुभवात्** प्रमाणात् **अनुभविता** प्रमाता **अनुभाव्यः** प्रमेयम् । **अनुभवनं** प्रमितिश्च **नान्यदस्तीत्यर्थः ।**

ननु विज्ञानवादिना विज्ञानस्य तत्त्वस्यैव प्रमाणादिभावा[भ्युपगमा]त् कथं प्रमाणादीनां कल्पितत्वमित्यत आह—**विभागमात्रमिति ।** साध्ये **आकारशब्दस्य** विज्ञानशरीरान्तर्गत सत्याकारपरत्वान्न **सिद्धसाधनमित्याह— बौद्धा हीति ।** तन्मते विज्ञानाकारस्य सत्यत्वाभ्युपगमात् कथं **टीकेत्यत** P. 542-8 आह—**आकारस्येति ।** एवञ्च सति फलितं **टीकार्थमाह—बाह्यरूपेणेति ।**

बाधकाभावात् प्रमाणादिविभागः सत्य एवास्त्वित्याशयेन शङ्कते— **नन्विति ।** यौक्तिकबाधसत्त्वात्तदभावोऽसिद्ध इत्याशयेन परिहरति—**तन्मत इति । तथाचार्थादिति ।** प्रमाणफलयोः कल्पितत्वे ततो वस्तुसिद्ध्ययोगादर्थात्प्रमेयस्यापि मिथ्यात्वं सिध्यतीत्यर्थः । अध्याहारेण **टीकां** योजयति— **यदि ज्ञानस्थे इति ।**

विज्ञानस्य करणफलाभ्यां तादात्म्यं वदन् **वैभाषिकः** प्रष्टव्यः, किं करणफले वस्तुतो भिन्ने ? उत नेति । नाद्य इत्याह—**न च वस्तुत इति ।** द्वितीये काल्पनिकत्वं सिद्धमित्याह—**तत इति ।** ननु **वैभाषिकमतेऽपि** विज्ञानस्यैव फलात्मत्वात् कथं तयोः काल्पनिकत्वमित्याशंक्य, प्रमाणादिस्वरूपस्य सत्यत्वेऽपि, तत्तदसत्योपाधिविशिष्टरूपेण कल्पितत्वात् तद्भेदस्य काल्पनिकत्वं P. 542-11 सिद्धमित्याशयेनाऽऽह—**तमेवेति ।**

ननु **सौत्रान्तिकमते** विज्ञानं नार्थप्रकाशनशक्तियोगि, नापि वस्तुन्यज्ञानव्यावृत्तिः । तन्मते बाह्यस्यार्थस्य प्रत्यक्षत्वानभ्युपगमात् । ततश्च न प्रागुक्तरीत्या

---

१. कल्पतरौ 'आकारस्यासत्यत्वं बाह्यरूपेण । बाह्यरूपेणासत्येन' इति पाठः अनेन सूच्यते ।

२. कल्पतरौ 'सत्य उपगम्येतापि' इति पाठः । तथा 'व्यापारविष्टः करणीभूतः' इति, 'काल्पनिकः' इति, 'ज्ञानत्वसामान्यरूपः' इति च पाठाः ।

प्रमाणफलविभागस्य कल्पितत्वसिद्धिरित्यतः प्रकारान्तरेण तन्मिथ्यात्वमुपपादयतीत्याशयेनाऽऽह—**वैभाषिकस्येति** । परोक्षस्थले अज्ञानव्यावृत्त्यभावाद् ज्ञानपदं ज्ञानान्यपरमित्याशयेनाऽऽह—**ज्ञानात् सकाशादिति** । ज्ञानापेक्षया यत् अन्यत् तद्व्यावृत्तिरूपेणेत्यर्थः । P. 542-13

वित्तेरेव तद्वेदनात्वे निषेध्ये, कथं वित्तिसत्तायास्तन्निषेध इत्याशंक्य, सत्तातद्वतोरभेदात्तन्निषेध एव तन्निषेध इत्याशयेनाऽऽह—**ज्ञानमात्रं हीति** । तस्याः **सर्वत्राविशेषादिति** हेतौ प्रकृत्यर्थमुक्त्वा, प्रत्ययं योजयति—**तस्मादिति** । **अर्थमिति शेष इति** । अस्मिन् पाठे अध्याहारेण विशेष्यं लभ्यमिति भावः ।

**प्रतीतिविशेषकृतो वेति** । प्रतीतिविशेषेण स्थूलाद्यात्मना, कृतो वा रूपभेदःस्तम्भाद्यर्थ इत्यर्थः । ननु अन्याभासमप्यन्यगोचरं भवति, घटपटसमूहालम्बने घटाभासस्य पटगोचरत्वदर्शनादित्यत आह—**भासमानादिति** । **तदिति** । प्रतिभासनमुपाधिं कृत्वेत्यर्थः । **अंशशब्दो** नावयवपर इत्याशयेनाऽऽह—**स्वाकार इति** । **टीकायामाचरतीति** विषयसप्तमी । द्वितीयकल्पमेव विवृणोति **टीकायां—तथाहीति** । P. 543-1

ननु **सांवृतत्वस्य** कथं प्रतिभासस्थत्वं विवरणमित्याशंक्य, **संवृतिः प्रतिभास** एव तदधीनत्वादर्थगतस्यापि स्थौल्यस्य तन्निष्ठत्वव्यपदेश इत्याशयेनाऽऽह—**विशकलितेति** । **एकपरमाण्वात्मनीति** । एकैकस्मिन् परमाणौ । [भ्रान्तित्वमिति] स्वतोऽसम्भवतः स्थौल्यस्य संवृतिबलात् प्रतिभासे अविद्यमानार्थप्रतिभासात् भ्रमत्वमित्यर्थः । एकदेशस्थवृक्षाणां वनबुद्धिविषयत्ववदेकधीविषयनिरन्तरपरमाणूनामेव स्थूलबुद्धिविषयत्वान्न भ्रमत्वमित्याह—**य एव हीति** । निविडत्वभ्रमोपयोगार्थमाराच्छब्दं दूरार्थकत्वेन व्याचष्टे—**दूरादिति** ।

**यद्यपि स्थूलव्यक्तिज्ञानं तद्रहितमिति** पूर्वेणान्वयः । **तथापि भ्रान्तत्वादिति** । अविद्यमानस्थौल्यादिविषयकत्वेन स्वलक्षणमात्रविषयकत्वाभावादिति भावः । अत एव **प्रत्यक्षलक्षणे अभ्रान्तत्वविशेषणमुपात्तम्** । P. 543-12

---

१. कल्पतरौ 'परमाणुमात्रस्तद्गोचरः' इति पाठः ।

२. कल्पतरौ 'भासमानादन्यगोचरत्वमत्रातिप्रसङ्गः' इति पाठः ।

अन्यथा कल्पनापोढत्वविशेषणेनैव भ्रमव्यावृत्तौ तद्विशेषणं व्यर्थम् स्यादिति
P. 543-14 भावः । व्याघातादिति । भेदे अत्यन्तभेद एव, भेदाभेदयोर्निरस्तत्वात् ।
तथा च भिन्नयोस्तादात्म्यं व्याहतमित्यर्थः । निरस्त इति । निरस्तो यस्मात्तस्मान्न
द्वितीयस्संभवतीत्यर्थः । अपि च अनुभवमात्रेणेति भाष्यं व्याख्यातुमपि
चेत्यादिटीका । तत्र व्याख्याबीजमाह—भाष्यकारेणेति ।

अनेनाजनीति । अनेन ज्ञानेन माजनीत्यर्थः । ज्ञानस्वरूपस्यैवाकारत्वात् कथमनाकारत्वमित्याशंक्य, विशेषाकाररहित्यपरं तदित्याह—ज्ञानमात्रेति । इत्यर्थ इति । स्वतोऽनाकारं ज्ञानं कथमर्थभेदं व्यवस्थापयेदित्यतो हेतोर्नीलाकारवदेव ज्ञानं नीलव्यवहारहेतुस्सदर्थभेदव्यवस्थापकं इति तद्भेदव्यवस्थापनाय ज्ञाने आकारभेदोऽभ्येषितव्य इति टीकार्थ इत्यर्थः ।

विज्ञानवादिना सौत्रान्तिकवचनमुदाहर्तुमयुक्तमित्यत आह—विज्ञानवादीति । यद्यप्यश्विशब्दो देवतावाचकः । तथापि तयोः प्रत्यक्षोपलम्भप्रस-
P. 544-6 क्त्यभावात् तद्देवताकयोरश्वयुजोर्नक्षत्रयोर्वर्तत इत्याशयेनाह—नक्षत्र इति ।
स्वभावहेतुरित्यस्य बौद्धव्यवहारसिद्धमर्थमाह—यो यन्मात्रेति । तद्भावेति ।
यद्वस्तु यद्भावमात्रान्वयि, यदात्मकञ्च, तस्मिन् वस्तुनि साध्ये तत्स्वभाव एव हेतुरित्यर्थः ।

साध्यस्य तन्मात्रानुबन्धित्वमात्रेण न तस्य स्वभावहेतुता । धूमस्यापि वह्नौ साध्ये स्वभावहेतुत्वप्रसङ्गात् । अतस्तदात्मत्वमप्यावश्यकमित्याशयेनाऽऽह—तदात्मा चेत्यपि द्रष्टव्यमिति । प्रकृते साध्ये हेत्वात्मत्वं दर्शयति—निरालम्बनत्वस्येति। घटाद्यसंसर्गिणो भूतलादेर्भावादन्यो न घटाद्यभाव इति सम्मतिग्रन्थार्थः । व्यवहितार्थावलम्बनेन भाष्ये शङ्केति दर्शयितुमत्रान्तर इत्यादिटीकेत्याह—एवं तावदिति । दृष्टान्तयतीति दृष्टान्तं करोतीत्यर्थः ।

यद्यपि पुरुषान्तरगतवचनगमनप्रतिभासप्रत्यया एव दृष्टान्तो, न वक्त्रात्मसन्तानगताः, तथापि दृष्टान्तशरीरप्रविष्टत्वात् दृष्टान्तयतीत्युक्तम् ।
P. 544-11 दृष्टान्तदार्ष्टान्तिकटीके विशदयति—अविवक्षति इत्यादिना। ननु स्वसन्ता-

नवर्तिपूर्वक्षणस्य कथं **परिपाकप्रत्ययत्वमित्याशङ्क्य प्रत्ययशब्दस्य** कारण-परत्वमाह—**प्रत्येतीति**। **स्वसन्तानवर्तीति** विशेषणवैयर्थ्यं शङ्कते— P. 545 6 **नन्विति**। **हेतव इति वक्तव्यमिति**। केचिदेव हेतवः केचिन्नेति कल्पने प्रमाणाभावादिति भावः। **तत्प्रबोधसामर्थ्यमित्यस्य** विवरणमुत्तरक्षणगतेति।

**तदनेनेति**। समर्थहेतुसद्भाव इति ग्रन्थेनेत्यर्थः। **कादाचित्कत्वस्य** निषेध्यत्वं दर्शयन् टीकां योजयति—**यद्यनादीत्यादिना**। उपलब्धिस्तर्करूपेत्याशयेनाऽऽह—**तस्योपपत्तीति**। **तच्च निरस्तमिति**। सदातनतापातेने-[पादनेने]त्यर्थः। अभ्युपगमे दोषं दर्शयतीत्याह—**यदि त्विति**। **विज्ञानाति-रिक्तदेशेत्यत्र** देशपदं **विज्ञानसमवायिदेशपरमिति** मनसि निधायाह—**वैशेषिकादिवदिति**। **विज्ञानानां देशभिन्नत्वकथनं** प्रकृतासङ्गतमित्यतो बहु- P. 546-4 व्रीहिं दर्शयति—**नास्ति संयोगी(गे)ति**।

**अपूर्वसत्वप्रादुर्भावाभावस्य कालविप्रकर्षाभावहेतुत्वं** व्यतिरेक-प्रदर्शनपूर्वकं दर्शयति—**एवं हीत्यादिना**। **तच्छब्दस्य सन्निहितपरामर्शित्वे-**ऽनन्वयाद्व्यवहितपरामर्शित्वमाह—**यस्मादिति**। **इति पक्षस्येति**। इति प्रतिज्ञायाः। **स्वसन्तानमात्रनिमित्तत्वं विपक्षः** साध्याभावः, तद्वान् पक्षोऽपि विपक्षः, तस्मादित्यर्थः। यद्यप्ययं व्यभिचारसन्देहो हेतुमति साध्यसन्देहपर्य-वसन्नः। स च न दोषाय। अन्यथा अनुमानमात्रोच्छेदापत्तेः। तथाप्यप्रयोज-कत्वशङ्काहितत्वादनुमानविरोधीति भावः। **उपपादयितुमिति**। कादाचित्क- P. 546-10 त्वहेतोरप्रयोजकत्वाय स्वसन्तानमात्रनिमित्तत्वमुपपादयितुमित्यर्थः।

**टीकायां—कुतः पुनरयमिति**। पीतस्य पीतज्ञान एव सामर्थ्यम्। न नीलज्ञाने। एवं नीलस्येत्ययं [सामर्थ्या] **सामर्थ्यभेदः** कुत इत्यर्थः। **टीकायामेवं तर्हीति**। यथा कारणभूतनीलपीतादिसामर्थ्यभेदात् कार्य-भूतनीलपीतादिसामर्थ्यभेदः, एवं क्षणानां कादाचित्कनीलादिज्ञानजननशक्ति-भेदोऽपि तत्कारणपूर्वनीलादिज्ञानभेदनिबन्धनो भविष्यतीत्यर्थः। कारण-क्षणानां च सामर्थ्यभेदो नासिद्धः। तत्कारणक्षणसामर्थ्यभेदादित्याह **टीकायां—सन्तानिनो हीत्यादि**। P. 546-10

---

१. अत्र कल्पतरौ उपरितनवाक्ये 'सौत्रान्तिकोक्तव्याप्यव्यापकयोः' इति पाठ-श्शोधनीयः।

सामर्थ्यभेदे सन्तानभेद एव प्रयोजको, न क्षणभेद इति शङ्कते—

P. 546-10 **नन्विति** । चैत्रमैत्रादिभिन्नसन्ततिपतितानामित्यर्थः । **न च सन्तानो नामे-त्यत्र** न सन्तानस्वरूपमपि निषिध्यते तस्य सम्प्रतिपन्नत्वात् । किन्तु तस्य क्षणोत्पादकत्वमेव निषिध्यत इति योजयति—**क्षणानां सम्बन्धीति** । **टीकायां—न भिद्येरन्निति** । भिन्नसामर्थ्या न भवेयुरित्यर्थः ।

**इत्युपपाद्येति** । **ननूक्तमित्यादिना, तथा च सर्वेऽपीत्यादिटीका-ग्रन्थोक्तार्थानुवादेनोपपाद्येत्यर्थः** । ततश्च नीलादिज्ञानस्य कादाचित्कसन्नि-धानबाह्यनीलादिसन्तानजन्यत्वात् मन्मते कादाचित्कत्वमुपपद्यते, त्वन्मते तु नित्यसन्निहिताऽऽलयविज्ञानसन्तानजन्यत्वान्नोपपद्यत इति शङ्काफलं दर्शयन् **नन्वित्युपक्रमानुरोधेन** शङ्कात्वद्योतकचेच्छब्दाध्याहारं **टीकायामाविष्कुर्वन्** परिहारटीकामवतारयति—**आलयविज्ञानेति** ।

P. 547-1 नीलसन्तानानां मिथो भेदमुपपादयति—**बाह्यार्थवादे हीति** । **तथा-चैकमेव नीलमिति** । एकनीलसन्तानवर्त्येव **नीलं नीलाकारज्ञानं जनयेत्** । **न नीलसन्तानान्तरवर्ति** । पीतसन्तानस्येव तस्याप्यसामर्थ्याविशेषादित्यर्थः । **न सन्तानान्तरवर्ती**त्यस्य स्थाने **'न नीलान्तरं सन्तानान्तरवत्'** इति क्वचित् **पाठः** । स तु सुगमः ।

**यथा च नीलपीतादीति** । एकस्मान्नीलसन्तानात् नीलसन्तानान्तरस्य पीतसन्तानस्य च भेदाविशेषेऽपि क्वचिन्नीलज्ञानजननशक्तिः क्वचिन्नेतिवदेक-विज्ञानसन्ततिपतितत्वाविशेषेऽपि केषुचिदेव क्षणेषु तज्जननशक्तिः, केषुचिन्नेति व्यवस्थापि कल्प्यते । दृष्टानुसारित्वात् कल्पनायाः । अतस्सन्तानभेदः शक्ति-भेद इव, तदभेदोऽपि शक्त्यभेदे न प्रयोजक इति भावः ।

**अर्थादिति** । असंविदितोक्तिसामर्थ्यादित्यर्थः । तदेव दर्शयति—**वर्तमानस्येति** । नन्वेतावता वर्तमानव्यावृत्तिरेव लभ्यते न त्वनागतव्यावृत्तिः । P. 547-7 तस्यापि असंविदितत्वसम्भवादित्यत आह—**अनागतस्य चेति** । **तादृशं ज्ञानमिति** । तदानीमज्ञायमानं असिद्धसत्ताकं च **ज्ञानं वासनेत्यर्थः** । **पूर्वं**

१. कल्पतरौ 'ततश्चालयविज्ञाने'ति वाक्यात्पूर्वं 'सामर्थ्यभेदः' इति शोधनीयम् ।

मिति। नन्वेकसन्ततिपतितानामिति टीकायामित्यर्थः। उपलभ्यते हीत्यादिभाष्याभिप्रायमाह टीकायां—नहि स्फुटतर इति। P. 547-12

नन्वर्थस्य तदुपलब्धेश्च व्यतिरेकः केन गृह्यत इत्याशंक्य, सर्वानुभवसिद्धेन साक्षिणेत्याह—टीकायामुपलब्धिग्राहिणा हीति। इदमत्राकूतमित्यादिटीकाया भाष्यसूचिताभिप्रायकथनार्थत्वं प्रकटयन्नाह—अत्र भगवतेति। [तत्रभवतेति] तथापीत्यादिटीकार्थं मनसि निधायावतारयति—तत्रासम्भवमिति। ततः प्राक्तनटीकामवतारयति—तत्र बौद्धेनेति। P. 548-1

स्थूलार्थस्य विज्ञानाकारत्वे विरुद्धधर्मसंसर्गाभावमुक्तं व्यतिरेकप्रदर्शनेन प्रकटयति—स्थौल्यं हीत्यादिना। एवञ्चेति। करतलामलकादेरप्यधोभागावच्छेदेन चक्षुस्सन्निकर्षाभावेन तदप्रकाशादावरणमावश्यकमिति भावः। आवृतस्येति। आवृतस्य ज्ञानात्मनाऽपि सत्त्वानभ्युपगमेन, यदस्ति तदनावृतमेव, यदावृतं तन्नास्त्येवेति न विरोधप्रसङ्ग इत्यर्थः। सप्तम्यन्तत्वाश्रयणेन पृथक्कृतस्य नञोऽन्वयमाह—आवरणादीति।

ननु स्वमते बाह्यार्थासम्भवदोषमपरिहृत्य, कथं परं प्रत्यान्तरार्थासम्भवोद्घाटनमित्याशंक्य, प्रतिबन्द्या असम्भवोऽप्रयोजक इत्येव वक्तुमुपक्रमात् तदभ्युपगमो न दोषायेत्याशयेनाऽऽह—इदानीमिति। ज्ञानाभेद इति। ज्ञानाकारत्व इत्यर्थः। व्यतिरेकाव्यतिरेकेतिटीकां विज्ञानवादिमते दूषणान्तरपरत्वेन योजयति—अर्थस्येति। P. 548-6

अवयवी अवयवेभ्यो भिद्यते न वेति विकल्पो व्यतिरेकाव्यतिरेकविकल्पः। भेदपक्षे स प्रत्यवयवं कार्त्स्न्येन वर्तते एकदेशेन वेति विकल्पो वृत्तिविकल्पः। एताववयविदोषौ। अव्याप्यवृत्तिसंयोगाद्यनुरोधेन परमाणोरंशवत्त्वापादनमवयवदोषः। एते दोषा विज्ञानवादिमतेऽपि स्युः।

बाह्यास्तित्ववादिभिर्बहिरिव, विज्ञानवादिना अन्तरेव ज्ञानाकारतया सर्वस्यापि प्रपञ्चस्य सत्यस्यैवाभ्युपगमात्। अनिर्वचनीयत्वे प्रपञ्चस्य विचारासहत्वं न दोषाय। न तु सत्यत्व इति भावः। सर्वथा अनिर्वचनीय एवार्थ इति स्फोरयितुमारम्भवाद इव समूहवादोऽपि न सम्भवतीत्यत्राप्यमुमेव टीकाग्रन्थमवतार-

यति—यद्वेति। केषुचित् कोशेषु पूर्वावतारिका, यद्वेति शब्दश्च न दृश्यते। तत्र तथापीत्यादिटीकयैव विज्ञानवादिमते दूषणस्योक्तत्वात्, बाह्यास्तित्ववादिमते दूषणार्थमियं टीकेति सिद्धमनिर्वचनीयत्वमर्थस्येति द्रष्टव्यम्।

आरम्भवादानभ्युपगमान्न विरुद्धधर्मसंसर्ग इति विज्ञानवादी शङ्कते—
P. 549-1 ननु किमितीति। परमाणूनेवेति। ज्ञानाकाररूपानित्यर्थः। किमनेकपरमाणुगोचरं ज्ञानमेकं? नाना वा?। नाद्य इत्याह—नीलज्ञानमित्यादिना। द्वितीयं शङ्कते—ननु नैकमिति। किं नानाज्ञानानामाहत्यैव स्थूलावभासकत्वं? परामर्शात्मकज्ञानान्तरद्वारा वा? नाद्य इत्याह—नेत्याहेति। द्वितीयं शङ्कते—तर्हीति। तस्यापीति टीकया प्रथमकल्पोक्तं दूषणमत्रापि भवतीति सूचितम्, तद्विशदयति—तस्यापीति।

तदभेदात्। ज्ञानाभेदात्। तस्येति। ज्ञानस्य। परमाणुमात्रत्वे भेद एव, ततश्च नैकत्वम् [तेषां] आकाराणां, विज्ञानमात्रत्वे एकत्वमेव न नानात्वमिति नानापरमाणुसमूहरूपस्थूलालम्बनमेकं ज्ञानं न स्यादित्यर्थः।
P. 549-3 तस्मान्नार्थ इति सम्मतिग्रन्थं व्याचष्टे—तस्माद्वृत्तीति। वर्णितेन मार्गेणेति। ज्ञानस्य किं ज्ञेयमात्रत्वमित्यादिना वर्णितेनेत्यर्थः। स्थूलाभासस्येति। स्थूलात्मकत्वस्येत्यर्थः। तस्माद्वृत्तिविकल्पादिकं, न बाह्यमर्थमपह्नोतुं शक्नोति, किन्तु तस्य मिथ्यात्वमात्रमावहतीत्याशयेनोपसंहरति—टीकायां—
P. 549-5 तस्मात् भवतापीति।

---

१. 'यद्वेति' इति प्रतीकधारणानुरोधी मूलभूतः द्वितीयावतारिकारूपः कल्पतरुग्रन्थः कोशेषु न दृश्यते। आभोगे परिमले च केषुचित् कोशेषु द्वितीयावतारिकैव दृश्यते इत्युक्तम्। संप्रत्युपलभ्यमानकोशे तु तद्वैलक्षण्येन प्रथमावतारिकैव दृश्यते न द्वितीयावतारिका। अहो कोशनानात्वं लेखकप्रमादवशनिष्पन्नम्। परिमले 'यद्वा विज्ञानादिभिन्नः स्थूलार्थः' इति आभोगापेक्षया किंचिदधिकं प्रतीकधारणं कृतम्। स च कल्पतरुग्रन्थः एवमूह्यते 'यद्वा विज्ञानादिभिन्नः स्थूलार्थः इति वदतां सौत्रान्तिकादीनां मतेऽपि अवयविन्यवयवे चोक्तं दोषान्तरं दुर्वारमित्याह—व्यतिरेकेति।' इति।

२. अत्र कल्पतरौ 'नानाकारात्मकत्वस्य' इति पाठः।

**अथैकोपलम्भनियम** इत्यत्र नियमपदलभ्यमर्थं दर्शयन्नाह—**एकोपलम्भं मुक्त्वेति। अवाचकशब्देति।** तस्मिन्नर्थे अप्रयुज्यमानशब्देत्यर्थः। गौण- P. 549-11 लाक्षणिकानामपि लोकव्यवहारसिद्धानां प्रयोगे निग्रहाप्रसङ्गादिति ध्येयम्। एकोपलम्भनियमादित्येव प्रयुज्यत इति पक्षे गृहीतहेतुपरित्यागदोषे सत्येव, दोषान्तरमाह—**तत्राहेति। बुद्धेः प्रभानुविद्धत्वं** प्रभाविषयकत्वमित्याह—**विषयत्वेनेति।** P. 550-1

**तिर्यगादीति।** उलूकपिकादेरन्धकारे घटादिचाक्षुषस्य प्रमाणसिद्धत्वेन तत्र व्यभिचारापत्त्या तद्व्यावृत्त्यर्थं **मनुजग्रहणमित्यर्थः।** तथा प्रभारूपानुविद्धबुद्धिबोध्यत्वे, मनुजचाक्षुषत्वं हेतुरिति न पिशाचादिचाक्षुषे व्यभिचार इति भावः। फलितमाह—**चाक्षुषेति।** 'तेन सह नियमेनैकोपलम्भात् तदभेद' इत्यनुमाने **हेतुरनैकान्तिक इत्यर्थः। टीकायां—न चैतदैकात्म्य इति।** अर्थज्ञानयोरेकत्व इत्यर्थः। **टीकायां—स्वरूपमात्रपर्यवसितमिति।** स्वरूपस्फुरणमात्रेण समाप्तमित्यर्थः।

**असत्येकस्मिन्ननेकार्थज्ञानप्रतिसन्धातरि नोपपद्यते** इत्युक्त्या, अनेन **टीकाग्रन्थेन** विज्ञानातिरिक्तः प्रतिसन्धाता साध्यत इति प्रतिभाति। तदयुक्तम्। अर्थज्ञानयोर्भेदसाधनस्यैव प्रस्तुतत्वादित्याशंक्य, **टीकायाः** तत्रैव पर्यवसानमित्याशयेनाऽऽह—**ज्ञानभेदेति।** अर्थभेदाधीनस्य गृह्यमाणस्याभावात् तास्ताः शास्त्रगताः व्यवस्था न स्युरित्यर्थः। **'अनादिवासनोद्भूतविकल्पे'ति** सम्मतिग्रन्थबलाद् विद्योपप्लवं प्रति **वास्यवासकभावस्य हेतुत्वं टीका**भिप्रेतमित्याशयेनाह—**भाष्य इति।**

उत्तरज्ञानस्य नीलाद्याकारसमर्पणानुकूलशक्तिमत्पूर्वज्ञानं **वासकं,** उत्तरज्ञानं **वास्यम्,** तयोः सम्बन्धः **वास्यवासकत्वं, तदविद्योपप्लवे हेतुरित्यर्थः।** अनेन विवक्षितविवेकेन वासनैव हेतुरित्युक्तं भवति। तथा च **संमतिश्लोकस्य** न विरोध इति द्रष्टव्यम्। **टीकायां—तदनेकज्ञानेत्यत्र** तेषामनेकेषां ज्ञानेत्यर्थः।

**भावमिति। भावं—नीलादिकं नीलत्वादिः सद्धर्मः, अभावं नरवि**षाणं **नरविषाणत्वादिरसद्धर्मः, विज्ञाननरविषाणादिकमुभयं अमूर्तत्वादि-** P. 550-6

P. 550-8 स्सदसद्धर्म आश्रयत इत्यर्थः । यस्मादर्थ इति । तथा च, यस्मात् प्रतिज्ञा विप्रतिपन्नं प्रतिपादयितुं, तस्मात् प्रतिपाद्याद्यनेकज्ञानसाध्येति टीकार्थ इति भावः ।

[तत्] सर्वमित्यादिटीकायाः पौनरुक्त्यमाशङ्क्य पूर्वोत्तरटीकयोः भेदं दर्शयति—असत्येकस्मिन्निति । अनेकार्थज्ञानप्रतिसन्धातरीत्यर्थः । टीकाया-मपितु तण्डुला इति । पच्यन्त इत्यर्थः । टीकायां—स्वांशेन न ज्ञेयमिति । स्वांशरूपेण न ज्ञेयमित्यर्थः । न स्वाभिन्नज्ञानकर्मेति यावत् । भूमिकारच-नायाः प्रयोजनं दर्शयन् तत्परं भाष्यं विविच्य दर्शयति—अत्यन्तविरुद्धा-मिति । विरोधे इति । उच्यत इत्यर्थः ।

नन्वित्युपक्रमादेव चोद्यत्वावगतिसम्भवाच्चोदयतीति तदवतारणं व्यर्थ-

P 551-1 मित्यत आह—विज्ञानस्येति । विज्ञानस्य स्वात्मनि क्रियाविरोधं वदन् प्रष्टव्यः । किं स्वभिन्नमर्थं स्वयं अप्रत्यक्षमेव प्रत्यक्षयति ? उत ज्ञानान्तरप्रत्यक्षं सदिति विकल्प्य, प्रथमं निराकृतं टीकायां स्वरूपातिरिक्तमित्यादिना । तत्र सम्मतिग्रन्थमपेक्षितहेतुकथनेन व्याचष्टे—यद्यप्रत्यक्ष इति । द्वितीयं शंकते—तर्हि ज्ञानमिति । ननु अर्थस्येव उपलम्भस्याऽपि जडत्वाविशेषात् उप-

P 551-4 लम्भान्तरमपेक्ष्यैव साक्षिवेद्यत्वं वाच्यमिति शंकते—ननु अर्थमिति । अस्वच्छ-त्वमुपाधिरिति परिहरति—अत आहेति ।

विज्ञानग्रहणमात्र एवेति । नीलादिविषयके विज्ञानरूपे ग्रहण एवा-स्माभिः स्वीकृते सति, तत्साक्षिणस्तद्विषयवृत्तिरूपग्रहणाकांक्षानुत्पादान्ना-नवस्थेति भाष्यार्थ इत्यर्थः । स्वत एवेति । भास्वरत्वादुपलम्भे आवरणा-भावेन तन्निवृत्त्यर्थां वृत्तिमन्तरेणाप्यनावृतसाक्ष्येकलोलीभावेन तत्सिद्धिसम्भवा-दित्यर्थः ।

आवरणाभावमेव प्रकटयति—यद्यनुभवेति । परिणामान्तरादिति ।

P. 551-11 अन्तःकरणपरिणामरूपज्ञानान्तरादित्यर्थः । अनुभवितुंर्व्याप्ताविति । अनुभ-

---

१. कल्पतरौ 'विरोध उक्तः' इति पाठो दृश्यते ।

२. अत्र कल्पतरौ 'तस्यार्थदृष्टिः जन्या स्यात्' इति शोधनीयम् ।

३. अत्र कल्पतरौ पूर्ववाक्ये 'अनुभवसिद्धत्वायोगा'दित्येतत् 'अनुभवसाधकत्वा-योगा'दिति शोधनीयम् ।

वितृकर्तृकव्याप्तावित्यर्थः। **अनेन साक्षिविषयेति। विज्ञानसाक्षिणः कर्तु-** P. 551-13 **विज्ञानविषयग्रहणाकांक्षानुत्पादादिति पूर्वं** व्याख्यातम्। **इदानीं विज्ञान-साक्षिकर्मकग्रहणाकांक्षानुत्पादादित्यपि तद्भाष्यं** व्याख्यातमित्यर्थः।

ज्ञानस्य ग्राह्यत्वमन्तःकरणपरिणामरूपोपलम्भविषयत्वमिति भ्रान्तः शङ्कते—**नन्विति। फले फलान्तरानुत्पत्तेरित्यनेन** फलान्तरमुत्पद्यमानं नास्तीति P. 552-1 वदता फलान्तरमस्तीति सूचितम्। चैतन्याधीनफलशालित्वाभावे चैतन्यविषयत्व-लक्षणदृश्यत्वायोगात्। तत्प्रकटयति—**फले अन्तःकरणेत्यादिना। वियद्व-स्त्विति। कुम्भस्योत्पत्तौ** सत्यां तस्य या **वियत्सपूर्णता,** सा **वियद्वस्तु-स्वभावानुरोधादेव, न कारणान्तरात्।** व्यापकस्य वियतः स्वभावादेव कुम्भव्याप्त्युपपत्तौ तदर्थं कारणान्तरानपेक्षणात्। **एवं धियां दृशा** सम्पूर्णताऽपि व्यापकीभूतदृक्स्वभावादेवेत्यर्थः।

संविदोऽपि साक्षिवेद्यत्वमस्तीत्यत आह—**परिणामज्ञानेनेत्यर्थ इति।** P. 552-5 **ज्ञानस्य ग्राह्यत्वमिति सम्बन्ध इति।** अनुषक्तेन तेन सम्बन्ध इत्यर्थः। [3]**स्वतस्सिद्धप्रकटतयेति** स्वतस्सिद्धा प्रकटता यस्याः चितस्तयेत्यर्थः। साक्षिसम्ब-न्धमात्रमापरोक्ष्यहेतुरिति मन्वानः शङ्कते—**ननु यदीति। व्यापकसाक्षीति।** अविद्यावच्छिन्नचैतन्यस्यैव साक्षित्वादिति भावः। अर्थस्य स्वरूपभूतचिद्विषयत्वे प्रमाणमाह—**यथेति**[4]**।** सः अर्थः यथा स्वरूपसत्तया सन् तथा स्वरूपचित्प्रकटतया प्रकटोऽपि स्यादित्यर्थः।

**(तथापीति)। [तदधीनाभिव्यक्तिकेति]** अभिव्यक्तसाक्षिसम्बन्धः P. 552-7 आपरोक्ष्ये तन्त्रमर्थे च सा साक्ष्यभिव्यक्तिर्वृत्त्यधीना, वृत्तौ तु स्वत एवेति

---

१. कल्पतरौ वार्तिकश्लोके 'दृशा धियाम्' इति शोधनीयम्।

२. कल्पतरौ 'ग्राह्यत्वमित्यनुषङ्गः' इति पाठो दृश्यते।

३. 'स्वतस्सिद्धप्रकटतयेति' इति प्रतीकधारणतद्व्याख्यानरूप आभोगग्रन्थः 'साक्षित्वादिति भावः' इति वाक्योपरि कोशे दृश्यमानोऽपि औचित्यादत्र योजित इति ज्ञेयम्।

४. 'यथेति' इति प्रतीको मूले न दृश्यते, कश्चन ग्रन्थः मूले लेखकप्रमादात् त्रुटित इति ज्ञायते। स तु एवमूह्यते 'अर्थो हि' इत्यतः अनन्तरं च स निवेश्यः 'यथा स्वरूपसत्तया सन् भवति। एवम्' इति।

P. 552-10 वैषम्यमित्यर्थः । एतदेव कुत इत्यत आह—**एतदुक्तं भवतीति । स्वभाव-प्रकटेति ।** स्वभावादेव चैतन्याभिव्यञ्जनक्षमतया प्रकटेत्यर्थः । **अर्थस्त्विति ।** व्यवहितः स्वभावादेव चैतन्याभिव्यञ्जनक्षमश्च नेत्यन्वयः ।

**यथा चाक्षुषी प्रभेति ।** यद्यपि [दृष्टान्ते] चक्षुःप्रभात्मकं व्यञ्जक-मेकं, रूपं वायुश्चेति व्यङ्ग्यमव्यङ्ग्यञ्च भिन्नं, दार्ष्टान्तिके तु, व्यंग्यं साक्षिचैतन्य-मेकम्, अन्तःकरणं घटादिकञ्चेति व्यञ्जकमव्यञ्जकञ्च भिन्नमित्यस्ति वैषम्यम् । तथाऽपि व्यंग्यव्यञ्जकभावो वस्तुमहिम्ना व्यवस्थित इत्येतावन्मात्रे दृष्टान्तो बोध्यः । सर्वात्मना दृष्टान्तस्तु, **निर्मल इव मुकुर** इत्यनेन दर्शितः । तत्र सन्निहितत्वाविशेषेऽपि निर्मलस्यैव मुकुरस्य मुखाभिव्यञ्जकत्वम् । न त्वनिर्मलस्ये-त्युक्तप्रायत्वादिति द्रष्टव्यम् ।

**अन्यो नास्या** इत्यत्र कर्मभावस्यान्यत्वं स्वरूपाभिव्यक्तिलक्षणकर्मत्वा-
P. 552-14 पेक्षयेत्याशयेनाऽऽह—**परिणामक्रियाजन्येति । आत्मा अन्येन ज्ञेय इति ।** ननु यदि ज्ञेयत्वं ज्ञानविषयत्वमात्रम्, तदा अनुमितिशाब्दज्ञानविषयत्वेन सिद्धसाधनम् । अथापरोक्षज्ञानविषयत्वम्, तदा **प्रकाशमानत्वं** साधनमपि तदेवेति साध्याविशेष इति चेन्न । अपरोक्षव्यवहारविषयत्वस्य हेतुत्वेन साध्य-हेत्वोर्भेदात् ।

**तस्यामेव संविदीति ।** व्याप्तिविषयिण्यां संविदि यथोक्तसाध्या-भावादित्यर्थः । **सकलविशेषेति ।** 'यद्यत् प्रकाशते तद्वेद्य'मिति सकलहेत्वा-श्रयव्यक्त्युपसंग्रहवतीत्यर्थः । **कालातीतत्वसिद्धय इति ।** इतरथा सत्प्रति-पक्षमात्रतया स्वप्रकाशत्वं न साधितं भवेदिति भावः ।

न विद्यते आगन्तुको यस्येति बहुव्रीहौ कोऽसावागन्तुक इत्याकांक्षाया-
P. 553-4 माह—**अर्थादिति ।** प्रकाशपदसमभिव्याहारबलादित्यर्थः । अनागन्तुकः

१. अत्र टीकायां—'यथाहुरन्ये—' नास्याः कर्मभावो विद्यते' इति, इति पाठो दृश्यते । आभोगानुसारेण तु एवं टीका शोधनीया भवति—'यथाहुः अन्यो नास्याः कर्मभावो विद्यत' इति ।

२. कल्पतरौ 'अपरिस्फुरणे च' इति पाठः ।

३. कल्पतरौ 'स्वप्रकाशत्वसाधनीमदोषामनुमामाह कालातीतत्वसिद्धये' इति पाठः ।

प्रकाशो यस्येति विग्रहं परित्यज्य बहुव्रीहिगर्भकर्मधारयाश्रयणस्य प्रयोजनमाह— **अनेनेति** । **भासमानत्वञ्चेति** । आवृतत्वादभासमानेऽपि वस्तुनि धूर्तोक्तिन भासत इति शब्देन बोध्यत्वमस्तीति तत्रापि भासमानत्वं स्यादित्यतो **बाधविधुरत्वं** लक्ष्यत्वस्य विशेषणम् । तथा सत्यसम्भवः, ब्रह्मातिरिक्तस्य सर्वस्यापि बाध्यत्वादित्यतो **व्यावहारिकत्वं** बाधविशेषणम् । P. 553-5

**निरुपाधेरिति** । तथा च सोपाधिकस्य ज्ञेयत्वेऽपि स्वप्रकाशत्वेनाभ्युपगतस्य निरुपाधेरज्ञेयत्वान्नासम्भव इति भावः। ननु तर्हि निरुपाधिकस्य वेदान्तप्रमेयत्वाभावे 'तन्त्वौपनिषद'मित्यादिश्रुतिव्याकोप इत्यत आह—**वेदान्तजन्येति** । वृत्त्युपाधौ सति ब्रह्म विज्ञेयमित्युक्तम् न तु स्वत इत्यर्थः । तथा च लक्षणे उपाधिनिरपेक्षज्ञानविषयत्वाभावोऽवेद्यत्वं [अज्ञेयत्वं] विवक्षितमिति न दोष इति भावः ।

**न त्विति** । इन्द्रियत्वेनेन्द्रियजन्यप्रतीतित्वज्ञानाकारणकज्ञानत्वादिकं नापरोक्षत्वम्, नित्यज्ञाने घटादौ चापरोक्षे तदभावादित्यर्थः । **तदन्यस्येति** । संविदन्यस्य बाह्यस्य घटादेरान्तरस्यान्तःकरणादेश्च प्रकाशसंविद्रूपे आत्मन्यध्यासादित्यर्थः । **तत्समर्थनार्थमिति** । **नित्यसाक्षात्कारत्वलक्षणहेतुसमर्थनार्थ**मित्यर्थः । **शश्वदिति** । **हेतुद्वयेऽपि शश्वदित्यनेन** सदातनत्वं विवक्षितम् । तथा च घटादौ व्यभिचारवारणाय तद्विशेषणमिति भावः । P. 553-8

प्रथमानुमाने अप्रसिद्धसाध्यकत्वमाशङ्क्याऽऽह—**न चेति** । **एतदन्येति** । एतस्मात्पक्षीकृतादन्यत्वेन विशिष्टं यत् ज्ञेयत्वं तद्रहितं यत् भासमानं तदन्य इत्यर्थः । अत्र दृष्टान्ते पक्षादन्यत्वमादाय साध्यं सिध्यति । पक्षस्य ज्ञेयत्वेऽपि स्वान्यत्वविशिष्टज्ञेयत्वरहितत्वात् भासमानत्वाच्च । पक्षे तु स्वान्यत्वमादाय साध्यसिद्ध्यसम्भवात् तादृशवस्त्वन्तरान्यत्वमादायैव तत्सिद्धिर्वक्तव्या । वस्त्वन्तरे च पक्षान्यत्वविशिष्टज्ञेयत्वराहित्यं, ज्ञेयत्वरूपविशेष्याभावेन, विशेषणस्य पक्षान्यत्वस्य तत्र सत्वात् । तथा च ज्ञेयत्वरहितत्वे सति भासमानत्वं कस्मिंश्चिद्वस्तुनि प्रसिद्धमिति न साध्याप्रसिद्धिरिति भावः । P 553-11

---

१. अत्र कल्पतरौ 'पटवत्' इति शोधनीयम् ।

द्वितीयानुमाने, शश्वदपरोक्षत्वं सर्वदा अपरोक्षत्वं साध्यम्। तस्यापि प्रसिद्धत्वमाह—**तथा देवदत्तस्येति**। व्यासङ्गकालीने अन्यात्मनिष्ठे, अन्यात्मविषयके च, सन्देहध्वंसे साध्याभावेन बाधवारणाय जिज्ञासाक्षणवर्तित्वं, एतदात्मनिष्ठत्वं, एतदात्मविषयकत्वञ्च, पक्षविशेषणम्। अनागन्तुकत्वमात्मानुभवस्य स्फोरयितुं साध्ये **असन्दिग्धेत्यादि**विशेषणम्। अत एवोत्तरत्र, **न भावतत्त्वानुभवजन्येत्येव** वक्ष्यते।

P. 554-1 प

**तन्निवृत्त्यर्थमिति**। नास्तीत्यभावप्रमादिजन्यसन्देहनिवृत्तिषु व्यभिचारनिवृत्त्यर्थमेतदात्माभावप्रमाऽजन्यत्वमेतदात्मविपर्ययाजन्यत्वं, जिज्ञास्यमानैतदात्मगोचरत्वं (नत्वं) चेति, विशेषणत्रयमित्यर्थः। एतदात्मनो नास्तित्वेन विपर्ययः एतदात्मविपर्ययो बोध्यः। **प्राप्त्यभावादिति**। प्रतियोग्यप्रसिद्धेरिति भावः। हेतुमाह—**यत इति**। **पुरुषान्तरारोपितेति**। वादिवाक्यद्वयाधीनास्तित्वनास्तित्वकोटिकः संशय इत्यर्थः। **स्वरूपानुभवादिति**। शरीरातिरिक्तत्वसाधकन्यायोपबृंहितादित्यर्थः।

P. 554-9 प

अनुमानस्य सिद्धसाधनमाशंकते—**ननूक्तविधेति**। हेतूच्छित्तिलक्षणविपक्षबाधकतर्कवशात् स्वभिन्नानुभवविषयत्वमात्मनो न युक्तमिति परिहारतात्पर्यमाह—**यदि तत इति**। **अनुदयसम्भावनयेति**। न्यायाप्रतिसन्धानदशायां प्रत्यक्षानुभवस्य, व्यासज्याद्यप्रतिसन्धानदशायां परोक्षानुभवस्य चानुदयेन तत्सम्भावनयेत्यर्थः।

**तथा हीत्यादिटीकाया असन्दिग्धेत्यादिहेतुसमर्थनार्थतया सन्देहध्वंसपक्षकानुमानपरत्वाभावात्**, तत्र शङ्कोत्तरत्वेन **नचैतदित्यादिटीकावतारणं** अयुक्तमित्यस्वरसादाह—**यद्वेति**। **तदाभ्यामिति**। अनुमानद्वयपरिशोधितसाध्यहेतुकमुक्तानुमानं स्वप्रकाशत्वं साधयतीत्यर्थः।

P. 554-13

---

१. इत उपरि कल्पतरुप्रतीकाः परिमले विलिखिते कल्पतरुपाठान्तरे द्रष्टव्याः॥ तत्र च सर्वे तच्छब्दाः एतच्छब्दरूपत्वेन शोधनीयाः। 'जिज्ञासायां तस्मिन् क्षण एव' इति, 'तथाविधसन्देहनिवृत्तिवत्। सन्देहनिवृत्तिः' इति, 'नास्तीति भ्रमेण वा' इति, 'स च स्वरूपानुभवात् छेत्स्यते' इति च शोधनीयम्॥

२. 'यद्वेति' इति आभोगे धृतः प्रतीकः परिमलधृतकल्पतरुपाठान्तरे न दृश्यते। अतः एवमूहः क्रियते—पाठान्तरे 'अनीश्वरेति विशेषणीयम्' इति वाक्यानन्तरं

परिमले तु—द्वितीयानुमानमारभ्य ननु सुखादीनामित्यतः प्राक्तनो ग्रन्थः प्रक्षिप्त इत्येव सहेतुकमुक्तम्। अस्माभिस्तु बहुषु कोशेषु दर्शनात्, उक्तरीत्या बाधकाभावाच्च प्रक्षिप्तत्वं दुरुल्लेखमिति कृत्वा व्याख्यातमित्यनुसन्धेयम्। कथमात्मैवेति। तथा च सुखादिष्वपि शश्वदसन्दिग्धत्वेन शश्वदपरोक्षत्वसत्त्वात् व्यभिचार इत्यर्थः। आत्मप्रकाशेनैवानुगतेनेति। तथा च सर्वदा अपरोक्षत्वं अपरोक्षतया सदा सत्त्वं, तदभावान्न सुखादिष्वपि व्यभिचार इति भावः।

पूर्वोक्तानुमानस्येति। माभूत् ज्ञानयोः साम्येनेत्यादिटीकासूचितस्येत्यर्थः। विपक्षे दण्ड इति। विज्ञानस्य स्वव्यतिरिक्तसाक्षिग्राह्यत्वानभ्युपगमे वैयर्थ्यम् दण्ड उच्यत इत्यर्थः। उक्तमर्थमिति। भाष्योक्तमर्थं तदवतारणदशायामेव स्फोरयतीत्यर्थः। तस्येति। अवगन्तृस्वरूपस्य मतद्वयेऽप्यविशेषादित्यर्थः। F.555-1

ननु स्वप्नेऽपि मायिकप्रपञ्चाभ्युपगमात् कथं स्वप्नप्रत्ययस्य दृष्टान्तत्वा-[न]भ्युपगमेन वैधर्म्योक्तिरित्यत आह—अभ्युपेत्येति। वैधर्म्योक्त्या अनुमानस्य किं दूषणमुक्तमित्यत आह—एवं तावदिति। साधनव्याप्त्यनुमानस्येति। साधनव्याप्त्यर्थस्य जाग्रत्प्रपञ्चो बाधितो दृश्यत्वादित्यनुमानस्य प्रमातृतावस्थायां प्रपञ्चाबाधस्यैव प्रत्यक्षेणानुभूयमानतया तेन बाधितत्वादित्यर्थः। P.555-6

---

'विपक्षे दण्डमाह—न चैतदिति।' इत्यादिः 'अनवस्थेति' इत्यन्तः परिमलकारस्यापि संमतः कल्पतरुकोशे दृश्यमानः यथावस्थितपाठः एव पाठान्तरे 'यद्वा' इत्युपक्रम्य लिखितो मध्ये। स च परिमलकाराहृष्टः आभोगकारेण दृष्टः स्यात्। अत एव आभोगे यथावस्थितपाठः पृथक् न विवृतः।

१. अयमपि प्रतीकः परिमलधृताधिककल्पतरुपाठान्तरस्थ एव।

२. परिमले केषुचित् कोशेषु अधिकतया दृश्यमानत्वेनोक्ते 'ननु सुखादीनामपी'त्यादिग्रन्थे 'संदेहाभावसाम्ये कथमात्मैव प्रकाश उच्यते' इति शोधनीयम्। तदनुसारेण 'कथमात्मैवेति' इति प्रतीकधारणमाभोगे।

३. कल्पतरौ 'उक्तक्रम'मिति पाठो दृश्यते।

४. कल्पतरौ 'तस्य त्वन्मतेऽपि अमिथ्यात्वादित्यर्थः' इति पाठः।

ननु स्वप्नज्ञानस्य स्मृतित्वकथनं सिद्धान्तविरुद्धमित्यत आह—

P. 555-7 अत एवेति। प्रमाणासहकृतसंस्कारजन्यत्वसादृश्यात् स्वप्नज्ञाने स्मृतिशब्दो गौण इत्यर्थः। अनुभवमात्रवाचकस्योपलब्धिशब्दस्य प्रमाणजन्यानुभवरूपविशेषपरत्वेन व्याख्याने हेतुमाह—एवमव्याख्याने इति। टीकायां—विपरीतत्वे हेतुः, अवर्तमानमिति। यतो भासयति, अतो विपरीता भ्रम इत्यर्थः। टीकायां—स्मृतेरेव तावदिति। प्रमाणासहकृतसंस्कारजन्यज्ञानस्यैव विशेषो दृश्यते। यदि तादृशस्य ज्ञानस्य दोषजन्यत्वेन भ्रमत्वमपि, तर्हि तस्य उपलब्ध्यपेक्षया विशेषे किमु वक्तव्यमित्यर्थः।

P. 556-3 बाधकानुदयादिति। उत्सर्गप्राप्तजाग्रत्प्रत्ययप्रामाण्यबाधकानुमानानुदयादित्यर्थः। तेन सन्दिग्धस्त्विति। एवमर्थकेन तेन भाष्येण सूचितमित्यर्थः। वासनानामर्थोपलब्ध्यधीनत्वकथनस्य प्रयोजनमाह—अतश्च वासनानामिति। लौकिकत्वविशेषणसूचितं दूषणं दर्शयति—अन्तरेणेति। सहोत्पन्नयोरपि रूपघटयोरिवाधाराधेयभावसम्भवाट्टीकानुपपत्तिरित्यत आह—वासना हीति।

शून्यं तत्त्वमिति वदता प्रत्यक्षादीनां प्रामाण्यमिष्यते? उत नेति विकल्प्य प्रथमं निराकर्तुं सर्वप्रमाणेति भाष्यम्। तत्र प्रत्यक्षादीनां प्रामाण्ये हेतुमाह—टीकायां[3]—लौकिकानि हीति। यस्मात्तत्त्व[4]गोचराणि अतः प्रमाणानि हीत्यर्थः। तत्त्वगोचरत्वं प्रमाणानां दर्शयन् भाष्यार्थमाह—

P. 557-6 टीकायां—तैःखल्विति।

---

१. अत्र कल्पतरौ 'प्रमाणामिलितसंस्कारजत्वात्' इति पाठः। अत्र टीकायां 'निद्राग्लानमिति करणदोषाभिधानं मिथ्यात्वाय' इति पाठः। टीकायां इतस्सप्तपङ्क्तिभ्यः पूर्वं 'भवता हि विज्ञानस्य' इति शोधनीयम्।

२. अत्र टीकायां 'अबाधितविषयाप्यनुमानोत्पादसामग्री' इत्यनन्तरं 'ग्राह्यतया प्रमाणम्' इत्येतदधिकमशुद्धं च।

३. अत्र टीकायामुपक्रमे 'यदि साकारं विज्ञानं न संभवति' इति, 'सदसतोरेकत्वानुपपत्तेः' इति च शोधनीयम्। 'असच्चासदिति गृह्यमाणं यथाभूतविपरीतं तत्त्वम्' इति शुद्धः पाठः।

४. टीकायां 'सदसत्त्वगोचराणि' इत्यस्य स्थाने 'तत्त्वगोचराणि' इति पाठ इति ज्ञायते।

प्रत्यक्षादीनां न तात्त्विकं प्रामाण्यमस्ति, किन्तु सांव्यवहारिकम्, ततश्च विचारासहत्वनिषेध्यतात्विकभिन्नकल्पितविषयत्वान्न प्रमाणव्यवस्थाविरोधो, नापि प्रपञ्चस्य सत्त्वमित्येवं द्वितीयमुत्थापयितुं यद्युच्येतेति टीका, तां तृतीयसूत्रयोजनानुगुणमर्थं दर्शयन्नवतारयति— **अतात्त्विकत्वमिति** । P. 557-5

**विचारासहत्वं वस्तूनामित्यादिटीकोक्तमर्थं** विशदीकुर्वन् शङ्कते— **ननु किमन्येति**। प्रत्यक्षादिप्रमाणबोधितविपरीताधिष्ठानतत्वबोधकं न बाधकम्। किन्तु विचारासहत्वबोधकमेव। ततश्च बाधकं प्रमाणं विचारासहत्वं वस्तूनां गमयदतात्विकत्वं गमयतीत्यर्थः ।

**किं विचारासहत्वं नामेति**[1] । बाधकप्रमाणव्यवस्थाप्यं विचारासहत्वं किं सदाद्यन्यतमं ? उत निस्तत्वमिति विकल्पार्थः । (ततश्चा) **तथाचासत्वाव्यवस्थेति**[2] । किञ्चिदपि वस्तु, सत्वेनासत्वेनोभयात्मनोभयबहिर्भावेन च व्यवस्थापयितुं न शक्यत इति त्वदभ्युपगमादिति भावः । **विशेषमाहेति** । बाधोपयोग्यधिष्ठानतज्ज्ञानयोः सम्भवेनेत्यर्थः ।

**सुयोजमिति** । पूर्ववदेव योजनेति भावः । उपस्कारे सति लब्धमर्थमाह— **ततश्चेति** । प्रतिभातीत्यनेन पोषधमित्यस्य प्रकारान्तरेणापि व्याख्यानं सम्भवतीति सूचितम् । तदाह— **यद्वेति**[3] । तर्हि रूढत्वात् कथमपशब्दमित्या- P. 558-4

---

१. टीकायां 'किं पुनरिदं विचारासहत्वं वस्तूनां यत्' इति पाठः ।

२. कल्पतरौ 'तथा चे'ति वाक्यात्पूर्वं 'स चासन्निरत्यसत्त्वं भावानाम्' इति पाठः। ततः पूर्वं च 'सदादिप्रकारैस्तत्व' इति पाठः ।

३. प्रतीकोऽयं मूले न दृश्यते । ऊहितुमपि त्रुटितो भागो न शक्यते । अन्नंभट्टीयब्रह्मसूत्रवृत्तौ अस्माभिरेव संशोध्य मुद्रापितायां 'पोषणमशनदानं धापनं पानदानं ततश्च पोषणधापने बौद्धानां धर्मः' इति विद्यते । अन्नंभट्टश्च भामतीकल्पतर्वनुरोधेन वृत्तिं चकार । ततश्च अन्नंभट्टकृतपोषधपदविवरणमूलभूतः कश्चित् कल्पतरुग्रन्थभागः त्रुटित इति संभाव्यते । भामत्यामपि आनुमानिकाधिकरणे पूर्वं 'लौकिकी हि प्रसिद्धा रूढिः वेदार्थनिर्णये निमित्तं, न तु परीक्षकाणां पारिभाषिकी । पौरुषेयी हि सा न वेदार्थनिर्णयनिबन्धनं, बौद्धपोषधादिप्रसिद्धिवत्' इत्युक्तम् । परं तु लेखकप्रमादात् भामत्यां स पाठः नोपलभ्यते । शोधकंमन्यबुद्ध्यनुरोधेन यः कश्चित्पाठः मुद्रितः । आभोगकारस्यापि स पाठो नोपलब्धः । तेनार्थान्तरमेव वर्णितम् ।

P. 558-6 शङ्कय, प्रसिद्ध्यभावेन वाचकत्ववैधुर्यादित्याह—**लोकैरिति** । (अलोकेति) **स्थिरत्वेति** । अन्वयव्यतिरेकाभ्यां स्थितत्वोक्त्या स्थिरत्वावगमादिति भावः ।

॥ इति अभावाधिकरणम् ॥

---

## ॥ अथ नैकस्मिन्नसंभवाधिकरणम् ॥

**सू०॥ नैकस्मिन्नसम्भवात् ॥ ३३ ॥**

**सू०॥ एवं चात्माऽकात्स्न्र्यम् ॥ ३४ ॥**

**सू०॥ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥**

**सू०॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥**

एकरूपे ब्रह्मणि समन्वयः किमनेकान्तवादविरोधी न वेति संशयमभि-
P. 559-1 प्रेत्याऽऽह—**एकरूपेति** । **मुक्तकच्छपदेन** बुद्धिसन्निधानमुक्त्वा, **समयपदेन** तदाह—**अथवेति** । एवं वादिस्वरूपमाश्रित्य बुद्धिसन्निधानसङ्गतिमुक्त्वा प्रमेयाश्रितां दृष्टान्तसङ्गतिमाह—**उपलब्धेरिति** ।

**अस्तीति कायन्त इति** । तथा च, **कैधातोः** कर्मणि घञि युगागमे च **काय** इति रूपमिति भावः । **अर्हन्निति** तन्मतप्रवर्तकस्य नाम । प्रवृत्तेर्यत्न-रूपायाः परकीयाया अप्रत्यक्षत्वात् कथं ततस्तदनुमानमित्यत आह—**शास्त्री-येति** । शास्त्रचोदिततप्तशिलारोहणादिबाह्यचेष्टयेत्यर्थः । **तस्य देहे इति** । स्वभावव्याघातस्य प्रतिबन्धककर्माधीनतया, कार्यात् कारणानुमानसम्भवादित्यर्थः ।

P. 560-1 प्रवृत्तिद्वैविध्यस्य प्रयोजनं दर्शयन्नाह—**बन्धमोक्षाविति** । **प्रवृत्ती त्विति** । [आस्रावयतीति] आस्रवत्यनेनेत्येतदर्थकथनपरमिदम् । न तु ण्यन्तादेव रूपम् । तथात्वे **आस्राव** इति रूपप्रसङ्गात् । **यद्यपीति** । मिथ्याप्रवृत्तेरपि संसारहेतुत्वादित्यर्थः । तदुक्तम् **जिनदत्तेन**—'**आस्रवः कर्मणा बन्धो निर्जरस्त-द्विमोचन**'मिति । कर्माण्यास्रव इति पक्षे कर्माधीना जन्मपरम्परा बन्ध इति द्रष्टव्यम् । **टीकायामघातिकर्माणीति** । घातिकर्मभिन्नान्यघातिकर्माणीत्यर्थः ।

आशामोदकादीति । आशाविषयसुगुणमोदकादिज्ञानेभ्योऽपी-त्यर्थः । तस्य कर्मणो वेदनीयमिति संज्ञा अन्वर्थेत्याह—तच्च कर्मेति । (विक)[कर्मविपाक]शरीराश्रितत्वादायुष्कादिकर्मणां कथं भेद इत्यत आह—शुक्लशोणितेति[1] । तदुभयमिति । शुक्लं शोणितञ्चेति द्वयम् । तदनु-प्रविष्टजैवज्योतिष्कमायुष्कमित्यर्थः । क्रियाविशेष इति । व्यापारविशेष इत्यर्थः । तेजःपाकेति । व्यापाराविष्टस्य शुक्लशोणितस्य तदनुप्रविष्टजाठरतेजः-कृतपरिपाकवशादित्यर्थः । इत्यस्य रूपमिति । कैधातोरात्वे, 'आतोऽनुप-सर्गे कः' इति कप्रत्यये, 'आतो लोप इटि च' इत्याकारलोपे च, रूप-मित्यर्थः ।

अस्तित्वनास्तित्वयोः प्रत्येकमनेकान्तताकथनानन्तरं मिलितयोरनेकान्त-त्वकथनस्यैव न्याय्यतया भाष्यटीकयोः पाठक्रमो नादरणीयः । किन्त्वार्थ एवेत्याशयेनाऽऽह—स्यादस्ति चेति[2] । तद्विधानेति । तस्य घटादेरर्थस्य सत्त्वविवक्षायामित्यर्थः । युगपत्तद्विवक्षायामित्यर्थं व्याचष्टे—युगपद-स्तित्वेति । आद्यावाच्यविवक्षायामिति सार्धश्लोके कथमाद्यादिशब्दैरेवो-च्यमानानां सत्त्वासत्त्वतदुभयसमुच्चयानामवाच्यत्वमुच्यते ? नह्यत्र चतुर्थभङ्ग इवा-शक्तिरस्तीत्याशंक्य व्याचष्टे—आद्योऽस्तित्वभङ्ग इति ।

P. 560-8

P. 560-12

वस्तुगत्या अस्तित्वादेरनेकान्तत्वात् भङ्गशब्दप्रयोगः । न त्वस्तित्वभङ्ग-स्यैवावक्तव्यत्वमुच्यते । तथात्वे सप्त चैकान्तत्वभङ्गा इत्युपक्रमविरोधात्, आद्यावाच्येत्यादिग्रन्थविरोधाच्च । तथा च, 'सत्त्वमसत्त्वेन सह युग-

---

१. अत्र कल्पतरौ 'शुक्लशोणितव्यतिरेकजाते मिलितं तदुभयस्वरूपमायुष्कम्' इति पाठो दृश्यते । स च लेखकप्रमादसंजातः पाठकदुरदृष्टाधीनः । 'शुक्लशोणित-व्यतिकरे जीवमिलितं तदुभयमायुष्कम्' इति शुद्धपाठस्स्यादिति तर्क्यते ।

२. अत्र भाष्ये टीकायां च सप्तभङ्गी क्रमेणैव निर्दिष्टा दृश्यते । न क्रमभेदेन । कुत्रचिद्भाष्यटीकाकोशयोः चतुर्थभङ्गं तृतीयभङ्गतया, तृतीयभङ्गं चतुर्थभङ्गतया च कश्चित् लेखकाभासः लिलेख । तौ कोशौ कल्पतरुकारैर्दृष्टौ । अतः स्यादस्तीत्यादिवाक्यं कल्पतरु-कृद्भिः लिखितमित्याभोगाशयः ज्ञायते । वस्तुतस्तु स्यादवक्तव्यमिति चतुर्थभङ्गे, अवक्तव्यत्वं अनिर्वचनीयत्वं केन रूपेणेति जिज्ञासायां, सत्त्वासत्त्वाभ्यामवक्तव्यत्वमिति बोधयितुं कल्पतरौ अवक्तव्य इत्यस्याधस्तात् अस्ति नास्तीति संबन्धनीयमित्युक्तमित्यपि वक्तुं शक्यते । न सर्व-प्रसिद्धसप्तभङ्गीक्रमविपर्यासः भाष्यटीकयोरुपन्यस्त इति वक्तव्यमिति भाति ।

पदवाच्यमित्येतत् कथञ्चि'दित्यादिरूपेण पञ्चमषष्ठसप्तमभङ्गा उच्यन्त इत्यर्थः ।

एवं व्याख्याने पञ्चमादिभङ्गानां चतुर्थभङ्गात्फलतो न विशेष इत्यतः P. 561-1 प्रकारान्तरेण व्याचष्टे—अथवेति । तेष्वेव पक्षेष्विति । सत्त्वैकान्तपक्षः सांख्याभिमतः । असत्त्वैकान्तपक्षः, शून्यवाद्यभिमतः । सत्त्वासत्त्वैकान्तपक्षो वैशेषिकाभिमतः । घटादीनां पूर्वोत्तरकालयोरसत्त्वं मध्यकाले च सत्त्वमिति तदभ्युपगमात् । एतेषु पक्षेषु पूर्वपक्षवादिभिरुक्ता ये नियमाः, सत्त्वं निर्वक्तुमशक्यं, अत्यन्तासत्त्वं निर्वक्तुं अशक्यम्, कालभेदेन सत्त्वाविरोधि यदसत्त्वं तन्निर्वक्तुमशक्यमित्येवंरूपाः [अनिर्वाच्यत्वनियमाः] ते भज्यंत इत्यर्थः ।

नन्विति । विधिप्रत्ययेन कर्तव्यतया बोधितस्य वर्तमानत्वायोगादि-P. 561-5 त्यर्थः । गम्यमस्तित्वादीति । तथा च, तत्प्रति विशेषणं, यथा तथा अनेकान्तद्योतीत्यर्थः । टीकायां—स्यादस्ति कथञ्चिदस्तीत्येवं कथञ्चिच्छब्दार्थोऽस्तीत्यनेनानुक्तः स्यात्पदात् प्रतीयत इत्यन्वयः । उत्तरटीकाया उक्तार्थोपपादकत्वाभावात् तथाचेतिशब्दानुपपत्तिरित्यत आह—यथेति । ततः कथमिति । 'किमःक' इति कादेशे सतीत्यर्थः । विधीयते । प्रयुज्यते ।

सप्तानां भङ्गानां समाहारः सप्तभङ्गीति विग्रहे पर्यवसन्नमर्थं दर्शयितुं—सप्तस्वेकान्तेष्विति टीका । तत्र नियममात्रवाचिनाऽप्येकान्तशब्देन प्रकरणबलात् तद्विशेषो लभ्यत इत्याशयेनाऽऽह—अस्त्यादीति । यदि वस्त्वस्तीत्यादिटीकायामस्तिग्रहणं नास्तिग्रहणस्याप्युपलक्षणम् । तथा च, यदि वस्त्वेकान्ततोऽस्ति, एकान्ततो नास्ति वा, ततः, सर्वरूपेणाप्यस्ति, नास्ति वेति तदासीच्छाजिहासाभ्यां पुरुषो न प्रवर्तेत निवर्तेत वेति टीकार्थं सिद्धवत्कृत्य हेतुद्वयं विविच्य योजयति—न प्रवर्तेतेत्यत्रेति ।

P. 561-13 हेयमेवेति । असत्वस्यैकान्त्ये, हेयस्य कथमप्युपादेयत्वाभावेन यद्धेयं तत् सर्वात्मना हेयमेवेति, तद्धि नात्यक्तं स्यादिति, हानं साध्यं न स्यादित्यर्थः ।

१. अत्र टीकायां 'यदि वस्तु अस्त्येवैकान्ततः, ततः तत् सर्वथा' इति पाठः ।

**तत्र चेति** । कल्पितत्वेन सदसद्विलक्षणत्वात् तत्र हेयादिविभागसिद्धिरित्यर्थः । P. 561-15 सत्त्वेनाऽसत्त्वेन च विचारासहत्वान्न पारमार्थिकत्वं प्रपञ्चस्येति टीकार्थमाह—**आरम्भणाधिकरणे हीति** ।

ननु प्रमाणबोधितस्य प्रपञ्चस्य कथं विचारासहत्वमात्रेण मिथ्यात्वमित्याशंक्य, किं प्रमाणबोधितत्वमात्रं सत्यत्वे तन्त्रम्? किं वा बाधाभावे सति तद्बोधितत्वमिति विकल्पं मनसि निधाय नाद्य इत्याह—**टीकायां—न च प्रत्य(क्ष)यमात्रमिति** । द्वितीये किं लौकिकानामपि बाधाभावः सत्त्वव्यवस्थापकः? उत पण्डितानामेव इति विकल्प्य प्रथममतिप्रसङ्गेन निराकृत्य, द्वितीयं निराकर्तुं **पण्डितरूपाणामित्यादिटीका** । तत्र पण्डितानामपि न सर्वेषां बाधप्रत्यय इति दर्शयितुं रूपप्रत्यय इत्याशयेनाऽऽह—**प्रशंसायामिति** । P. 562-2

**टीकायां—फलस्येति** । स्वर्गादिलक्षणस्येत्यर्थः । **टीकायां—पुत्तिका** जन्तुविशेषः, यतस्सूक्ष्मो जन्तुर्नास्ति । प्रदीपवत् सङ्कोचविकासवत्त्वे आत्मनः शङ्किते, कथं भाष्ये विकल्प्य दूषणमित्याशंक्य, दृष्टान्तवैषम्यसिद्धवत्कारेण भाष्यं प्रवृत्तमिति दर्शयितुं **न तावदित्यादिटीका** । तत्र व्याख्येयमंशं व्याचष्टे—**विशरारव इत्यादिना** । पदान्तरप्रक्षेपपूर्वकं भाष्योपादानव्याजेन तद्व्याख्याने बीजमाह—**आगमापायीति** । नन्ववयवानात्मत्वं कथमिष्टं? आत्माभावे बन्धमोक्षयोरयोगात् इत्यत आह—**आरब्धेति** । **भाष्ये** P. 563-4 **प्रसज्यमानमिति** । न च स निरूपयितुं शक्यते अयमसावितीति भाष्य इत्यर्थः ।

अथवेत्यादिभाष्येण जीवस्य यदन्त्यं परिमाणं मोक्षकालीनं, तस्यावस्थितेर्नित्यत्वादाद्यमध्यमयोरुभयोरपि नित्यत्वमेव स्यात् । ततश्चाविशेषः, एकरूपता, परिमाणस्येत्येवं सूत्रं व्याख्यातम् । तत्र मोक्ष-

---

१. अत्र कल्पतरौ 'न च स्वरूपं, सर्वदा सदसत्वद्वयप्रसङ्गात्' इति शोधनीयम् ।

२. टीकायां निर्धारणमेव प्रमाणफलत्वेन विवक्षितमिति ज्ञायते । कल्पतरौ—'ऋषभेण बलीवर्देन' इति व्याख्यातम् । ऋषभदेव इति कश्चित् जैनतीर्थकरः इत्यपि वक्तुं शक्यम् ।

३. टीकायां 'इदं चापरमकृत्स्नत्वेन सूत्रितमित्याह' इत्यत्र अकृत्स्नत्वमिति पाठस्साधुः । अथवा अकृत्स्नत्वपदेनेत्यर्थः ।

P. 563.5 कालीनस्य परिमाणस्याऽन्त्यत्वं दर्शयन् विरोधं शङ्कते—**देहान्तरेत्यादिना**। देहान्तरप्रवेशे पूर्वदेहपरिमाणापेक्षया विलक्षणस्य तद्देहपरिमाणस्य प्रसङ्गात् पूर्वदेहपरिमाणं नान्त्यं भवेत्, तदभावादित्यर्थः।

**किन्त्वाद्येति**। ततश्च, **पूर्वयोरप्यवस्थयोरिति** भाष्यं सूत्रगतोभयशब्दार्थकथनपरम्, न तूभयशब्दस्य परिमाणपरत्वं सिद्धवत्कृत्य तत्सामर्थ्यलब्धार्थकथनमिति भावः। एवमपि नैकरूपपरिमाणात्मकाविशेषापादनं सम्भवतीति शङ्कते—**नन्विति**। **परिमाणभेद इति**। अवयवशैथिल्यमन्तरा परिमाणनाशायोगात्, तच्छैथिल्ये च द्रव्यनाशावश्यम्भावादिति भावः। अविशेषापादनस्यानिष्टपर्यवसानमाह **टीकायां—तथाचेति**। **टीकायां—व्याघातादिति**। शरीरान्तरप्राप्तौ तत्परिमाणसम्पत्त्यभ्युपगमे, एकरूपपरिमाणत्वव्याघातः। तदनभ्युपगमे च शरीरपरिमाणत्वाभ्युपगमव्याघात इत्यर्थः।

**टीकायां—अत्र चेत्यादिना** सूत्रयोजनाप्रदर्शनं प्रथमव्याख्यानभाष्यानुरोधेन। न तु स्वविशदीकृतसन्निहितद्वितीयव्याख्यानानुरोधेन। सन्निधानापेक्षया लिङ्गस्य बलवत्त्वादित्याशयेनाऽऽह—**भाष्यकारेणेत्यादिना**। अविशेषशब्देनैकपरिमाणत्वापादनमनुपपन्नमित्याशयेन शङ्कते—**नन्विति**। **विशेषो** वैलक्षण्यम्। तदभावोऽविशेषः एकरूपत्वं, तदेवापाद्यमिति न विरोध इति P. 564-7 परिहारटीकाभिप्रायमाह—**त्रयाणामिति**। **एवंरूपमिति**[1]। एवंरूपमेकत्वमविशेषशब्देनोच्यत इत्याशयेनाहेत्यर्थः।

॥ इति नैकस्मिन्नसंभवाधिकरणम् ॥

---

१. टीकायां 'न च परिमाणान्तरावरोधे पूर्वं' इति पाठः।

२. अत्र कल्पतरौ 'किं तु यदेकशरीरे परिमाणं तन्मात्रं सर्वशरीरेष्वापाद्यते तदणुर्महान्वा' इति पाठश्शोध्यः। पूर्ववाक्ये 'एवंरूपेण हेतुं योजयति' इति शोध्यम्।

## ॥ अथ पाशुपताधिकरणम् ॥

सू०॥ पत्युरसामञ्जस्यात् ॥ ३७ ॥

सू०॥ संबन्धानुपपत्तेश्च ॥ ३८ ॥

सू०॥ अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

सू०॥ करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

सू०॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

पूर्वाधिकरणसिद्धमर्थं दृष्टान्ततया स्वीकृत्य, जगदुपादानब्रह्मसमन्वयाक्षेपात् सङ्गतिरित्याशयेनाह—सत्वास(त्वयो)त्त्वादेरिति । सांख्ययोगेति भाष्ये सांख्यशब्देन न कापिलं तन्त्रमुच्यते । तत्रेश्वरानभ्युपगमात् । किन्तु हैरण्यगर्भं तन्त्रमित्याशयेन व्याचष्ट इत्याह—सांख्ययोगेति । ततश्च, सांख्यतन्त्रं योगतन्त्रञ्च व्यपाश्रय उद्देश्यं येषामिति टीकार्थः । प्रभृतिग्रहणेन दत्तात्रेयाष्टावक्रमहर्षिप्रभृतयो गृह्यन्त इति भावः । P 565-1

जैवी जीवरूपा, आवृतत्वादिति अविद्यादिभिरावृतत्वात्, प्रधानादिभ्यो विविक्तमात्मस्वरूपं न जानातीत्यर्थः । कथं तर्हीति । स्वत एव ज्ञप्तिरूपस्य ज्ञातृत्वायोगादिति भावः । वृत्तिप्रतिफलितज्ञप्त्याश्रयत्वादुपपद्यते ज्ञातृत्वमिति परिहरति—तत्राहेति । अनुपश्यतीति । प्रत्यये पश्यति सति, तदनुप्रवेशेन पश्यतीवेत्यर्थः । कथं तर्हि प्रधानपुरुषयोरिति द्विवचनमित्यत आह—समासान्तर्वर्तीति । प्रधान सु पुरुष सु इत्येवंरूपसमासान्तर्वर्तीत्यर्थः । P. 565-5

योगसूत्रगतविशेषणद्वयप्रयोजनकथनार्थं प्रधानपुरुषाभ्यामन्य इति टीकेत्याशयेनाऽऽह—पुरुषत्वादिति । टीकासूचितमनुमानं विशदयति—ईश्वर इति । अभ्याहृतमिति । स्वेनेति शेषः । न तूपादानमिति टीकया द्रव्यं प्रतीत्यध्याहारसूचनादिति भावः । उपादानकारण[स्य एक]स्यैव निमित्तसमवधानेन कर्त्रधिष्ठेयत्वात् कथं जगत्कारणानामिति बहुवचनमित्यत आह—प्रधानस्येति । P. 566-2

अत्र केवलेनानुमानेन प्रत्यवतिष्ठमानं प्रति तदनुमानदूषणं सिद्धवत्कृत्य, प्रमाणमात्रेण प्रत्यवतिष्ठमानं प्रति, दूषणं दातुमिदमत्राकूतमित्यादिटीका P. 566.3 प्रवृत्तेत्याशयेन टीकामवतारयति— **सिद्धान्तस्त्वित्यादिना**। **तत्र अनुमानं तावदित्यादिटीका**मनुमानादिना प्रमित ईश्वरे अनुमानादनुपादानत्वं साध्यत इति पक्षनिराकरणपरतया योजयितुं **तस्मादनेनेति टीकां** श्रुतिप्रमिते ईश्वरे अनुमानादनुपादानत्वं साध्यत इति पक्षनिराकरणपरतया योजयति— **आस्थीयमानमपीति**।

**तस्मादित्युपसंहारभाष्ये ईश्वरकल्पनेति** श्रवणादेतदुक्तमिति **टीकायामागमादीश्वरसिद्धाविति** श्रवणाच्च **भाष्यटीकयोरी**श्वरसाधकानुमानदूषणपरत्वमेव, नतु तस्यानुपादानत्वसाधकानुमानदूषणपरत्वमिति मन्वानस्तदनुगुणतया **तत्रेति पदं** योजयति ईश्वर इत्यर्थ इति। ईश्वरे अर्थापत्त्यनुपन्यासात् कथं तावच्छब्द इत्यत आह— **पौरुषेयेति**। अनेन **अस्तु तर्ह्यनुमित इति** शङ्काग्रन्थे **अनुमितपदं** योगवृत्त्या श्रुत्यनन्तरभाविप्रमाणप्रमितपरमिति सूचितम्।

P. 566-9 ईश्वरसाधकानि पराभिमतान्यनुमानानि स्वयं दूषयति— **तथा हीत्यादिना**। सकर्तृकत्वं किं कर्तृजन्यत्वमात्रम्? अव्यवहितप्राक्कालप्रयत्नवज्जन्यत्वं वा? नाद्यः। जीवेनादृष्टद्वारा जन्यत्वसिद्धेः, सिद्धसाधनापातात्। द्वितीये अव्यवहितप्राक्कालवर्तित्वं प्रयत्नस्य किं पक्षापेक्षया? दृष्टान्तापेक्षया, यत्किञ्चिदपेक्षया वा? सर्वथापि नोपपद्यत इत्याह— **जीवादृष्टजत्वसिद्धेरित्यादिना**।

अप्रसिद्धविशेषणविशेष्यत्वमेव दर्शयति— **द्व्यणुकस्येति**। **कार्यत्वादित्यत्र चेति**। **योगिभिरर्थान्तरतेत्यर्थः**। **भ्रमसमानाधिकरणेति**। **भ्रमसमानाधिकरणत्वविशिष्टं यद्धर्मविषयत्वं तद्रहितेत्यर्थः**। **अप्रसिद्धविशेषणत्वमिति**। भ्रमसमानाधिकरणत्वरहितसाक्षात्काराप्रसिद्ध्या तद्घटितसाध्याप्रसिद्धेरप्रसिद्धविशेषणत्वं **पक्षस्येत्यर्थः**। धर्मविषयत्वग्रहणे सति, विशिष्टाभावघटितसाध्यस्य घटादावेव सिद्धेः, नाप्रसिद्धविशेषणत्वमिति, **तन्नि-** P. 567.9 **वृत्त्यर्थत्वं धर्मविषयत्वग्रहणस्य** युज्यत इति दर्शयति— **अस्मादादीनामिति**।

उक्तानुमानादीश्वरसिद्धिप्रकारं दर्शयति—**साक्षात्कारस्य चेति । धर्मविषयत्वव्याघात इति । पक्षस्य धर्मस्य साक्षात्कारविषयत्वसाधने** साक्षात्कारस्य तद्विषयकत्वावश्यम्भावेन, धर्मविषयकत्वराहित्यमादाय साध्यपर्यवसाने व्याघात इत्यर्थः । **तत्किमिति ।** P. 567-10

यद्यपि प्रतियोग्यधिकरणसंसर्गारोपजन्यप्रतीतिविषयोऽभावः संसर्गाभावः इत्येव परेषां मतं, नतु संसर्गप्रतियोगिकोऽभावः संसर्गाभाव इति, तथा च विकल्पानवकाशः[1] । तथापि, प्रतियोग्यधिकरणसंसर्गारोपस्यात्यन्ताभावादिप्रतीतिकारणत्वे मानाभावात्, 'भूतले घटो नास्ती'त्यादिप्रतीतेः लोकव्यवहारानुरोधेन घटप्रतियोगिकोऽभावो भूतलाधिकरणक इत्येवमभावभूतलसम्बन्धगोचरत्वेन, घटभूतलसम्बन्धगोचरत्वाभावादगत्या संसर्गप्रतियोगिकोऽभावः संसर्गाभाव इत्येव वक्तव्य इति मनसि निधायैवं विकल्पः इति द्रष्टव्यम् ।

**उत तत्संसर्गेति ।** धर्मविषयत्वसंसर्गसंसर्गेत्यर्थः । अनुमानेन कथञ्चिदीश्वरमात्रसिद्धावपि सच्चिदखण्डानन्दप्रत्यगभिन्नस्वरूपं न कथञ्चिदप्यनुमानेन सिध्यतीति सूचयन्नाह—**सत्सुखाद्वैतेति । स्वभाताय हरये नृकण्ठीरवायेत्यर्थः ।** P. 567-19

**एवं तत्र अनुमानं तावदिति टीकावाक्यमागमादीश्वरसिद्धा**वित्युत्तरटीकानुरोधेन योजितम् । इदानीं **पूर्वटीकानुरोधेन** योजयति—**अथवेत्यादिना ।** पूर्वटीकानुरोधित्वमस्य व्याख्यानस्य दर्शयितुं **पूर्वटीका**वाक्यस्य तत्पूर्वटीकानुरोधेन लब्धमर्थं दर्शयति—**पूर्वग्रन्थेनेति । तस्मादनेनेति पूर्वटीकावाक्येनेत्यर्थः ।**

उत्कर्षसमत्वं परिहर्तुमाह—**व्याप्तेरिति ।** चेतनत्वे द्रव्यानुपादानत्वव्याप्तिवद्रागादिमत्त्वव्याप्तेरप्यविशेषादित्यर्थः । **तथा चेति ।** साध्यविरुद्ध इव वाद्यभिमतविशेषणान्तरविरुद्धोऽपि हेतुः विरुद्धहेत्वाभास इति भावः । **तत्राप्यागमप्रामाण्यादिति ।** यदि चिरातीतान्निर्व्यापारादपि यागात् स्वर्ग इत्यागमो बोधयेत्, तर्हि तथा बोधकागमप्रामाण्यात् कालान्तरकृतयागादपि स्वर्गोऽस्तु का क्षतिः । P. 568-3

---

१. अत्र टीकायां 'तदनुसरणे चासामंजस्यम्' इति पाठः ।

न तु तथा बोधयत्यागमः। किन्तु यागात्स्वर्ग इति, तादृशश्चागमो मध्ये व्यापारकल्पनेपि न विरुध्यत इति, स्वरूपेण व्यापारात्मना वा अव्यवहितपूर्वक्षणवर्तिन एव कारणत्वप्रख्यापकं लोकप्रमाणमनुरुध्यापूर्वकल्पनेत्यर्थः। स्वतन्त्रानुमाने तु दृष्टान्तगतव्यासधर्मप्रसङ्गो दुर्वार इत्याशयेनाऽऽह—**टीकायामागमानपेक्षमिति।**

प्राणिकर्मापेक्षत्वादित्यारभ्य प्रसङ्गादित्यन्तं भाष्यमुपात्तं व्याख्यातुमयमर्थ इत्यादिटीका। तस्याः स्वतन्त्रोपीश्वर इत्युपसंहारटीकानुरोधेन व्यावर्त्याशङ्कां प्रदर्श्य, **करुणापराधीन** इति विशेषणानुरोधेन तां दर्शयति—

P 568-6 **अथवेति।** अस्मिन् पक्षे करुणयैव न कर्मभिः प्रवर्त्यत इति **कर्मभिरिति** कथं **टीके**त्यत आह—**उत्तरस्मिन्निति। कर्मभिरिति** प्रयोजननिर्देशः। प्रयोजनस्यापि हेतुत्वविवक्षायामध्ययनेन वसतीतिवत् तृतीयेति भावः।

दृष्टविपरीतमित्यस्यापि योजनामाह—**दृष्टविरुद्धमिति।** पूर्वस्मिन् व्याख्याने स्वतन्त्रस्य परप्रवर्त्यत्वं लोकदृष्टविरुद्धमिति तदर्थः। इदानीन्तु दृष्टस्य दृश्यमानकार्यस्य करुणाहेतुकत्वं विरुद्धमिति तदर्थ इति भावः।

निराकरणभाष्याभिप्रायं दर्शयितुं **अथ पूर्वं कर्मे**त्यादिटीका। तत्र पूर्वस्य कर्मण ईश्वराप्रवर्तितत्वं कथमुक्तम्? परेण तस्यापि कर्मण ईश्वरप्रवर्तितत्वाभ्युपगमादित्यत आह—[**ईश्वरेणेति।**] **एवं सतीति।** ईश्वरस्य पूर्वकर्मप्रवर्तकत्वे उपपत्तिमनुक्त्वा [परेण] यदि ततोऽपि पूर्वकर्मावलम्ब्येतेति। तत्रापीत्यादिटीकां पूर्वं कर्मेति पदानुषङ्गेण योजयति—**तत्रापीति।**

P. 568-11 **अनुपपत्तिसाम्यादिति।** अन्धानामिष्टदेशप्राप्ताविव कर्मेश्वरयोः प्रवर्त्यप्रवर्तकभावेप्युपपत्त्यभावसाम्यादित्यर्थः।

'प्रवृर्तनालक्षणा दोषा' इत्येतत्स्वार्थप्रवृत्तविषयम्, न तु परार्थप्रवृत्तविषयमित्यभिप्रेत्य शङ्कते **टीकायाम्—नन्ु कारुण्यादपीति।** कारुण्यस्य प्रवर्तकत्वे मानाभाव इति परिहारतात्पर्यमाह—**टीकायां—कारुण्ये हीति।** पुरुषविशेषत्वाभ्युपगमाच्चेत्यादिभाष्यं व्याचष्टे—**पुरुषस्य चेति।**

भाष्ये **कार्यकारणभावस्यासिद्धत्वकथनं** प्रधानतत्कार्यविषयम्, प्राधानपुरुषेश्वराणां मिथः कार्यकारणभावाप्रसङ्गेन तन्निषेधायोगादित्याशयेन **टीकायां**

**नहि प्रधानस्येति।** शङ्कते—**परस्यापीति** [इति] टीकागतं परस्यापीति पदद्वयं प्रतीकतया गृह्णाति—**परस्यापीति।** P. 569-2

ननु सिद्धान्ते ईश्वरप्रणीतत्वाभ्युपगमाद्वेदस्य, तयोरनादित्वमात्रेण कथमुक्तदोषाभाव इत्यतस्तात्पर्यमाह—**शास्त्रयोनित्वेऽपीति।** श्रुतिबोधितेऽर्थे अनुपपत्तिशङ्कानुदयान्न मायाया अधिष्ठेयत्वानुपपत्तिरिति परिहरति—**तत्राहेति। अधिष्ठानेति सूत्रेति।** अधिष्ठानानुपपत्तेश्चेति सूत्रेत्यर्थः। **प्रधानपुरुषेश्वरत्रयमपीति,** पुरुषगता च महासंख्येति च भाष्यद्वयानुरोधाट्टीकायां— संख्याभेदवत्त्वं द्विप्रकारमनुमतमित्याह—**एषां पुरुषानि(णाभि)ति।** P. 570-2

**प्रवाहनित्यत्वादिति।** अत्र परिमलकृतः—द्रव्यत्वादन्तवत्त्वानुमाने, संसारिणामेकैकश्येनानित्यत्वेऽपि प्रवाहरूपेण नित्यत्वसम्भवात् संसारानुवृत्तौ, 'तच्छून्यतायामीश्वरः किमधितिष्ठेत्? किंविषये वाऽस्य सर्वज्ञत्वेश्वरत्वे स्यातामिति भाष्योक्तं दूषणमलग्नकं स्यात्। द्रव्यत्वेन संख्याभेदानुमाने तु, तावत्संख्याकानां क्रमेण मुक्तौ शून्यतापत्तिरिति भाष्योक्तं दूषणं लग्नं भवेदित्यभिप्रेत्य संख्याविशेषानुमानमाहृतमित्यर्थः।

अत एव, संसारिणामेकैकस्मिन्नेकत्वसंख्यासम्भवात् तत एव तदन्तवत्त्वानुमानसम्भवे, त्रित्वादिपर्यन्तधावनं किमर्थमित्यपि शङ्का निरस्ता। तावता शून्यत्वालाभे भाष्यासामञ्जस्यात्। तस्मादियन्त एवेति परिच्छिन्नानां जीवानां मध्ये प्रतिकल्पमेकैकस्मिन्ननन्तं प्राप्तेऽप्यनाद्यतीतकल्पप्रवाहे सर्वेऽपि जीवा अतीताः स्युरिति कस्य भोगार्थं प्रधानमीश्वरोऽधितिष्ठेत्? किंविषयं वास्य सार्वज्ञ्यं भवेत्। इदानीं सर्वशब्दार्थालाभादिति दूषणसिद्ध्यर्थमियत्तारूपसंख्याविशेषानुमानं भवेत्।

---

१. अत्र कल्पतरौ 'ईश्वरसिद्धि'मित्यस्य पराभिमतेश्वरसिद्धिमित्यर्थः।

२. परिमले नैवमस्ति। किं तु—'एतेन—संख्यावत्त्वादेवान्तवत्त्वमनुमेयं चेदपि प्रधानस्येश्वरस्य जात्यैकीकृतानां पुरुषाणां च त्रित्वसंख्यया अन्तवत्त्वमनुमीयतां, तेषां प्रतिव्यक्तिगतयैकत्वसंख्यया वा तदनुमीयतामित्यपि शङ्का निरस्ता' इति वर्तते। अतः परिमलोक्तानुवादस्थले तदनुक्तोक्तिरियमसमंजसा।

ननु यद्यतीतेषु कल्पेष्वियत्तापरिच्छेदाभावरूपमानन्त्यमिष्यते, तदा तत्रैव द्रव्यत्वादिहेतोर्व्यभिचारः। यदि नेष्यते तदा जीवानामियत्तावतामतीतकल्पेषु केषाञ्चिन्मुक्तावपि तद्धिकल [तदधिक] संख्यावतामस्मिन् कल्पे अनुवृत्तिसम्भवेन तद्भोगार्थमीश्वरस्यापि प्रधानाद्यधिष्ठातृत्वं चोपपद्यते। अग्रे कदाचित्तदुभयं न स्यादिति चेदिष्टापत्तिः। नहि तत्रानुभवविरोधोऽस्ति। अभ्युपगम्यते च सर्वमुक्तिवादिभिरग्रे [तथाभावः] तदभावः। किञ्चानुमानिकेश्वरवादिना प्रधानपुरुषेश्वराणां त्रयाणामपि तुल्यस्वभावत्वाभ्युपगमात् केन हेतुना [सर्वेषु] पुरुषेष्वतीतेष्वपि प्रधानेश्वरयोरवस्थितिमभ्युपगम्य दूषणमुच्यते। तस्मादयुक्तमिदं दूषणमिति चेत्।

उच्यते। द्रव्यत्वादिहेतुना पुरुषाणामियत्तानुमाने तुल्यन्यायतया तदुपभोग्यदुःखानामपि इयत्तासिद्धौ सर्वपुरुषगतानां सर्वेषामपि दुःखानामनादिकाले भुज्यमानानामुच्छेदोऽवश्यम्भावीत्यतो विनैव तत्त्वज्ञानं सर्वेषु पुरुषेषु मुक्तेषु [स्वरूपतः स्थितेष्वपि, इदानीं स्थितेनापि] प्रधानेन तेषां भोगार्थं न प्रवर्तनीयं, नापीश्वरेण तदधिष्ठेयं, नापि स्रज्यं वस्तु किञ्चित्तेन ज्ञेयमस्तीति दूषणे तात्पर्यम्।

यदि च [द्रव्यत्वहेतुनैव संख्याविशेषवत्त्वानुमानमिष्यत इति] द्रव्यत्वाभावान्न दुःखानामियत्तानुमानमिष्यते। तदापि प्रतिपुरुषवर्तिदुःखानां वस्तुत इयत्ताभ्युपगमे माषराशिन्यायेन क्रमेण भुज्यमानानां स्वयमेव क्षयः स्यादिति मुक्तेस्तत्त्वज्ञानैकसाध्यत्वाभ्युपगमविरोधः। इयत्तानभ्युपगमे च तत्त्वज्ञाने सति योगसामर्थ्यादनेकशरीरपरिग्रहेणाप्यनन्तदुःखा[न]नुभवान्मोक्षो न स्यादिति दूषणं द्रष्टव्यमित्याहुः।

---

१. परिमले एवं वर्तते–'यदि नेष्यते तदा जीवानामियत्तारूपसंख्याविशेषवत्त्वेऽपि अतीतकल्पापेक्षया अधिकसंख्यावन्तस्ते इतीदानीं केषांचित् संसारिणामनुवृत्तेः तद्भोगार्थमीश्वरस्य प्रधानाधिष्ठातृत्वं सर्वज्ञत्वं चोपपद्यते' इति।

२. परिमले 'किं च प्रधानपुरुषेश्वराणां त्रयाणामपि अन्तवत्त्वमानुमानिकेश्वरवादिनं प्रति आपादितं, केन हेतुना' इत्यादि वर्तते।

३. 'संख्यान्यत्वेन प्रमेयत्वेन' इति परिमले।

तत्र तावत्, उच्यत इत्यादिसमर्थनमयुक्तम्। सर्वपुरुषगतसर्वदुःखोच्छेदकालस्य सर्वमुक्तिकालतया प्रागुक्तरीत्या अनुभवविरोधाद्यभावेन तदानीमधिष्ठेयाद्यभावस्यानिष्टत्वाभावात्। अतीतानन्तकल्पेष्वेव सर्वदुःखोच्छेदापादनेन दूषणाभिधाने, तेषु सकलसंसार्युच्छेदापादनेनापि दूषणाभिधानसम्भवेन यथाश्रुतत्यागवैफल्यात्। द्रव्याश्रितैव संख्येति मते द्रव्यत्वं हेतूकृतमित्याचार्यवाक्यानुरोधेन दूषणस्य तन्मतसाधारण्यावश्यम्भावितया तदसम्भवाच्च। न च तत्र दूषणान्तरे तात्पर्यं वर्णितमिति वाच्यम्। इयत्ताशालिनामपि दुःखानां तत्वज्ञानेन विना [न] क्षयः। तेन विना चरमदुःखस्यैव अनुत्पत्त्या भोगेन तत्क्षयायोगात्, तथा च तत्वज्ञानवैफल्यम्। (?)

प्रवाहनित्यत्वादित्यादिवाक्यस्य प्रथमतो वाक्यार्थकथनमप्ययुक्तम्। प्रधानञ्च सविकारमित्यादिभाष्ये हि, तच्छून्यतायामीश्वरः किमधितिष्ठेदिति वाक्यं, तत्र तच्छब्दस्य संसारिपरत्वम्। तेषाञ्च मुक्तौ सत्यां शून्यतापत्तिरिति च कथमेतत्सङ्गच्छेत। संसारिवेषेण पुरुषाणामन्तवत्त्वसमर्थनवत् प्रधानेश्वरयोः केन वेषेणान्तवत्त्वमुच्येत ? कथञ्चित्तदुक्तावपि भाष्योक्तशून्यवादप्रसङ्गः कथं समर्थ्येत ? परं प्रति प्रधानादीनां स्वरूपेणैवान्तवत्त्वापादनसम्भवे क्लेशाश्रयणस्य च न किञ्चित्प्रयोजनम्।

तथा च सूत्रगतमन्तवत्त्वं विनाशित्वमित्येव पूर्ववाक्ये ग्रन्थकारेण व्याख्यातम्। न च ततश्चेयत्तापरिच्छिन्नानामित्यादिभाष्यानुरोधादेवं व्याख्यानम्। पूर्वोत्तरभाष्ययोः प्रधानादित्रयस्य स्वरूपेणैवान्तवत्त्वप्रतिपादकत्वात्। ततश्चेत्यादिभाष्यं तु प्रौढिवादेन प्रधानादन्यः संसार इति यस्य मतं तस्य मते संसारस्य संसारिणां चान्तवत्त्वप्रतिपादनाय प्रवृत्तम्। तत्प्रतिपादनमपि प्रधानं संसार इति पक्षे वक्ष्यमाणमधिष्ठेयाद्यभावदूषणं प्रधानादन्यः संसार इति पक्षेऽपि मुक्तेऽपि पुरुषान् प्रत्यप्यधिष्ठातृत्वं पराभ्युपगतं न स्यादिति दूषणज्ञापनाय।

एवं पुरुषाणां प्रधानस्य च प्रत्येकमन्तवत्त्वे दूषणमभिधाय सर्वेषामप्यन्तवत्त्वे दूषणं दातुं प्रधानपुरुषेश्वराणाञ्चेति भाष्यं प्रवृत्तमिति सुगमं भाष्यम्। ग्रन्थार्थवर्णनस्यायुक्तत्वादेव तन्मूलकं नन्वित्यादिना उक्तग्रन्थदूषणमप्ययुक्तमेव।

कथं तर्हि ग्रन्थस्यार्थ इति चेदित्थम्—द्रव्यत्वादन्तवत्त्वानुमाने, हेतोरेकैकवृत्तित्वादेकैकश्येनैवान्तवत्त्वमनुमितं स्यात्। न त्वेकदा सर्वेषामन्तवत्त्वम्। तथा च सत्यनित्यानामपि प्रधानादीनां बीजाङ्कुरवत्प्रवाहरूपेण संसारनिर्वाहकत्वे भाष्योक्तानि दूषणान्यसङ्गतानि स्युरिति संख्याभेदवत्त्वानुमानम्। तदनुमाने च, तस्य प्रत्येकावृत्तितया तदधिकरणेषु सर्वेष्वप्येकधैवानित्यत्वं सिध्यतीति, तदनुरोधेन प्राचीनेषु कल्पेषु पृथिव्याद्यनित्यपदार्थनाशवत्, प्रधानादीनामपि नाशे, इदानीमधिष्ठेयादिकं न स्यादिति भाष्यगतानि दूषणानि सङ्गतानि स्युरिति विद्वद्भि(र्वि)र्वीतमत्सरैर्विभावनीयम्।

P. 571-2 सर्वत्र संख्यास्तीति। येषामाग्रह इत्यनुषङ्गः[1]। सप्तमी च निमित्तार्थेति। निमित्तत्वं हेतुत्वं, तल्लक्षणार्थेत्यर्थः। नन्वानुमानिकेश्वरवादिनं प्रति, पत्युरसामञ्जस्यादित्यादिभिः सूत्रैः ईश्वरो रागादिमान् कर्तृत्वात्, कुलालवत्। ईश्वरः स्वसंयुक्तमेवाधितिष्ठेत्। रूपादिहीनं वस्तु नाधिष्ठेयम्। ईश्वरः शरीरी, भोगवान् वा रूपरहितवस्त्वधिष्ठातृत्वात्। प्रधानादिकमनित्यम्, इयत्तापरिच्छिन्नत्वात्। इत्यनुमानोपन्यासेन दूषणमुच्यते। नचैतत्सम्भवति, एतेषामनुमानानां सामान्यतोदृष्टमात्रतया अप्रयोजकत्वशंकाकलंकितत्वेन दूषणासामर्थ्यादित्यत आह—सामान्यतोदृष्टेति।

P. 571-3 सकर्तृकत्वानुमानस्यापि सामान्यतो दृष्टमात्रतया अप्रयोजकत्वं तुल्यम्। तत्र कथञ्चिदनुकूलतर्कसम्पादने इहापि स सुसम्पाद इति भावः। टीकायां[2] परिहरतीत्यनन्तरं प्रतीकग्रहणं[3] न दृश्यते अत आह—तत इति। असति ह्यन्त इति। इयत्तायामित्यर्थः। टीकायामप्यन्तशब्द इयत्तापरः भाष्यानुरोधात्। आगमानपेक्षत्वं नानुमेयस्योच्यते प्रयोजनाभावात्। किन्तु वादिन इत्याशयेनाऽऽह—वादीति।

P. 572-2

॥ इति पाशुपताधिकरणम् ॥

---

१. अत्र कल्पतरौ 'सर्वत्र संख्यास्तीति' इत्यनन्तरं 'मतं' इति वर्तते। अतः अनुषङ्गोऽनपेक्षितः। 'मत'मिति पदं नास्ति केषुचित् कोशेष्विति ज्ञायते। तदनुरोधेनानुषङ्गकथनमिति भाति। 'तन्मते अनुमानं' इति कल्पतरौ पाठः।

२. अत्र टीकायां पूर्ववाक्ये 'यस्यान्तोऽस्ति तस्यान्तवत्त्वाग्रहणं' इति शोधनीयम्।

३. यद्यपि टीकायां 'परिहरती'त्यनन्तरं 'तत इति' इति प्रतीकग्रहणमस्ति। तथापि तद्रहितपाठमभिप्रेत्येदम्।

## ॥ अथ पाञ्चरात्राधिकरणम् ॥

सू०॥ उत्पत्त्यसम्भवात् ॥ ४२ ॥

सू०॥ न च कर्तुः करणम् ॥ ४३ ॥

सू०॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

सू०॥ विप्रतिषेधाच्च ॥ ४५ ॥

अस्याधिकरणस्य पूर्वाधिकरणेन बुद्धिसन्निधानलक्षणां सङ्गतिमाह—**अधिष्ठातैवेति । समन्वयस्य बाध इति ।** अनित्यस्य जीवस्य ब्रह्माभेदायोगादिति भावः । ननु पाञ्चरात्रकर्तुर्वासुदेवस्य महत्त्वे कर्तृगौरवात् कापिलपातञ्जलस्मृतिप्रामाण्यनिरसनानन्तरं पूर्वपाद एव पाञ्चरात्रप्रामाण्यनिरसनमपि कर्तव्यम्, न त्विहेत्यत आह—**अवान्तरसङ्गतिवशादिति ।** P. 573-2

किं करणमात्रस्य कर्त्रनुत्पाद्यत्वम्? उत ज्ञानकरणस्येति, विकल्प्य, प्रथमं यद्यप्यनेकेति टीकया निराकृतम् । द्वितीयं शङ्कते—**भवत्विति ।** ननु प्रयत्नादीनां व्यापाराभावात् कथं करणत्वमित्याशंक्य, कार्यसाधनेऽतिशयविवक्षया करणत्वमित्याह—**प्रयत्नादीनामिति ।**[2] P. 573-5

भाष्यटीकयोर्वेदविरोधादप्रामाण्यं पाञ्चरात्रस्येत्युक्तं, तदयुक्तम् । द्वयोरपि सर्वज्ञप्रणीतत्वेन बलाबलानिरूपणादित्यत आह—**सिद्धान्तस्त्विति ।** बुद्धिपूर्वकत्वेऽपि निर्दुष्टप्रणीतत्वात् कथं दौर्बल्यमित्यत आह—**यान्नद्धीति ।** भगवतो वासुदेवस्य पाञ्चरात्रमूलभूता बुद्धिर्विष्णुस्मृत्यादिमूलबुद्धिवत् स्मृतिरूपा वा स्यात् । सर्वज्ञत्वात् तस्य प्रत्यक्षरूपा वा? आद्ये कल्पे स्मृतिरूपबुद्ध्यर्थं,

---

१. अत्र कल्पतरौ पूर्ववाक्ये 'बुद्धादिदर्शनवत् व्यामोहार्थमीश्वरप्रणीतत्वाश्रवणात्' इति पाठः ।

२. अनेन 'प्रयत्नेन्द्रियार्थे'ति टीकापाठ इति ज्ञायते ।

द्वितीये सर्वज्ञत्वनिर्णयार्थं च, वेदोऽपेक्षित इत्युभयथापि वेदप्रामाण्यमुपजीव्यैव पाञ्चरात्रप्रामाण्यं समर्थनीयमित्युपजीव्यविरोधात् **गौणत्वमित्यर्थः** ।

P. 573-8 **अतः प्रमाणेति** । न च प्रत्यक्षवेदमूलकत्वात् कथं विषयापहार इति वाच्यम् । पाञ्चरात्रमूलवेदस्य क्वाप्यदर्शनेन प्रत्यक्षत्वासिद्धेः । **एकायनशाखा** तन्मूलभूता काचिदस्तीति कल्पनस्य[1] निष्प्रमाणकत्वादिति भावः । **पूर्वपक्षो-क्तेति**[2] । तत्कर्तुस्सर्वज्ञत्वावगमविरोधादित्यर्थः ।

ननु टीकायां **सङ्कर्षणोऽकरण इति** कथमकरणत्वमुक्तम्? करणान्तरस्यापि सम्भवादित्यतो विकल्प्य व्याचष्टे—**सङ्कर्षणसंज्ञ इति**[3]। **ईश्वरा इति** विशेषणसूचितं हेतुं दर्शयति—**ईश्वरत्वेति** । उत्तरत्राप्ययमेव हेतुरित्याशयेनाऽऽह—**उत्पन्ने हीति** । परिषदोऽनीश्वरत्वे लोक एव प्रमाणमित्याशयेनाह—**परिषदनीश्वरत्वमिति**[4] ।

P. 574-2

---

१. छान्दोग्योपनिषदि भूमविद्यायां 'वाकोवाक्यमेकायन'मित्यत्र एकायनपदेन एकायनशाखोच्यत इत्यपि केचन जल्पन्ति । एकायनं नीतिशास्त्रमिति तत्र भगवत्पादव्याख्या । नामसाम्यमात्रेण व्याख्याने अतिप्रसंगात् केषांचिदुक्तिर्न शोभते ।

२. अत्र कल्पतरौ 'पूर्वपक्षयुक्तेः' इति पाठो दृश्यते । पूर्वपक्षोक्तयुक्तेरिति आभोगात् पाठो ज्ञायते । पूर्वोक्तयुक्तेरिति तु शुद्धः पाठ इति भाति ।

३. अत्र टीकायां 'करणनिर्माणसामर्थ्ये' इति दृश्यते। कल्पतरौ 'करणसामर्थ्ये' इति पाठमनूद्य करणं कृतिरिति व्याख्यातम् । उभयमप्यविरुद्धम्। करणमित्येतन्मात्रोक्तावपि कस्य करणं कृतिरित्याकांक्षायां करणस्य कृतिरिति वक्तव्यम् । तदेव करणनिर्माणमिति पाठेप्युच्यत इति नार्थभेदः ।

४. 'संभूय चेशनायां परिषदो न कश्चिदीश्वरस्स्यात्' इति टीकापाठः । 'परिषदनीश्वरत्वं निश्चितम्' इति कल्पतरुपाठः इति आभोगेन निर्णीयते। टीकायां 'परिशुद्धः' इति, कल्पतरौ 'परिशुद्धं' इति च पाठः अपरिशुद्धः। आभोगदर्शनात् प्राक् केनापि यथा नावगम्येत तथा भामतीकल्पतरुलेखकेन प्रतिबद्धम् ।

भाष्य इति शेष इति। विप्रतिषेधश्चास्मिन् शास्त्र इत्यादिभाष्यं इत्यर्थः। तस्य चायमर्थः। ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि गुणा इत्युक्तम्। तत्र सामान्यतो विशेषतश्च सकलवस्तुगोचरम् ज्ञानम्। अप्रतिहतेच्छत्वमैश्वर्यम्। जगत्प्रकृतिभावः शक्तिः। जगत्सृष्टौ श्रमादिराहित्यं प्रयत्नेन विना स्वसृष्टसकलजगद्धरणञ्च बलम्। जगत्प्रकृतित्वेऽपि विकारविरहो वीर्यम्। जगत्सृष्टौ सहकार्यनपेक्षत्वं पराभिभवसामर्थ्यञ्च तेजः। एते गुणा इति क्वचिदुक्त्वा क्वचिदात्मान एवेति स्वरूपरूपत्वमुक्तमिति विरोधः। P. 575. 1

इत्यादिवेदनिन्दादर्शनादिति भाष्ये आदिग्रहणेन वैदिकसंस्का(रादर्शना)रवर्जनावैदिकसंस्कारविधानादिकं गृह्यते। अवैदिकत्वादेव पाञ्चरात्रस्य वैदिकापरिग्राह्यत्वमुक्तम् वैखानसशास्त्रे,

'आग्नेयं पाञ्चरात्रन्तु
दीक्षायुक्तं च तान्त्रिकम्।
अवैदिकत्वात्तत्तन्त्रं
[त्यक्त्वा] (ततो) वैखान (सं न तु) सेन तु॥
सौम्येन वैदिकेनैव देवदेवं समर्चयेत्। इत्यादिना।

न च विरुद्धांशाप्रामाण्यमात्रेण कथं कृत्स्नस्यावैदिकत्वमिति वाच्यम्। तन्मुखेन कृत्स्नाप्रामाण्यस्यैव प्रतिपादनात्। विद्यास्थानानन्तर्गतत्वेन वैदिकापरिगृहीतत्वेन च बौद्धाद्यागमगतवेदाविरुद्धांशवत्तदंशेऽपि पाञ्चरात्रस्याप्रमाण-

---

१. टीकायां वेदविप्रतिषेधो व्याख्यात इत्युक्तम्। तच्च भाष्ये इति कल्पतरौ विवृतम्। एवं स्थिते आभोगे अकाण्ड एव 'विप्रतिषेधश्चे'त्याद्युपक्रमभाष्यं भाष्यपदार्थतया कथितम्। तच्च प्रामादिकमेव।

२. अवैदिकत्वहेतूक्तिमुखेनेत्यर्थः।

त्वात्। अन्यत्र पाञ्चरात्रस्य व्यामोहकत्वश्रवणाच्च। अन्यथा प्रकरणसंगत्यनो- पत्तेरिति दिक्।

॥ [1]इति पाञ्चरात्राधिकरणम् ॥

इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डभट्टमहोपाध्यायतनूभवेन
श्रीमन्नारायणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशगृह्यमाणेन
लक्ष्मीनृसिंहचरणारविन्दचञ्चरीकेण लक्ष्मीनृसिंहेन
विरचितायां कल्पवृक्षप्रदीपिकायां
आभोगाख्यायां द्वितीयाध्यायस्य
द्वितीयः पादः ॥

---

१. परमतनिरासपादेऽस्मिन् सूत्रकृतां पाञ्चरात्रप्रामाण्यसमर्थनाभिप्रायकल्पनं केषांचित् अनेनापास्तम्। अन्यथा पाशुपतागमप्रामाण्यमेव कुतो न समर्थ्यते। पाशुपतपाञ्चरात्रयोरुभयोरपि वैदिकमार्गात् भिन्नप्रस्थानत्वमेव महाभारतादिबहुग्रन्थसंमतं वैदिकलोकप्रसिद्धम्। 'बद्धद्वेषा हि शुद्धे गुणवति च शिवे' इति श्रीमदप्पय्यदीक्षितोक्तरीत्या निर्गुणब्रह्मसगुणशिवाभिधब्रह्मप्रद्वेषिणामभिनिवेशवशीकृतचेतसां भ्रमस्य विषयासाधकत्वं प्रसिद्धम्।

२. अत्र 'विज्ञानादिभावे वा तदप्रतिषेधः' इति सूत्रे—'एवमपि तदप्रतिषेधः। उत्पत्त्यसंभवस्याप्रतिषेधः। प्राप्नोत्येवायमुत्पत्त्यसंभवो दोषः प्रकारान्तरेणेत्यभिप्रायः' इति भाष्यम्। 'माभूदभ्युपगमेन दोषः। प्रकारान्तरेण त्वयमेव दोषः' इति टीका। तदुभयाभिप्राय एवम्—उत्पन्नत्वेन पाञ्चरात्राभिमतानां संकर्षणादीनां तत्र जीवादिरूपत्वानभ्युपगमात् जीवादिरूपत्वाभ्युपगमेन यथावर्णितः जीवादीनामुत्पत्त्यसंभवदोषः माभूत्। प्रकारान्तरेण अयमेवोत्पत्त्यसंभवदोषः, संकर्षणादीनां व्यूहानां जीवादिरूपत्वाभावेऽपि एकस्यैव भगवतश्चत्वारो व्यूहास्तुल्यधर्माण इत्यभ्युपगमेऽपि, असत्यतिशये कार्यकारणभावाभावात् वासुदेवादेस्सकाशात् संकर्षणादीनामुत्पत्त्यसंभवदोषः प्राप्नोतीति। अस्मिन्नधिकरणे परिमले 'प्रपञ्चस्तु मनोदीपिकायां द्रष्टव्यः' इति वर्तते। 'मणिदीपिकाया'मिति शुद्धः पाठः। शिवार्कमणिदीपिकायामिति तदर्थः। अहो मुद्रणप्रमादः।

॥ श्रीः ॥

# ॥ द्वितीयस्याध्यायस्य तृतीयः पादः ॥

## ॥ अथ वियदधिकरणम् ॥

सू०॥ न वियदश्रुतेः ॥ १ ॥

सू०॥ अस्ति तु ॥ २ ॥

सू०॥ गौण्यसंभवात् ॥ ३ ॥

सू०॥ शब्दाच्च ॥ ४ ॥

सू०॥ स्याच्चैकस्यापि ब्रह्मशब्दवत् ॥ ५ ॥

सू०॥ प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

सू०॥ यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

**पादार्थमाह—इहेति ।** तत्त्वमसिवाक्यार्थनिर्णयहेतुपदार्थशोधनोपयो(गे)गिविरोधपरिहारत्वेन भूतभोक्तृवाक्यविरोधपरिहारयोरेकीकरणान्न प्रतिपाद्यभेदनिबन्धनः पादभेद इति भावः । **प्रासङ्गिकीं पादसङ्गतिमिति ।** अनयोः पादयोः पूर्वपादेन सङ्गतिमित्यर्थः । एतत्सङ्गतिलोभादेव समन्वयस्थि(ति)रीकरणहेतुवाक्यार्थनिर्णयोपयोगिनोऽप्यस्य विचारस्यास्मिन्नध्याये लेखनमिति भावः । P. 577-1

**स्ववचनविरोधस्याभावादिति ।** श्रुतिविरोधस्तु सर्वत्रास्तीति स एव तेषामनपेक्षत्वे हेतुरिति भावः । **तद्वत् स्वपक्षस्यापि विप्रतिषेधादिति** भाष्येऽपि श्रुतिविप्रतिषेध एव विवक्षित इति दर्शयति—**टीकायां—तद्वत् स्वपक्षस्यापि श्रुतिविप्रतिषेधादिति ।** P. 577-2

यद्यपि कारणविषयश्रुतिविप्रतिषेध इव कार्यविषयश्रुतिविप्रतिषेधोऽपि कारणत्वेन चाकाशादिष्विति सूत्रे तस्य सूत्रस्य योजनान्तराश्रयणेन निरा-

---

१. इदं च प्रासङ्गिकत्वं भामत्यामुक्तं कारणत्वाधिकरणे ।

कृतः। तथापि, छान्दोग्ये तैत्तिरीयश्रुताकाशवायूपसंहारस्तत्र नोक्तः। ब्रह्मणा आकाशादिसृष्ट्यनन्तरं सृष्टत्वेनोक्तस्यापि तेजसो ब्रह्मसृष्टत्वव्यपदेशे विरोधाभाव इत्येव तत्रोक्तत्वात्। अत्र श्रुत्यन्तरार्थोपसंहारसमर्थनेन श्रुतिविप्रतिषेधपरिहारार्थमयमारम्भ इति भावः।

P. 577-3 **भ्रमं व्यावर्तयतीति**। वियदनुत्पत्तिं पूर्वपक्षं कृत्वा तदुत्पत्तिं समर्थयितुं सूत्रद्वयमिति भ्रममित्यर्थः। तथा च, **अस्ति त्विति सूत्रं गूढाभिसन्धेः सिद्धान्तिन एवेति** वक्ष्यमाणेन न विरोधः। ननु किमर्थं भ्रमत्वमुच्यते? सूत्रानुरोधेन तथैवाभ्युपगमे बाधकाभावात्। न चैवमध्यायासङ्गतिः। उत्पत्तिसमर्थने उत्पत्त्यनुत्पत्तिश्रुतिविरोधपरिहारस्यापि जायमानत्वेन सङ्गतिसम्भवादित्याशंक्याऽऽह—**एवं हीति**। अधिकरणस्य साक्षादध्यायार्थपरत्वे सम्भवति, न पर्यवसानगत्या तत्परत्वं न्याय्यमिति भावः।

नन्वेवमपि न **वियदिति** सूत्रस्य सिद्धान्त्येकदेशिसूत्रत्वे किं नियामकमित्यत आह—**अत्र हीति**। **गौण्यसम्भवादिति** सूत्रमेकदेशिन एव। विप्रतिषेधादप्रामाण्यं श्रुतीनामिति वदता पूर्वपक्षिणा गौणत्वसमर्थनायोगात्। तच्च **न वियदिति** सूत्रार्थमुपजीव्यैव। अश्रुतेरित्युक्तावेव, कथमश्रुतिः? तैत्तिरीयके श्रुतत्वादित्याशङ्कानिराकरणार्थं तत्प्रवृत्तेः। अतस्तदेकवाक्यतापन्नमिदमपि सूत्रमेकदेशिन इत्यर्थः। **आद्यं सूत्रद्वयं** पूर्वपक्षप्रदर्शनार्थं, उत्सूत्रपूर्वपक्षकरणस्य सति सम्भवे अयोगात्। **उत्तरन्तु सूत्रत्रयमेकदेशिन** इति ये मन्यन्ते तन्मतमाह—**केचित्त्विति**।

P. 578-3 **तस्मान्न विप्रतिषेध इति**। अत्र **परिमलकृतः**, क्वाचित्क एवायमश्रुतेरिति हेतुः, छान्दोग्ये सृष्टिप्रक्रियायां, 'अन्नेन सोम्य शुङ्गेने'त्यादिकार्यलिङ्गकतत्तदव्यवहितकारणानुमानप्रक्रियायां च, वियतोऽश्रवणात्। उपसंहारासम्भवश्च भाष्य एव स्पष्टः। एवं तावच्छान्दोग्यश्रुतिरश्रवणलिङ्गवती, उपसंहारमप्यसहमाना वियदुत्पत्त्यसम्भवाद्यनुगृहीता, तदुत्पत्तिं प्रतिक्षिपतीत्ययमर्थो **न वियदिति सूत्रेणोच्यते**।

तैत्तिरीयश्रुतिः सर्वविज्ञानप्रतिज्ञाद्यनुगृहीता वियदुत्पत्तिं व्यवस्थापयतीत्ययमर्थः **अस्ति त्विति सूत्रेणोच्यते**। एवं श्रुतिविप्रतिषेधपूर्वपक्षे सूत्रद्वयेन

पर्यवसिते सर्वविज्ञानप्रतिज्ञानमन्यथासिद्धमसम्भवादिकमेवानन्यथासिद्धमिति मन्यमानस्य वियदनुत्पत्तिवादिनः सिद्धान्त्येकदेशिनो मतं सूत्रत्रयेणोच्यत इत्यङ्गीकारेऽपि न काचिदनुपपत्तिरित्याहुः ।

तच्चिन्त्यम् । इह तावत्पक्षद्वयप्रदर्शनसूत्रेण विप्रतिषेधो न प्रदर्श्यते । तथात्वे वियदुत्पत्त्यनुत्पत्तिभ्यामित्येव सूत्रकरणापत्तेः । किन्त्वेकैकपक्षप्रसाधनेन । तत्र वियदनुत्पत्तौ किं क्वाचित्कमश्रवणमेव हेतुः ? किं वा उपसंहाराशक्त्युपोद्बलितम् ? अथ वा असम्भवादिहेत्वनुगृहीतम् ? नाद्यः । क्वचिदेव श्रुतया 'सप्राणमसृजते'त्यादिश्रुत्या प्राणादीनामुत्पत्त्यसिद्धिप्रसङ्गात् ।

न द्वितीयः । असिद्धेः । वियतस्तेजोऽपेक्षया प्रथमजत्वेनोपसंहारस्याशक्यत्वेऽपि तदुत्पत्तिमात्रोपसंहारसम्भवात् । तथा च भाष्यं **प्रथमजत्वं हि छान्दोग्ये** इत्यादि । न तृतीयः । पूर्वपक्षिणा असम्भवादिहेत्वनुपन्यासात् । न ह्येकदेशिना विप्रतिषेधसमाधानार्थं वक्ष्यमाणानेव हेतूनवलंब्य पूर्वपक्षिणा विप्रतिषेधः समर्थित इति युज्यते । उत्पत्तिश्रवणेप्यसम्भवादिहेतुभिरनुत्पत्तिसमर्थनसम्भवेन सूत्रे **अश्रुतेरिति** हेतूपन्यासवैफल्याच्च । **न वियदिति** सूत्रस्य गौण्यसम्भवादित्येकदेशिसूत्रैकवाक्यतया एकदेशिसूत्रत्वमावश्यकमिति च प्रागेवोक्तम् ।

**अस्ति त्विति** सूत्रशैल्यपि पूर्वसूत्रनिर्दिष्टपक्षप्रतिक्षेपपूर्वकं पक्षान्तरपरिग्रह एवानुगुणा दृश्यते । **न वियदित्यपि** सूत्रं परिगृहीतपक्षनिराकरणानुगुणमेव । तथा च वक्ष्यति—**सिद्धान्तच्छायमिति** । तदेतदभिप्रेत्योक्तम्—**तस्मान्न विप्रतिषेधः सूत्राभ्यां दर्शयितुं शक्य इति** । P. 578-1

ननु भवन्मते उत्सूत्रोऽपि कथं विप्रतिषेधः ? उपसंहारेणैव तत्समाधानादित्याशंक्य, नास्मन्मते उत्पत्त्यनुत्पत्तिकृतो विप्रतिषेधः । किन्तु द्वयोः प्रथमजत्वासम्भवप्रयुक्तः । न च स उपसंहारेण समाधातुं शक्यत इत्येव पूर्वपक्षप्रवृत्तेर्न दोष इत्याशयेनाऽऽह—**ततः क्वचिदिति** । एकदेशिनोऽपि सार्वत्रिकमश्रवणमनुत्पत्तिहेतुभूतं न सम्भवतीति शंकते—**नन्विति** । उत्पत्तिपरश्रुत्यभावो हेतुरिति न दोष इत्याशयेन परिहरति—**अत आहेति** । P. 578-6

नन्वस्ति त्विति सूत्रं पूर्वपक्षप्रदर्शनपरत्वेन टीकायां व्याख्यातम्। तदयुक्तम्। न वियदित्येकदेशिसूत्रप्रवृत्त्यनुरोधेन ततः पूर्वमेव पूर्वपक्षप्रवृत्त्यवश्यम्भावात्। नहि प्रथममुत्सूत्रपूर्वपक्षप्रवृत्तिः। तत एकदेशिमतम्। ततः पूर्वपक्षः। पुनरप्येकदेशिमतम्। ततस्सिद्धान्त इति सम्भवतीत्यत आह—अस्ति त्वित्यपि सूत्रमिति। तर्हि कथं टीकेत्याशंक्य, न वियदिति सूत्रस्य पूर्वटीकायामेकदेशिवचनत्वोक्तिबलादस्या औपचारिकत्वमेव तदभिप्रेतमिति निश्चीयत इत्याशयेनाह—अभिप्रायेति।

P. 579-1

एवं सिद्धान्त्येकदेशिसिद्धान्तिसूत्राभ्यां निगूढाभिसन्धिभ्यां विप्रतिषेधः स्पष्टीकृत इत्येतावता, ततश्च श्रुत्योर्विप्रतिषेधः, इति, अस्मिन् विप्रतिषेधे कश्चिदाहेति च भाष्यम्। तस्मादित्युपसंहारटीकायां पूर्वपक्ष इत्युक्तिश्चेति न कोऽपि दोष इति भावः। ननु न वियदित्येकदेशिसूत्रेण गौण्यसम्भवादिति सूत्रार्थस्य कथञ्चिदप्यसंस्पर्शात्, कथं तदभिप्रायविवरणरूपत्वमस्य सूत्रस्येत्यत आह—अश्रुतेरित्यस्येति।

P. 579-2

ननु पृथिव्यादीत्यादिशब्देन जलादीनामेव परिग्रहणान्न तस्य हेत्वन्तरपरत्वम्। अतः कथं टीकेत्यत आह—विभुत्वादीति। तथा च पृथिव्यादिवैधर्म्याच्चेत्यादिवाक्ये यदादिग्रहणं विभुत्वादिलक्षणादित्यत्रत्यं, तेनेति टीकार्थ इति भावः। एकव्यक्तित्वादर्थस्य विरुद्धधर्मसमावेशो न सम्भवति। पदस्य तु प्रत्युच्चारणं व्यक्तिभेदान्न विरुद्धो विरुद्धधर्मसमावेश इति टीकाभिप्रायमाह—अर्थो हीति। टीकोक्तौ सम्भवासम्भवौ योग्यतायोग्यते इत्याशयेनाऽऽह—ततो यत्रेति। स्थालादीत्यत्र स्थालं भोजनपात्रम्।

P. 580-4

---

१. न वियदिति सूत्रं सिद्धान्त्येकदेशिनः। अस्ति तु इति सूत्रं सिद्धान्तिनः। न किंचिदपि सूत्रं पूर्वपक्षिसूत्रं किं तु उत्सूत्रं पूर्वपक्षः इति द्योतयितुं अपिशब्दः। सिद्धान्ताभिप्रायस्यात्रानभिव्यक्तिमपेक्ष्य पूर्वपक्षसूत्रत्वमौपचारिकमुक्तम्।

२. अस्मिन्नधिकरणे 'शब्दाच्चे'ति सूत्रभाष्ये अन्तिमं वाक्यं 'तस्मान्नित्यमेवाकाशेन साधारणं ब्रह्मेति गम्यते' इति। अस्यार्थः—तस्मान्नित्यमेव सत् ब्रह्म आकाशेन साधारणमिति गम्यते। नित्यत्वधर्मप्रयुक्तं ब्रह्मसाम्यमाकाशस्येत्यर्थः इति भाष्यार्थः इति। भाष्यार्थसंग्राहकश्लोकरूपायां श्रीसुब्रह्मण्यविरचितायां भाष्यार्थरत्नमालायां आन्ध्रलिपिमुद्रितायां एतद्वाक्यार्थसंग्रहः इत्थं वर्तते—'तस्मात् सिद्धं ब्रह्मवदाकाशं नित्यमपि च सर्वगतम्' इति।

भाष्योक्तं परिहारं निष्कृष्य दर्शयति—**टीकायामापेक्षिकमिति।** P. 581-2 एकमेवेत्यवधारणमित्यर्थः। अभ्युपगममेवाह **टीकायां—यदि सर्वापेक्षमिति।** अवधारणमित्यर्थः। **न च प्रागुत्पत्तेः ब्रह्मनभसोरिति भाष्ये** ब्रह्मनभसोरुत्पत्तिप्रतियोगित्वभ्रमं व्यावर्तयितुं जगत इति पदमध्याहरति **टीकायां—न च प्रागुत्पत्तेर्जगत इतीति।** अतश्शब्दस्य व्यवहितपरामर्शित्वमाह **टीकायां—लक्षणान्यत्वाभावेनेति।**

ननु पूरणक्रियायां क्षीरस्य करणत्वेन तृतीयावश्यम्भावात् कथं **क्षीरस्य पूर्णे इति** टीकेत्यत आह—**क्षीरस्येति षष्ठीति।** 'पूरणगुणे'त्यादिसूत्रेण P. 581-1 पूरणार्थयोगे तृतीयानिषेधात् षष्ठीति भावः। किं तेजस्सर्गस्य प्राथम्यं श्रुतेः? किं वा स्थानात्?। आद्येऽपि श्रुत्या किं कण्ठत एव प्राथम्यमुच्यते? उतानुपपत्त्या? नोभयमपीत्याह—**तेजः प्रथममिति। तृतीयत्वश्रवणादिति भाष्येण** प्रथमत्वाश्रवणं सूचितमित्याशयेनाह—**तदुक्तमिति।** द्वितीयं शङ्कते—**नन्विति। न केवलमिति।** छन्दोग्ये तेजसः प्रथमस्थानवर्तित्वमात्रेणाकाशस्य जन्माभावो न कल्पनीय इति यत्तन्न केवलमाकाशोत्पत्तिश्रुतिविरोधादेवेत्यर्थः।

ननु **न चेत्यादिलभ्यमित्यन्तस्य** ग्रन्थस्य श्रुतानुपयोगप्रतिपादकत्वाभावात् वैयर्थ्यमित्यत आह—**तत्रापीति।** असहायत्वस्यार्थिकत्वोक्त्या P. 582-7

---

१. अत्र टीकायां 'न हि क्षीरस्य पूर्णे कुम्भे क्षीरे गृह्यमाणे सत्स्वपि पाथोविन्दुषु पाथस्तत्त्वं प्रति ज्ञातत्वमस्ति विज्ञाने' इति पाठो दृश्यते 'पाथस्तत्त्वप्रतिभानत्वमस्ति विज्ञाने' इति क्वचित् शोधितम्। 'पाथस्तत्वं प्रति ज्ञातृत्वमस्ति विज्ञाने' इत्यपि शोधने न दोषः, क्षीरविज्ञाने निमित्ते पाथस्तत्वं प्रति ज्ञातृत्व पुंसो नास्तीत्यर्थः, 'पाथस्तत्वं प्रति ज्ञानत्वमस्ति विज्ञाने' इत्यपि शोधयितुं शक्यते। टीकायामेवोपरि 'पूर्वपक्षी स्वपक्षं विरोधमाह' इति शोधनीयम्।

२. इदमाभोगवचनं प्रामादिकं, यतः पूरणगुणेत्यादिसूत्रेण पूरणार्थयोगे तृतीया न निषिध्यते। किं तु षष्ठीसमासो निषिध्यते। अत एव परिमले 'पूरणगुणेत्यादिसूत्रेण पूरणार्थयोगे षष्ठीसमासनिषेधात् ज्ञापकात् तृतीयार्थे षष्ठी' इत्येवोक्तम्। अतः आभोगोक्तिः प्रामादिक्येव। परिमलानुसारेण शोधनीया।

३. कल्पतरौ 'आकाशजन्माभावाकल्पना' इति शोध्यम्। तथा 'व्यावृत्तिः श्रुत्यन्तरश्रुतेन' इत्यपि शोध्यम्। टीकायां 'श्रुतेन तदपबाधने' इति शोध्यम्।

P. 582-9 तद्बाधनक्षमो विरोध इत्यर्थादुक्तं भवतीति **विरोधानुवाद** इत्यर्थः। **प्रसङ्गद्वारेणेति**। अनिष्टापादनद्वारेणेत्यर्थः। किमेकस्य शब्दस्य नानार्थत्वमनुपपन्नम्?। किं वा सकृच्छ्रुतस्य शब्दस्यावृत्तिरनुपपन्नेति विकल्पयति—**तत्र**

P. 583-1 **किमिति**। उत्तरटीकायामेकस्यापि कर्तुरिति श्रवणात् **पूर्वटीकाया**मप्येकत्वं शब्दविशेषणमभिमतमित्याशयेन तदभिप्रायमाह—**अनेकत्रार्थ** इति।

**वाक्यद्वयमिति**। यद्यपि 'तदाकाशमसृजते'त्येकमेव वाक्यमनुमेयम्। तथाऽपि वाक्यद्वयमत्रास्तीत्येवं द्वित्वविशिष्टवेषेण श्रुतस्याप्यनुमेयत्वमाश्रित्य तथोक्तम्। **उदाहरणान्तरेति**। वायुजन्मन्यप्युपसंहृते 'तद्वायुमसृजते'ति वाक्यस्यापि कल्प्यतया तदभिप्रायं बहुवचनमित्यर्थः।

**नैतत् सृष्टिवाक्य**मिति **भाष्योक्तार्थे** हेतुमाह—**टीकायां**—**यत्पर** इति। टीकायामार्थत्वाच्चेत्ययमंशः प्रागुक्तानुवाद इत्याशयेनाह—**प्रथमस्थान** इति।

P. 583-5 **वियदुत्पत्तिहेतुकथनमिति**। अत्र छन्दोगश्रुतेस्तैत्तिरीयश्रुत्यनुवर्तने, **नैष दोष** इत्यादिभाष्येण श्रुतिबलीयस्त्वं, श्रुतिविरोधाभावः, क्रमेण पदार्थस्य बाधायोगश्चेति हेतुत्रयमुक्तम्, **अपि चेत्यादिना** तु वियदुपसंहारापेक्षत्वं हेतुरुच्यत इति, प्रस्तुते विप्रतिषेधनिराकरण एव हेतुकथनान्न सिंहावलोकितन्यायापेक्षेति **परिमले** उक्तम्।

तच्चिन्त्यम्। प्रतिज्ञानिर्वाहाय वियदुत्पत्त्यंशे तदनुवर्तनेऽपि, प्रथमजत्वांशेऽपि तदनुवर्तने हेत्वभावेन पूर्वपक्ष्यभिमतविप्रतिषेधानिराकरणात्। सर्ववेदान्तप्रत्ययन्यायेन तदनुवर्तनसिद्धवत्कारेण प्रथमजत्वांश एव विप्रतिषेधोक्त्या तत्समर्थनवैफल्याच्च, तदेतदभिप्रेत्योक्तम् **वियदुत्पत्तौ हेतुकथनमिति**। तथा च **भाष्यस्वारस्यानुरोधेन** **सिंहावलोकितन्यायानुसरणं** न दोषायेति भावः।

**टीकायामेकमेवाद्वितीयमित्येतद्वचनमित्यन्वयः**। **सावधारणा**

P. 584-4 **चेयमिति भाष्ये** अवधारणस्य प्राधान्येन पुरस्कारे हेतुं दर्शयन्नाह—**टीकायां**

१. टीकायामुपरि 'न चानेकस्मिन्नर्थे एकस्ये'ति पाठः।

२. टीकायां 'भ्रान्तिमूलं वा एतद्वचन'मिति पाठः।

**कामम्रुपचारादिति ।** तस्मात् **ब्रह्मतत्त्वमिति** टीकायां जगतः ऐकान्तिकं तत्त्वं ब्रह्मेति श्रुत्या विवक्षितमित्यन्वयः । तथा च ब्रह्मव्यतिरिक्तस्य कल्पितत्वान्नावधारणादिविरोध इति भावः । **टीकायामभ्यासे हीति ।** एकावधारणादिप(रै)दैरित्यर्थः । P. 584-6

**विकारशब्दस्य** प्रागभावप्रतियोगित्वलक्षणकार्यत्वपरत्वं वारयति—**पराधीनेति ।** न चैवमज्ञानवदाकाशस्यापि पृथक् सत्ताराहित्यमात्रं सिध्येत् । न कार्यत्वमिति वाच्यम् । अज्ञानस्य कार्यत्वे जगत्स्रष्टृत्वाद्यसम्भवेन श्रुतिविरोधेन च तत्र कार्यत्वासम्भवेऽपि पक्षे बाधकाभावेन दृष्टान्तबलेन च यथोक्तसाध्यस्य कार्यत्व एव पर्यवसानसम्भवादिति भावः । **अविद्योदावित्यादिशब्देन** जीवेश्वरादिकं गृह्यते ।

ननु जीवेश्वरयोः कथमध्यस्तत्वमित्यत आह—**जीवेश्वरादीति । आदिशब्देन** विराडादिकं गृह्यते । शुद्धरूपे तु वक्ष्यमाणविधया हेतुरेव नास्तीति न व्यभिचार इति भावः । विभक्तत्वमात्रस्यैव हेतुत्वात् सत्यन्तं व्यर्थमित्याशंक्य, तस्य हेतुसाधकत्वेनोपयोगमाह—**नन्विति ।** अविद्यामहिम्ना आत्मापेक्षया अन्यत्वे सति, विभक्तत्वं भवति । ततश्च **विकारत्वमिति** टीकार्थमाह—**तत्त्वत इति । विभक्तत्वं** भिन्नत्वम् । **धर्मीति** अधिष्ठानेत्यर्थः । **मिथ्यात्वेनेति ।** प्रतियोगितुल्यस्वभावत्वादभावस्येति भावः । P. 584-1

नन्वात्मनः कार्यत्वेऽपि ततोऽन्यस्य कस्यचिन्नित्यस्योपादानस्य सत्त्वे कथं कार्यस्य निरुपादानत्वमित्याशंक्याह—**सर्वकार्येति ।** आत्मव्यतिरिक्तस्य सर्वस्यापि कार्यत्वसाधनान्न तदतिरिक्तनित्यसम्भव इति भावः । **अनेन । निरात्मकमिति** भाष्येण । **श्रुतिममन्यमानमिति ।** युक्तिरसिकमित्यर्थः । **टीकायामात्मवादे** P. 585-1

---

१. अत्र कल्पतरौ 'तस्य प्रागभावप्रतियोगित्वाभावेऽपि' इति पाठः ।

२. अत्र भाष्ये, टीकायां, कल्पतरौ च लेखकप्रमादवशात् पाठभेदस्समजनि । यदृच्छया सर्वोऽपि पाठः व्याख्याचातुरीबलात् सार्थको जातः । भाष्ये 'आत्मत्वाच्चात्मनः' 'आत्मत्वादेवात्मनः' 'आत्मवादे चात्मनः (प्रत्यगात्मनः) इति पाठभेदाः । भामत्यां—'आत्मत्वादेवात्मनः' 'आत्मवादे च उपादानवादे चात्मनः' 'आत्मवादे च उपादानवादे च आत्मत्वादेवात्मनः' इति पाठभेदाः । कल्पतरौ—'इत्यभिप्रेत्याह—आत्मवादे च उपादानवादे चेति । आत्मवादे च प्रत्यगात्मनो निराकरणशङ्कानुपपत्तेरित्येतद्भाष्यं आत्मवादे

चेति भाष्यनिर्देशानन्तरमुपादानवादे चेति प्रक्षिप्यते। तत्कथमप्रसक्तत्वादि-
P. 585-1 त्यतः प्रसक्तिमाह—भाष्ये आत्मेति। एवमपि कथं टीकान्वय इत्यत आह-
प्रत्यगात्मन इति। एतद्भाष्यमात्मा कश्चिदस्तीति वादे, जगत्सोपादानमिति
वादे च, युक्तिकथनपरं व्याख्येयमिति टीकार्थ इति भावः।

नन्वात्मवादे आत्मनो निराकरणासम्भवेऽप्युपादानवादे कथं तदसम्भव
इत्यत आह—तदर्थमिति। आत्मा सोपादानः सावयवोपादानत्वात् तन्तु-
वदित्याशयेन शङ्कते—टीकायां–स्यादेतदिति[1]। अन्याधीनसिद्धिकत्वमुपाधि-
रित्याशयेन परिहरति—टीकायामत आहेति। उपात्तम् न चेदृशस्येति
भाष्यं व्याचष्टे टीकायां–निराकरणमपीति। निराकर्त्रात्माधीनस्वरूपलाभं
निराकरणमपि तद्विरुद्धं सन्नोदेतुमर्हतीत्यर्थः। अनेन, य एव निराकर्ता
तस्यैव तन्निराकर्तव्यमात्माख्यं वस्तु स्वरूपं यस्मात्तस्मात् तत्स्वरूपभूतं
तन्न निराक्रियत इति भाष्यार्थः सूचितः।

सत्ताया[2] अप्यनागन्तुकत्वमाहेति टीकान्वयो बोध्यः। अनागन्तु-
P. 585-10 कमेव सत्त्वं व्यतिरेकमुखेन दर्शयति—टीकायां–त्रैकाल्यावच्छेदेनेति[3]।
जीवदवस्थायामनुभवविरोधादात्मनोऽन्यथाभावाभावेऽपि मृतावस्थायां भविष्यतीत्या-
शयेन शङ्कते टीकायाम्—ननु जीवत इति। तथाच स्वरूपान्यथात्वे अनिर्व-
चनीयत्वान्न तस्य स्वयंसिद्धत्वमिति भावः। प्रमाणाभावान्नात्मनोऽन्यथाभाव-
सम्भव इति परिहारभाष्याभिप्रायमाह टीकायां–यत्त्वल्वित्यादिना।

टीकायां–यस्य त्विति। यस्यात्मनः तत्प्रमाणोपनीतं स्वभावाद्वि-
चलनं नास्ति तस्य तत्कल्पनमनिर्वचनीयत्वकल्पनं न युक्तमित्यर्थः।
P. 585-15 टीकायां—तदनेनेति। प्रत्यनुमानेन विभक्तत्वादित्यनुमानेन। आकाशं

---

उपादानवादे चेति व्याख्येयमित्यर्थः' इति पाठः। 'भाष्यमात्मत्वादेव उपादानत्वादे-
वेति व्याख्येयमित्यर्थः' इत्यपि तत्रैव पाठान्तरम्। इत्थमनेके पाठभेदाः परिमलादितोऽ-
वगम्यन्ते।

१. अत्र टीकायां 'स्यादेत'दिति वाक्यात्पूर्वं 'आत्मैवोपादानं युक्तम्' इति शुद्धः
पाठः।

२. अनेन 'सत्ताया अनागन्तुकत्वमप्याह' इति टीकापाठस्सूच्यते।

३. त्रैकाल्यावच्छेदः। अतीताद्यन्यतमत्वम्।

नोत्पद्यते, सजातीयोपादानविधुरत्वात्, अनेकोपादानव्यक्तिविधुरत्वात्, आत्मवदित्याकाशानुत्पत्त्यनुमानं दूषयित्वा, विचित्रकंबलदध्यादावनैकान्तिकत्वेनापि दूषयतीत्यर्थः।

**साध्यसम इति**। एकस्यापि ब्रह्मण उपादानत्वसम्भवे दृष्टान्तः क्षीरम्, तदपि सन्दिग्धसाध्यकत्वात् पक्षसममित्यर्थः। **नहीति**। तदारब्धे द्रव्ये विद्यमाने तेषामेवावयवानां द्रव्यान्तरारम्भकत्वस्य लोकविरुद्धत्वादेव न कल्पनेति भावः। प्रमाणबलाद्दध्यारम्भसमये क्षीरनाशोऽपि कल्प्यत इति मन्वानः शङ्कते—**नन्विति**। **गुणवदिति**। तथा च हेतोरसिद्धिरिति भावः। P. 586-1

॥ इति वियदधिकरणम् ॥

---

## ॥ अथ मातरिश्वाधिकरणम् ॥

### सू०॥ एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

दृष्टान्तसङ्गतिमुपपादयति—**पूर्वाधिकरणे हीति**। 'वायुश्चान्तरिक्षञ्चे'ति वाक्ये वायोरमृतत्वश्रवणान्नोत्पत्तिरित्येव पूर्वपक्षकरणसम्भवात् किमर्थं श्रुत्यन्तरोदाहरणपूर्वकमभ्यासेन पूर्वपक्षो वर्ण्यत इत्यत आह—**अन्तरिक्षसहितेति**। अन्तरिक्षोत्पत्तेः प्रागुदाहृतत्वात् यथा तन्नित्यत्वोक्तिरौपचारिकी तथा वायुनित्यत्वोक्तिरपीति शङ्का स्यादित्यर्थः। तथा च विशेषाशङ्कासूचनार्थतया श्रुत्यन्तरोदाहरणमिति भावः। P. 587-1

**प्रधानेनेति**। सार्वात्म्यपरत्वात् प्रतिज्ञावाक्यं प्रधानम्, तदुपपादकत्वादितरदप्रधानमित्यर्थः। क्रमग्रहणं वायुनित्यत्वशङ्काया दूरोत्सारितत्वसूचनार्थमित्याह—**मातरिश्वोत्पत्तीति**। परिच्छिन्नत्वान्न नित्यत्वमिति भावः। P. 588-1

॥ इति मातरिश्वाधिकरणम् ॥

---

## ॥ अथ असंभवाधिकरणम् ॥

### सू०॥ असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ती'त्युपक्रम्य 'सर्व एत आत्मानो व्युच्चरन्ती'ति श्रुतम्। तथा 'न चास्य कश्चिज्जनिता न चाधिपः' इति। अनयोः श्रुत्योः विप्रतिषेधादप्रामाण्यमिति पूर्वपक्षे, एकदेशिमतप्रदर्शनार्थं भाष्यम्—वियत्पवनयोरित्यादि। तद्भाष्याभिप्रायाज्ञानेन कैश्चित्तत्र दूषण-मुक्तमिति सूचयितुं भास्करोक्तं दूषणं शङ्कां कृत्वा तदुत्तरत्वेन भाष्यमव-

P. 588-4 तारयतीत्याशयेनाऽऽह—भास्करोक्तमिति। आत्मशब्दस्य जीवपरत्वमादाय तत्र पूर्वः पक्षः। प्रकृते तु ब्रह्मपरत्वमादायेति भेद इत्याह—सत्यमिति।

ननु टीकायामेतदुक्तमित्यादिना भाष्याभिप्रायवर्णनमयुक्तम्। भाष्याननुगुणत्वादित्याशंक्य सन्मात्रं हीत्यादिभाष्यमारम्भपरिणामवादावा-श्रित्य ब्रह्मण उत्पत्त्यसंभवं वक्तुं प्रवृत्तम्। विवर्तवादे, सामान्ये सामान्यस्य विशेषे सामान्यस्य च कल्पनाऽसम्भवेन यथोक्तदूषणायोगात्। तत्रापि च नाप्य-सत इति भाष्यमयुक्तम्, असतस्सदारम्भकत्वस्य सदात्मना परिणामस्य च शङ्कानास्पदत्वात्, इत्यनुपपत्तिं मनसि निधाय, 'नाप्यसत' इति भाष्यं विवर्तपक्षे असतो ब्रह्मणोऽनुत्पत्तिं दर्शयितुं प्रवृत्तम्, तत्रापि च कल्पद्वयदूषण-सिद्धवत्कारेण तृतीयकल्पनिराकरणार्थं तद्भाष्यमिति भाष्याभिप्रायवर्णनार्थं

P. 588-8 टीकेत्याशयेन अवतारयति—अपि चेति।

ननु यदि कार्यकारणपरम्पराया अनादित्वाभावे प्रामाणिकत्वाभावो हेतुः, तर्हि कथं भाष्ये अनवस्थाशब्दः? तत्राह—भाष्य इति। प्रमाणाभावं दृष्टान्तवैषम्यकथनपूर्वकं दर्शयति—अग्निविस्फुलिङ्गादेरिति। समारोपिते

P. 589-4 क्वचिदिति। सत्याधिष्ठानानभ्युपगमादिति भावः। स च न प्रमित इति। सत्य एव शुक्तिकादौ रजतादेरारोपेण विषमसत्ताकयोरेवारोप्याधिष्ठानभावदर्श-नादिति भावः।

---

१. अत्र टीकायां—'ब्रह्मजिज्ञासाधिकारादृदर्शनाज्ञुपपत्तेः' इति पाठः।

ननु माध्यमिकाधिकरणे असति समारोपो न सम्भवतीत्येवोक्तम् । न तु समारोपिते समारोपो न सम्भवतीत्यत आह—**माध्यमिकेति** । नेदं रजत- P. 589-4 मित्यादिवदधिष्ठानतत्वावगमकबाधकप्रमाणानुदये प्रत्यक्षादिभिरेव विरोधात् न तद्विषयनिषेधो युज्यते । अतो बाधकप्रमाणप्रमितं किञ्चित्तत्वमधिगम्यैव तन्निषेध इति तदेवाधिष्ठानं नान्यदित्युपपादितमित्यर्थः । तथा च तत्रत्यो न्यायः असति समारोपनिषेधस्येव समारोपिते समारोपनिषेधस्यापि तुल्य इति भावः ।

ननु **तस्मादिति टीकायां** कथमसदधिष्ठानत्वोक्तिः? समारोपिताधिष्ठानत्वस्यैव प्रागुक्तत्वादित्यत आह—**अपरमार्थवचन इति** । अनेन, **निरधिष्ठान इति पूर्वटीकायामपि निरधिष्ठानशब्दः** समारोपिताधिष्ठानपर इत्यर्थात् व्याख्यातम् । **अध्याहारः क्लेश इति** । स्वमते तु प्रकृतस्य ब्रह्मणः सच्छब्देन परामर्शः, वियन्मातरिश्वनोः पूर्वाधिकरणसमर्थिता उत्पत्तिरसम्भवानुपपत्तिप्रतियोगित्वेन सम्बध्यत इति न क्लेश इति भावः ।

**आक्षिप्येत इति** । ततश्च पूर्वाधिकरणाक्षेपसमाधानार्थत्वादस्याधि- P. 589-9 करणस्य तत्सङ्गतिरेव सङ्गतिरिति भावः । दिगाद्युपलक्षणार्थत्वान्नैकदेशोपादानवैयर्थ्यम् । नचोपलक्षकत्वे प्रमाणाभावः । आकाशोत्पत्तिसमर्थनप्रयोजनस्य नैयायिकाद्युत्प्रेक्षितनित्यत्वभ्रमनिरासस्य दिगादिष्वपि तुल्यत्वेन पूर्वाधिकरणस्य तत्साधारण्यावश्यंभावात् । ततश्च न यथोक्ताक्षेपावकाश इति परिहरति—**अनादीति** । P. 590-1

**॥ इति असंभवाधिकरणम् ॥**

---

१. अत्र कल्पतरौ पूर्ववाक्ये 'तत् प्रागेव विचिकित्सित'मिति पाठः, प्रागेव, अधिकरणोपक्रमे ।

२. कल्पतरावुपरि 'प्रतिज्ञाऽव्यतिरेकयो'रिति पाठः ।

## ॥ अथ तेजोऽधिकरणम् ॥

### सू०॥ तेजोऽतस्तथाह्याह ॥ १० ॥

P. 590-5 **पूर्वपक्षसम्भावनार्थमिति**। 'तत्तेजोऽसृजत' 'वायोरग्नि'रिति श्रुत्योर्विप्रतिषेधादप्रामाण्यमिति प्रथमपूर्वपक्षानन्तरभाविसिद्धान्त्येकदेशिमतरूपद्वितीयपूर्वपक्षसम्भावनार्थमित्यर्थः। **तथापीति** टीकार्थमाह—**बहुश्रुतय इति**। **अनन्तरनिर्दिष्टत्वादिति**। विधेयसप्तदशारत्नित्वापेक्षयेत्यर्थः। प्रधानत्वं फलवत्त्वम्।

ननु वाजपेयशब्दवाच्ययागविशेषोद्देशेन विधीयमानस्य सप्तदशारत्नित्वस्य कथं तत्रान्वयः। न च तदंगे योग्ये [यूपे] अन्वयः। यूपस्य तदङ्गत्वाभावात्। तदीयसोमरसाधारे ऊर्ध्वपात्रे तदन्वये च यूपग्रहणायोगादित्यत आह—**तस्य**

P. 590-10 **चेति**। **षोडश्याख्येति**। यद्यपि षोडशिपात्रस्येव पात्रान्तराणामपि सोमरसधारणद्वारा वाजपेयाङ्गत्वमस्ति। तथापि खादिरत्वमधिकं यूपसादृश्यमस्तीति तदेव गृहीतम्।

पदद्वयमुख्यत्वसम्भवे नान्यतरस्य गौणत्वं न्याय्यमिति सिद्धान्तमाह—**यूप उद्देश्य इति**। ननु तथापि साक्षात्सम्बन्धे स्वरसा षष्ठी, तत्राह—**तस्मादिति**। वाजपेयस्य यूपस्य च साक्षात्सम्बन्धासम्भवादर्थसिद्धपरम्परासम्बन्धानुवाद इति भावः।

तत्र षष्ठीस्वारस्यानुरोध इव प्रकृते पञ्चमीस्वारस्यानुरोधे नास्ति किञ्चिन्नियामकमिति सिद्धान्तं दर्शयितुं **युक्तमित्यादिटीका**। तत्र प्रकृतिविकारयोरिवाङ्गाङ्गिनोरप्यभेदः कुतो न भवेदित्याशंक्य, विकारस्य प्रकृतौ कल्पितत्वेन न ततो वस्तुतो भेदः। अङ्गाङ्गिनोस्तुल्यसत्ताकयोर्विरुद्धधर्मयोगेन पर-

P. 590-12 स्परं भिन्नत्वान्नाभेदसम्भव इति वैषम्यमाह—**पशुयागसम्बन्धिन इति**।

---

१. कल्पतरौ 'पारंपर्यसंबन्धे दृष्टान्त'मिति पाठः।

२. चमसानामपि ऊर्ध्वपात्रवत् सोमरसाधारत्वेन साधनत्वेऽपि, तेषामूर्ध्वत्वस्यैवाप्राप्त्या तद्विशेषसप्तदशारत्नित्वविध्ययोगात् ऊर्ध्वपात्रग्रहणमिति सोमनाथीये उक्तम्।

**वस्तुत** इत्यस्य प्रयोजनमाह—**वायोर्ब्रह्मविकारस्येति** । वायोर्द्वावंशौ । P. 591-3
तत्र कल्पितस्य विकारांशस्य ब्रह्माभेदाभावेऽपि तदनुगतस्य सदंशस्य ब्रह्माभेदादव्यवधानमित्यर्थः । **पञ्चम्यनुग्रहायेति** । तेजसः केवलब्रह्मोपादानकत्वे वायूपादानकत्वप्रतिपादकपञ्चमीविरोधापत्तेस्तदनुग्रहाय वायुभावापन्नब्रह्मजत्व एव ताः श्रुतयो नि.म्यन्त इत्यर्थः ।

**तद्भावापन्नेति** । तदीयसद्रूपेत्यर्थः । विकारांशाभिप्राया भेदकल्पनोक्तिरित्याशयेनाऽऽह—**काल्पनिकमिति** । सर्वथा साम्ये दृष्टान्तदार्ष्टान्तिकभावस्यैवायोगात् कथं तन्निषेध इत्याशंक्य, दार्ष्टान्तिकगततद्भावापत्त्यभावाभिप्रायं तदित्याह—**भृतस्येति** । P. 592-1

॥ इति तेजोऽधिकरणम् ॥

---

## ॥ अथ अबधिकरणम् ॥

### सू०॥ आपः ॥ ११ ॥

**संशयादीति** । उदाहृतश्रुत्योर्विरोधादप्रामाण्यमिति पूर्वः पक्षः । 'स इदं सर्वमसृजते'त्यादिबहुश्रुत्यनुरोधादग्नेराप इति पञ्चमी क्रमार्थेत्येकदेशिमतम् । ब्रह्मतेजसोर्वास्तवाभेदादपां तेजोयोनित्वेऽपि ब्रह्मजत्वस्य न विरोध उति सिद्धान्तश्च पूर्ववदित्यर्थः । तर्हि किमर्थमतिदेश इत्यत आह—**अपामिति** । निवर्तनप्रकारमाह—**अत्रिवृत्कृतेति** । विरोधग्राहकप्रमाणाभावादिति भावः । P. 592-5

॥ इति [1]अबधिकरणम् ॥

---

१. अस्मिन्नधिकरणे भाष्ये 'अपोऽन्तरियाम्' 'अपोऽन्तरयामि' 'अपो नान्तरयामि' इति पाठभेदाः । अन्तिमपाठे अपो न परित्यजामीत्यर्थः ।

## ॥ अथ पृथिव्यधिकरणम् ॥

### सू०॥ पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

P. 593.1 **सृष्टाविति।** अप्तेजसोरव्यवधानेन श्रुतौ निर्देशात् तेजसा अपां बुद्धिस्थता। एवं पृथिव्या अपाञ्च तथा निर्देशात् अद्भिः पृथिव्या बुद्धिस्थतेति सङ्गतिरित्यर्थः।

नन्वत्र 'ता अन्नमसृजन्त' 'अद्भ्यः पृथिवी'ति श्रुत्योर्विरोधादप्रामाण्यमिति पूर्वः पक्षो वर्णनीयः। न च स वर्णयितुं शक्यते। प्रकरणानुरोधेनान्नशब्दस्य पृथिवीपरत्वेन विरोधाभावात्। सति वा विरोधे 'तद्यदपा'मिति श्रुत्यन्तरोपोद्बलिततया 'अद्भ्यः पृथिवी'ति श्रुतेः प्रबलत्वेन कार्ष्ण्यलिङ्गानुरोधेन च कथञ्चिदन्नश्रुतेः नेयत्वस्यातिस्फुटत्वाच्चेत्याशंक्य, दुर्बलं प्रकरणं, वाक्यशेषोपोद्बलनमन्नश्रुतेरपि तुल्यं, कार्ष्ण्यलिंगञ्च कथञ्चिदन्नेऽपि, तथा च तुल्यबलत्वादस्ति श्रुत्योर्विरोध इति दर्शयितुम**न्नशब्दोऽयमित्यादिटीका।** तत्र व्युत्पत्तिप्रसिद्ध्योर्भेदमाह—**व्युत्पाद्यत इति योगवृत्त्येति।**
P. 593-1

**टीकायां** प्रथमपूर्वपक्षप्रदर्शनानन्तरं **श्रुत्योर्विरोध** इत्यादिना **विशय** इत्यन्तेन पक्षद्वयं प्रदर्श्य, सिद्धान्त्यभिमते 'तद्यदपां शर आसी'दिति वाक्य[वि]शेषे अपां पृथिव्याश्च कार्यकारणभावो न स्पष्टं प्रतीयते। 'तस्माद्यत्र क्वचन वर्षति तदेव भूयिष्ठमन्नं भवती'ति वाक्यशेषे त्वपामन्नस्य च स्पष्टं स प्रतीयत इति तदुपोद्बलितान्नश्रुत्यनुरोधेन पृथिवीश्रुतिरेव हातव्येति **भाष्योक्तम्** एकदेशिमतेपूर्वपक्षं सिद्धवत्कृत्य, **महाभूताधिकारेत्यादिना** सिद्धान्तः प्रदर्शितः।

---

१. अस्मिन्नधिकरणे परिमले 'सिद्धान्त्येकदेशिमतं परमसिद्धान्तव्यावर्तनीयत्वात् पूर्वपक्ष इति टीकायां व्यवहृतम्' इत्युक्तम्। ततश्च परिमलरीत्या एकदेशिमतमेव टीकायां उच्यते इति ज्ञायते। परं तु 'विरोध इति पूर्वःपक्ष' इति टीकायां विरोधपूर्वपक्ष एव उक्तः। कथमिदं सङ्गच्छत इति चेत्। उच्यते—परिमलरीत्या टीकापाठोऽन्य इति भाति। स च पाठः एवमूह्यते—'ततश्च' इत्यस्य स्थाने 'न च' इति वाच्यम्। तथा च—'न च श्रुत्यन्तरेण 'अद्भ्यः पृथिवी पृथिव्या ओषधयः' इत्यादिना विरोधः।' इति पाठः। 'पृथिवीशब्दस्यान्नपरत्वात्' इति हेतुवाक्यमुच्चार्य ततः 'इति पूर्वपक्षः' इति टीकापाठः। एवं पाठमभिप्रेत्य परिमलप्रवृत्तिरिति भाति। भाष्यवत् टीकायामपि च एकदेशिमतवर्णनं समञ्जसम्।

तत्र **प्रकरणादिकथनमभ्यासस्याप्युपलक्षणमित्याशयेनाऽऽह—साभ्यासेति** । 'अद्भ्यः पृथिवी । पृथिव्या ओषधय' इत्येकस्मिन् प्रकरणे 'तद्यदपा'मिति श्रुत्यन्तरे च **पृथिवीशब्दस्य पुनःश्रवणमभ्यासः** । **तत्सहितपृथिवीश्रुत्येत्यर्थः** । P. 593-2

प्रकरणाद्युपोद्बलितेन लिङ्गेन केवललिङ्गस्य बाध इत्याशयेनाऽऽह—**तस्येति** । **टीकोक्तं हेतुं व्याचष्टे—अन्यथेति** । **अन्नशब्दस्य पृथिवीपरत्वे** व्रीह्यादिपरत्वे चोभयथापि वाक्यशेषस्य न विरोधोऽस्ति । पृथिव्येकदेशे व्रीह्यादौ वर्षनिमित्तबहुभावप्रदर्शनस्यापि पृथिव्या अब्जन्यत्वोपपादकत्वादित्यर्थः ।

॥ इति **पृथिव्यधिकरणम्** ॥

---

## ॥ अथ तदभिध्यानाधिकरणम् ॥

### सू०॥ तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥

भाष्योक्तमधिकरणशरीरमुल्लङ्घ्य **टीकायामन्यथा तत्प्रदर्शने हेतुमाह—ननु न तावदिति** । **ईक्षत्याद्यधिकरणैरिति** । **ईक्षत्यधिकरणे श्रुतत्वाच्चेति** सूत्रे 'स कारणं करणाधिपाधिप' इति श्रुतिमुदाहृत्य परमेश्वरस्य जगत्कारणत्वं प्रसाधितम् । तथा **आनन्दमयाधिकरणे तद्धेतुव्यपदेशाच्चेति सूत्रे** 'इदं सर्वमसृजत । यदिदं किञ्च' इति श्रुतिमुदाहृत्य तत्समर्थितम् । एवं **बालाक्यधिकरणादिषु** । ततश्च तैर्गतार्थमित्यर्थः । P. 594-1

**आशङ्कामपनयन्निति** । यथा 'आत्मन आकाश' इत्यत्रात्मनः स्वातन्त्र्यम् । एव'माकाशाद्वायु'रित्यादिष्वपि किमाकाशादीनां स्वातन्त्र्यम्? उत परमेश्वरपारतन्त्र्यमिति अन्यत्राविचारितस्यैवार्थस्य विचार्यत्वप्रदर्शनेन **शङ्कामपनयन्नित्यर्थः** । **पूर्वपक्षमाहेति** । 'आकाशाद्वायु'रित्यादिश्रुतेः 'य आकाशे तिष्ठ'न्नित्यादिश्रुतेश्च स्वकार्ये आकाशस्वातन्त्र्यपारतन्त्र्यविषयतया विरोधादप्रामाण्यमिति **प्रथमपूर्वपक्षं** सिद्धं कृत्वा, 'आकाशाद्वायु'रित्यादिश्रुत्या आकाशादीना- P. 594-3

---

१. 'ब्रह्मानधिष्ठिताना'मिति कल्पतरुपाठः ।

मप्यात्मन इव सृष्टौ स्वातन्त्र्यावगमात् तदनुरोधेन 'य आकाशे तिष्ठ'न्नित्यादिश्रुतिरेव श्रुतव्यतिरिक्तकार्यविषयतया नेतव्येति **सिद्धान्त्येकदेशिमतरूपं** द्वितीयपूर्वपक्षमाहेत्यर्थः ।

ननु देवतानां स्वातन्त्र्येणाधिष्ठातृत्वे 'आकाशाद्वायु'रित्यादिकं प्रमाणत्वेनोक्तम् **टीकायाम्** । तदयुक्तम् । तत्र देवतावाचकस्य तन्निमित्ततावोधकस्य च पदस्याभावादित्यत आह—**अत्राकाशादिशब्दैरिति** । 'आत्मन आकाश' इत्यत्र पञ्चम्यन्तपदनिर्दिष्टस्य स्वातन्त्र्यदर्शनात् तत्प्रायपाठेनाकाशादीनामपि स्वरसतः स्वातन्त्र्यावगमे तस्य च चेतनधर्मत्वात् तदनुरोधेन, 'यमाकाशो न वेद' 'तत्तेज ऐक्षते'त्यादौ चेतने दृष्टप्रयोगत्वाच्च देवता एवोच्यन्त इत्यर्थः ।

P. 594-7

नन्वेवं ब्रह्मणो वाय्वाद्युपादानत्वं न स्यात् । 'आकाशाद्वायु'रित्यादिश्रुतेरन्यपरतया आकाशाद्यनुगतब्रह्मणो वाय्वाद्युत्पत्तिप्रतिपादकत्वाभावादित्यत आह—**यथा आकाशादीति** । अस्मिन् पूर्वपक्षे आकाशादीनामेव वाय्वाद्युपादानत्वम् । न तु ब्रह्मणः । ततश्च यथा आकाशादिद्वारेण वाय्वाद्युपादानत्वम् । एवं देवताद्वारेण निमित्तत्वमित्यर्थः । लिङ्गप्रकरणानुगृहीतश्रुत्यन्तरविरोधान्न देवतानां स्वातन्त्र्यमिति शङ्कते—**नन्विति** । श्रुत्यन्तरविरोधोऽसिद्ध इति परिहरति—**अत आहेति** ।

P. 594-11

प्रस्तावलिङ्गशब्दयोस्तद्द्योतितसर्वकर्तृत्वपरत्वमाश्रित्य **टीकार्थ**माह—**मूलकारणस्येति** । एकदेशिमतोपसंहार**टीकायां**—जगतः साक्षात् **ब्रह्मयोनित्वं** प्रतिषिद्धम् । तत्र **योनिशब्दो** नोपादानपरः । किन्तु **निमित्तपरः** तस्यैव पूर्वपक्ष्यभिमतत्वादित्यर्थः ।

किमाकाशादिशब्दा देवतास्वपि मुख्याः? किं वा लाक्षणिकाः? नाद्यः । प्रयोगप्राचुर्येण भूतेष्वेव तेषां शक्तेः । क्वचिद्देवतासु प्रयोगस्य लक्षणयाप्युपपत्तौ शक्त्यसाधकत्वात् । मनुष्यादिशब्दा अपि देहे मुख्याः, जीवे लाक्षणिका, इति मनसि निधाय, द्वितीयं दूषयति—**आकाशादिशब्दैरिति** ।

P. 595.1

---

१. अनेन शरीरवाचकानां शब्दानां शरीरिपर्यन्तवाचकत्वव्युत्पत्तिः पराभिमता परास्ता । लक्षणयैवोपपत्तेः ।

रूढतरत्वादिति । अपादाने आहत्य विहिता पञ्चमीति रूढतरत्वम् । हेतौ P. 595-2
तु ज्ञापकबलात् कथञ्चित्कल्प्येति न रूढत्वमित्यर्थः ।

इति [1]भ्रममिति । आकाशादिविकारात्मतामापन्नस्यैव ब्रह्मण उपादानत्वमिति नायं पक्षः साधुः "सच्च त्यच्चाभवत्" इत्यादिश्रुत्या ब्रह्मण आहत्यैव सर्वोपादानत्वश्रवणात्, कल्पितस्याधिष्ठानत्वायोगाच्च । नचैवं 'आकाशाद्वायु'रित्यादिश्रुतिविरोधः । तासामप्याकाशाद्यनुगतब्रह्मोपादानत्वपरत्वात् । न चैवमाकाशादिशब्दानां लाक्षणिकत्वापत्तिः, आकाशादीना'माकाशाद्वायु'रित्यादिश्रुतिसिद्धं यदुपादानत्वं तस्य तदीयसद्रूपे अधिष्ठानत्वयोग्य एवार्थात् पर्यवसानेन लक्षणानवकाशात् । एतेन 'तत्तेज ऐक्षत' 'तदपोऽसृजत' इत्यादिकं व्याख्यातम् । तथा च विकारद्वारैव ब्रह्मण उपादानत्वमिति पक्षस्य दुष्टत्वात् भ्रमत्वमित्यर्थः ।

ननु स्वयमधिष्ठायेति टीकया यद्युपादानस्यैवाधिष्ठातृत्वोक्त्या विकारभावमापन्नस्योपादानत्वं वारितम्, तर्हि कथं भाष्यमित्यत आह—तत्र P. 595-4
चा[2]न्यत्र चेति । जीवापत्तिरिति भ्रान्तिमिति । अधिष्ठातृदेवतारूपजीवभावापत्त्या परमेश्वरस्येक्षितृत्वमिति पूर्वपक्ष्यभिमतमेवोच्यत इति भ्रान्तिमित्यर्थः । टीकायां—आकाशादिभावमापन्नस्त्विति । आकाशादिपूर्वपूर्वा- P. 596-3
धिष्ठानभावमापन्नस्यैवोत्तरो[त्तरो]पादानत्वमित्यर्थः ।

॥ इति [3]तदभिध्यानाधिकरणम् ॥

---

१. टीकायां 'स्वयमधिष्ठाये'त्यत्र स्वयमिति पदेन स्वरूपेणेत्यर्थकेन, विकारात्मना तदवच्छिन्नेन वा रूपेण कारणत्वं व्यावर्तितमिति भावः ।

२. अत्र च कल्पतरौ 'तत्र चान्यत्र चानुगतकारणरूपेणावस्थानं तदात्मनाऽवस्थानम्' इति पाठः ।

३. यतः तदभिध्यानात् कामनादिरूपात् सर्वं जगद्भवति, अतस्स ईश्वर एव सर्वत्र साक्षादेव कर्ता । न तु वियदादिभूतानि कर्तॄणि । परमेश्वरः कर्तेत्यत्र प्रमाणमाह—तल्लिङ्गादिति । इति सूत्रार्थो ब्रह्मविद्याभरणे उक्तः ।

## ॥ अथ विपर्ययाधिकरणम् ॥

### सू०॥ विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

P. 597-3 **तत्र हीति** । सकलकारणाधिष्ठानत्वेन सत एव सर्वत्र कारणत्वं दर्शयितुं कार्यात् कारणानुमानमेव तत्र प्रतिपाद्यते । न लय इत्यर्थः । तर्ह्यप्ययस्याप्यश्रवणे कथं तत्र क्रमचिन्तेत्यत आह—**यत्त्विति** । नियमसम्भवः कथमित्यत आह—**श्रुतोत्पत्तीति** । सिद्धान्त[पक्षोप](पक्षप्रति)क्षेपार्थं **[किं दृष्ट]** (**न दृष्टं**) **इति टीका** । तां तत्पक्षस्वरूपप्रदर्शनपूर्वकमवतारयति—**घटादीनामिति** ।

परस्परसम्बन्धे आकांक्षाया एव प्रयोजकत्वात् सन्निधानमात्रमप्रयोजकमिति सिद्धान्तटीकाभिप्रायमाह—**सन्निधानेऽपीति** । विपरीतक्रमस्यापि सन्निधानमविशिष्टमित्याह—**न चेति** । **असन्निधानञ्च नेत्यन्वयः** । यत्र दृष्टत्वं न तत्रानुमानोपनीतत्वमित्यत आह—**घटादाविति** । **अत्रापीति** । महाभूतेष्वित्यर्थः । **अप्ययक्रमस्येति** सिद्धवन्निर्देशायोगमाशंक्याऽऽह—(**श्रुताविति** ।) [**अप्ययेऽपीति**] ननु, श्रौतस्य प्रबलत्वात् कथं दृष्टेन बाध इत्यत P. 597-11 आह—**लोकदृष्टेति** ।

अत्र **परिमलकृतः** । एवं सति वारु(णी)णचतुष्कपालेष्टेरपि सन्निहितं लौकिकाश्वदानमेव निमित्तं स्यात् । न तु पौण्डरीकादिगतं वैदिकम् । तथा च तदधिकरणविरोधः । किञ्च दृष्टस्य प्राबल्ये लोके दग्धपटादिषु कार्यकारणयोः समकालमप्ययदर्शनात् भूतानामपि समकालमेवाप्यय इति कल्पना किं न स्यात् ? यदि च श्रुतौ भूतानामुत्पत्तिः क्रमवती दृष्टेति तेषामप्ययोऽपि क्रमवानेव भवितुमर्हतीति कल्प्येत, तर्हि क्रमाकांक्षोत्थापकतया उत्पत्तिक्रमदर्शनमेव प्राथमिकमिति श्रौतक्रमस्यैव सन्निहिततरत्वमित्याहुः ।

**तच्चिन्त्यम्**[1] । युक्तं लौकिकवैदिकयोरश्वदानयोः क्लृप्तयोः कतरदत्र निमित्तमिति विशये विधीयमानाया इष्टेर्वैदिकत्वात् तदनुरोधेन वैदिकमेव

---

१. इदं तु चिन्त्यम्-एवं सति श्रौतः क्रमः बाध्य इति कल्पतरावुक्तं न घटेत । यदि क्रममात्रं उत्पत्तौ श्रुतं आकांक्षावशादप्ययेपि योज्यते इत्यभिप्रायः, तदा क्लृप्त एव

झटित्युपस्थितमिति तदेव निमित्तमिति। इह तु नाप्ययक्रमः श्रुतौ क्लृप्तः। किन्तूत्पत्तिक्रमानुरोधेन कल्प्यः। कल्पनञ्च दृष्टानुसारीति प्रथमप्रवृत्तदृष्टक्रमेणैव श्रुतिप्रतिपादिते अप्यये निर्णीते आकांक्षालक्षणकल्पनामूलोच्छेदेन श्रौतस्यापि कल्प्यस्य बाधसम्भवात्। तदिदमुक्तम्—**लोक(दृष्ट)प्रसिद्धपदार्थबोधाधीना हि श्रुतिरिति**। न च लोकादरणे अक्रमस्यापि प्रसङ्गः। इष्टत्वात्। सर्वेषामपि भूतानां युगपदप्ययः उत्पत्तिक्रमविपरीतक्रमेण वेत्येव तच्छ्रुतितात्पर्यकल्पनात्। अधिष्ठानतत्त्वसाक्षात्कारे सति तत्र कल्पितस्य सर्वस्यापि युगपन्नाशावश्यम्भावाच्चेति भावः[1]।

P. 597-11

**हेत्वन्तरमिति**। पूर्वमाकांक्षालक्षणकल्पनामूलोच्छेदेन श्रौतक्रमबाधे प्रथमप्रवृत्तदृष्टक्रमावरोधो हेतुरुक्तः। इदानीमयोग्यत्वमपि **हेत्वन्तरमाहेत्यर्थः**। **यो विपरीतक्रमो लोकदृष्टः तस्यावरोधादित्यर्थः**। ननु भाष्ये स्मृत्युपन्यासो[2] निरर्थकः। मूलाभावेन ततः सिद्धान्तासिद्धेरिति शङ्कते—**नन्विति**। **एतन्न्यायमूला स्मृतिः**। तदुपन्यासश्च भाष्ये एतन्न्यायदृढीकरणार्थ इति परिहरति—**अत आहेति**।

P. 598-2

॥ इति विपर्ययाधिकरणम् ॥

---

सः इति कथमस्य अश्वदानवैलक्षण्यम्? किं च एवं रीत्या इष्टिनिमित्तभूतमश्वदानं तेन रूपेणाक्लृप्तमेवेति।

१. अयं तु बाधः ज्ञानजन्यः। 'पृथिव्यप्सु प्रलीयते' इत्यादावुक्तस्तु नाशः क्रमेणैव भवितुमर्हति।

२. भाष्योक्तस्मृतिवाक्यं 'जगत्प्रतिष्ठा' इत्यादि महाभारते शान्तिपर्वान्तर्गतमोक्षधर्मपर्वणि श्वेतद्वीपे भगवतो नारदं प्रत्युक्तिरूपम्।

## ॥ अथ अन्तराविज्ञानाधिकरणम् ॥

सू०॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

पूर्वाधिकरणानां ब्रह्मभावनोपयोगित्वं दर्शयन्नस्याधिकरणस्य तत्फ-
P. 593-5 लत्वेन तत्प्रसङ्गागतत्वं दर्शयति—**भूतोत्पत्तीति**। शुक्तिकादौ रजतादेरिव ब्रह्मणि भूतानामुत्पत्तिलयशीलनं तेषामध्यस्तत्वदृढीकरणपूर्वकमद्वितीयब्रह्म-ध्यानोपयोगीति बुद्ध्या(दि)द्युत्पत्तिक्रमविचारोऽपि तादृश इत्यर्थः। कथं बुद्धीन्द्रियाणामिति। बुद्धेः ज्ञानेन्द्रियकर्मेन्द्रियाणां चेत्यर्थः। करणव्युत्पत्त्या बुद्धिज्ञानेन्द्रियवाचकेन विज्ञानशब्देनाजहल्लक्षणया सर्वाणीन्द्रि-याणि बुद्धिं च ब्रूते सूत्रकार इति टीकार्थं मनसि निधाय परिहरति—**अत आहेति**।

तर्हि विज्ञानशब्देनैव मनसोऽपि ग्रहणसम्भवात् पुनर्मनोग्रहणं व्यर्थ-मित्याशङ्क्य विज्ञानशब्दस्य निश्चयकरणवाचितया तेन तदग्रहणात् पृथङ्मनो-ग्रहणमित्याशयेनाऽऽह—**निश्चयवतीति**। टीकायां समाम्नानादित्युक्तम्।
P. 599-1 तत्कुत्रेत्यत आह—**एतस्मादिति**।

**श्रुतिविरोधपरिहारेणेति**। 'आत्मन आकाश' इति श्रुतावाकाशस्य प्रथमजत्वं प्रतीयते। 'एतस्माज्जायत' इत्यत्र च मनआदीनां, ततश्च श्रुत्यो-र्विरोध इति यः प्रथमपूर्वपक्षः तन्निराकरणेन छान्दोग्ये वियदादेरिव तैत्तिरीयके मनआदीनामुपसंहारेण तस्याः श्रुतेरात्मनः प्राणादिः सम्भूतः, तत आकाश इत्येवंपरत्वान्न विरोध इत्येकदेशिमतप्रदर्शनरूपां चिन्तां घटयतीत्यर्थः।

ननु न पाठक्रमानुरोधेन प्रथमजत्वं मनआदीनामभ्युपगन्तुं युक्तं, 'अन्नमय'मित्यादिश्रुत्या तेषां भौतिकत्वेन भूतोत्पत्तेः पूर्वं तदुत्पत्त्ययोगात्। ततश्च पाठक्रमापेक्षया आर्थक्रमस्य प्रबलत्वात् तदनुरोधेन मनआदीनामेव भूता-नन्तरं निवेश इति नाथर्वणश्रुत्यनुरोधित्वं तैत्तिरीयश्रुतेरित्यभिप्रेत्य शङ्कते—
P. 599-1 **नन्विति**। 'आपोमय' इत्यादौ मयटो विकारार्थकत्वाभावेन तत्साहचर्या-

'दन्नमय'मित्यत्रापि न विकारार्थत्वमिति परिहरति—**अत आहेति**। तर्हि कस्मिन्नर्थे मयडित्यत आह—**प्राचुर्यार्थ इति**।

P. 599-2

ननु 'अन्नमय'मित्यत्र मयटो विकारार्थत्वे 'अन्नमय'मित्यस्यैव कथं लिङ्गदर्शनत्वेनोपन्यास इत्यत आह—**अन्नमशितमिति**। 'अन्नमशितं त्रेधा विधीयते। तस्य यस्स्थविष्ठो धातुस्तत्पुरीषं भवति, यो मध्यमस्तन्मांसं, योऽणिष्ठ-स्तन्मन' इत्यत्र मांसपुरीषयोरिव मनसोऽप्यन्नविकारत्वनिर्देशो लिङ्गमित्यर्थः। एवञ्च **टीकायां'मन्नमयं मन'** इत्यादिलिङ्गश्रवणादित्यर्थनिर्देश इति भावः।

**टीकायामादिशब्देन** 'आपः पीतास्त्रेधा विधीयन्ते' इत्युत्तरसन्दर्भयोरपि मूत्रादीनामिव प्राणादेरप्यबादिविकारत्वश्रवणा'दापोमय' इत्यादावपि मयटो विकारार्थत्वमेव। परन्तु श्रुत्यन्तरबलेन वायुविकारे प्राणे अब्विकारत्वं न मुख्यं सम्भवतीति तत्र गौणं तदाश्रीयते। न 'त्वन्नमय'मित्यत्रापि, मनसोऽन्यविकारत्वा-श्रवणेन अन्नोपचये उपचयदर्शनेन च मुख्यत एव तद्विकारत्वे बाधकाभावादिति प्रदर्शितम्। यदा च श्रुतिबलान्मनआदीनां भौतिकत्वम्, तदा तत्तुल्ययोगक्षेम-तया सर्वेषामपीन्द्रियाणां भौतिकत्वमेवेत्यभिप्रेत्याह—**टीकायामेवं चेदिति**।

**टीकायामथ त्वभौतिकानीति**। सांख्योक्तरीत्या आहंकारि-काणीत्यर्थः। नन्वस्मिन् पक्षे आकाशस्य प्रथमजत्वविरोधात्, कथं **नोक्त-क्रमभङ्ग इति टीके**त्यत आह—**भूतानां मध्य इति**। 'आत्मन आकाश' इति स्वरसादवगतमाकाशप्राथम्यं वाय्वाद्यपेक्षमिति न विरोध इति भावः।

P 599 6

॥ इति अन्तराविज्ञानाधिकरणम् ॥

——

## ॥ अथ चराचरव्यपाश्रयाधिकरणम् ॥

### सू०॥ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥

ननु ब्रह्मणो जगत्कारणत्वनिर्णयाय भूतोत्पत्तिश्रुतिविरोधनिरासो युक्तः जीवविषयश्रुतिविरोधनिरासस्तु न तत्रोपयुज्यत इति तद्विचारो व्यर्थ इत्याशंक्य, जगत्कारणत्वनिर्णयस्यापि चरमपुरुषार्थब्रह्मात्मैकत्वप्रतिपादनोपयोगितयैव साफल्यम्, नान्यथा। ततश्च जीवस्वरूपनिर्णयस्यापि ब्रह्मात्मैकत्वप्रतिपादनोपयोगितया तद्विषयश्रुतिविचारोपि युक्त एवेत्याशयेनाऽऽह—एवं तावदिति।

P. 600-1

एवं प्रत्यगभिन्नब्रह्मसमन्वयविरोधसमाधानादध्यायसङ्गतिरुक्ता। इदानीमवान्तरसङ्गतिमाह—यदीन्द्रियेति। नन्वेवमपि कथं पादसङ्गतिः? श्रुतिकलहानिरासात्। अस्मिन्नधिकरणे लौकिकव्यपदेशबलादेव जीवोत्पत्तेराशंक्यमानत्वेन, तथा 'आत्मन आकाश' इति श्रुतिक्रमान्यथाभावेऽपि श्रुतिद्वयविरोधाभावादित्यत आह—इह जीवेति। तन्मृतो देवदत्त इति पाठमाश्रित्य व्याचष्टे—तदिति तस्मादर्थ इति।

P. 600 6

टीकायां जीवजननिधननिमित्तजातकर्मश्राद्धादिविधीनां, जीवनित्यत्वबोधकशास्त्राणां च विरोधादप्रामाण्ये, जातकर्मादिविधेः जीवजनिमन्तरेणानुपपत्तेः, देहजनिमात्रे तदभ्युपगमे मृतजातदेहेऽपि तदापत्ते'र्जातो देवदत्त' इत्यादिव्यपदेशविरोधाच्च जीवनित्यत्वश्रुतयो देहे सति न नश्यतीत्येवं व्याख्येया इत्येकदेशिमतपूर्वपक्षं सिद्धं कृत्वा, मुख्यत्वे इत्यादिना सिद्धान्तः प्रदर्शितः। तदभिप्रायमाह—देहेन सहेति।

आमुष्मिकफलकर्मशास्त्राणामनन्यगतिकत्वात् जातकर्मादिशास्त्राणां च जीवदेहजनननिमित्तकत्वेनापि उपपत्तेरेतच्छ्रुत्युपोद्बलितजीवनित्यत्वश्रुतिबलेन व्यपदेश एव गौणो व्याख्येय इति स्थाय्येवात्मेत्यर्थः। भक्तिश्च शरीरस्यो-

१. तस्मान्मृत इति पाठान्तरम्।

त्पादविनाशवतस्संयोग इति टीकापाठं स्पष्टत्वादुपेक्ष्य, शरीरस्योत्पादविनाशवतस्तत्संयोग इति पाठं व्याचष्टे—भक्तिर्गुणयोग इति। शरीरस्योत्पादविनाशौ स्तः, अतस्तत्संयोगो जीवगतोत्पत्तिविनाशव्यपदेशे भक्तिरित्यर्थः। P. 600-7

॥ इति चराचरव्यपाश्रयाधिकरणम् ॥

---

## ॥ अथ आत्माधिकरणम् ॥

### सू०॥ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

स्वर्गादिभोगाय न नश्यति, तदर्थं स्थित्यवश्यंभावादिति भावः। P. 601-1 कल्पाद्यन्तयोरिति। कल्पादौ जीवानामुत्पत्तिः, सा च परमेश्वरसङ्कल्पाधीना, तेषां शरीराण्यपि परमेश्वरसंकल्पादेव प्रादुर्भवन्ति। तानि च तदानीमेकरूपाण्येव, तदनन्तरानुष्ठितकर्मवैचित्र्याच्च भोगवैचित्र्यम्। ततः कल्पान्ते सर्वेषामपि नाश इति न विरोध इति भावः। इत्यन्वय इति। तथा च परमात्मन इति पञ्चम्यन्तमिति भावः। उक्तं प्रमाणान्तरमेवाह टीकायाम्—विभक्तत्वादिति।

भावशब्दस्य श्रुत्यन्तरसिद्धोत्पत्तिकवियदादिभावपरत्वेनाप्युपपत्तौ न जीवपरत्वमित्याशयेन शङ्कते टीकायाम्—नन्वक्षरादिति। स्ववाक्यगतोपपदादेव निर्णयो न वाक्यान्तरादित्याशयेन परिहरति टीकायाम्—अत आहेति। मनोमयादिशब्दाभिधेयस्य जीवस्यैव कथं तदुपाधित्वमित्यत आह—मनोमय P. 602-2 इत्यादिशब्देष्विति। ततश्च, मनोमय इत्यादिनां शब्दानां सम्बन्धिनो ये मनआदय उपाधयस्तेषां श्रुतेरिति टीकार्थ इति भावः।

उपाधिप्रविलयेनेत्यादिटीकां व्याचष्टे—उपाधिप्रविलयेनेति। न शुद्धस्येति। अन्यथा तस्य मुक्तिभाक्त्वासम्भवेन तच्छास्त्रवैफल्यं स्यादिति P. 602-3 भावः। प्रश्नश्रुतिं प्रतीकग्रहणेन प्रदर्श्य, तदुत्तरश्रुतिमपि तथैव दर्शयति—

P. 602.5 **अविनाशी वा अरे इति। श्रुत्येत्यस्य पूर्वेणान्वयमाह—श्रुत्येति। अविभागस्य चेति छेद इति।**

तथा च जीवानां ब्रह्माभेदादेव प्रतिज्ञानिर्वाहो, न विकारात्मना। विभागेन जीवानां सर्गादावुत्पत्त्यभ्युपगमे ततः पूर्वं तदनुष्ठितकर्माभावेन तदानीन्तनशरीरादिवैचित्र्यानुपपत्तेः। न च सर्गादौ शरीराद्यैकरूप्ये किञ्चित्प्रमाणमस्ति। तदनन्तरभाविभोगवैचित्र्यार्थं तदानीमभ्युपगम्यमानस्यापि कर्मवैचित्र्यस्य परमेश्वरायत्ततया तस्य च पूर्वकर्मसापेक्ष(त्वसम्भवेन)त्वासंभवे वैषम्याद्यापत्तेश्चेति भावः।

॥ इति आत्माधिकरणम् ॥

---

## ॥ अथ ज्ञाधिकरणम् ॥

### सू०॥ ज्ञोऽत एव ॥ १८ ॥

P. 603-1 पादावान्तरसङ्गती दर्शयति **आत्मैवास्येत्यादिना**। अनुत्पत्तेर्जीवस्वप्रकाशताहेतुत्वमुपपादयति—**अनुत्पत्तौ हीति। नचैत्रमिति।** अनुत्पत्तिसाधनस्य ब्रह्माभेदपर्यवसन्नत्वेन तत एव स्वप्रकाशत्वस्यापि सिद्धेरिति भावः। जीवस्य ब्रह्मैक्ययोग्यतासम्पादनार्थानामुत्तराधिकरणानामप्यत्रैव सङ्गतिं दर्शयति—**उत्तरेणेति। आनन्तर्ये हेतुकथनमीषद्बहिष्ठमिति। ततोऽधिकरणत्रयेणेति।** यद्यपि 'परात्तु तच्छ्रुते'रित्यधिकरणं नाध्यस्तकर्तृत्वसाधनार्थम्, किन्तु तस्य परमेश्वराधीनत्वप्रतिपादनार्थम्, तथापि 'यजेते'त्यादिश्रुतिभिर्न जीवस्य कर्तृत्वं प्रतिपादयितुं शक्यम्। 'एष ह्येव साधु कर्म कारयती'त्यादिश्रुतिविरोधा-
P. 603-5 दित्याशङ्कानिराकरणेन तस्यापि कर्तृत्वसमर्थनार्थत्वादधिकरणत्रयेणेत्युक्तम्।

नन्वात्मनो ज्ञानानुकूलशक्तिसद्भाव एव प्रमाणाभावात् कथं **नित्यचैतन्यश्रुतीनां** शक्तिनित्यत्वपरत्वमित्याशङ्कायां शक्तिसाधनार्थमस्ति **हीत्यादि-**

---

१. 'अनेकधोपपादनात् श्रुत्याऽविभागस्य च' इति टीकायां पाठ इत्यनेन सूच्यते।

२. अत्र कल्पतरौ 'आत्मनोऽध्यस्तमुपपादयिष्यते। एवं ज्ञातयोऽभ्यस्तस्य' इति पाठः।

**टीका** । तस्यास्तत्साधकत्वमुपपादयति—**यदि जीवानामिति** । **स्वाभाविकी** P. 603-7
अनादिसिद्धा। जानात्यर्थान्तर्गता वृत्तिरेव कर्मकारकेण व्याप्ता। नतु चैतन्यांशोपि। अत एव 'घटः स्फुरती'त्यादौ न कर्मनिर्देश इति परिहरति—**तत्राहेति**। **अत एव**। सकर्मकत्वादेव।

॥ इति [2]ज्ञाधिकरणम् ॥

---

## ॥ अथ उत्क्रान्त्यधिकरणम् ॥

सू०॥ उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

सू०॥ स्वात्मना चोत्तरयोः ॥ २० ॥

सू०॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

सू०॥ स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

सू०॥ अविरोधश्चन्दनवत् ॥ २३ ॥

सू०॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

सू०॥ गुणाद्वा लोकवत् ॥ २५ ॥

सू०॥ व्यतिरेको गन्धवत् ॥ २६ ॥

सू०॥ तथा च दर्शयति ॥ २७ ॥

सू०॥ पृथगुपदेशात् ॥ २८ ॥

---

१. कल्पतरौ 'न तु जीवस्वरूपे अस्ति विशेषः' इति युक्तः पाठः। जीवस्वरूपे आकाशापेक्षया विशेषो नास्ति, येन जीव एव ज्ञानं नाकाश इति वक्तुं शक्यम्। अतः शक्तिमहिम्नैव तादृशी व्यवस्था इति भावः। 'शक्तावपि तुल्यमिति चेत्' इति शङ्काग्रन्थस्य, शक्तिस्वीकारेऽपि तद्बलात् आकाशे ज्ञानापादनं तुल्यमित्यर्थः। शक्तेरसाधारणत्वेन परिहारः। 'पितृत्वादिवत्' इति स्थाने 'दग्धृत्वादिवत्' इति साध्विति भाति। दाहशक्तिवदित्यर्थः ॥

२. 'सूत्रे 'ज्ञोऽत' इति तु, घञर्थे कविधानमिति भावार्थककप्रत्ययान्तः, ज्ञानस्वरूप इत्यर्थः' इति ब्रह्मविद्याभरणे।

सू०॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

सू०॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

सू०॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

सू०॥ नित्योपलब्ध्यनुपलब्धि-
प्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ३२ ॥

P. 605 1 सूत्रं साकांक्षमिति कृत्वा स्वयं योजयति—**अणुरिति**। ननु देहस्वामित्वमदृष्टाधीनस्संयोगविशेषः। ततस्तन्निवृत्तिर्वियोगाधीनेति कथमचलतस्तत्सम्भव इत्यत आह—**देहस्वामित्वं हीति**। **तत्सम्भव इति**। उत्क्रमणशब्दरूढार्थमरणसम्भव इत्यर्थः। धात्वर्थतावच्छेदकस्य फलस्य भावशब्दाभिधेयत्वं दर्शयति—**भवतीति भाव इति**।

**टीकायां—गत्यागतिभ्यां चेति**। ततश्चास्मिन् पक्षे उत्क्रमणशब्दस्य मरणे निरूढिर्न कल्प्या। शरीरादुद्गमनस्य योगार्थस्यैव मरणत्वसंभवादिति भावः। **हेत्वन्तरसमुच्चय इति**। उत्क्रान्तिरपि देहादपसृतिरेवेत्यत्र गत्यागतिश्रवणमेको हेतुः। विश्लेषावधिरूपापादानश्रवणमपरो हेतुरिति समुच्चय इत्यर्थः। ननु गत्यागतिशिरस्का सापादाना उत्क्रान्तिरपि देहादपसृतिरूपा सती अणुत्वसाधनमित्यक्लेशेनैवापिशब्दान्वयसम्भवे किमर्थं क्लेशेन व्याख्यानमित्यत आह—**अनेनेति**।

P. 605-5

अत्र[1] भाष्यकृता उत्तरयोः गत्यागत्योः स्वात्मनैव सम्बन्धादणुत्वं सिद्धं जीवस्येति सूत्रं व्याख्याय, पुनर्देहादपसृतिरेवोत्क्रान्तिरित्यस्मिन्नप्यर्थे सूत्रं योजयितुं उत्क्रान्तिः स्वात्मना मुख्यरूपेणैव भवितुमर्हति। उत्तरयोर्गत्यागत्योः श्रवणादित्येवं, सत्योश्च गत्यागत्योरित्यादिना पदद्वयं व्याख्याय, तत्र हेत्वन्तरकथनपरत्वेन चशब्दो देहप्रदेशानां चेति भाष्येण

---

१. 'गमेः कर्तृस्थक्रियत्वात्' इति भाष्यस्य, कर्तृगतसंयोगाधायिका क्रिया प्रतिपाद्या यस्य तत्त्वादित्यर्थः।

२. अयं परिमलनिरासः।

व्याख्यातः। इतश्च देहादपसर्पणमेवेति टीकापि तथैव दृश्यते। ततश्च तदनन्तरभाविन्युपसंहारे तदर्थस्फोरणाय यथोक्त एवान्वयो युक्त इति भावः।

न केवलमिति टीकां योजयन्नेव तात्पर्यमाह—**चक्षुष्ट इति**। P. 605-5

उत्क्रान्तिरपसृतिरूपा सत्यणुत्वसाधनमित्येतदपादानश्रुतेरेव[1] न भवति। किन्तु हृदयादिप्रदेशानां गन्तव्यत्वश्रुतेरपीत्यर्थः। 'स एता' इति श्रुतिं मुमूर्षुविषयां व्याख्याय, 'शुक्रमादाये'ति श्रुतिं सुषुप्तविषयां व्याचष्टे—**सुषुप्तः पुनरिति**। ननु शतधा कल्पितस्य भागो जीव इतिव'दाराग्रमवरोऽपि दृष्ट' इत्येतावतैवोन्मानसिद्धेः, किमर्थं श्रुतौ मात्रशब्द इत्याशंक्य, सत्यं तावतापि सिध्यत्युन्मानम्। तथापि स्पष्टत्वाय श्रुत्यैव मात्रशब्दाध्याहारोऽनुमत इत्याह—**आराग्रमित्यत्रेति**[2]।

टीकोक्तमनुमानं प्रकटयति—**शरीरैकदेशेति**। **उत्क्रमार्गेणेति**। P. 607-3

आत्मा सकलशरीरव्यापी, शरीरैकदेशमात्रवृत्तित्वेनाप्रमितत्वे सति शरीरव्यापककार्यकारित्वात्, त्वग्वदित्यनुमानेनेत्यर्थः। ननु जीवः शरीरैकदेशवृत्तिः, सर्वशरीरवृत्तित्वेनाप्रमितत्वे सति शरीरवृत्तिकार्यजनकत्वात् चन्दनबिन्दुवदित्यणुत्वानुमानस्य प्रत्यनुमानमात्रेण कथमनैकान्तिकत्वमित्यत आह—**चन्दनदृष्टान्तस्येति**। P. 607-4

---

१. कल्पतरौ 'उत्क्रान्तावपादानत्वश्रुतेरेव' इति पाठः।

२. अत्र कल्पतरौ पूर्वं वाक्यं 'वालाग्रदृष्टान्ते उन्मानं व्याख्याय आराग्रदृष्टान्तेऽपि व्याचष्टे—आराग्रादिति' इति शोधनीयम्। पश्चात् 'अत्र मात्रेत्यध्याहारः' इति पाठो वर्तते। अयमधिकः पाठः क्वचित् कोशे नास्ति। तत्राप्यधिकपाठे 'अत्र' इत्यस्य स्थाने 'आराग्रमित्यत्र' इति पाठ इति आभोगप्रतीकधारणात् ज्ञायते। श्रुतौ विद्यमानस्यैव मात्रशब्दस्याध्याहार इत्यर्थवर्णनमाभोगकारस्य नातीव समीचीनं भाति। वस्तुतस्तु भामत्यां पाठः इत्थं वर्तते—आराग्रादुद्धृतं मानमाराग्रमिति, तत्र मात्रपदाध्याहारः 'आराग्रमित्यत्र मात्रेत्यध्याहारः' इति कल्पतरुवाक्येनोच्यते इति समुचिता व्याख्या। भामत्यामपि 'आराग्रादुद्धृत' मित्यस्य स्थाने 'आरादुद्धृत'मिति पाठः उचित इति भाति। तथा सत्येव 'अवयविनोऽवयवमुद्धृत्य विभज्य, मानमुन्मान'मिति कल्पतरूक्तदिशा उन्मानं व्याख्यातं भवेत्। 'आराग्रदृष्टान्तेऽपि (उन्मानं) व्याचष्टे आरादिति' इत्येव कल्पतरावपि शोधनीयम्। लेखकप्रमादात् बहवोऽनर्था इत्यत्र इदमप्येकमुदाहरणम्।

P. 607-4 प्रत्यनुमानस्य दुर्बलत्वान्न सत्प्रतिपक्षतेत्याशयेनाऽऽह—[1]व्यापिचेतनेति । व्यापिनी या चेतना ज्ञानं तदुपलब्धौ सत्यां तदनुरोधेन सर्वशरीरवृत्तित्वौचित्यात् [सर्वशरीरवृत्तित्वेनाप्रमितत्वं] (शरीरैकदेशवृत्तित्वेनाप्रमितत्वं) यदुच्यते तदसिद्धमित्यर्थः ।

ननूत्क्रान्त्यादिश्रुतिभिरणुत्वासिद्धौ तत्सूत्रासामञ्जस्यं, तत्सिद्धौ च श्रुत्यन्तरोदाहरणवैफल्यमिति मन्वानः शङ्कते—नन्विति । एकदेशस्थस्यापि जीवस्य दृष्टत्वादेव व्यापिकार्यजनकत्वं चन्दनबिन्दुवदित्यनुमाने सावयवत्वमुपाधिरित्याह—टीकायां—ये त्विति । टीकायामेतदपीति । एकदेशस्थस्यव्यापिकार्यजनकत्वं गुणद्वारकं, दृष्टत्वात् प्रदीपवदित्यनुमानं गुणाद्वेति सूत्रोक्तमित्यर्थः । टीकायां—[2]क्षेयमितीतिशब्दः उपात्तभाष्यव्याख्यानसमाप्त्यर्थः । टीकायां—न स्थूल इति । स्थूलस्सन् स्फुटस्सन् नोपलभ्येतेत्यर्थः ।

P. 608-2 संयोगस्य यावत्संयोगिव्यापित्वं परमतेऽपीति मन्वानः शङ्कते—[3]ननु यदीति । भ्रान्तिं निराकरोति—तत्राहेति । ननु निरवयवे जीवे एकदेशायोगेन तत्रावस्थानायोगाद्व्याप्यानवस्थाने संयोगस्य तत्रावस्थानमेव न स्यादित्यत आह—कण्टकावच्छेदेति । स्वमतं शङ्कते—तर्हि ममापीति । त्वक्प्रदेशे । त्वगेकदेशे । प्रागुक्तमर्थं स्मारयति—तथा सतीति ।

परोक्ताभ्युपगमेन दूषणान्तरस्यैव न चेत्यादिटीकायामुक्तत्वात्, शङ्का-
P. 609-2 निराकरणद्योतिचशब्दानुपपत्तिरित्यत आह—चस्त्वर्थ इति । जीवमनस्संयोगोपि

---

१. 'व्यापिचेतनेति' इति प्रतीको मूले न दृश्यते । लेखकप्रमादात् कल्पतरौ ग्रन्थस्त्रुटितः, एवं कल्पतरौ पाठः ऊह्यते—'चन्दनदृष्टान्तस्यानिर्णायकत्वा'दित्यनन्तरं 'व्यापिचेतनोपलब्धौ तदनुरोधेनात्मनः सर्वशरीरवृत्तित्वौचित्यादित्यर्थः' इति पाठः । आभोगे 'प्रत्यनुमानस्य' इत्यस्य चन्दनबिन्दुदृष्टान्तेनात्मनः शरीरैकदेशवृत्तित्वानुमानस्येत्यर्थः ।

२. टीकायां उपरि 'सन्नपि विश्लेषः' इत्येतत् 'सन्नपि विशेषः' इति शोधनीयम् । 'तथा च दर्शयती'ति सूत्रभाष्ये 'आलोमभ्यः आनखाग्रेभ्यः (छा. ८-८-१) इति दृश्यते । तत्र 'आलोमभ्यः' इति प्रामादिकम् । 'आनखाग्रेभ्यः' (बृ. १-४-७) इति शोधनीयम् ।

३. 'ननु यदीत्यादिकल्पतरुग्रन्थे 'त्वग्जीवकण्टके'त्येतत् 'जीवकण्टके'ति शोधनीयम् । 'कण्टकतोदजनिते'ति उपरि पाठः ।

कारणमिति मन्वानः शङ्कते—**ननु यदीति**। त्वङ्मनोयोगेनैव सिद्धेर्न जीवमनोयोगः कारणमिति परिहरति—**तत्राऽऽहेति**। तत्रापि तुल्यं चोद्यमित्याह—**नन्विति**[1]। व्यासङ्गपरिहाराय त्वचो मनोऽधिष्ठितत्वमात्रमपेक्षितम्। न तु सर्वावच्छेदेन मनस्संयोगः। अप्रयोजकत्वात्। जीवसंयोगस्तु व्यापिकार्योत्पत्तौ सर्वावच्छेदेनापेक्षितः, यदवच्छेदेन समवायिकारणं नास्ति तदवच्छेदेन तत्समवेतकार्यायोगादिति परिहरति—**सत्यमित्यादिना**। P. 609-2

पौनरुक्त्यमाशंक्याह—**न चाणोरिति**। कथमसर्वाङ्गीणत्वमित्यत आह—**महदल्पयोरिति**। **उक्तमर्थमिति**। नन्वेवं जीवस्य व्यापकतया तत्संयोगः कृत्स्नायां त्वचि वर्तत इति कण्टकतोदनस्थलेऽपि सर्वाङ्गीणवेदनोपलम्भः कुतो न भवेदित्याशंकां त्वचः कण्टकादिना निमित्तेन यः संयोगस्तस्यापि कारणतया तस्य च त्वगेकदेशवृत्तित्वात् तत्रैव वेदना न सर्वत्रेति निराकुर्वन् **कण्टकतोदनेपीति** भाष्यव्याख्यानरूपया **महदल्पयोरित्यादिटीकया** उक्तं कण्टकतोदनस्थले सर्वाङ्गीणवेदनोपलम्भाभावं **निगमयतीत्यर्थः**।

उक्तवक्ष्यमाणोभयपरामर्शित्वमतश्शब्दस्य दर्शयति—**यत एवेत्यादिना**। ननु गन्धस्येव शीतस्पर्शस्यापि स्वाश्रयव्यतिरिक्तदेशवृत्तित्वसम्भवात् कथमयं दृष्टान्त इत्याशंक्याह—**नचात्रापीति**। गन्धस्थले तदाश्रयद्रव्यस्य सन्निहितत्वेन तद्गन्धस्य तत्प्रदेशव्यापित्वशंकोदयेपि स्पर्शस्थले, न शङ्कोदय इति युक्तं दृष्टान्तत्वमित्याह—**कुङ्कुमादिवदिति**। तर्हि वायुना जलकणा वा कथमानीयेरन्नित्यत आह—**सर्वत्र चेति**। **इत्युक्तमिति**। **इत्याशयेन हेमन्त इत्युक्तमित्यर्थः**। P 610-1

**आत्माधिकारात्तेन बुद्धेरुपस्थापितत्वान्न दोष इति परिहरति—आशंक्याहेति**। बुद्धिगुणप्रधानत्वमसिद्धमिति शङ्कते—**नन्विति**। अणुत्वादेरात्मनि स्वतोऽसम्भवादध्यारोपितत्वमिति परिहरति—**अत आहेति**। विवेकग्रहणासिद्धेर्नारोपासम्भव इत्याह—**अहमिति प्रतिभासेपीति**। अनवच्छिन्न- P. 610-6

---

१. अत्र कल्पतरौ 'त्वगेकदेशवृत्तिः' इति पाठः।

२. 'इत्यभिप्रेत्योक्तम्' इत्येव कल्पतरौ पाठो दृश्यते। अतः न व्याख्यापेक्षा। पाठान्तरे व्याख्या।

P. 610-7 स्वभावत्वे नास्ति प्रमाणमिति शंकते—**नन्विति** । तत्र प्रमाणमाह—**तत्त्वमसीति** ।

आत्मनि बुद्धिधर्माध्यासमात्रस्यैव समर्थनीयतया **टीकायां** बुद्ध्यभेदाध्यासकथनं व्यर्थमित्यत आह—**बुद्धिगुणानामिति** । तत्समर्थनार्थमेव तत्कथनम्, अन्यथा इच्छादिधर्मवानात्मेति तादात्म्यप्रतिभासानुपपत्तेरिति भावः । **तत्प्रायणविषयमिति** । प्रायणग्रहणं सुषुप्तेरप्युपलक्षणम्, **ननु सुषुप्तिप्रलययोरित्य**ग्रिमभाष्ये सुषुप्तेरपि निर्दिष्टत्वात् । **न च ते आत्मनः** इत्यादिपारिशेष्यप्रतिपादकटीकासूचितमनुमानं दर्शयन्नवतारयति—**अनुबुभूषेति** । अनुभवितुमिच्छा अनुबुभूषा, स्मर्तुमिच्छा सुस्मूर्षेत्यर्थः[2] । **सप्तमीति** । शङ्कित-

P. 612-1 घटादिधर्मत्वनिरासाय बाह्य इति सप्तम्येव युक्ता । न प्रथमाद्विवचनमित्यर्थः ।

॥ इति उत्क्रान्त्यधिकरणम् ॥

---

## ॥ अथ कर्त्रधिकरणम् ॥

सू०॥ कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

सू०॥ विहारोपदेशात् ॥ ३४ ॥

सू०॥ उपादानात् ॥ ३५ ॥

सू०॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

सू०॥ उपलब्धिवदनियमः ॥ ३७ ॥

सू०॥ शक्तिविपर्ययात् ॥ ३८ ॥

सू०॥ समाध्यभावाच्च ॥ ३९ ॥

P. 613-1 **बन्धमोक्षावस्थेति** । बन्धावस्थायामाध्यासिकं कर्तृत्वम्, मोक्षावस्थायान्तु तदपि नेत्येवं विषयभेदेनेत्यर्थः । न तावत् कर्तृत्वं कल्पितम् । श्रुति-

---

१. कल्पतरौ 'ननु किमनवच्छिन्नस्वभावत्वेन' इति पाठः ।

२. अनुबुभूषासुस्मूर्षे इति पाठः ऊह्यते ।

बोधितत्वात्। तच्च क्रियाश्रयत्वम्। न च कूटस्थनित्यस्य तत्सम्भवति। अतो बुद्धेरेव कर्तृत्वम्, नात्मन इति नासंगश्रुतिविरोध इति **पूर्वपक्षं** दर्शयतीत्याह—**क्रियाश्रयत्व इति**। यच्छब्दस्य व्याख्या—**साङ्ख्या इति**। **टीकायां**—**तन्निरा**-P. 613-2 **करणार्थमित्यस्य प्रपञ्च इति** पूर्वेणान्वयः।

भोक्तृत्वस्य कल्पितत्वं **टीकोक्तमकल्पितत्वनिरासेन** दर्शयति—**चित्स्वभावत्वं चेदिति**। **कर्तृत्वमपि तद्वदिति**। असङ्गोदासीनस्य क्रियावेशात्मक भोक्तृत्वं कल्पितमेवेति कर्तृत्वमपि **तद्वदविरुद्धमित्यर्थः**। **कोशरूपबुद्धेरिति**। बुद्धेरेव विज्ञानमयकोशत्वेन तत्पर्यायश्रुतस्य विज्ञानशब्दस्य कोशात्मतापन्नबुद्धिवाचकतया आत्मकर्तृत्वासाधकत्वादित्यर्थः।

**टीकायामीदृशं हीति**। कारकान्तरानपेक्षत्वलक्षणं **स्वातन्त्र्यं अत्रभवतः पूज्यस्य परमेश्वरस्यापि न सम्भवति**। दण्डचक्रादिकारकान्तरापेक्षादर्शनादिति भावः। **कर्तृत्वे[1] हीति**। आत्मनः कर्तृत्वे साधनीये तन्निर्वाहाय P. 614-3 कार्ये अन्यापेक्षायामपि स्वातन्त्र्यमस्तीत्युपपादनीयम्। न तु नित्योपलब्धावस्य स्वातन्त्र्यं तत्र चान्यानपेक्षत्वमुपपादनीयमित्यर्थः।

तर्हि कथं भाष्यमित्यत आह—**उपलब्धाविति**। तुल्यकक्ष्यवस्त्वन्तरसापेक्षत्वे हि स्वातन्त्र्यविघातो भवति। तत्त्वत्र नास्तीति दर्शयितुं **उपलब्धौ त्विति भाष्यमिति** मनसि निधाय तद्योजयित्वा, सापेक्षत्वमात्रेण न स्वातन्त्र्यविघात इत्यमुमर्थं दर्शयितुं **विषयप्रकल्पनेति** भाष्यमिति तद्योजयति—**उपलब्धीति**। दर्शनस्य समाधिशब्दवाच्यत्वेऽपि ग्रहणादीनां न समाधिशब्दवाच्यत्वमिति शङ्कते—**ननु[2] पातञ्जल इति**। **स्रोतःकरणं** प्रवाहकरणम्। **साधनानि**। धारणादीनि। **ब्रह्मण्यावेशादिति[3]**। तत्तादात्म्येनावेशादित्यर्थः। P. 615-7

॥ इति कर्त्रधिकरणम् ॥

---

१. 'कर्तृत्वे हि' इत्यस्य स्थाने कल्पतरौ 'प्रकृते हि' इति निवेशः उचित इति भाति।

२. कल्पतरौ 'ननु' इति नास्ति। तद्योजनीयमिति सूच्यते।

३. कल्पतरौ 'वाक्ययुक्तिभ्याम्' इति, 'स्वरूपशून्यत्वमिव' इति च शोधनीयम्।

## ॥ अथ तक्षाधिकरणम् ॥

### सू०॥ यथा च तक्षोभयथा ॥ ४० ॥

P. 615-6 **टीकायां शास्त्रार्थवत्त्वादयो हीति**। अधिकारबोधकं शास्त्रम्, अर्थवत्त्वं, विद्वत्त्वञ्चेत्येवमादय इत्यर्थः। क्रियावेश एव कर्तृत्वं तच्च कार्याविनाभूतमिति शङ्कते—**ननु यदीति**। कर्मणीत्यस्य[1] पूर्वेणान्वयः। स्वभावत्वात् कर्तृत्वस्य कार्याविनाभावोऽसिद्धः, ज्ञानस्येव ज्ञेयाविनाभाव इति परिहरति—**इत्याशंक्याहेति**[2]। ज्ञानात्मत्वस्य शास्त्रगम्यत्वादसत्यपि विषये यथाशास्त्रमभ्युपगन्तुं युक्तम्। कर्तृत्वस्य तु लोकगम्यतया यथालोकं क्रियावेशेनैव तदभ्युपगन्तव्यमिति, तस्य स्वाभाविकत्वे मुक्तिव्याघात एवेति वैषम्यमिति सिद्धान्तं दर्शयतीत्याह—**जीवस्येति**। सम्भवतीत्यस्य कर्तारमाह—**क्रियावेश इत्यनुषङ्ग इति**।

P. 616-4 मुक्तौ फलोपहितकर्तृत्वाभावेऽपि कर्तृत्वमात्रस्य नापायः। तस्य तच्छक्तिरूपत्वादिति शङ्कते—**नन्विति**। किमात्मा असङ्गोदासीन एव? किं वा कदाचित् क्रियाविशिष्टोऽपि। आद्ये, न शक्तिरूपमपि कर्तृत्वं सम्भवतीत्याह—**अत आहेति**। द्वितीयमनूद्य दूषयितुं **तथा(पी)चेत्यादिटीका**। तत्र परिहाराभिप्रायमाह—**उपाधिमिति**। क्रियायोगस्य सोपाधिकत्वे च सोपाधिकमेव कर्तृत्वमिति विवादोपरम इति भावः। स्वभावोच्छेदस्यैवाभावान्न[3] भावनाश इति शङ्कते—**ननु मुक्तावपीति**।

**निमित्तानामपि मुक्तौ शक्तिलक्षणेन सम्बन्धेन सम्बद्धत्वं भाष्योक्तमुपपादयितुं शक्तशक्याश्रयेति टीका**। सा न युक्ता। संसारदशायामेव निमित्तानां शक्तयो, न मुक्तिदशायामित्यभ्युपगमे दोषाभावादित्यत आह—

P. 616-10 **परमार्थेति**। इतरथा कर्तृत्वमपि न पारमार्थिकं स्यादिति भावः। **सर्वथैव**

---

१. 'कर्मणि' इति कल्पतरौ न दृश्यते। 'कर्ता आत्मा कर्मणि' इति पाठः अनुमीयते।

२. कल्पतरौ 'इत्याशंक्याह' इति दृश्यते।

३. टीकायां 'स्वभावोच्छेदाद्भावनाशप्रसङ्गः' इति शोधनीयम्।

समं (साम्य) इति। निरवयवस्यात्मनः क्रियातदभावदशयोर्दुःखसुखभाक्त्वा- P. 616-12
त्तादृशं लोकप्रसिद्धजीवमेव दृष्टान्तमाहेत्यर्थः।

नियोगपर्यनुयोगशब्देन स्यादेतदित्यादिशङ्का विवक्षितेत्याह—
यः प्रेरयतीति। तथा चेति। अध्यासभाष्ये आत्मनो बुद्ध्युपाधिककर्तृत्वसमर्थ- P. 618-1
नादिति भावः। तथाविधत्वेनेति। चैतन्यकर्तृत्वमात्रस्यैव बुद्ध्युपाधिकत्वेनाऽपि
निषेध इत्यर्थः। तथा विरुद्धत्वेनेति क्वचित्पाठः। तदा, कर्तृकर्मभावस्य
विरुद्धत्वेन बुद्धेः कर्तृत्वासम्भवात् तदुपाधिकत्वेन निषेध इत्यर्थः। नहि शरी-
रादिति टीकाभिप्रायमाह—शरीरादि यथेति। बुद्धेरुपलब्धिर्भवेदिति P. 619-1
टीकां व्याचष्टे—बुद्धेः कर्त्र्या इति।

नचैवं सतीति भाष्ये एवंशब्देन बुद्धिकर्तृत्वाभाव एव परामृश्यते,
नात्मगतबुद्ध्युपाधिककर्तृत्वाभावः। तस्य करणान्तरकल्पनाऽभावहेतुत्वायोगात्।
ततश्च बुद्धेरनात्मत्वादेव न करणान्तरकल्पनेति पर्यवसितमित्याशयेन तद्भाष्यं
व्याचष्ट इत्याह—उत्तरमपीति। ननु बुद्धिपरिणामरूपाया वृत्तेर्बुद्धिकर्तृकतया
तत्र बुद्धेः करणत्वमात्मनः कर्तृत्वञ्च टीकोक्तमयुक्तमित्याशंक्य, चैतन्यव्यञ्जकता-
पन्नायां वृत्तौ तदुभयमविरुद्धमित्यभिप्रायं दर्शयन्नवतारयति—चैतन्यव्यञ्जक-
वृत्ताविति। टीकायां—विषयावच्छिन्नमिति। विषयाकारान्तःकरणपरिणाम-
रूपावच्छेदयुक्तमित्यर्थः। चैतन्यैकलोलीभूतायां वृत्तावात्मन एव कर्तृत्वमित्यत्र
प्रमाणं दर्शयितुं टीकायामहंकारपूर्वकमित्युक्तम्। अहमित्यनुभूयमानं कर्तृ- P. 619-3
त्वमात्मन एव युक्तमिति भावः।

॥ इति तक्षाधिकरणम् ॥

---

१. टीकायां 'यदि बुद्धिरुपलब्धी भवेत्' इति पाठः।

72

## ॥ अथ परायत्ताधिकरणम् ॥

सू०॥ परात्तु तच्छ्रुतेः ॥ ४१ ॥

सू०॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥

P. 619-7 पादसङ्गतिं सूचयन्नाह—**एष ह्येवेत्यादीति । नचेत्यादिटीकाग्रन्थे येनेत्यादिटीकायाश्शङ्कामन्तरा** अनन्वयाच्छङ्कोत्थानार्थं **पूर्वटीकाया** द्वेषपक्षपातादिप्रसञ्जने पर्यवसानप्रदर्शनेन शंकां दर्शयन्नचेत्यादिग्रन्थमवतारयति—**ईश्वरस्येत्यादिना** । तथा च, रागद्वेषाद्यभावेऽपि धर्माद्यपेक्षया जगद्वैचित्र्यमुपपद्यत इत्येतन्न सम्भवति। स्वतन्त्रस्य सत ईश्वरस्य रागाद्यभावे विषमं प्रवर्तकत्वस्यैवायोगादिति **टीकार्थ** इति भावः ।

ईश्वरस्य रागाद्यभावे सति किं प्राणिकर्मबलात् प्रवर्तकत्वम्? किं वा करुणयेति विकल्प्य प्रथमं **नन्वित्याशंक्य** निराकृत्य, द्वितीयं शङ्कते—**ननु नेश्वर इति** । अस्मिन्नपि पक्षे जगद्वैचित्र्यानुपपत्तिरिति परिहरति—

P. 621-1 **तत्राहेति । नियोज्यत्वोक्तिभ्रममिति । ईश्वर एव विधिप्रतिषेधयोर्नियुज्येतेति भाष्ये विधिप्रतिषेधयोरित्यस्य** षष्ठीसप्तम्योरविशेषात् सप्तम्यन्तत्वभ्रमादीश्वरस्य नियोज्यत्वभ्रमं स्थानशब्दप्रयोगान्निवर्तयतीत्यर्थः ।

॥ इति परायत्ताधिकरणम् ॥

---

१. 'विधौ प्रतिषेधे चेश्वर एव नियोज्य इति भ्रम'मिति कल्पतरौ पाठः । 'विधिप्रतिषेधयोरीश्वर एव नियोज्यत्वोक्तिभ्रम'मिति पाठान्तरमिति भाति । टीकायां 'विधिनिषेधयोः स्थाने नियुज्येत । यत् विधिनिषेधयोः फलं तदीश्वरेण तत्प्रतिपादितधर्माधर्मनिरपेक्षेण ' इति पाठः ।

## ॥ अथ अंशाधिकरणम् ॥

सू०॥ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥

सू०॥ मन्त्रवर्णाच्च ॥ ४४ ॥

सू०॥ अपि च स्मर्यते ॥ ४५ ॥

सू०॥ प्रकाशादिवन्नैवं परः ॥ ४६ ॥

सू०॥ स्मरन्ति च ॥ ४७ ॥

सू०॥ अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

सू०॥ असंततेश्चाव्यतिकरः ॥ ४९ ॥

सू०॥ आभास एव च ॥ ५० ॥

सू०॥ अदृष्टानियमात् ॥ ५१

सू०॥ अभिसंध्यादिष्वपि चैवम् ॥ ५२ ॥

सू०॥ प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

भाष्ये पूर्वाधिकरणसिद्धस्य नियन्तृत्वस्य द्वेधा सम्भवात् तन्निर्वाहार्थमिदमधिकरणमित्येव सङ्गतिः प्रदर्श्यत इत्याभाति । तदयुक्तम् । तथात्वे पादसङ्गत्यभावप्रसङ्गादिति स्फोरयितुं स्वयं पादसङ्गतिगर्भं सन्देहं दर्शयन्नाक्षेपसङ्गतिप्रदर्शनपरत्वं भाष्यस्य दर्शयितुं टीकेत्याशयेनाऽऽह—जीवब्रह्मेति । इदानीमिति । ब्रह्माभावेन पूर्वपक्षकरणादिति भावः । नन्वेवं सति पूर्वपक्षभाष्यविरोध इत्यत आह—भाष्य इति । विरोधैकभृंगेति । अभेदश्रुत्यन्यथाकरणहेतुविरोधैककोटिप्रदर्शनमित्यर्थः । निबन्धा टीकाकारः । P. 621-4

अनेन, (त) अतो ब्रवीतीत्यतः प्राक्तनभाष्येण भेदकोटिप्रदर्शनं, तदनन्तरं, प्रकाशादिवन्नैवं पर इत्यतः प्राक्तनभाष्येणाभेदकोटिप्रदर्शनपूर्वकं, तस्मिन् पक्षे दोषबाहुल्यकथनेन भेदश्रुतयः स्वार्थपराः । अभेदश्रुतयस्त्वन्यपरा

इति जीवभावापन्नब्रह्मप्रतिपादकश्रुतेरभावे परमेश्वरस्यैवाभावान्न तस्य नियन्तृत्व-मित्येकदेशिमतरूपपूर्वपक्षप्रदर्शनं, तदनन्तरभाष्येण त्वभेदपक्षोक्तदोषनिरास-पूर्वकं तच्छ्रुतिप्राबल्यकथनेन भेदश्रुतीनामेव कल्पितभेदपरत्वात् सिद्धमद्वितीयं ब्रह्मेति, तस्य प्रागुक्तं नियन्तृत्वमपि कल्पितभेदमादाय सिद्धमिति, **सिद्धान्तः** प्रदर्श्यत इति सूचितम् ।

एवं ग्रन्थसामञ्जस्ये, **भाष्यटीकयोः** पूर्वपक्षप्रकारभेदप्रदर्शनं **परि-मलस्थं टीकाकल्पतरुविरुद्धत्वान्नोपादेयमिति** ध्येयम् ।

**अथवेति** भाष्यमेकशृङ्गप्रदर्शनपरमिति दर्शयितुं **टीकायामाभासेति** पदमालम्ब्येति पदञ्च प्रयुक्तमित्याशयेनाऽऽह—**अत एकेति** । **शृङ्गान्तर-मिति** । **(त)अतो ब्रवीतीति** भाष्योक्तमित्यर्थः । **जोवे(श्वरयो)रविशेषा-दिति** । असङ्गोदासीनस्येश्वरस्य न स्वरूपेण नियन्तृत्वं सम्भवति । अविद्या-बलाचेत्, जीवानामपि तुल्यमित्यर्थः । **निरतिशयोपाधीति** विशेषणेन जीवो-पाधिभूताविद्यापेक्षया उत्कृष्टोपाधियोग ईश्वरस्योक्त इति भ्रमं व्यावर्तयन् व्याचष्टे—**अधिष्ठान इति** । **अधिष्ठाने** आश्रये सर्वनियन्तृत्वाद्यतिशयाना-धायिनीभिरित्यर्थः ।

ततश्चाविद्याया विषय एवातिशयाधायकत्वस्वाभाव्यान्न जीवतौल्यमीश्वर-स्येति भावः । **विषयीकृतत्वमतिशयाधानविशिष्टत्वात्, सम्पदित्युक्तम्** । ब्रह्मणो जीवतुल्यत्वाभावे हेत्वन्तरं दर्शयितुं **टीकायां—विभूतियोगग्रहणम्** । तद्याचष्टे—**विभूतेरिति** । ततश्च जीवानां परिच्छिन्नत्वान्न नियन्तृत्वं सम्भव-तीति न तौल्यमिति भावः ।

नन्वद्वितीयस्य ब्रह्मणः परमार्थसत्त्वाभावे कथं जीवस्य तदभेदः प्रति-पाद्यते 'तत्त्वमसी'त्यादिश्रुतिभिरित्यत आह—**टीकायामद्वैतश्रुतयस्त्विति** । ब्रह्मादिशब्दा जीवपरा एव । न ततोऽतिरिक्तशुद्धबुद्धादिस्वरूपब्रह्मपराः । जीवानाञ्च तद्गतात्मत्वजातिदेशकालैक्यादैक्योपचार उपासनार्थ इत्यर्थः ।

P. 622-1, P. 622-5 (margin references)

---

१. कल्पतरुपर्यालोचनया टीकायां 'निरतिशयोपाधिसंपद्विभूतियोगात्' इति पाठ इति ज्ञायते । परिमलेऽपि तथैवोक्तम् । कल्पतरौ 'योगो घटनं' इति शोधनीयम् ।

मुक्तस्य जीवान्तरगतवेदनाप्रसङ्गः किं जीवान्तरतापत्त्या, किं वा बिम्बभावापत्त्या ? नाद्य इत्याह—**दर्पणस्योपगम इति**। द्वितीयमाशंक्य निराकरोति—**यद्यपीत्यादिना**। एवकारेण जीवान्तरभावेनावस्थानं वार्यत इत्याशयेनाऽऽह—**न जीवान्तरेति**। फलितमाह **टीकायां—इति सिद्धं जीव इति**। निरवयवस्य ब्रह्मणो मुख्यांशासम्भवादाह **टीकायां—अंश इवेति**। **टीकायां—बुद्धिकर्मेन्द्रियाणीति**। बुद्धीन्द्रियाणि कर्मेन्द्रियाणि चेत्यर्थः। **टीकायां वृत्तिभेदमात्रेणेत्युक्तम्**, तद्व्याचष्टे—**निश्चय इति**। P. 623-1

ननु **प्रवृत्तप्रवर्तनैवानुज्ञा** न तु पुमभिप्रायानुरोधोऽपि तदन्तर्गतः, गौरवादिति वदन्तं प्रति दूषणान्तरं वक्तुं **ऋत्वर्थायामिति टीका**। तत्र **ऋत्वर्थग्रहणस्य** प्रयोजनमाह—**ऋत्वर्थग्रहणमिति**। ननु यदि **देहात्मनोर्मिथ्यातादात्म्यं** सम्बन्धः तर्हि भाष्ये स एव वक्तव्यो, ननु विपरीतप्रत्ययोत्पत्तिरित्यत आह—**भ्रान्तिविषयेति**। **टीकायामस्यां देहादीति**। अस्यां वृत्तौ देहादिसंघात आत्मतादात्म्येन स्फुरतीत्यर्थः। P. 625-1

यदि **सम्यग्दर्शनं** विविक्तात्मस्वरूपदर्शनं तर्हि तावन्मात्रेण कृतार्थत्वानुपपत्तेर्भाष्यायोग इत्याशंक्य विकल्पेन दूषणपरं भाष्यमित्याशयमाह-**टीकायां—यदि सूक्ष्मेति**। **अद्धेत्यनेनाङ्गीकृतमेवाह टीकायां—तद्वन्तं प्रतीति**। अपेक्षितं पूरयन्नेव प्रतीकमुपादत्ते—**टीकायां शरीरव्यतिरेकेति**[२]। ननु भिक्षाशनादिप्रवृत्त्यनुरोधेन कथञ्चिदभिमानस्य वक्तव्यतया ततः स्वैरचेष्टापि स्यादित्यत आह—**अभिमानाभासस्त्विति**[३]। प्रारब्धकर्मसध्रीचीनस्य तस्य शरीर(मात्रयात्रा)यात्रामात्रनिर्वाहकत्वेऽपि न तदतिरिक्तकार्यकारित्वमिति भावः। P. 626-1

---

१. कल्पतरौ 'यद्यपि बिंबात्मतामापन्नं तत्' इति, 'तद्धर्मासांकर्यं' इति च शोधनीयम्। कल्पतरौ 'एवमिति' इति प्रतीकधारणानन्तरं 'जीवे ब्रह्मभाव एव न जीवान्तरापत्तिरित्यर्थः' इति योज्यम्। सूत्रसंख्यानिवेशः पश्चात्। 'स्मरन्ति च' इति सूत्रभाष्ये उदाहृतः 'तत्र यः परमात्मा हि' इत्यादिश्लोकः महाभारते मोक्षधर्मपर्वणि विद्यते। ब्रह्मरुद्रसंवादरूपः इति बोध्यम्।

२. अत्र कल्पतरौ 'न चानिष्टप्रसंगः' इत्यशुद्धम्। 'न चेष्टप्रसंगः' इति शोधनीयम्।

३. ब्रह्मविदां जीवन्मुक्तानां यथेष्टचेष्टाप्रसंगः भाष्यकारवार्तिककारभामतीकल्पतरुकारादिभिः प्राचीनैस्सर्वैरपि सहेतुकं निरस्तोऽपि परमहंसप्रद्वेषिभिःजीवन्मुक्तिमपहाय मृत-

P. 626-2 नैात्माविद्येति। अविद्या च तदुद्भवश्चेत्यर्थः। यादृशस्तादृश इति विशेषणं सम्बन्धस्य दुर्घटत्वख्यापनार्थमित्याह—भाष्ये साङ्ख्यानिति। तद-दृष्टाकृष्टमनस्संयोगेन तस्यैव भोगो नान्यस्येति न साङ्कर्यमित्याशयेन टीकाभिप्राय-माह—आत्मना सहेति। पूर्वपूर्वादृष्टहेतुसंयोगसाधारण्येनादृष्टस्यापि साधार-P. 627-3 ण्यान्न तदनुरोधेनापि व्यवस्थासिद्धिरित्यरुचिं दर्शयति—अदृष्टहेत्विति।

॥ इति अंशाधिकरणम् ॥

इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डुभट्टमहोपाध्यायतनूभवेन
श्रीमन्नारायणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशगृह्यमाणेन
लक्ष्मीनृसिंहचरणारविन्दचञ्चरीकेण लक्ष्मीनृसिंहेन
विरचितायां कल्पवृक्षप्रदीपिकायां
आभोगाख्यायां द्वितीयाध्यायस्य
तृतीयः पादः ॥

---

मुक्तिमेवाभिलषद्भिः कैश्चित् दुर्विदग्धैः भास्करीयदूषणान्येवानुवाचयद्भिः स्वीयग्रन्थेषु पुनः पुनराम्रेडितो न प्रामाणिकानां हृदयमाकुलयेदित्याकलनीयं सहृदयैः ॥

१. कल्पतरौ नञ्पदं योजनीयम्।

२. अत्र कल्पतरौ 'भाष्ये साक्षात्प्रत्येकमात्मनः' इत्येतदशुद्धम्। 'भाष्ये साङ्ख्यान् प्रति एकस्यात्मनः' इति शोधनीयम्। टीकायामपि 'साङ्ख्यान् प्रति व्यतिकरं' इति शोधनीयम्। टीकायामेव उपरि 'नहीति' इति प्रतीकधारणं 'नैतदिति' इति शोधनीयम्।

श्रीः

# ॥ द्वितीयस्याध्यायस्य चतुर्थः पादः ॥

सू०॥ तथा प्राणाः ॥ १ ॥

सू०॥ गौण्यसंभवात् ॥ २ ॥

सू०॥ तत्प्राक्श्रुतेश्च ॥ ३ ॥

सू०॥ तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

**सर्ववेदनप्रतिज्ञातदुपपादनेत्यत्र तच्छब्देन** प्रतिज्ञायाः परामर्शे तस्या उत्तरत्राप्रतिपादनादसाङ्गत्यमित्याशङ्क्य, योग्यताबलात्सर्ववेदनस्यैव परमर्श इति व्याचष्टे—**तस्य सर्ववेदनस्येति। पश्चात्सम्बन्धनीयमिति। पुरस्ता-** P. 629-3 देव सम्बन्धे प्रधानभूतेन **विरोधादित्यनेनैव** सम्बन्धो भवेत्। न च स युज्यते। अतो द्वन्द्वनिष्पत्त्यनन्तरं पूर्वपदार्थस्यापि प्रतिज्ञाया आकांक्षाबलात् तेनैव तस्यान्वय इत्यर्थः।

**अवान्तरेति।** प्राणानां सर्गादौ सद्भावश्रवणमवान्तरप्रलयाभिप्रायमित्येवंरूपमन्यथानयनप्रकारमविद्वानित्यर्थः। **अस्माभिस्त्विति।** ततश्च, P. 629-5 तेजोजन्यत्वविरोधशङ्कासमाधानार्थत्वान्नैतेन पुनरुक्तिरिति भावः। **प्रमाणाभावमात्रमिति।** अस्मदादिप्रमाणाभावमात्रमित्यर्थः। शब्दैकगम्यत्वे सत्यनाम्नातत्वं हेतुरतो न दोष इति परिहरति—**अत आर्हेति।**

ननु **टीकायां**—महाभूतोत्पत्तेरेव शब्दैकसमधिगम्यत्वप्रतिपादनात् पक्षभूतेषु प्राणेषु तदभावे विशेषणासिद्धो हेतुः स्यादित्यत आह—**महाभूतशब्द इति।** तस्या यत्रेत्यादिटीकां योजयति—**महाभूतोत्पत्तेरिति। तत्क-** P. 629-7

---

१. अत्र कल्पतरौ 'यथोक्ता' इत्येतत् 'तथोक्ते' इति शोधनीयम्। टीकायां— 'अत्र चात्युच्चतया' इत्येतत् 'अत्र चाभ्युच्चयतया' इति शोधनीयम्। टीकायामेव 'अथवेत्यभिमतं पूर्वपक्षमिति पाठः।

२. अत्र भाष्ये 'असद्वा इदमग्र आसीत् तदाहुः किं तदसदासीदिति' इति एकैव श्रुतिः। नेयं तैत्तिरीयश्रुतिः। (तै० २-७) इति प्रामादिकम्।

P. 629-9 मैत्यस्य विवरणं **तस्य चैत्यस्य करणमिति । तयोर्धर्मताया इति ।** चैत्यवन्दनं चैत्यकरणञ्चेति ये द्वे, तयोर्धर्मताया अलौकिकश्रेयस्साधनताया इत्यर्थः ।

ननूत्तराधिकरणसिद्धार्थानुपजीवनेन यथाश्रुतप्रतिग्रहमेवादाय विचारः

P. 630-2 किमिति न क्रियत इत्यत आह—**न तु लौकिक इति ।** सूत्रव्याख्यानेन पूर्वपक्षमाह—**तत्र दोषेति ।** लौकिके अश्वदाने दोषः किं 'स स्वां देवतामार्च्छत्' इति श्रुतजलोदरव्याधिः? किं वा प्रत्यवायः? आद्येपि तत्र किं प्रत्यक्षादिकं प्रमाणम्? किं वा इदमेव वाक्यमिति विकल्प्य क्रमेण निराकरोति—**न तावदित्यादिना ।** आद्यद्वितीयं निराकरोति—**न च[1] वृणोतीति ।**

**प्राप्तानुवादीति ।** अश्वत्यागजन्यं[2] दुःखं रागप्राप्तमनुवदन् वरुणशब्दो वारुणेष्टिविधेरर्थवाद इत्यर्थः । एवमपि वैदिकमेवाश्वदानं निमित्तमित्यत्र किं नियामकमित्याशंक्य, द्वयोरपि निमित्तत्वे विधीयमानाया इष्टेर्लौकिके पुरुषार्थत्वं वैदिके क्रत्वर्थत्वमित्येकेन वाक्येन तदुभयप्रतिपादनायोगात्, लौकिकस्यैव च निमित्तत्वे फलकल्पनागौरवात्, विधीयमानाया इष्टेर्वैदिकतया तन्निमित्तस्याश्वदानस्य वैदिकस्यैव झटित्युपस्थितेः वैदिकमेव निमित्तमित्याशयेन उपसंहरति—**ततो यज्ञेति ।**

P. 631-4 **उपक्रमे दातृकीर्तनादिति ।** 'स स्वां देवतामार्च्छत् स पर्यदीर्यत स वारुणं चतुष्कपालमपश्यत्' इत्युत्तरवाक्येष्वपि **तच्छब्देन** तस्यैव परामर्शादित्यर्थः । उपसंहारोऽपि नात्यन्तं दातरि विरुध्यत इत्याशयेनाऽऽह—**प्रतिगृह्णाति इति चेति । धातुसाम्यार्थमिति** पित्तप्रकोपशमनेन **धातुसाम्यार्थ**मित्यर्थः । तत्र वरुणग्रहवदत्र को दोष इत्यत आह—**इन्द्रियेणेति ।** तर्हि तेनैव गतत्वादतिदेशो व्यर्थ इत्यत आह—**वमननिमित्तेति ।**

ननु वैदिकेऽपि पाने तस्य क्रत्वङ्गत्वाद्वमने क्रतुवैगुण्यं स्यादिति तत्रापि

P. 631-8 दोषोऽस्त्येवेत्यत आह—**वैदिके त्विति ।** वमनेऽपि क्रत्वङ्गस्य पानस्य न

---

१. कल्पतरुधृतपूर्वमीमांसासूत्रे 'अर्थवादोऽनुवादत्वात्' इति पाठान्तरम् । कल्पतरौ 'तत्रानेन' इत्यस्य स्थाने 'न चानेन ।' इति पाठान्तरम् ।

२. कल्पतरौ 'अश्वत्यागजन्यदुःखे' इति शोधनीयम् ।

वैगुण्यमिति भावः। **न दोषतेति**। 'अङ्गीकृता ग्लानिर्न दोषाये'ति लोकवादा- P. 631-10
दिति भावः। वैदिकस्थले तु सम्यग्जरणपर्यन्तस्यैव पानस्य क्रत्वङ्गत्वात् अस्ति
वैगुण्यमित्याह—**वेदे त्विति**। तस्मात् भूयसीनामित्यादिटीकासन्दर्भस्य
नैकवाक्यत्वं सम्भवति उत्तरसन्दर्भगौणत्वनिराकरणार्थेन **गौणत्वे त्विति**
वाक्येन, पूर्वसन्दर्भस्य तद[न]न्वितत्वस्फोरणात्। अन्यथा तुशब्दप्रयो-
गायोगात्। ततश्च पाठक्रमात् प्रबलेनार्थक्रमेण तस्मादित्यस्य प्राणा अपी-
त्युत्तरटीकायामन्वय इत्याशयेनाऽऽह—**तस्माच्छन्द इति**।[1]

ननु प्राणानामनुत्पत्तावप्यविद्यादिवदध्यस्तत्वसम्भवात् कथं तत्वान्तरत्वा-
पादनमित्यत आह—**अविद्यावदिति**। न चेष्टापत्तिः। उत्थितस्य न किञ्चि-
द्वेदिषमित्यविद्याया इव प्राणानामपि परामर्शप्रसङ्गादिति भावः। भूतवृद्धिह्रा-
साधीनवृद्धिह्रासभाक्त्वं प्राणानां सादृश्यमित्याह—**अन्नादीनामिति**।[2] P. 633-1

॥ इति प्राणोत्पत्त्यधिकरणम् ॥

---

## ॥ अथ सप्तगत्यधिकरणम् ॥

### सू०॥ सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥

### सू०॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

ननु प्राणानामुत्पत्तिसमर्थनमद्वितीयब्रह्मसमन्वयसमर्थनार्थतया सप्रयोजनं,
संख्याविशेषसमर्थनन्तु न तत्रोपयुज्यत इति व्यर्थस्तद्विचार इत्यत आह—**पूर्व- P. 633-5
पक्ष इति**। प्रत्यगभिन्ने ब्रह्मणि समन्वयस्समर्थनीयः। प्रतीचश्च स्थूलसूक्ष्म-
कारणात्मकशरीरत्रयविविक्तस्यैव ब्रह्माभेदः। ततश्च सूक्ष्मशरीरान्तर्गतानां प्राणानां
सप्तत्वे तावद्भ्य एव विवेको ज्ञातव्यः। एकादशत्वे तु तावद्भ्य इति समन्वय-
समर्थनोपयोगिविवेकज्ञानहेतुतया सप्रयोजनोऽयं विचार इति भावः।

---

१. कल्पतरौ 'तस्माच्छन्दः प्राणा अपि' इति पाठ इति ज्ञायते।

२. अत्र कल्पतरौ 'उक्तैव प्राणसृष्टिरित्यन्वयः' इति शोधनीयम्।

P. 633-6 ग्रहानतिशेरत इत्यतिग्रहा इति व्युत्पत्तिमाश्रित्याह—**रागोत्पादनेनेति**। **अपान इति च गन्ध इति**। **लक्षणयोच्यत इत्यनुषङ्गः**। **अपानेनेति**। अपश्वासवाचकेनापानशब्देन गन्धलक्षणायां घ्रातिक्रियायां कर्मकरणभावेनान्वयलक्षणं शक्यसम्बन्धं **हेतुमाहेत्यर्थः**। **अधिष्ठानेनेति**। अधिष्ठित्येत्यर्थः।
P. 634-3 **अन्यतोऽवगमादिति**। प्रत्यक्षादित एवावगमादित्यर्थः। **प्राणान्तरेति**। हस्तादीनामशीर्षण्यानां प्राणत्वव्यावृत्तिरित्यर्थः। अनन्यथासिद्धसंख्यान्तरश्रुत्यनुरोधेन सप्तत्वश्रुतेरनुवादत्वं न दोषायेति शङ्कते—**नन्विति**। संख्यान्तरश्रुतीनामनन्यथासिद्धत्वमसिद्धम्। प्राथम्यलाघवतर्कोपोद्बलिततया सप्तत्वश्रुतिः प्रबला चेति परिहरति—**तत्राहेति**।

वक्ष्यमाणार्थोपजीविशङ्कानिरासार्थं **यद्यपीत्यादिटीकेति** व्याचष्टे—**इह रूपेति**। **संहतानां** पिण्डीभूतानां पुरोडाशादीनां कठिनानां मांसादीनां चेत्यर्थः। **सूत्रं** योजयन्नुपसंहरति—**तस्मादिति**। अज्ञातार्थपरत्वे सम्भवति
P. 635 5 नावयुत्यानुवादत्वं युक्तमिति प्रागुक्तं निरस्यति—**न तावदित्यादिना**।

**उखाधूपनस्तुतिपरत्वादिति**। प्रसिद्धस्य शिरसस्सप्तसंख्याकप्राणवत्त्वायज्ञशिरोरूपाया उखाया अपि सप्तसंख्याकमन्त्रवत्त्वं युक्तमित्येवं लोकप्रसिद्धार्थपुरस्कारेण स्तुतिपरत्वान्नाज्ञातार्थपरत्वमित्यर्थः। **सदनुवाद इति विशेष इति**। सप्तत्वानुवादस्तु, चतुर्षु घ्राणरसनचक्षुःश्रोत्राख्येषु प्राणेषु गोलकगतसप्तत्वोपचारादसदनुवाद इति भावः।

**पूर्ववर्णके** अरुच्या वर्णकान्तरारम्भ इत्याह—**पूर्वयोजनायां हीति**।
P. 636-3 **वृत्तिभेदविषयत्वकल्पनाक्लेश इति**। यद्यपि द्वितीयवर्णकपूर्वपक्षेऽप्येकादशानां प्राणानामुत्क्रान्तिप्रतिपादिकाया 'दशमे पुरुषे प्राणा' इत्यादिश्रुतेर्वृत्तिविषयत्वकल्पनाक्लेशोऽस्ति, तथापि तत्रैकस्यामेव श्रुतौ क्लेशाश्रयणमत्र तु बहुषु श्रुतिषु क्लेशाश्रयणमिति विशेष इति भावः। **सप्तैव प्राणा इत्यादिटीकया**[3] उदाहरणगतामुत्क्रान्तिमादाय **सूत्रं** व्याख्यातम्। तथा व्याख्याने को

---

१. कल्पतरौ 'प्राण इति घ्राणेन्द्रियं' इति शोधनीयम्।

२. अत्र कल्पतरौ 'परस्परविरोधादबोधकत्वभ्रमे' इति पाठः। टीकायां—यथा 'स्रुवेणावद्यति' इति पाठः। मध्ये 'हीनेति' इति प्रामादिकमशुद्धम्। टीकायामेव 'चक्षुरादिलक्षणबुद्धीन्द्रियपञ्चके'ति पाठः।

३. टीकायां 'तथा वाजसनेय श्रुतिः' इति शोध्यम्।

हेतुरित्यत आह—**अस्मिन् व्याख्यान इति**। **सप्तानामेवेतीति**। अव- P. 636-5
भ्रियत इत्यनुषङ्गः। तर्हि भाष्यविरोध इत्यत आह—**सप्तैव प्राणा इति भाष्ये चेति**।

नन्वस्मिन् वर्णके त्वंपदार्थविवेकोपयोगप्रकारभेदाभावात् कथं फलभेद इत्याशंक्य, प्रत्यगभिन्नब्रह्मणि प्रतिपत्त्युपयोगिचित्तैकाग्र्यहेतूपासनोपयोगप्रकार-भेदादस्ति फलभेद इत्याशयेनाऽऽह—**प्रयोजनन्त्विवति**। अध्यात्मं वागा-दीनामधिदैवमग्न्यादीनाञ्च यान्यैक्योपासनानि तेषु सप्तानामेवैक्यं चिन्तनीयं पूर्वपक्षे, तेषामेवातीतानागतवर्तमानसकलदेहानुयायितया बन्धकत्वेनात्मत्वात्। सिद्धान्ते त्वेकादशानामपि, तावतामप्यात्मत्वादिति भावः।

॥ इति सप्तगत्यधिकरणम् ॥

---

## ॥ अथ प्राणाणुत्वाधिकरणम् ॥

### सू०॥ अणवश्च ॥ ७ ॥

द्वितीयवर्णकेन सङ्गतिमाह—**एकादशानमिति**। यद्यप्यत्र प्राण- P. 637-4
विषयश्रुतिविरोधापरिहारान्न पादसङ्गतिः। तथापि प्रासङ्गिकत्वात् पादासङ्गतिर्न दोषायेति भावः। **परिच्छेदेति**। अहमिहैवास्मीति परिच्छेदप्रतिभासादि-त्यर्थः। **आधिदैविकेति**। न च व्यष्ट्यन्तःकरणचैतन्यसंवलनरूपास्मदादिव्यष्ट्य-हंकारवत् समष्ट्यन्तःकरणचैतन्यसंवलनरूपस्समष्ट्यहंकारो हैरण्यगर्भोऽस्ति, स च व्यापक इति कथं प्रमाणाभाव इति वाच्यम्। अस्मदाद्यहंकारसामान्य-रूपस्यैव समष्ट्यहंकारतया तदतिरिक्तसांख्याभिमतमहत्तत्वप्रकृतिकाहंकारासिद्धे-रिति भावः। **असम्भावितत्वादिति**। पृथिव्यादीनामेव तत्प्रकृतितया तेषां P. 638-3
परिच्छिन्नत्वे तद्विकाराणां व्यापित्वसम्भावनायोगादिति भावः।

॥ इति प्राणाणुत्वाधिकरणम् ॥

---

१. हिरण्यगर्भस्यास्मदाद्यहंकारसामान्यातिरिक्तसमष्ट्यहंकारो नास्तीति वर्णने, जीवसामान्यातिरिक्तहिरण्यगर्भस्यैवाभावप्रसंगात्, समष्ट्यहंकारस्य व्यापकस्याभ्युपगमेऽपि, सांख्याभिमतमहत्तत्वप्रकृतिकेन्द्रियप्रकृतिभूतव्यापकाहंकारसद्भावे प्रमाणं नास्तीत्येव तात्पर्यम्। एवमेव परिमलेऽप्युक्तम्। क्वचित्परिमलोल्लङ्घनेन आभोगकारः अपसिद्धान्ते पत-तीव। महदुल्लंघनं परमोऽनर्थः।

## ॥ अथ प्राणश्रैष्ठ्याधिकरणम् ॥

### सू०॥ श्रेष्ठश्च ॥ ८ ॥

अणुश्चेत्यत्र मुख्यप्राणस्याणुत्वस्थापनान्नाव्यवहितपूर्वन्यायातिदेशः सम्भ-
P. 638-5 वति इत्यभिप्रेत्याह—पादाद्येति। तर्हि तदनन्तरमेवेदं सूत्रं युक्तमित्यत
आह—ज्ञातेष्विति। न वायुक्रिये पृथगित्युत्तराधिकरणे प्राणस्य चक्षुरा-
दिव्यापारात् भेदश्चिन्त्यते। तथा च श्रेष्ठश्चेति सूत्रस्य प्रागेव कृतत्वे मध्य-
वर्तिना अमुख्यप्राणविचारेण व्यवहितत्वाच्छ्रेष्ठपदस्यान्वयासम्भवेन पुनर्मुख्य-
प्राणवाचकं पदमुपादेयं स्यादिति क्लेश इति भावः।

॥ इति प्राणश्रैष्ठ्याधिकरणम् ॥

---

## ॥ अथ न वायुक्रियाधिकरणम् ॥

### सू०॥ न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

### सू०॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

### सू०॥ अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ ११ ॥

### सू०॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥

P. 639-1 सम्प्रतीत्यनेन सूचितामवसरसङ्गतिं प्रकटयति—उत्पत्तीति। अत्र
भाष्यकृता 'एतस्माज्जायते प्राण' इति श्रुतौ प्राणस्य वायोर्भेदेन निर्देशात् 'यः
प्राणस्स वायु'रित्यत्र चाभेदनिर्देशाच्छ्रुत्योर्विरोधादप्रामाण्यमिति प्रथमपूर्वपक्षं
सिद्धं कृत्वा, ततो विरोधसमाधानार्थमेकदेशिमतं द्वेधा दर्शितम्। तत्र श्रौत-
पक्षोपन्यासानन्तरं स्मार्तपक्षोपन्यासोऽनवसरदुःस्थ इति शङ्कते—भाष्ये श्रुति-
बलेनेति। श्रौतपक्षस्य मन्दत्वादेव स्मार्तपक्षोपन्यास इति परिहरति—
अत आहेति। 'प्राण एव ब्रह्मण' इत्यादिश्रुतिं व्याचष्टे—छान्दोग्य
इत्यादिना। पदभाष्य इति। प्रतिपदविवरणरूपत्वाच्छान्दोग्यभाष्यं पद-
P. 639-6 भाष्यं तत्रेत्यर्थः। इन्द्रियप्रकरणात्। इन्द्रियप्रायपाठात्।

ननु तन्त्रान्तरसिद्धे प्राणस्य स्वरूपे अभ्युपगम्यमाने तस्य वायोरत्यन्तभिन्नतया तयोरुपकार्योपकारकभावायोगेन 'स वायुने'ति भेदश्रुतिरनुपपन्ना। अभेदश्रुतिस्तु सुतरामनुपपन्नैवेति श्रुतिद्वयासामञ्जस्यमित्येतदपेक्षया अन्यतरश्रुत्यसामञ्जस्याभ्युपगमेन प्रथमपक्ष एव श्रेयानिति शङ्कते—**किं श्रुती इति**। P. 639-8 अत्यन्तभिन्नयोरपि वायुप्राणयोः श्रुतिबलादेवोपकार्योपकारकभावसम्भवेन भेदश्रुतेरुपपत्तेर्न श्रुतिद्वयासामञ्जस्यमिति परिहरति—**नेत्याहेति**।

ननु वागादीनामग्न्यादीनाञ्च सम्बन्धान्तरपुरस्कारेणैवोपकार्योपकारकभावो दृश्यते। प्रकृते च न तादृशः सम्बन्धः इत्यस्त्येव किञ्चिदसामञ्जस्यं भेदश्रुतेरपीत्याशंक्य त्वन्मतेऽपि श्रुतिद्वयासामञ्जस्यं तुल्यमित्याह—**त्वयापि हीति**। प्राणस्य प्राणापानादिविलक्षणवृत्तिपरिणामितया कथञ्चिद्भेदेऽपि शुद्धस्वरूपाभेदमाश्रित्यैवाभेदश्रुतिः समर्थनीयेति किञ्चिदसामञ्जस्यमस्त्येव, भेदश्रुतौ तु स्पष्टमेव सामञ्जस्यमित्यर्थः।

ननु पक्षद्वयेऽपि श्रुतिविरोधतौल्ये प्रथमपूर्वपक्षत्यागे किं नियामकमिति शङ्कते—**तर्हीति**। प्रमाणाभाव एव तत्त्यागे हेतुरिति परिहरति—**नेत्याहेति**। ननु श्रुतिविरोधे स्मृतेरप्रवृत्तेर्द्वितीयपूर्वपक्षोऽपि निष्प्रमाणक एवेत्याशंक्य परस्परविरोधेन श्रुत्योरर्थनिर्णयाशक्तौ विरोधाभावेन स्मृतिप्रवृत्तिसम्भवात्, तदनुरोधेन श्रुत्योरेव कथञ्चिद्योजनान्न दोष इत्याह—**यदा त्विति**। भेदश्रुतिः प्रागुक्तरीत्या किञ्चिदसामञ्जस्येपि सुयोजेति मत्वा अभेदश्रुतियोजनाप्रकारमाह—**शक्यते हीति**।

एवमप्यभग्नस्वार्थश्रुत्यन्तरविरोधान्न स्मृतिप्रवृत्तिरिति शङ्कते—**स्यादेतदिति**। P. 640-1 **अतोऽत्रापीति**। प्रथमपूर्वपक्ष इव **द्वितीयपूर्वपक्षेऽपि श्रुतिविरोधस्सम इत्यर्थः**। असिद्धो विरोध इति परिहरति—**अत आहेति**। किं भेदनिर्देशादेव करणव्यापारत्वायोगः? किं वा स्वातन्त्र्येण तन्निर्देशस्य प्रयोजनान्तराभावेन तत्त्वान्तरपरत्वाद्वा? नाद्य इत्याह—**अस्ति तावदिति**। त्वन्मते तु वायुप्राणयोरत्यन्ताभेदाभ्युपगमान्न कथञ्चिदपि भेदनिर्देशोपपत्तिरिति भावः। न द्वितीय इत्याह—**यस्त्विति**।

प्रत्येकमिन्द्रियाणां वृत्तिः प्राण इति पक्षे **टीकायां** दूषणं नोक्तम्। स्वयं तत्र दूषणमाह—**प्रत्येकवृत्तित्वे चेति**। **पुरुषार्थत्वात् पुरुषं प्रति** P. 640-5

P. 641-1 **पारतन्त्र्यमिति** हेतुसाध्ययोरभेदशङ्कां परिहरति—**पुरुषं प्रतीति**। तच्छेषत्वात् तदधीनस्थितिकत्वलक्षणं **तत्पारतन्त्र्यमिति** न तयोरभेद इति भावः। **देहेन्द्रियविधारणेत्यत्र** वीत्युपसर्गोऽकिञ्चित्कर इति नार्थान्तरप्रसङ्ग इत्याशयेनाह—**विधारणेतीति**[1]। **धारणमिति**। विधारणमित्यनेन धारणमेवोच्यत इत्यर्थः।

भाष्ये प्रमाणविपर्ययविकल्पनिद्रास्मृतय इति पातञ्जलसूत्रोक्ता **वृत्तयो गृह्यन्त** इत्युक्तम्। तत्र विपर्यये संशयस्याप्यन्तर्भावं दर्शयितुं **टीकायां** विपर्ययलक्षकं **योगसूत्रं** पठितम्। तत्र तन्मते भ्रमस्य मिथ्यार्थविषयकत्वानभ्युपगमान्मिथ्याशब्देन बाध्यत्वलक्षणं मुधात्वमुच्यत इत्याशयेनाऽऽह—**मिथ्या मुधेति**[2]। **मिथ्याज्ञानत्वे हेतुरिति**। अतद्रूपप्रतिष्ठत्वमर्थासंस्पर्शित्वं ज्ञानस्य बाध्यत्वे हेतुरिति भावः।

ननु भ्रमस्थलेऽपि व्यवहारदर्शनात् **तथापीति** टीकानुपपत्तिरित्यत P. 642-1 आह—**अधिष्ठानतत्व इति**। सिद्धान्तिना निद्राया मनोवृत्तित्वमभ्युपगन्तुमयुक्तमिति शङ्कते—**नन्विति**। पञ्चमी वृत्तिरस्मदभिमता भविष्यतीति न दोष इति परिहरति—**अत आहेति**।

॥ इति नवायुक्रियाधिकरणम् ॥

---

## ॥ अथ श्रेष्ठाणुत्वाधिकरणम् ॥

### सू०॥ अणुश्च ॥ १३ ॥

P. 642-6 **अणवश्चेत्यनेन** गतार्थत्वादधिकरणानारम्भमाशंक्याह—**अणवश्चेत्यत्रेति**। प्रसङ्गमेवाह—**प्राणेषु हीति**। **समोऽनेनेति**। अनेन सर्वेण प्रपञ्चेन सम इत्यर्थः। तदधिकरणोदाहरणवैषम्येण ह्यधिकाशंका रचयितव्या। सा च न प्रकृते सम्भवति। तत्रापि व्यापित्वश्रवणेन तच्छंकापरिहारयोस्तत्रावश्यकर्तव्यतया P. 643-4 तत एव गतत्वादिति दूषयति—**सर्वेऽनन्ता इति**[3]।

---

१. कल्पतरौ 'विधारणेति' प्रतीकधारणम्।

२. कल्पतरौ 'मिथ्या मुधा' इति ग्रन्थः त्रुटित इति ज्ञायते।

३. कल्पतरौ 'तंत्रान्तरस्थे'ति पाठः।

किं तत्रोक्तो हेतुरत्र न सम्भवतीत्यगतत्वमुच्यते ? तत्सम्भवेऽपि हेत्वन्तर-कथनाद्वा ? नाद्य इत्याह—अत्रापीति। साम प्राण इति व्युत्पाद्येति। P. 643.7 'एष उ एव साम वाग्वै सा अम एषः सा चामश्चेति तत्साम्नस्सामत्व'मिति पूर्व-वाक्येनेत्यर्थः। न द्वितीय इत्याह—हेतुभेदस्य चेति। पूर्वपक्षप्रकारभेदा-भावे सिद्धान्तहेतुभेदमात्रादधिकरणभेदायोगात्। अन्यथा ईक्षत्याद्यधिकरणाना-मपि हेतुभेदेन भेदापत्तेरिति भावः।

अत्र 'समः प्लुषिणा समो मशकेने'त्यादिश्रुतेः 'सम एभिस्त्रिभिर्लोकै' रित्यादिश्रुतेश्च परस्परविरुद्धपरिच्छिन्नत्वापरिच्छिन्नत्वबोधकत्वादप्रामाण्यमिति प्रथमपूर्वपक्षं सिद्धं कृत्वा, द्वितीयपूर्वपक्षं दर्शयितुं 'सम एभि'रित्यादि-टीका। तत्र कुटशब्दार्थमाह—कुटो घट इति। 'घटः कुटनिपावस्त्री'त्यमर-कोशादिति भावः।

आहत्य विभुत्वाम्नानाभावात् कथं टीकेत्याशङ्क्य 'सम एभिस्त्रिभिर्लोकै' रिति श्रुत्या त्रिलोकीसाम्ये, 'समोऽनेन सर्वेणे'ति श्रुत्या किं बहुना सर्वेणाप्य-नेन जगता सम इति सर्वप्रपञ्चसाम्ये चोक्ते अर्थाद्विभुत्वमुक्तं भवतीत्याशये-नाऽऽह—सम एभिरिति। अध्यात्मं भव इति व्युत्पत्तिमभिप्रेत्याह—आत्म-नीति। आध्यात्मिकप्राणाश्रया इति। तथा च प्राणत्वेनैकीकृतस्य प्राणस्य P. 643.11 केनचिदंशेन परिच्छिन्नत्वम्, केनचिदंशेन विभुत्वं चोच्यत इति न वैरूप्य-मिति भावः।

॥ इति श्रेष्ठाणुत्वाधिकरणम् ॥

---

## ॥ अथ ज्योतिराद्यधिकरणम् ॥

सू०॥ ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

सू०॥ प्राणवता शब्दात् ॥ १५ ॥

सू०॥ तस्य च नित्यत्वात् ॥ १६ ॥

चक्षुषा हीति। अनया श्रुत्या लोकप्रसिद्धघनुवादिन्या चक्षुरादीनामादि- P. 644.1 त्यादिनैरपेक्ष्यं स्वस्वकार्ये गम्यते। 'अग्निर्वाग्भूत्वे'त्यादिश्रुत्या च वागादीनाम-

न्यादीनां च सम्बन्धान्तरासम्भवादधिष्ठेयाधिष्ठातृभाव एव सम्बन्ध इति चक्षुरादीनामादित्यादिसापेक्षत्वं गम्यत इति श्रुतिविरोधपरिहाराद॰ध्याये पादे च सङ्गतिरित्यर्थः। भाष्ये 'यच्छक्तं तन्नान्याधिष्ठित'मिति नियम उक्त इति मत्वा शङ्कते—**यथा(स्वमि)स्वेति**। P. 644-1

उत्सर्गस्य यस्मिन्नंशे बलवदस्ति बाधकं तत्रैवापवादो नान्यत्र। न च करणानां देवताधिष्ठितत्वे किञ्चिदस्ति प्रमाणम्। येन तदंशेऽपि तस्यापवादः स्यादित्याह—**नतु करणानामिति**। अभिप्रायमजानानस्य शंकां तद्विवरणेन निराकर्तुमुत्तरटीकेत्याशयेनाह—**नन्वित्यादिना**। देवतानधिष्ठानांशेऽप्युत्सर्गत्यागे अस्ति बाधकमिति शंकते—**ननु मेति। मा बाधीत्यन्वयः**। प्रधानभूतकार्यविरोधपरिहाराय श्रुतेरौपचारिकत्वान्न बाधकत्वमिति परिहरति—**तत्राहेति**।

देवतानामिव जीवस्यापि करणाधिष्ठातृत्वेन भोक्तृत्वसम्भवाट्टीकाऽयोगमाशंक्य तात्पर्यमाह—**सत्यपीति**। अभ्यासो न श्रूयमाणार्थसाधकः। अन्यपरत्वादिति शंकते—**ननु श्रुतीति**। देवताधिकरणन्यायेन श्रूयमाणेप्यर्थे प्रामाण्यमविरुद्धमिति परिहरति—**तत्राहेति**।

**न चेत्यादिटीकायाः** पूर्ववाक्यार्थे शंकोत्तरत्वासम्भवात् असाङ्गत्यमाशंक्य प्रागुक्तानुमानस्याप्युत्सर्गापवादत्वं सिद्धवत्कृत्य, तत्र पूर्वपक्षोक्तदूषणनिराकरणपरतया व्याचष्टे—**अनुमानमपीति**। सिद्धसाधनेनानुमानं दूषयतः किमुत्सर्गस्य क्वचिदप्यंशे बाधो नास्तीति मतम्? किं वा देवतानधिष्ठानांशे? नाद्य इत्याह—**तदभ्युपगम इति**। न द्वितीय इत्याह—**स्वरूपेति**। P. 645-4

ननु जीवस्य चक्षुरादिप्रेरकत्वमनुभवसिद्धम्। 'यो वेदेदं जिघ्राणी'त्यादिश्रुत्यनुमतञ्च, तत्कथं जीवो नाधिष्ठातेत्याशंक्य, तस्य स्वतोऽधिष्ठातृत्वासम्भवेऽपि देवतासध्रीचीनस्य तत्सम्भवतीत्यभिप्रायेण टीकायामुक्तं—**भवतु वा जीवोऽपीति**। किं व्याप्तिबलाद्देवतानां भोक्तृत्वमाशंक्यते? किं वा प्रमाणान्तरबलात्? नाद्य इत्याह—**यो यदधिष्ठातेति**। द्वितीयमाशंक्य निराकरोति—**यदि मन्येतेति**।

P 645-11 **न ह वै देवानिति**। तत्र हि 'पुण्यमेवामुं गच्छती'ति पूर्ववाक्ये ऽग्न्युपासकस्य सार्वात्म्यफलं प्राप्तस्यापि स्वकृतोपासनापुण्यफलप्राप्तिरेव। न त्वात्मान्तर-

कृतकर्मफलप्राप्तिरित्यभिधाय तत्र हेतुकथनार्थं 'न ह वै देवा'निति श्रुतिस्सिद्धवन्निर्देशरूपा प्रवृत्ता। तया च पापफलप्रसङ्गवारणेन जीवान्तरकृतपुण्यफलप्रसङ्गोपि वारितः। तत्प्रसङ्गे तुल्यन्यायतया पापफलस्यापि प्रसङ्गेन तन्निषेधायोगात्। ततश्च जीवान्तरकृतपुण्यापुण्यकर्मफलप्रसङ्गनिषेधपरैतच्छ्रुतिबाधितमनुमानमित्यर्थः।

'स वै वाचमेव प्रथमामत्यवहत् सा यदा मृत्युमत्यमुच्यत सोऽग्निरभव'दिति श्रुतिं व्याचष्टे—**स प्राणं इत्यादिना**। प्रापणे किं कर्मेति प्रश्ने तदुत्तरत्वेन श्रुतिशेषमवतार्य [1]व्याचष्टे—**तत्किमितीत्यादिना**। **अतिमुक्ता** त्यक्तवती। **अग्निरेवाभवदिति**। तथा चाग्निभावः प्रापणकर्मेत्युक्तमिति भावः। 'अथ यत्रैतदाकाशमनुविषण्णं चक्षुस्स चाक्षुषः पुरुषो दर्शनाय चक्षु'रिति श्रुतिं व्याचष्टे—**अथ देह इत्यादिना**। **न चैतन्यायेति**। तथा च श्रुतौ दर्शनशब्दो वृत्तिपर इति भावः। अमुमेवाभिप्रायं प्रकटयितुं 'अथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राण'मित्युत्तरवाक्यं, तद्व्याचष्टे—**अथापीति**। श्रुतिगतस्याथशब्दस्य विवरणमपीति। अथशब्दस्याप्यर्थकत्वे फलितमर्थमाह—**दर्शनाद्यर्थमिति**। श्रुतौ पूर्ववाक्ये चक्षुश्शब्दस्य सर्वेन्द्रियोपलक्षकत्वाद्दर्शनशब्दस्य च सर्वेन्द्रियवृत्त्युपलक्षकत्वात् **दर्शनादीति चक्षुरादीति** चादिग्रहणं कृतम्। **स्वतः** कारणमनपेक्ष्य। **स आत्मेति** तच्छब्देन वेदनं गृह्यते। तदेव स्वप्रकाशरूपत्वादात्मेत्यर्थः। ननु तर्हि वेदनस्य नित्यत्वात् कथं चक्षुराद्यपेक्षेत्यत आह—**तस्येति**। गन्धादिवृत्त्यर्थं चक्षुरादिकमित्यर्थः।

॥ इति ज्योतिराद्यधिकरणम् ॥

---

१. इत उपरि धृताः प्रतीका मूले न दृश्यन्ते। कल्पतरुस्थः भाष्यस्थश्रुतिविवरणरूपः भागः कियानपि कल्पतरुलेखकप्रमादात् त्रुटितः। आभोगकारपरिमलकाराभ्यां स भागः विवृतः ताभ्यां दृष्ट एव। एतादृशाः प्रमादिनो लेखका इदानीमपि दृश्यन्ते। पाठका वयं किं कुर्मः। भाष्ये उदाहृतः 'वागध्यात्ममिति प्राहुः' इत्यादिश्लोकः मोक्षधर्मपर्वगतः।

## ॥ अथ इन्द्रियाधिकरणम् ॥

सू०॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥

सू०॥ भेदश्रुतेः ॥ १८ ॥

सू०॥ वैलक्षण्याच्च ॥ १९ ॥

P 646-1 **आक्षेपसङ्गतिं** दर्शयन् **पूर्वपक्षमाहेत्याह—सत्त्वितिं** । 'एतस्माज्जायत' इत्यादिश्रुतीनां, 'हन्तास्यैव सर्वे रूपमसामे'त्यादिश्रुतीनां च प्राणादिन्द्रियाणां भेदाभेदप्रतिपादिकानां विरोधसमाधानात् **पादसङ्गतिरिति** भावः । ननु भाष्ये **भेदश्रुतेरिति सूत्रे** इन्द्रियाणां प्राणस्य चासुरपाप्मविध्वस्तत्वतदभावलक्षणो भेदहेतुरुक्तः । **वैलक्षण्यसूत्रे** च मृत्युप्राप्तत्वतदभावलक्षणः, **टीकायान्तु** मृत्युप्राप्ताप्राप्तत्वलक्षण एवोक्तो, न प्रथमः । तत्र प्रथमस्य त्यागे को हेतुरित्याशंक्य, द्वयोरप्येकत्वात्, तथा निर्देश इति सूचयितुं तयोरैक्यं

P. 647-1 दर्शयति—**मृत्युरिति** ।

**भाष्ये** विषयासक्तिलक्षणो मृत्युरसुरपाप्मशब्देन निर्दिष्टः । श्रमरूपो मृत्युर्मृत्युशब्देन, टीकायान्तु द्वयमपि मृत्युशब्देन गृहीत्वा द्विविधोपि विरुद्धधर्मसंसर्गः एकहेलयैव निर्दिष्ट इति भावः । अमुमेवाभिप्रायं प्रकटयितुं **टीकामुपादाय**, तत्र श्रुतिद्वयमप्युपन्यस्यति—**श्रूयते हीति** । **श्रूयत** इत्यस्याऽऽसङ्गवत्त्वमित्यनेन सम्बन्धः । 'त्वन्न उद्गाये'ति देवैर्नियुक्तायां वाचि यो भोगः अभिवदनसामान्यलक्षणं फलम् तद्देवेभ्य आगायत्, यत्कल्याणं अभिरूपमभिवदनं तदात्मने आगायत् । अनेन वैषम्यावगमाद्विषयासक्तिर्गम्यत इति भावः ।

वागादीनां विषयासङ्गवत्त्वे श्रुतिमुपन्यस्य, मृत्युप्राप्तत्वे श्रुतिमुपन्यस्यति—

P. 647-2 **तानि मृत्युरिति** । अत्रापि **श्रूयत** इत्यनुषङ्गः । **केषु चित्कोशेषु विषयासङ्गवत्त्वं संश्राव्य तानि मृत्युरित्येवं,** मध्ये **संश्राव्येति** पदप्रक्षेपेण **पाठो** दृश्यते । तत्र यद्यपि 'यो वाचि भोग' इत्यादिश्रुतेरुद्गीथविद्याप्रकरणगतत्वात् 'तानि मृत्यु 'रित्यादेश्च सप्तान्नब्राह्मणगतत्वेन बहुव्यवहितत्वात् तथा निर्देशानु-

---

१. कल्पतरौ 'तस्य प्राणस्य भावाभावयोरनुविधायिनौ' इति पाठः ।

पपत्तिः। तथापि क्वचिद्विषयासङ्गवत्त्वं संश्राव्य, क्वचिदेवं श्रूयत इत्येवमुक्त्या श्रुतिद्वयमस्तीति गम्यत इत्यभिप्रायेण तथोक्तमिति ध्येयम्। **अर्थालोचनं मननञ्च** समुच्चितमिन्द्रियकार्यमिति भ्रमं वारयति—**अर्थालोचनमिति**। P. 647-3 एतच्च ज्ञानेन्द्रियाणां, कर्मेन्द्रियाणान्तु वचनादानविहरणोत्सर्गानन्दा अर्थक्रियेति ध्येयम्।

भाष्यकारमते **टीकोक्तं** अपरितोषं प्रकटयितुं तत्कृतां **सूत्रयोजनां** दर्शयति—**भाष्यकारैर्हीति**। **अध्याहारेति**। भेदवाचकतत्वान्तरशब्दाध्याहारेत्यर्थः। P. 648-3 **पौनरुक्त्यादिति**। तद्व्यपदेशादित्यनेनेत्यर्थः। किं **तद्व्यपदेशादित्यनेन** भेदव्यपदेशमात्रं विवक्षितम्? किं वा संज्ञाभेदव्यपदेशः? नाद्य इत्याह—**यदीति**। द्वितीयं शङ्कते—**नन्विति**। किं संज्ञाभेदः संज्ञिनोर्भेदमात्रे हेतुः? किं वा स्वतन्त्रभेदे तत्वान्तरत्वे? इति विकल्प्य क्रमेण दूषयति—**यदीन्द्रियेति**।

**अत एवेति**। **भेदेन व्यपदेशादिति** सौत्रहेतुनिर्देशव्याजेन स्वरसावगतं संज्ञाभेदं दर्शयन्नेव वर्णितरीत्या तस्यासाधकतां मन्वानो **निबन्धा** टीकाकारः तद्व्यपदेशविवरणार्थं **मृत्युप्राप्तेत्यादिना प्रकरणभेदं** वर्णयाम्बभूवेत्यर्थः। 'अभिचरन्यजेते'त्यादाविव **विवृण्वन् वर्णयाम्बभूवेति** निर्देशः फलफलिभावपर इति वर्णनस्य विवरणं फलम्। इन्द्रशब्दस्य परमात्मनि प्रयोगात् तत्र कथं चक्षुरादीनां लिङ्गत्वमित्यत आह—**जीवभावमिति**।

**घच्प्रत्ययो भवतीति**। इन्द्रियमिति निपातेन सिद्धरूपे प्रत्ययस्य P. 648-14 पृथक्करणेन पाणिन्यभिप्रायकीर्तनमेतत्। एवञ्च लोकावगता रूढिरभियुक्तपाणिनिस्मृतिविरोधाद्धेयेति **टीकाशय** इति भावः। **टीकायां** पाणिन्युक्तव्युत्पत्तिव्यतिरेकेणेन्द्रियत्वस्य निर्वक्तुमशक्यत्वात् तदुपजीवनेनैव रूढिप्रवृत्तिरिति उपजीव्यविरोधादपि सा हेयेत्युक्तं—**नच रूपादीत्यादिना**। P. 648-3

---

१. अत्र कल्पतरौ 'प्राणप्राणवृत्तिशब्दयोः' इति शोधनीयम्।

२. कल्पतरौ 'निबन्धा तद्व्यपदेशं' इति शोधनीयम्। कल्पतरावेव उपरि 'प्रतिज्ञान्तर्गतं' इति पाठान्तरम्। 'इन्द्रियत्वप्रतिज्ञानात्' इति पाठः।

तत्र त्वन्मतेऽपीन्द्रलिङ्गत्वमज्ञानादावतिप्रसक्तमित्याशंक्य निपातनस्य विशेषणान्तरसूचनार्थत्वान्न दोष इत्युपसंहारव्याजेन परिहृतम् **तस्मादिति**

P. 648-16 **टीकायाम्** । तत्र दलद्वयस्यापि व्यावर्त्यं दर्शयति—**भौतिकमित्युक्त इत्या-दिना** । इन्द्रियशब्दादुक्तधर्मप्रकारकबोधाभावात् कथं प्रवृत्तिनिमित्तत्वमित्यत आह—**इन्द्रियत्वजातीति** । पाणिनिव्युत्पत्तेः अन्यपरत्वान्न रूढिबाधकतेत्याह—**रूढस्यैवेति** । **अत एवेति** । इन्द्रदृष्टत्वादिना व्युत्पत्त्यनियमप्रदर्शनमित्यर्थः ।

P. 649-5 **तन्मात्रमयुक्तमित्युक्तं भवतीति** । अत्र **परिमलकृतः**—**टीकायां**—**वृत्तिकारमतो**पन्यासो, न भाष्यकारमतस्यायुक्तत्वप्रदर्शनार्थः । किन्तु तस्यैव मतस्य स्वरूपकथनेनैवाभासत्वप्रकटनार्थः । तथा हि—संशयवाक्येन प्राणव्यावृत्तं वागाद्येकादशानुगतमिन्द्रियत्वं सिद्धान्ते निर्वक्तव्यतयोपक्रान्तम् । अग्रे च देहा-द्यधिष्ठानत्वे सतीत्यादिना कर्मेन्द्रियेभ्योपि व्यावृत्तमेव तन्निरुक्तमिति विरोधः । निष्प्रयोजनञ्चाधिकरणं, इन्द्रियत्वस्य पूर्वपक्षरीत्या प्राणानुगतत्वे, सिद्धान्तरीत्या तद्व्यावृत्तत्वे च, प्रयोजनभेदाभावात् । न च **वैशेषिकशास्त्रवत्** साधर्म्यवैधर्म्य-विचारार्थमस्य शास्त्रस्य प्रवृत्तिः ।

न च प्राणस्येन्द्रियत्वे इन्द्रियेभ्य एव त्वंपदार्थो विवेक्तव्यः, अनिन्द्रि-यत्वे तु प्राणादपीति प्रयोजनभेदश्शङ्कनीयः । नहीन्द्रियेभ्योऽहं भिन्न इत्येवं त्वम्पदार्थो विवेक्तव्यः। किन्तु 'काणोऽहं' 'मूकोऽहं 'खञ्जोऽहं' इत्यादि-तत्तदिन्द्रियविशेषाभेदभ्रमनिरासार्थमन्धादहं भिन्न इत्यादिप्रकारेण, ततश्च प्राणद्वादशानामिन्द्रियत्वे, क्षुधितोऽहमित्याद्यभेदभ्रमनिरासार्थं प्राणादपि पृथक् त्वं-पदार्थो विवेक्तव्य इति न प्रयोजनभेदः ।

**भाष्यकारीयपूर्वपक्षे** तु त्वम्पदार्थस्य प्राणादेव विवेकः कार्यो नेन्द्रिये-भ्योऽपि, तेषां प्राणाभिन्नतया तद्विवेकादेव तद्विवेकसिद्धेरित्यस्ति प्रयोजनभेदः । **पाणिनिस्मृतिमवलम्ब्य** पूर्वपक्षोऽपि तुच्छः । तामेवावलम्ब्य इन्द्रदृष्टेषु, विषयेषु, इन्द्रजुष्टेषु भोग्येषु, इन्द्रसृष्टेषु घटादिषु, इन्द्रदत्तेषु ग्रामादिषु चेन्द्रिय-त्वपूर्वपक्षप्रसङ्गात् । इन्द्रियशब्दरूढिमवलम्ब्य तत्रातिप्रसङ्गपरिहारेऽपि, न

१. यद्यपि इन्द्रियत्वं जातिः तच्च कर्मेन्द्रियेऽपीति वक्तुं शक्यम् । तथापि तदभि-व्यञ्जकं निरुक्तं तत्र नास्तीति भावः ।

प्राणेऽपि तत्प्रसक्तिः । सूत्रयोजनाक्लेशभिया तुच्छाधिकरणार्थपरिग्रहस्तु वदान्य-गृहान्तःप्रवेशक्लेशभिया तद्द्वारदृष्टलोष्टपरिग्रहतुल्यः ।

न च भाष्यकारमते सूत्रयोजनाक्लेशोऽपि। तथाहि न तावत् प्रतिज्ञाध्याहारः। ते वागादयः श्रेष्ठादन्यत्र श्रेष्ठादन्ये तत्त्वान्तराणीति सौत्रपदैरेव तल्लाभात्। नापि भेदश्रुतेरित्यनेन पौनरुक्त्यम्, तद्व्यपदेशादित्यनेन उत्पत्तिव्यपदेशस्यैव हेतोरुक्तत्वात्। स च प्राणेप्यस्तीति व्यभिचारवारणाय श्रेष्ठादन्यत्रेति हेतावपि विशेषणम्। सूत्रे इन्द्रियाणीत्येत'न्मनस्सर्वेन्द्रियाणी'ति श्रुत्यनुकरणम्। इतिशब्दमात्रं च तत्राध्याहर्तव्यम्।

ततश्च, श्रेष्ठादन्यत्र श्रेष्ठव्यतिरेकेण श्रेष्ठोत्पत्तिव्यतिरेकेण इन्द्रियाणि जायन्त इति [शब्देन] तदुत्पत्तिव्यपदेशादिति हेत्वर्थः। इन्द्रियोत्पत्तिश्रेष्ठव्यतिरेकोक्तिसामर्थ्यादेव च श्रेष्ठोत्पत्तिव्यतिरेकलाभान्न तदंशे अध्याहारप्रसक्तिः। एवम्भूत एव हेत्वर्थो भाष्ये व्यपदेशभेदादित्यनेन व्यपदेशविशेषादित्यर्थकेन विवक्षितः। अत एव कोऽयं व्यपदेशभेद इति प्रश्नपूर्वकं हेत्वर्थस्यैव विवरणमुत्तरत्र क्रियते। नतु हेत्वर्थस्य प्रसाधनम्, हेत्वर्थस्वरूप एव प्रश्नदर्शनात्। अतः श्रेष्ठादन्यत्रेत्येतद्धेतावप्यन्वेति। इन्द्रियाणीत्येतत्तु हेतावेवेतीदं सर्वं भाष्याभिमतमेव।

नापि तच्छब्दस्यानन्तरोक्तापरामर्शकत्वम्, न वियदित्यारभ्य पूर्वप्रकृताया उत्पत्तेरेव तच्छब्देन परामर्शात्। तथा प्राणाः, श्रेष्ठश्चेति सूत्रयोरुत्पत्तिसाधकत्वेन तदनुरोधेन तस्याः प्रकृतत्वावश्यंभावात्। तथा प्राणा इत्यत्रैव प्रकृतेऽ'प्येतस्मात् जायत' इत्युदाहरणगताया उत्पत्तेस्तच्छब्देन परामर्शसम्भवाच्च। तथा चोत्पत्तिभेदस्यैव हेतुत्वेन संज्ञाभेदमात्रस्य हेतुत्वानभ्युपगमान्न तत्पक्षोक्तदोषावकाशः।

नन्वेवमपि श्रेष्ठादन्यत्रेत्यस्य साध्यान्वितस्य हेतावपि आवृत्त्याऽन्वयः। हेतावितिशब्दाध्याहारश्चेति क्लेशः सूत्रयोजनायामिति चेन्न। आवृत्तिस्तावत्परमतेऽपि तुल्या, इन्द्रियशब्देन वागादीनां व्यपदेशादिति टीकोक्तस्य हेतोः प्राणव्यावृत्तत्वाप्रतीतौ तत्साध्यस्येन्द्रियत्वस्य तद्व्यावृत्तत्वायोगेन तदर्थं श्रेष्ठं वर्जयित्वा वागादीनामेव तथा व्यपदेशादिति वक्तव्यत्वादध्याहारक्लेशोऽपि परमते

तुल्यः। भेदश्रुतेरित्युत्तराधिकरणसूत्रेण वागादीनि श्रेष्ठात्तत्त्वान्तराणीति प्रतिज्ञाध्याहारात्। न च पूर्वसूत्रादनुषङ्गत एव तल्लाभान्नाध्याहार इति वाच्यम्। पूर्वसूत्रे साध्ये हेतौ चान्वितस्य पुनरुत्तरत्राप्यन्वय इत्यतिक्लेशापत्तेः।

अस्मन्मतेऽपि पक्षनिर्देशार्थमिन्द्रियाणीति पदमित्यभ्युपगमे, नेतिशब्दाध्याहारेण क्लेशः। न च ते इत्यनेनैव तन्निर्देशे तद्वैयर्थ्यम्। इन्द्रियोत्पत्तिश्रुतिस्मारणार्थतया तेनापि पदेन पक्षनिर्देशात्। एवं च हेताविन्द्रियाणीति पदस्य नान्वयः। तदन्यपक्षेऽपि, अनुकृतेस्तस्य चेत्यादाविव विवक्षितवाक्यसूचनार्थमितिशब्दाध्याहारेऽपि न दोषः। तस्मादाभासत्वप्रकटनार्थमेव वृत्तिकारमतोपन्यास इत्याहुः।

तच्चिन्त्यम्। भाष्यकारमते दोषोद्घाटनपूर्वं मतान्तरोपन्यासस्य हेयत्वप्रकटनार्थत्वानुपपत्तेः। भाष्यकारीयं त्वधिकरणमित्युत्तरग्रन्थेन भाष्यस्य गतिवर्णनायोगाच्च। न च भाष्ये टीकोक्तदोषाणामसम्भवादापाततस्तदुक्तिरिति वाच्यम्। असम्भवस्यैवासिद्धेः। तथा हि, भाष्ये तत्त्वान्तराणीति पदाध्याहारस्तावत्स्फुटः। न च श्रेष्ठादन्यत्रेति सौत्रपदार्थकथनमेवैतन्नाध्याहार इति वाच्यम्। अनयोः पदयोरुत्तरत्र हेत्वन्वितत्वेन व्याख्यानात्। प्रतिज्ञान्वितत्वेनापि तयोर्व्याख्याने अत्रापि तत्पदोच्चारणपूर्वकमेव तदर्थकथनापत्तेः। भाष्यस्वारस्यभङ्गेन कथञ्चित्तात्पर्यवर्णने आवृत्तिक्लेशापत्तेश्च।

न च परमतेऽप्यावृत्तिः, हेतौ तदन्वयानभ्युपगमात्। न च हेतोः प्राणव्यावृत्तत्वासिद्धिः। ते वागादयः श्रेष्ठं वर्जयित्वा इन्द्रियाणि, इन्द्रियशब्देन तेषां वागादीनां व्यपदेशादित्युक्ते, अर्थादेव प्राणाद्व्यावृत्तिसिद्धेः। अर्थसिद्धत्वमेवाभिप्रेत्य तेषामेवेति टीकायामेवकारः प्रयुक्तः। अन्यथा, ते वागादयः श्रेष्ठात्तत्वान्तराणीति पक्षेऽपि वागादिव्यतिरिक्तस्य श्रेष्ठस्य पक्षत्वव्यावृत्त्यर्थं तत्राप्यन्वयापत्तेः।

नचैवं परमते त इन्द्रियाणीति प्रतिज्ञायामपि सामर्थ्यादेव त एवेत्यवधारणलाभे श्रेष्ठादन्यत्रेति पदयोर्वैयर्थ्यमेव स्यादिति वाच्यम्। तच्छब्दस्य प्रकृतपरामर्शित्वेन वागादीनामिव प्राणस्यापि प्रकृततया तस्य पक्षत्वव्युदासाय तयोः पदयो-

रावश्यकत्वात्। न च परमते **भेदश्रुते**रित्यत्र प्रतिज्ञाध्याहारः। अनुषक्त-पदैरेव तल्लाभात्, त्रिवारमन्वयादतिक्लेशापादनं त्वनभ्युपगमादेव निरस्तम्।

तथा च यथाश्रुतभाष्ये आवृत्तिक्लेशानभ्युपगमपक्षे च सिद्धः प्रतिज्ञाध्याहारः। तथा पौनरुक्त्यमपि। भाष्ये प्रतिज्ञानन्तरं, **कुतः? (तद्व्य)पदेशभेदात्। कोऽयं व्यपदेशभेदः? ते प्रकृताः प्राणाः श्रेष्ठं वर्जयित्वा अवशिष्टा एकादश इन्द्रियाणीत्युच्यन्ते** इत्यारभ्य, **पृथक् प्राणो व्यपदिश्यते। पृथक् चेन्द्रियाणी**त्यन्तेन सन्दर्भेण सौत्रहेतोर्भेदनिर्देशपरत्वेनैव व्याख्यानात्। न च **व्यपदेशभेदा**दिति भाष्ये **भेदशब्दो** विशेषपरः। प्रसिद्धिविरोधात्। **पृथक् प्राणो व्यपदिश्यते। पृथक्चेन्द्रियाणी**त्युत्तरभाष्यविरोधाच्च।

एवञ्च श्रेष्ठोत्पत्तिव्यतिरेकेणेन्द्रियाणि जायन्त इति **शब्देन तेषां** पृथगुत्पत्तिव्यपदेशादिति **सौत्रहेतुव्याख्यानं भाष्याननुगुण**मिति स्पष्टमेव। नापि तद्युक्तम्। **इन्द्रियाणी**त्यनन्तरमितिशब्दाध्याहारक्लेशात्। **अनुक्तेस्तस्य** चेत्यादावगतिकतया तदभ्युपगमात्। न च पक्षनिर्देशार्थमिन्द्रियाणीति पदं, तन्महिम्ना च 'मनस्सर्वेन्द्रियाणि चे'ति वाक्यस्मरणान्नेतिशब्दाध्याहार इति वाच्यम्। वागादीनामिन्द्रियत्वस्य प्रागसिद्धतया सिद्धवन्निर्देशायोगे आश्रयासिद्ध्यापत्तेः। हेतौ विशेषलाभाय पक्षे विशेषणदानायोगाच्च।

तस्य स्वातन्त्र्येण पक्षनिर्देशकत्वे च तत्पदवैयर्थ्यं, **त इन्द्रियाणीति** सूत्रस्वरसावगतोद्देश्यविधेयभावभङ्गः। **तद्व्यपदेशादिति** हेतूपन्यासे योग्यतयैव वाक्यविशेषनिश्चयसम्भवात् तन्निर्देशार्थ**मिन्द्रियाणीति** पदवैयर्थ्यञ्च। अत एवमादिदोषानभ्युपगमपक्षे यथाश्रुतभाष्ये च स्पष्टं पौनरुक्त्यम्।

एवं तच्छब्दस्वारस्यहानिरपि, तत्त्वान्तराणीत्यध्याहृतपदार्थान्तर्गतस्य भेदस्यैव तच्छब्देन भाष्ये परामर्शाभ्युपगमादुत्पत्तिपरामर्शकत्वस्य भाष्ये अदर्शनात्। उत्पत्तेरप्रकृतत्वेन तत्रापि दोषतौल्याच्च। न च **वियदधिकरण**मारभ्य तस्याः प्रकृतत्वम्, श्रेष्ठश्चेत्यनन्तरं तस्य प्रकृतत्वासिद्धेः। न च विषयवाक्योपात्तत्वादुत्पत्तेः परामर्शः। विषयवाक्ये बहूनामुपात्तत्वेन तस्या एव परामर्शे हेत्वभावात्, श्रेष्ठादन्यत्रेति पदसमभिव्याहारानुरोधेन वागादीनामेव तच्छब्देन परामर्शौचित्याच्च।

न च श्रेष्ठशब्दस्य तदुत्पत्तिपरत्वबलात्तच्छब्दस्य वागाद्युत्पत्तिपरत्वम्, अन्योन्याश्रयात्, तच्छब्दस्योत्पत्तिपरत्वे सिद्धे श्रेष्ठशब्दस्य तदुत्पत्तिपरत्वम्, ततश्च तत्सिद्धिरिति। समीचीनहेतुलाभार्थं, पदसामर्थ्यपरित्यागस्तु समीचीन-सूक्ष्माङ्गुलीयकधारणार्थमङ्गुलितक्षणेन तुल्यः। हेतुसामीचीन्यमप्यसिद्धमेव। पृथिव्याद्यपेक्षया ओषध्यादीनां पृथगुत्पत्तिकथनेऽपि ततस्तत्वान्तरत्वादर्शनेन प्राणादिन्द्रियाणां पृथगुत्पत्तिकथनस्याप्यप्रयोजकत्वेन तत्वान्तरत्वासाधकत्वात्।

'स ईक्षांचक्रे स प्राणमसृजत, प्राणाच्छ्रद्धा'मित्यादिना 'प्राणाद्वीर्यपृथगुत्पत्तिकथनात्तस्यापि प्राणात्तत्वान्तरत्वापत्तेश्च। वीर्यं हि बलं तच्च प्राण एव 'प्राणो हि बल'मित्यादिश्रुतेः। 'लोके हि यत्किञ्चिद्बलकर्म प्राणकर्म तदित्याचक्षते' इति लोकसिद्धत्वेन तत्समर्थनाच्च। किं बहुना, 'एतस्माज्जायते प्राण' इत्यादिश्रुतावेवोत्तरत्र 'प्राणापानौ व्रीहियवौ तपश्चे'ति वृत्तिमत्प्राणव्यतिरेकेण तद्वृत्तेः प्राणापानयोरुत्पत्तिकथनात्तयोरपि ततस्तत्वान्तरत्वापत्तिः। अतो विवक्षितहेतोरप्यसम्बद्धत्वे भाष्योक्तहेतुपरित्यागे कारणाभावात्तत्र तच्छब्दासामञ्जस्यमवर्जनीयमेव।

तस्माच्छ्रुतिसूत्रयोर्विरोधे सूत्रमिव, सूत्रभाष्ययोर्विरोधे भाष्यमन्यथैव नेयमिति मन्वानो निबन्धा मतान्तरमुपन्यास्थदित्येव युक्तम्। तदिदमुक्तं तन्मात्रमयुक्तमित्युक्तं भवतीति। नच मतान्तरस्याप्ययुक्तता। न तावद्विरोधः। इन्द्रियशब्दवाच्यत्वं किं वागादिष्वेव, उत प्राणेऽपीति संशयः। इन्द्रलिङ्गत्वस्य प्रवृत्तिनिमित्तस्य प्राणेऽपि सत्त्वात्तत्रापि तद्वाच्यत्वमिति पूर्वः पक्षः।

लोकवेदप्रसिद्धिबलादिन्द्रियशब्दो रूढः। तत्र जातिरेव प्रवृत्तिनिमित्तं, तच्च न प्राणे, तत्र तद्व्यवहाराभावात्। अतो न तत्र तद्वाच्यत्वमिति सिद्धान्तः। जातिव्यञ्जकतया च टीकायां देहाधिष्ठानत्वे सतीत्यादिरुपन्यस्तः। तथैव चाचार्यैरत्यवतारिता सा टीका—इन्द्रियत्वजातिव्यञ्जकमाहेति। टीकायां देहाधिष्ठानत्वे सतीत्यादिकमुपलक्षणम्। देहाधिष्ठानत्वे सति मननकरणत्वं, देहाधिष्ठानत्वे सति वचनादिकरणत्वं चेत्यपि द्रष्टव्यम्। व्यञ्जकत्वादेव तदननुगमो न दोषाय। तथा च कुतस्त्यो विरोधः? नापि प्रयोजनाभावः। प्राणस्येन्द्रियत्वे इन्द्रियेभ्य एव त्वम्पदार्थो विवेक्तव्यः। अनिन्द्रियत्वे तु प्राणादपीति प्रयोजनभेदसम्भवात्।

न च काणोऽहं मूकोऽहमित्यादिभ्रमनिरासार्थं विशिष्यैव चक्षुरादिभ्योऽपि विवेकः कार्य इति न प्रयोजनभेद इति वाच्यम्। चक्षुरादीनामिन्द्रियत्वनिश्चयवत इन्द्रियेभ्यस्त्वम्पदार्थस्य भेदनिश्चयेऽपि तद्भ्रमव्युदासात्। अन्यथा भाष्यकारपक्षेऽपि प्रयोजनभेदो न स्यात्। इन्द्रियाणां प्राणवृत्तित्वेऽपि यथोक्तभ्रमनिरासाय विशिष्य तद्विवेकावश्यंभावात्।

यदि च वृत्तिमतः प्राणात्त्वान्तरस्य तद्वृत्तिभ्यस्तत्वान्तरत्वं कैमुतिकन्यायसिद्धमिति तत एव भ्रमनिवृत्तेर्न पृथग्विवेकापेक्षा, तर्हि चक्षुरादिप्राणान्तेभ्य इन्द्रियेभ्यो विवेकग्रहे तत एव तद्भ्रमनिवृत्तेर्न पृथग्विवेकापेक्षेति तुल्यम्।

तथा 'पराञ्चि खानि व्यतृणदि'त्यादिश्रुतौ 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षु'रित्यत्र पूर्वपक्षे आत्मन इन्द्रियापेक्षया प्रत्यग्रूपेण ग्रहणे तत एव प्राणादपि प्रत्यक्त्वेन गृहीतत्वान्न पुनस्तदपेक्षा। सिद्धान्ते तु पृथगेव प्राणादपि प्रत्यक्त्वेन ग्रहणमिति प्रयोजनभेदः।

एव'मात्मानं रथिनं विद्धी'त्यादिश्रुताविन्द्रियादीनामसंयतत्वे संसारः, संयतत्वे तु परमपदप्राप्तिरिति, तत्संयम आवश्यक इति दर्शयितुं रथिरथादिरूपककल्पनया प्रवृत्तायामिन्द्रियग्रहणेन प्राणस्यापि ग्रहणात् तत्संयमोऽपि परमपदप्राप्तिहेतुरुपदिष्टो भवति पूर्वपक्षे, सिद्धान्ते तु नेत्येवमादिरपि प्रयोजनभेदः स्पष्टः।

नापि पूर्वपक्षस्य तुच्छता। इन्द्रशब्दादिन्द्रस्य जीवस्य तादात्म्येन लिङ्गम्, इन्द्रेण तादात्म्येन दृष्टम्, तथा जुष्टं भोगार्थं सेवितम्, तथा सृष्टं अदृष्टोपार्जितम्, इन्द्राय तादात्म्येन दत्तमित्येतेष्वर्थेषु घच्प्रत्ययो भवतीति सूत्रार्थाभ्युपगमेन विषयादिष्वतिप्रसङ्गानवकाशात्। निपातनस्य विशेषणान्तरसूचनार्थत्वेन देहाधिष्ठानत्वे सतीन्द्रदृष्टत्वादिकं प्रवृत्तिनिमित्तमित्यभ्युपगमे बाधकाभावाच्च। अत एव टीकायां भौतिकमिन्द्रलिङ्गमिन्द्रियमिति विशेषणान्तरप्रक्षेपेणैव पूर्वपक्षो दर्शितः।

साङ्कर्यं जातिबाधकमिति मन्वानस्य मते इन्द्रियत्वस्य जातित्वायोगेन तन्निर्वचनापेक्षायां ज्ञानकर्मेन्द्रियसाधारण्याय पाणिन्युक्तव्युत्पत्त्युपजीवनावश्यम्भावे तस्य प्राणे अवर्जनीयत्वाच्च। अस्तु वा मन्दः पूर्वपक्षः। तन्निरासार्थमपि

तत्र तत्र सूत्रप्रणयनस्य दर्शनात् । अत एव ग्रन्थकारेणोक्तं—**स्मृतिदर्शनाच्छ-ङ्कोपपत्तेरिति**

भाष्योक्तोऽपि पूर्वपक्षो मन्द एव । 'अथातो व्रतमीमांसे'ति खण्डे 'प्रजापतिर्ह कर्माणि ससृजे तानि सृष्टान्यन्योन्येनास्पर्धंत, वदिष्याम्येवाहमिति वाग्दध्रे,' इत्युपक्रमे सर्वेषामपि प्रजापतिसृष्टत्वेन परस्परस्पर्धया च स्वतन्त्र-त्वावगमे, 'तानि मृत्युःश्रमो भूत्वे'त्यादिना मध्ये च मृत्युप्राप्तत्वतदभावलक्षण-विरुद्धधर्मसंसर्गावगमे, केवलमुपसंहारस्थेन 'हन्तास्यैव सर्वे रूपमसामे'ति वाक्यमात्रेण वागादीनां प्राणात्मत्वशङ्कानुदयात् ।

यदि च पूर्वोत्तरपर्यालोचनमन्तरा तद्वाक्यमात्रेण पूर्वः पक्षः, तदा विष-या(यदा)दिषु प्रवृत्तिनिमित्तसदसद्भावमपर्यालोच्य प्राणे तत्सत्वेनेन्द्रियत्वपूर्व-पक्षेऽपि न कोऽपि दोष इति तुल्यम् । वर्णितश्च **वृत्तिकारमते** पूर्वपक्षस्य प्राबल्यम् । तस्माद्वृत्तिकारमतं निर्दुष्टमित्येव **टीकाकारग्रन्थकारयो**राशयो P. 649-5 भाति । **वार्तिके हीति** । 'उक्तानुक्तदुरुक्तादिचिन्ता यत्र प्रवर्तते । वार्तिकं तदिति ज्ञेय'मिति तल्लक्षणादिति भावः । न केवलं दुरुक्तचिन्तयैव वार्तिक-त्वावगमः । किन्त्वनुक्तचिन्तयापीत्याशयेनाह—**अत एवेति** । उक्तचिन्ता तु स्पष्टैवेति भावः ।

॥ इति इन्द्रियाधिकरणम् ॥

---

१. अत्राधिकरणे भाष्यकारटीकाकाराभ्यां अर्थभेदो दर्शितः । कल्पतरुकृद्भिः 'न हि वार्तिकस्य श्रृङ्गमस्ति' इत्यादि वदद्भिः टीकापक्षपातिभिः भाष्यार्थे दोषकीर्तनेन टीकार्थः स्थिरीकृतः । 'सूत्रयोजनाक्लेशभिया तुच्छाधिकरणार्थपरिग्रहस्तु वदान्यगृहान्तःप्रवेश-क्लेशभिया तद्द्वारदृष्टलोष्टपरिग्रहतुल्यः' इत्यादि वदद्भिः भाष्यपक्षपातिभिः परिमलकारैः भाष्यार्थः परिपोषितः । 'समीचीनहेतुलाभार्थं पदसामर्थ्यपरित्यागस्तु समीचीनसूक्ष्माङ्गु-लीयकधारणार्थं अङ्गुलीतक्षणेन तुल्यः' इत्यादि वदद्भिः आभोगकारैः टीकार्थ एव पुनरपि स्थिरीकृतः कल्पतरुपक्षपातेन । एवमत्र महतां कोलाहले अस्माभिः भाष्यटीकाकारार्थावु-भावपि सादरं परिगृहीतौ । नान्यतरार्थे आग्रहः कार्यः । सूत्रस्य विश्वतोमुखत्वमलंकारायैव इति च पर्यालोचनीयम् । भगवत्पादाभिमतोऽर्थः विशेषतः परिपोषणीयः । तत्रानादरे च प्रामाणिकानां हृदयं कलुषीभवेदिति सविनयमावेद्यते । विशुद्धविज्ञानस्वरूपान् शुचिहृद-यान् भगवत्पादान् विना कान्या गतिरस्माकम् । इत्यवश्यमालोचनीयमन्तरङ्गै सर्वैरपि । भाष्ये अन्ते 'तत्त्वान्तराणि प्राणाद्वागादीन्द्रियाणि' इति पाठः ।

## ॥ अथ संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥

सू०॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥

सू०॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥

सू०॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

नन्विदमधिकरणमस्मिन् पादे असङ्गतमुत्पत्तिविषयश्रुतिविरोधपरिहारार्थत्वादनयोः पादयोर्मुख्यप्राणस्वरूपादिविचारस्य च प्रासङ्गिकत्वात् । अत्र च जगदुत्पादकविषयश्रुतीनामेव विचारादित्याशंक्य, प्रासङ्गिके समाप्ते पादार्थभूतजगदुत्पत्तेरेव बुद्धिविपरिवृत्त्या तद्बलादुत्पादनाया बुद्धिस्थाया विचारात् प्रसङ्ग एवात्रापि सङ्गतिरित्याशयेनाऽऽह—उत्पाद्यमानेत्यादिना । उत्पादनाविषयास्वपि श्रुतिषु न सर्वत्र विचारः । किन्तु क्वचिदेवेत्याशयेनाऽऽह—तत्रात्रिवृत्कृतेति । P. 650-1

विषयप्रदर्शकं भाष्यमिति । सत्प्रक्रियायामित्यादिपूर्वटीकया विषयप्रदर्शकं भाष्यमुपादाय, तद्गतं विषयवाक्यं व्याचष्ट इत्यर्थः । न सामस्त्येनेति । व्यवहारफलशिरस्कत्वेन न निष्पन्नमित्यर्थः । तेजआदिष्विति । अत्रिवृत्कृतेष्वित्यर्थः । तद्धारणनिमित्त इति । 'जीव प्राणधारण' इति स्मरणादिति भावः ।

ननु प्राणो, न जीवोपाधिः, प्रलये तन्नाशे कृतहानादिप्रसङ्गात् । किन्त्वविद्यैव । तथा च तदुपहिते जीवे सन्निहिते सति कथं स्मरणसन्निधापितत्वोक्तिरित्यत आह—सत्यपीति । तेजोबन्नानामित्यस्य त्रिवृतमित्यतः पूर्वमन्वय इत्याशयेनाऽऽह—तासां मध्य इति । पदार्थतावच्छेदकधर्मपुरस्कारेण पदार्थानामन्वययोग्यताज्ञानमन्वयबोधोपयोगि । तच्च प्रकृतेऽपि सुलभमित्याह—अस्ति तावदिति । सम्मतिश्लोके उत्तरार्धे—अन्विताभिधानस्य व्युत्पत्तौ पदानां अन्विताभिधाने सङ्केतग्रहे । उपलक्षकं नियामकमित्यर्थः । अन्वये सन्निधिः प्रबल इति मन्वानः शङ्कते—नन्विति । आकांक्षायोग्यतयोर्लिङ्गरूपत्वात् प्राबल्यमित्याह—आकांक्षेति । P. 651-3 P. 651-9

P. 651-10 **अरुणादाविति** । 'अरुणया क्रीणाती'ति पदद्वयसमभिव्याहारावगतस्यारुण्यक्रयसम्बन्धस्यैकहायनीरूपद्रव्यपरिच्छेदद्वारकत्वाश्रयणादिति भावः । **आदिपदेन** सप्तदशारत्नित्वादिकं गृह्यते । पदान्तरानर्थक्यमेव लक्षणाहेतुरित्याशयेन परिहरति—(**अत आहेति** ।) **तत्राहेति** । आनर्थक्यमसिद्धमिति शङ्कते—**स्यादेतदिति** । करणत्वञ्चेदभ्युपगम्यते तद्योगतञ्जीवस्य कर्तृत्वमिति परिहरति—**नेत्याहेति** ।

**कर्तृत्वाभावे करणत्वानुपपत्तिरित्यनेन** करणत्वे सति कर्तृत्वमवर्जनीयमित्युक्तम् । तच्चेतनविषयमित्याशयेनाह—**जीवो हीति** । उदाहृते वाक्ये महाभूतविषयनामरूपव्याकरणस्यैव निर्दिश्यमानतया तत्र पदार्थतावच्छेदकधर्मपुरस्कारेणापि न योग्यताज्ञानसम्भव इत्याशयेनाह—**सामान्यत इति** ।
P. 652-4 **योग्यतायां निरस्तायामिति** । आकांक्षामात्रन्तु न सन्निधिबाधनक्षमम् । 'इष्टकाः पक्त्वा भुङ्क्ते' इत्यादावीष्टकानामपि प्रधानभूतभुजिक्रियान्वयापत्तेरिति भावः ।

**स्यादेतदित्यादिटीकायामनुप्रवेशनकर्तृत्वं जीवस्योक्तम्** । तत्र **परिमलकृतः**—जीवेनेति न कर्तरि तृतीया । क्त्वाप्रत्ययेन कर्तुरभिहितत्वेन तदयोगात् । न च क्रियाद्वयकर्त्रैक्यमेव क्त्वाप्रत्ययार्थो नतु तद्गतं कर्तृत्वमपीति न तस्य अभिहितत्वं भवतीति[3] भाष्यवार्तिकयोः पर्युदासपक्षस्यैव आश्रितत्वात् ।

अत एव 'प्रासादे आस्ते' इत्यत्र प्रसीदन्त्यस्मिन् जना इत्यर्थविहितेन घञा प्रसादनक्रियाधिकरणत्वस्या [भिहितत्वेऽपि आसिक्रियाधिकरणत्वस्या] नभिधानात् सप्तमी । एवमिहापि भोक्ष्य इत्यनेन भुजिक्रियाकर्तृत्वस्याभिहितत्वेऽपि

१. कल्पतरौ 'विशेषे बाधकप्रमाणाभावात्' इति शोधनीयम् ।

२. कल्पतरौ 'प्रतिप्रधानान्वययोग्यतायाम्' इत्यत्र 'प्रति' इत्यधिकम् ।

३. अत्र कोशेषु अदृष्टोऽपि [तत्र तृतीया भवितुमर्हतीति शङ्कनीयम् , तथा सतीष्टकाः पक्त्वाऽहं भोक्ष्ये इत्यत्रापि मयेति तृतीयाप्रसङ्गात् । न च भोजनक्रियाकर्तुराख्यातेनाभिधानात् तृतीया न भवतीति वाच्यम् । न ह्यनभिहितसूत्रस्याभिहितकारकशक्त्याश्रये तृतीया न भवतीत्यर्थः । किं त्वनभिहितकारकशक्त्याश्रये भवतीति] । इति कुण्डलितग्रन्थः परिमलानुसारेण योजनीयः अयोजने ग्रन्थानन्वयात् । कोशेषु स त्रुटित इति ज्ञायते ।

पाकक्रियाकर्तृत्वस्यानभिहितत्वात्तृतीया स्यादेव। तस्मात्तत्र क्त्वाप्रत्ययेन कर्तृशक्त्यभिधानमाश्रित्यैव तृतीयाऽभावो वक्तव्य इति प्रकृतेऽपि न कर्तरि तृतीया। किन्तु करणे। तदयमर्थः—सेयं देवता जीवरूपेणानुप्रविश्य तद्भोगार्थं[2] नामरूपे व्याकरवाणीति संकल्पितवतीत्याहुः।

तच्चिन्त्यम्—'अव्ययकृतो भावे भवन्ती'ति स्मरणेन क्त्वाप्रत्ययस्य कर्त्रर्थकत्वासिद्धेः। आख्यातान्तस्थल इव सामानाधिकरण्यव्यवहारापत्तेश्च। 'समानकर्तृकयो'रित्यादिसूत्रेणापि द्वयोः क्रिययोः कर्त्रैक्ये विवक्षिते पूर्वकालवर्तिक्रियावाचिनो धातोः परत्वेन क्त्वाप्रत्ययो भवतीति स्वार्थ एव तद्विधानात्। पक्त्वा भोक्ष्य इत्यादौ च न तृतीया। कर्तुरभिहितत्वात्। अभिहितत्वानभिहितत्वयोश्चैकत्र विरुद्धत्वात्।

न च क्रियाभेदे कर्तृभेदः। मानाभावात्। 'समानकर्तृकयो'रिति सूत्रविरोधात्। 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'त्यादौ कर्त्रैकत्वनिबन्धनशेषशेषिभावभङ्गप्रसङ्गाच्च। 'प्रासाद आस्ते' इत्यादौ निरूपकभेदेनाधिकरणकारकभेदस्य विवक्षितत्वात् सप्तमी। 'पक्त्वा भोक्ष्य' इत्यादौ तु कर्त्रैकत्वविवक्षानियमेन तद्भेदस्य अविवक्षितत्वात् न तृतीया।

नचैवमपि जीवेनेति कर्तरि तृतीयानुपपत्तिः, क्त्वाप्रत्ययस्थले कर्तृभेदविवक्षाऽयोगादिति वाच्यम्। अनुप्रवेशनकर्तुर्व्याकरणे, व्याकरणकर्तुरनुप्रवेशने च कर्तृत्वासम्भवेन प्रकृते कर्तृभेदविवक्षावश्यंभावात्। नहि [व्या]

---

१. 'प्रवेशान्वितायां देवतायां ऐश्वररूपव्यावृत्तिगमकतया जीवेनेत्येतत् इत्थंभूतलक्षणतृतीयान्तमित्येव श्लिष्यते, न कर्तरि तृतीया' इति परिमलानुसारिब्रह्मविद्याभरणे कीर्तनात् परिमलेऽपि 'करणार्थैव सा (तृतीया) इति युक्तम्' इत्येतत् 'इत्थंभावार्थैव सा' इति शोधनीयमिति भाति। अत एव परिमले 'तदयमर्थः' इत्यर्थवर्णनावसरे 'जीवरूपेणानुप्रविश्य' इति इत्थंभावार्थकत्वं वर्णितम्।

२. 'तद्भोगार्थं व्याकरवाणि' इत्यनेन तु, जीवेनेत्यस्य व्याकरवाणीति प्रधानक्रियया संबन्धः प्रदर्शितः। अत एव ब्रह्मविद्याभरणे 'जीवस्य करणत्वं हि नावश्यं प्रयोज्यत्वेनैव समर्थनीयं, अपितु 'अध्ययनेन वसति' इत्यत्रेव उद्देश्यतयाऽपि नामरूपव्याकरणे जीवस्य करणत्वमुपपद्यते। जीवभोगार्थं हि नामरूपसृष्टिः, इत्युक्तम्। अतः इत्थंभावार्थकत्वे अनुप्रविश्येत्यनेन, करणार्थकत्वे व्याकरवाणीत्यनेन च जीवेनेत्यस्य संबन्ध इति युज्यते।

करणकर्तुः परमात्मनो जीवेन करणेनाप्यनुप्रवेशः सम्भवति। अयोग्यत्वात्। योग्यस्य सतः कर्तुः क्रियोद्देशप्रवृत्तकृतिव्याप्यस्यैव करणत्वात्। जीवभावेनानुप्रवेशे तु जीवस्यैव कर्तृत्वं न परमात्मनः। तदेतदभिप्रेत्य टीकायामुक्तम्—अनुप्रवेशनकर्तुर्जीवस्येति। P. 652-8

वाङ्मनसयोराहङ्कारिकत्वे, श्रुतिविरोध इत्याशंक्य, लक्ष्यलक्षकयोरैक्यमाश्रित्य सा श्रुतिः प्रवृत्ता। वाचस्तैजसत्वश्रुतिस्तु तेजस्साम्यमाश्रित्येति वक्तुमन्नभागतेत्यादिटीका। तां व्याचष्टे—योऽणिष्ठ इत्यादिना। एवं वाचोऽपीति टीकां व्याचष्टे—वाच इति। तत्तेजोमयीत्यत्र तदित्यव्ययं तस्मादर्थे। वाङ्मनसे इत्येवं वक्तव्यत्वे नियामकं दर्शयन्नवतारयति—तेजसस्सूक्ष्मो भाग इति। तेजःकार्यं मज्जा। अप्कार्यं लोहितमिति विवेकः। तच्चेति। अर्धाधिक्यं त्रिवृत्करणप्रदर्शनेन दर्शितमित्यर्थः। P. 653-1 P. 654-1

॥ इति संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥

इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डभट्टमहोपाध्यायतनूभवेन
श्रीमन्नारयणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशगृह्यमाणेन श्रीलक्ष्मीनृसिंहचरणारविन्दचञ्चरीकेण श्रीलक्ष्मीनृसिंहेन
विरचितायां कल्पवृक्षप्रदीपिकायां
आभोगाख्यायां प्रथमाध्यायस्य
चतुर्थः पादः॥

श्रीः

# ॥ तृतीयस्याध्यायस्य प्रथमः पादः ॥

## ॥ अथ तदन्तरप्रतिपत्त्यधिकरणम् ॥

सर्वश्रुत्यविरोधेन सम्यङ्न्यायाविरोधतः ।
सर्ववेदान्तवेद्यं यत्तद्ब्रह्मास्म्यहमद्वयम् ॥

सू०॥ तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

सू०॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

सू०॥ प्राणगतेश्च ॥ ३ ॥

सू०॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

सू०॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

सू०॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

सू०॥ भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति ॥ ७ ॥

भाष्ये अथेदानीमित्यादिना तृतीयाध्यायप्रतिपाद्यं निर्दिष्टम्। तत्र बहूनामर्थानां प्रतिपाद्यत्वे, अध्यायभेदः कुतो न भवेदित्याशङ्क्य, भाष्याभिमतं प्रतिपाद्यैक्यं स्वयं दर्शयति—अविरोधेनेति। द्वितीयाध्यायसमर्थितेन विरोधा- P. 655-5 भावेन ब्रह्म वेदान्तवेद्यमित्येतद् दृढीकृतम्। तत्प्राप्तिहेतुभूतं तत्वमस्यादिवाक्योत्थं ज्ञानं वैराग्याद्युपायसहितमस्मिन् अध्याये चिन्त्यत इत्यर्थः ।

---

१. अत्र कल्पतरौ उपक्रमे श्लोकद्वयं दृश्यते, तत् परिमले आभोगे च न व्याख्यातम्। तत्र द्वितीयं पद्यं 'इदममलात्मनः' इति पठित्वा लिखितम्। अतः पूर्वपद्यं कल्पतरुप्रशंसारूपं कल्पतरुकारशिष्यस्येति ज्ञायते। तत्र 'व्यासाश्रम' इति कल्पतरुकारस्यैव नामान्तरमिति ज्ञायते।

तत्र **प्रथमे पादे** वैराग्यम्, **द्वितीये पादे** अन्त्याधिकरणे परमेश्वरप्रसादः, **तृतीये** उपासनया चित्तैकाग्र्यम्, **चतुर्थे** कर्मतत्संन्यासादिकं चोपायजातं निरूप्यते। **द्वितीयपादे न स्थानतोपीत्यतः** प्राक् त्वंपदार्थशोधनेन, ततः परं तत्पदार्थशोधनेन च प्रत्यगभिन्नब्रह्मज्ञानम्, **चतुर्थपादाद्याधिकरणे** तस्य ब्रह्मप्राप्तिसाधनत्वं च निरूप्यत इति विवेकः।

P. 655-6 **स्मृतिन्यायश्रुतीनां परस्परविरोधपरिहारेणेति** भ्रमं वारयति-**स्मृतिन्यायेति**। पादाद्याधिकरणस्य पूर्वपादान्त्याधिकरणेन सङ्गत्यनपेक्षणादवान्तरसङ्गतिशब्देन पादसङ्गतिरुच्यत इत्याह—**पादसङ्गतिरिति**। जीवोपकरणप्राणादिनिरूपणोपजीवनेन सोपकरणस्यैव गतिरिति प्रसाधनात् पूर्वपादेनास्य पादस्य सङ्गतिरुक्तेति भावः। **नरकादीत्यादिशब्देन** कुत्सितयोन्यादिगमनमुच्यते।

जीवो भूतोपादानरहितः, भूतोपादानवत्त्वेन श्रवणरहितत्वात्, यत्र यस्याP. 656-3 श्रवणं तत्र तदभाव इति व्याप्तेर्व्यभिचारमाशङ्कते—**ननु भूतेति**। शब्दैकगम्यत्वे सति अश्रूयमाणत्वं हेतुरिति परिहारतात्पर्यं व्यतिरेकमुखेनाऽऽह—(अनेक) **नानाप्रमाणेति**। आहुतित्वोपचारे निमित्तं दर्शयितुमिहहीत्यादिप्रविभज्येत्यन्ता टीका। तत्र **कार्यारम्भणशब्दार्थमाह—शरीरोत्पत्त्यवस्थामिति**।

**अग्निहोत्रापूर्वेति** विशेषणोक्तमाहुतिजन्यत्वमुपचारनिमित्तं दर्शयति—**आहुतिजामिति। अनाहुतिमिति** कश्चित्पाठः[1]। स यद्यपि न स्वरसः, प्रकृते तत्कीर्तनवैफल्यात्। टीकाव्याख्यानत्वाभावाच्च। तथापि **नञिवयुक्त-न्यायात्**[2]**दाहुतिसदृशीमाहुतिपरिणामरूपामित्येवं** कथञ्चिद्योज्यः।

अग्नित्वोपचारे निमित्तं दर्शयितुं **पञ्चस्वित्यादिटीकाशेषः**[3]। तेनाहुत्याधारत्वं निमित्तं दर्शितमित्याह—**तदाधारेष्विति**। **टीकायां—तयोराहुत्योरधिकरणमग्निः अन्ये च निर्दिश्यन्ते** इत्यन्वयः। ननु वागादीनां प्राणानामाध्यात्मिकत्वात् कथमाधिदैविकत्वोक्तिरित्यत आह—**तान्निर्दि-**

---

१. कल्पतरौ पूर्ववाक्ये 'अनाहुतिषु आहुतित्वस्य' इति शोधनीयम्।

२. 'नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः' इति न्यायः।

३. टीकायां 'प्रविभज्य' इत्यनन्तरं 'पञ्चसु' इति त्रुटितम्।

**शतीति** । 'अग्निर्वाग्भूत्वा मुखं प्राविश'दित्यादिश्रुत्या वागग्न्यादीनामभेदावग- P. 656-10
मादग्न्यादीनां वागादिभावेनाध्यात्मिकप्राणत्वं स्वरूपेण चाधिदैविकप्राणत्व-
मिति भावः ।

नन्वेतच्छ्रुतिबलाज्जीवस्य श्रद्धादिपरिष्वङ्गसिद्धावपि कथं भूतपरिष्वङ्ग-
सिद्धिरिति शङ्कते—**यद्यपीति** । 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो
भवन्ती'ति 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति च प्रश्नप्रति-
वचनानुरोधेन श्रद्धादिशब्दैः अपामेव निर्देशात् भूतपरिष्वङ्गसिद्धिरित्याशयेन
परिहरति—**तथापीति** । **अग्निजन्यत्वादित्यर्थ इति** । **यद्यपि** प्रदेशान्तर-
स्थानामपि लोम्नामस्ति योषाग्निजन्यत्वं, तथापि समिदनुविद्धाग्निप्रदेशजन्यत्वं
तेषामेवेति भावः ।

'इति तु पञ्चम्या'मिति वाक्यं व्याख्यातुमेवं **श्रद्धेति टीका** । तत्रापा-
मप्समवायित्वकीर्तनं व्यर्थमित्यतः पदान्तरमध्याहरति—**गर्भस्येति शेष** P. 657-3
**इति** । **तस्मादद्भिरिति** भाष्यं योजयति **टीकायां—यतः पञ्चम्यामिति** ।
**तथापीत्यादिटीकोक्तार्थापेक्षया तथाहीत्यादिटीकायामर्थान्तराकथनात्** पौन-
रुक्त्यमाशंक्य, द्वयोरपि **टीकयोरर्थभेदं** प्रकटयति—**श्रद्धां जुह्वतीत्यत्रेति** ।

नन्वेवमपि श्रद्धावाक्ये अप्सम्परिष्वक्तस्य सोमराजशब्देन निर्देशः
धूमादिवाक्ये च शुद्धस्यैव जीवस्य तेन शब्देन निर्देश इति कथं श्रुतिसाम्यमि-
त्याशङ्कां निराकर्तुं **तथा हीत्यादिटीकया**—श्रुतिसारूप्यबलादेव तत्राप्यप्परि-
ष्वक्त एव जीवः **एष** इत्यनेन निर्दिश्यत इत्यर्थः । श्रद्धाहुतेः प्रथमत्वात्कथं
**द्वितीयस्यामिति टीके**त्यत आह—**अन्त्याहुतीति** ।      P. 657-8

यजमानशरीरस्य वैतानिकेऽग्नावाहुतिरन्त्याहुतिः, सा यद्यपि छान्दोग्ये
बृहदारण्यके च षष्ठी समाम्नाता, तथापि शरीरगतानां भूतसूक्ष्माणां द्युलोकगमन-
मन्त्याहुत्यनन्तरभावीति पाठक्रमापेक्षया आर्थक्रमस्य प्रबलत्वात् तस्याः प्रथमत्व-
मिति, तदपेक्षया श्रद्धाहुतेः द्वितीयत्वमुपपद्यत इति भावः ।

---

१. कल्पतरौ 'अर्चिर्जन्यत्वादित्यर्थः' इति पाठः दृश्यते । तत्र यद्यपीत्यादिः
शंकासमाधानयोरनवकाशः । 'योनिरर्चिः' इति श्रुत्या अतिप्रसंगानवकाशात् ।

२. अत्र टीकायां 'वह्नन' इत्येतत् 'हवन' इति शोधनीयम् ।

चन्द्रभूयं गत इत्यस्य चन्द्रलोकं गत इत्येतद्विवरणमिति भ्रमं P. 658-3 वारयन्योजयति—चन्द्रलोकमिति। टीकायाम्—नन्वित्यादिशङ्का न युक्ता, सोमराजश्रुतिसाम्यादप्शब्दस्य तत्सम्परिष्वक्तजीवपर्यन्तताया उक्तत्वादित्यत आह—वाक्य[द्वय]स्थेति। शरीरवाचकानां शब्दानां शरीरिण्यपि प्रयोगदर्शनेन श्रद्धावाक्ये प्रश्नप्रतिवचनगताऽप्छब्दानुरोधेन केवलानामपां सोमशरीरभावः सोमराजशब्देनोच्यते, धूमादिवाक्ये तु 'ते धूममभिसंभवन्ती'ति जीवानामेव प्रकृतत्वात् सोमराजशब्देन शरीरी निर्दिश्यत इत्यर्थभेदात् श्रुतिसाम्यमसिद्धमित्याह श्रद्धावाक्य इति।

प्रश्नप्रतिवचनयोः अपां कैवल्यस्याश्रुतत्वात् असत्यप्छब्दविरोधे, स्वरसावगतश्रुतिसाम्यबलादर्थैक्यमेव युक्तमिति परिहरतीत्याह—उत्तरमिति। संशयवीजं दर्शयन् वाक्यं योजयति—अप्छब्दादिति। इन्द्रियपरिष्वङ्गे विवादाभावात सूक्ष्मशरीरशब्दस्तदेकदेशपर इत्याशयेनाऽऽह—सूक्ष्मशरीर-P. 658-13 मिति। न द्वितीय इत्याहेति। देहान्तराभिमानपूर्वदेहत्यागहेतुभूतानां देहेन्द्रियान्तःकरणानामुपाधीनां परिच्छिन्नत्वादिति भावः।

भावनाशब्देन देहोत्पत्त्यनुकूलस्य कर्तृव्यापारस्य कर्मजन्यादृष्टरूपस्य विवक्षितत्वात्तस्य च प्राग्जन्मकृतं कर्मारभ्य[1] भाविदेहोत्पत्तिपर्यन्तमनुस्यूतत्वाद्दीर्घीभाव उपपद्यत इत्याह—प्राक्कृतेति। शब्दादीति। शब्दस्पर्शरूपरसगन्धज्ञानानि पञ्च, सुखादिज्ञानमेकमिति षट् प्रवृत्तिविज्ञानानीत्यर्थः ॥ १ ॥

वातादयः साम्यावस्थाः सन्तः शरीरं दधतीत्यन्वयः। अप्रयोजकत्वशङ्कां निराकर्तुं विपक्षे बाधकतर्क(दर्शन)मप्याह—तोयाद्यारब्धत्वे चेति। त्र्यणुकादेरपीति। त्र्यणुकं नाप्रत्यक्षसमवायिकारणकं, प्रत्यक्षत्वादित्यप्यनुमानावतारः स्यादित्यर्थः। तथा च तदुक्तानुमानतर्काणामाभाससाधारण्यात्, P. 659-10 अप्रयोजकत्वमिति भावः। तदुक्ततर्के इष्टप्रसङ्गतां चाह—शीतस्पर्शादिश्चेति। तोयभूतोद्भवे शीतस्पर्शः, तेजोभूतोद्भवे उष्णस्पर्शः, इति क्रमेणेत्यर्थः।

---

१. कल्पतरौ 'प्राक्कृतकर्मारभ्य' इति पाठश्शोधनीयः।

२. कल्पतरौ 'यत्तु मन्येत' इत्येतत् 'यदि मन्येत' इति शोधनीयम्।

**उच्छिद्येत चेति।** परस्परपरिहारेण वर्तमानजातियोगिनां गवाश्वादीनां P. 660.4 परस्परविलक्षणत्वलक्षणो विरोध **उच्छिद्येतेत्यर्थः। प्रवृत्त्युपपत्तेरिति।** अन्यथा, परस्परपरिहारयोर्मूर्तत्वमूर्तत्वोपाध्योः समावेशदर्शनादाप्तवाक्यादिना गगनादौ नित्यत्वनिश्चये, गगनं नित्यत्वान्नानित्यमित्यनुमानपूर्वकं व्यवहारो न स्यादिति भावः। **परस्परपरिहारित्वादिति।** तादृशजातित्वादित्यर्थः।

यद्यपि परस्परपरिहारित्वं घटत्वतेजस्त्वादौ व्यभिचारि तयोः स्वर्णघटे समावेशात्। तत्र घटत्वाभावे च घट इति व्यवहारानुपपत्तिः। तत्र व्यवहारस्य गौणत्वे च शरीरेऽपि पार्थिवत्वादिव्यवहारस्य गौणत्वसम्भवान्न काचिदपि जातिरिति न सांकर्यम्। यदि च घट(त्वपट)त्वादीनां तेजस्त्वादिव्याप्यानान्नानात्वान्न सांकर्यम्, तदा पृथिवीत्वादीनामपि नानात्वान्न सांकर्यमिति तुल्यम्। अनुगतप्रतीत्यनिर्वाहात् जातिकल्पनावैफल्यं च। तस्मादनुगतप्रतीत्यादिसिद्धे घटत्वादौ तस्य क्वचित् समावेशोऽपि न दोष इत्येव वक्तव्यमिति तत्र व्यभिचार एव।

तथापि स्पष्टत्वादिदं दूषणमुपेक्ष्य दूषणान्तरमाह—**तत्रेत्यादिना।** P. 660.9 **अविशेषेण यत्किञ्चिदिति पक्षे।** यदि पक्षदृष्टान्तयोर्मध्ये यत्किञ्चिदिति विवक्षितम्, उभयथापि गुणत्वरूपत्वयोर्व्यभिचार इत्युपपादयति—**गुणत्वरूपत्वयोरिति।** ननु श्रुतावात्मन एव पञ्चभूतमयत्वमुच्यते न कायस्येत्यत आह—**अत्र चेति। वाक्यशेषादिति।** ततश्च पञ्चभूतमयत्वमात्मन उच्यमानमाध्यात्मिकमाधिभौतिकं वेति संशये आध्यात्मिकचक्षुर्मयत्वादिप्रतिपादकवाक्यशेषान्निर्णय इति भावः।

**एतज्जनकत्वे सतीति।** पक्षीकृतशरीरजनकत्वसमानाधिकरणानि यान्यनुदकत्वातेजस्त्वावायुत्वानाकाशत्वानि तेषां प्रत्येकमत्यन्ताभाववद्यद्भूतं तत्समवायिकारणकमित्यर्थः। अत्र प्रत्येकमिति विवक्षितत्वादनुदकत्वाद्यभावचतुष्टयवत उदकादिचतूरूपस्य कस्यचित् भूतस्याप्रसिद्धत्वप्रयुक्तो बाधः परिहृतः। दृष्टान्ते विशेषणाभावप्रयुक्तं, पक्षे विशेष्याभावप्रयुक्तं च विशिष्टाभावमुपपादयति—**यद्यपीत्यादिना** ॥ २ ॥ P. 660.14

---

१. कल्पतरौ 'अनुदकत्वादिमज्जन्यं न भवति' इति, 'तद्विशिष्टानुदकत्वादिमत्त्वरहितत्वात्' इति च शोधनीयम्।

प्राणानां गतिमभ्युपेत्य निराश्रयाणामेव गमनमस्त्विति पूर्वं शंकितम्। तच्च दृष्टविरोधेन परिहृतम्। इदानीं प्राणानां गतिरेव नास्ति। न चात्रापि दृष्टविरोधः। प्राणाश्रये देहे गत्युपलम्भेऽपि ततोऽन्यत्र गत्यदर्शनात्। न च देशान्तरगते देहे प्राणानुपलम्भप्रसङ्गः। सर्वत्र व्यापकतया वर्तमानस्य वायोः शरीरान्तःप्रवेशेन प्राणभावोपपत्तेरित्याशयेन शङ्कते—**भवत्विति**।

P. 661-3

प्राणानां गत्यनभ्युपगमे दृष्टविरोध एवेति मनसि निधाय, जीवदेहगमने प्राणानां गतिं साधयति—**न चेदिति**। अपवरकमध्यमध्यासीने देवदत्ते तत्रैव देशान्तरं प्राप्नुवति सति पूर्वप्रदेशेन प्राणानामवियोगे तत्रत्यतृणचलनादिप्राणकार्यप्रसङ्गः। प्रदेशान्तरस्य च निवातत्वेन प्राणभावापत्तियोग्यवाय्वभावात् तत्र शरीरे प्राणानुपलम्भप्रसङ्गश्चेत्यर्थः। **तथा चेति** चशब्दस्य न स्याच्चेत्यन्वयः।

P. 661-6

आश्रयो भूतेन्द्रियमय एवेत्यत्र युक्तिमाह—**जागरित इति**। दर्शनं त्वगाद्याश्रयत्वेऽपि तुल्यमिति शङ्कते—**तर्हीति**। त्वगादीनां प्राणेन समानाश्रयत्वमेव, न तु प्राणाश्रयत्वमिति परिहारतात्पर्यमाह—**तेषामपीति** ॥ ३ ॥

**श्रुतौ सत्यामिति**। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'ति श्रुतौ सत्यामित्यर्थः। **ननु सन्दिग्धमिति**। अत एव 'विशये प्रायदर्शना'दिति पूर्वतन्त्रसूत्रे विशयग्रहणमिति भावः। **भक्तिर्गुणयोग इति**। वागादीनामग्न्यादिष्वप्ययार्थगमने यो गुणः अग्न्यादिकृतोपकारनिवृत्तिः, तद्योगो जीवेन सह गमन इत्यर्थः ॥ ३ ॥

**प्रथमेऽश्रवणादिति सूत्रस्य ता एव ह्युपपत्तेरिति परिहारभागं व्याचष्ट इत्यन्वयः**। ननु टीकायां—**पुरुषवचस्त्वप्रकारे पृष्टे** इत्ययुक्तं, अपां पञ्चमाहुतिसम्बन्धस्याज्ञातत्वेन तदंशेऽपि प्रश्नावश्यम्भावादित्यत आह—**पञ्चम्यामाहुतावपामिति**। **वाक्यस्येति**। सविशेषणश्रवणे वाक्यस्य विशेषण एव तात्पर्यं, विशिष्टतात्पर्ये गौरवादिति भावः।

P. 662-6

ननु विशेष्यस्याप्राप्तत्वे गौरवमपि सोढव्यमेवेत्यत आह—**आपस्त्विति**। 'ते वा एते आहुती हुते' इत्यादिशास्त्रान्तरादापः पञ्चमाहुतिसम्बन्धित्वेन—

ज्ञाता इत्यर्थः। नन्वेवमपि, **प्रथमायामाहुतावित्यादिटीका न युक्ता**। पञ्चम्यामाहुतावपां पुरुषवचस्त्वप्रकारे पृष्टेऽपि प्रथमाद्याहुतिषु श्रद्धादेरनपां होतव्यत्वाभिधाने विरोधाभावादित्यत आह—**तत्र प्रथमादीति**। **आहुतिविशेषं** P. 662-7 होमद्रव्यविशेषम्। **सति चैवमिति**। अजिज्ञासितत्वलिङ्गानुरोधादिति भावः॥

**आहुत्योऽपूर्वरूपा आप इति**। सिद्धान्ते कर्मणां देवताप्रीतिद्वारैव फलजनकतया कर्मजन्यापूर्वानभ्युपगमादाहुतिरूपाणामपामेव सूक्ष्मावस्था शरीरिणमाश्रिता सत्यपूर्वमित्यपूर्वरूपा आप इत्युक्तम्। ताश्च **यद्यपि** प्राणोत्क्रमणसमय एवोत्क्रामन्ति। आश्रयमन्तरेण प्राणानां गमनायोगात्। तथापि भूतेन्द्रियसम्परिष्वक्तस्य जीवस्य शरीरादुत्क्रान्तस्यापि नान्त्याहुतिमन्तरा परलोकगमनमस्ति। उपकोसलविद्याया'मथ यदुचैवास्मि'न्नित्यादिवाक्यव्याख्यानावसरे शव्यकर्माकरणे परलोकगमनाभावस्य **भाष्यकारै**रेवोक्तत्वात्। ततश्च तदनन्तरमेव जीवं परिवेष्ट्य परलोकं नयन्तीति तात्पर्येण भाष्यं प्रवृत्तमिति दर्शयितुं **जीवं परिवेष्टय परलोकं नयन्ती**त्यंशोऽनूदितः।

**आहुतिगत्यागतिसाम्याद्दृष्टान्तत्वमिति**। एतेन षट्प्रश्नीनिरूपणे P. 663-10 आहुतिरूपाणां भूतसूक्ष्माणामेव गमनं श्रूयते। न तत्संपरिष्वक्तस्य जीवस्येति कथमयं दृष्टान्त इत्यपि शंका निरस्ता। भूतभूक्ष्मगत्यागतिसाम्येन दृष्टान्तत्वसम्भवात्।

**प्रौढ्या विद्यैक्यमिति**। अत्र **परिमलकृतः**—वास्तवमेव विद्यैकत्वं द्युपृथिवीपुरुषयोषिदग्निकल्पनाप्रत्यभिज्ञानात्, योषिदग्निपर्याये पुरुषाकारपरिणतिप्रत्यभिज्ञानाच्च। न चैकत्रापामन्यत्राहुत्योश्च श्रवणात् भेदः शङ्कनीयः।

---

१. कल्पतरौ पूर्ववाक्ये 'श्रद्धायामप्स्वोपचारापेक्षितं' इति पाठः दृश्यते 'श्रद्धाया अप्सूपचारापेक्षितं' इति तु युक्तः पाठः। यतः, अप्सु श्रद्धाशब्दः उपचरितः। न तु श्रद्धायामप्त्वमुपचरितम्।

२. छान्दोग्योपनिषद्भाष्ये इति ज्ञेयम्।

३. अत्र कल्पतरौ पूर्वं 'जीवस्य गतिं न गमयितुं' इति, 'धूमार्चिरङ्गारविस्फुलिङ्गाः' इति च शोधनीयम्। उपरि 'षट्प्रश्नीति' इत्यस्य स्थाने 'अग्निहोत्रे इति' इति शोधनीयम्। अग्निहोत्रे इत्यस्य वाजसनेयकगताग्निहोत्रप्रकरण इत्यर्थः।

४. अनेन, परिमले 'अथवाऽऽहुतिश्रवणयोः' इत्येतत् 'अबाहुतिश्रवणयोः' इति शोधनीयमिति ज्ञायते।

तयोरेकार्थपर्यवसानस्य सम्प्रतिपन्नत्वात्। न च धूमादिश्रवणाश्रवणाभ्यां भेदः। अश्रुतानामुपसंहारसम्भवात्। न चैवमन्तरिक्षपर्जन्याभ्योरपि यथायोगमुपसंहारे षट्सङ्ख्यापत्त्या 'य एतानेवं पञ्चाग्नीन्वेदे'ति संख्याश्रवणविरोधः। तस्यावान्तरसंख्यानुवादित्वात्। अन्यथा 'तस्याग्निरेवाग्नि'रिति बृहदारण्यकोक्तषष्ठाग्नेरप्युपसंहारानापत्तेः।

नचैकस्यामपि वाजसनेयिशाखायां द्विराम्नानाद्विद्याभेदः। शाण्डिल्यविद्याया इव विशेषविधानार्थं तदुपपत्तेः। बहुतरार्थप्रत्यभिज्ञानेऽपि किञ्चिद्वैलक्षण्यादिमात्रेण विद्याभेदे क्वचिदपि विद्यैकत्वासिद्धेश्च। न च 'तर्पयत' इत्युक्त्या देवतातृप्त्यर्थमाहुत्योरुत्क्रमणं सङ्कीर्त्यत इति शंकनीयम्। अन्तरिक्षस्य दिवस्तल्लोकवासिनां वा अग्निहोत्राहुतिदेवतात्वाभावेन तेषां तर्पणीयत्वायोगात्। तस्मा'त्तं देवा भक्षयन्ती'ति श्रुत्युक्तप्रकारेणाजानदेवानां कर्मदेवा भृत्या इत्यग्निहोत्राहुती द्वे अपि भृत्यानयनेन तत्तल्लोकवर्तिन आजानदेवान् प्रीणयत इत्येवमभिप्रायेण तर्पयत इति श्रवणमिति योज्यम्। ततश्च विद्याभेदवादिनां परितोषार्थं प्रौढयेत्युक्तमित्याहुः।

तच्चिन्त्यम्। षट्प्रश्नीवाक्ये अग्निहोत्रकर्माङ्गभूता आहुतिविद्या, पञ्चाग्निवाक्ये त्वर्चिरादिमार्गप्राप्तिफला अग्निविद्येति विद्ययोर्भेदात्। न चाहुतिविद्यायाः कर्माङ्गत्वे प्रमाणाभावः। अग्निहोत्रकर्मान्तर्गताहुत्यवबद्धत्वेन सामर्थ्यादेव तत्सिद्धेः। वाक्यप्रकरणाभ्यामपि तत्सिद्धेश्च। तथा च **भाष्यम्—'तथा चाग्निहोत्रे षट्प्रश्नी(प्रतिवचन)निर्वचनरूपेण वाक्यशेषेणे'**ति। आहुतिविद्यात्वं च स्ववाक्यस्वरसादेवागम्यते। प्रश्नप्रतिवचनपर्यालोचनायामुत्क्रान्तिगतिप्रतिष्ठातृप्तिपुनरावृत्तिलोकंप्रत्युत्थायित्वगुणविशिष्टतया प्रकृतयोरग्निहोत्राहुत्योरेव वेद्यत्वावगमात्।

परन्तु प्रतिष्ठादिगुणप्रदर्शनपरे वाक्ये अन्तरिक्षादेराहवनीयाद्यात्मताकरणमपि गुणान्तरं प्रदर्शितम्। नचैतावता अग्निविद्यात्वं भवति। 'असौ वाव लोको गौतमाग्निरि'त्यादाविव स्वातन्त्र्येणान्तरिक्षादीनामग्नित्वानाम्नानात्, 'अन्तरिक्षमाहवनीयं कुर्वाते' इत्यादिना आहुतिगतस्यैव गुणस्य कीर्तनाच्च। अन्तरिक्षादीनामग्नित्वेन पृथगुपासनकल्पने च नास्ति प्रमाणम्। न हि पञ्चाग्निवाक्य-

स्थले 'तद्य इत्थं विदुः' ते य एवमेतद्विदुः 'य एतानेवं पञ्चाग्नीन्वेदे'तिवत् प्रकृते अग्नीनां प्रत्येकं वेदनश्रवणमस्ति। तस्मादियमग्निविद्यैव न भवति।

तदेतदभिप्रेत्य ग्रन्थे **षट्प्रश्नीनिर्णयः** इति, **पञ्चाग्निविद्यायामिति** च भेदप्रकटनेनैव **विद्याभेदादित्युक्तम्**। अप्रत्यभिज्ञानादपि विद्याभेद इति हेत्वन्तरं दर्शयितुं **षट्प्रश्न्यामित्युत्तरग्रन्थः**। न च धूमादीनामुपसंहारेण प्रत्यभिज्ञा। विद्यैकत्वे धूमाद्युपसंहारेण प्रत्यभिज्ञा, प्रत्यभिज्ञायाश्च विद्यैकत्वमिति परस्पराश्रयप्रसङ्गात्।

न च द्युपृथिवीपुरुषयोषिदग्निकल्पनायां योषिदग्निप्रर्याये पुरुषाकारपरिणतौ च स्वत एव प्रत्यभिज्ञानमस्तीति वाच्यम्। पञ्चाग्निविद्यायां द्युप्रभृतीनामग्नित्वं चिन्तनीयत्वेनोच्यते, आहुतिविद्यायामाहुत्योरेवान्तरिक्षाद्याहवनीयकर्तृत्वं चिन्त्यत्वेनोच्यत इत्यर्थभेदात्, 'योषिदग्नेर्यः पुत्रो जायत' इत्येव श्रवणेन पुरुषाकारपरिणतिप्रत्यभिज्ञानं दूरापास्तमेव। किञ्च पूर्वोत्तरसन्दर्भपर्यालोचनमन्तरा कतिपयार्थप्रत्यभिज्ञानमात्रेण विद्यैकत्वे, 'पृथिवी हिंकारोऽन्तरिक्षं प्रस्ताव' इत्यादावपि पृथिव्यादीनामन्यात्मत्वकल्पनाप्रत्यभिज्ञानेन तस्या अपि पञ्चाग्निविद्यैक्यं स्यात्। 'लोकेषु पञ्चविधं सामोपासीते'त्यत्रापि हिंकारतादात्म्येन पृथिव्याः प्रस्तावादीनाञ्च 'पृथिवी हिंकार' इत्यादिविद्यागतानां प्रत्यभिज्ञानात्तयोरप्यैक्यापत्तेश्च।

एवमुपकोसलविद्यायां प्राजापत्यविद्यायाञ्च 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतत् ब्रह्मे'ति श्रवणसाम्यात्तयोरपि विद्ययोरेकत्वापत्तिः। छान्दोग्यबृहदारण्यकगताग्निविद्ययोस्तु बहुतरार्थप्रत्यभिज्ञानात् पूर्वोत्तरसन्दर्भैकरूप्याच्च युक्तमेकत्वम्। नत्विह तथा बहुतरार्थप्रत्यभिज्ञानं अस्ति। धूमार्चिरङ्गार[विस्फुलिङ्ग]श्रद्धा(देवहोत्र)सोमराजमरणवैतानाग्निपर्जन्यादीनामश्रवणेन अन्तरिक्षाहवनीयवायुमरीचितृप्त्यादीनामपूर्वाणां श्रवणेन च तद्विच्छेदात्। तस्मात्सुष्ठूक्तं **प्रौढ्या विद्यैक्यमुपेत्येति**।

---

१. 'लोकेषु पञ्चविधं सामोपासीत' इति छान्दोग्योपनिषदि द्वितीयाध्यायद्वितीयखण्डे उक्ता विद्या 'पृथिवी हिङ्कारः' इति द्वितीयाध्याये सप्तदशखण्डे उक्ता विद्या। तयोरप्यैक्यं स्यादित्यर्थः'।

नन्वग्निहोत्रे विद्यैकत्वाभ्युपगमेन धूमादीनामुपसंहारादग्निसमिदादिषट्-
P. 664-1 पदार्थसम्भवेऽपि तेषां प्रश्नानुपलम्भात् कथं टीकेत्यत आह—अग्निहोत्र इति। प्रश्नस्य प्रतिवचनशेषतया यावानर्थः प्रतिवचने दृश्यते, तावतः प्रश्नविषयत्व-कल्पनस्य सर्वसम्प्रतिपन्नत्वादिति भावः। पर्जन्याग्न्यश्रवणकृतं वैषम्यं परिहरति—पर्जन्याग्नेश्चेति। 'ते दिवं तर्पयतस्ते तत आवर्तेते' इत्यादिना आहुत्योः स्वर्गात्पृथिवीप्राप्त्यभिधानेन पर्जन्यस्य तत्संबन्धावश्यंभावे श्रुत्यन्तरसिद्धाग्नित्व-स्यावर्जनीयत्वादिति भावः।

ननु षड्भिरुत्क्रान्त्यादिभिः, षड्भिरग्न्यादिभिश्च, विषयैः प्रश्नानां द्वाद-शत्वात् कथं षट्प्रश्नीति भाष्यमित्याशङ्कां निराकर्तुं तेषां षण्णामिति टीका। तत्र के षट् गृह्यन्त इत्याशङ्क्य, प्रधानभूतोत्क्रान्त्यादिविषयप्रश्नाना-मेवाग्निसमिदादिपर्यन्तत्वेन तत्परिग्रहे तेषामपि परिग्रहसिद्धेरुत्क्रान्त्यादीनामेव
P. 664-3 तेषामित्यनेन ग्रहणमित्याशयेनाह—यः समाहार इति। उत्क्रान्त्यादीनां यः समाहारः स षट्प्रश्नीत्येवं टीकार्थ इत्यर्थः।

व्यावर्तकत्वे सम्भवति, किमित्यवान्तरसंख्यानुवादित्वं कल्प्यत इत्या-शङ्क्य, तदसम्भवमाह—साम्यलिङ्गादिति। प्रचयेन तत्तदग्नीनां मेलनेन शिष्टा सिद्धा, अत एव प्राप्ता या संख्या तदनुवादीत्यर्थः। उपात्तां श्रुतिं व्याख्यातुं क्रियासमभिहारेणेत्यादिटीका। तत्र केषुचित्कोशेषु यथा-
P. 665-1 शब्दस्य पाठमदृष्ट्वा व्याचष्टे—यथेति शेष इति। सर्वविभक्त्यर्थेष्विति। 'क्रियासमभिहारे लोट् लोटो हि स्वौ' इति सूत्रेण सर्वलकारापवादतया लोटो विधानादित्यर्थः।

---

१. कल्पतरौ 'एवं च विस्फुलिङ्गादिषु' इति पाठः। कल्पतरावनवसरत्वेन दूषितः वाचस्पत्युपहासः प्रकटार्थविवरणकृतः। प्रकटार्थविवरणे हि 'वाचस्पतिस्त्वेतदज्ञात्वा अग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गविषयाः षट् प्रश्नाः इति व्याचख्यौ' इत्युक्तम्।

२. भामत्यां 'यथा सोमस्य तथा' इति पाठः। 'यथा' इति शब्दमात्रस्य शेष इति कल्पतरावुक्तम्। अतः टीकायां 'सोमस्य' इति पदं प्रमादात् त्रुटितम्। अथवा 'सोमस्य यथा' इति पदद्वयस्य शेष इति वक्तव्यम्। 'सर्वविभक्त्यर्थेषु' इत्येतत् 'सर्वविभक्तिषु' इति शोधनीयमिति भाति।

अनया टीकया 'सोमं राजान'मित्यादिश्रुतिः कथं योजितेत्यत आह—**यथा सोममिति**। तथा च पौनःपुन्येनाऽऽप्यायनापक्षयौ सोमरसस्य सम्पादयन्त ऋत्विजो यथा तं भक्षयन्ति तथा कर्मिणः पुरुषान् देवा भक्षयन्तीति टीकार्थ इति भावः। **सोममयान् लोकानित्यर्थ** इति टीकायाः पूर्वटीकानन्वयमाशङ्क्य, व्याख्यानान्तरार्थत्वेन व्याचष्टे—**एतांस्तत्रेत्यादिना**। P. 665-2

**युक्ततरश्चायमर्थ** इति। अत्र **परिमलकृतः**—युक्ततरत्वोक्तेरभिप्रायं न विद्मः। **यद्ययमभिप्रायः**—'एष सोमो राजे'त्यत्र चन्द्रस्यैव परामर्शः। 'आदित्याच्चन्द्रमस'मिति पूर्ववाक्ये एकवचनान्तेन पदेन चन्द्रस्यैव निर्दिष्टत्वात्। 'तद्देवानामन्न'मित्युत्तरवाक्ये च तस्यैव प्रसिद्धदेवान्नत्वमुच्यते। 'प्रथमां पिबते वह्नि'रित्यादिशास्त्रात्। 'तं देवा भक्षयन्ती'ति च कर्मदेवान्नत्वमपि तस्यैवेति दर्शयति। 'ते धूममभिसम्भवन्ती'ति बहुवचनान्तशब्दनिर्दिष्टानां कर्मदेवानामेव देवशब्देन परामर्शादिति।

**नैष साधुः। पञ्चाग्निविद्यावाक्ये** 'सोमो राजा सम्भवति' 'सोमं राजानं जुह्वति' इति च श्रुतयोः सम्भवहोतव्यत्वयोः प्रसिद्धचन्द्रे असम्भवेन तत्र सोमराजशब्दस्य कर्मिपरत्वे श्रुतिसामान्येन स्थानसामान्येन च धूमादिवाक्येऽपि कर्मिपरत्वावश्यम्भावात्। अन्यथा 'अश्रुतत्वा'दिति **सूत्रभाष्ययोस्त**दुपजीवनेनैव भूतपरिष्वक्तजीवरंहणसाधनायोगात्। किञ्च **छान्दोग्ये** सोमराजशब्दस्य प्राप्यचन्द्रपरत्वेऽपि **बृहदारण्यके** 'एतांस्तत्र भक्षयन्ती'तिवाक्यगतस्यैतच्छब्दस्य कथं प्रसिद्धचन्द्रपरत्वम्?

यदि च द्वयोरपि पितृयाणमार्गप्रतिपादकत्वेन तुल्यत्वादेकार्थपर्यवसानार्थमेतानित्यस्य चन्द्रपरत्वं, तर्हि बृहदारण्यके 'ते चन्द्रं प्राप्यान्नं भवन्ती'ति पूर्ववाक्ये कर्मिणामेव प्राधान्येन प्रकृततया तद्बलेनैतानित्यस्य कर्मिपरत्वे तदैकार्थ्याय छन्दोगश्रुतिगतस्य 'तं देवा भक्षयन्ती'ति तच्छब्दस्यापि कर्मिपरत्वे स्थिते, तन्निर्वाहार्थं पञ्चाग्निविद्यागतसोमराजशब्दैकरूप्यनिर्वाहार्थं च 'एष सोमो राजे'त्यस्यैव कर्मिपरत्वं युक्तम्। चन्द्रवाचकस्याप्यमृतमयदेहत्वरूपचन्द्रसादृश्य-

१. अत्र कल्पतरौ 'कर्मभिः प्राप्यस्य' इति पाठान्तरम्। 'भोक्तृत्वनिर्देशस्य' इति शोधनीयम्।

विधानार्थं कर्मिषु गौणप्रयोगो युक्तः। बहुष्वेकवचनमपि 'ग्रहं संमार्ष्टी'तिवदुपपद्यते। तस्माद्युक्ततरत्वोक्तेरभिप्रायोऽन्वेषणीय इत्याहुः।

तच्चिन्त्यम्। उत्तरसन्दर्भेणैव युक्ततरत्वस्य स्पष्टीकृतत्वात्। तथा हि— कर्मिणां चन्द्रप्राप्त्यनन्तरं भोगार्थं तदीयकर्मारब्धो यो देहः स चन्द्रमयत्वेन तदभिन्नत्वा'देष सोमो राजे'ति चन्द्रत्वेन निर्दिश्यते। पूर्ववाक्ये चन्द्रस्यैव प्राधान्येन प्रकृतत्वाद्योग्यत्वाच्च, तदंशाभिप्रायेण च 'तद्देवानामन्न'मिति, 'तं देवा भक्षयन्ती'ति च कर्मिणः प्रति चन्द्रस्यान्नत्वं तद्भोक्तृत्वं च कर्मिणामुच्यते। तथा च **टीकायां—सोममयलोकभोक्तृत्वमेवोक्तम्**। न त्वाहत्य सोमभोक्तृत्वम्। **पञ्चाग्निविद्यायां** सोमराजे सम्भवहोतव्यतोक्तिरपि तदंशाभिप्रायैव। **तथाचोत्तराधिकरणे भाष्यम्—तेषां यदम्मयं शरीरं चन्द्रमस्युपभोगायारब्धं तदुपभोगक्षयदर्शनेन शोकाग्निसम्पर्कात् प्रविलीयत** इत्यादि।

नचैव'मश्रुतत्वा'दिति **सूत्रभाष्यविरोधः**। तदुभयोपमर्देनैवेदं व्याख्यानान्तरमिति **ग्रन्थ** एवोक्तत्वेन हेत्वन्तरेणैव सिद्धान्तनिर्वाहात्। धूमादिवाक्ये इष्टादिकारिणां प्रतीतेस्तदधिष्ठितस्यैव सोममयदेहस्य सोमराजशब्देनोक्ततया तच्छ्रुतिसामान्येन पञ्चाग्निविद्यागतसोमराजशब्देनापि कर्मिजीवाधिष्ठितस्यैव परामर्शो युक्त इत्येवमपि **तत्सूत्रभाष्ययोरुपपत्तेश्च**।

एवञ्च छन्दोगश्रुतौ सोममयदेहस्यैवान्नत्वं तद्भोक्तृत्वमेव च कर्मिणामुच्यत इति तदैकरूप्याय बृहदारण्यकेऽपि 'ते चन्द्रं प्राप्यान्नं भवन्ती'ति पूर्ववाक्ये कर्मिणां चन्द्रप्राप्त्यनन्तरमन्नभावश्चन्द्रमयदेहभावस्तत्तादात्म्यापत्तिरेव निर्दिश्यते। अनन्तरवाक्ये च सोममयदेहभावं प्राप्तानां कर्मिणां विशेषणतया उपात्ता ये देहास्त एव तद्भोग्यतया एतानित्यनेन निर्दिश्यन्त इति युक्तमाश्रयितुम्। न च वैपरीत्यं, श्रुत्यन्तरविरोधेन कर्मिणामन्नभावायोगात्, तदेतदुक्तं **विभूतिमनुभूयेति भोक्तृत्वनिर्देशः साक्षादन्नत्वे तदनुपपत्तिरिति**, ततश्च **सूत्रकारादिमते अन्नशब्दस्य** भाक्तत्वं **टीकाकारमते एतानित्यस्य** विशेषणमात्रपरत्वेन स्वारस्यहानिः। एवं तुल्यत्वेऽपि, श्रुत्यन्तरानुगुण्यमस्मिन् मते अतिशय इति सुष्ठूक्तम्—**युक्ततरश्चायमर्थ इति**।

P. 666.1 'वेत्थ यथा पञ्चम्यां' इति श्रुतिं व्याचष्टे—**पञ्चम्यामिति**। 'तमुत्क्रामन्त'मिति श्रुतौ तच्छब्दं व्याचष्टे—**तमात्मानमिति**। 'यत्रास्य मृतस्य

पुरुषस्याग्निं वागप्येती'त्यादिश्रुतिं व्याचष्टे—**यत्र काल इति**। 'आपो हास्मै P. 666-2 श्रद्धां सन्नमन्त' इति श्रुतिं व्याचष्टे—**अस्मा इति**। 'अथ य इमे ग्राम' इत्यादिश्रुतिं व्याचष्टे—**अथोत्तरमार्गेति**।

अस्यामेव श्रुता 'यथैतमेवाध्वानं पुनरावर्तन्त' इत्येतदाकाशमात्राभिप्राये-णेति सूचयितुं 'आकाशाद्वायु'मिति श्रुतिं प्रसङ्गाद्व्याचष्टे—**आकाशदेवतातो वायुमिति**। 'असौ स्वर्गाय लोकाय स्वाहे'ति श्रुतिं व्याचष्टे—**असाविति**। 'एतदेवामृतं दृष्ट्वा तृप्यन्ती'ति श्रुतिं व्याचष्टे—**एतदेवेति**। 'अथ ये शतं पितृणा'मित्यादिश्रुतिं व्याचष्टे—**अथेति**। P. 666-7

॥ इति तदन्तरप्रतिपत्त्यधिकरणम् ॥

---

## ॥ अथ कृतात्ययाधिकरणम् ॥

सू०॥ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

सू०॥ चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

सू०॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

सू०॥ सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

चरणादाचारादवरोहो न कर्मण इति टीकासूचितां सङ्गतिमाह—**कर्मेति**। **ऐकभविकनयादिति**। सर्वेषामपि कर्मणां प्रायणेनाभिव्यक्तानामेक- P. 666-11 भवप्रयोजकत्वमिति न्यायादित्यर्थः। **सम्यग्ज्ञानस्य नैष्फल्यमिति**। न च स्वकृतकर्मविलयेऽपि पित्रादिकृतकर्मणा आचारेण वा पुनरपि जन्मसम्भवान्न ज्ञान-नैष्फल्यमिति वाच्यम्। संन्यासिन आचारनियमाभावेन पित्रापि संस्पर्शाभावेन चोपनीतमात्रस्य संन्यासे तावन्मात्रेणैव मुक्तिसिद्धौ सम्यग्ज्ञाने नैष्फल्यसम्भ-वादिति भावः।

**श्रुतिमुदाहृत्येति**। 'यत्किञ्चेह करोत्यय'मिति श्रुतिं निर्दिश्य P. 667-1 'प्राप्यान्तं कर्मणस्तस्ये'ति पूर्ववाक्येन योजनां दर्शयन् व्याचष्ट इत्यर्थः।

---

१. कल्पतरौ 'युक्तिमप्याह' इति शोध्यम्।

P. 667-2 कर्मणः फलनाश्यत्वे नास्ति प्रमाणमिति शङ्कते—**ननु फलमिति**। लौकिकस्य कृष्यादिकर्मणः फलविनाश्यत्वदर्शनेन वैदिकस्यापि तथात्वं निश्चीयत इत्याह—**लोक इति**। **चरणादिति** सौत्रपदोच्चारणस्य प्रयोजनमाह—**चरणादिति चेदिति**। नन्वाचारादवरोहणे तस्यापि कर्मविशेषत्वात् कथं पूर्वाधिकरणसिद्धान्ताक्षेपपूर्वकः पूर्वपक्ष इत्यत आह—**आचारे चेति**।

अनुशयशब्दस्य कर्माचारयोर्वृत्तिं दर्शयति—**कर्तारमिति**[1]। 'विपाको जात्यायुर्भोगा' इति **योगसूत्रोक्तं** कर्मफलं दर्शयितुं **तद्विपाकानित्यादि**-**टीका**। तत्र जातिशब्दार्थमाह—**जातिर्जन्मेति**। **अथवेत्यादि**टीकाप्रदर्शितं दृष्टशब्दव्याख्यानमुद्भाव्यमिति भ्रमं व्यावर्तयति—**दृष्टश्चायमिति**। ननु प्रतिप्राणि दृष्टस्य देहादिवैचित्र्यस्य पित्रादिकर्मवैचित्र्यादप्युपपत्तेस्तदनुरोधेन कथमनुशयसिद्धिरित्याशंक्य, **कपूयचरणा** इत्यादिबहुव्रीहिप्रतिपाद्ये मत्वर्थे मुख्यसाक्षात्सम्बन्धरूपे सम्भवति न परम्परासम्बन्धरूपस्स आश्रयितुं युक्त इति सिद्धयत्य-
P. 668-1 नुशय इति वक्तुम**यमभिसन्धिरित्यादि**टीका।

तत्र प्रथमवाक्येन, दृष्टमुपभोगवैचित्र्यं 'जायस्व म्रियस्वेत्येतत्तृतीयं स्थान'मिति श्रुत्युक्ततृतीयस्थानादवतीर्णानामस्तु, न तावता स्वर्गादवतीर्णानामनुशयसिद्धिरित्याशंका निरस्तेति दर्शयितुं शङ्कामाह—**उपभोगवैचित्र्यमिति**[2]। स्वर्गिणामपि विचित्रशरीरप्राप्तिकथनेन तद्विषयभोगवैचित्र्यात् तेषामपि सानुशयत्वसिद्धिरिति परिहरति—**अत आहेति**।

**निमित्तत्वमिति**। निमित्तकोटिप्रविष्टत्वमित्यर्थः। यावच्छ्रुत्यपेक्षितविषयसमर्पणे रमणीयचरणश्रुतेः कथं सामर्थ्यमित्यत आह—**रमणीयचरणनिमित्तक इति**। **कर्ममात्रं वेति**। सकलपुरुषगतं वेत्यर्थः। सामर्थ्यबला-
P. 668 11 द्व्यत्यासेन **टीकयोरन्वय** इत्याशयेनाह—**प्रथमाभाव इत्यादिना**[3]। **प्रथमाभावे**। प्रथमकल्पस्याभावे निरसन इत्यर्थः। **उच्चावचरूप इति** भाष्यसूचितं

---

१. कल्पतरौ 'कर्तारमनुशेतेऽनुगच्छतीत्यर्थादित्याशयः' इति पाठः।

२. कल्पतरौ उपरिवाक्ये 'स्वर्गे दत्तफलेष्टापूर्ते'ति पाठः।

३. टीकायां—चन्द्रमण्डलोपभोगेनानपनयनात्। इति शोध्यम्।

युक्त्यन्तरं दर्शयति—**टीकायां—अपि चेति**। **पूर्वदर्शितेति**। यथाश्रुत- P. 668-11
भाष्यदर्शितेत्यर्थः।

**स्वर्गार्थस्येति** भाष्ये स्वर्गग्रहणं फलोपलक्षणार्थमित्याशयेनाह—
**टीकायां—अनुशयोऽत्रेति**। अत्र मत इत्यर्थः। द्वितीयकोटित्वेन प्रदर्शनादे-
कदेशिमतेऽपि मुख्यसिद्धान्त एव सिद्धान्तकोटिरिति भ्रमं वारयति—**सिद्धान्तयु-
क्तेति**। कृत्स्नस्य ज्योतिष्टोमकर्मणः स्वर्गाजनकत्वे तच्छ्रुतिविरोध इति
शङ्कते—**नन्विति**[1]। सहकारिविरहान्न स्वर्गजनकत्वमिति परिहरति—**अत
आहेति**। तर्हि कर्मशेषो निष्फल एव? तथा च श्रुतिविरोधः। नेत्याह—
**भुवीति**। स्वर्गार्थकर्मणः आर्थिकतया धूमादिमार्गगतफलजनकत्ववदवरोहमार्गे-
ऽपि पुनश्शरीरपरिग्रहपर्यन्तं फलजनकत्वमपि श्रुत्यनुमतमिति न तद्विरोध इति
भावः।

कालिदासस्मृत्यभिप्रायकथनेन तदनुगुणं पूर्वार्धं रचयन्नेव तामुदाहरति-
**वेदैर्गीतामित्यादिना**। **वेदैर्गीतां स्वर्गिणां भोगप्राप्तिं सुकृतलेशैर्भूमि-** P 669-6
**भागे** कथयतीत्यन्वयः[2]। स्वर्गफलकस्य कर्मणो मनुष्यादिशरीरपरिग्रहानन्तरमपि
फलजनकत्वकल्पनं निष्प्रमाणमित्यस्वरसादाह—**अथवेति**। **लौकिकत्वविशेषणं**
लौकिकन्यायमूलकत्वमप्यस्तीति दर्शयितुं, नतु वेदमूलकत्वं निराकर्तुमित्याशये-
नाह—**शक्यते चेति**। श्रुतिविरोधहेतुदर्शनादेरपवादकस्याभावादिति भावः।

**विरुध्यत इति**। युक्तं स्वर्गफलकस्य तदारोहद्वारा शरीरारम्भकत्वेन
नान्तरीयकतया मध्येऽपि यत्किञ्चित्सुखदुःखजनकत्वम्, न त्ववरोहद्वारा भूमिष्ठ-
शरीरारम्भकत्वमपि, भूमिगतभोगजनककर्मण एव तदारम्भकत्वात्। तथा च
पातञ्जलं सूत्रं 'विपाको जात्यायुर्भोगा' इति। तथा च स्वर्गफलकस्य
कर्मणोऽवरोहे भुवि च फलजनकत्वकल्पने श्रुतिविरोध एवेत्यर्थः। **उपमिमान**[3] P 670-3
**इति**। उत्प्रेक्षाया अपि उपमानोपमेयभावमूलकत्वादुपमिमान इत्युक्तिः।

---

१. 'ननूपभुक्तकर्मशेषे' इति कल्पतरुपाठः।

२. इदं पद्यं मेघसन्देशे पूर्वभागे त्रिंशत्तमम् विशालानगरवर्णनपरम्।

३. कल्पतरौ उपरि 'पूर्वदेहावसानकालेनेत्यर्थः' इति पाठः।

P. 671-1 उपभोगपर्यायदर्शनादित्युत्तरटीकानुरोधेनाह—**इदानीमित्यर्थ इति**। ननु तस्मिन् शरीरे फलजननाभिमुख्यमभिव्यक्तिः। सा क्रमेण फलजननेऽपि न विरुध्यत इति शङ्कते—**ननु युगपदिति**। **ददतामिति**। लोडन्तं बहुवचनान्तम्। अभिव्यक्तस्य फलविलम्बे कारणाभावाद्यदा फलजननं तदानीमेवाभिव्यक्तिः कल्पनीया। न ततः पूर्वमिति परिहरति—**अत आहेति**।

प्रायणस्य स्वभोक्तव्यफलकसकलकर्माभिव्यञ्जकत्वे पित्रादिगतानामपि तादृशानां कर्मणामभिव्यक्त्यवश्यंभावेन तेषामपि भोगेन क्षपितत्वान्न तद्बलादपि शरीरारम्भोपपत्तिरिति परिहरति—**नेत्याहेति**[1]। **टीकायामावर्तेरन्निति छेदः**। आचारजन्यापूर्वरूपानुशयसद्भावात् निरनुशया इत्ययुक्तमित्यत आह—**अग्निहोत्रादीति**। तस्यैवानुशयत्वादिति भावः। भाष्योदाहृतस्मृतावाचारस्य कर्माङ्गत्वं नावगम्यते। तत्र वेदशब्दस्यैव श्रवणादित्यतः तत्तात्पर्यमाह—**टीकायां—आचारहीनमित्यादिना**।

भाष्योक्तमाचारस्य पुरुषार्थत्वं न प्रधानकर्मत्वेन, प्रमाणाभावात्। P. 671-3 किन्तु संस्कारकर्मत्वेनेति दर्शयतीत्याह—**आचारस्येति**। **वाक्येन पुरुषधर्मत्वप्रतीतेरिति**। **जञ्जभ्यमान** इत्यत्र शानच्प्रत्ययेन कर्तुरभिधानात् **तीर्थे स्नातीत्यत्र** आख्याताभिहितसंख्यानुरोधेन कर्तुराक्षेपाच्चेत्यर्थः। ननु न कल्पनीयं फलं 'तीर्थमेव सजातानां भवति' 'प्राणापानावेवात्मन्धत्त' इति च श्रुतेरित्यत आह—**वाक्यशेषेति**। **गुणकर्म तु स्यादिति**। पुरुषसंस्कारतयेति भावः। **अपूर्वसाधनांशे हीति**। 'व्रीहीन् प्रोक्षती'त्यादौ तथैव दर्शनादिति भावः। स्नानादिवदाचारस्य प्रकरणाम्नानाभावाद्वाक्येन क्रतुयुक्तपुरुषधर्मत्वमात्रे दृष्टान्ततेत्याशयेनाह—**एवं च यथेति**। **आचारवाचिना सतेति** विशेषणस्य प्रयोजनमाह—**अजहल्लक्षणामिति**।

**दृष्टान्तासङ्गानादिति**। **करणचरणयोः**, कर्मत्वाचारत्वयोरदृष्टत्वतदवान्तरजातित्वेन **गोबलीवर्दन्याय**विषयतया आगन्तुकविशेषवत्तद्रहितविषय**ब्राह्मणपरिव्राजकन्याया**विषयत्वेन वैषम्यादिति भावः। तर्हि कथं भाष्यमित्याशंक्य P. 672-9 गौणत्वेन निर्वाह इत्याशयमाह—**परापरेति**।

---

१. अत्र कल्पतरौ 'नेत्याह किञ्चेति' इति पाठः।

'तेषां यदा तत्पर्यवैती'ति श्रुतिं व्याचष्टे—तेषां कर्मिणामिति। P. 672-10
'प्राप्यान्तं कर्मणस्तस्ये'त्यादिश्रुतिं गृहीत्वा व्याचष्टे—प्राप्येतीतीत्यादिना।
'तद्य इह रमणीयचरणा' इत्यादिश्रुतिं व्याचष्टे—तत्त्रेति। 'वर्णा आश्रमाश्चे'ति स्मृतिं व्याचष्टे—वर्णा इति। 'कदाचित्सुकृतं कर्मे'ति स्मृतिं सुकृतशब्देन योगवृत्त्या दुष्कृतमप्युच्यत इति दर्शयन्नेव योजयति—संसार इति।

॥ इति कृतात्ययाधिकरणम् ॥

---

## ॥ अथ अनिष्टादिकार्यधिकरणम् ॥

सू०॥ अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

सू०॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्॥१३॥

सू०॥ स्मरन्ति च ॥ १४ ॥

सू०॥ अपि च सप्त ॥ १५ ॥

सू०॥ तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

सू०॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

सू०॥ न तृतीये तथोपलब्धेः ॥ १८ ॥

सू०॥ स्मर्यतेऽपि च लोके ॥ १९ ॥

सू०॥ दर्शनाच्च ॥ २० ॥

सू०॥ तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

भाष्योक्तां व्यवहिताधिकरणसङ्गतिं दर्शयति—इष्टादीति। स्वयम- P. 673-1
नन्तराधिकरणेन सङ्गतिं दर्शयन् पूर्वपक्षटीकामवतारयति—यत्किञ्चिदिति।
गूढाभिसन्धिः शङ्कते—कुत इति। तत्रैवोत्तरमाह—अत आहेति। शङ्कापरिहारयोरभिसन्ध्युद्घाटना—नन्वित्यादिना। द्युशब्दस्य श्रद्धालक्षकत्वे, फलितं टीकावाक्यस्वरूपं दर्शयति—श्रद्धा सोमेत्यर्थ इति। साधारणेति।
इष्टादिकारितदितरसाधारणेत्यर्थः। यथोपात्तमनुष्येष्विति। पुरुषशब्दस्य P. 673-7

मनुष्येष्वेव प्रसिद्धेरिति भावः। वाक्यान्तरानुरोधेन सामर्थ्यानुरोधेन च
P. 673-8 पुरुषशब्दः शरीरमात्रपर इति परिहरति—**इति भ्रममपोहतीति।** **ज्ञानिभिः** उपासकैः।

तृतीयस्थानस्य श्रुत्या मार्गत्वाप्रतीतावपि सामर्थ्यात् तत्प्रतीतिरिति शङ्कते—**ननु वेत्थेति। प्रतिवचनमिति।** 'जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते' इति श्रुतेरिति भावः। ततः किमित्यत आह—**अस्मिन्निति। निबिडः स्यादिति।** इष्टानिष्टकारिणां सर्वकर्मिणामेकमार्गत्वे चन्द्रलोको निबिडः स्यात्। ततश्चासम्पूरणानुपपत्तिरिति भावः। सामर्थ्यमसिद्धमनिष्टादिकारिणां चन्द्रलोकं प्रति गमनेऽपि तत्रानवस्थानादसम्पूरणोपपत्तेरिति परिहाराभिप्रायमाह—**असम्पूरणेन हीति।**

'अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ती'ति श्रुत्यर्थं दर्शयन् तस्याः श्रुतेर्मार्गद्वयभ्रष्टविषयं तृतीयं स्थानमित्येतदर्थ-
P. 674-7 सूचकत्वाभावं दर्शयति—**एतयोरित्यादिना।** **स्थानशब्दापेक्षया** प्रथमश्रुतत्वात् **तृतीयशब्दस्य** तदनुरोधेनैव **स्थानशब्दो** नेय इति सिद्धान्ताभिप्रायमाह—**तृतीयं स्थानमित्यत्रेति। न्यायसामान्यादिति।** गन्तव्यलोकासम्पूरणे मार्गासंपूरणस्यार्थसिद्धत्वादिति भावः। **आचक्षीत तृतीयं स्थानमभिवदन्।** तृतीयस्थानशब्द इत्यर्थः। **नहीत्यादिटीकां** विपक्षे बाधकप्रदर्शनपरतया योजयन्नवतारयति—**यदि पितृयाणेनेति।** 'अथैतयो'रित्यादिना मार्गद्वयभ्रष्टानामेव तथा निर्देशादित्यर्थः।

P. 675-7 **इत्याशंकायामिति।** सुकृतिनामिव दुष्कृतिनामपि चन्द्रमण्डलारोहे भोगसाम्यं स्यात्। तच्चायुक्तमित्याशंकायामित्यर्थः। **संयमने त्विति सूत्रे** आरोहावरोहग्रहणमुपसंहारार्थमिति मतद्वयेऽपि तुल्यं, अनुभवानन्तरमारोहाप्रसक्तेः। योग्यतया तु प्रत्यवरोहमात्रस्यान्वयः। तस्य च समभिव्याहारबलात् संयमनापादानकत्वं शीघ्रं गम्यते। तदनुरोधेन **तुशब्देनापि** चन्द्रापादानकत्वमेव वार्यते। ननु भोगसाम्यं, तद्वैषम्यस्य **सूत्रे** अश्रुतत्वात्। **संयमन** इति

१. कल्पतरौ 'कीटादिप्राप्तिः मार्गद्वयाद्दुस्थितानाम्'मिति पाठः।

२. अत्र कल्पतरौ पूर्वं 'यदुक्तं पञ्चम्यामाहुतावापः' इति पाठः।

स्थानविशेषकीर्तनबलेन कथञ्चिदेव गम्यमानत्वात्। पूर्वपक्षसूत्रत्वे, अवरोहस्य संयमनापादानकत्वायोगेन चन्द्रमण्डलापादानकत्वाध्याहारापत्तेश्चेत्यर्थः।

'न साम्परायः प्रतिभाति बाल'मित्यादिश्रुतिं गृहीत्वा व्याचष्टे—**न सांपराय इत्यादिना। ईयत इति।** तथा च 'इण्गता'वित्यस्य धातोर्यङन्तस्याय इति रूपमिति भावः। 'वैवस्वतं सङ्गमनं जनाना'मिति श्रुतिं, 'यमं राजानं हविषा दुवस्यत' इति द्वितीयपादेन सह व्याचष्टे—**वैवस्वतमिति।** P. 676-2

'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्ज'मिति श्रुतौ जीवजमित्येतत्पदं व्याचष्टे—**जीवजं जरायुजमिति।** नन्वण्डजादेरपि जीवजत्वाविशेषे श्रुतौ जरायुजस्यैव जीवजत्वेन व्यपदेशो को हेतुरित्यत आह—**अण्डजं हीति।** अण्डजादेरजीवतोऽपि जननात् न तथा व्यपदेश इति भावः। P. 676-6

॥ इति अनिष्टादिकार्यधिकरणम् ॥

---

## ॥ अथ साभाव्याधिकरणम् ॥

### सू०॥ तत्साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

**तदाहेति।** तदेतत् सूचयन्नाहेत्यर्थः। **न तु भवतिश्रुतेरिति।** यद्यपि **वायुधूमादिशब्दानां** तत्सदृशे जीवे गौणीत्यपि सुवचम्। तथापि प्रथमश्रुतवाय्वादिशब्दमुख्यत्वानुरोधेन चरमश्रुतस्य भवतेरेव सदृशभवने लक्षणा युक्तेति तथोक्तम्। तथा च टीकायां वक्ष्यति—**तद्भावस्तत्सादृश्येनौपचारिको व्याख्येय इति।** P. 677-2

**वाक्यशेषान्निर्णयेनेति। आकाशं वायुमिति** च श्रुतं कर्मत्वं तादात्म्येनानुप्रवेशे, भेदेन प्राप्तौ च सम्भवतीति सन्दिग्धोपक्रमस्य वाक्यशेषान्निर्णय इत्यर्थः। **सादृश्यावलम्बनत्व इति।** भवतिश्रुतेः स्वमुख्यार्थतादात्म्यसादृश्यावलम्बनेन सदृशभवनपरत्व इत्यर्थः। P. 677-3

तद्वैज्ग्न्यादिपदलक्षितपैङ्गल्यादिगुणयोगेन लक्षितलक्षणयैव माणवकादिप्रतीतिसम्भवात् किं गौण्येत्यत आह—**लक्षणायान्त्विति। न तु गुणयुक्तेति।** P. 677-3

---

१. कल्पतरौ 'भवतिश्रुतेर्हि' इति शोधनीयम्।

तथा च, यत्र माणवके पैङ्गल्यादिगुणयोगं सामर्थ्यादेव ज्ञास्यतीति मनसि निधाय गौणमात्रपरत्वेन शब्दः प्रयुक्तः, तत्र लक्षणया अनिर्वाहात् गौणी वृत्तिरावश्यिकीति भावः ।

सादृश्ये गौण्यपेक्षया संयोगे लक्षणा ज्यायसीति शङ्कते—**टीकायाम्**—

P. 678·5 **नन्वाकाशभावेनेति** । प्रागसत एव हि कीर्तनं न्याय्यं, आकाशसंयोगश्च प्रागप्यस्ति । सर्वत्राकाशस्यैकरूपत्वेन प्रदेशभेदेन तत्संयोगभेदे मानाभावादिति परिहरति **टीकायां—अत आहेति** । 'तस्मिन् यावत्सम्पातमुषित्वा अथैतमेवाध्वान'मित्यादिश्रुतिं व्याचष्टे—**चन्द्रलोक इत्यादिना** ।

P. 678 5 **आकाशसदृशा इति** । सूक्ष्मतापत्तिस्सादृश्यम् । एवमुत्तरत्रापि तत्तत्स्वभावानुवृत्तिः तत्तत्सादृश्यं बोध्यम् । **अनुशयिनोऽपीति** । तत्र लग्ना जीवा अपीत्यर्थः । **गमनकाले यो धूम इति** । धूमान्तरकल्पने मानाभावादिति भावः। वर्षतीत्युक्त्या पृथिवीप्राप्तिरपि विवक्षितेत्याशयेनाऽऽह—**वर्षधाराभिरिति** ।

॥ इति साभाव्याधिकरणम् ॥

---

## ॥ अथ नातिचिराधिकरणम् ॥

### सू० ॥ नातिचिरेण विशेषात् ॥ २३ ॥

नियमकारिणः शास्त्रस्याभावादिति भाष्योक्तो हेतुरसिद्धः, अन्यथा-

P. 678-9 नुपपद्यमानायाः दुर्निष्प्रपतरश्रुतेरेव तत्र प्रमाणत्वादिति शङ्कते—**स्यादेतदिति** । **चिरावस्थानेन पूर्वपक्ष इति** । अनियतेनापि चिरावस्थानेन कथं पूर्वपक्ष इत्यर्थः। **दुश्शब्दो हीति** । दुरित्युपसर्गो हि दुःखशब्दैकदेशतया तदेकदेशिनं दुःखशब्दं लक्षयन् दुःखमुपस्थापयति । न तु विलम्बम्, दुश्शब्दस्य तेन साकं

P. 679-1 सम्बन्धाभावेन कथञ्चिदेव तत्प्रतीतौ व्यवधानादित्यर्थः । **एतदेवेति** । **मन्यत इति** शब्दोक्तमाभिमानिकत्वमित्यर्थः ।

**अनुशयिनामिति** । न च सामान्यतोदृष्टमात्रेण पूर्वपक्षो मन्द इति किं तदर्थमधिकरणेनेति वाच्यम् । दुर्निष्प्रपतरश्रुतेः व्रीह्यादिस्थानात् विलम्बेन

निर्गमनप्रतिपादकत्वेऽपि नाकाशादिस्थानादविलम्बेन निर्गमनं सिध्यति । अर्थद्वयप्रतिपादकत्वे वाक्यस्य भेदापत्तेः । तथा च निस्सपत्नतया सामान्यतोदृष्टेनापि प्रवृत्तः पूर्वपक्षो दृढ इति तन्निरासार्थमधिकरणमावश्यकमिति भावः ।

**प्रागुक्तश्रुतार्थापत्त्येति । दुर्निष्प्रपतरश्रुत्या** विलम्बेन निर्गमनं प्रतिपादयन्त्या किमपेक्षया विलम्बेनेत्याकांक्षायां प्रकृतानामाकाशादिस्थानानामवधितया अन्वयात् तदपेक्षया अस्माद्व्रीह्यादिस्थानात् विलम्बेन निर्गमनमित्येवंपरया व्रीह्यादिस्थानापेक्षया आकाशादिस्थानादचिरेण निर्गमनमित्यस्यार्थस्य सामर्थ्यबलेनैव प्रतिपादिततया तद्बाधार्थमधिकरणारम्भ इत्यर्थः । P. 679-2

॥ इति नातिचिराधिकरणम् ॥

---

## ॥ अथ अन्याधिष्ठिताधिकरणम् ॥

**सू०॥ अन्याधिष्ठितेषु पूर्ववदभिलापात् ॥ २४ ॥**

**सू०॥ अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥**

**सू०॥ रेतस्सिग्योगोऽथ ॥ २६ ॥**

**सू०॥ योनेः शरीरम् ॥ २७ ॥**

**'जायन्त' इति श्रुतेरिति ।** अनयोश्च[पूर्वपक्ष]सिद्धान्तकोट्युपस्थापकत्वमनुपदमेव स्पष्टीकरिष्यत इति भावः[1] । **पुनरुक्तिमिति ।** अवरोहश्रुतौ कर्मिणामन्यात्मत्वप्रतिपादकः शब्दो गौण इत्यस्यैवार्थस्य तत्साभाव्यापत्त्यधिकरणप्रतिपाद्यत्वादिति भावः । नन्वाकाशवायुधूमादिसम्पर्क इत्येव वक्तुं शक्ये, आकाशसारूप्यमिति पृथक् ग्रहणे को हेतुरित्यत आह—**सर्वगतेति ।** गौणत्वप्रयोजिकायाः अनुपपत्तेरत्राभावात् मुख्यत्वमेवास्त्विति शङ्कासमाधानार्थमिदमधिकरणमिति टीकाशयमाह—**अन्यस्येति** । ननु अनुपपत्त्यभावोऽसिद्धः, व्यापकाभावे तद्व्याप्यानुपपत्तेरिति शङ्कते—**अस्मिन् प्रकरण इति ।** 'इष्टापूर्ते P. 680-1 P. 681-2

---

१. कल्पतरौ 'संशयः। भवतिश्रुतेः' इति पाठः ।

२. कल्पतरौ 'अन्यस्यान्यभावानुपपत्ते'रिति पाठः ।

दत्तमित्युपासत' इति कर्मजत्वश्रुतेः सत्त्वात् तद्व्यावृत्तिरसिद्धेति परिहरति—

P. 681-3 **हेत्वसिद्धिमाहेति** ।

ननु तच्छरीरानुगुणकर्मश्रुतिव्यावृत्तिर्हेतुः । सा च नासिद्धेति शङ्कते—**नन्विष्टादेरिति** । इष्टादिग्रहणेन तदन्तर्गतनिषिद्धकर्मणामपि गृहीतत्वादसिद्धिस्तदवस्थेति परिहारतात्पर्यमाह—**विहितत्वेऽपीति** । पूर्वटीकाभिप्रायं दर्शयन्नेव संमतिटीकामवतारयति—**ननु क्रतुप्रकरणस्थेत्यादिना** । **यथाविहितस्येति** । यत्प्रकारयुक्ततया विहितः क्रतुस्तत्प्रकारयुक्तस्य सिद्धेरित्यर्थः । **न हि**

P. 681-10 **क्रतुशेषः प्रतिषेध इति** । ततश्च हिंसानिषेधस्य क्रतुशेषत्वे प्रमाणाभावात् तच्छेषभूतायाश्च हिंसाया अनुष्ठितत्वान्न क्रतुवैगुण्यम् । परन्तु पुरुषार्थनिषेधातिक्रमात् पुरुषस्य प्रत्यवाय इति तदनुरोधेन दुःखमपि किञ्चिज्जायेतेति भावः ।

क्रत्वर्थाया हिंसाया निषेधासिद्धेर्न दुःखफलत्वमिति **परिहारटीकाभिप्रायं** दर्शयन्नवतारयति—**एवं हीति** । ननु पुरुषार्थहिंसाया एव निषेधो न क्रत्वर्थाया इति कथमवगम्यत इत्याशंक्य, तमर्थं साधयितुं प्रवृत्ते **तथा हीत्यादिटीकाग्रन्थे** निषेध्यनिषेधयोरेकविषयत्वकथनस्य किं प्रयोजनमित्याशंक्य, तत्प्रयो-

P. 681-11 जनं दर्शयन्नवतारयति—**क्रत्वर्थो हीति** ।

क्रत्वर्थस्य प्रतिषेध्यत्वे क्रत्वर्थप्रतिषेधविषयत्वं तन्त्रम् । प्रतिषेधस्य क्रत्वर्थत्वे च क्रत्वर्थत्वेन प्रसक्तप्रतिषेध्यविषयकत्वं तन्त्रम् । निषेध्यनिषेधयोरेकविषयत्वनियमात् । प्रकृते च प्रतिषेध्यहिंसायाः क्रत्वर्थत्वाप्रसङ्गान्न तन्निषेधस्य क्रत्वर्थतेति न क्रत्वर्थहिंसाया निषिद्धत्वमिति वक्तुं तत्कथनमित्यर्थः ।

यदर्थं निषेध्यं तदर्थ एव निषेध इत्यत्र सामर्थ्यं प्रमाणमित्याह—

P. 682-1 **यो हीति** । निषेध्यहिंसायाः क्रत्वर्थत्वाप्रसङ्गोऽसिद्ध इति शंकते—**तर्हीति** । 'न हिंस्या'दित्यत्र किं क्रत्वर्थैव निषेध्या ? किमविशेषेण हिंसामात्रम् ? आद्येऽपि किं क्रत्वर्थहिंसाग्राहकप्रमाणसद्भावात् ? पुरुषार्थहिंसाग्राहकप्रमाणाभावाद्वा ? नाद्य इति परिहरति—**इत्याशङ्क्याहेति** ।

**येनेत्यादिटीकार्थ**कथनपूर्वकं तस्या **न चैतदित्यादिटीकया** अन्वयं

P. 682-3 दर्शयति—**येन प्रकरणाम्नातत्वेनेत्यादिना** । **निषेधस्त्विति** । भावार्थभिन्नस्य निषेधस्य क्रतूपकारजनकत्वासम्भवात् कथं क्रत्वर्थत्वमित्यर्थः । अङ्गान्तरा-

वच्छेदद्वारा निषेधस्य क्रतूपकारजनकत्वं न त्वाहत्येति परिहारटीकाभिप्रायमाह—**पशुयाग इति।**

नन्वभावादपि क्रतूपकारे तत्प्रतियोगिनः कदाप्यनुष्ठानं न स्यादित्याशंक्य, तदनुरोधेनैव फलभूमा कल्प्यत इत्याशयेनाऽऽह—**फलभूमेति। प्रवृत्तिः** P. 682-7 **किमर्थेति** चिन्तायास्तदर्थचिन्तात्वं दर्शयति—**यो हि यदर्थमिति।** कर्तुराख्यातवाच्यत्वतदभावविचारस्य प्रवृत्तिः किमर्थेति संशयनिर्णायकत्वमुपपादयति—**अभिहिते[1] कर्तरीति।** कर्तर्यमिहिते सतीत्यर्थः। **सूत्रन्त्विति।** सूत्रस्य कर्तरि लकारास्साधव इत्यत्रैव तात्पर्येण कर्तुरभिधेयत्वाद्यंशे तात्पर्याभावादित्यर्थः।

**कर्तृसङ्ख्यैवेति।** 'लः कर्मणी'ति सूत्रस्य 'द्व्येकयो'रिति सूत्रेणैक- P. 682-19 वाक्यतायां कर्तरि यत् द्वित्वादि तस्मिन्नभिधेये लादेशद्विवचनादिकं भवतीत्यत्र पर्यवसानात् कर्तृसंख्यैवाख्यातवाच्या। न कर्ता। कर्तरि द्वित्वादिविशिष्ट इति वाक्यार्थाभ्युपगमे 'द्व्येकयो'रिति सूत्रगतस्य द्विशब्दस्य संख्येयपरत्वेन द्व्येकेष्विति बहुवचनापत्त्या संख्यामात्रपरत्वावश्यंभावादिति भावः।

शंकते—**आख्यातेनेति।** एकप्रत्ययोपात्तत्वादेव कर्तुः संख्या आख्या- P. 682-20 तेनाभिधीयत इति वक्तव्यम्; अन्यथा अतिप्रसङ्ग इति दूषणान्तरमाह—**गम्यमानकर्तुरिति।** ततश्च देवदत्तः काष्ठैः पचन्तीत्यपि प्रयोगप्रसङ्ग इति भावः।

**पच्यत इत्यत्रापीति।** ततश्च देवदत्तादिभिरोदनः पच्यत इत्यत्रापि पच्यन्त इति प्रयोगापत्तिरिति भावः। तृतीयापत्तिरिति दोषं परिहरति—**अनभिहितस्यापीति[2]।** प्रधानभूतभावनाद्वारा कर्तुः संख्या अभिधीयते। न कर्तृगतेति न दोषान्तरमपीत्याह—**करणादीनाञ्चेति। तस्मादिति।** आख्या- P. 683-3 तस्य कर्तृवाचकत्वाभावेन निषेध्यस्यानृतवदनस्य पुरुषार्थत्वे प्रमाणाभावात् प्रकरणेन क्रत्वर्थमेव नञ्श्रवणे प्रसज्यत इति तन्निषेधोऽपि क्रत्वर्थ इत्यर्थः।

---

१. कल्पतरौ 'अत्र च पशुप्रकरण एव' इत्यस्य स्थाने 'अत्र च दर्शपूर्णमासप्रकरण एव' इत्युचितमिति भाति।

२. कल्पतरौ उपरि 'अनभिहिते तु बोधकश्रुत्यभावात्' इति पाठः।

३. कल्पतरौ 'प्राधान्येनाद्योतितत्वाभिप्रायत्वात्' इति शोध्यम्।

P. 683-4 द्वितीयं शङ्कते—**ननु माभूदिति**। 'न हिंस्या'दित्यनेन पुरुषव्यापारानभिधानाट्टीकानुपपत्तिरित्यत आह—**नञ्व्यतिरिक्तेति**। नञ्व्यतिरिक्तस्य **हिंस्या**दित्येतावन्मात्रस्य विवक्षितत्वे, **न हिंस्यादित्यनेनेति** कथं **टीके**त्यत आह—**अत्र वाक्य इति**। 'न हिंस्या'दिति वाक्ये, **हिंस्यादिति भागेने**त्यर्थः। **अपि त्विति**। तद्द्वारा तत्प्रतिपादकशब्द**विरोधो**ऽपीत्यर्थः। नन्वार्थिकस्यापि कर्तुर्निषेध्यशेषित्वे कर्त्रधिकरणं प्रत्युदधृतं स्यादित्याशङ्क्य, वैषम्यमाह—**कर्त्रधिकरणे त्विति**। **अप्राधान्येनेति**। भावनाक्षिप्तस्य कर्तुः क्रियाशेषत्वादिति भावः।

P. 683-11 **प्राचीनग्रन्थे**। पूर्ववाक्ये। **कथं तर्हीति**। श्रेयस्साधनत्वतदभावयोरेकेन वाक्येन बोधनायोगादिति भावः। **अनुवादत्वमाहेति**। बलवदनिष्टाननुबन्धीष्टसाधनत्वरूपं श्रेयस्साधनत्वमनूद्य तन्निषेधे, विशेष्यस्येष्टसाधनत्वस्य हिंसायामपि सत्त्वाद्विशेषणस्य बलवदनिष्टाननुबन्धित्वस्य निषेधे, बलवदनिष्टसाधनत्वे निषेधस्य पर्यवसानमिति भावः।

अविशेषेण हिंसामात्रं निषेध्यमिति द्वितीयमुत्थापयति—**स्यादेतदिति**। अविशेषप्रवृत्तस्यापि वाक्यस्य गौरवानुरोधेन विशेषपर्यवसानान्न तद्बलेनापि

P. 683-14 निषेधस्य क्रत्वर्थत्वमिति परिहारतात्पर्यमाह—**हिंसाविषयस्येति**। **रागप्राप्तेति**। पुरुषार्थेत्यर्थः। **न चेति चशब्दः** किमर्थ इति व्याचष्टे—**उभयेति**। **रागप्राप्तार्थतेति**। पुरुषार्थतेत्यर्थः। न तु रागाधीनप्रवृत्तिविषयार्थतेत्यर्थः। क्रत्वर्थहिंसायामपि फल(माह) रागादेव प्रवृत्तेः। यागे रागात्तदङ्गे च विधितः प्रवृत्तिरिति **प्राभाकरपरिभाषायाः** सिद्धान्तानभिमतत्वादिति ध्येयम्।

P. 683-18 **हेतुरसिद्ध इति**[3]। क्षेत्रज्ञान्तराधिष्ठितेषु व्रीह्यादिषु सम्पर्कमात्रमनुशयिनामित्येतन्नेत्यत्र पूर्वपक्षिणा हेतुरुक्तः इष्टादिकारिणामिष्टादिकर्मसङ्कीर्तनादिति, स हेतुरसिद्धः। स्थावरशरीरानुगुणकर्मसङ्कीर्तनाभावादित्यर्थः।

---

१. अत्र कल्पतरौ 'न हीह पुरुषस्तदर्थो वा गम्यते' इति पाठः। टीकायां 'दुःखात्मकप्रकृत्यर्थहिंसा' इति पाठः।

२. कल्पतरौ 'कर्त्रधिकरणे तु' इत्यस्य स्थाने 'अनृतवदननिषेधस्य क्रत्वर्थताधिकरणे' इति निवेशः उचित इति भाति। उपरि क्रत्वर्थत्वमुक्तम्' इति पाठः।

३. कल्पतरौ 'हेतुस्सिद्ध' इति पाठः। तत्र सिद्धान्त्यभिमतः कर्मजन्यत्वासंकीर्तनरूपहेतुः सिद्ध इत्यर्थः। आभोगटीकया 'कर्मजन्यत्वसंकीर्तनरूपो हेतुरसिद्धः' इति पाठ इति ज्ञायते।

तद्युक्तमित्यत्र परिमलकृतः—इहाप्युत्सर्गापवादन्यायः प्रवर्तत एव । 'न हिंस्या'दित्यनेन विहितहिंसाया अपि क्रोडीकारात्, वैधहिंसाया अपि हिंसात्वात् । न च 'हिंस्या'दित्याख्यातोपात्तभावनाक्षिप्तपुरुषशेषभूतैव हिंसा तत्र निषिध्यत इति वाच्यम् । उद्देश्याया हिंसायाः पुरुषशेषत्वेन विशेषणायोगात् । अन्यथा 'आहवनीये जुहोती'त्यत्रापि पुरुषशेषाणामेव होमानामुद्देश्यत्वे क्रत्वङ्गपदहोमे आहवनीयप्रसक्त्यभावेन तत्राप्युत्सर्गापवादन्यायानापत्तेः ।

न च जुहोत्युपात्तानां सर्वेषामपि होमानामुद्देश्यत्वे बाधकाभावान्न तत्र पुरुषशेषत्वं विशेषणम् । अनपेक्षितोद्देश्यविशेषणे वाक्यभेदापत्तेः । इह तु हिंसामात्रमुद्दिश्य निषेधे, लौकिके पुरुषार्थत्वं वैदिके क्रतुशेषतेति वाक्यवैरूप्यापत्तेरन्यतरग्रहणाकांक्षायामुपस्थितपुरुषशेषभूतैव गृह्यत इति वाच्यम् । हिंसानिषेधस्यापि पुरुषार्थत्वसम्भवेन वाक्यवैरूप्याप्रसक्तेः । निषेध्यनिषेधयोरेकविषयत्वनियमस्तु असिद्धः । स्त्र्युपगमनमांसभक्षणादीनां पुरुषार्थानामपि प्रतिषेधस्य क्रत्वर्थत्वदर्शनात् । क्रतूपकारार्थप्रवृत्तब्राह्मणापगोरणस्यापि निषेधस्य पुरुषार्थत्वदर्शनाच्च । तथा च द्विविधयोरपि हिंसयोः पुरुषार्थतया निषेधे न किञ्चिदपि बाधकम् ।

किञ्च पुरुषार्थहिंसोद्देशेन निषेधेऽपि क्रत्वर्थहिंसाया अपि निषेधविषयत्वमस्त्येव । तस्या अपि परम्परया पुरुषोपकारकत्वात् । क्रत्वर्थताद्वारा अन्यथा वा कथञ्चित् पुरुषोपकारपर्यवसितत्वस्यैव तत्रानुवाद्यतायां तन्त्रत्वात् । अत एव 'नानृतं वदे'दित्यत्र पुरुषार्थताद्वारा अन्यथा वा क्रतूपकारकं यदनृतवदनं तस्य सर्वस्यापि निषेधः क्रत्वर्थतया विधीयते । अन्यथा द्रव्यार्जनाद्यर्थप्रवृत्तानृतवदनस्य तत्र निषेधानापत्तेः ।

अपि च पुरुषार्थहिंसाया अपि नाविशेषेण निषेधः सम्भवति । मरणान्तप्रायश्चित्तयुद्धाभिमुखहननस्तेनहननादीनां दोषाभावस्मरणेन तेषां निषेधेन परिहरणीयत्वात् । तथा च विहितानुमतहिंसातिरिक्तहिंसाविषयो निषेध इति स्तेनहननादिहिंसानामिव पशुसंज्ञपनस्याप्युत्सर्गापवादन्यायेनैव परिहारसिद्धेः, किं प्रथममेव तत्परिहारार्थं पुरुषार्थहिंसाया एव निषेध्यत्वकल्पनेन । 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य' इति छन्दोगोपनिषद्गते हिंसानिषेधे तीर्थशब्देनागर्हितां हिंसां निर्दिश्य तत्पर्युदासादपि हिंसानिषेधविधानयोरुत्सर्गापवादन्यायविष-

यता अवगम्यते। तस्माद्यथाभाष्यं उत्सर्गापवादन्यायविषयावेव हिंसाविधि-निषेधाविति।

तच्चिन्त्यम्। निषेधस्थले नञ्व्यतिरिक्तेनांशेन योऽर्थः प्रतीयते स निषेध्य इति तावन्निर्विवादम्। तथा च 'न हिंस्या'दित्यत्र हिंसयोपकुर्यादिति यत्तन्नेति वाक्यार्थे वर्ण्यमाने, उपकार्येण विना उपकारप्रतीतिपर्यवसानायोगेन किमुपकार्यमित्यपेक्षायां पुरुषस्यैवोपकार्यताप्रतीत्या हिंसया पुरुषस्योपकुर्यादिति यत्तन्नेति वाक्यार्थपर्यवसाने सति, पुरुषार्थतया प्रसक्तहिंसाया एव निषेध्यत्वेन क्रत्वर्थहिंसायास्तदप्रसङ्गे तत्र नोत्सर्गापवादन्यायप्रसक्तिः। अपवादसद्भावप्रयुक्त-तद्विषयपरिहारस्थलस्यैव तन्न्यायविषयत्वात्, प्रकृते च निषेधप्रवृत्तिदशायामेव लाघवाद्यनुरोधेन पुरुषार्थहिंसामात्रविषयतया क्रत्वर्थत्वेन चोदितहिंसाविषय-त्वाप्रसङ्गात्।

I. 683-7 तदिदमुक्तं टीकायाम्—**न च दृष्टे पुरुषोपकारकत्वे प्रत्यर्थिनि सति तत्कल्पनास्पदमिति।** हिंसाद्वयविषयकत्वे निषेधस्य, वाक्यभेदश्च स्यात्। हिंसानिषेधेन पुरुषः स्वार्थं साधयेत्। क्रतोरुपकुर्यादिति च। न च द्विविधाया अपि हिंसाया निषेधः पुरुषार्थ एवेति न वैरूप्यमिति वाच्यम्। निषेध्यनिषे-धयोरेकविषयत्वनियमात्। नचायमसिद्धः, स्वार्थं क्रत्वर्थं वा हिंसादिकं संपादयितुं प्रवृत्तस्तदभावमेव सम्पादयेदिति निषेधवाक्यार्थपर्यवसानेन सामर्थ्यसिद्धस्यास्य नियमस्य दुरपह्नवत्वात्।

अत एव **कर्त्रधिकरणे** अनृतवदननिषेधः क्रत्वर्थः पुरुषार्थो वेति संशयानन्तरं तदर्थसंशयतया, किमनृतवदनप्रवृत्तिः क्रत्वर्था पुरुषार्थेति संशयान्तरं प्रदर्शितम्। तथा च 'नानृतं वदेत्' 'न मांसमश्नीयात्' 'न स्त्रियमुपेयात्' इत्यादिनिषेधानां प्रकरणपठिततया अनृतवदनस्त्र्युपगमनादीनां क्रत्वर्थतया प्रसक्तानां निषेधः क्रत्वर्थः। तत्र च पुरुषशेषतया अनृतवदनस्त्र्युपगमनादीनां विधानाभावेन यद्यदनृतवदनादिकं पुरुषोपकारकतया क्रतूपकारकतया वा तत्र प्रसक्तं तस्य सर्वस्याऽपि प्रकरणाम्नानबलात् क्रत्वर्थत्वेन प्रसक्तस्य निषेधः क्रत्वर्थ इति दर्शपूर्णमासप्रयोगमध्ये यत्किञ्चिदनृतवदनादिकं कुर्वतः क्रतुवैगुण्यमिति फलति।

एतदभिप्रायेण तत्र **वार्तिकं**—स्त्र्युपायमांसभक्षादिपुरुषार्थमपि श्रितः । प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ।। इति । अत्र **पुरुषार्थमिति** । पुरुषोपकारकमित्यर्थः । शेषशेषिभावस्य विधिमन्तरेण ज्ञातुमशक्यत्वात् । कलञ्जभक्षणादिनिषेधस्य चानारभ्याधीतत्वात् क्रत्वर्थतया विहितभक्षणाभावाच्च क्रतूपयोगितया पुरुषोपयोगितया वा यद्यदस्ति भक्षणं तत्सर्वं पुरुषार्थतया प्रसक्तमिति तन्निषेधः पुरुषार्थ इति क्रतूपयोगितया अन्यथा वा कलञ्जभक्षणे पुरुषस्य प्रत्यवायः । न क्रतोर्वैगुण्यम् ।

एवं 'नापगुरेते'ति क्रतुप्रकरणपठितस्यापि निषेधस्य पुरुषार्थतयोपगतापगोरणनिषेधकत्वेन पुरुषार्थत्वात् क्रतावन्यत्र वा ब्राह्मणापगोरणे प्रत्यवायो, न क्रतोर्वैगुण्यम् । तदभिप्रायेण **वार्तिकम्**—'यो नाम क्रतुमध्यस्थ' इत्यादि । 'न हिंस्या'दित्यत्र तु क्रत्वर्थतया विहितहिंसायाः पुरुषार्थतया प्रसक्त्यभावेन विहितहिंसाव्यतिरिक्तायाः पुरुषार्थतया प्रसक्ताया निषेधः पुरुषार्थ इति क्रतुमध्ये अन्यत्र वा विहितहिंसाव्यतिरिक्तहिंसायां प्रत्यवाय इति फलति । ततश्च न विहितहिंसाया निषेधसंस्पर्शः ।

एतेन—क्रत्वर्थहिंसाया अपि परम्परया पुरुषोपकारकत्वेन तस्या अप्यस्ति निषेधसंस्पर्श इति निरस्तम् । तादर्थ्यस्य विध्येकसमधिगम्यतया तदुपकारकत्वमात्रेण तादर्थ्यायोगात् । क्रत्वर्थहिंसाया अपि पुरुषार्थत्वे च ' न हिंस्या'दित्यनेन तस्याः पुरुषानर्थहेतुत्वबोधने विहिताया हिंसायाः क्रतूपकारजनकत्वं पुरुषगतप्रत्यवायजनकत्वञ्चेति सांख्यमताभ्युपगमापत्तेः । उत्सर्गापवादन्यायविषयत्वभङ्गापत्तेश्च ।

न च विहितानुमतहिंसाव्यतिरिक्तविषयो निषेध इति स्तेनहननादिहिंसानामिव पशुसंज्ञपनस्याप्युत्सर्गापवादन्यायेनैव परिहारो युक्त इति वाच्यम् । ' न हिंस्या'दित्यनेन पुरुषार्थतया कर्तव्यस्य निषेधस्य पुरुषार्थहिंसाप्रतीतिमात्रेण पर्यवसानसम्भवेन तदानीं स्तेनहननादिहिंसान्तरविचाराप्रसक्त्या तत्साधारण्येन निषेधप्रवृत्तावपि क्रत्वर्थहिंसासाधारण्येन तदप्रवृत्त्या वैषम्यात् ।

' अहिंसन् सर्वभूतानी'त्येतच्च ' न हिंस्या'दिति निषेधसिद्धार्थानुवादकमिति न तद्बलादपि निषेधविषयता वैधहिंसायाः । तस्मा'न्न हिंस्यात्सर्वा भूतानि '

'अग्नीषोमीयं पशुमालभेत' इत्यनयोर्नोत्सर्गापवादन्यायविषयतेति साधूक्तं तद्युक्तमिति-।

P. 684-4 अयमेवार्थ इति टीकायामिदंशब्दार्थमाह—एकस्य निषेधविधेरिति। पुरुषार्थनिषेधविधिस्वरसावगतो गौरववैरूप्योपोद्बलितो वैधहिंसातिरिक्तविषयत्वनिष्कर्षः इदंशब्दार्थ इत्यर्थः। 'ञिफला विशरण' इति धातुमाश्रित्याह—खण्डितेष्विति। 'इह व्रीहियवा' इत्यादिश्रुतिं व्याचष्टे—ते अनुशयिन इह लोक इति। 'यो यो ह्यन्नमत्ति यो रेतस्सिञ्चति तद्भूय एव भवती'ति श्रुतिं व्याचष्टे—यो यो हीति। तद्भूयमिति पठितव्ये तद्भूय P. 685-4 इति पठितमित्याशयेनाह—तद्भावमेवेति। फलितमाह—तथाचेति।

॥ इति अन्याधिष्ठिताधिकरणम् ॥

इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डुभट्टमहोपाध्यायतनूभवेन
श्रीमन्नारायणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशवृद्धायमाणेन
लक्ष्मीनृसिंहचरणारविन्दचञ्चरीकेण लक्ष्मीनृसिंहेन
विरचितायां कल्पवृक्षप्रदीपिकायां
आभोगाख्यायां तृतीयाध्यायस्य
प्रथमः पादः ॥

---

१. कल्पतरौ 'स्वविषयस्य' इति 'सविषयस्य' इति शोधनीयम्।

श्रीः

# ॥ तृतीयस्याध्यायस्य द्वितीयः पादः॥

## ॥ अथ संध्याधिकरणम् ॥

सू०॥ सन्ध्ये सृष्टिराह हि ॥ १ ॥

सू०॥ निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

सू०॥ मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

सू०॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

सू०॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥

सू०॥ देहयोगाद्वा सोऽपि ॥ ६ ॥

**यातायातरूपत्वेनेति।** गमनागमननिरूपणेन हि सकलसंसारदुःखायतनभूतेन्द्रियसंपरिष्वक्तस्य गमनम्, चन्द्रलोके च देवभृत्यभावेन भोगाभासः, ततः कर्मक्षयचिन्ताप्रयुक्तशोकेन तद्देहविलयः, ततोऽदृष्टद्वारा भूमौ पतितस्य व्रीह्यादिहेयवस्तुसंश्लेषः, तदनन्तरञ्च रेतस्संश्लेषः, तत्रापि च तस्य स्त्रीसम्बन्धाभावे वन्ध्यासंबन्धेन तत्र निषेके वा तथैवावस्थानम्, पुनश्च भस्मीभूते तस्मिन् शरीरे तद्भस्मसंश्लिष्टस्य जलसंसर्गे ओषध्यादिसंश्लेषेण कथञ्चित्पुरुषद्वारा योनिप्रवेशे शरीरपरिग्रहः, तत्रापि च कर्मानुष्ठानक्लेशः, पुनश्च गमनागमने, केषाञ्चित्तु संयमने यातनानुभवेन पुनरागमनम्, स्थावरपक्षिपश्वादिशरीरप्राप्त्या निरवधिकदुःखानुभव इत्येवमादिकं निरूपितम्। ततश्च कर्मफलेषु जुगुप्सया वैराग्यं दृढीकृतं भवतीत्यर्थः। P. 687-1

**टीकोक्तो जीवावस्थाभेदो न पादार्थः।** न स्थानतोऽपीत्याद्यधिकरणेषु तदविचारात्। अत आह—**तत्त्वंपदार्थेति।** महावाक्यार्थान्वयि- P. 687-1

पदार्थविवेकः पादार्थ इति भावः। **इदानीमि**त्यनेन सूचितां हेतुहेतुमद्भावसङ्गतिं
P. 687-3 प्रदर्श्य, **तस्यैवेति टीकायाः** प्रयोजनमाह—**आद्येति। दुर्विवेकमिति।**
आदित्यादिसङ्कराद्भास्यत्वशङ्काकलङ्कितत्वादिति भावः। **तदवस्थमिति।** स्वप्ने-
प्यादित्यादिसद्भावादिति भावः। **सदपीति।** व्यावहारिकमपीत्यर्थः।

ननु स्वप्नगतादित्यादीनामपि दृश्यत्वादेव नात्मावभासकत्वमिति वक्तुं शक्यत्वात् तन्मिथ्यात्ववर्णनं व्यर्थमित्याशंक्य मिथ्यात्वादपि न सत्यात्मभासकत्वमिति हेत्वन्तरप्रदर्शनार्थं तत्साधनमित्याह—**आदित्यादीनामिति। आरम्भणाधिकरण इति।** यद्यपि तदधिकरणोक्तं मिथ्यात्वं स्वप्नस्य किं व्यावहारिकत्वेन? किं वा प्रातिभासिकत्वेनेति विचारान्न पौनरुक्त्यप्रसक्तिः, तथापि तदधिकरणोक्तं मिथ्यात्वं स्वप्नस्य प्रातिभासिकत्वेनैवेति पर्यवस्यति प्रबोधे बाधदर्शनादिति **प्रपञ्च्यत** इत्युक्तिरिति भावः।

P. 688-3 **प्रपञ्च्यत इति टीका**भिप्रायमजानानः शंकते—**सर्वविकारेति।** स्वप्नस्य पारमार्थिकं सत्त्वं न पूर्वपक्षिणोच्यते। येन ब्रह्मकर्तृकसृष्टेर्हेतुत्वेन तदनुगुणो दृष्टान्तो न स्यात्। किन्तु व्यावहारिकं सत्त्वम्। तथा च न दोष इति परिहाराभिप्रायमाह—**स्वप्नस्येति। चक्षुरादिशब्दस्य गोलकपरत्वेन** व्याख्याने बीजमाह—**करणानामिति।** तथा चैहलौकिकचक्षुरादिव्यापाररहित्यविशिष्टरूपादिसाक्षात्कारवत्त्वं परलोकलक्षणमसंभवि स्यादिति चक्षुरादिशब्दस्य गोलकपरत्वमावश्यकमिति भावः।

P. 688-10 **न च न रूपादीत्युक्तमिति।** तथा च पारलौकिकचक्षुरादिव्यापाररहित्यविशिष्टरूपादिसाक्षात्कारवत्त्वमिहलोकलक्षणमिति भावः। **आरम्भणाधिकरणादाविति। आदिशब्देन कृत्स्नप्रसक्त्याद्यधिकरणं** गृह्यते। बाधकप्रत्ययस्यैवाभावेन तद्विरोधोऽसिद्ध इत्यभिप्रेत्य पूर्वपक्ष इत्याह—**ज्ञानं सर्वमिति। विप्रतिपत्तेरविशेषादिति।** बाध्यत्वतदभावविप्रतिपत्तिः सर्वेष्वपि भ्रमेषु तुल्या। अन्यथा शुक्तिरजतादिभ्रमस्येव स्वप्नभ्रमस्यापि बाध्यत्वनिश्चये विचारायोगादिति भावः। **श्रुतौ प्रकृतमिति।** तथा च तन्निर्णयोपयोगितया सूत्रे स्वप्नज्ञानमुदाहृतमित्यर्थः।

P. 689-1 **समानगोचरेति।** एकविशेष्यकविरुद्धार्थज्ञानयोरित्यर्थः। **विरोधाभावमाहेति।** भिन्नधर्मिविषयकत्वेन **विरोधाभावमाहे**त्यर्थः। ननु 'सा वा अयं

पुरुषो जायमान' इति प्रक्रान्तस्य मध्ये'ऽयत्रायं पुरुषः स्वयंज्योति'रिति परामृष्टस्य जीवस्यैव 'स हि कर्ते'त्युपसंहारेऽपि परामर्शात्स्वप्नस्य प्राज्ञकर्तृकत्वमसिद्धमिति शंकत इत्याह—**हेतोरसिद्धिमिति**। कठश्रुतौ स्वप्नस्य स्पष्टं प्राज्ञकर्तृकत्वश्रवणात्तदनुरोधेन, सर्वस्यापि ब्रह्मकर्तृकत्वप्रतिपादकश्रुत्यन्तरानुरोधेन च बृहदारण्यके जीवस्य कर्तृत्वं श्रूयमाणं प्राज्ञाभेदेनेति निश्चीयत इति परिहारतात्पर्यमाह—**य एष इति**। **विमतिपदमिति** विवादस्पदं स्वप्न इत्यर्थः। P. 681-8

न **तावदित्यादिटीकोक्तं** तर्कं प्रकटयन्नुत्तरटीकामवतारयति—**वस्तुतो यदीति**। प्रायशः शुक्तित्वेनानुभूयमानं कदाचिदेव रजतत्वेनानुभूयमानं यदि **वस्तुतो रजतं स्यात्** इत्यर्थः। **इदानीमिति**। यदि वस्तुतो रजतं स्यात्तदा, तदा रजतत्वेनानुभवकाले निर्दुष्टेन्द्रियैः बहुभिः शुक्तित्वेन नानुभूयेतेति तर्कान्तरमाहेत्यर्थः।

**शुक्तिरजतात्मकमेकमेव वस्त्विति**। भूयोभिः शुक्त्यवयवैरल्पैः रजतावयवैश्च मिलितैरारब्धं द्रव्यं शुक्तिरजतोभयात्मकम्। तथा च प्रायेण शुक्त्यात्मना गृह्यते। तत्सामग्रीवैकल्ये च कदाचिद्रजतात्मना। अत एव तन्तुभिरूर्णासूत्रैश्च निर्मितस्य द्रव्यस्य पटकम्बलोभयात्मत्वम्। अत एव च व्रीह्यलाभे व्रीहिशास्त्रार्थानुष्ठानाय नीवारोपादानं प्रतिनिधिपेटिकायां निरूपितम्। एवं नीलावयवैररुणावयवैश्चारब्धे नीलोत्पले नीलपीतात्मकं चित्रं रूपमुत्पन्नमिति, दिवा तद्गतं नीलत्वमभिव्यज्यते। रात्रौ च तद्गतमरुणत्वमित्येवं द्व्यात्मकमेवास्त्वित्यर्थः। P. 690-2

**मा भूदिति**। रजतत्वेन दृष्टस्य रजतस्य कालान्तरे परिणामः शुक्तिरिति मा भूदित्यर्थः। **तद्दूषयतीति**। तन्त्वाद्यारब्धस्य पटकम्बलोभयरूपत्वमुभयकार्यकारित्वात्। नीवाराणान्तु व्रीहिरूपत्वमसिद्धमेव। अत एव व्रीह्यलाभे तदुपादानं, व्रीहित्वजातिपरिच्छेदयोग्यकतिपयावयवलिप्सया, अन्यथा 'व्रीहिभिर्यक्ष्य' इति संकल्पस्य सर्वात्मना त्यागापत्तेरित्येव प्रतिनिधिर्निरूपितः। तथा च शुक्तिमरीच्यादेः रजततोयादिकार्यकारित्वादर्शनान्नोभयात्मत्वमित्यभिप्रेत्य दूषयतीत्यर्थः। P. 690-3

---

१. अमुमेवाभिप्रायमवलम्ब्यास्मदीयः श्लोकः—रूप्यांशसत्त्वमधिशुक्त्युपयन्ति ये ते त्वर्थक्रियां तदुचितां किमु नो लभन्ते। न्यूनत्वतो यदि तदांबुधितीरभागे लभ्येत किं शकटसंभृतशुक्तिपुंजात्॥ इति।

P. 690-6 **टीकासूचितं हेतुमाह—पिपासाशामकमिति । प्रयोजकद्वैविध्य-मिति ।** तोये(यत्वे) पिपासोपशामकत्वमतदुपशामकत्वं चेति प्रयोजकद्वैविध्यं न कल्पनीयमित्यर्थः । **अकल्पने चेति ।** तोयद्वैविध्याकल्पन इत्यर्थः । **कल्पन इति** पाठे पिपासोपशामकमुदकमित्यैकविध्यकल्पन इत्यर्थः । यथा वा ब्राह्मणे आचार्यो मातुल इति वा प्रत्यय इति दृष्टान्तान्तरमुक्तम्—**आचार्यमातुलेत्यादि-टीकया ।** तस्य पूर्वदृष्टान्ताद्वैलक्षण्यमाह—**आचार्यादाविति ।** प्रकृते अन्या-पेक्षयापि न समुच्चितावगाहित्वमिति दर्शयितुं दृष्टान्तान्तरोपादानमिति भावः ।

P. 690-11 **एवं तावदिति ।** एकस्मिन् वस्तुनि कालभेदेनापि शक्तित्वरजतत्व-योरसम्भवेन तयोर्विरोधात् तज्ज्ञानयोर्विरुद्धार्थविषयकत्वमुक्तम् । एवमप्येकैक-काले इतरावगाहित्वाभावात् कथं बाध्यबाधकतेत्याशंकायां स्वस्वविषयावभासक-त्वेन प्रवृत्तयोरप्यर्थदेकत्र धर्मिण्येकदा तदुभयावगाहित्वपर्यवसानेन बाध्यबाधक-तानुगुणोऽपि विरोधोऽस्तीति पश्चाद्वक्ष्यतीत्यर्थः ।

P. 691-1 **टीकायां—रजतज्ञानात् प्राक्प्रापकाभावेनेति ।** तत्पूर्वक्षणे शुक्ति-ज्ञानलक्षणप्रापकाभावेन शुक्तेर्बुद्धिविपरिवृत्तिलक्षणप्राप्त्यभावादित्यर्थः । **तन्निषे-धस्य पूर्वेणेति ।** तस्य परस्य पारमार्थिकवस्तुगोचरत्वविशिष्टवेषेण यो निषेध-स्तस्येत्यर्थः । (तां) **भविष्यत्तां मा प्रकाशयतु नामेत्यन्वयः । असति विनाशेत्या**दिपक्षविशेषणमहिमलब्धमर्थं दर्शयन् **टीकाभिप्रायमाह—रजत-ज्ञानकालमिति । पूर्वार्धस्य वक्ष्यमाणटीकोक्तमर्थं** दर्शयन्नुत्तरार्धं व्याचष्टे—
P. 691-8 **अनुमानेति ।**

किं कालान्तरव्यापित्वं संयोगसहकृतेनेन्द्रियेण गृह्यते ? संस्कारसहकृतेन वेति विकल्प्य, प्रथमं निराकृतं **टीकायां—कालान्तरेणेति ।** भविष्यता कालेन संयोगाभावात् तदुपहितस्वरूपस्य व्यापित्वस्याप्यतीन्द्रियत्वमित्यर्थः ।
P. 691-9 द्वितीयं शङ्कते—**ननु यथेति ।** प्रागननुभवान्न संस्कारसम्भव इति परिहरति—**अत आहेति ।**

---

१. टीकायां पूर्वं 'यथा मरीचीननुभवन्' इति पाठः ।

२. कल्पतरौ पूर्वं 'बाध्यबाधकभावं नियमयति' इति पाठः ।

३. कल्पतरौ टीकायां च 'उपकारहेतुभाव'मिति पाठः ।

नन्वनुमानस्य स्वोत्पत्त्यनन्तरमेव प्रत्यक्षसहकारित्वसम्भवात् कथं **विनश्यदवस्थत्व**मित्याशंक्य फलोपहितस्य सहकारित्वस्यानुमानानन्तरं प्रत्यक्षकृतस्थायित्वपरिच्छेदानन्तरभावित्वात् तदभिप्रायेण **विनश्यदवस्थत्वोक्ति**रित्याह—**परिच्छेदेति**। **सन्तान** इत्यस्य व्याख्या **अनुगतरूप इति**। **अध्यवसेय**शब्दार्थमाह—**स्वलक्षणग्रहणादिति**। P. 691.11

किमाख्यानांशे संवादात्स्वप्नस्य सत्यत्वं? किं वा आख्यातांश इति विकल्प्य, प्रथमं निराकर्तुमत्रापीत्यादिटीका। तां व्याचष्टे—**स्वप्नस्येति**। **नरपतिस्त्वां मानयिष्यतीत्येवंरूपस्य स्वप्नस्य य आख्याते**त्यर्थः[1]। एवं टीकागतं पदद्वयं योजयित्वा अपेक्षिताध्याहारेण वाक्यं योजयति—**जागरण इति**। स्वाप्नादुत्थितेन प्रियव्रतेन जागरणे ब्राह्मणाभाससमीपं गत्वा त्वया ममैतदुक्तमित्याख्याने, तेन च न मयोक्तमित्युक्ते, विसंवादान्न सत्यत्वमित्यर्थः।

**भारते वर्ष इति**। वर्तुलाकारस्य जम्बूद्वीपस्य मध्ये मेरुः। तस्य परित इलावृताख्यं वर्षम्। तस्य दक्षिणतो हरिकिम्पुरुषभारताख्यानि त्रीणि वर्षाणि। उत्तरतो रम्यकहिरण्मयोत्तरकुरुसंज्ञानि त्रीणि। पश्चिमतः केतुमालाख्यमेकम्। पूर्वतो भद्राश्वसंज्ञकमेकम्। आहत्य नव वर्षाणि। वर्षशब्दो भूप्रदेशवाचकः। मर्यादापर्वतैश्च भूप्रदेशानां भेद इति स्थितिः। P. 691-1

एतेषु च वर्षेषु वर्तमानानां प्राणिनां मेरुं प्रदक्षिणमावर्तमान आदित्यो यदा दृष्टिपथमागच्छति, तदानीमारभ्य तद्दर्शनपर्यन्तं दिवसः। अदर्शनमारभ्य पुनर्दर्शनपर्यन्तश्च रजनी। तथा च भद्राश्वे मध्याह्नकालो भारते उदयकालः। भारते मध्याह्नकालः केतुमाले उदयकालः। तत्र मध्याह्नकालः उत्तरकुरुषूदयकालः। तत्र मध्याह्नकालो भद्राश्वे उदयकालः। एवं रजनीकालोऽपि द्रष्टव्यः। ततश्च केतुमालोत्तरकुरुवर्षमध्यकोणे यदा सूर्यः, तदा भारते रजन्याः प्रथमो यामोऽतीत इति निद्राकालः। केतुमाले च दिवसस्य त्रयो यामा अतीता इति तत्र वासर एवेति कृत्वा **भारते वर्ष** इत्युक्तमित्यर्थः।

---

१। कल्पतरौ 'स्वप्नस्य य आख्याता' इति पाठः।

न च स्वाप्निकदिवसादेर्विलक्षणतया रजन्यामपि न विरोध इति वाच्यम्। दृष्टविलक्षणतया दिवारात्र्यादिविभागस्य, माससंवत्सरादिविभागस्य, सत्यानामपि रथादीनां स्वप्नदृगितरायोग्यत्वस्य, प्रतिस्वप्नद्रष्टृपुरुषमनन्तकोटिपदार्थकल्पनस्य च, निष्प्रमाणकत्वात्। 'न तत्र रथा' इत्यादिश्रुतीनां च स्वप्नमिथ्यात्वकथनपूर्वकं जीवस्वप्रकाशत्वसाधनार्थं प्रवृत्तत्वान्न तद्बलादेतावत्कल्पनं न्याय्यमिति भावः।

P. 692-4 **पूर्वापरविरोध इति**। पूर्वं मायामात्रत्वोक्त्या व्यावहारिकसत्त्वं नेत्युक्तम्। इदानीं सूचकत्वोक्त्या तदङ्गीकृतमिति विरोध इत्यर्थः। व्यावहारिकत्वनिषेधः स्वाप्निकपदार्थविषयः, सूचकतया सत्त्वन्तु प्राधान्येन स्वप्नदर्शनविषयम्। अतो न विरोध इति परिहारटीकाभिप्रायमाह—**अस्ति मिथ्याभूतेति**।

P. 694-1 **अतोऽन्तरालवर्तीति**। ईषद्बन्धानुवृत्त्या अतिशयितानन्दाभिव्यक्त्या च बन्धमोक्षोभयसंस्पर्शित्वादन्तरालवर्तित्वमिति भावः। **जिज्ञासासूत्रे पराभिध्यानसूत्रार्थ**समर्थनप्रकारमभिधाय, **देहयोगसूत्रार्थ**समर्थनप्रकारमाह—**अध्यासात्मकश्चेति**। 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण' इति श्रुतिं व्याचष्टे—**सुप्तेष्विति**। यच्छब्दस्य **तदेव शुक्रमिति** तच्छब्देनान्वयमाह—

P. 694-5 **यस्तदेवेति**। 'शतायुषः पुत्रपौत्रान्वृणीष्वे'ति श्रुत्यभिप्रायं दर्शयन् 'कामानां त्वा कामभाजं करोमी'ति श्रुतिं व्याचष्टे—**वृणीष्वेतीति**। '**तदु नात्येति कश्चने**'ति श्रुतिं व्याचष्टे—**तद्ब्रह्मेति**।

**'अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त'** इति श्रुतिं व्याचष्टे—**अथो इति**। 'बहिष्कुलायादमृतश्चरित्वा स ईयतेऽमृतो यत्र काम'मिति श्रुतिं प्रतीकत आदाय, 'प्राणेन रक्षन्नवरं कुलाय'-

P. 694-8 मिति पूर्वपादेन सह व्याचष्टे—**स्वप्नावस्थायामिति**। 'स यत्रैतत्स्वप्न्यया

---

१. स्वप्नस्य न सत्यत्वं अपि तु मिथ्यात्वमित्यत्रास्मदीयः श्लोकः—विश्वं मृषा कलयितुं स्वपनं महेशो निस्स्वाग्रतो निधिमिव प्रकटीचकार। तत्राऽस्य मीलितदृशो गमनं यथा स्यात् स्वप्नेऽपि सत्यमतिरत्र तथा परेषाम्॥ इति॥

२. कल्पतरौ पूर्वं 'असत्तु दृश्यं यत् तदुपहितं' इति, 'अर्थक्रियाकारित्वसत्त्वसंयोगात्' इति च पाठः।

चरती'ति श्रुतौ स्वप्न्ययेति पदं व्याचष्टे—**स्वप्नरूपयेति**। 'स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिती'ति श्रुतिं व्याचष्टे—**स्वमात्मेति**। 'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैः जन्ममृत्युप्रहाणिः। तस्याभिध्याना-त्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः ॥'. इति श्रुतिं व्याचष्टे—**देवमी-श्वरमिति**। P. 694-10

॥ इति संध्याधिकरणम् ॥

---

## ॥ अथ तदभावाधिकरणम् ॥

### सू०॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

### सू०॥ अतः प्रबोधोऽस्मात् ॥ ८ ॥

पूर्वोत्तराधिकरणफलयोर्हेतुहेतुमद्भावसङ्गतिं श्लोकेनाह—**जीवस्येति**। **प्रयोजनमाहेति**। मोक्षस्य ज्ञानसाध्यत्वसिद्धिं **प्रयोजनमाहे**त्यर्थः। तथाहि—किं जीवस्य ब्रह्मभावस्सनातनः? आगन्तुको वा? आद्येपि, किं मिथ्याज्ञाननि-वृत्तौ तद्भावोऽभिव्यज्यते? उत न? नाद्य इत्याह—**वस्तुत इति**। सुषुप्तौ जीवस्य नाडीषु पुरीतति वा अवस्थाने अविद्यातिरिक्तस्थूलोपाध्येकलोलीभावावश्यंभावेन ब्रह्मभावाभिव्यक्तौ मिथ्याज्ञाननिवृत्तिः प्रयोजिका न भवेदित्यर्थः। द्वितीयं शङ्कते—**नन्विति**। अविद्यानिवृत्तेर्ब्रह्मभावप्रयोजकत्वं युक्तिबलादवसीयते। श्रुतिबलाद्वा? नाद्य इत्याह—**यावद्यावद्धीति**। विपरीतप्रत्ययनिवृत्तावपि ब्रह्मभावानाविर्भावे अविद्यानिवृत्तौ तदाविर्भाव इति का प्रत्याशेत्यर्थः। द्वितीयं निराकरोति—**तत्र यदीति**। फलितमाह—**तत इति**। P. 695-7

प्रतिबन्धकनिवृत्तौ सत्यामप्यनाविर्भूतस्य ब्रह्मभावस्य परिशेषादागन्तुक-त्वमेव वक्तव्यमिति तत्र कर्मैव कारणं युक्तमित्याशयेनाह—**कर्म हीति**। **अवि-द्यानिवृत्तावपीति** टीकाभिप्रायं प्रागुक्तं विस्मृत्य शङ्कते—**तर्हीति**। **अवि-द्यानिवृत्तेरपीति**। सुषुप्तौ विद्यमानाया अपि विपरीतज्ञाननिवृत्तेर्ब्रह्मभावं प्रत्यप्रयोजकत्वे तुल्यन्यायतया मूलाविद्यानिवृत्तेरप्यप्रयोजकत्वमिति भावः। P. 695 7

---

१. कल्पतरौ 'जीवस्य स्वप्रभस्वाय' इति पाठः।

P. 696-6 **ब्रह्मभावावस्थान इति**। विपरीतज्ञाननिवृत्त्या तदधीनसत्ताकान्तः-करणादिस्थूलोपाधिविलये सति ब्रह्मभावाभिव्यक्तिर्भवतीत्यर्थः। **इत्यर्थ इति**। इत्ययमर्थस्तावच्छब्देन सूच्यत इत्यध्याहारेण योज्यम्। **सप्तम्यर्थत्वादित्यर्थ इति**। सप्तम्या योऽर्थः प्रसिद्धः तद्रूपत्वादित्यर्थः। तथा **चैकनिलयनार्था इति** युज्यत इति भावः। **परस्परश्चेति**। पुरीतद्ब्रह्मणी च परस्परमनपेक्षे इत्यर्थः। **बृहद्रथन्तरयोर्विधानात् विकल्प इति**। बृहद्रथन्तरयोस्साम्नोः ऋगक्षराभिव्यक्तिद्वारा स्तुतिसाधनत्वेन दृष्टार्थत्वाद्विकल्प इत्यर्थः।

यद्यपि 'बृहत्पृष्ठं भवति' 'रथन्तरं पृष्ठं भवती'ति वाक्ययोरेव बृहद्रथन्तरसामकपृष्ठस्तोत्रविधायकत्वाद्द्वे एव पृष्ठस्तोत्रे, तयोश्च 'बृहद्रथन्तरं वा पृष्ठं कार्य'मिति वचनाद्विकल्प इति **नवमे वार्तिककारैरुक्तम्**। तथाच बृहद्रथन्तरयोरेकस्मिन् पृष्ठस्तोत्रे न विकल्पप्रसक्तिः। तथापि पृष्ठस्तोत्रमेकमित्यपि केषाञ्चिन्मतमस्तीति तन्मतानुरोधेनैतदुक्तम्।

P. 697-5 **व्रीह्यनुष्ठानपक्ष इति**। प्रथमं व्रीह्युपादाने यवशास्त्रस्य यवशास्त्रानुष्ठापकत्वलक्षणं प्रामाण्यं यत् प्रतीतं तस्य परित्यागः। अननुष्ठापकत्वलक्षणाप्रामाण्यस्याप्रतीतस्य स्वीकारश्चेति द्वौ दोषौ। पुनर्द्वितीयप्रयोगे यवोपादाने यवशास्त्रस्य स्वीकृताप्रामाण्यपरित्यागः। परित्यक्तप्रामाण्यस्वीकारश्चेति द्वौ दोषौ। एवमस्मिन्नेव यवोपादानपक्षे पुनस्तृतीयप्रयोगे व्रीह्याद्युपादानपक्षे च व्रीहिशास्त्रे चत्वारो दोषा इत्यष्टदोषदुष्टो विकल्प इत्यर्थः।

**कारणमाहेति**। अयुक्तत्वे कारणमाहेत्यर्थः। **अत्रे**त्युक्त्या गोसवस्थले प्रधानाभ्यासस्य श्रुतत्वमुक्तम्। तत् प्रकटयति—**तत्र हीति**। **येनेति**। निरवकाशसाहित्यश्रवणेन प्रधानयागावृत्तिरपि तात्पर्यवृत्त्या श्रुता स्यादित्यर्थः। अन्याय्यत्वे लोकविरुद्धत्वं हेतुमाह—**न हीति**। अङ्गानुरोधेन प्रधानावृत्तौ वैदिकत्वं तन्त्रमित्याशयेन शङ्कते—**नन्विति**। तत्रापि नानादेवतोद्देशेन यागीयद्रव्यसंस्कारार्थतया विहितानां ग्रहणानां समुच्चयबलादेव प्रधानस्यावृत्तिः न त्वङ्गविधिमात्रादिति परिहरति—**इत्याशङ्क्याहेति**।

नंनु सोमयागानां बहुत्वादङ्गानुरोधेन प्रधानावृत्तौ नेदमुदाहरणमिति P. 698-9 शङ्कते—**ननु कथमिति**। **रूपाभिधाना**[1]**दिति**। द्रव्यदेवतासम्बन्धात्मकस्य

---

१. कल्पतरौ 'द्रव्यदेवतासंबन्धाभिधानात्' इति पाठो दृश्यते।

रूपस्य रूप्यते अनेनेति रूपं व्यञ्जकं तस्याभिधानादित्यर्थः। पशुसोमाधिकरणोक्तमर्थं दर्शयति—**इदमत्राकूतमित्यादिना**। ऐन्द्रवायवादिवाक्यविहितार्थ- P. 698 10 प्रत्यभिज्ञानाभावमेव द्रव्यभेदेन दर्शयति—**ऐन्द्रवायवादिशब्दा हीति**। **संस्कारविधायकानीति**। यागाङ्गत्वेन श्रुतायाः सोमलताया अभिषवादिवाक्यपर्यालोचनया रसद्वारैव हविष्ट्वाद्रसग्रहणविधायकानामपि यागीयद्रव्यसंस्कारविधायकत्वमित्यर्थः। **यदीमानीति**। यागोद्देशेन देवताविधाने दृष्टार्थत्वाद्विकल्पः स्यात्।[1] सर्वस्यापि द्रव्यस्य सकृत्त्यागे च एकामेव देवतामुद्दिश्य त्यक्तव्यत्वाद्विकल्पः स्यादित्यर्थः।

ननु विपुलस्यापि सोमस्य सकृदेव त्यागः कुतो न भवेदित्याशंक्य, किं लतावस्थायां त्यागः? किं वा रसावस्थायाम्? नाद्य इत्याह—**नै चेति**। ग्रावभिः कुट्टनमभिषव इति स्पष्टमिति मत्वा, वस्त्रेण सोमरसस्य गालनं शोधनमाप्लावनमिति व्याचष्टे—**गालयतीत्यर्थ इति**। रसभूयस्त्वाय जलसेकविधाना- P 699-1 दपि न लतारूपेणोपयोग इत्याह—**तस्य चेति**। न द्वितीय इत्याह—**न चेति**। **न चैकैकस्मिन् इति**। अवशिष्टस्य त्यागे च तावद्रसकल्पनमदृष्टार्थं स्यादिति भावः।

ननु देवतानां ग्रहणान्वये यागान्वयाभावाद्यागे देवता न स्यादित्यत आह—**ग्रहणमात्रे त्विति**। अयं भावः—'ऐन्द्रवायव'मित्यादयो देवता- P. 699-7 तद्धिताः। न तु सम्बन्धसामान्यतद्धिताः। विशेषविहितस्य झटित्युपस्थितेः। 'मरुत्वतीय'मित्यादौ छप्रत्ययस्य देवतात्व एव विहितत्वेन तत्समभिव्याहाराच्च। न च ग्रहणे इन्द्रवाय्वादीनां देवतात्वं सम्भवति। सूक्तहविषोरेव तन्नियमात्। अतस्तत्र श्रूयमाणं देवतात्वं यागान्वयेनैव पर्यवस्यतीति।

**कथं तर्हीत्यादिग्रन्थः**[2] **केषुचित्कोशेषु दृश्यते**। स प्रक्षिप्तः। सन्दर्भवैकल्यादिति ध्येयम्। ननु प्रादेशमात्रेऽपि पात्रे विस्ताराधिक्येन कृत्स्नस्य

---

१. कल्पतरौ 'लतारूपेण त्यज्यन्ते' इति पाठः।

२. 'कथं तर्हीं'त्यादिग्रन्थानुपूर्वी न ज्ञायते कोशे अदर्शनात्। ऊहितुमपि न शक्यते इति ध्येयम्।

P. 699-13 सोमरसस्य सम्मानं भविष्यति, नेत्याह—प्रादेशमात्र इति। कथं यागावृत्तिरिति। एकीकृत्य सकृत् त्यागसम्भवादिति भावः। सोमयागवैषम्यमाग्नेययागस्य दर्शयितुमिह त्वित्यादिटीका। तां पुरोडाशद्रव्यस्य चेत्युत्तरटीकया व्रीहियवसमुच्चयाभावे हेत्वन्तरकथनात् तदानुगुण्याय समुच्चयाभाव एव हेतुकथनपरत्वेन व्याचष्टे—व्रीहियववाक्य इति। तथा च यागाभ्यासकल्पनाहेतुसमुच्चयप्रमाणाभाव इति टीकार्थ इति भावः।

तत्र च यवसमुच्चय इति। पुरोडाशचोदनाबलेनैव नीवारादावैकैकश्येन, समुच्चयेन च, पक्षप्राप्तेर्व्रीहिभिरेवेति नियमविधिना सर्वेष्वपि प्रयोगेषु पुरोडाशस्य व्रीहिमात्रनिर्वर्त्यत्वावगमेन द्रव्यान्तराणामिव तत्साहित्यस्यापि निवर्तितत्वेन यवसमुच्चये श्रुतिबाधः स्यादित्यर्थः।

P. 700-5 एकपुरोडाशेति। तथा च विधिद्वयेनापि व्रीहियवयोः परस्परनैरपेक्ष्येण पुरोडाशनिर्वर्तनद्वारा यागाङ्गत्वे सर्वेष्वपि प्रयोगेष्वविशेषेण बोधिते परस्परविरुद्धतया द्वयोरपि शास्त्रयोरप्रामाण्यापत्तौ यवप्रयोगव्यतिरिक्तविषये व्रीहिशास्त्रस्य, व्रीहिप्रयोगव्यतिरिक्तविषये यवशास्त्रस्य चानुष्ठापकत्वमिति पाक्षिकमप्रामाण्यमङ्गीकृत्य विकल्प इष्यते। तथा च वार्तिकम्—'सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः' इतीति भावः।

प्रकृते गत्यन्तरसम्भवादिति। नाड्यादीनां जीवनिलयनं प्रति परस्परं नैरपेक्ष्ये प्रमाणाभावेन सापेक्षतायां प्रमाणसत्त्वेन च समुच्चयसम्भवादित्यर्थः। नन्वपिचशब्दस्य विकल्पे अप्रसिद्धेः कथं न विकल्पे इति टीकेत्यत आह—विकल्पेति। पूर्वोक्तयुक्त्या प्रकृतार्थनिर्णयः, अनया वा युक्त्येति विकल्पफलके युक्त्यन्तरसमुच्चये, नायमपिचशब्द इत्यर्थः।

किं नाडीपुरीतद्ब्रह्मणां मुख्यतया जीवाधारत्वेन तुल्यार्थत्वमौपचारिकतया वा? नाद्य इत्याह—जीवोपाधिरिति। आधारत्वोपचारस्य निष्प्रयोजनत्वान्मुख्याधारत्वपरैव श्रुतिरिति शङ्कते—ननु सर्वदेति। यावद्यावदुपाधिविगमस्तावत्तावत् ब्रह्मभावाभिव्यक्तिरिति स्फोरयितुं तदुपचार इति न निष्प्रयोजनत्वमिति

P. 702-2 परिहरति—तत्राहेति। द्वितीयं शङ्कते—ननु तादात्म्यादिति। औपचारि-

1. अत्र कल्पतरौ 'ततोऽल्पत्वं विशेषणद्वयेनोक्तम्।' इति पाठः।

कमप्याधारत्वं भिन्नकालत्वान्न विकल्पावहमिति परिहाराभिप्रायमाह—**सुषुप्तिप्राकाल इति**। समप्रधानतया समुच्चयनिरासस्य प्रयोजनमाह-**समप्रधानत्वे हीति**। P. 702-4

'तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवती'ति श्रुतिमुपादाय व्याचष्टे—**तद्यत्रैतदितीत्यादिना**। पूर्ववाक्ये 'एता आदित्यस्य रश्मय उभौ लोकौ गच्छन्ति इमञ्चामुञ्चामुष्मादादित्यात् प्रतायन्ते, ता आसु नाडीषु सृप्ता' इति पूर्ववाक्य इत्यर्थः। **एतच्छब्देन सुप्तस्य निर्देशे** सुप्तं सुप्त इत्यनन्वय इत्यत आह—**ओदनपाकमिति**। न केवलं प्रयोगनिर्वाहः, प्रयोजनमप्यस्तीत्याह—**स्वा(र)पस्येति**। 'कुत एतदागा'दिति श्रुत्यभिप्रायमाह—**सुप्तमित्यादिना**। 'आगमनमागा'दित्येत्त'दोदनपाकं पचती'तिवदित्याशयेनाह—**कृतवानित्यर्थ इति**। P. 703-3

॥ इति तदभावाधिकरणम् ॥

---

## ॥ अथ कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥

### सू०॥ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

**आपवादिकीं सङ्गतिमाह**—**श्लोकेन**। **आत्यन्तिकत्वेनेति**। आत्यन्तिकत्वात्मना उत्सृष्टेत्यर्थः। मुक्ताविव सुषुप्तावपि **सत्सम्पत्तेरात्यन्तिकत्वमुत्सर्गतः प्राप्तमपोद्यत** इति भावः। सुषुप्तिकालीना सत्सम्पत्तिरात्यन्तिकी भवितुमर्हति, सत्सम्पत्तित्वान्मुक्तिकालीनसत्सम्पत्तिवत्। तथा च जीवोपाधेरविद्याया अपि नाशेन जीवस्य पृथगवस्थानाभावात् समुद्रमध्यनिक्षिप्तजलबिन्दुन्यायेन स वा अन्यो वा पुनरुत्तिष्ठतीति पूर्वपक्षं कृत्वा, सुषुप्तावप्यविद्यासद्भावसमर्थनेन तस्यैवोत्थानमिति समर्थ्यत इत्यर्थः। P. 703-4

---

१. अत्र कल्पतरौ पूर्ववाक्ये, 'उपचरितुं शक्यते, न सुषुप्तौ' इति, उपरि, 'समप्राधान्यं निरस्तं' इति च पाठः।

२. 'स्वारस्येति' इति प्रतीको मूले न दृश्यते। अपितु 'स्वापस्य द्विप्रकारत्वात् सुषुप्तसिद्ध्यर्थं विशेषणं समस्त इति' इति पाठः कल्पतरौ दृश्यते, तत्र समस्तविशेषणप्रयोजनं वर्ण्यते। 'न केवलं प्रयोगनिर्वाहः, प्रयोजनमप्यस्तीत्याह, इत्यवतारिकानुगुणः कल्पतरौ पाठो न दृश्यते। 'स्वापस्येति' इति शोधनेऽपि, स्वापस्येति ग्रन्थेन 'एतत्सुप्त' इत्यत्र एतच्छब्दप्रयोजनं न वर्णयितुं शक्यते।

P. 703-5 **आक्षेपिकी वा सङ्गतिरित्याह—अथ वेति । ब्रह्मण** इति पञ्चम्यन्तम् । **सुषुप्तस्य नाडीपुरीततोरिति ।** 'एवमेवैतस्मादात्मन' इत्यादिश्रुतिभिः प्रबोधकाले जीवस्य ब्रह्मणः सकाशादुत्थानं गम्यते, न तु सुषुप्तिकाले यस्य सत्संपत्तिः तस्यैव । तद्बोधकपदाभावात् । परन्तु यस्योत्थानं तस्य पूर्वं सत्सम्पत्तिरवश्यंभाविनी । तथा च तस्यैव जीवस्य सत्सम्पत्त्या पुनरुत्थानं, तस्य नाड्याद्यवस्थानेऽपि जीवान्तरस्यैव वा सत्सम्पन्नस्य पुनरुत्थानमित्युभयथापि तस्याः श्रुतेरुपपत्तेः, न तद्बलात्सुषुप्तौ जीवस्य सत्सम्पत्तिनियम इत्याक्षेपपूर्वकं **स एव वा अन्यो वा पुनरुत्तिष्ठतीति** विचार्यत इत्यर्थः ।

**स्वाप्नजीववदिति ।** स्वप्नकल्पितजीववदित्यर्थः । **अनवबोधविजृम्भितत्वमेव** दर्शयति—**अवस्थात्रयेति । स एवेति दुःसम्पादमिति, स** P. 704-3 **वा अन्यो वेति टीकां** व्याचष्टे—**स एवेत्येतदिति ।** 'सोऽहमस्मी'त्यात्मैकत्वप्रत्यभिज्ञोपन्यासार्थं सूत्रे अनुग्रहणमिति परिहरति—**इत्याशंक्याहेति । द्वे अहनी इति ।** द्वे अहनी समाहृते इति विग्रहे, समाहारे द्विगौ, 'राजाहस्सखिभ्यष्ट'जिति समासान्तप्रत्यये टचि, 'रात्राह्नाहाः पुंसी'ति पुंलिङ्गत्वे च **द्व्यह** इति रूपमित्यर्थः ।

**टीकायां—यो हि व्याघ्रयोनिस्सुषुप्तः स बुद्धान्तमागच्छन्नित्यर्थः । स एवोपाधिरिति ।** अविद्याया उपाधित्वे तत्सम्बन्धस्याप्युपाधित्वादिति भावः । अन्तःकरणादिकमेव जीवोपाधिरिति मन्वानः शङ्कते—**यदीति ।** अन्तःकरणादेरुपाधित्वेऽपि न जीवनाश इति गूढाभिसन्धिः परिहरति—**सुषुप्तादाविति ।** अभिसन्धिमजानानः शङ्कते—**नन्विति । टीकां** व्याकुर्वन् आभिसन्धिमुद्घाटयति—**अविद्येति ।** अन्यस्य कथमन्यभावेन प्रभवनमत आह—**प्रकृतीति ।** 'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ती'ति श्रुतिगतं पदमादाय व्याचष्टे—**अहरह इति ।** 'त इह व्याघ्रो वे'त्यादिश्रुतिं व्याचष्टे— P. 705-10 **ये प्राणिन इति ।**

॥ इति कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥

१. अत्र कल्पतरौ 'सुषुप्तावुपाधिनाशान्नश्यतीत्यत आह' इति, पश्चात् 'न तु सर्वात्मना नश्यतीत्यर्थः' इति च शोधनीयम् ।

## ॥ अथ मुग्धाधिकरणम् ॥

सू०॥ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ १० ॥

सङ्गतिं सूचयन् पूर्वपक्षमाहेत्याह—पूर्वत्रेति। ऐक्यप्रत्यभिज्ञा- P. 705-14 नादिति। शरीरगतनिश्चेष्टत्वादिलिङ्गानुमितेन विशेषज्ञानाभावेन सैवेयमस्य सुषुप्तिरिति या मुग्धौ सुषुप्त्यभेदानुमितिस्तद्रूपादैक्यप्रत्यभिज्ञानादित्यर्थः ॥ व्याप्येन विना व्यापकसत्त्वं न तयोर्व्याप्तिविघटकं, कार्यकारणयोर्यत्र व्याप्तिस्तत्र परस्परव्याप्त्यभावस्य तद्भावानुगुणत्वात्, कार्यात् पूर्वं स्थिरस्य सत एव कारणत्वाभ्युपगमादित्याह—सत्येवेति। अद्वयेति। तत्त्वंपदार्थयोरैक्यसिद्ध्यर्थं पूर्वपक्षे जाग्रत्स्वप्नसुषुप्तिमरणावस्थाचतुष्टयराहित्यमेव चिन्तनीयम्। सिद्धान्ते तु मोहावस्थाराहित्यमपीति फलभेद इत्यर्थः।

॥ इति मुग्धाधिकरणम् ॥

---

## ॥ अथ उभयलिङ्गाधिकरणम् ॥

सू०॥ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

सू०॥ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

सू०॥ अपि चेवमेके ॥ १३ ॥

सू०॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

सू०॥ प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

सू०॥ आह च तन्मात्रम् ॥ १६ ॥

सू०॥ दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

सू०॥ अत एव चोपमा सूर्यकादिवत् १८ ॥

---

1. कल्पतरौ 'विशेषविज्ञानाभावाविशेषेणे'ति पाठः।

सू० ॥ अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

सू० ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥

सू० ॥ दर्शनाच्च ॥ २१ ॥

'सर्वकर्मा सर्वकाम'-इत्यादिश्रुते'रस्थूलमनण्वि'त्यादिश्रुतेश्च भिन्नाभिन्नं ब्रह्म, तत्र च भिन्नरूपं नोपास्यम्। किन्त्वभिन्नरूपमेव चिन्तनीयमिति निरूपणार्थमेवेदमधिकरणम्। न तु भिन्नरूपनिषेधार्थं, इति ये मन्यन्ते, तन्मतं स्वयं दूषयति—**यस्तु[अत्र]कश्चिदिति**। कि'मभिन्नमेवे'त्युपास्यं ब्रह्म? किं वा 'अभिन्नं ब्रह्मे'त्येतावन्मात्रेण? नाद्य इत्याह—**तस्येति**। द्वितीयं शङ्कते—**भिन्नरूपमिति**। **सर्वविज्ञानेति**। भिन्नाकारस्यापि सर्वशब्दार्थे प्रविष्टत्वादिति भावः ॥

P. 707-3

भिन्नाभिन्नं ब्रह्माभ्युपगच्छतः समन्वयोपि तत्रैवेति तत्साधनं व्यर्थं स्यादिति दूषणान्तरमाह—**भेदस्य चेति**। सूत्राननुगुणं चेदं मतमिति सूचयन्नुपसंहरति—**तस्मादिति**। **श्लोके** इह अधिकरणे, **भेदस्य मिथ्यात्ववर्णनान्निर्विशेषं ब्रह्म याथात्म्यमबाधितस्वरूपं प्रतिपद्यते**[1]। प्राप्नोतीत्यन्वयः। **सिद्धान्तादिति**। स्वभावतो निर्विशेषस्यापि ब्रह्मणः परोपाधिकसविशेषत्वस्य सिद्धान्तेऽप्यभ्युपगतत्वात् तथैव पूर्वपक्षवर्णने तस्य **सिद्धान्तात्** को भेद इत्याशंक्य, परोपाधिकस्यापि पारमार्थिकत्वं **पूर्वपक्षे विशेषमाहेत्यर्थः**[2]। द्विविधदृष्टान्तदर्शनान्निर्णयायोग इति शङ्कते—**नन्विति**। प्रमाणबोधितत्वेन सत्यत्वमेव निर्णीयत इति परिहरति—**तत्राहेति**।

किमद्वैतपरश्रुतिबलात् ब्रह्मणः सविशेषत्वं? किं वा उपासनश्रुतिबलात्? अथ वा 'द्वा सुपर्णे'त्यादिश्रुतिवशादिति विकल्प्य, प्रथमं निराकर्तुं **सविशेषतायामित्यादिटीका**। तत्र सतिसप्तमीति व्याचष्टे—**पृथिव्यादीति**। **तामनूद्येति**। सविशेषतामनूद्य जीवब्रह्मैक्यप्रतिपादनमुखेनाद्वैतप्रतिपादने सविशेषताया मिथ्यात्वमेव पर्यवस्यति। अन्यथा श्रुतितात्पर्यविषयीभूताद्वैतायोगादिति भावः। स्वाभाविकैकत्वस्य नौपाधिकभेदविरोधित्वमिति शङ्कते—

P. 709 3

१. 'प्रतिपाद्यते' इति साधु इति भाति।

२. अत्र कल्पतरौ 'अन्यतरत् परोपाधिकं' इति पाठः।

**नन्विति** । औपाधिकस्यापि सत्यत्वाङ्गीकारादस्ति समानसत्ताकयोर्भेदाभेदयोर्विरोध इति परिहरति—**अत आहेति** । P. 709-4

नन्वेकत्वमेव वेदान्तप्रतिपाद्यमिति कोऽयं नियमः ? नानात्वमेव प्रतिपाद्यं किं न स्यात् ? तथा च विनिगमनाविरहादुभयोरपि तात्पर्येण श्रुतिप्रतिपादितत्वे विरोधोऽकिञ्चित्कर इत्यभिप्रेत्य शङ्कते—**ननु[1] भवत्विति** । प्रमाणसत्त्वे कथं तन्निषेध इत्यत आह—**व्यावहारिकेति** । सर्वोपाधिप्रत्यस्तमितमद्वितीयत्वं वेदान्तप्रतिपाद्यं न कथञ्चिदपि सिद्धमिति परिहाराशयमाह—**उपाधीति** । द्वितीयं शङ्कते—**नन्विति** । आरोपितरूपेणाप्युपास्तिसम्भवान्न तावता सविशेषपरत्वमित्याह—**उपास्तीति** ।

तृतीयं शङ्कते—**नन्विति[2]** । तथा च भेदस्य सत्यत्वे सति बाधकाभावात् सविशेषत्वमपि सत्यमिति भावः । एवं भेदपरत्वेन भासमानं श्रुत्यन्तरमपि न तत्परं प्रयोजनाभावात् । किन्तु भेदस्यौपाधिकत्ववर्णनपूर्वकमभेदपरमेवेत्याह—**एवमिति** । **टीकायां—किं सल्लक्षणमित्यादिना** संशयप्रदर्शनमयुक्तम् । भाष्यविरुद्धत्वादित्याशंक्य, यादृशमेकदेशिमतं तादृशमेव संशयं भाष्याभिमतं दर्शयति **टीकाकारो** न तु भाष्यविरुद्धमित्याशयेनाह—**एक[3]देशिमत इति** । P. 710-4 P. 711-1

नन्वनया टीकया—**किं सल्लक्षणं ब्रह्म, उत बोधलक्षणमिति भाष्यं, उतेत्यस्याप्यर्थकत्वमाश्रित्य, किं सल्लक्षणं प्रकाशलक्षणमपि ब्रह्मेति** पूर्वपक्षकोटिप्रदर्शनपरत्वेन व्याख्यातम् । **उतोभयलक्षणमिति भाष्यञ्च किं सल्लक्षणमेव ब्रह्म प्रकाशलक्षणमेवेति** द्वेधा सिद्धान्तकोटिप्रदर्शनपरत्वेन व्याख्यातम् । तत्र, **न च सल्लक्षणमेवेत्यादिभाष्येण** प्रत्येकसमुदितपक्षनिराकरणपूर्वकमथ **सत्तैव बोधो बोध एव च सत्तेति** सिद्धान्तपक्ष-

---

१. कल्पतरौ 'ननु' इति नास्ति ।

२. कल्पतरौ अनन्तरवाक्ये 'बुद्ध्युपाधिककर्तृत्व' इति, 'पैङ्ग्युपनिषदि' इति च शोधनीयम् ।

३. अत्र टीकायां 'किं सल्लक्षणं प्रकाशलक्षणं च ब्रह्म, किं सल्लक्षणमेव ब्रह्म, उत प्रकाशलक्षणमेवेति ।' इति पाठः शोधनीयः । कल्पतरावपि 'वचनव्यक्तीराह—किं सल्लक्षणमिति । किं सल्लक्षणमेवेति ।' इति शोधनीयम् ।

मुपन्यस्य, तस्यार्थस्य पूर्वाधिकरणेनैव सिद्धत्वात् संशयानुन्मेष इति निराकृततत्त्वा-दयमेव पक्षः **एकदेश्यभिमतः सिद्धान्त** इति गम्यते। तथा च, कथं सल्लक्षणमेवेत्यादिकोटिद्वयेप्येवकार इत्यत आह—**किं सल्लक्षणमेवेत्ये-वकार इति।**

P. 711-1

**किं सल्लक्षणं प्रकाशलक्षणं चेति** पूर्ववाक्ये चशब्दबलेन सतः प्रकाशरूपात्, प्रकाशस्य सद्रूपाच्च यो भेदोऽवगतः तद्व्यवच्छेदार्थमेवकार इत्यर्थः। अत एव सत्ताप्रकाशरूपद्वयोपेतं ब्रह्मेति पूर्वपक्षात् सिद्धान्तस्य भेदं इत्याह—**ततश्चेति।** सद्बोधस्वरूपैक्येऽपि प्रतीतिवेलायामुद्देश्यविधेयभेदमा-श्रित्य वाशब्द इति ध्येयम्। **अवैयर्थ्यात् ब्रह्मणि सच्छ्रुतेरिति** टीकां योजयति—**सच्छ्रुतेरिति।**

ननु पूर्वपक्षिणा सत्ताप्रकाशयोरेकत्वानभ्युपगमात् कथं **सत्तेत्यादि-टीकेत्याशंक्य, पूर्वपक्षसूत्रानुरोधेन** तस्यापि पक्षस्योत्थितिरित्यभिप्रेत्य सा **टीके-**त्याशयेनाह—**प्रकाशवच्चेति।** ननु भाष्येण **नाप्युभयलक्षणमेव ब्रह्मेति शक्यं वक्तुमिति** पूर्वपक्षनिराकरणं प्रतिज्ञाय, **पूर्वाभ्युपगमविरोधप्रसङ्गा-दिति** हेतुरुक्तः। स न युक्तः। पूर्वपक्षिणं प्रति पूर्वाभ्युपगमविरोधप्रसङ्ग-नायोगादित्यत आह—**पूर्वाभ्युपगमेति।**

P. 712-3

न चैवं **यदि तावदनेकलिङ्गत्वमित्यादिभाष्येण** पुनरुक्तमिदं भाष्यं स्यादिति वाच्यम्। तेन भाष्येण पूर्वपक्षानुत्थानादधिकरणवैयर्थ्यमुक्तम्। तस्यैव पूर्वपक्षिणापि बहुश्रुतियुक्तिविरोधेन ब्रह्म सल्लक्षणमेवेति वा, बोधलक्षणमेवेति वा वक्तुमशक्यत्वादुभयलक्षणमेवेति वक्तव्यम्, तथा च तस्य भेदगर्भत्वे पूर्वेणैव निरस्तत्वादनुत्थानम्; अखण्डरूपत्वे च तस्यैव सिद्धान्ततया नोभयलक्षणत्वपूर्वपक्ष इति संशयानुन्मेष इत्येवं विवरणार्थं **न च सल्लक्षणमेवेत्यादिभाष्यस्य** प्रवृत्तत्वेन पौनरुक्त्यशङ्कानवकाशात्।

**सर्वथाप्यानर्थक्यमित्यारभ्य, सूत्राणि त्वित्यतः प्राक्तनभाष्यस्य सत्ताप्रकाशयोरित्यादिटीकया** अयमेवाभिप्रायो वर्णितः। ननु पराभिमताधि-करणान्तरवैयर्थ्यकथनप्रस्तावे, **परमार्थतस्त्वित्यादिटीकया** स्वमते अभेदस्य

१. कल्पतरौ 'तदेतत् अधिकरणरचनम्' इति पाठः।

पारमार्थिकत्वसाधनमनवसरदुस्स्थमित्याशंक्य, शङ्कोत्तरत्वेन सा टीका प्रवृत्तेति वक्तुं शङ्कोत्थानाय परसिद्धान्ते दूषणान्तरं दर्शयति—**यश्च सत्तेति। तथा सतीति**। वाच्यभेदाभावे सतीत्यर्थः। P. 712-5

**अनुबन्धभेदात्त्विति** टीकां व्याचष्टे—**अनुबन्ध इति। अस्येति** पदेन शक्नोतीति पूर्ववाक्यनिर्दिष्टः समर्थ उच्यत इत्याह—**अधिकारिण इत्यर्थ इति। जर्तिलाः** आरण्यकतिलाः। **गवीधुकाः** आरण्यकगोधूमाः। सूत्रव्याख्यानेन सिद्धान्तमाह—**अनाहुतिरिति। स्वशेषित्वेन न कल्पयेत्।** न गृह्णीयादित्यर्थः। **तस्योच्छिन्नत्वादिति** टीकाभिप्रायमाह—**त्वयापीति। न च ज्ञानाधाने इति** टीकायां—चशब्दस्य विधेरुपयोगश्च नेत्येवमन्वयमभिप्रेत्याह—**तत्वप्रतिपादनस्येति**। P. 714-14

**अभ्युपगम्यमानेपि चेति** भाष्ये युक्त्यन्तरसूचनार्थं **अपिचेति** पृथक्कृत्य प्रतीकग्रहणं, **टीकायामपिच ब्रह्मवाक्येष्विति। नहि शब्दान्तरादिभिः प्रमाणैर्नियोगभेदेऽवगम्यमाने सर्वत्रैको नियोग इति शक्यमाश्रयितुमिति** भाष्यं व्याख्यातुं, **साध्यानुबन्धभेदादेकनियोगत्वमसिद्धमिति टीका।** तया च साध्यानुबन्धभेदान्नियोगभेद इत्युक्तं भवति। तदयुक्तम्। गुरुमते साध्यादिभेदस्य शास्त्रभेदकत्वेन नियोगभेदकत्वानभ्युपगमादित्याशंक्य, **नियोग**शब्देन नियोजकतया शास्त्रमेवोच्यत इत्याशयेनाह—**तैस्साध्यैर्नियोगाः 'पिष्टं संयौती'त्यादिशास्त्राणीति**।

'यश्चायमस्या'मित्यादिश्रुतिं व्याचष्टे—**अस्यां पृथिव्यामिति**। तत्र 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुष' इत्यंशं व्याख्याय, 'सर्वेषां भूतानां मधु' 'सर्वाणि भूतानि मध्वि'ति वाक्यद्वयानुषङ्गेण तस्यान्वयमाह—**तावुभावपीति**। व्याख्यातखण्डद्वयानुषङ्गे हेतुमाह—**चशब्दादिति**। 'यश्चाय'मिति चशब्दात्। मधुत्वविधानोपक्रमाच्चेत्यर्थः। P. 715-1

---

१. कल्पतरौ 'तथासती'ति पाठः शोध्यः। उपरि 'तस्योत्पत्तेः' इति च।

२. कल्पतरौ उपरि 'विध्येकवाक्यता हि प्रत्यक्षा' इति, 'तदनु ततोऽपि' इति च शोधनीयम्।

३. टीकायां 'प्रमाणापेक्षस्ये'ति पाठः।

P. 715-1 इदानीं 'अयमेव स योऽयमात्मे'ति श्रुतिशेषं व्याचष्टे—**सोऽधिदैवेति** । 'मनसैवेदमाप्तव्य'मित्यादिश्रुतिं व्याचष्टे—**शास्त्राचार्येति** । **नानेवे**त्यस्य विवरणमाभासं **नानारूपमिति** । अपारमार्थिकमित्यर्थः । 'भोक्ता भोग्य'-मित्यादिश्रुतिं व्याचष्टे—**यो भोक्तेति** । 'तदेतत् ब्रह्मापूर्व'मित्यादिश्रुतिं व्याचष्टे—**तद्ब्रह्मेति** । **स्वयं न कारणमिति** । वस्तुसत्कारणत्व-रहितमित्यर्थः ।

**एवं तावदिति** । 'तदेतत् ब्रह्मे'त्यस्मिन् वाक्ये तद्ब्रह्मेत्यनेन ब्रह्मानूद्य जीवपरेणैतच्छब्देन तस्य जीवत्वबोधनादित्यर्थः । 'स होवाचाधीहि भो इति स तूष्णीं बभूवे'ति श्रुतिगतमधीहि भो इति पदद्वयं व्याचष्टे—**अधीहीति** । 'ज्ञेयं यत्त'दिति स्मृतावुत्तरार्धं व्याचष्टे—**आदिरस्येति** । 'पुरश्चक्रे द्विपद' P. 715-12 इत्यादिश्रुतिं व्याचष्टे—**पुरः पुराणीति** । **लिङ्गशरीरस्येति** । लिङ्गशरीरा-न्तर्गतानां प्राणमनोविज्ञानानामित्यर्थः ।

॥ इति उभयलिङ्गाधिकरणम् ॥

---

## ॥ अथ प्रकृतैतावत्त्वाधिकरणम् ॥

सू०॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥

सू०॥ तदव्यक्तमाह हि ॥ २३ ॥

सू०॥ अपि च संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

सू०॥ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥

सू०॥ अतोऽनन्तेन तथाहि लिङ्गम् ॥ २६ ॥

सू०॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

सू०॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

सू०॥ पूर्ववद्वा ॥ २९ ॥

---

1. कल्पतरौ 'किंचिदपि नाना नास्ति' इति पाठः ।

सू०॥ प्रतिषेधाच्च ॥ ३० ॥

पूर्वाधिकरणेन साकमाक्षेपसङ्गतिमाह—**निषेधेति**। निषेधश्रुतिबलात् P. 716-1 प्रपञ्चाभाववत् ब्रह्माभावोऽपि स्यादित्येवं प्रमाणस्वभावाधीनमाक्षेपमुक्त्वा, प्रमेय-स्वभावाधीनमपि तमाह—**अथवेति**। चशब्दार्थवदेवकारार्थस्यापि मूर्तामूर्तयोः प्रत्येकमेवान्वय इति मत्वा शङ्कते—**समुच्चये सतीति**। मूर्तञ्चामूर्तञ्चेति पद-द्वयार्थे एवकारान्वय इति परिहरति—**इत्याशंक्याहेति**।

नन्वेवमेवकारो व्यर्थः, तृतीयरूपाभावस्य द्वे वावेत्यनेनैव सिद्धेरित्या-शंक्यामूर्तसमुच्चितमेव मूर्तं मूर्तसमुच्चितमेवामूर्तमित्येवं द्वे एव ब्रह्मणो रूपे इति दर्शयितुमेवकार इत्याह—**सर्वदेति**। **ईत्यर्थ इति**। एतत्प्रयोजनक **एवकार** इत्यर्थः। अवयवानामितरेतरानुप्रवेशविशेषस्य स्थूलीभावहेतुत्वं लोकप्रसिद्ध्या दर्शयति—**पटादेर्हीति**।

**अनादर इति**[3]। मूर्तकोटिनिवेशे अनादर इत्यर्थः। इण् गतावित्यस्य P. 716-10 शत्रन्तस्य रूपं यदितीति मनसि निधाय विग्रहप्रदर्शनार्थं—**एति गच्छतीत्यादि-टीका**, तत्र फलितमर्थमाह—**गच्छदित्यर्थ इति**। तर्हि गमनरहितस्या-काशस्य कथं **यदित्यनेनाभिधानमित्याशंक्य**, गन्तृवाचकेन **यदितिशब्देन** तद्धर्म एकत्रैवावस्थानाभावो लक्ष्यत तति तद्बलाद्व्यापित्वं लभ्यत इत्याशयेन **टीकायां व्याप्नोतीति** प्रतिपदमुपात्तमित्याशयेनाह—**ततश्चेति**। **त्यदिति वक्तव्य इति**। स्वमोर्लुकि त्यदाद्यत्वस्याप्रसङ्गादिति भावः।

**पञ्चभूतकार्यमिति**। समष्टिलिङ्गशरीरस्य पञ्चभूतकार्यत्वात् तदभि-मानिनो हिरण्यगर्भस्यापि पञ्चभूतकार्यत्वमिति भावः। **सामान्यं समानो धर्मः**। **यदन्यत् प्राणेत्यादिटीका** फलतः श्रुत्यर्थकथनपरेत्याह—**यश्चायमिति**। चक्षुरिन्द्रियस्य तैजसत्वेन भूतान्तररसत्वमनुपपन्नमित्यत आह—**गोलक-मात्रमिति**। लिङ्गशरीरस्य स्थूलशरीरे सर्वत्र वर्तने हेतुमाह— P. 717-1

---

१. कल्पतरौ 'विशेषेषु निषिद्धेषु' इति शोधनीयम्।

२. अत्र कल्पतरौ 'मूर्तं चैवामूर्तं च' इत्येतदनन्तरं 'मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यं च' इति त्रुटितम्। 'एतद्यदेतत्त्यं' इति, 'य एष एतस्मिन्' इति च शोधनीयम्।

३. कल्पतरौ 'प्रत्यक्षेणाग्रहणादनादरः' इति पाठः।

P. 717-1 **चैतन्यव्याप्तमिति**। चैतन्यं व्याप्तं येनेत्यर्थः। तथा च चैतन्यस्य चेतनायाः सर्वशरीरव्यापित्वात् तद्व्यापकमन्तःकरणमपि सर्वशरीरव्यापीत्यर्थः।

**करणात्मकस्येति** पदसूचितमनुमानं प्रकटयति—**रूपादीति**। क्रियात्वं हेतुरिति सूचयितुं **क्रियाभिरित्युक्तम्**। ननु हिरण्यगर्भस्य समष्टिलिङ्गशरीराभिमानिनो व्यष्टिलिङ्गशरीराभिमानित्वाभावात् कथं तस्य हिरण्यगर्भत्वोक्तिरित्यत आह—**आध्यात्मिकेति**। आध्यात्मिकलिङ्गशरीरान्तर्गतानां चक्षुरादीनां हिरण्यगर्भात्मकाधिदैविकलिङ्गशरीरान्तर्गतादित्यादिव्यष्टितया व्यष्टिसमष्टयोरभेदविवक्षया तथोक्तिरित्यर्थः। एवं तावद्धिरण्यगर्भात्मकसमष्टिलिङ्गशरीराभिन्नत्वाद्व्यष्टिलिङ्गशरीरस्य हिरण्यगर्भत्वमुक्तम्।

इदानीं 'मादित्यश्चक्षुर्भूत्वे'त्यादिश्रुत्या हिरण्यगर्भाभिन्नस्यादित्यस्य लिङ्गशरीरान्तर्गतचक्षुरनुग्राहकत्वेन तत्रावस्थानादागमादनुग्राह्यानुग्राहकयोरैक्यविवक्षया P. 717-3 तथोक्तिरित्याह—**अथवेति**। **अनुग्राहकत्वेन चक्षुष्यवस्थानमाश्रित्य हिरण्यगर्भस्येत्युक्तमित्यर्थः**। इदञ्च विशेषणं शङ्कानिरासार्थम्। तथा च लिङ्गशरीरस्य स्थूलशरीरव्यापित्वेऽपि तदभिमानिनो हिरण्यगर्भस्य श्रुत्या दक्षिणाक्षिस्थानत्वावगमात् तदभिन्नस्य लिङ्गस्यापि दक्षिणाक्षिस्थानत्वमुपपद्यत इति न यथोक्तशङ्कावकाशः। तदिदमाह—**विशेषावस्थानमिति**। लिङ्गस्य चक्षुषि **विशेषेणावस्थानं** लोकप्रमाणानवगतमपि तदभिमानिदेवताद्वारा शास्त्रीयमस्तीत्यर्थः।

**कार्यं शरीरमिति**। आध्यात्मिकाधिदैविकमूर्तरसत्वेनोक्ताभ्यां चक्षुर्गोलकसवितृमण्डलाभ्यां व्यष्टिसमष्टिस्थूलशरीरयोरुपलक्षणाद्द्विविधमपि शरीरं कार्यम्। एवं अमूर्तरसत्वेनोक्ताभ्यामक्ष्यादित्यपुरुषाभ्यां लिङ्गशरीरयोरुपलक्षणाद्द्विविधमपीन्द्रियं करणमित्यर्थः। **मूर्तामूर्तेति**। **मूर्तामूर्तविषयेण जागरानुभवेन जनितया वासनया जन्यं विज्ञानं** स्वप्नविभ्रमः। **तन्मयं** तद्विषयभूतमित्यर्थः। **तद्विचित्रैरित्यादिटीकां** व्याचष्टे—**तस्य हैतस्येति**।

P. 717-8 **रूपमादर्शयतीति**। महारजनादिरूपसमानं रूपमादर्शयतीत्यर्थः। **यथारूपमिति पाठे** तु सदृशरूपमित्यर्थः। **तया रक्तमिति** महारजनेन रक्तमिति

---

१. कल्पतरौ 'दृष्टान्तैरुपमां दर्शयति' इति पाठो दृश्यते। आभोगरीत्या 'दृष्टान्तैः रूपमादर्शयति' इति पाठः शोध्यः।

विग्रहे अन्प्रत्यये **माहारजनमिति** रूपमित्यर्थः। लिङ्गशरीरस्य स्वतोऽनुद्भूत-रूपत्वेऽपि कल्पितेन रूपेण हरिद्रादितुल्यरूपत्वमुपपद्यत इत्याह—**वासना-जन्येति**। **उद्भूतरूपाध्यासयोग्यः कोप्याकारो लिङ्गशरीरे तादात्म्ये-नारोप्यत** इत्यत्र युक्तिमाह—**वासनाजन्यभ्रान्तिवशादिति**। P. 717-10

स्वप्नविभ्रमस्य वासनाजन्यस्य यो विषयो गजादिर्नानारूपाध्यासयोग्य आकारस्स लिङ्गशरीरस्यैवारोपित आकारः अन्तःकरणपरिणामरूपत्वात् स्वप्न-प्रपञ्चस्य। ततश्च विचित्ररूपानुभवजन्यवासनाजन्यस्वप्नभ्रान्तिवशादेव विचित्र-रूपाध्यासयोग्यस्य स्थूलाकारस्य लिङ्गशरीरे तादात्म्येनारोपे तत्र कल्पितानां रूपाणां स्वप्ने प्रकाश इति युक्तं लिङ्गशरीरस्य हरिद्रादितुल्यरूपत्वमित्यर्थः।

**अतश्शब्दार्थमाहेति**। सत्यस्यापि यत्सत्यं तत्कथने सत्यकथनस्य हेतु-तया तस्य वृत्तत्वं **अतश्शब्दार्थ** इति दर्शयतीत्यर्थः। **सत्यसत्यस्य परमात्मन** इत्यत्र व्यावहारिकसत्यकथनानन्तर्योक्तिबलादेव सत्यस्य यत्सत्यं तस्य परमात्मनः कथनमित्यर्थो लभ्यत इत्याशयेनाह—**व्यावहारिकेति**।

इति न इति न इत्येवं सकलप्रपञ्चनिषेधाधिष्ठानत्वेनोपदिष्टात् ब्रह्म-णोऽन्यत् स्वरूपेण नास्तीति न वक्तुं शक्यं वियदादेः प्रमाणसिद्धत्वात्। अतः श्रुतौ **परमिति** विशेषणमित्याशयेनाह—**परमुत्कृष्टमिति**। तथा च ब्रह्मव्यतिरिक्तं परमार्थसत्यं नास्तीत्यर्थः। श्रुतिविरोधान्न पूर्वपक्षसम्भव इति शङ्कते—**ब्रह्मप्रति-षेधेनेति**। न्यायविरोधान्न श्रुतीनां ब्रह्मपरत्वमिति परिहरति—**आशङ्क्याहेति**। P. 718-3

ननु 'निर्विशेषं न सामान्य'मिति न्यायो यावद्विशेषाभावे सत्येव, प्रकृते च सत्सामान्यस्य ब्रह्मणो मूर्तामूर्तविशेषनिषेधेऽपि बोधरूपविशेषस्यानिषे-धान्न न्यायविरोध इत्याशंकां निराकर्तुं **टीकायां सद्बोधरूपं ब्रह्मेत्युक्तम्**। तद्व्याचष्टे—**बोधरूपत्वेनेति**। सत्सामान्यबोधविशेषयोरभेद एव। न त्वनु-वृत्तव्यावृत्तरूपतया सामान्यविशेषभावः। येन बोधं विशेषमाश्रित्य सत्सामा-न्यं वर्तेतेत्यर्थः। कथं तर्हि बोधस्य विशेषत्वम्? सतश्च सामान्यत्वमित्यत आह—**तच्चेति**। सतस्सामान्यात्मकत्वमित्यर्थः। P. 718-4

---

१. कल्पतरौ 'मध्ये अथशब्दार्थमाह अनन्तरमिति' इति पाठः। 'नह्येत-स्मादिति नेत्यन्यत्परमस्तीत्युत्तरवाक्यं' इति च पाठः।

न बोधमपेक्ष्य सतस्सामान्यत्वं, किन्तु पृथिव्यादिकमपेक्ष्य, सती पृथिवी सदाकाशं इत्यादिप्रतीतेः। अत एव 'द्वे एव ब्रह्मणो रूपे' इति ब्रह्मणस्सामान्यस्य मूर्तामूर्ते एव विशेषतया दर्शिते। एवं मूर्तामूर्तसाधारणतया भानाभावादेव बोधस्य विशेषत्वमपीति भावः। **निर्विशेषसामान्यं शशविषाणवन्न भवे**दित्यन्वयक्रमं वारयति—**निर्विशेषं यदिति**। **असत्येवेति**। शून्य एवेत्यर्थः। अविशेषेण सर्वनिषेधस्यैव न्याय्यत्वादेकतरनिषेधपक्षस्य कथमुत्थितिरित्यत आह—**कश्चिद्धर्मिणमिति**। ननु विशेषणत्वादेव योग्यत्वमसिद्धमित्यत आह—**अप्रमितत्वमिति**। तथा च वाङ्मनसागोचरस्य ब्रह्मणः प्रमाणगोचरत्वेन प्रमितत्वाभावात् सिद्धं योग्यत्वमिति भावः।

P. 718-6

**ब्रह्मगत इति**। सद्रूपेण मूर्तामूर्तरूपेण च ब्रह्मणि सामान्यविशेषभावोऽसिद्ध इत्यर्थः। **निषेध्या सत्तेति**। **निर्विशेषं** यत्तत्सामान्यं न भवेदित्येवं निर्विशेषस्य सामान्यात्मना या सत्ता निषिध्यते, सेत्यर्थः। नन्वस्ति प्रकृतेऽपि प्रतियोगित्वेन भावस्योपाश्रयणमिति शंकावारणाय **टीकां** व्याकुर्वन्नेवावतारयति—**भावमनुपाश्रित्येति**। निर्वचनीयस्य भ्रमसिद्धत्वमयुक्तमित्याशयेनाह—**सद्रूपत्वेनेति**। **न द्वितीय इत्याहेति**। अयोग्यत्वादिति भावः।

तदधिकरणपूर्वपक्षसिद्धमर्थमादाय **टीकां** योजयति—**तत्र यथेति**। **यागेषु येयजामहकरणस्य** येयजामह इति शब्दोच्चारणस्य, लोकतः प्राप्त्यभावेन 'यजतिषु येयजामहं करोती'ति **विधिनैव प्राप्तस्य नानुयाजेष्विति निषेधेन सर्वात्मना अनुयाजेषु वारयितुमशक्यत्वात्** विधिनिषेधोभयप्रामाण्याय **यथा विकल्प** इत्यर्थः।

अयोग्यविषयत्वात् ब्रह्मबोधकत्वेनाभिमतं शास्त्रं न तद्बोधजनकम्। किन्तु निषेधोपयोगितया कथञ्चित्तदुपस्थितिमात्रजनकमिति शङ्कते—**नन्वर्वाङ्म-**

---

१. कल्पतरौ पूर्ववाक्ये 'किंतु रूपद्वयवत् सन्निधानाविशेषात् ब्रह्मणोऽपीतिशब्देन प्रतिषेध्यत्वे नोपात्तत्वात्' इति पाठशुद्धिः। उपरि 'भाष्योक्तहेतूनां' इति पाठः।

२. एतदाद्याः अष्टौ प्रतीकाः 'अयं हीति' इति प्रतीकपर्यन्ताः कल्पतरुकोशे नोपलभ्यन्ते। महतः कल्पतरुग्रन्थभागस्य त्रुटितत्वमेतेन निश्चीयते। त्रुटितस्स भागः कदा कथं लभ्येत। अहो महान् प्रमादः पूर्वं कल्पतरुमुद्रापकाणां शोधकानां च। कल्पतरौ 'यच्च वाङ्मनसागोचरत्वेन प्रमाणविरोधाभावात् ब्रह्मणः प्रतिषेध इत्युक्तं, तन्न। तथा

**नसेति** । सिद्धवदशक्यत्वनिषेधसूचितं हेतुं दर्शयति—**यस्या बुद्धेरिति** । उपाधिमन्तरेण ब्रह्मणो वाङ्मनसागोचरत्वम्, तथा च यदा शब्दजन्या मनोजन्या वा बुद्धिरुदेति तदा तामेव बुद्धिमुपाधिमादाय निर्विशेषस्यापि ब्रह्मणस्तद्बुद्धिविषयत्वं सम्भवतीति **प्रथमसूत्रे**ऽभिहितत्वादित्यर्थः ।

किञ्च ब्रह्मणो वागाद्यगोचरत्वे तदुपस्थितिजनकत्वमपि वागादेरनुपपन्नम् । ततश्च तन्निषेधोऽप्यशक्य इत्याह—**यद्यवाङ्मनसेति** । **अप्रसिद्धत्वादिति** । तथा च सृष्टिश्रुतेर्भ्रमसिद्धप्रपञ्चानुवादकतया तत्परत्वाभावान्न तद्विरोधः प्रपञ्चनिषेधस्येति भावः । **अनुपपत्त्युक्तिः** । **नोपपद्यते इत्यनुपपत्त्युक्तिरित्यर्थः**। सूचकत्वमेव दर्शयति—**यदीति** । वेदान्तानां नेति नेतीति निषेधोपयोगिब्रह्मप्रसक्तिमात्रे सम्पादकत्वम् । न तु तत्प्रमापकत्वम् । 'जर्तिलयवाग्वा वे'त्यादिवाक्यानां निषेध्यप्रसक्तिमात्रसम्पादकानामपि वेदे दर्शनादिति शङ्कते—**ननु सर्वेति** । एकवाक्यताहेत्वाकांक्षाभावान्न सम्बन्ध इति परिहरति—**अत आहेति** ।

किं प्रतिषेधस्य सन्निहितप्रतिषेध्यालाभात्तदाकांक्षा? किं वा ब्रह्मणः प्रतिषेध्यस्य स्वरूपसमर्पणाय? अथ वा सन्निहितस्य प्रतिषेधायोग्यत्वात्? नाद्य इत्याह—**अयं हीति** । द्वितीयमाशंक्य निराकरोति—**यद्यपीत्यादिना** । P. 720-6 तृतीयं शङ्कते—**संनिहितमपीति** । तत्त्वावेदकत्वाभावात् प्रत्यक्षादिप्रमाणविरोधोऽकिञ्चित्कर इति परिहरति—**इत्याशंक्याहेति** । प्रत्युत तत्त्वावेदकप्रमाणविरोधात् ब्रह्मनिषेध एवाशक्य इति तुल्यत्वकथनव्याजेनाह—**ब्रह्मनिषेधेऽपीति** ।

**प्रतिपादनवैयर्थ्यमिति** । अप्रतिपादनेनैव तदभावसिद्धेस्तदर्थं निषेधशास्त्रमङ्गीकृत्य तदपेक्षितनिषेध्यप्रतिपादनं व्यर्थमित्यर्थः । **वाङ्मनसातीतत्वमपीति भाष्येण निष्प्रयोजनत्वमुक्तमित्यत्र** हेतुं दर्शयितुं **प्रक्षालनाद्धीति टीका** । तत्र **न्यायादित्यस्य** न्यायोदाहरणादित्यर्थ इत्याह—**अत्र लिङ्गमिति** । P. 720-12

---

सति प्रतियोग्यप्राप्त्या निषेधायोगादित्याह—न चासत्यामिति ।' इति ग्रन्थो वर्तते । तत्र 'नचासत्यामिति' इति प्रतीकस्थाने 'न चावाङ्मनसगोचर इति' इति प्रतीकधारणं उचितम् । तदनन्तरमेव 'अयं हि निषेधः' इति ग्रन्थात् पूर्वं आभोगधृतप्रतीकैरुपलक्षितो महान् ग्रन्थभागः त्रुटितः । स च कल्पतरुकोशानन्विष्य परिश्रमेण संपादनीयः पण्डितैः ।

१. कल्पतरौ 'प्रमाणविरोधात्' इति, 'प्रमाणविरोधः' इति च पाठः ।

वाङ्मनसगोचरत्वनिषेधस्य प्रतिपा(दनं)[दनीय]ब्रह्मप्रतिपादनोपक्रमत्वोक्त्या तस्यापि

P. 720-12 तत्प्रतिपादकत्वं सूचितं, तद्विशदयति—**वाङ्मनसेति** ।

**प्रकृतशब्दस्य** प्राधान्यार्थकत्वं प्रकटयति—**प्रकर्षेणेति** । **प्रकृतमित्यनुषङ्ग** इति वक्तव्ये तत्रानुषक्तस्यापि **प्रकृतशब्दस्य** प्राधान्यमर्थ इति सूचयितुं **प्रधानपदस्यापि** अनुषङ्ग उक्तः । **सूत्रशेषव्याख्यानव्याजेन,** तद्व्याख्यानभाष्यं व्याख्यातुं **ततोऽन्यदित्यादिटीका** । तत्र **सूत्रे अन्यशब्दस्य** पाठभ्रमं वारयति—**सूत्र इति** । **सूत्रे प्रतिषेधतीति पदेन** श्रुतिगतस्य **नेति नेतीति** प्रतिषेधस्योक्तत्वात् स एव **तच्छब्देन** परामृश्यत इत्याशयेनाह—**ततश्शब्दार्थमाहेति** ।

फलितमर्थमाह—**प्रतिषेधादिति** । कस्येदं **निर्वचनमित्यत** आह—**नेति नेतीति**[1] । **प्रतिषेधं** ब्रह्मव्यतिरिक्तनिषेधकत्वेन निर्वक्तुं प्रवृत्तमित्यर्थः । कथमस्य निर्वचनस्य ब्रह्मसद्भावबोधकत्वमित्याशङ्कायामर्थात् तद्बोधकत्वमित्याह—**इति न इति**[2] **नेत्येवंरूपेणेति** । **टीकायां—तदापीति** । **एतस्मादित्यस्य नेतिनेतीत्यादिष्टब्रह्मपरामर्शकत्वे, नेति नेतीति** प्रतिषेधस्य भावरूपब्रह्मलक्षकत्वं सिद्धमेव । यदा त्वादेशपरामर्शकत्वम्, **तदापि** प्रतिषेधमात्रस्य ब्रह्मप्रतिपत्त्युपायत्वरूपतदादेशत्वाय निषेधाधिष्ठानलक्षकत्वं वक्तव्यमित्यर्थः ।

अत्र प्रश्नपूर्वकं **सौत्रहेतुं** दर्शयति **टीकायाम्—कस्मादिति** । **टीकायां—प्रतिषेधस्य परस्तादपीति** । **यतः प्रतिषेधस्य परस्तादपि सत्यस्य सत्यमित्यादिवाक्यं ब्रह्म ब्रवीति,** अतः प्रतिषेधेनापि ब्रह्म लक्ष्यत इत्यर्थः ।

P. 721-3 **प्राणप्रधानस्येति** । तथा च प्रकृतत्वेन लिङ्गशरीरस्यैव सत्यत्वं वक्तव्यमिति तदुपलक्षणार्थं **प्राणग्रहणं** श्रुताविति भावः । माहारजनादिरूपाणां लिङ्गशरीरो-

---

१. कल्पतरौ 'नेति नेतीति प्रतिषेधनिर्वचनरूपम्' इति पाठः ।

२. कल्पतरौ 'नह्येतस्मादित्येतत् व्याचष्टे—इति न इति नेत्यादिष्टादिति । इति न इति नेत्येवं रूपेणादिष्टात्' इति पाठः । अत्र भाष्ये पाठशुद्धिरेवं ज्ञातव्या—'यतस्ततः प्रपञ्चप्रतिषेधाद्भूयो ब्रवीति अन्यत् 'परमस्ति' इति ।' इति, 'किमन्यत् 'परमस्ती'ति ब्रूयात्' इति, 'नह्येतस्माद्ब्रह्मणोऽन्यदस्तीत्यतो नेतिनेतीत्युच्यते' इति, 'तच्च दर्शयत्यन्यत् 'परमप्रतिषिद्धं ब्रह्मास्ति' इति' इति, 'नह्येतस्मात् 'इति न इति न' इति प्रपञ्चप्रतिषेधरूपादादेशनात्' इति च ।

पाधित्वाभावात् कथं **माहारजनाद्युपहितमिति** टीकेत्यत आह—**माहारजनादीनीति**। माहारजनाद्युपमितमिति कश्चित्पाठः। स तु सुगम इत्याह—**उपमितमिति**। तदेवमिति तच्छब्द एतद्व्याख्यानोपसंहारार्थ इत्याशयेनाह—**तदिति तस्मादर्थे** इति। P. 721-3

विषयभेदमेव विविनक्ति—**अहिरेक इति**। प्रकाशाश्रयवद्वेति सूत्रं भेदाभेदयोरेकविषयत्वेऽप्यविरोधप्रदर्शनार्थमिति दर्शयितुमेकविषयत्वे वेत्यादि-टीका। तां व्याचष्टे—**सवितरि त्वित्यादिना**। नन्वहिरभिन्नः कुण्डलादयो भिन्ना इत्येव भेदाभेदनिर्वाहसम्भवान्न टीकोक्तविकल्पावकाश इत्याशंक्य, स पक्षो नाभ्युपगन्तुं युक्त इति स्वयमाह—**न तावदिति**। P. 722-4

पक्षान्तरपरिशेषपूर्वकं तत्र टीकोक्तं दूषणं प्रकटयति—**तस्मादेकस्येत्यादिना**। किं भेदाभेदयोर्विरोधप्रयोजकाभावादविरोधः? किं वा सदानुभवात्? नाद्यः। प्रतियोगितदभावरूपत्वस्य तत्प्रयोजकस्य सत्त्वादिति दर्शयितुं टीकोक्तं विरोधमात्रोच्छेदं प्रकटयन्नाह—**भावाभावयोर्हीति**। द्वितीयमाशंक्य निराकरोति—**ननु सवितृप्रकाशेत्यादिना**।

'न चक्षुषा गृह्यते' इत्यादिश्रुतिं व्याचष्टे—**आत्मा न चक्षुषेति**। 'स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यते' इति श्रुतिं व्याचष्टे [इति न इति न इतीति] (नेतिनेतीति)। 'पराञ्चि खानि व्यतृणत्स्वयम्भू'रित्यादिश्रुतिं व्याचष्टे—**स्वयम्भूरिति**। 'ज्ञानप्रसादेन विशुद्धसत्त्व' इत्यादिश्रुतिं व्याचष्टे—**ज्ञायतेऽर्थ इति**। स्मृतौ 'यं विनिद्रा जितश्वासाः'[1] इत्यादिस्मृतौ। 'परात्परं पुरुषमुपैति दिव्यम्' इति श्रुतिं व्याचष्टे—**परादिति**। 'एष आत्मा सर्वान्तर' इति श्रुतिं व्याचष्टे—**यः सर्वान्तर इति**। P. 723-14

॥ इति प्रकृतैतावत्त्वाधिकरणम् ॥

---

१. इयं स्मृतिः महाभारते शान्तिपर्वान्तर्गतराजधर्मानुशासनपर्वणि भीष्मकृत-कृष्णस्तुतिरूपा।

## ॥ अथ पराधिकरणम् ॥

सू०॥ परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥

सू०॥ सामान्यात्तु ॥ ३२ ॥

सू०॥ बुद्ध्यर्थः पादवत् ॥ ३३ ॥

सू०॥ स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥

सू०॥ उपपत्तेश्च ॥ ३५ ॥

सू०॥ तथाऽन्यप्रतिषेधात् ॥ ३७ ॥

सू०॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

P. 724-2 **न च सेतुशब्दादिति** । आशंक्यत इत्यनुषङ्गः । विधारकस्य सेतोः विधर्तव्यसापेक्षत्वादिति भावः । पूर्वपक्षेऽप्यमुख्यार्थत्वादिति । द्युभ्वाद्यायतनं प्रधानादीति पूर्वपक्षेऽपि जलविधारकवाचकस्य सेतुशब्दस्य मुख्यार्थत्वाभावादित्यर्थः । तर्हि प्रकृतेऽपि मुख्यार्थत्वासम्भवादेव विधारकत्वमात्रार्थकत्वसिद्धेः कथं तद्बलेन पूर्वपक्ष इत्याशंक्य, श्रुत्यन्तरसाहित्येनैव सेतुश्रुतेः पूर्वपक्षबीजतया प्रत्येकं तद्बलत्वाभावान्न दोष इत्याह—**इह त्वित्यादिना**। **वक्ष्यमाणा** इति **गतीरित्यस्य** विशेषणं द्वितीयाबहुवचनान्तम् ।

P. 724-8 **टीकासूचितां** सङ्गतिं दर्शयति—**पूर्वत्रेति** । **स्थलमात्रमुक्तमिति** । सेत्वधःप्रदेशस्य वायुबहुलत्वासम्भवादिति भावः । चतुष्पदो ब्रह्मणः अष्टाशफत्वं षोडशकलत्वञ्च दृष्टान्तमुखेनोपपादयति—**गवां हीति** । **शफचतुष्टयमिति** शफावयवखुरादिचतुष्टयमित्यर्थः।[1] ननु प्रकाशशब्दो विपत्तौ[आतपे]कीर्तौ च प्रसिद्धो

P. 725-1 न मुख्यत्व इत्यत आह—**कीर्तिमान् हीति** । तथा च **टीकोक्तेन** मुख्यत्वेन तद्धेतुभूता कीर्तिर्लक्ष्यत इति भावः ।

---

१. कल्पतरौ 'कलाचतुष्टय'मिति पाठः दृश्यते ।

**प्राणशब्देन** प्राणलक्षणायां सम्बन्धमाह—**तस्येति** । **मनसो घ्राणा-** **द्यायतनत्व**मनुपपन्नमित्यतो व्याचष्टे—**गन्धादीति** । **भाष्ये अमितत्वमप-** **रिच्छिन्नत्व**मुक्तमिति मत्वा शङ्कते—**तदनुपपन्नमिवेति** । **अन्यत्वे सतीति** । यतोऽन्यत्वं, तेनैव वस्तुना परिच्छिन्नत्वादिति भावः । **भाष्ये अमितत्वम-** **संख्यत्वं** विवक्षितम्, ततश्च न शङ्कावकाश इत्याह—**संख्यातुमिति** । **न धारयेदिति** । न नियच्छेदित्यर्थः । वागादीनां पादसाधारण्ये वक्तव्ये, कथं **संचरणसाधारण्य**मुच्यत इत्यतो व्याचष्टे—**सञ्चर्यत इति** । **षोडशपणा इति** । **कपर्दका** इति व्यवह्रियमाणाः **षोडशपणाः कार्षापण** इत्यर्थः । P. 725-2

**ताम्रकर्षमित इति** । अर्धाधिकदशगुञ्जापरिमितो माषः । षोडशमाष-परिमितश्च कर्षः । तथा च ज्योतिर्लीलावत्यामुक्तम्— P. 726-7

'दशार्धगुञ्जं प्रवदन्ति माषं माषाह्वयैष्षोडशभिश्च कर्षः ।' इति ।

तथा च तादृशेन ताम्रकर्षेण मितो राजतस्सौवर्णो वा मुद्राविशेष इत्यर्थः । **एकीभावः कस्मादित्यादिटीकां** योजयति—**यस्सम्बन्ध इति** । **समवा-योऽपीति** । स्वरूपानुपाधिसम्बन्धस्यैव स्वरूपसम्बन्धत्वादिति भावः । 'स्वम-पीतो भवती'ति श्रुत्युक्तस्य स्वरूपसम्बन्धस्य तादात्म्यरूपत्वे स्वाभाविकत्वं हेतुं दर्शयितुं **स्वभावश्चेदित्यादिटीका** । तां व्याचष्टे—**अनेन सम्बन्धत्वेनेति** । आशङ्कातात्पर्यमाह—**ब्रह्मव्यतिरिक्तेति** । '**परमत**'इत्यादिसूत्रोक्तः **पूर्व-पक्ष उन्मज्जतीत्यर्थः** । श्रुतेर्वास्तवसर्वगतत्वपरत्वाभावान्न विरोध इत्याशये-नाह—**न वास्तवमिति** । P. 727 4

॥ [4]इति पराधिकरणम् ॥

---

१. अत्र टीकायां 'अथ प्राणश्चक्षुः श्रोत्रं मन इति चतस्रः कलाश्चतुर्थः पाद' इति शोधनीयम् ।

२. अत्र टीकायां 'संचरणसाधनतया' इति अक्लिष्टः पाठः । 'संचरणसाधारण-तया' इति पाठमभिप्रेत्य कल्पतरुव्याख्या ।

३. 'कार्षापणस्तु विज्ञेयः ताम्रिकः कार्षिकः पणः' इति मनुस्मृतौ । कार्षिकः ताम्रमयः कार्षापणः पण इति विज्ञेयः । कार्षिकश्च शास्त्रीयपलचतुर्थभागो बोद्धव्यः । अत एव 'पलं कर्षचतुष्टयम्' इत्याभिधानिकाः । इति तत्र कुल्लूकभट्टः ।

४. अत्राधिकरणे भाष्ये 'तथा संबन्धव्यपदेशोऽपि भवति—'सता सोम्य तदा संपन्नो भवति' इति, शारीर आत्मा 'प्राज्ञेनात्मना संपरिष्वक्तः' इति च' इति उक्तम् ।

## ॥ अथ फलाधिकरणम् ॥

सू०॥ फलमत उपपत्तेः ॥ ३८ ॥

सू०॥ श्रुतत्वाच्च ॥ ३९ ॥

सू०॥ धर्मं जैमिनिरत एव ॥ ४० ॥

सू०॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

पूर्वाधिकरणसिद्धमद्वितीयत्वमाश्रित्य प्रत्यवस्थानात् सङ्गतिरित्याशये-
P. 728-1 नाह—**ब्रह्मव्यतिरिक्तेति**। 'अनेन सर्वगतत्व'मिति सूत्रेण गतार्थत्वमा-
शङ्क्याह—**सत्यपीति**। तत्सूत्रसिद्धस्यैव, कर्मणः फलदातृत्वशङ्कानिराकरणेन
दृढीकरणार्थमिदमधिकरणमित्यर्थः। वैषम्यादिदोषं परिहर्तुं कर्मभिराराधितत्व-
मिष्टादिकर्मसापेक्षत्वमुक्तमित्याह—**वैषम्येति**।

**न हि स्वर्ग इत्यादिटीकया** काम्यमानतावच्छेदकरूपवत्त्वं फलत्वम्।
ततश्च कर्मानन्तरमेवोत्पन्नस्य विद्यमानशरीरेण भोक्तुमयोग्यतया तादृशत्वाभावान्न
फलत्वमित्युक्तम्। तत्र **फलं सदपीत्यन्वयभ्रमं** वारयति—**स्वरूपेणेति**।
शङ्कते—**भुज्यमानमिति**। उत्कटसुखदुःखदशायां व्यासङ्गोऽनुभवबाधित
इति परिहरति—**इत्याशङ्क्याहेति**। अन्नमत्तीत्यन्नाद इति नार्थः। **वसुदान**
P. 728-7 इति समभिव्याहारादित्याशयेनाह—**अन्नमासमन्तादिति**।

---

अत्र 'सता सोम्ये'त्यादिकं छान्दोग्यगतं वाक्यम्। 'प्राज्ञेने'त्यादिकं बृहदारण्यकगतम्। मध्ये 'शारीर आत्मा' इति न श्रुतिवाक्यम्। तैत्तिरीयकश्रुतिगतमिति भ्रान्तैः (तै. २-३,१) इत्यङ्कितम्। तैत्तिरीयकोपनिषदि संबन्धव्यपदेशाभावात्। किं तु भाष्यवचनं प्राज्ञेना-त्मना इत्यत्र विशेष्यनिर्देशकम्। इति बोध्यम्। 'शारीर आत्मा प्राज्ञेनात्मनान्वारूढः' इति वाक्यस्य भाष्ये परिग्रहे श्रुतिगतमेव भवितुमर्हति। प्राज्ञेनात्मना संपरिष्वक्त इति वाक्यपरिग्रहे भाष्यवचनमित्येव वक्तव्यम्। भाष्ये 'लौकिकसेतुनिदर्शनेन सेतुबाह्यवस्तु-सत्तां' इति पाठः। 'सवाह्यवस्तुतां' इति वा पाठान्तरम्।

१. अत्र टीकायां—'कर्मणस्त्वनुक्षणविनाशिनः। प्रत्यक्षविनाशिनः' इत्यत्र व्याख्यानुसारेण 'अन्वक्षविनाशिनः' इति पाठः टीकायां भाष्ये च शोधनीय इति ज्ञायते।

**टीकायां नन्वित्यादिशङ्कायास्तत्र च विधिश्रुतेरिति भाष्यशेषतां** बुद्धिसौकर्यार्थं दर्शयति—**अत्र भगवतेत्यादिना। याग एवेति।** यागत्व- P. 729-2 रूपाक्रान्त एवेत्यर्थः। **पूर्वापरीभूत** इत्यस्य विवरणं **नानाक्षणेति। अत एवेति।** एकपदश्रुत्या भावनावगतिवेलायामेवावगतत्वादिति भावः। **न केवल-मित्यादि**टीकोक्तं दूषणम्, धात्वर्थः क्रियेति पक्षे, भावना क्रियेति पक्षे चेत्याशयेन व्याचष्टे—**यागादय इति।**

पक्षद्वयेऽपि वस्तुसामर्थ्यं दर्शयितुमुत्तरटीकेत्याशयेनाह—**वस्तुसामर्थ्य-मेवेति।** धात्वर्थस्य साध्यत्वस्वाभाव्यान्न साध्यान्तरापेक्षेति प्रथमपक्षेऽपि वस्तु-सामर्थ्यं दर्शितमिति द्रष्टव्यम्। ननु प्रीतिविशेषस्य स्वर्गस्य कथं यागसाधन-त्वमित्यत आह—**प्रीतिसाधनमिति। भेदप्रपञ्चप्रविलयस्य ब्रह्मज्ञान-**द्वारत्वमुपपादयति—**अप्रविलापिते हीति।** न्यायविरोधान्न देवताविग्रहा-दितुल्यतेत्याह—**अत आहेति।**

यद्यपि स्वर्गकामादिवाक्यसामर्थ्ये पर्यालोच्यमाने देहात्मभावादिप्रविला-पनमात्रं गम्यते। तथापि निष्प्रपञ्चप्रत्यगभिन्नब्रह्मप्रतिपत्त्यपेक्षितप्रपञ्चविलयादि-परत्वमेव लक्षणया तेषां वक्तव्यम्। अन्यथा वैयर्थ्यादित्याशयेनाह—**स्वर्ग-कामवाक्य इति। साक्षादेव।** शक्तित एव, न तु तात्पर्यगत्या प्रवृत्ति- P. 729-20

---

१. अत्र कल्पतरौ 'धात्वर्थनिष्पादकः कर्तृव्यापारो भावना सैव क्रियेत्यन्येषाम्' इत्यतः पूर्वं 'धात्वर्थ एव क्रिया इति केषांचिन्मतम्' इति वाक्यं त्रुटितमिति ज्ञायते। लेखकशोधकमुद्रापकाणां प्रमादमहिमा अयम्।

२. अत्र कल्पतरौ 'न द्वितीय इत्याह—न चैकस्मिन्निति। न केवलमिति। यागादयः' इति पाठः साधुरिति भाति। 'यागादयः न साध्यान्तरमपेक्षन्त इत्येतत्' इत्यस्य स्थाने 'भावना धात्वर्थमपहाय न स्वर्गादि भाव्यतया स्वीकर्तुमर्हतीत्येतत्' इति पाठः स्याच्चेत् टीकासांगत्यं भवति। आभोगपरिश्रमोऽप्यनावश्यको भवेत्। इति सूक्ष्मे-क्षिकया अवधातव्यं पण्डितैः॥

३. 'न चोत्पत्तिशिष्टपुरोडाशाद्यवरोधात् द्रव्यान्तरस्य साधनत्वं न संभवतीति वाच्यम्। पुरोडाशादिष्वेव स्वर्गशब्दवाच्यत्वाय रूपरससौरभादिकमासज्य यष्टव्यमिति पुरोडाशादीनामेव स्वर्गशब्देन विधानात्। यद्वा स्वर्गकामवाक्ये वाजिनन्यायेन चन्दनादि-द्रव्यविशिष्टकर्मान्तरविधानम्' इति सोमनाथीये उक्तमत्रानुसंधेयम्॥

४. अत्र टीकायां 'अधिकाराभावापादितानर्थक्यपरिहाराय' इति पाठः उचितः।

P. 729-20 निषेधकत्वमित्यर्थः । **आत्मज्ञानोपयोगीनीति** । सर्वकर्मत्यागपूर्वकं ब्रह्मणि निष्ठामन्तरा तत्साक्षात्कारायोगादिति भावः । अपेक्षितहेतुकथनेन **टीकां** व्याचष्टे—**सांग्रहणीष्ट्यादीति** । वाक्यस्य च सेवादिप्रतिषेधकत्वं स्वार्थसामर्थ्यादित्याह—**सेवादिविषयेति** ।

कर्मकाण्डस्य प्रपञ्चविलयार्थत्वे हेत्वन्तरं दर्शयितुं **तथाचेत्यादिटीकेत्या**शयेनाह—**एवं मुख्यार्थेति** । परेण विध्यनङ्गीकारे **कथं तर्हि विधिरिति** शङ्कानुपपत्तिरित्यत आह—**त्वयापीति** । सांग्रहण्यादीनामनुष्ठानद्वारा सेवादिप्रवृत्तिनिषेधकत्वं ब्रुवता सांग्रहण्यादिप्रवर्तको विधिरभ्युपगत इत्यर्थः ।

**उपदेशो हीत्यादिटीकायाः** प्रकृतोपयोगं दर्शयति—**वायूदकादि-**
P. 730-7 **वदिति** । **आज्ञाया आदिशब्दगृहीताभ्यर्थनायाश्च** भेदं दर्शयति—**उत्तमेत्यादिना** । ननु आज्ञादिस्थले तस्यैव प्रवर्तकत्वेन कथमभिप्रायस्य प्रवर्तकत्वोक्तिरित्यत आह—**प्रवर्तयितेति** । उत्तमादिनियोक्तृगतोऽभिप्रायविशेष एव आज्ञादिरिति भावः । अभिप्रायविशेषरूपत्वमुपदेशस्यासिद्धमिति न दोष इत्याह—**यत इति** ।

**न्यायकणिकोक्तं** दर्शयति—**अनुज्ञायां हीत्यादिना** । **प्राभाकराभिमतेति** । तदभिमतो हि नियोज्यःममे (ति)दं कार्यमिति बोद्धा । तथा च **यजेते**त्यादीनां तं प्रति प्रवर्तनाबोधकत्वे तन्मात्रेण स्वाभिलषितसाधनत्वेनानवगते तदप्रवृत्त्या यागादेरनिष्पत्तेस्साधयितृसम्बन्ध एव न भवेत् । अतः फलकाम्येव नियोज्य इति दर्शयितुं **सूत्रपदं व्याचष्ट इत्यर्थः** । टीकोक्तमर्थं सूत्रारूढं दर्शयति—**तादर्थ्यादिति** । **तादर्थ्याद्धेतोरसाधकं कर्मेत्यन्वये** फलितमर्थमाह—**तादर्थ्ये सतीति** । भावनायां यागाद्यनुद्देश्यकत्वे श्रेयोभाव्यकत्वस्वाभाव्यं हेतुं **कर्त्रपेक्षितेत्यादिविशेषण**महिमलब्धं दर्शयति—**विधिविषयीकृतेति** ।

**येन पुंसामित्यादिटीका**भिप्रायमाह—**यदि स्युरिति** । ननु यागा-
P. 730-19 दीनां भावनानुद्देश्यत्वे, कथं तज्जन्यफलभागितया तत्कर्मत्वमित्यत आह—**तच्च नास्तीति** । उद्देश्यत्वमीप्सितकर्मण एवेति भावः । श्रेयोरूपत्वेन भावनोद्देश्य-

त्वाशङ्कां निराकर्तुं उत्तरटीकेत्याह—**यागादीनामिति**। का[illegible]नाया भावनां P. 730-19
**प्रति पूर्वरूपत्वे** हेतुमाह—**सर्वो हीति**। स्वर्गादेर्भावनासम्बन्धस्य कामनाव्यव-
हितत्वशङ्कावारणाय कामनाया भावनान्तःपातित्वं दर्शयितुं **पूर्वरूपेत्युक्तम्**।

स्वर्गादेश्शब्दतो विशेषणत्वेऽपि तात्पर्यतः प्राधान्यान्न भावनान्वयविरोध इत्याह—**भावनाक्षिप्तेति**। **विग्रहभेद**लब्धमर्थभेदं दर्शयति—**ततश्चेति**। अनुमानेन शङ्कते—**नन्विति**। उद्देश्यत्वमुपाधिरिति परिहरति—**तत्राहेति**। तदुच्छेदमेव दर्शयितुं **परश्चादेरिति टीका**। तां व्याचष्टे—**व्यापाराविष्टेति**। **पूर्वटीकाया** विरोधं परिहरन्नवतारयति—**स्वर्गादीनान्त्विति**। **आकांक्षाति-शयमिति**। भावना हि भाव्यमेवाकांक्षति। नान्यत्। भाव्यश्च स्वर्गादिकमेव। तस्यैव भावनोद्देश्यत्वरूपभाव्यलक्षणाक्रान्तत्वादित्यर्थः।

कर्मकाण्डस्य ब्रह्मप्रतिपत्तिशेषत्वं प्रागुक्तं निराकर्तुं **न चाप्राप्तेत्यादि-टीका**। तत्र **न चाधिकारेत्यादि**टीकामादाय व्याचष्टे—**न चाधिकारे-त्यादिना**। **यदि प्राभाकरा इति**। तैः स्वर्गकामादिवाक्ये अपूर्वस्य व्या- P. 731-8
पारत्वेन कल्पनं न सम्भवतीति लिङ्वाच्यत्वाभ्युपगमादिति भावः। तन्मते आग्नेयादिवाक्येष्वप्यपूर्वाणामेव लिङ्वाच्यानां विधिः कुतो न भवेदित्यत आह—**तेषामपि मत इति**।

असति व्यापारवति न व्यापार इति शंका यदि प्राभाकराणां, तदा दूषण-मुक्तम्। यदि लौकिकस्य, तदा दूषणं वक्तुमुत्तरटीकेत्याह—**अथ लौकिक इति**। **सापेक्षेश्वरादिति** विचित्रकर्मसापेक्षेश्वरादित्यर्थः। किं केवलादीश्वरात् फलम्? कर्मसापेक्षाद्वेति विकल्प्य, प्रथमं निराकर्तुं **तद्भाष्य**मिति व्याचष्ट इत्याह—**आशङ्क्याहेति**। द्वितीयं निराकर्तुं **वैषम्येत्यादिभाष्य**मिति व्याचष्ट इत्याह—**तर्हीत्यादिना**। **रागादिमत्त्वप्रसङ्ग इति टीकया** भाष्यगतं **वैषम्यं** व्याख्यातमित्याह—**कश्चिदिति**। P. 731-14

---

१. कल्पतरौ 'अनीप्सितकर्ममात्रत्वात्' इति पाठः।

२. अत्र कल्पतरौ पूर्वं 'लक्षणस्याव्याप्त्यसंभवपरिहारार्थः' इति शोध्यम्। उपरि 'संपातः अर्थापातः' इत्युचितम्।

३. अत्र टीकायां 'यदीश्वरादेव केवलात् फलमिति शेषः' इति पाठः उचितः। टीकायामेव पूर्वं 'कर्मणो वा काचिदुत्तरावस्थेति' इति प्रतीकधारणम्।

P. 732-1 **कर्मस्वरूपसामान्यविनियोगादीति** टीकां व्याचष्टे—**कर्मस्वरूपमिति**। ननु कर्मस्वरूपादिज्ञानमप्यनुमित्यादिरूपं कस्यचिज्जीवस्य सम्भवतीत्यत आह—**फलसिद्धीति**। नन्वनुमानस्य वस्तुसत्तानिश्चायकत्वं पत्युरसामञ्जस्यादित्यत्र निराकृतम्। तथा च कथमनुमानेन कर्मणः परमेश्वराधिष्ठितत्वसिद्धिरित्यत आह—**आगमेति**। 'एष ह्येवे'त्यादिरागमः। **ईश्वरस्य कर्मापेक्षामुक्त्वेति**। तथा च शुभाशुभकर्मकारयितृत्वमपि पूर्वपूर्वकर्मापेक्षमिति न वैषम्यादिप्रसक्तिरिति भावः।

**ईश्वरसिद्धिः**। फलदातृत्वेनेश्वरसिद्धिः। फलप्रदातुराराधनं प्रधानयागेनैव सिद्धमित्यङ्गवैफल्यमिति शङ्कते—**नन्विति**। शास्त्रैकसमधिगम्यं परमेश्वराराधनं साङ्गप्रधानादेवेति परिहरति—**अत आहेति**। फलोत्पादनाया नित्यत्वे हेतुमाह—**स चेति**। कूटस्थे परिणामरूपव्यापारासम्भवादिति भावः। **तमिति**। भाष्यव्याख्यानेन तदज्ञाननिरसनादनुग्रहः। कूटस्थस्याप्यविद्योपाधिको व्या-
P. 733-1 पारः सुलभ इत्याह—**अविद्योपाधिवशादिति** ॥

॥ इति फलाधिकरणम् ॥

**इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डुभट्टमहोपाध्यायतनूभवेन श्रीमन्नारायणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशगृह्यमाणेन श्रीलक्ष्मीनृसिंहचरणारविन्दचञ्चरीकेण श्रीलक्ष्मीनृसिंहेन विरचितायां कल्पवृक्षप्रदीपिकायां आभोगाख्यायां तृतीयाध्यायस्य द्वितीयः पादः॥**

---

१. कल्पतरौ 'साक्षात्कारवदधिष्ठितत्व'मिति पाठः।

२. कल्पतरौ 'कर्माधिष्ठातृत्वादीश्वरसिद्धि' इति पाठः।

॥ श्रीः ॥

## ॥ तृतीयस्याध्यायस्य तृतीयः पादः ॥

## ॥ अथ सर्ववेदान्तप्रत्ययाधिकरणम् ॥

सू०॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

सू०॥ भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

सू०॥ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः॥ ३ ॥

सू०॥ दर्शयति च ॥ ४ ॥

पूर्वपादेन सङ्गतिं दर्शयन् पादार्थमाह—द्वितीये पाद इति। पूर्वपादकृतपदार्थनिर्णयोपजीवित्वादस्य, तेन साकमुपजीव्योपजीवकभावः सङ्गतिरिति भावः। ननु वाक्यार्थावधारणं समन्वयलक्षण एव सम्पन्नं नात्र कर्तव्यमित्यत आह—अपुनरुक्तेति। सिद्धस्यैव वाक्यार्थावधारणस्य पदपदार्थोपसंहारेण दृढीकरणार्थमस्मिन् पादे गुणोपसंहारश्चिन्त्यत इत्यर्थः। P. 734-1

ननु निर्विशेषब्रह्मप्राप्तिसाधनज्ञानोपायत्वान्निर्गुणवाक्यार्थचिन्ता युक्ता। न सगुणवाक्यार्थचिन्तेत्यत आह—सगुणवाक्यार्थचिन्ता त्विति। चित्तस्य शुद्धिः कल्मषनिवृत्तिरैकाग्र्यं च। ननु कथं गुणोपसंहार एव पादार्थः, विद्याभेदाभेदयोरपि चिन्तनादित्यत आह—पदार्थोपसंहारेणेति। तदपवादत्वेन पदार्थोपसंहारापवादत्वेन। ननु यदि गुणोपसंहारे विद्यैक्यं तन्त्रं, तर्हि निर्गुणविद्यायामपि तत्सिद्ध्यर्थमभेदचिन्ता किमिति न क्रियते? इत्यत आह—निर्गुणविद्यायां त्विति। वेद्याभेदादिति। वेद्यस्य त्रिविधपरिच्छेदरहितस्य कथञ्चिदपि भेदाभावादित्यर्थः। कथं तर्हि तत्र गुणोपसंहारचिन्तेत्यत आह—गुणोपसंहारस्त्विति। P. 734-4

१. कल्पतरौ 'वेद्याभेदा'दिति शोधनीयम्।

यद्यपि निर्गुणविद्याया'**मानन्दादयः प्रधानस्य' 'अक्षरधिया'**मि-त्यधिकरणद्वय एव गुणोपसंहारश्चिन्तितः। तथा'**प्यात्मगृहीति'**रित्यधिकरणे 'आत्मा वा इदमेक एवे'त्यात्मशब्दस्य हिरण्यगर्भविषयत्वं निराकृत्य परमात्म-विषयत्वसमर्थनेन तत्राप्यानन्दादिगुणोपसंहारः फलतया साधित इति तदभि-

P. 734-5 प्रायेणा**धिकरणैरिति** बहुवचनम्। **लक्ष्याखण्डेति**। तथा च दुःखादिप्रत्य-नीकाखण्डस्वरूपलक्षणार्थं निर्गुणविद्यायां वाच्यार्थे आनन्दादिगुणोपसंहार-चिन्तेत्यर्थः।

स्वभावस्य स्वतो नानात्वासम्भवात् **स्वभावशब्दो धर्मपर** इत्याह—**स्वभावो धर्म इति। आपेक्षिकभेदमिति।** स्वभावरूपधर्मभेदं निरस्य, परा-पेक्षधर्मभेदमाशंक्येत्यर्थः। ज्ञानस्य विषयाधीन आकारो रूपम्, न तु नीलपी-

P. 735-1 तादि। तच्च गुणत्वेऽपि अविरुद्धमित्याशयेन परिहरति—**अत आहेति।** ननु **पूर्वपक्षहेतव**स्तावदुपन्यस्यन्ते इत्यादिभाष्यपर्यालोचनायां **शाखान्तराधि-करणपूर्वपक्षसूत्रोक्ता** एवात्रापि **पूर्वपक्षहेतव** इति ज्ञायते। तत्र च निन्दाप्राय-श्चित्तयोरनुपन्यासे को हेतुरित्याशंक्य, तत्सूत्रप्रदर्शनपूर्वकं तयोरनुपन्यासे हेतुं दर्शयति—**नामरूपेत्यादिना।**

शाखाभेदेन कर्मभेदे, काठकं कालापमित्यादि**र्नामभेदः**। अग्नीषोमीयस्य क्वचित् शाखायामेकादशकपालत्वमाम्नातम्। क्वचित् द्वादशकपालत्वमिति **रूप-भेदः**। कारीर्यादिषु भूमिभोजनतदभावादि**र्धर्मविशेषः**। **पुनरुक्ति**रग्निहोत्रादेः शाखाभेदेनाविशेषपुनःश्रवणम्। **निन्दा** उदितानुदितहोमयोः। **अशक्तिः** सर्वशाखोदिताङ्गग्रहणार्थं तावच्छाखाध्ययनाशक्तिः। अग्निचयनस्य कस्याञ्चिच्छा-खायामन्वारोहमन्त्रेषु समाप्तिः। कस्याञ्चिदन्यत्रेति **समाप्तिभेदः**। कस्याञ्चि-च्छाखायामुदितहोमव्यतिक्रमे प्रायश्चित्तमाम्नातम्। अन्यत्रानुदितहोमव्यतिक्रम इति **प्रायश्चित्तभेदः**।

'यदि पुरा दिदीक्षाणाः स्यु'रित्यादिश्रुतावनिष्टप्रथमयज्ञानां द्वादशाह-दर्शनं शाखाभेदेन द्वादशाहभेदे **अन्यार्थदर्शनरूपं** लिङ्गम्। तथा हि—'एष

---

१. कल्पतरौ 'एकरूपत्वविशेषणेन' इति, 'प्राङ्निषिद्धावयवधर्मभेदनिषेधानु-वाद' इति च पाठः।

वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वे'त्यादिश्रुत्या क्रत्वन्तराणां ज्योतिष्टोमपूर्वकत्वावगमात् कथं द्वादशाहस्य ततः पूर्वं प्राप्तिः ? शाखाभेदेन कर्मभेदे तु, यस्यां शाखाया'मेष वावे'त्यादिवाक्यमाम्नातम्, तच्छाखागत-कर्मणामेव ज्योतिष्टोमपूर्वकत्वप्रतिपादकं तद्वाक्यमिति, तच्छाखागतस्य द्वाद-शाहस्य ज्योतिष्टोमपूर्वकत्वेऽपि शाखान्तराम्नातस्य न तत्पूर्वकत्वमिति लिङ्ग-दर्शनमिति ध्येयम्।

**दिवाकीर्त्यमिति**। दिवा कीर्तनीयं ज्योतिः 'सूर्यो ज्योति'रिति मन्त्रे-णादिवा कीर्तयन्तः अनृतं वदन्ति, यतस्तदा एषां होतॄणां तज्ज्योतिर्नेत्यर्थः। **विरुद्धकालद्वयासम्भवादिति**। न च विकल्पेन कालद्वयसम्भवः। उदितानु-दितकालयोः परस्परनिन्दापूर्वकमेवाग्निहोत्रहोमाङ्गत्वेन विहिततया तद्बलेन परस्परासमावेशेनैव होमान्वयित्वावश्यम्भावे सत्येकस्य कर्मणस्तथाविधकालद्वया-सम्भवाद्विकल्पे च प्रयोगभेदेनैकस्मिन् कर्मणि कालद्वयसमावेशस्यावर्जनीयत्वेन निन्दाविरोधादिति भावः। P. 735-4

**निन्दाप्रायश्चित्ते इति**। यद्यपि 'अन्धं तमः प्रविशन्ती'त्यादिका निन्दा वेदान्तेष्वपि दृश्यते। तथापि सा न विद्याभेदप्रयोजिका, विद्याकर्मसमुच्चय-विध्यर्थतया केवलविद्याकर्मनिन्दारूपत्वादिति भावः।

किं ज्योतिश्शब्दस्य स्वत एव नामत्वावधारणात् प्रकृतबुद्धिविच्छेद-कत्वं ? किं वा यजिसामानाधिकरण्येन ? नाद्यः। ज्योतिश्शब्दस्य प्रकृत-ज्योतिष्टोमनामैकदेशत्वशङ्काकलङ्कितत्वेन कर्मान्तरनामत्वानभिव्यक्तेरित्याह — **ज्योतिरिति हीति**। न द्वितीय इत्याह—**एतेनेति**। आख्यातसामानाधि-करण्यात् प्रागेव लब्धप्रवृत्तिनिमित्तकं यन्नाम दर्शपूर्णमासादि तद्व्यावृत्त्यर्थं **प्रायेणेत्युक्तम्**। **तस्यैव** आख्यातस्यैवेत्यर्थः। P. 736-3

**ज्योतिरितीति** ज्योतिरित्यस्येत्यर्थः॥ यद्यपि **टीकायामयमंशो** नास्ति, तथापि कस्य कर्मनामत्वस्य व्यवस्थापनमित्याकांक्षायां ज्योतिरित्यस्ये-त्यर्थाल्लभ्यत इति तदपि सहैव पठितम्। **इत्यादिहेतूनामिति**। एवञ्च, यजे- P. 736-6

---

१. कल्पतरौ 'दिवाकीर्त्यमदिवा कीर्तयन्तः' इति शोधनीयम्।

२. भट्टवार्तिकश्लोके (२-२-२) 'भेदाभेदनिमित्तता' इति पाठः।

तेति तदनुवादादिति पूर्वहेतोर्वक्ष्यमाणप्रतिज्ञया अन्वयायोगात्, गुणविधानमिति प्राप्तमित्यर्थलभ्यपूर्वपक्षप्रतिज्ञायामन्वय इति भावः।

P. 736-9 **द्वादशशतमिति।** द्वादशाधिकं शतमित्यर्थः। **गाव इति** न्यायलब्धार्थकीर्तनम्, न तु तथा श्रुतिरिति बोध्यम्। एकस्यार्थस्यानेकशब्दकत्वस्यान्याय्यत्वे,नायं न्याय उदाहर्तुं युक्त इत्यत आह—**दृष्टान्तोक्तिरियमिति।** नन्वेकस्यार्थस्यानेकवाचकयोगित्वलक्षणानेकशब्दत्वाभावेऽपि, अनेकशब्दप्रतिपाद्यत्वलक्षणानेकशब्दत्वस्य दर्शनेन शब्दभेदे अर्थभेद इति नियमाभावात्, 'अथैष ज्योति'रिति ज्योतिश्शब्देनापि वसन्तवाक्यगतज्योतिश्शब्देनेव प्रकृतज्योतिष्टोमाभिधानसम्भवादर्थान्तरार्थत्वादिति टीकायां तस्यान्यार्थकत्वकथनमनुपपन्नमिति शङ्कते—**ननु वसन्तवाक्य इति।**

तत्र नियमरूपत्वाभावमङ्गीकारेण परिहरति—**अत आहेति।** वसन्त-
P. 737-1 वाक्यगतज्योतिश्शब्दतुल्यतां दूषयितुमनुवदति—**यत्तु वसन्तादिवाक्य इति। एकदेशान्तरलक्षणार्थ इति।** स्तोमशब्दरूपैकदेशान्तरसहितज्योतिष्टोमशब्दार्थलक्षणार्थ इत्यर्थः। लक्षणाबीजसदसद्भावाभ्यां वैषम्यं प्रकटयति—**वसन्तादिवाक्ये हीति।** वसन्तादिवाक्ये ज्योतिश्शब्दः यजिपरतन्त्रः, 'अथैष ज्योति'रिति वाक्य इव प्रथमान्ततया पृथङ्निर्देशाभावेन स्वतोऽर्थान्तरस्फोरकत्वाभावात्। यजिश्च तत्र न कर्मान्तरपरः। विधे'र्वसन्ते वसन्त' इति वीप्सावगतनिमित्तसंक्रान्ततया तदर्थं पूर्वकर्मानुवादस्यैवापेक्षितत्वात्। अतस्तत्र युक्ता लक्षणा। न त्वत्रेत्यर्थः।

**अथैष ज्योतिरिति** वाक्ये **ज्योतिश्शब्दस्य** प्रथमं नामत्वानभिव्यक्तेनर्थान्तरबुद्धिजनकत्वमिति प्रागुक्तमनुवदति—**यत्त्विति।** प्रथमं कर्मविशेषनामत्वानवगमेपि, प्रकृतभिन्नवाचकत्वस्य स्वरसतोऽवगमान्न दोष इति परिहरति—**तदोमिति ब्रूम इत्यादिना। तथाचेत्यादिना टीकोक्तमतिशयं** प्रकटयति—**ज्योतिष्टोमस्येति।** पूर्वपक्षकोटौ वाजिनमात्रग्रहणम-
P. 738-1 युक्तमिति शङ्कते—**यद्यपीति।** तत्र देवतामात्रविधिरित्येव किमिति नोच्यत

---

१. टीकायां 'यथैव काठकादिसमाख्याः ग्रन्थे प्रयुंजते' इति पाठशुद्धिः। कल्पतरौ 'तस्या अशब्दत्वात्' इति, 'काठकादिसंज्ञाया' इति च पाठशुद्धिः।

इत्यत आह—**वाजिपदेन त्विति** । पूर्ववाक्येनैव प्राप्तत्वान्नात्र तद्विधिरिति । P. 738-2 कर्मान्तरविधिपक्षे त्वप्राप्तत्वादनेकगुणविधिसम्भवाच्च देवताया अपि विधेयत्व-मुक्तमित्याह—**सिद्धान्ते त्विति** ।

नन्वामिक्षावाजिनवाक्ययोः पौर्वापर्येण वर्तमानयोः कथं समसमयप्रवृत्तिः? तथात्वे उत्पत्त्युत्पन्नशिष्टकथाया एव लोपप्रसङ्गादित्याशंक्य, यत्र वाक्यद्वयमपि परिपूर्णं तत्र पौर्वापर्येण प्रवृत्तावपि, यत्र कल्पनीयोंऽशोऽस्ति, तत्र लाघवेन वाक्यद्वयसाधारण्येनैकस्यैव कल्पनायुक्ता समसमयप्रवृत्तिरित्याह—**अयमभिप्राय इत्यादिना** । यस्मान्नामिक्षाया उत्पत्तिशिष्टत्वं तस्मात्कथमनयावरुद्धं कर्म, यत-स्तत्र वाजिनं न निविशेतेति **टीकार्थः** । प्रत्यक्षविध्यभावेऽपि प्रबलदुर्बल-प्रमाणगम्यसम्बन्धद्वयानुरोधेन वाक्यद्वयेऽपि प्रत्येकमेव विधिः कल्प्य इति शङ्कते—**नन्वामिक्षेति** । **न विश्वेदेवा वाजिनेन सम्बध्यन्त** इति । श्रुत्या आमिक्षान्वितत्वादिति भावः । ततश्च वाजिनवाक्ये वाजिदेवताकमेव कर्म विधीयत इत्याह—**तत्रेति** । गूढाभिसन्धिः परिहरति—**अत आहेति** । P. 738-13

अभिसन्धिमजानानः शङ्कते—**नन्विति** । **तद्धितान्तेति** । 'सास्य देवते'त्यर्थे विहितस्य तद्धितस्य द्रव्यवाचकत्वादित्यर्थः । अभिसन्धिमुद्घाटयति—**तथा सतीति** । तद्धितेन द्रव्यसामान्याभिधानेऽपि, आमिक्षारूपद्रव्यविशेषाभि-धानाय तत्पदमावश्यकमिति भावः । सर्वनामसमानार्थेन तद्धितेन विशेषरूपाभि-धानायाऽऽमिक्षापदसमभिव्याहारापेक्षणेऽपि तस्या देवतासंबन्धबोधने न तदपेक्षेति विश्वदेवसम्बन्धः श्रौत एवेति शंकते—**नन्विति** । **ननु वाजिभ्य इति पदेन** विश्वदेवोपलक्षणस्य फलमनुक्त्वा, कथं **यद्यपीत्यादि**टीका प्रवृत्तेत्याशंक्य, प्राप्तावसरशंकातत्परिहारानन्तरं तद्वक्ष्यतीत्याशयेनाह—**उपलक्षितेषु चेति** । **यत्फलिष्यति तदिति** । श्रौतामिक्षासम्बन्धोपजीवनेनैव वाजिनवाक्यप्रवृत्तेर्न तया वाजिनं बाध्यत इत्येतदित्यर्थः ।

प्राप्तावसरां शंकामाह—**नन्विति** । **हविःप्रदानसमय इति** । P. 739-4 'अग्नये जुष्टं निर्वपामी'त्यादिनिगमेष्वग्निशब्दस्यैव पठितत्वान्न तत्रायं विचारः, किन्तूद्देशत्याग इति भावः । 'आग्नेय' इत्यग्निशब्दस्य देवतात्वावगमे कुतः

१. कल्पतरौ पश्चात् 'तजन्यमपूर्वं च कल्पनीय'मिति शोधनीयम् ।

P. 739-5 शब्दान्तरप्रसक्तिरित्यत आह—**अर्थरूपत्वादिति**। तद्धितादीनां प्रकृतिवाच्यस्यैव देवतात्वाभिधानादिति भावः। **'मासेभ्यः स्वाहा' इत्यादावित्यादि**शब्देन 'दद्भ्यः स्वाहा' 'हनूभ्यां स्वाहा' इत्यादिकं गृह्यते। **अदेवतात्वप्रसङ्गादिति**। मासादिषु सर्वत्र तदभिमानिदेवतासद्भावे मानाभावादिति भावः।

नन्वस्तु हविःप्रति प्राधान्येन निर्देश्यत्वं देवतात्वम्, तन्निर्देश एव शब्दान्तरेण किं न स्यादित्याशंकां, सूत्रयोजनया परिहरति—**तत्र आग्नेये इतीति**। पदार्थमुक्त्वा तदभिप्रेतमर्थमाह—**तद्धितवतेति**। **शब्दान्तरेण निर्देश इति**। तद्धितेन तावदग्नेर्देवतात्वमुच्यते। तच्च हविः प्रति प्राधान्येन निर्देश्यत्वम्, निर्देशश्च पदमन्तरा न सम्भवतीति पदापेक्षायां श्रुतमग्निपदमेवोपतिष्ठते। ततश्चाग्निपदेनाग्निं निर्दिश्य हविस्त्यजेदिति वाक्यार्थस्सम्पद्यत इति **शब्दान्तरेण तन्निर्देशे** विधिबोधितं देवतात्वं न स्यादित्यर्थः। उक्तं सूत्रभागार्थमुपसंहरन्, सूत्रशेषं व्याचष्टे—**तस्मादिति**। P. 739-9

**आदित्यः[2] प्रायणीयश्चरुरिति**। यद्यपि तैत्तिरीयशाखायामदितिदेवताकयागविधायकमिदं वाक्यम्, तथापि विकृतिविशेषे आदित्यदेवताकयागविधायकमेव तादृशं वाक्यमस्तीति तदुदाहृतम्। 'यः पापयक्ष्मगृहीतः स्यात् तस्मा एतमादित्यं चरुं निर्वपे'दिति वाक्योदाहरणं केषुचित्कोशेषु दृश्यते। तदपि शाखान्तरीयमेव, तैत्तिरीयके 'आदित्यानेव स्वेन भागधेयेने'ति वाक्यशेषानुरोधेन बहूनामेव देवतात्वात्। **सर्वसंमतानुष्ठानविरोधादिति**। **अभ्युच्चययुक्तिरियम्**। शब्दान्तरेणापि देवता निर्देष्टुं शक्यत इति वदन्तं पूर्वपक्षिणं प्रत्यनुष्ठानविरोधोपन्यासायोगात्। **मूलयुक्तिस्तु**—विधिशब्दघटितमेव देवतात्वमिति प्रागुक्तैव।

P. 740-1 **विश्वदेवपदै[3]सन्निहितानामिति**॥ यद्यपि सर्वनाम्नः पदविशेषरूषितरूपेण न सन्निहितपरामर्शकत्वम्, तथापि प्रकृते वाजिशब्देनामिक्षारूपस्य

---

१. अत्र कल्पतरौ 'भावो देवतात्वं' इत्यत्र 'देवतात्वं' इति पदं पाठान्तरे नास्ति। तद्धितान्तवर्त्यग्निशब्देन' इति 'तद्धितवता अग्निशब्देन' इति च पाठः।

२. 'आदित्यं चरुं निर्वपेत्' इति कल्पतरुपाठः दृश्यते। आभोगानुसारेण शोधनीयम्। परिमलेऽपि आभोगवदेव प्रतीकधारणम्। आभोगे परिमले च कोशान्तरस्थतया निर्दिष्टः पाठः स्यात् कल्पतरौ दृश्यमानः पाठः।

३. अत्र कल्पतरौ 'तत्राह—ततश्चेति' इत्यत्र 'तदत्राह' इति शोधनीयम्।

हविषो निर्दिष्टत्वेन तत्सम्बन्धित्वेनावगम्यमानानां विश्वेषां देवानां तत्पदरूषितरूपेणैव उपस्थितिः। देवतात्वबोधकामिक्षावाक्ये तथैव तेषामवगतत्वादिति भावः ॥

ननु द्रव्यद्वययुक्तैककर्मविधानेन यदि प्रदेययोस्सह त्यागः। तर्हि **सन्देहप्रदर्शकटीकायां, पूर्वस्मिन्नेव कर्मणि वाजिनं गुणो विधीयत** इति कथमामिक्षावाजिनयोः पृथगनुष्ठानमुक्तमित्यत आह—**एवं चेति। आपातप्रतिभानमादायेति।** वाक्ययोः पौर्वापर्यदर्शनेनापाततःप्रतीतं पूर्वपक्षमादाय, न तु विमर्शसिद्धं पूर्वपक्षमादायेत्यर्थः। प्रबलदुर्बलप्रमाणगम्यसम्बन्धयोर्भिन्नविधिविधेयत्वस्यावश्यकत्वादुत्पत्तिशिष्टामिक्षावरुद्धे यागे वाजिनस्य विधानं न सम्भवतीति सिद्धान्तयतीत्याह—**विश्वेषां देवानामिति।** P. 740-6

ननु तद्धितस्य 'साऽस्य देवते'त्यर्थे स्मरणाद्वस्तुत आमिक्षासम्बन्धिनो विश्वे देवाः, विश्वदेवामिक्षासम्बन्धः, विश्वदेवसम्बन्धिद्रव्यमात्रं वा, वाच्यम्। न त्वामिक्षात्वेनामिक्षापीति, **सर्वनामार्थे स्मरणादित्यादिपूर्वटीकोक्तं** विस्मृत्य शङ्कते—**नन्विति।** उक्तं हेतुं स्मारयति—**अत्र सर्वत्रेति।** P. 741-2 वैश्वदेवपदस्याभिधानपर्यवसानार्थं आमिक्षापदसापेक्षत्वेऽपि, विश्वदेवामिक्षासम्बन्धबोधने तत्समभिव्याहारानपेक्षणान्न तस्य श्रौतत्वहानिरित्याह—**नात्रेति।** यथाकथञ्चित्पदान्तरापेक्षामात्रेण च न श्रौतत्वहानिरिति दृष्टान्तेन दर्शयति [अ]**तैतश्च यथेति।**[3]

**कुतं इत्यादिटीकयोः**[4] प्रयोजनभेदं दर्शयति—**द्वयं हीत्यादिना।** आमिक्षावैश्वदेवीपदयोरुभयोरप्यावश्यकत्वे विनिगमनाविरहाद्द्वयोरपि बोधकत्वमिति P. 741-8

---

१. अत्र कल्पतरौ 'द्रव्यद्वयेन युक्तमेकं कर्म विधीयत इति' इति टीकाप्रतीकधारणम्। टीकायामपि 'द्रव्ययुक्त'मिति 'द्रव्यद्वयेन युक्त'मिति शोधनीयम्। कल्पतरौ 'तदिदमुत्थित' मिति, 'तदित उत्थित'मिति शोधनीयम्।

२. कल्पतरौ 'सन्निहितविशेष्यस्ये'ति पाठः।

३. कल्पतरौ 'न श्रुतित्वहानिरस्ति एवं' इति पाठः।

४. अत्र टीकायां—'कुत आमिक्षापदानपेक्षामिक्षाप्रत्ययप्रसंगः' इति, 'वाजिनद्रव्यं स्वसंबन्धिकर्म पूर्वस्मात्' इति च शोधनीयम्। कल्पतरावपि 'कुत आमिक्षापदानपेक्षेति' इति प्रतीकधारणशुद्धिः।

P. 741-11 शङ्कते—**नन्वेवमिति** । **अभिधत्ते** इत्यस्य कर्तृकर्मणी विविनक्ति—**यदितीति** । अन्यापेक्षितार्थसमर्पकत्वेन पारतन्त्र्यादामिक्षापदं न बोधकमिति विनिगमकमाह—**आमिक्षेत्युक्ते इति** । तात्पर्यमुक्त्वा वाक्यार्थमाह—**ततश्चेति** । **विश्वदेवसापेक्षमिति** । इनिप्रत्ययस्य सर्वनामार्थे स्मरणादिति भावः ।

**नित्यवदवगतानपेक्षसाधनभावा(या) [मिक्षा] इति** टीकायामनपेक्षेत्यत्राप्यवगतत्वस्य योग्यतया अन्वय इति मनसि निधायाह—**अनपेक्षावगतेति** । नैरपेक्ष्यलक्षणसामर्थ्ये सत्येव तद्धितविधानेन तद्बलादामिक्षाया नैरपेक्ष्येणैव यागं प्रति हविष्ट्वेन साधनत्वावगमादित्यर्थः । **वि(श्वे)श्वदेवशब्दामिति** पदं व्याचष्टे—**विश्वे देवा इति** । देवताया द्रव्योपसर्जनत्वमुपपादयति—**वैश्वदेवीशब्दादिति**[1] । एवं टीकां व्याख्याय, ननु वाजिपदेन पूर्वदेवतामुपलक्ष्य वाक्येन तत्र वाजिनद्रव्यविधानाभावे वाक्यमिदं व्यर्थं स्यादित्याशंकां निराकर्तुं, वाजिनपदस्य देवतोपलक्षकत्वायोग्यताप्रदर्शनेन फलितमाह—

P 742-4 **एवं सतीति** ।

अयोग्यत्वे सति, कर्मान्तरविधिरिति पक्षो भवति । तथा च तस्मिन् पक्षे **नोपलक्षयिष्यतीत्युक्त्या** वाक्यस्य कर्मान्तरविधायकत्वसम्भवान्न वैयर्थ्यमित्युक्तं भवति । **कर्मान्तरविधिपक्षं नापलपिष्यतीति** कश्चित् पाठः । स[2] तु सुगमः । न केवलमयोग्यत्वादनुपलक्षकत्वम्, किन्तु न्यायविरोधादपीत्याह—**तदुपलक्षणे हीति** । प्रधानमेव पदान्तरेण परामृश्यते । नोपसर्जनमिति न्यायो **नोपसर्जनन्यायः** । नन्वयं न्यायः सर्वनामव्यतिरिक्तपदविषयः । 'अथ शब्दानुशासनं, केषां शब्दाना'मित्यादावुपसर्जनानामपि शब्दानां किंशब्देन परामर्शदर्शनादिति शङ्कते—**नन्विति** । अनन्यगत्या क्वचिदुपसर्जनपरामर्शित्वेऽपि न्यायतस्सर्वनाम्नोऽपि प्रधानपरामर्शित्वमेव युक्तमिति परिहरति—

P. 743-3 **अत आहेति** । शिरोऽधिकरणकं कर्म **शिरोव्रत**मित्याशयेनाह—**शिरसीति** ।

---

१. कल्पतरौ 'वैश्वदेवीशब्दात् द्रव्यवचनात्' इति पाठः 'वैश्वदेवीशब्दा'दिति पदं त्रुटितम् । 'वैश्वदेवीपदात्' इति टीकायां दृश्यते ।

२. इदं चिन्त्यम्—यतः तस्मिन् पाठे अनन्वयः स्फुटः । वाजिपदं, आमिक्षाद्रव्यं प्रत्युपसर्जनभूतामवगतां देवतां कर्मान्तरविधिपक्षे नोपलक्षयिष्यतीत्युक्ते अन्वयो भवति । देवतां कर्मान्तरविधिपक्षं नापलपिष्यतीत्युक्ते कथमन्वयः । तस्मात् स पाठः अशुद्धः । अत एव परिमले स पाठः नोक्तः ।

धात्वर्थरूपानुबन्धभेदस्य भावनाभेदकत्वं **शब्दान्तराधिकरणोक्तं** दर्शयति—**शब्दान्तर इत्यादिना। गुणभूतधात्वर्थानामिति।** क्रय इवा- P. 743 7 रुणिमादीनामिति भावः। किं यजतीत्यादिभिः सकलधात्वर्थानुरक्तैकभावनाभिधानात् भावनैक्यं, किं वा एकधात्वर्थान्वितायां धात्वन्तरार्थानामपि सम्बन्धात्? नाद्य इत्याह—**नियमेनेति।** अस्तु धातुप्रत्यययोरन्विताभिधायित्वं, तदेव सर्वैर्धातुभिरेकैकस्य प्रत्ययस्य भवत्वित्याशङ्क्य, बहून् धातून् प्रत्येकैकस्य प्रत्ययत्वमेव नास्तीत्याह—**प्रत्ययस्य चेति।** न द्वितीय इत्याह—**सा, न, धात्वर्थान्तरेणेति।** सिद्धन्तमुपसंहरन् सूत्रं व्याचष्टे—**तस्मादिति। धात्वर्थानुबन्धभेदेनेति** टीकार्थमाह—**धात्वर्थ एवेति।** P. 743-11

ननु पाठक्रमानादरेणेत्यत्र परिमलकृतः—परस्परापेक्षाणामेकवाक्यत्वे हि स प्रयोजकः स्यादिति टीकाग्रन्थो वैदिकशब्दानां बोधकतायां पाठक्रमस्याप्रयोजकत्वे, कथमुपक्रमोपसंहारयोरुपक्रमप्राबल्यव्यवस्था सिध्येदित्याशंकानिराकरणार्थत्वेन व्याख्यातुमुचितः। तथा व्याख्याने हि, यत्रैकवाक्यता तत्र पाठक्रमः प्रथमचरमभावे नियामक इत्युपक्रमोपसंहारव्यवस्थासिद्धिः, यत्र नैकवाक्यत्वं तत्र बोधकतायां पाठक्रमो न नियामक इति वैषम्यकथनेन परिहारसिद्धेः।

पाठक्रमस्य प्रयाजानामनुष्ठानक्रम इव प्रयाजवाक्यानां बोधनक्रमेऽपि नियामकत्वं स्यादिति शंकानिराकरणार्थत्वेन व्याख्यानन्तु न युक्तम्। तदा(नीं) हि प्रयाजवाक्येषु प्रयाजवैषम्यस्यैव दर्शनीयत्वात्, एकवाक्य इति टीकास्वारस्यभङ्गाच्च।

---

१. कल्पतरौ 'धात्वर्थानुबन्धभेदेनेति' इति प्रतीकधारणं शोध्यम्।

२. कल्पतरौ 'भावनाविशेषकत्वे प्राप्ते' इति पाठः।

३. अत्र कल्पतरौ 'पाठादनुष्ठानक्रमे'ति पाठः।

४. तदा हि प्रयाजवैषम्यं प्रयाजवाक्येषु दर्शनीयम्—प्रयाजास्सर्वेऽप्यखण्डोपकाररूपं स्वप्रयोजनं परस्परापेक्षया संभूय कुर्वन्तीति, तेषां मेलनार्थं युगपदनुष्ठानप्रसक्तौ, एकेन कर्त्रा बहूनां युगपदनुष्ठातुमशक्यतया क्रमापेक्षायां पाठक्रमस्तन्नियामक इष्यते। न च प्रयाजवाक्यानां अर्थबोधनरूपं स्वप्रयोजनं जनयितुं परस्परापेक्षा [इति। परस्परापेक्षा] संभूयकारित्वपरतया नीयत इत्यपरः क्लेशः। तस्मादिदं व्याख्यानं न युक्तमिति चेत्। उच्यते' इत्यादि परिमले।

तस्मादयं ग्रन्थ एवं नेयः—इह पाठक्रमानादरे, उपक्रमोपसंहारवैषम्यं प्रयाजादियागवैषम्यं चेत्युभयमपि **परस्परापेक्षाणामिति टीकया** तन्त्रेण प्रदर्श्यत इत्यभिप्रेत्य, तत्राद्यवैषम्यप्रदर्शनपरतया योजनं स्फुटमित्यपहाय, द्वितीयवैषम्यपरतया योजनमस्फुटमाचार्यैः प्रदर्शितमित्याहुः ।

तच्चिन्त्यम् । तत्र, 'वैदिकशब्दाना'मित्यादिशङ्का तावदयुक्ता । तथा हि—इह **पाठक्रमो बोधकत्वे न प्रयोजक** इत्यनेन पाठक्रमस्य क्रमिकबोधहेतुत्वं न वार्यते । क्रमेण श्रुतानां वाक्यानां क्रमेण बोधजनकत्वस्याशक्यापलापत्वात् । किन्तु, बोधक्रमप्रयोजकत्वं [क्रमेण] बोधा यथा स्युरित्येतदर्थं न पाठक्रम इति तदर्थः । ततश्च, यत्रोपक्रमोपसंहारयोर्विरोधप्रसक्तिस्तत्र किमनुरोधेन किं नेयमिति विमर्शावसरे, अतत्परादपि पाठक्रमादवर्जनीयतया जायमानं बोधक्रममाश्रित्य 'सन्दिग्धे तु वाक्यशेषा'दित्यत्रातत्परवाक्यशेषावगतं घृतमाश्रित्यैव निर्णयसम्भवान्न पाठक्रमस्य बोधक्रमार्थत्वमन्तरा काचिदनुपपत्तिः ।

परिहारोऽप्ययुक्तः—यत्रैकवाक्यता तत्र पाठक्रमो बोधक्रमप्रयोजक इत्येवं कल्पने प्रमाणाभावात् । उपक्रमप्राबल्यादेरन्यथासिद्धत्वस्योक्तत्वेन तस्यैतत्कल्पकत्वायोगात् । अन्यथा पाठक्रमस्य बोधक्रमप्रयोजकत्वे उपक्रमप्राबल्यं, तत्प्राबल्ये च तदनुरोधेन पाठक्रमस्य बोधक्रमप्रयोजकत्वमिति परस्पराश्रयापत्तेः । एकवाक्यताया बोधक्रमेण विना अनुपपत्त्यभावाच्च । यत्र नैकवाक्यत्वं तत्र बोधक्रमे पाठक्रमो न नियामक इत्यप्ययुक्तमेव । अत्रापि पूर्वात् परबलीयस्त्वाय तदपेक्षणात् । अन्यथा अपच्छेदनयविरोधात् ।

तथा च, पाठक्रमस्य नान्तरीयकत्वे, कथं तद्बलादनुष्ठानक्रमसिद्धिरिति शङ्कानिराकरणार्थत्वमेव **टीकाया** युक्तम् । **टीकया** तन्निराकरणप्रकारश्च **प्रयाजा** हीत्यादिना दर्शितः । न च **सम्भूयकारित्वे** सतीत्येव वक्तव्ये, **एकवाक्यत्वे सति इति टीकास्वारस्यभङ्गः** । तस्य, प्रयोगविध्येकवाक्यतासूचनेन, अनुष्ठानक्रमाय पाठक्रमादरे प्रयोगविधिः प्रमाणम्, न तु बोधक्रमाय तदादरे किञ्चित्प्रमाणमस्तीति ज्ञापनार्थत्वात् । तन्त्राश्रयणपक्षेऽपि तत्पदस्वारस्यभङ्गतौल्याच्च । परन्तु, तन्त्राश्रयणे एकस्मिन् पक्षे तस्य मुख्यार्थत्वम्, पक्षान्तरे अमुख्यार्थत्वमिति क्लेशातिशयो विशेष इति ।

ननु सत्यं पाठक्रमादरे विध्याकांक्षा मूलमिति, प्रकृतेऽपि तदस्त्येव। समिदादिवाक्येषु प्रत्यभिज्ञाबलाद्यागैकत्वे निश्चिते कस्मिन् वाक्ये विधिः? कस्मिन्ननुवाद इति निर्णयाय पाठक्रमापेक्षणादिति शङ्कते—**ननु धात्वैक्यादिति**। P. 744-4 **प्रत्यभिज्ञानमुक्तमिति**। ततश्च तद्बलाद्यागैकत्वे विध्यनुवादनिर्णयः पाठक्रमात् भवत्वित्यर्थः। सन्निधिकृता प्रत्यभिज्ञा न विधिश्रुतिस्वारस्यं बाधितुमुत्सहत इति परिहरति—**आख्यातस्य हीति**। ततश्च सर्वेषामपि विधित्वनिश्चयेन क्व विधिः? क्वानुवाद इत्याकांक्षाया एवाभावान्न पाठक्रमादर इति भावः। **विधित्वं** धात्वर्थविधित्वम्।

ननु सर्वत्र सन्निधिरेवापवादकः सन्निहितकर्माभावे विधित्वस्यावर्जनीयत्वादिति शङ्कते—**किं तदिति**। धात्वर्थस्य विधेयत्वे गुणश्रवणं बाधकम्। सन्निधिस्तु ततः प्रच्यावितस्य विधेरपेक्षितानुवाद्यसमर्पणेन तदुपकारक इति परिहरति—**यत्र वाक्य इति**। **तत्प्रख्यान्यशास्त्रैरिति**। विधित्सितसमिदादिगुणप्रख्यापकमन्त्रवर्णकल्पितविधिभिरित्यर्थः।

**नाम्न एव भेदो नाभ्यासादिति**। अत्र परिमलकृतः—अयुक्तेयं P. 745-1 शङ्का। अभ्यासात् कर्मभेदसिद्धेः पूर्वं समिदादीनां पञ्चानां नामत्वासिद्धेः। एको याग इति पूर्वपक्षे, एकस्य नामधेयपञ्चकायोगेन तनूनपादादिवाक्यानां पूर्ववाक्यविहिते कर्मणि वैकल्पिकगुणविधानार्थत्वात्। 'विष्णुरुपांशु यष्टव्य' इत्यादीनामिव मन्त्रवर्णप्राप्तदेवतानुवादेन स्तुतिपरत्वाद्वा। तस्मादभ्युपेत्य परिहारं दर्शयितुमियं शङ्केत्याहुः।

तच्चिन्त्यम्। यथा हि 'समिधो यजती'ति वाक्यार्थनिर्णयकाले मन्त्रवर्णपर्यालोचनालब्धनामत्वसिद्धवत्कारेण समिन्नामकेन यागेन क्रतूपकारं भावयेदिति वाक्यार्थबोधः, तथा तनूनपादादिवाक्यार्थनिर्णयकाले तनूनपादादिशब्दानां यागैक्ये मान्त्रवर्णिकीनां पञ्चानामपि देवतानां स्वत एव विकल्पसिद्धया वैकल्पिकदेवताविधानार्थत्वायोगेन, भिन्नवाक्यत्वस्य स्फुटतया

१. अत्र कल्पतरौ 'ननु धात्वैक्यात्' इत्यतः पूर्वं 'यत एवं पाठक्रमान्नियम्येत' इति शोधनीयम्। 'एवं' इत्यस्य, प्रथमपठिते विधिः इतरत्रानुवाद इत्येवमित्यर्थः।

२. कल्पतरौ पूर्ववाक्ये 'उत्पत्तिशिष्टागन्यायवरोधा' दिति पाठः।

विष्ण्वादिवाक्यवत् स्तुतिमात्रपरत्वकल्पनायोगेन च मन्त्रवर्णानुरोधेन नामत्वनिश्चये तनूनपान्नामकेनेत्यर्थपर्यवसाने तदनुरोधेन यागो भिद्यत इति शङ्काया निरपवादत्वात्। अन्यथा 'अथैष ज्योति'रित्यादावपि कर्मभेदनिश्चयात् पूर्वं नामत्वानिश्चयेन तस्यापि भेदकत्वानापत्तेरिति।

आख्यातपरतन्त्रत्वान्न नाम्नो भेदकत्वमिति परिहरति—**अत आहेति**। P. 745-2 आख्यातपरतन्त्रस्यापि भेदकत्वं दृश्यत इति शङ्कते—**नन्विति**। पूर्वकर्मबुद्धिविच्छेदकत्वसामर्थ्यासामर्थ्याभ्यां वैषम्यमाह—**ज्योतिरित्यादीति**। **सिद्धान्तटीकायां तस्य देवतोद्देशेन त्यागस्येति** वाक्यं व्याचष्टे—**तस्यै पुरुषस्येति**। **सूत्रभाष्याभ्यामिति**। **भेदान्नेति चेदिति** सूत्रतद्भाष्याभ्यामित्यर्थः। **अग्निगतपञ्चसङ्ख्यायास्तूत्पत्तिशिष्टत्वादिति**। 'य एतानेवं पञ्चाग्नीन्वेदे'ति वाक्यस्यैव संख्याविशिष्टाग्न्युपासनविधायकत्वेन पञ्चसंख्यायास्तद्गतत्वादित्यर्थः।

न च 'तद्य इत्थं विदु'रिति वाक्यमेवोपासनाविधायकं किं न स्यादिति वाच्यम्। तत्रार्चिरादिकीर्तनस्य विधास्यमानोपासनायामर्चिरादि [मार्ग] पर्वरूपगुणविशेषविधानार्थतया फलपरत्वाभावेन, 'य एतानेव'मित्यत्र च 'शुद्धः पूतः पुण्यलोको भवती'त्यस्य फलपरत्वेन तस्यैवोपासनाविधायकत्वादिति। पञ्चसंख्यावत् षट्संख्याया उपास्यगुणत्वेन विधानाभावान्न ततो भेद इति परिहारटीकाभिप्रायं दर्शयन्नवतारयति—**उत्पत्तिशिष्टेति**। **अनुवादेन सम्पद्व्यतिरेकसिद्धिं** दर्शयति—**अग्निरेवाग्निरित्यादिनेति**।

**इदानीमिति**। षष्ठोऽप्यग्निः शाखाद्वयेऽप्युपास्यतया विधीयते। छान्दोग्येऽपि 'तं प्रेतं दिष्टमितोऽग्नय एव हरन्ती'ति षष्ठस्याग्नेराम्नातत्वेन तस्यापि विधानावश्यम्भावात्। तथा च षडप्युपास्याः। परन्तु योषिदादयोऽमुख्या अग्नयः पञ्चसंख्याविशिष्टवेषेण चिन्तनीयाः। तदवच्छेदकत्वेन पञ्चसंख्याविधानादित्यर्थः।

---

१. अत्र कल्पतरौ 'ज्योतिरादेरपि विधानासम्बन्धोऽसिद्धः' इति शोधनीयम्।

२. अत्र कल्पतरौ 'तस्य पुरुषकृतस्य त्यागस्ये'ति पाठः। टीकायां—'होमादिधात्वर्थावच्छिन्ने प्रवर्त्यते' इति, टीकायामेव दशपंक्तिभ्यः पूर्वं 'कर्माण्ययमभ्यासः' इति च पाठः।

ननु **टीकायां छन्दोगानामिति** वक्तव्ये कथं **छान्दोग्यानामित्युक्ति**रित्याशंक्य, छन्दोगदृष्टशाखाध्येतृमात्रपरिग्रहाय तथोक्तिरित्याशयेनाह—**छन्दोगेनेति**। यद्यपि 'छन्दोगौक्थिके'ति सूत्रे 'चरणाद्धर्माम्नाययोरेवेष्यते' इति वार्तिकारम्भादुक्तेऽर्थे ञ्यप्रत्ययस्य न प्रसक्तिः। तथापि छन्दोगानामाम्नायः छान्दोग्यं छन्दोगाम्नायश्च वस्तुतः छन्दोगेन दृष्टा शाखेति तथोक्तम्। ततश्छान्दोग्यमधीयत इति विग्रहे 'तदधीते तद्वेदे'त्यणि **छान्दोग्या** इति रूपमिति द्रष्टव्यम्। P 746-8

**अधिकस्तु षष्ठोऽग्निर्विकल्प्यत इति**। यद्यप्यग्निमाधिकरणन्यायादुपसंहार एव वक्तुमुचितः। तथापि, **यद्यपि षष्ठस्याग्नेरुपसंहारो न सम्भवतीत्यादिभाष्योक्ताभ्युपगमवादप्रदर्शनार्थटीकाभिप्रायकथनार्थत्वान्न दोषः**। विद्यैकत्वमित्यस्य सूत्रान्तर्गतत्वभ्रमं वारयति—**दर्शयतीति चेति सूत्रं पूरयतीति**। विद्याभेदकत्वेनाभिमतानि काठकादिनामानि किं यौगिकानि? किं वा रूढानि? आद्येऽपि किं कठप्रोक्तत्वं प्रवृत्तिनिमित्तं? किं वा कठानुष्ठितत्वमिति विकल्प्य प्रथमं निराकृतमेता **हीत्यादिटीकया**। (तदभिप्रायं) द्वितीयं शङ्कते—**ननु विद्यानामिति**। P. 747-5

यद्यपि तस्येदमित्यर्थे 'गोत्रचरणाद्वुञि'ति वुञ्प्रत्यये, काठकादिशब्दनिष्पत्तिः। तथापि तत्सम्बन्धसामान्यं कठप्रोक्तत्वरूपं कठानुष्ठितत्वरूपं वेति भवति विकल्पावकाशः। न च 'गोत्रचरणा'दिति सूत्रेऽपि 'चरणाद्धर्माम्नाययोरिष्यत' इति **वार्तिकारम्भात्** कथमुक्तविकल्पावकाश इति वाच्यम्। कठशब्दस्य कठप्रोक्तशाखाध्येतृवाचित्वेन चरणशब्दतादशायां तथा नियमेपि कठनामकऋषिवाचितादशायां तथा नियमाभावेन बाधकाभावादिति ध्येयम्। ज्ञाने कठाद्यनुष्ठितत्वव्यञ्जकवैलक्षण्याभावात्तस्य प्रवृत्तिनिमित्तत्वं दुर्ज्ञानमिति परिहरति—**अत आहेति**। तदेव दर्शयति—**अध्ययनं हीति**।

आद्यद्वितीयं शङ्कते—**ननु किमि(ती)ति**। अन्यलभ्यत्वान्न रूढिकल्पनेति परिहरति—**तत्राहेति**। **अवयवार्थेति**। कठप्रोक्तत्वेत्यर्थः। काठकादि- P. 748-2

---

१. टीकायां पूर्वं 'फलं प्रयच्छति नान्यथा' इति, 'अध्ययनसंबन्धाविरोधाय अथर्वविहितैव' इति च पाठः।

संज्ञानामभेदस्य विद्यैक्यप्रयोजकत्वनिषेधे तद्भेदस्य तद्भेदप्रयोजकत्वमप्यर्थान्निषिद्धं
P 749-1 भवतीत्याशयेन **टीकेत्याह—यदि काठकादीति । पौनरुक्त्यमिति ।** यद्यपि **पूर्वोत्तरमीमांसयोरैकशास्त्र्यानभ्युपगमान्न** पौनरुक्त्यशङ्कावकाशः । तथापि पूर्वतन्त्रादीनां वेदान्तोपयोगितयैव प्रवृत्तत्वेन तत्र चिन्तितं पुनर्न चिन्तनीयमिति भावः ।

'रेतो वै प्रजापतिः प्रजायते ह प्रजया पशुभि'रिति श्रुतिं व्याचष्टे—**रेतः प्रजननेन्द्रियमिति ।** 'तं प्रेतं दिष्टमितोऽग्नय एव हरन्ती'ति श्रुतिं व्याचष्टे—**त यजमानमिति ।** 'शिरोव्रतं विधिव'दिति श्रुतौ **शिरोव्रतशब्दार्थ-माह—शिरसीति ।** 'एतं ह्येव बह्वृचा' इत्यादिश्रुतिं व्याचष्टे—**एतं ह्येवात्मा-नमिति ।** 'महद्भयं वज्रमुद्यत'मिति श्रुतिं व्याचष्टे—**महद्भयमिति ।** 'यदा ह्येवैष' इत्यादिश्रुतिं व्याचष्टे—**एषोऽधिकृत इति ।** 'तत्त्वेव भयं विदुष' इत्यादिश्रुतिं व्याचष्टे—**तत्त्वेवेति ।**

॥ इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥

---

## ॥ अथ उपसंहाराधिकरणम् ॥

### सू०॥ उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ५ ॥

P. 749-8 पूर्वपक्षाभावादनारम्भणीयमधिकरणमिति शङ्कते—**सर्वशाखास्विति ।** शाखान्तरीयाङ्गानपेक्षामुपपादयति—**करणं हीति ।** नन्वेवं प्रबलप्रमाणप्रापितैरे-वाङ्गैरितिकर्तव्यताकांक्षाशान्तौ दुर्बलप्रमाणप्रापितानामङ्गानामन्वयो न स्यात् । यदि च तदाम्नानबलात् तत्राप्याकांक्षा, तर्हि शाखान्तरीयेऽपि स्यादित्याशंक्य, प्रबल-दुर्बलप्रमाणप्राप्तानामप्येकशाखागतानां युक्त इतिकर्तव्यताकांक्षया प्रयोगविध्य न्वयः । अन्यथा तदाम्नानानर्थक्यात् । अत्र तु प्रतिशाखं प्रयोगविधिभेदेन तत्तच्छाखाम्नातानां तत्तच्छाखागतप्रयोगविध्यन्वयेन निराकांक्षतया न शाखान्तरी-यप्रयोगविध्याकांक्षितत्वमित्याह—**यद्यपेक्षेत्यादिना ।**

ननु सकलाङ्गसाध्यः करणोपकारो न कतिपयैरङ्गैर्भवितुमर्हतीत्याशयेन
P. 749-11 शङ्कते—**नन्विति ।** पुरुषभेदेन न विरोध इति दृष्टान्तमुखेन परिहरति—

**अत आहेति** । कल्पकप्रमाणाभावेन दृष्टान्तवैषम्यं शङ्कते—**नन्विति** । **नियतनिमित्तवशादिति** । प्रधानस्यावश्यकर्तव्यत्वप्रत्यायकनिमित्तवशादित्यर्थः । प्रकृतेऽपि तत्तच्छाखासु व्यवस्थिताङ्गाम्नानान्यथानुपपत्तिरेव कल्पिकेति परिहरति—**अत आहेति । सर्वासां दुग्ध इति** । यजमानस्वामिकसकलधेनुपयसीत्यर्थः । P. 749-14

नन्वस्तु प्रतिषेधविषयत्वं परिसंख्याविधेः । ततः को दोष इत्याशंक्य, दोषत्रयं दर्शयति—**अङ्गान्तरेत्यादिना** । तृतीयं पक्षं दूषयति—**अतिदेशस्य चेति** । यदि चोदकस्सामान्यरूपेण प्रवर्तेत तदा तस्याज्यभागमात्रोपसंहारार्थमिदं वाक्यं स्यात् । यदि वा प्रतिपदार्थं चोदको भिद्येत तदा आज्यभागमात्रे विषये चोदकप्रवृत्तिज्ञापकं स्यात् । नोभयमपीत्यर्थः । **उपकारावच्छेदं[1] एवेति** । प्रकृतौ सकलाङ्गजन्यस्याखण्डोपकारस्य आज्यभागमात्रसाध्यत्वोपदेशमुखेन तदितराङ्गेभ्यो व्यवच्छेद एव वाक्येन क्रियते । विकृतिभावनापेक्षितस्योपकारस्य सन्निधिश्रुताभ्यां क्लृप्तोपकाराज्यभागाभ्यामेव सिद्ध्या तदर्थं चोदकानपेक्षणेन ततः पदार्थानामप्रापणादित्यर्थः ।

अङ्गान्तरापेक्षानपेक्षयोः भिन्नाधिकरणत्वात्तत्र न विरोधः । प्रकृते त्वेकविद्यागतत्वाद्विरोध इति वैषम्यमाह—**गृहमेधीयन्याये हीति । एतच्च विरुद्धमिति** । पुरुषभेदेनाप्येकस्य कार्यस्य तज्जन्यत्वं तदजन्यत्वं च विरुद्धमिति भावः । **अवच्छेद** इत्यस्य, विवरण**मशक्याङ्गेभ्य इति । काम्यत्वादित्यर्थ इति** । न च नित्यत्वाभावेऽपि व्यवस्थिताङ्गाम्नानबलादेव शाखान्तराम्नाताङ्गावच्छेदः, नान्तरीयकतया व्यवस्थाया इतरनिवृत्तिपरत्वे मानाभावादिति भावः ॥ P. 750-9

**वैषम्यान्तरेणेति** । वचनवैयर्थ्याभावरूपेणेत्यर्थः । **सकलप्राकृताङ्गानि** आक्षिप्यन्त इत्यर्थः । **प्राप्तयोरिति** । सम्भवत्प्राप्तिकयोरित्यर्थः । **नेतरपरिसंख्यायकमिति** । न च शाखान्तरतस्सम्भवत्प्राप्तिकगुणपुनःश्रवणात् परिसंख्या कुतो न स्यादिति वाच्यम् । गुणपुनःश्रवणस्य विध्यैक्यप्रत्यभिज्ञामुखेन गुणान्तरोपसंहारार्थत्वेनानर्थक्याभावादिति भावः । सिद्धान्तेऽपि P. 751-3

---

१. कल्पतरौ 'प्रवृत्तेराज्यभागमात्रविषयत्वकल्पनस्य' इति शोधनीयम् ।

P. 751-6 परिसंख्याभ्युपगमात् पूर्वपक्षगतेत्युक्तम्। प्राप्तपरिसंख्येत्यर्थः। अतिदेशस्य तन्मात्रेति। चोदकस्य श्रुताज्यभागमात्रविधानपरत्वं पूर्वपक्षे कल्पितमित्यर्थः। बलवद्बाधकमिति। नास्तीति भावः।

इति उपसंहाराधिकरणम्।

---

## ॥ अथ अन्यथात्वाधिकरणम् ॥

सू० ॥ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

सू० ॥ न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥

सू० ॥ संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॥ ८ ॥

पूर्वाधिकरणस्य प्रथमाधिकरणफलप्रतिपादकत्वात्तेनैव साकमस्याधिकरणस्य सङ्गतिमाह—चोदनादीति। टीकाव्याख्येयान्वाजसनेयि-P. 751-16 ब्राह्मणगतान् श्रुतिखण्डान्दर्शयति—द्वया हेत्यादिना। तत्र प्रजापतिरिति। प्रजानां वागादिवृत्तिरूपाणां पतिरीश्वरः प्रेरकः कर्मसु ज्ञानेषु च लौकिकवैदिकेष्वधिकृतः पुरुषः क्षेत्रज्ञ इत्यर्थः॥ 'अथ हेम'मित्यादिसन्दर्भपर्यालोचनायां प्राणस्यापि प्राजापत्यान्तर्गततया प्रजापतित्वमनुपपन्नमित्यत आह—प्राणप्रधानस्येति। वागादीनां षष्ठ्यन्तनिर्दिष्टानां निन्दित्वेत्यनेनान्वयायोगादाह—P. 75?-8 तान्येवेति। अविव्यत्सन्निति श्रुतिपदमिति। 'व्यध ताडन' इति धातोस्सन्नन्तस्य लङि रूपमविव्यत्सन्निति। तत्र सन्प्रत्ययमुपेक्ष्येत्यर्थः। वाशब्द इति। लोष्टो वेति वाशब्द इत्यर्थः।

टीकायां बहुतररूपप्रत्यभिज्ञानबलादुद्गातृशब्दस्योद्गीथे लक्षणेत्युक्ता, विद्याभेदे एतादृशं वैलक्षण्यमप्रयोजकमिति दर्शयितुं न केवलमित्यादिटीका। तां व्याकुर्वन्नेवावतारयति—उद्गीथकर्तृत्वमिति। सिद्धान्तबीजं P. 753-2 निराकर्तुमुत्तरटीकेत्याशयेनाह—एवमिति। टीकायामेकस्मिन् वाक्य इत्यस्य

---

१. कल्पतरौ 'भक्त्येकदेशप्रणवे'ति पाठः।

पूर्वेणान्वयः। ननु **कृत्वेति** शेषपूरणेऽपि तस्य तथा **हीत्युत्तरटीकया** साकमन्वयायोगादनुपपत्तिस्तदवस्थैवेत्यत आह—**एतच्चेति**। P. 753-3

विषयवाक्यार्थं सिद्धान्तरीत्या दर्शयति—**यस्य यजमानस्येति**। **निर्वपेदिति**। दातृत्वादिगुणकाग्न्यादिदेवताभ्यो यजेतेत्यर्थः। **अभितस्सन्निधाविति**। यमुपक्रान्तदर्शमभि उदितश्चन्द्रस्स यजमानोऽभ्युदित इत्यर्थः। ननु नैमित्तिकाधिकारसमाप्त्यनन्तरं पुनर्दर्शानुष्ठाने को हेतुरित्यत आह—**तस्यैव कर्मण इति**। सिद्धान्ते दर्शकर्मण्येव देवतान्तरविधानेन दर्शप्रत्याम्नानेन कर्मान्तरविध्यभावात् स्वकाले नित्याकरणप्रयुक्तप्रत्यवायपरिहाराय पुनर्दर्शोपि कर्तव्य इत्यर्थः।

सिद्धान्तप्रयोजनप्रदर्शनेन पूर्वपक्षप्रयोजनमप्यर्थात् सूचितम्, तद्दर्शयति—**दर्शलोपे त्विति**। प्रत्यवायपरिहाराद्यर्थमुपक्रान्तस्य दर्शस्य कालापराधात् भ्रंशे विधीयमानेन कर्मणा, दध्यादिभ्रंशे विधीयमानेन पञ्चशरावयागेन दध्यादियागप्रयोजनस्येव दर्शप्रयोजनस्य सिद्धेर्न पुनर्दर्शानुष्ठानमित्यर्थः। P. 754-7

ननु पूर्वतन्त्रे पूर्वपक्षे दर्शलोपो नोक्तः; सत्यं, तत्र कर्मान्तरं दर्शप्रत्याम्नानेन विधीयत इति पूर्वपक्षो न प्रवर्तितः। किन्तु कालापराधे निमित्ते कर्मान्तरं विधीयत इति। **टीकाकृता** तु 'यथा पञ्चशरावे' इति सूत्रगतदृष्टान्तसामञ्जस्याय दर्शप्रत्याम्नानेन कर्मान्तरं विधीयत इत्येव पूर्वपक्षः प्रदर्शितः। अत एव प्रत्याम्नानत्वसूचनाय प्रदर्शितस्यापि संशयस्य पुनःप्रदर्शनावसरे **दर्शादिति** पदं प्रयुक्तम्। अत एव चोपसंहारे वक्ष्यति—**दर्शस्तु लुप्यत इति**। **प्रतिज्ञाय** सिद्धान्ते प्रतिज्ञाय। अपादाननिर्णयाभावान्नापनयविधिरिति शंकते—**ननु विभजेदिति**। P. 755-3

---

१. कल्पतरौ 'हविर्विभागेत्यादिना' इति प्रतीकश्शोधनीयः। टीकायामपि। कल्पतरावेव 'उत्पत्तिशिष्टदेवतावरुद्धे कर्मणि देवतान्तरानवकाशात्' इति, 'प्राप्ते कर्मणी'त्यादिकं च न प्रतीकधारणरूपं, अपि तु कल्पतरुवाक्यमेव। बृहदक्षरमुद्रितत्वात् भ्रान्तिस्स्यात्। तदर्थमुक्तम्। टीकायां 'तथा च प्राप्ते कर्मणि'ति पाठः।

२. 'अभ्युदये कालापराधादिज्याचोदना स्यात् यथा पञ्चशरावे' (७ ५-१-) इति जैमिनिसूत्रम्।

३. कल्पतरौ 'न कर्मान्तरमिति प्रतिज्ञाय' इति पाठः।

P. 756-1 **ये मध्यमादीति** । मध्यमादिवाक्येषु देवतान्तरविधानस्य पक्षद्वयेऽप्यविशिष्टतया तत्र किं दार्शिकहविषां देवतान्तरसम्बन्धमात्रं विधीयते? किं वा देवतान्तरविशिष्टं कर्मान्तरम्? यदि त्रेधावाक्ये अपनयविधिः स्यात्, तदा देवतान्तरसम्बन्धमात्रविधिः। इतरथा कर्मान्तरविधिरेव। कथं च तत्रापनयविधिः? त्रेधाविभागमात्रस्यैव श्रवणात्। यदि वा अर्थसिद्धत्वान्न त्रेधा विभागविधिः, तथापि किमपादानको विभागो विधीयते इति विमर्शावसरे मध्यमादिवाक्यविहितदेवताप्रतियोगिनीनां प्रकृतदेवतानां बुद्धिस्थत्वात् तदपादानकोऽपनयविधिरित्यर्थः ।

त्रेधावाक्ये देवतापनयविधावपि **मध्यमादिवाक्यानां** देवतान्तरसम्बन्धमात्रविध्यनिर्वाहात् त्रेधावाक्यमनुवाद एव। **मध्यमादिवाक्यानि** तु कर्मान्तरपराणीति शङ्कते—**ननु तण्डुलानामेवेति** । ननु तण्डुलानित्यस्याविवक्षितत्वे कस्य विभागविधिरित्यत आह—**हविर्मात्रमिति** । विमर्शोपस्थितं हविर्मात्रमित्यर्थः । P. 756-6 ग्रहैकत्वन्यायेन गतार्थतां परिहरन् पूर्वपक्षमाह—**तत्र श्रुतत्वादिति** । युक्तं 'ग्रहं संमार्ष्टी'त्यादावेकत्वमविवक्षितमिति, श्रुताया विभक्तेः कर्मत्वादिप्रतिपादनेन सावकाशत्वात्। उभयपदं तु निमित्तविशेषणसमर्पकत्वाभावे निरवकाशं स्यात्। अन्यथा हविष्ट्वमपि विशेषणं न स्यादिति भावः ।

**विध्यावृत्तिप्रसङ्गादिति** । ततश्चोभयपदं न केवलमार्तं दध्येव वा पय एव वा प्रायश्चित्तनिमित्तम्, किन्तूभयमपीति स्तुतिपरमिति भावः । ननु प्रकृतकर्मोपस्थापकाभावे कथमपनयविधिः? कथं वा देवतान्तरसम्बन्धविधिरिति शङ्कते—**ननु न[2] शक्नुवन्तीति । कथं तत्रेति** । अतः कथं तत्रेत्यर्थः । तण्डुलदधिशृतानां दार्शिकहविषां प्रत्यभिज्ञानात्तन्मुखेन दर्शकर्मप्रत्यभिज्ञानमिति P. 757-1 परिहरति—**अत आहेति** ।

---

१. कल्पतरौ 'ये मध्यमादिवाक्यैः देवतान्तरेषु विहितेषु' इति पाठः ।

२. कल्पतरौ 'ननु शक्नुवन्तु वाक्यानि' इति पाठो दृश्यते । कल्पतरावेव पूर्वं 'तत्पर्यवसानाय हि' इति पाठः । टीकायां 'अपनीते पूर्वदेवतासंबन्धे' इति, 'प्रकृतकर्मप्रत्यभिज्ञानात्' इति, 'तण्डुलपेषणप्रथनपुरोडाश' इति च पाठः ।

ननु दर्शकर्मणि दधिपयस्तण्डुलानां परस्परसम्बन्धस्यैवाभावात् कथं विधिव्यापारमन्तरा सामर्थ्यमात्रेण चरुत्वाधिकरणत्वयोः प्राप्तिरिति शङ्कते—**प्रकृते कर्मणीति**। साहित्यं तावत्सिद्धमिति दर्शयति—**दध्नस्तण्डुलानामिति**। P. 757-4

**एकदेवताकत्वात्सिद्धमिति**। दधिस्थविष्ठोद्देशेन श्रृताणिष्ठोद्देशेन च प्रदानिन्द्रादिरूपैकदेवताविधानात् साहित्यं सिद्धमित्यर्थः। यद्यप्येतावता याग एव साहित्यं गम्यते। न पाकादौ। तथापि त्रेधावाक्ये कस्य कुतोऽपनयविधिरिति विमर्शावसरे मध्यमादिवाक्येषु दधियुक्तानां पयोयुक्तानां च तण्डुलानां देवतान्तरसंबन्धदर्शनात् तेषामेव पूर्वदेवतापनयविधिरिति निश्चयेन पूर्वदेवतापनयानुष्ठानप्रभृत्येव स्वरसतः साहित्यमवगतं, अत एव **टीकायामुक्तं— दधियुक्तानां पयोयुक्तानाञ्च तण्डुलानां विभजेदिति वाक्येन पूर्वदेवतापनयं कृत्वेति**। तथा च श्रपणादावपि सिद्धं साहित्यमिति भावः।

**त्र्यधिकगवामिति**। 'वाग्यतः तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयती'ति विधानादिति भावः। चरुत्वविधिप्रयुक्तो वाक्यभेदो दुष्परिहर इति शङ्कते—**नन्विति**। न तावत् 'कपालेषु श्रपयती'ति विधितः श्रपणप्राप्तिः। तस्य पुरोडाशसामर्थ्यसिद्धश्रपणानुवादेन कपालविधानार्थतया शुद्धप्रयोगेऽपि श्रपणस्यावैधत्वात्। नाप्येतत्प्रकरणगतेन 'सह श्रपयती'ति वाक्येन। तस्य सामर्थ्यसिद्धश्रपणाद्यनुवादकत्वात्। अन्यथा दध्नस्तण्डुलानां च सहश्रपणविधायकत्वे असन्नयत एतद्विध्यर्थासम्भवेनाभ्युदयेष्ट्यभावप्रसङ्गात्। नापि पुरोडाशसामर्थ्यात्। स्थविष्ठतण्डुलाद्युद्देशेनैव देवतान्तरसम्बन्धविधानेन पेषणप्रथनादेरिव च पाकस्यापि निवृत्तेरवर्जनीयत्वात्। अत एव 'दधिमधुघृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्य'मित्यत्र तण्डुलेषु न पाकः। तथा च चरुत्वविधिबलादेव पाक इति वक्तव्यमिति सिद्धो वाक्यभेद इत्यर्थः। P. 757-6

युक्तं प्राजापत्यतण्डुलेषु न पाक इति। तत्र तण्डुलावस्थानामेव हविष्ट्वावगमात्। प्रकृते च न तण्डुलावस्थानां हविष्ट्वं, प्रकृतानामेव तण्डुलानां देवान्तरसम्बन्धविधानेन तेषाञ्च पेषणप्रथनपुरोडाशपाकभाजामेव हविष्ट्वात्। तत्र तण्डुलावस्थायामेव दधिपयस्साहित्यावगमेन पेषणादीनामशक्यतया निवृत्ता-

१. कल्पतरौ 'अधिकरणचर्वर्थयोः अर्थप्राप्तिः' इति पाठः।

वपि पाकस्य निवृत्तौ नास्ति किञ्चिन्नियामकम् । अत एवासन्नयतो दधिपयस्सा- हित्याभावेन शक्यानुष्ठानतया पेषणादिप्रवृत्तौ स्थविष्ठाणिष्ठानामपि पुरोडाशभावेनैव P. 757-8 हविष्ट्वं, तथाच न चरुत्वविधिप्रयुक्तो वाक्यभेद इतिं परिहरति—**अत आहेति** ।

एवमपि पाको निवर्तेत । यद्यर्थलोपः स्यात् । सोपि नेत्याह—**साध- नेति** । न पुरोडाशत्वप्रयुक्तः पाकः, येन तन्निवृत्तावर्थलोपात् पाको निवर्तेत । किन्तु तद्गतसाधनविशेषरूपप्रयुक्तः सर्वेषामपि धर्माणां अपूर्वसाधनत्वप्रयुक्त- त्वात् । अन्यथा व्रीहिधर्माणां यवसाधारण्यं न स्यादिति भावः ।

नन्वेवमपि, दधि स्थविष्ठांश्चोद्दिश्य देवतासम्बन्धविधानात् प्रत्युद्देश्यम् वाक्यपरिसमाप्त्या वाक्यभेदो दुष्परिहर इत्याशंकामभ्युपगमेन परिहर्तुं **भवतु वेत्यादिटीका** । तत्र **प्रकृताधिकारावगमबलादिति** हेतुरयुक्तः । तथात्वे पञ्चशरावावाक्येपि प्रकृताधिकारबलादेव द्रव्यदेवतोभयविधानप्रयुक्तवाक्यभेदे सत्यपि प्रकृत एव कर्मणि द्रव्यान्तरं देवतान्तरं च विधीयत इत्यभ्युपगमापत्ते- P. 759-1 रित्यतस्तात्पर्यमाह—**प्रकृतस्येति** । देवतापनयविधौ देवतान्तरसम्बन्धविधा- वातञ्चनाभ्यासलिङ्गदर्शने च सर्वत्र दार्शिकहविषामेव प्रत्यभिज्ञायमानतया तद्द्वारा प्रकृतस्याधिकारो निश्चीयते । पञ्चशरावावाक्ये तु नैवमिति भावः ।

'परोवरीया'निति श्रुतौ परश्चासौ वरश्चेति विग्रहः । छान्दसमोत्वमाश्रित्य परोवरशब्दः, तत ईयसुन्प्रत्ययः । तदर्थस्य चातिशयस्य परत्ववेषेण वरत्ववेषेण च प्रतीते प्रकृत्यर्थे अन्वय इति दर्शयितुं **परस्माचेत्यादिटीका** । तत्र **परस्मा- दित्यनेन** सामगतित्वेन पूर्ववाक्यनिर्दिष्टस्वरप्राणादिरुच्यत इत्याशयेनाह— **स्वरप्राणादेरिति** । उद्गीथे परमात्मदृष्टिरसिद्धेति शङ्कते—**नन्विति** । 'तद्ध P. 759-8 देवा उद्गीथमाजह्रु'रिति श्रुतिं व्याचष्टे—**तत्त्रेति** ।

॥ इति अन्यथात्वाधिकरणम् ॥

---

१. 'अत आह अनिवृत्तस्त्विति' इति कल्पतरुधृतप्रतीकशालिटीकावाक्ये पाठ- शुद्धिरेवम्—'अनिवृत्तस्तु पाकोऽपवादाभावात् । तथा चार्थप्राप्तावेव चरुसमर्थ्यर्थावनूद्येते इति न प्राप्ते कर्मणि अनेकगुणविधानं, अपि तु तस्यैव कर्मणो नैमित्तिके देवतापनये प्रयोगविशेषश्चोद्यते' इति । टीकायां पाठस्त्रुटित इति ज्ञायते ।

२. कल्पतरौ 'ते सर्वे सर्वं दुग्धं' इति पाठः ।

## ॥ अथ व्याप्त्यधिकरणम् ॥

### सू०॥ व्याप्तेश्च समञ्जसम् ॥ ९ ॥

पूर्वाधिकरणे सिद्धवद्व्यवहृतस्यार्थस्य नियामकाभावेनाक्षेपात् सङ्गतिरित्याह—ओमित्येतदिति । पूर्वोत्तरविरोधं शङ्कते—भाष्य इति । अत्रत्य- P. 760-2 भाष्ये अध्यासशब्द आहार्यारोपपर इति परिहरति—अत आहेति । इदमुच्यत इति टीकायामितिशब्दादर्शनात् सिद्धान्तमाह [इदमुच्यते] इत्येतत्प्रतीकत्वाभावभ्रमं व्यावर्तयति—भाष्यमुपादत्त इति । 'सम्भवे व्यभिचारे च स्यात् विशेषणमर्थवदि'ति न्यायमाश्रित्य विशेष्यस्योंकारस्य व्यभिचारं विशेषणविनिर्मुक्तस्थलेऽपि वर्तमानत्वं दर्शयितुं टीकायां—व्याप्तेश्चेति सूत्रैकदेशो गृहीतः । तत्र शङ्कते—ओंकारस्येति । स्वरूपेण व्याप्त्यसम्भवेप्युच्चारणद्वारा सर्ववेदगतत्वं सम्भवतीति परिहरति—यजुर्वेद इति ।

एवमपि विशेष्ये वैलक्षण्याभावे व्यर्थं विशेषणमित्यत आह—प्रतिवेदमिति । तद्विशेषेत्यत्र तदित्यव्ययं तस्मादर्थे । प्रतिपाद्यत इति । विधीयत इत्यर्थः । विनिगमनाविरहान्नोद्गीथशब्दे लक्षणेति शङ्कते—स्यादे- P. 760-12 तदिति । अप्रधानत्वं विनिगमकमित्याशयेन परिहरति—अत आहेत्यादिना । तादृक्फलविशिष्टस्य । आप्त्यादिफलविशिष्टस्य । सिद्धान्तेऽपि लक्षणासत्त्वात् अध्यासे त्विति टीकायां—लक्षणाशब्दः साम्प्रतिकलक्षणापर इत्याह—भक्त्यैवयव इति । नन्वध्यासपक्षे उद्गीथशब्दस्योद्गीथदृष्टिविषयत्वलक्षणगुणयोगेनैव प्रणवे प्रवृत्तेर्गौणीति वक्तव्ये, कथं लक्षणेत्युक्तम् । तत्राह—इयं चेति । भेदप्रमाणं दर्शयन्नुपासनाभेदमुपपादयति—ओंकार इति । P. 761-5

---

१. कल्पतरौ 'इदमुच्यत इतीति इतिशब्दो द्रष्टव्यः' इति पाठः, पूर्वं 'सहाप्रयोगात्' इति पाठः ।

२. टीकायां 'उद्गीथमिति विशेष्यते' इति पाठः ।

३. कल्पतरौ अयं प्रतीको न दृश्यते । 'भक्त्यवयवे चेयं निरूढा लक्षणा न सांप्रतिकी' इति पाठः ऊह्यते । 'स्यादित्यर्थः' इति प्रामादिकं, 'अध्यासे त्विति' इति प्रतीकधारणानन्तरं 'इयं च' इत्यादिग्रन्थः ।

४. कल्पतरौ 'तस्मिन्नाप्त्यादिगुणदृष्टेश्चोपास्ये'ति पाठः ।

**अधिकारः प्रतिपादनमिति ।** निर्देशमात्रमित्यर्थः । ननु निर्देशमात्र-
P. 761-7 परत्वे वाक्यवैयर्थ्यात् विधायकत्वमेव युक्तमित्यत आह—**आप्त्यादिदृष्टी-र्विधातुमिति ।** यद्यप्युत्तरत्र द्वे एव दृष्टी विधीयेते[1] तथाप्यनेकत्वाभिप्रायं **बहुवचनम् ।** एवं पूर्वटीकायामपीति ध्येयम् । आप्त्यादिगुणकोपासना-सिद्ध्यर्थमुद्गीथावयवत्वरसतमत्वपरार्ध्यत्वाष्टमत्वादिगुणविशिष्टप्रणवसमर्पणेनान्यथा सिद्धत्वान्न तस्योपासनाविधायकत्वमित्यर्थः ।

नन्वाप्त्यादिवाक्यमेव गुणसमर्पकं, 'ओमित्येत'दिति वाक्यमेव विशिष्ट-प्रणवोपासनाविधायकमिति किं न स्यादित्यत आह—**आप्त्यादीति ।** नन्वेव-मपि स फलविधिरस्तु, अयन्तु 'सोमेन यजेते'त्यादिवदुत्पत्तिविधिः कुतो न भवेदिति चेन्न । युक्तं ज्योतिष्टोमवाक्ये फलमात्रश्रवणात्, 'सोमेन यजेते'-त्यस्योत्पत्तिविधित्वं, प्रकृते तु, 'आपयतो वै तावन्योन्यस्य काममापयिता ह वै कामानां भवती'ति 'एषो एव समृद्धिर्यदनुज्ञा समर्धयिता ह वै कामानां भवती'ति च गुणफलयोरुभयोरपि श्रवणेन तयोः फलविधित्वासम्भवे कथमस्योत्पत्ति-विधित्वम् ? तस्मादेतद्वाक्यनिर्दिष्टोद्गीथावयवत्वरसतमत्वादिगुणविशिष्टे ओंकारे आप्त्यादिगुणचिन्तनं तत्तत्फलार्थमाप्त्यादिवाक्याभ्यां विधीयत इति तदेकवा-क्यतापन्नमेवेदं वाक्यं, न स्वतो विधायकमिति भावः ।

**अपि चेत्यादिटीकायामध्यासपक्षे गौणी वृत्तिरिति सिद्धवत्कृत्य दौर्बल्य-मुक्तम् ।** तत्सिद्धिप्रकारं स्वयं दर्शयति—[विषयतया] **ओंकार इति ।** 'ओंकार-मुद्गीथं पश्येदित्युद्गीथदृष्टिविधौ 'अमी पिष्टपिण्डाः सिंहाः क्रियन्ता'मित्यादाविव साध्यसादृश्यं पुरस्कृत्य गौणत्वमेव स्यादित्यर्थः। **तथा सतीति ।** उद्गीथशब्देन तद-वयवोंकारलक्षणायामध्यासरूपदृष्टिविध्यसिद्धिरित्यर्थः। लक्षणास्थले पदस्य लक्षणीय-परत्वोपपादकं **यस्य लक्षणीयत्वमित्यादिटीकावाक्यं** व्याकुर्वन्नेव **उत्तरटीका-**
P. 761 1 मवतारयति—**वाच्यमर्थमिति ।**

---

१. अत्र टीकायां 'उपासनाधिकारपरे वाक्ये परार्थे नायं दोषः' इति पाठः । टीकायामेव पूर्वं 'आप्त्याद्युपासनेष्विव' इति पाठः ।

२. अनेन टीकायां 'लक्षणायां हि यस्य लक्षणीयत्वं तत्परत्वं पदस्य' इति पाठ इति सूच्यते । कल्पतरौ, तन्मात्रपरत्वं लक्षणायां' इति, 'गौण्यां' इति च पाठः । टीकायामुपरि 'आमिक्षापदं हि स्वरूपेणे'ति पाठः ।

लक्षणायामपीति भाष्य इति। लक्षणायामपीत्यादिभाष्ये अध्यासपक्षे विप्रकृष्टा लक्षणेति तदभ्युपगम इत्यर्थः। लक्षणात्रयवत्त्वादिति टीकां व्याचष्टे—लक्षणेति। वैश्वदेव्यादीत्यादिशब्देन ज्ञानानन्दादिशब्दा गृह्यन्ते। लक्ष्यैक्येपीति। पदानां वाक्यार्थे लक्षणाभ्युपगमात् वैश्वदेव्यामिक्षेत्यादिपदानामपि विशिष्टामिक्षारूपे वाक्यार्थे लक्षणेति लक्ष्यैक्यमित्युक्तम्। P. 762-1

॥ इति [1]व्याप्त्यधिकरणम् ॥

---

## ॥ अथ सर्वाभेदाधिकरणम् ॥

### सू० ॥ सर्वाभेदादन्यत्रेमे ॥ १० ॥

दृष्टान्तसङ्गतिं दर्शयन् पूर्वपक्षटीकामवतारयति—ओंकारस्येति। P. 733-1 यथाकथञ्चित् सन्निहितमप्येवंशब्देन परामृश्यते इति मन्वानः शङ्कते—नन्विति। शब्दसन्निधापितस्यैव शब्देन परामर्शो नान्यस्येति परिहारेटीकाभिप्रायमाह—अशाब्दस्येति। फलविधिपर इति। 'तथो य एवं विद्वा'नित्यादिना 'तदमृतो भवती'(ति) त्यन्तेन प्राणसायुज्यलक्षणफलविधिपर इत्यर्थः। शाखान्तरीयफलसम्बन्धानुवादादिति। यद्यपि छान्दोग्यबृहदारण्यकयोः 'ज्येष्ठश्च श्रेष्ठश्च भवती'ति ज्यैष्ठ्यश्रैष्ठ्यलक्षणमेव फलमुक्तम्, न प्राणसायुज्यम्। तथापि प्राणभावमन्तरा ज्यैष्ठ्याद्ययोगात्तदुक्त्या प्राणसायुज्यमप्युक्तमिति भावः। तथा च वक्ष्यति—प्राणात्मत्वप्राप्त्या श्रैष्ठ्यादिगुणान्वितो भवतीति।

ननु सत्यमित्यादिटीकायामेवंशब्देन वसिष्ठत्वादिगुणजातस्यापि परामृष्टत्वेन शाब्दत्वादस्ति वाक्यार्थोपासनायामन्वय इत्युक्तम्। तदयुक्तम्। तच्छाखागतशब्दसन्निधापितगुणमात्रपरामर्शेन चरितार्थस्यैवंशब्दस्य कथञ्चित्सन्निहितवसिष्ठत्वादिपरामर्शित्वायोगादित्याशङ्क्य, तस्यामपि शाखायामत्यन्त-

---

१. अस्मिन्नधिकरणे भाष्ये 'औद्गात्रविशेषस्य' इत्येतत् 'उद्गातृविषयस्य' इति शोधनीयम्।

२. अत्र टीकायां 'शाखान्तरगतस्य चात्रानुक्ततया' इति शोधनीयमिति भाति।

सन्निहितमात्रपरामर्शेन चारितार्थ्यव्युदासाय प्रकृतसकलगुणपरामर्शित्वमिति प्रकरणपुरस्कारावश्यम्भावे, तदपेक्षया लाघवेन गुणिसामर्थ्यसन्निहितमेवैवंशब्देन

P. 764-1 परामृश्यत इति युक्तमिति तदभिप्रायमाह—**सत्यं अशाब्दमिति**।

एवञ्च कौषीतकीवाक्यस्य गुणान्तरव्यावृत्तिपरत्वाभावेन वाक्यभेदाप्रसङ्गात् फलपरत्वमेव युक्तम्। तच्छाखाध्यायिनं प्रति फलविधित्वसम्भवे कथञ्चित्प्राप्तानुवादत्वकल्पनायोगादित्याह—**एवञ्चेति**। **यतो भाष्य इति**। या श्रुतहानिर्नैवं सति श्रुतहानिरश्रुतकल्पना वेति भाष्ये निषिध्यत इत्यर्थः। **इति शङ्केत्यर्थ इति**। तथा च शाखान्तराम्नातगुणगणोपेततया गुणिनः प्रत्यभिज्ञायमानत्वात् तच्छाखाम्नातगुणेषु कैवल्यमसिद्धमिति परिहार इति भावः।

'अथातो निःश्रेयसादानमेता ह वै देवता अहं श्रेयसे विवदमाना' इति श्रुतिं व्याचष्टे—**निःश्रेयसमिति**। 'तथो य एवं विद्वान् प्राणे निःश्रेयसं विदित्वे'त्यादिश्रुतिं 'तदमृतो भवती'ति वाक्यशेषेण सह व्याचष्टे—**यथा प्राण**

P. 765-2 **इति**। **उशब्द इति**। **तथो** इत्यत्र विद्यमान इत्यर्थः।

॥ इति सर्वाभेदाधिकरणम् ॥

---

## ॥ अथ आनन्दाद्यधिकरणम् ॥

### सू०॥ आनन्दादयः प्रधानस्य ॥ ११ ॥

### सू०॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

### सू०॥ इतरे त्वर्थसामान्यात् ॥ १३ ॥

ननु गुणोपसंहारस्य तत्तद्गुणान्विततया गुण्यनुचिन्तनं फलम्। न च तन्निर्विशेषस्थले सम्भवतीति व्यर्थः तत्र गुणोपसंहार इति प्रत्यवस्थानमाह—**प्राणस्येति**। ननु वेद्यैक्यनिबन्धनो गुणोपसंहारः। स चासत्यपवादके श्रुत्यादौ न प्रयोजनाभावमात्रेण परित्यक्तुं शक्यत इति व्यर्थं इदमधिकरणमिति शंकते—

**नेन्नु वेद्येति । अनिर्ज्ञातपरिमाणत्वादिति ।** अनिर्ज्ञातपरिमाणेतिकर्तव्यता-साध्यत्वादित्यर्थः । P. 766-5

**अपूर्वप्रयुक्तधर्माणामिति ।** कालान्तरभाविफलसाधनत्वेन बोधितोपासनासाध्यपरमापूर्वप्रयुक्तानां चिन्तनीयगुणरूपाणां धर्माणामित्यर्थः । निर्विशेषस्थले गुणोपसंहारस्य प्रयोजनाभावोऽप्यसिद्ध इत्याह—**यत्त्वित्यादिना । विरुद्धानृतेति ।** सत्यज्ञानानन्दानन्तात्मपदार्थविरुद्धा अनृतजडदुःखपरिच्छेदानात्मानः तत्स्वरूपत्वभ्रान्तीरित्यर्थः । **सत्तादीत्यादिपदेन** ज्ञानत्वानन्दत्वादीनां ग्रहणम् ।

अस्तु ततः किं तत्राह—**एतादृशेति ।** एवमपि निर्गुणप्रकरणगतसकलपदबृन्दोपसंहारे को हेतुरित्यत आह—**प्रयोक्तव्ये चेति ।** तर्हि संयद्वामत्वादिगुणानामुपसंहारः कुतो न भवेदित्याशंक्य, तेषां यत्किञ्चिद्भ्रान्तिनिवर्तनेन निर्विशेषप्रमितिपरत्वाभावान्नोपसंहारप्रसक्तिरित्याशयेनाह—**तन्निरसनसमर्थेति ।** P. 767-2

॥ इति आनन्दाद्यधिकरणम् ॥

---

## ॥ अथ आध्यानाधिकरणम् ॥

### सू०॥ आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

### सू०॥ आत्मशब्दाच्च ॥ १५ ॥

यथाश्रुतभाष्यानुरोधेन प्रासङ्गिकीं **पादसङ्गतिमभिधाय, टीकानुरोधेन** साक्षादेव **पादसङ्गतिमाह—तन्निबन्धनेति ।** अन्तरङ्गधर्मचिन्तानन्तरं बहिरङ्गधर्मचिन्तनमवसरप्राप्तमित्यवान्तरसङ्गतिमाह—**ब्रह्मस्वभावेति ।** सत्तादिकं ब्रह्मस्वभावभूतम्, विरोधिभ्रमनिवृत्त्यर्थमुपसंहार्यं च अर्थादिपरत्वन्त्विन्द्रियादिप्रतियोगिसापेक्षत्वान्न ब्रह्मस्वभावभूतम्, भ्रमनिवर्तकत्वाभावादनुपसंहार्यं चेत्यर्थः । P. 767-1

---

१. अत्र टीकायां 'न हि ब्रह्मणो धर्मिणः तत्त्वे' इति पाठः । अन्ते 'तस्य तु विषयः संयद्वामादिरुक्तः' इति पाठः ।

**न सर्वेषां वाक्यानामिति ।** भिन्नवाक्यतया भासमानानामपि स्यादेकार्थपरत्वम्, यद्येकस्मिन्नर्थे बोधिते तदितरेषामर्थसिद्धत्वं स्यात् । यथा 'एकं वृणीते द्वौ वृणीते त्रीन् वृणीते' इत्यत्र त्रयाणां वरणे विहिते द्वयोरेकस्य च वरणमर्थसिद्धमिति न तत्परत्वं वाक्यस्य । न चेह पुरुषगतपरत्वप्रतिपादनेनार्थादिगतं परत्वमर्थसिद्धं भवतीति न तत्परत्वं वाक्यस्येति भावः ।

**प्रतितिष्ठत्यर्थमिति ।** सर्वेष्वपि तिष्ठत्यर्थेष्वित्यर्थः । तथा च, 'दश मन्वन्तराणीह तिष्ठन्ती'त्यादावप्यन्वय इति भावः । **सूक्ष्माणि शब्दादिरूपाणि यानि भूतानि तद्ध्यायिन** इत्यर्थः । **करणानि** चक्षुरादीनि । इन्द्रियादिवाक्येषूपास्त्यश्रवणान्नोदाहृतस्मृतिविषयत्वमित्याशयेन, तेषामर्थादिपरत्वप्रतिपादकत्वं निराकृत्य, पुरुषोत्कर्षप्रतिपादनपरत्वमेव वाक्यानामिति वक्तुं

P. 768-2 **तदत्रेत्यादिटीका ।** तां तदभिप्रायप्रदर्शनेनावतारयति—**दृष्टप्रयोजन इति ।**

तात्पर्यविषयीभूतं यदव्यक्तावधिकं पुरुषस्य परत्वं तस्येन्द्रियाद्युत्तरोत्तरोत्कृष्टाव्यक्तावधिकत्वेन स्तुतिरूपदृष्टप्रयोजने सम्भवति उपासनाद्वारकादृष्टकल्पनानुपपत्तेरित्यर्थः । प्रकरणादुत्कर्षापत्तेरपि नोदाहृतस्मृतिविषयत्व**मिन्द्रियादिवाक्यानामिति** दर्शयितुं **किञ्चेत्यादिटीकेत्याह—किञ्चेति ।** **श्रुत्यन्तर**मित्यनेन शाखान्तरोक्तमुच्यत इति भ्रमं वारयति—**एतत्प्रकरणस्थमिति ।**

**॥ इति आध्यानाधिकरणम् ॥**

---

१. प्रतीकोऽयं कल्पतरौ न दृश्यते । त्रुटितस्स इति भाति । स च त्रुटितो भागः एतदधिकरणपूर्वपक्षोपपादक इति भाति । परिमलेऽपि आभोगवाक्यसमानार्थकानीमानि वाक्यानि दृश्यन्ते । तत्र कल्पतरुवाक्यप्रतीकधारणमपि न दृश्यते । टीकायां 'तत्र प्रत्येकमर्थादिपरत्वप्रतिपादनम्, श्रुतेः । श्रूयमाणे तत्तत्परत्वे च संभवति न तत्तदतिक्रमेण' इति पाठः ।

२. कल्पतरौ पूर्वं 'पुरुषपरत्वेऽभिधाय मानान्तरे'ति पाठः । 'तदनुपयोगात्' इति च पाठः ।

## ॥ अथ आत्मगृहीत्यधिकरणम् ॥

### सू०॥ आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

### सू०॥ अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥

महाभूतसर्गोपसंहारात् पादसङ्गतिरित्यग्रे वक्ष्यति । इदानीमवान्तर-सङ्गतिमाह—'पूर्वत्रेति । अर्थादीत्यनेन तत्परत्वं लक्ष्यते । अर्थादिपरत्व-परत्वमिन्द्रियेभ्य इत्यादिसन्दर्भस्य निरस्तमित्यर्थः । आशङ्कत इति । पूर्व-पक्षीति शेषः । हिरण्यगर्भे सकलवाक्यान्वयोऽसिद्ध इति शङ्कते—ननु एक एवेति । श्रुतिस्मृत्युपोद्बलितान्निरवकाशादनुमानाल्लिङ्गस्य सङ्कोचान्न वाक्यान्वय-विरोध इति परिहारटीकाभिप्रायमाह—आत्मा वा इति वाक्यमिति । परमेश्वराधिष्ठितो योऽयमपरमेश्वर इति टीकार्थः । व्यतिरेकव्याप्तिमा-हेति । परमेश्वरसृष्टेर्महाभूतादित्वोक्त्या हिरण्यगर्भपरत्वलक्षणसाध्याभावे महाभूत-सृष्ट्यविषयत्वघटितहेत्वभावव्याप्तेः प्रदर्शितत्वादित्यर्थः । P. 769-3

अपि चेत्यादिटीकया पूर्वोत्तरसन्दर्भयोरपरमात्मप्रतिपादकत्वा'दात्मा वे'त्यादेः मध्यसन्दर्भस्याप्यपरमात्मपरत्वमेवेत्युक्तम् । तदयुक्तम् । भिन्नवाक्यस्थले पूर्वोत्तरसन्दर्भपुरस्काराप्रसङ्गादित्याशंक्य, सन्दंशप्रतिपादनपरा सा टीकेत्याशये-नाह—सन्दंशन्यायमिति । टीकायां लोकशब्देन देवादयो गृह्यन्ते । टीकायां–विशेषवत्स्विति । गवाश्वानयनादिव्यवहाराः कार्यकरणादिविशेषव-त्स्वेव प्रसिद्धा इत्यर्थः । हिरण्यगर्भे आत्मशब्दप्रयोगः क्व दृष्ट इत्यत आह—आत्मैवेदमिति । एतदभिसंहितमित्यादिटीकायामात्मपदत्वमित्येतद्व्याचष्टे—आत्मेति पदमिति । P. 770-3

---

१. टीकायां 'प्रागुत्पत्तेरात्मैकत्वावधारणं चेक्षणं चावान्तरेश्वरे'ति पाठः ।

२. टीकायां 'आत्मशब्दप्रयोगश्चात्रापि दृष्टः' इति वाक्ये अत्र, इत्यस्य पूर्वोक्ता-वान्तरेश्वरे, इत्यर्थः। अवान्तरेश्वरे आत्मशब्दः कुत्र दृष्ट इति शंकायां 'आत्मैवे'त्यादिवाक्ये इति कल्पतरुव्याख्या इति बोध्यम् । न तु अत्रेति पदस्य आत्मैवेत्यादिवाक्ये इत्यर्थः । 'अन्यत्रापि दृष्टः' इति पाठो यदि, तदा तथा अर्थो वक्तुं शक्यते ।

३. टीकायां पूर्वं 'कस्मात्? उत्तरात्' इति, उपरि 'तदसत्यामनुपपत्तौ नान्यत्र व्याख्यातु'मिति च पाठः । पंक्तिद्वयोपरि 'श्रुतसिद्ध्यर्थ'मिति पाठः ।

**आकाशपूर्विकायामित्यादिटीकाया** अयमर्थः। **क्वचित्तेजःपूर्वकस्य** महाभूतवर्गस्य **सृष्टयभिधानं न विरुध्यते**। यत **एतस्मादित्यादिदर्शनात् पूरयितव्यं,** फलितमाह—**[एवं] इहापीति**। तत्र हेतुः—**सर्वशाखेति**। यतो यत्नवता भवितव्यम्। **न पुनश्शैथिल्यमादरणीयम्**। अत **इहापि महाभूतानि सृष्ट्वेति कल्पनीयमिति**। तत्र **न पुनरित्यादिटीकाया इहापि महाभूतानि सृष्ट्वेति कल्पनीयमिति टीका**यामन्वयं दर्शयति—**सर्गस्येति**[1]। **शैथिल्यमिति**। एतच्छ्रुत्यनभिमतत्वमित्यर्थः। **न च लोकसर्गोऽपीत्यादिटीका** अभ्युपेत्यवादेन प्रवृत्तेत्याशयेनाह—**महाभूतेति**।

'आत्मा वा इद'मित्यादिकां 'अम्भो मरीचीर्मरमाप' इत्यन्तां श्रुतिं P. 771-2 व्याचष्टे—**इदं जगदित्यादिना**। न'न्वेक आसी'दित्यनेनैव तदानीं जगदभावस्य सिद्धत्वादेवकारो व्यर्थ इत्यत आह—**एवकारस्त्वि**ति। आत्माव्यतिरेक **एकपदेनोच्यते। एवकारेण तु** कार्याक्षमत्वमुच्यत इत्यर्थः। **आडभाव इति**। लुङादिषु परत 'आडजादीना'मिति **सूत्रविहिताडागमाभाव** इत्यर्थः। उत्तरश्रुतिं व्याख्यातुमाह—**अम्भःप्रभृतीनिति। दिवः परस्ताद्वर्तत इति**। महोलोकादित्यर्थः। द्युप्रभृतीनां लोकानामम्भश्शब्दप्रतिपाद्यत्वे हेतुमाह—**दिवमारभ्येति। स्थानभेदेति**। गन्धर्वादिस्थानभेदोपाधिकमन्तरिक्षबहुत्वमाश्रित्य **मरीचय इति बहुवचन**मित्यर्थः। **नन्वधस्ता**दित्यनेन पातालानां परामर्शे कथं **यास्ता** इति च स्त्रीलिङ्गनिर्देशः? अत आह—**विधेयापेक्षयेति**।

'आत्मैवेदमग्र आसीत् पुरुषविध' इति श्रुतिं व्याचष्टे—**आत्मा हिरण्यगर्भ इति**। 'प्रजापते रेतो देवा' इति श्रुतिं व्याचष्टे—**(ततस्ता देवता इति)**। 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यतेति श्रुतिं व्याचष्टे—**स ईश्वर इति। द्वारेति** तृतीयान्तं पदम्। 'स एतमेव पुरुषं ब्रह्म ततममपश्य'दिति श्रुतिं व्याचष्टे—**स शरीरे प्रविष्ट इति**। 'एष ब्रह्मैष इन्द्र एष प्रजापति'रिति श्रुतिं व्याचष्टे—**यः शरीरे प्रविष्ट इति**। 'सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितम्। P. 771-16 प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्मे'ति श्रुतिं व्याचष्टे—**प्रज्ञा ब्रह्मचैतन्यमिति**।[2]

---

१. कल्पतरौ 'पादसंगतिस्सूचिता। सर्गस्य' इति शोधनीयम्।

२. अत्र आभोगे किंचिद्वाक्यं त्रुटितमिति ज्ञायते।

**विद्यैक्यगुणोपसंहारानिरूपणादिति।** विद्याभेदपूर्वपक्षनिरासेन विद्यैक्यसमर्थनं, गुणोपसंहाराभावपूर्वपक्षनिरासेन तदुपसंहारसमर्थनं च साक्षात् पादसंगतं, तदिह न क्रियते। किन्तु वाक्यस्य हिरण्यगर्भपरत्वनिरासेन परमात्मपरत्वसमर्थनं क्रियते। तत्प्रथमाध्याये साक्षात्सङ्गतम्। अत्र तु प्रसङ्गादिति न साक्षात् पादसङ्गतिरित्यर्थः। **भिन्नार्थोपक्रमेणेति। वाजसनेयके** 'कतम आत्मे'त्यात्मनोपक्रमः। **छान्दोग्ये** तु 'सदेव सोम्ये'ति सत्तासामान्येनोपक्रम इति **भिन्नार्थत्व**मित्यर्थः। न च सच्छब्दवाच्यस्य सत्ताविशिष्टस्यात्मभिन्नत्वनिश्चयाभावात् कथं भिन्नार्थत्वमिति वाच्यम्। आकृत्यधिकरणन्यायेन सच्छब्दस्य सत्तामात्रवाचित्वाद्व्यक्तिवाचकपदान्तरसमभिव्याहाराद्यभावें सामान्यस्य वाक्यार्थान्वयसम्भवे च तेन व्यक्तिलक्षणायां मानाभावेन भिन्नार्थत्वनिश्चयादिति भावः। P. 771-19

ननु 'सन् घट' इत्यादिपदान्तरसमभिव्याहारादिव प्रकृतेप्युपसंहारगतात्मशब्दबलात्, एतद्वाक्यापेक्षयापि प्रथमावगतादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञारूपलिङ्गबलाद्वा सच्छब्दस्य व्यक्तिविशेषपरत्वं कुतो न भवेदित्याशंक्य निराकरोति—**ननु स आत्मेत्यादिना।** 'सन्दिग्धे तु वाक्यशेषा'दित्यस्य नायं विषय इत्याशयेन शङ्कते—**ननु छान्दोग्य इति।** आहेत्यस्य कर्म दर्शयन् वाक्यार्थमाह—**अभ्युपेत्यापीति।** P. 772-7

ननु सच्छब्दनिर्दिष्टस्य सत्तासामान्यस्यैव वाक्यार्थान्वयसम्भवेन सन्देहस्यैवाभावात् कथं वाक्यशेषस्य निर्णायकत्वमित्याशंक्य, सच्छब्दनिर्दिष्टस्यैवोत्तरत्र तेजआद्युपादानत्वप्रतिपादनेन, तदनुरोधेन व्यक्तिपरत्वावश्यंभावे तद्विशेषनिर्णायकत्वं वाक्यशेषस्येति दर्शयितुं सच्छब्दस्येत्यादिटीकेत्याह—**सच्छब्दस्येति।** विचारपूर्वकालीनोऽपि निश्चयो निश्चय एवेति तद्व्युदासार्थमाह—**निर्णीतार्थेत्यर्थ इति।** ननु संपत्ताविव ज्ञानेऽपि फलं कल्पनीयमेव। छान्दोग्ये ब्रह्मवेदनस्य फलाश्रवणात्। तथा च कथमपि चेत्यादिटीकेत्यत आह—**अदृष्टफलेति।** ज्ञाने श्रुत्यन्तरदृष्टस्य फलस्योपसंहारमात्रं, सम्पत्तौ त्वश्रुतमेव फलं कल्पनीयमिति गौरवमित्यर्थः।

**वर्णकद्वयेति।** यद्यपि पूर्ववर्णकप्रयोजनमेव **टीकाया**मुच्यते। तथापि तस्मिन्निर्दिष्टे तद्विविक्तत्वेनैतद्वर्णकप्रयोजनमपि ज्ञापितं भवतीति तथोक्तम्। P. 773-5

ब्रह्ममात्रनापरमित्यनेन ब्रह्मोपास्तिविधायकत्वं नोच्यते, किन्तु ब्रह्मप्रतिपादनमुखेन तन्निदिध्यासनानुगुणप्रयत्नपर्यवसायित्वमात्रमित्याह—ब्रह्मात्मत्वेति। प्रत्यग्ब्रह्मैक्यगोचरे इति। ततश्च वेद्यैक्याद्विद्यैकत्वमित्यर्थः।

P. 774-1 न्यायसंग्रहाख्ये ग्रन्थे विवरणाचार्योक्तमेव दर्शयति—तद्यथेति। अयमर्थः—'तत्वमसी'त्यत्र तावत्तत्त्वंपदयोस्सामानाधिकरण्यं गम्यते। तच्चैकार्थवृत्तित्वलक्षणम्। न च तत्त्वंपदवाच्ययोस्सर्वज्ञत्वादिविशिष्टयोरैक्यं सम्भवतीति भेदकविशेषणांशत्यागाय, तत्त्वंपदयोर्लक्षणा आश्रीयते। लक्षणापि तत्त्वंपदयोर्यदि विशेष्यस्वरूपे, तदा तयोर्भेदोऽपि भवयात्। अपर्यायनामभेदस्यार्थभेदाविनाभूतत्वात्।

ततश्च तद्भेदव्युदासार्थं लक्षणान्तरमाश्रयणीयम्। तदपि तत्त्वंपदयोरेवेति तद्भेदनिबन्धने पुनरपि लक्ष्ययोर्भेदे तद्व्युदासार्थं पुनरपि लक्षणान्तरमित्यनवस्था स्यात्। अतस्तत्परिहाराय पदद्वयेनाप्येक एवार्थो लक्ष्यः। तच्च लक्ष्यप्रसिद्ध्यधीनमिति तत्पदलक्ष्यस्य ब्रह्मणः प्रत्यगात्मत्वं, त्वम्पदलक्ष्यस्य प्रत्यगात्मनश्च ब्रह्मत्वं, बोधयतोः छान्दोग्यवाजसनेयवाक्ययोः लक्ष्यस्वरूपनिर्धारणार्थं भिन्नरूपेणोपक्रमो न विरुध्यत इति न तावता विद्यैक्यव्याघात इति। तदर्थेति। तत्पदार्थेत्यर्थः॥

॥ इति आत्मगृहीत्यधिकरणम् ॥

---

## ॥ अथ कार्याख्यानाधिकरणम् ॥

### सू० ॥ कार्याख्यानादपूर्वम् ॥ १८ ॥

P. 774-7 पूर्वाधिकरणेन दृष्टान्तसङ्गतिमाह—सन्दिग्धेति। अनशब्दस्येति। 'एतमेव तदन'मिति श्रुतिगतस्येत्यर्थः। टीकायामनितीत्यन इति व्युत्पत्तिं मनसि निधाय, अननं प्राणनमिति धात्वर्थनिर्देशपूर्वमनः प्राण इति फलितं कीर्तितमित्याशयेन पर्यवसन्नमर्थमाह—अननश्चेष्टामिति। भाष्य इति। अनग्नताचिन्तनं चेत्यादिभाष्य इत्यर्थः। ततश्च मन्यन्त इत्यत्र मननं

ज्ञानं तत् ध्यानपर्यन्तमिति कृत्वा भाष्ये अनग्नताचिन्तनमित्यनेन चिन्तनमुक्तमिति टीकान्वय इति भावः ।

**खुररवमात्रेणैवापाततो गृहीत्वेत्येवमिवशब्दाध्याहारेण टीकार्थ**माह— **यथा हीति । ज्योतिष्टोमाङ्गत्वेनेति ।** यद्यपि 'नानृतं वदे'दित्येतद्दर्शपूर्णमासप्रकरणे दृश्यते । तथापि ज्योतिष्टोमप्रकरणेऽपि पठितं भविष्यति । अत एव कल्पसूत्रकारैर्ज्योतिष्टोमाङ्गत्वेनाप्यनृतवदननिषेधस्सूत्रित इति तथोक्तम् । **द्विजो नित्यमिति ।** यदा यदा अप्रायत्यं तदा सर्वदेत्यर्थः । अत्र च कर्मविशेषासंयुक्तत्वादाचमनस्य लिङ्गात् सर्वकर्मार्थत्वं, 'आचान्तेन कर्तव्य'मित्यादौ श्रुत्यैव सर्वकर्माङ्गत्वमिति भावः । P. 775-4

श्रुतेः स्मृत्यर्थानुवादित्वायोगेन श्रुत्यर्थ एव स्मृतिसङ्कोचो युक्त इति शङ्कते—**ननु नित्येति ।** अनुवादकत्वायोगोऽसिद्ध इत्याह—**स्मृत्यनुमितेति । वासोदृष्टिः ।** अनग्नतादृष्टिः । पूर्वमाचमनस्याविधेयत्वेन स्तुत्यनर्हत्वान्न स्तुतिरित्युक्तम् । इदानीमनग्नतासङ्कल्पस्य विधेयत्वेन स्तावकत्वायोगान्न स्तुतिरित्युच्यत इति टीकयोरर्थभेदं दर्शयति—**आचमनेति ।** स्तावकत्वस्य शब्दधर्मत्वात् कथं **सङ्कल्पगतत्वोक्ति**रित्याशंक्य, स्तुतिं प्रत्यालम्बनतया प्रयोजकत्वं विवक्षितमित्याह—**स्तुतिहेतुरिति । स्तोतव्याभाव इति** टीकोक्तस्यार्थस्य पुनरत्र कीर्तनं व्यर्थमित्यत आह—**आचमनस्येति ।** P. 775-8

**अपि चेत्यादिटीकाया**मेकस्यानेकार्थत्वमयुक्तमित्युक्तं, तदयुक्तं, अपूर्वमाचमनं प्राणविद्याङ्गत्वेन विधीयत इति पक्षे तस्य अनेकार्थत्वप्रसक्त्यभावादित्याशंक्य, तत्प्रसक्तिं दर्शयन्नवतारयति—**प्राणविद्याङ्गत्वेनेति । नायं प्रसङ्ग इति ।** उभयार्थत्वप्रसङ्गो नेत्यर्थः । नन्वेवमाचमनोद्देशेन विहिताया वासोदृष्टेः शुद्ध्यर्थाचमनसम्बन्धसिद्ध्यर्थमुद्देश्यस्याचमनस्य शुद्ध्यर्थत्वेन विशेषणे वाक्यभेदः स्यात् । ततो वरमनेकार्थत्वमभ्युपेत्याप्याचमनविधानमित्याशंक्याह— **दृष्टेः शुद्ध्यर्थेति ।** आचमनान्तरस्याप्रसिद्धतया आचमनत्वेनापि वेषेणानूद्यमानमाचमनं शुद्ध्यर्थाचमनमेवेति वासोदृष्टेस्तत्सम्बन्धो, नोद्देश्यविशेषणेन कल्प्य इत्यर्थः । **परिधानशब्दस्योपकार(क)परत्वे** हेतुमाह—**परिदधतीति श्रुतिगतेति ।** श्रुतेस्तत्रैव तात्पर्यादिति भावः । P. 776-6

---

१. कल्पतरौ 'अनग्नतावादस्य' इति पाठः ।

P. 776-7 **शाब्दं दृश्यमिति ।** शब्दप्रकाशितं प्राणस्य सर्वान्नत्वं ज्ञेयं यदोपलभ्यते, तदा शब्देन क्रियमाणा तज्ज्ञप्तिरपि तन्नान्तरीयकतयोपलभ्यते । ज्ञेयभानस्य ज्ञप्तिभानाविनाभूतत्वात् । ततश्च, दृष्ट्यभ्यवहारयोः शब्दाप्रतिपाद्यत्वाविशेषेऽपि, दृष्टेः शब्दकृतत्वेन तदधीनोपस्थितिकत्वात् शाब्दत्वम् । अभ्यवहारस्य तु नैवमिति वैषम्यमित्यर्थः । **प्राणविच्च तदात्मेति ।** प्राणोपासकोऽपि प्राणात्मा भवतीति, तेनाप्युपास्यप्राणधर्मवता भवितव्यमिति योग्यतामात्रेणेत्यर्थः । **माध्यन्दिनानामिति ।** 'तस्मादेवंविदशिष्यन् आचामे'दिति माध्यन्दिनशाखागते वाक्ये विधिदर्शनादित्यर्थः ।

॥ इति कार्याख्यानाधिकरणम् ॥

---

## ॥ अथ समानाधिकरणम् ॥

### सू०॥ समान एवं चाभेदात् ॥ १९ ॥

P. 777-1 इहेति टीकापदसूचितां सङ्गतिं दर्शयन्नवतारयति—**पूर्वत्रेति ।** ननु 'अग्निहोत्रं जुहोति' 'दध्ना जुहोती'त्यादौ यथा नाभ्यासन्यायप्रवृत्तिस्तद्वत् प्रकृतेऽपि किं न स्यादित्यतः तद्वैषम्यमाह—**निर्गुणे हीति ।** ननु विध्यनुवादव्यवस्थितौ न निर्गुणत्वसगुणत्वे तन्त्रम् । द्वयोः सगुणत्वेऽपि विध्यनुवादव्यवस्थादर्शनादित्याशंक्य, सगुणत्वनिर्गुणत्ववदेकवाक्यार्थस्य वाक्यान्तरार्थान्तर्भावोऽपि तद्व्यवस्थायां निमित्तं, तदपि प्रकृते नास्तीत्याह—**सगुणत्वेऽपीत्यादिना ।**

P. 777-16 उभयत्र गुणान्तरविधानं दर्शयति—**अग्निरहस्ये हीत्यादिना । ऋग्वेदे यजुर्वेदे चेति ।** यद्यपि सामवेदे यजुर्वेदे चेति पूर्वमीमांसकैरुदाहृतम् । तथापि नोदाहरणमादर्तव्यमित्यनास्थया, ऋग्वेदेऽपि क्वचिद्वाक्यं दृष्ट्वा वा, तथोक्तमिति ध्येयम् ।

---

१. कल्पतरौ 'दृष्टिः ज्ञप्तिः' इति पाठः ' टीकायां 'श्वादिमर्यादस्यान्नस्य' इति पाठः ।

२. कल्पतरौ 'अग्निरहस्ये हि' इति वाक्यादुपरि पंक्तिचतुष्टयात् परं 'अपि चैकत्र गुणविधित्वे अधिका एव गुणाः' इति, ततः पंक्तिचतुष्टयात् परं 'उभयोरपि वाक्ययोस्तुल्यत्वात्' इति च पाठः। टीकायां सिद्धान्तोपक्रमे 'न ऐककर्म्यम्' इति पाठः ।

**भेदलक्षण इति।** यद्यपि 'भूयस्त्वेनोभयश्रुती'त्यधिकरणं **शेषलक्षणे,** न तु **भेदलक्षणे,** तथापि **शाखान्तराधिकरणे** भिन्नशाखाम्नानस्थले उत्पत्तिविधिभेदात् कर्मभेद इत्याशंक्य, एकत्रैव कर्मविधिः। इतरत्र तु तच्छाखाध्यायिनं प्रति कर्मस्वरूपज्ञापनपूर्वकं गुणविधावेव तात्पर्यम्। तथा च नोत्पत्तिविधिभेद इत्युक्ते, क्वोत्पत्तिविधिः ? क्व गुणविधिरित्यपेक्षायां प्रयोगविधिनियामकत्वेनोक्तेन 'भूयस्त्वेनोभयश्रुती'ति न्यायेन तन्निर्णय इत्याश्रित्य, भिन्नशाखाम्नानस्थले अभ्यासन्यायप्रसक्तविद्याभेदव्युदासाय शाखान्तरन्यायोदाहरणमभिप्रेत्य **भेदलक्षण** इत्युक्तम्। अत एव **ज्योतिष्टोमस्य क्व विधिरित्यादि**रस्मदुक्ताशयानुगुण एव सन्दर्भ इति ध्येयम्। P. 778-1

उत्पत्तिविधिनिर्णये भूयस्त्वन्यायोपन्यासोऽयुक्त इति **केशवोक्त**मनुवदति— **यस्त्विति। प्रयोगविधिस्तत्र निर्णीत इति।** 'उच्चैर्ऋचा क्रियत' इत्यादिवाक्यविहितेषु स्वरेषु नानाशाखाम्नातकर्मणि कः स्वरो भवतीति विचारे स्वरस्यानुष्ठानकालीनतया अनुष्ठापकः प्रयोगविधिः यस्मिन् वेदे तद्वेदस्वर एवेति वक्तुमङ्गभूयस्त्वेन प्रयोगविधिरेव तत्र निर्णीत इत्यर्थः। प्रकृते विद्यैक्यमसिद्धमित्येतन्निराकरोति—**यतोऽत्रापीति।** P. 778-3

नन्वङ्गभूयस्त्वश्रवणमङ्गसाकल्यबुद्धिजननद्वारा प्रयोगविधेरेव निर्णायकम्। नोत्पत्तिविधेः। तस्याङ्गभूयस्त्वानपेक्षणादित्याशङ्क्य निराकरोति—**न चाङ्गेति। प्रयोगाविनाभूतत्वेनेति।** ततश्च यत्रोत्पत्तिविधिनिर्णायकमन्यन्नास्ति, तत्र क्वोत्पत्तिविधिरिति सन्देहे, उत्पत्तिप्रयोगविध्योरेकविषयत्वनियमेनोत्पत्तिविधिसमनियतप्रयोगविधिनिर्णायकेनाप्यङ्गभूयस्त्वेन तन्निर्णयो युक्त इत्यर्थः। 'मनोमयोऽयं पुरुषो भास्सत्य' इत्यादिश्रुतिं व्याचष्टे—**भाः प्रकाशात्मक इति। तच्छब्दस्य** प्रस्तुतपरामर्शित्वं दर्शयति—**मनोमयपदेति।** P. 778-6

**॥ इति समानाधिकरणम्॥**[1]

---

१. अस्मिन्नधिकरणे टीकायामन्ते 'तद्‌गुणेनोपसंहारादिमदिति' इति पाठः।

## ॥ अथ संबन्धाधिकरणम् ॥

सू०॥ सम्बन्धादेवमन्यत्रापि ॥ २० ॥

सू०॥ न वा विशेषात् ॥ २१ ॥

सू०॥ दर्शयति च ॥ २२ ॥

P. 779-1 श्रुत्यर्थकथनपूर्वकं विषयप्रदर्शकं भाष्यं विवृणोति—**आप एवेदमित्यादिना**। अत्राप इति हिरण्यगर्भशरीरारम्भका भूतान्तरसहिताः सूक्ष्मा आप उच्यन्ते। **अग्रे इदं ब्रह्माण्डरूपं जगदाप एवासुः। अनन्तरं सत्यमसृजन्तेत्यर्थः।** श्रुतिगतस्य **ब्रह्मशब्दस्य** व्याख्यानं **महदिति। आयतनविशेषमुपदिश्येति** भाष्यस्य व्याख्या **आदित्यचाक्षुषपुरुषरूपेणावस्थानमुक्त्वेति। भाष्ये व्यतिषक्तपाठाच्चेति** वक्ष्यमाणहेतूपयोगितया अनन्तरश्रुत्यर्थमपि दर्शयति—**तावेताविति।**

अत्र **प्रतिष्ठितत्वमनुग्राहकत्वम्।** तदेव दर्शयति श्रुतिः, **रश्मिभिरिति।** एष आदित्यो रश्मिभिः प्रकाशदानेनानुग्रहं कुर्वन्नक्षिपुरुषे प्रतिष्ठितः। अयमक्षिपुरुषोऽमुष्मिन्नादित्यपुरुषे प्राणैरनुग्रहं कुर्वन् प्रतिष्ठितः। अक्षिपुरुषेण प्राणात्मना प्राणसूक्ष्मरूपस्यादित्यपुरुषस्यानुग्रहादित्यर्थः। **व्याहृतिशरीरत्वञ्च**

P. 779-5 **सम्पाद्येत्यादिभाष्यं** व्याचष्टे—**आदित्यपुरुषस्येत्यादिना।**

भाष्योक्तं संशयं तद्बीजप्रदर्शनेन विशदयन् **टीकामवतारयति—एते उपनिषदाविति। सिद्धान्त्याशयमाशङ्क्याहेति। तस्येति च प्रकृतपरामर्शित्वादित्यनेनाशङ्क्याहेत्यर्थः।** अस्य **टीकावाक्यस्य** सिद्धान्त्याशयानुवादकत्वं प्रकटयति—**तस्येति शब्दस्येति। एवमनूदितमिति।** तथा च, **तस्येत्यस्य** प्रकृतस्थानावच्छिन्नपरामर्शित्वादुपनिषदोरसंकर इत्येतन्न, **सत्यस्य प्रधानस्यैव प्रकृतत्वादिति टीकार्थ** इति भावः। लाघवेन प्रधानस्य विशेष्यमात्रस्यैव **तच्छब्देन** परामर्शात्तदभेदनिबन्धनस्सङ्करो दुर्वार इति परिहारटीका-

P. 779-13 भिप्रायमाह—**सत्यं प्रकृतेति।** परस्परसंकीर्णविशेषणद्वयश्रवणान्यथानुपपत्त्या

१. कल्पतरौ 'ननु तस्योपनिषदहः तस्योपनिषदहमिति चे'ति पाठः।

विशिष्टस्यैव तात्पर्यविषयीभूतस्य प्राधान्यमिति तस्यैव परामर्शादसंकर इति सिद्धान्तटीकाभिप्रायं दर्शयन्नेव तामवतारयति—**सत्यं न गुणभूतमिति** । P. 779 15 **हिरण्मयश्च पुरुषश्च तौ तयोरित्यर्थः** ।

॥ इति संबन्धाधिकरणम् ॥

---

## ॥ अथ संभृत्यधिकरणम् ॥

### सू०॥ सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

नन्वाधिदैविकविभूतिब्रह्मप्रत्यभिज्ञानमात्रेण गुणोपसंहाराशंकायां वैश्वानरषोडशकलादिविद्यास्वपि तत्सत्त्वात् गुणोपसंहारः किमिति नाशंक्यत इत्याशंक्य, वैषम्यमाह—**यद्यपीत्यादिना** । **प्रत्यक्षविधिविहितत्वेनेति** । प्रत्यक्षेण P. 781-2 विधिना विशिष्टरूपस्यैवोपास्यत्वेन विहिततया रूपभेदेन भेदनिश्चयादित्यर्थः । **अश्रुतविधिकत्वादिति** । तथा च कल्प्यो विधिर्लाघवात् ब्रह्मस्वरूपमात्रविषय एव कल्प्यत इत्युपास्यब्रह्मप्रत्यभिज्ञानात् उपसंहारशंकेत्यर्थः । समाख्याबलादप्युपसंहारशंकेत्याशयेनाह—**परिशिष्टेति** । **उपनिषदुदितेति** । उपनिषद्विहितेत्यर्थः ।

टीकोदाहृतां श्रुतिं व्याचष्टे—**ज्येष्ठेत्यादिना** । **डादेश इति** । 'सुपां सुलु'गित्यादिना ज्येष्ठशब्दात् परस्य प्रथमाबहुवचनस्य डादेशः । ततश्च पूर्वसवर्णदीर्घे ज्येष्ठेति रूपमिति भावः । **पराक्रमविशेषाः** जगत्सृष्ट्यादयः । **सम्भृतानीति** समुपसर्गलब्धं विशेषं दर्शयति—**किञ्चेति** । **हृदयाद्यायतनमिति** । शाण्डिल्यविद्यायां हृदयमायतनम् । उपकोसलादिविद्यायामक्ष्यादीत्यर्थः । ततश्च, **तासु तासु शाण्डिल्यादिविद्यासु हृदयाद्यायतनपरिग्रहेण हेतुना आध्यात्मिकायतनत्वमिति टीकार्थ** इति भावः । **षोडशकलादिविद्यानां** पृथगुपादाने को हेतुरित्यतः तं दर्शयन्नवतारयति—**मैभूदिति** । P. 781-10

---

१, अत्र कल्पतरौ 'त्रैलोक्यात्मकविराडात्मविषयासु' इति पाठः ।

P. 781-12 प्रत्यभिज्ञाया विद्यैक्यमित्येतन्निराकरोति—**एकस्यां शाखायामित्यादिना**। भाष्ये कण्ठतोऽनुक्तत्वात् सूत्रेण सूचितत्वमेवोक्तत्वं विवक्षितमित्याशयेनाह—**सम्भृतीति**। समाख्यया विद्यैकत्वमित्येतदपि नेत्याह—**प्रत्यक्षविद्यभावेऽपीति श्लोकेन**। प्रत्यभिज्ञाराहित्ये सति, कल्पितेनापि विधिना विद्यान्तरस्यैव विधानाद्विधिविरुद्धा समाख्या अप्रयोजिकेति भावः। **विधिं** P. 782-8 **कल्पयित्वापि खिलोक्ता विद्या इहाधिकरणे** भेदिता ज्ञेयेत्यन्वयः।

॥ इति संभृत्यधिकरणम् ॥

---

## ॥ अथ पुरुषविद्याधिकरणम् ॥

### सू०॥ पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥

विषयप्रदर्शकं वाक्यं विशदीकर्तुं 'पुरुषो वाव यज्ञ' इत्यादिखण्डद्वये अपेक्षितानि वाक्यानि दर्शयन् व्याचष्टे—**छान्दोग्येति**। 'ता अस्य दीक्षा' इति श्रुतिं तात्पर्यतोऽनुवदति—**सास्य[2] दीक्षेति**। हसनभक्षणयोः स्तुतशस्त्रत्वेन कल्पने स्वयं हेतुमाह—**शब्दवत्त्वेति**। श्रुतिगतस्य किञ्चिच्छब्दस्य व्याख्या—**व्याध्यादीति**। **प्राणा वेति**। हे **प्राणात्मका वसव इदं** चतुर्विंशतिवर्षात्मकं **प्रातस्सवनं माध्यन्दिनसवनेन सन्ततं कुरुत, नाहं** मध्ये विलोप्सीयेत्यादिराशीरित्यर्थः।

सवनत्रयदेवतात्वेन प्रस्तुतप्राणसूक्ष्मरूप आदित्यः 'अक्षितमसी'त्यादिमन्त्रत्रयप्रतिपाद्यः। 'तत्रैते द्वे ऋचौ भवतः। आदित्प्रत्नस्य रेतसः, उद्वयं तमसस्परी'त्युत्तरसन्दर्भात्। **अक्षितम्** अक्षीणम्। **अच्युतं** स्वरूपादप्रच्युतं। P. 783 5 **प्राणसंशितं** प्राणसूक्ष्मरूपमिति मन्त्रार्थः। **भाष्यटीकयोर्व्याख्यानार्थमिति**। **विषयप्रदर्शकभाष्यस्य, यादृशं ताण्डिनामित्यादिसिद्धान्तटीकायाश्च, व्याख्यानार्थम**स्माभिर्विषयविवेको **दर्शित** इत्यर्थः॥

---

१. कल्पतरौ 'एकस्यां विद्याया'मिति पाठो दृश्यते। टीकायां 'प्रत्यभिज्ञापयद्विद्यां' इति, 'तत्प्रकरणाधीतत्वात्' इति च पाठः।

२. कल्पतरौ 'यत्र रमते' इति पाठः।

ननु 'अन्यथात्वं शब्दा'दित्यधिकरणे छान्दोग्यबृहदारण्यकगतयोरुद्गीथविद्ययोरल्पतरवैरूप्येऽपि भेद उक्तः। तत्कथमिह बहुतरवैरूप्येऽपि विद्यैक्यशङ्केत्याशंक्य, बहुतरप्रत्यभिज्ञानेऽपि प्रधानस्योपास्यस्य भेदाद्विद्याभेद इत्युक्तम्, इह तु छान्दोग्ये यत्पुरुषस्य यज्ञत्वं प्रधानमुपास्यं, तदेव **तैत्तिरीयके**ऽप्युपास्यम्। **विदुषो यज्ञस्येति** षष्ठ्योः समानाधिकरणत्वात्। ततश्च, वेद्यैक्याद्विद्यैक्यमिति पूर्वपक्षसम्भव इत्याशयेनाह—**अत्र तैत्तिरीयगतयोरिति**। पूर्वाधिकरणेन **सङ्गतिं** P. 783-5 दर्शयन्नेव **पूर्वपक्षटीका**मवतारयति—**असाधारणेति**।

एकस्य यज्ञत्वयजमानत्वविरोधं परिहरति—**पुरुषस्यैवेति**। पुरुषस्य यज्ञत्वसम्पादनमात्रमेव न तु वस्तुतो यज्ञत्वमिति न यजमानत्वविरोध इत्यर्थः। **अत**श्शब्दनिर्दिष्टं हेतुमेवाह—**पुरुषैक्येनेति**। **चेतनाचेतनयोरिति** टीकोक्ताया **ऐक्यानुपपत्तेः** फलं दर्शयन्नवतारयति—**न केवलमिति**। चेतनः केन पदेनावगम्यत इत्यत आह—**विद्वान् हीति**। **यजमान आत्मेति** पाठक्रमो न विवक्षितः। तथाचात्मोद्देशेन यजमानत्वविधिपरं तदित्याह—**यजमान आत्मेति**।

पुरुषाङ्गेषु श्रद्धादिषु पत्न्यादिरूपत्वस्य सम्पाद्यत्वेन गौणत्वात्तत्सहचरितं यज्ञत्वमपि सम्पाद्यत्वेन गौणमेव युक्तमिति **केशवोक्त**मनुवदति—**पुरुषाङ्गेष्विति**। तत्रत्यस्य गौणत्वहेतोर्मुख्यत्वानुपपत्तेरत्राभावान्न गौणत्वमिति वैषम्यमाह—**अवयवेष्विति**। **अपि च तस्येति**। **अपि च तस्यैवंविदुष** इत्यनेन भाष्यमुपादाय, **अनुवादश्रुतौ** सत्यामित्यनेन व्याचष्ट इत्यर्थः। ननु वाक्यभेददूषणं 'पुरुषो वाव यज्ञ' इत्यत्रापि तुल्यमित्यत आह—**विद्वत्सम्बन्धीति**। P. 783-19 अनुवादत्वप्रत्याय**कैवं**शब्दबलादेकवाक्यत्वमत्र प्रतीयते—तत्र [तव] तु वाक्यभेद एव स्वरसतः प्रतीयत इति वैषम्यमित्यर्थः।

॥ इति पुरुषविद्याधिकरणम् ॥

---

१. कल्पतरौ 'अवयवेषु त्वगत्या' इति पाठः। टीकायां 'न च पत्नीयजमानवेदवेद्यादिसंपादन'मिति पाठः।

२. कल्पतरौ 'विद्वत्संबन्धियज्ञानुवादेन' इति वाक्ये 'एकवाक्यता नः प्रतीयते, तवतु' इति पाठः। अत एव आभोगेऽपि 'तत्र तु' इत्येतत् 'तव तु' इति शोधनीयम्। आभोगे 'अत्र प्रतीयते तत्र तु' इति वाक्यात् 'तत्र तु' इति साधु इति भ्रान्तिर्भवति। वस्तुतः 'एकवाक्यत्वमेवात्र स्वरसतः प्रतीयते। तव तु वाक्यभेद इत्यर्थः' इत्याभोगः शोधनीयः। लेखकप्रमादादन्यथावाक्यं परिणतमिति पण्डिता विमृशन्तु।

## ॥ अथ वेधाद्यधिकरणम् ॥

### सू०॥ वेधाद्यर्थभेदात् ॥ २५ ॥

विद्याङ्गत्वनिरसनमुपसंहारापवादफलकत्वात् पादसङ्गतमित्याह—**श्लोकेन**

P. 784-4 **अन्यत्रेति। मन्त्रकर्मणामिति। मन्त्राणां कर्मणाश्चेत्यर्थः। अवान्तरसङ्गतिं** दर्शयन् **पूर्वपक्षटीकामवतारयति—पूर्वत्रेति। सन्निधिविलक्षणमिति।** यद्यपि **सन्निधिः, स्थानलक्षणं** प्रमाणम्, न **प्रकरणम्,** तथापि मीमांसकैर्लोकव्यवहारमनुसृत्य **सन्निधेरपि प्रकरणशब्देन** व्यवहारात् तथोक्तम्। सन्निधिःद्विविधः। यथासंख्याम्नानरूपः, समीपाम्नानरूपश्च। तत्र प्रथमेन विनियोगे समाख्यया सामान्यसम्बन्धो बोध्यते। द्वितीयेन तु विनियोगे प्रकरणेन। तथा च, प्रकृते किं समाख्यया सामान्यसम्बन्धबोधः? किं वा प्रकरणेनेति विकल्प्य क्रमेण निराकर्तुं **न चासतीत्यादिटीका।**

तत्र प्रथमकल्पनिराकरणमुदाहरणप्रदर्शनेन विशदयति—**काम्येष्टीनामिति।** दशमादिप्रश्नत्रयविहिता इष्टयः काम्येष्टयः। 'अग्निर्वृत्राणी'त्यन्ता 'युक्ष्वाही'त्यनुवाकसहिता अन्तिमानुवाकाः काम्ययाज्याकाण्डः। काम्येष्टिकाण्डस्य काम्ययाज्याकाण्डस्य च **काम्येष्टिकाण्ड** इत्येका समाख्या। ततस्सामान्यसम्बन्ध इत्यर्थः। **मन्त्रः** याज्यानुवाक्यायुगलरूपः।

P. 785-4 द्वितीयं कल्पमादाय परिहरतीत्याह—**अङ्गप्रधानयोरिति। अङ्गाकांक्षयेति।** यथा सांग्रहण्यादीनां प्राकृतैरङ्गैर्निराकांक्षाणामपि तत्सन्निधिश्रुतानामामनहोमानामाकांक्षया प्रधानानामाकांक्षोत्थापनं, तद्वदिति भावः। **प्रकरणव्यक्तेरिति।** परस्पराकांक्षालक्षणस्य प्रकरणस्याभिव्यक्तेरित्यर्थः। गुणाकांक्षया प्रधानस्याप्याकांक्षामुत्थाप्य सम्बन्धे **टीकोदाहृतं रक्तपटन्यायं** विशदयति—**यथा पट इति।** तत्र **सहोच्चारणमाकांक्षोत्थापकम्।** प्रकृते तु, स्वाध्यायविध्यापादितपुरुषार्थपर्यवसायित्वमित्याशयेन **टीकायामुक्तं—स्वाध्यायविध्यापादितेति।**

उत्तारादित्यस्य व्याख्यानं, **निरर्तनादिति । विनां विषयेणेति ।** P 786-2
विना फलेनेत्यर्थः । तथा च, सन्निधेः प्रकरणादिकं परिकल्प्य विनियोजकत्वेन साफल्ये सम्भवति न निरर्थकत्वमाश्रयितुं युक्तमिति भाष्यार्थ इति भावः । ननु **टीकायां—प्रयोगसमवेतार्थप्रकाशकत्वेन मन्त्राणामुपयोगवर्णनपरत्वेन** सूत्रमुदाहृतम् । तदयुक्तम् । तस्य तावदर्थबोधनासामर्थ्यादित्याशंक्य, श्रुत्यर्थाभ्यां तावदर्थप्रतिपादकत्वं सूत्रस्येत्याशयेनाह—**लोकवेदयोरिति** । भाष्योक्तमिति । **कथञ्च प्रवर्ग्यादीनीति** भाष्योक्तमित्यर्थः ।

ननु वाक्येन प्रवर्ग्योपसदोरेवाङ्गाङ्गिभावो बोध्यते । ततः कथं कर्मसम्बन्ध इति शङ्कते—**नन्वेवमिति । उपसदामित्यस्य पुरस्तादित्यनेनान्वयात्** न षष्ठी शेषशेषिभावसम्बन्धार्था, ततश्च प्रवर्ग्यस्योपसत्पूर्वकालसम्बन्धे वाक्येन बोधिते, तावतापि प्रवर्ग्यस्य प्रयोजनाकांक्षाऽनिवृत्तेरुपसद्द्वारोपस्थितकर्मसम्बन्धेनैव पर्यवसानमिति परिहरति—**तत्राऽऽहेति ।** एवं वाक्येन प्रवर्ग्यस्य क्रतुसम्बन्धमुपपाद्य, क्रतुविशेषसम्बन्धं दर्शयितुं **यद्यपीत्यादिटीकेत्याह—यत्रोपसद इत्यादिना । 'तत् सर्वार्थमप्रकरणा'दिति सूत्रं 'तत्सर्वार्थमविशेषा'**दित्यर्थतः पठितम् । अत एव सूत्रव्याख्यानावसरे **अप्रकरणा**दित्युक्तमिति ध्येयम् ।

**अनारभ्याधीतादपीति । अनारभ्याधीतादस्मादुपदेशादपीत्यन्वयः ।** P 787-4
**अतिदेशवैयर्थ्यमिति ।** खादिरत्वाद्यंश इत्यर्थः । इमं न्यायं दार्ष्टान्तिके योजयति—**एवमिहापीति । उपसद्वदुपसदा सहेति च निर्देश इति । टीकायामयं निर्देशः, उपसदां प्रवर्ग्यस्य च तुल्ययोगक्षेमत्वमेव, न तूपसदां प्रवर्ग्यनिरूपितशेषित्वलक्षणसम्बन्धविशेषहेतुत्वं, 'पुरस्तादुपसदा'**मिति वाक्ये **उपसदामिति** षष्ठ्या दिग्योगनिबन्धनत्वेन शेषशेषिभावार्थकत्वाभावादिति **ज्ञापनार्थ इत्यर्थः ।**

---

१. अत्र भाष्ये 'न हि संनिधेरर्थवत्त्वे संभवति अकस्मादसावाश्रयितुं युक्तः' पाठः ।

२. कल्पतरौ 'प्रकृत्यर्थं विकृत्यर्थं च अप्रकरणात्' इति पाठः ।

३. अत्र कल्पतरौ 'अतिदेशेन विकृतावप्युपसद्वत् प्राप्तिसिद्धेः' इति पाठः । पूर्वं 'विकृतौ विदधद्विदध्यात्' इति पाठः ।

P. 787-11 **अङ्गत्वेनेति । अङ्गत्वेन समवेतो योऽर्थो** हृदयरूपस्तत्प्रकाशकत्वेनेत्यर्थः। यथा कर्मसमवेतनिर्वापप्रकाशकपदव्यतिरिक्तानां 'देवस्य त्वे'त्यादिपदानां सवित्रभ्यनुज्ञापूर्वकत्वादिविशिष्टनिर्वापप्रकाशकतया समवेतार्थपर्यवसानम्, तथा विद्यासमवेतहृदयप्रकाशकपदव्यतिरिक्तानां **सर्वं प्रविध्ये**त्यादिपदानामपि विशिष्टहृदयप्रकाशकत्वेन समवेतार्थपर्यवसानमित्याह—**समवेतहृदयादीति** ।

**विशेषणभूतस्वार्थेति** । उपास्यदेवतां प्रति **सर्वं प्रविध्ये**त्यनेन चित्तस्य बहिर्मुखत्वाभावः प्रार्थ्यते । हृदयं प्रविध्येत्युपासनायतनभूतस्य हृदयस्य मुकुलीभूतस्योद्भेदः । **धमनीः प्रवृज्ये**त्यनेन धमनीनां सिराणां विभक्ततयाऽवस्थानेन तदविभागप्रयुक्तरोगाभावः । **शिरोऽभिप्रवृज्ये**त्यनेन शिरसश्चाश्लेषेण नानावस्तुसंयोगप्रहाण्या विभक्तरूपेणावस्थानम् । **त्रिधाविपृ[भ]क्त** इत्यनेन 'त्र्युन्नतं स्थाप्ये'ति श्रुत्युक्तं स्थानत्रयौन्नत्यम् । ततश्चैवंरूपविशेषणभूतस्वार्थप्रकाशनद्वारा यथोक्तविशेषणविशिष्टहृदयादिरूपसमवेतार्थप्रकाशकत्वात् तत्र पर्यवसानमित्यर्थः ।

P. 787.14 **दुर्बलत्वस्योक्तत्वादिति** । **इदं खल्वित्यादिटीकया** श्रुत्यादीनामुत्तरोत्तरस्य पूर्वपूर्वकल्पनयैव विनियोजकत्वोक्त्या पूर्वपूर्वापेक्षया उत्तरोत्तरदौर्बल्यस्योक्तत्वादित्यर्थः। प्रकृते च नास्ति विरोध इत्याह—**नेदिहेति**[1] । नन्वेवं बलाबलाधिकरणविरोध इत्यत आह—**तदनेनेति** । किमस्य वाक्यस्य बृहस्पतिसवे वाजपेयोत्तरकालताभिधायकत्वात् तयोरङ्गाङ्गित्वासम्भवः ? किं वा तन्मात्रविधिपरत्वात् ? नाद्य इत्याह—**अत्र हि पूर्वकालतेति** । नान्त्य इत्याह—**तत्र धातुसम्बन्ध इति** ।

P. 788-5 **टीकागतं क्त्व इति पदं** व्याचष्टे—**क्त्वाप्रत्ययस्येति** । यद्यपि **क्त्वाप्रत्ययादिति** वक्तव्यं, तस्य समानकर्तृकत्वार्थकत्वात्, तथा'प्यव्ययकृतो भावे भवन्ती'ति **शाब्दिकमर्यादया** धातोरेव समानकर्तृकत्वमर्थ इत्याश्रित्य, क्त्वाप्रत्ययसम्बन्धेन धातोरेव समानकर्तृकत्वमवगम्यत इति **टीकाभिप्रायं** दर्शयितुं तथोक्तम् । एवञ्च—'क्त्वाप्रत्ययस्येति षष्ठ्यन्तपाठो लेखकप्रमादादागत' इति **परिमलोक्तं चिन्त्यम्** ।

---

१. कल्पतरौ 'तदिहे'ति वाक्ये 'तमनुमत्यैव विद्याङ्गत्वमपि' इति शोधनीयम्।

**सम्बन्धे प्रत्ययविधानेन धात्वर्थान्तरसम्बन्धसिद्धिं टीकोक्ता-मुपपादयति—धातुसम्बन्ध इत्युक्त इत्यादिना।** 'धातुसम्बन्धे प्रत्ययाः' P. 788-5 इति सूत्रे धातुशब्देन तदर्थलक्षणाऽभावे स्वस्य स्वेन सम्बन्धायोगेन धातुद्वय-सम्बन्ध इत्यर्थः स्यात्। ततश्च धातुद्वयापत्तेः प्रत्ययविध्यनुपपत्तिः। **धातो-रित्यधिकारसूत्रे** एकत्वस्य विवक्षितत्वेन तदधिकारविरोधादित्यर्थः। **एकप्रयोग-ताम्मिति।** एकफलार्थिकर्तृकैकमहाप्रयोगशालितामित्यर्थः। शरत्कालकर्तव्यस्य वाजपेयस्य वसन्तकालकर्तव्यस्य बृहस्पतिसवस्य च प्रयोगभेदावश्यम्भावादिति द्रष्टव्यम्। **अङ्गाङ्गित्वसिद्ध्यर्थमुपपादयतीत्यन्वयः।**

**कर्तृत्वस्य प्रयोगाविष्टत्वमनुष्ठानाविष्टत्वमुपपादयति—करोतीति हीति।** ततश्च क्त्वाप्रत्ययावगतं कर्तृकारकैक्यं कृत्यैक्ये सत्येवेत्यर्थः। **अधि-ष्ठानलक्षणायामिति।** 'समानकर्तृकयो'रिति सूत्रे कर्तृशब्देन कर्तृकारकाधि-ष्ठानलक्षणायामित्यर्थः। **प्रयोगो भिद्येतेति।** क्वचित् दर्शपूर्णमासादौ वचन-बलात् प्रयोगैक्येपि, स्वरसतः प्रधानभेदे[3] प्रयोगभेदस्यैव न्याय्यत्वादित्यर्थः। **गुणप्रधानभावं चेति।** स्वतन्त्रयोः परस्परं सम्बन्धायोगादित्यर्थः।

**कस्तर्हीति।** **'बृहस्पतिसवेन यजेते'ति यत्** इत्यनुवादेन दूरस्थ- P. 788 16 कर्मविपरिवृत्त्यर्थत्वे, वाक्यस्य वाजपेयाङ्गत्वेन तद्विधायकत्वं न स्यादित्यर्थः। ननु बृहस्पतिसवेनेति नाम्ना दूरस्थं कर्म सन्निधाप्यते। यजेतेत्यनेन च विधी-यते। अन्यथा गृहमेधीये 'आज्यभागौ यजती'त्यत्र का गतिः? तत्र चोदक-लोपेन ततः प्राकृताज्यभागसन्निधापनायोगेन नामैव तत्सन्निधापकं, 'यजती'ति च विधिरित्येव वक्तव्यत्वादित्याशंक्य, आख्यातश्रवणस्थले नाम्न आख्यातपरत-न्त्रतया न स्वातन्त्र्यम्। 'आज्यभागौ यजती'त्यत्रापि प्रधानेतिकर्तव्यताकांक्षा-परिपूरणसमर्थत्वेन विमर्शकालप्रसक्तचोदकसन्निधापितयोरेव विधानम्। न तु नाम्ना। अन्यथा प्रकरणान्तरन्यायोच्छेदापत्तेः। तथा च कृत्स्नं वाक्यं बृह-

---

१. टीकायां 'कथं च समानः कर्ता स्यात्' इति प्रश्नः। 'यद्येकः प्रयोगो भवेत्' इत्युत्तरम्। इति भामतीव्याख्याने कल्पतरूक्तशेषपूरणानुषङ्गादिक्लेशो न भवतीति भाति।

२. 'अङ्गाङ्गित्वाभावे तु समानकर्तृकत्वं कर्तृत्वाधिष्ठानपुरुषैक्येन गौणतयोपपाद-नीयम्। न च तद्युक्तम्' इति सोमनाथः।

३. प्रधानभेदे। उभयोः प्रधानयोस्सतोर्मिथो भेदे इत्यर्थः।

स्पतिसवसन्निधापकं तद्विधायकं चेति वक्तव्यम्। तत्तु न सम्भवति। वैरूप्या-
P. 788-17 पत्तेरित्याह—**न ह्येकमेवेति**।

तर्हि विनिगमकाभावाद्वाक्यं न किञ्चिदपि कुर्यादित्यत आह—**तस्मादिति**। **मतद्वयेपि**। **भट्टगुरुमतद्वयेऽपि**। **खादिरत्वादिरिति**। 'खादिरो यूपो भवती'ति क्रत्वर्थतया विनियुक्तस्यापि 'खादिरं वीर्यकामस्ये'त्यनेन फलार्थतयापि विनियोगादिति भावः। **नाङ्गाङ्गित्वबोधकमिति**। क्त्वाप्रत्ययेन समानकर्तृकत्वाभिधाने तन्निर्वाहकस्य गुणप्रधानभावस्य विनिगन्तुमशक्यतया समानकर्तृकत्वमेव नाभिधीयत इति न तन्मुखेन वाक्यमिदमङ्गाङ्गित्वबोधकमित्यर्थः।

P. 790-2 **प्रथमसूत्रे अनुक्रान्तमिति**। यद्यपि तत्र दर्शपूर्णमासप्रकरणाम्नानसिद्धवत्कारेणैवाधिकरणमनुक्रान्तम्। तथापि वाक्यमिदं दर्शपूर्णमासप्रकरणे श्रूयत इति वदतो भाष्यकारस्य मतमनुसृत्य तत्राधिकरणमनुक्रान्तम्। इह तु तदनभ्युपगन्तृवार्तिककारमतमनुसृत्य **टीका** प्रवृत्तेति बृहस्पतिसववाक्यवैषम्यं दर्शितमिति न विरोधः। **मन्त्रमवस्थापयतीत्यत्रेति**। **सेत्यनेन** परामृष्टस्यैकपदसमवेतार्थतेत्यस्यान्वय इत्यर्थः।

किं हृदयपदसमवेतार्थताविद्यास्वेव, नाभिचारे, इतरपदसमवेतार्थता त्वभिचारे, न विद्यास्विति व्यवस्थामाश्रित्य सन्निध्यनुगृहीतत्वादेकपदसमवेतार्थता प्रबलेति ब्रवीषि ? किं वा एकपदसमवेतार्थताया उभयत्र तुल्यत्वेऽपि सन्निध्यनुगृहीता प्रबलेतीति विकल्प्य, प्रथमं **हृदयपदस्याभिचारेऽपि समवेतार्थस्येति** **टीकाव्याख्यानेन** निराकरोति-**हृदयपदमिति**। द्वितीयमनूद्य तदुत्तरटीकया
P. 790-6 निराकरोति—**यत्त्वित्यादिना**।

---

१. अत्र कल्पतरौ 'कौण्डपायिनामयनवत्' इति शोधनीयम्।

२. अत्र टीकायां 'सोममारभ्याधीत'मिति पाठः।

३. टुप्टीकायां 'तस्मादन्यथा वर्ण्यते—ज्योतिष्टोमप्रकरणे इदमाम्नातम्' इति वर्तते। तस्मात् 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति वाक्यं सोममारभ्याधीतमिति वार्तिकमतमिति ज्ञायते। 'अन्यथा वर्ण्यते' इति टुप्टीकावचनात् दर्शपूर्णमासप्रकरणे तद्वाक्यमाम्नातमिति भाष्यकारमतमिति ज्ञायते। वार्तिककारमतानुसारित्वादेव टीकायाः टीकायां सोममारभ्याधीतमिति पूर्वं शोधितम्।

**टीकायां** बलाबलचिन्तोपयोगितया श्रुतिलिङ्गसूत्रगतसमवायपदव्याख्यानेन श्रुत्यादीनां परस्परं विषयापहारलक्षणो विरोध उक्तः। तमुपपादयति—**यत्र ही-त्यादिना। अत एवेति।** बाध्यबाधकभावस्य प्राबल्यदौर्बल्यकृतत्वादेवेत्यर्थः। **विनियुक्तविनियोग इति।** क्रत्वर्थतया **विनियुक्तस्य** खादिरत्वस्य पुरुषार्थतया **विनियोगे**ऽपीत्यर्थः। **अभिधेयभेदमिति।** तथा च पूर्वटीकायां **रूपत** इत्यभिधेयपरमिति भावः। शेषशेषिणोरैन्द्रीगार्हपत्ययोः परस्परनिरूपितत्वं वाक्येन बोध्यत इति दर्शयति—**ऐन्द्र्यादिपदार्थेति। श्रुत्या सामान्य-रूपेणावगतः शेषशेषिभावसम्बन्धः इति।** उक्तरूपे विशेषे **व्यवस्थाप्यत** इत्यन्वयः।

P. 791-1

वाक्यस्यैव लिङ्गेन विरोध इति वदन् प्रष्टव्यः। किं विरोधे श्रुतिरप्रयो-जिकैव? किं वा केवला श्रुतिरप्रयोजिका? अथ वा उभयाधीने विरोधे वाक्य-विरोधोदाहरणमेवेदं कुतो न भवेदिति? तत्राद्यं निराकरोति—**यतो यदी-त्यादिना।** द्वितीयं शङ्कते—**नन्विति।** सर्वत्र श्रुतेर्वाक्याविनाभावेनैव बोध-कत्वाद्वाक्यमपेक्ष्य भवन्नपि विरोधः श्रुत एवेति परिहरति—**नह्येकं पदमित्या-दिना।** तृतीयं शङ्कते—**नन्वेवमिति।** ऐन्द्रीगार्हपत्यविशेषणविशेष्यभावा-पेक्षया प्रधानस्य तच्छेषशेषिभावस्य बोधने श्रुतेरेव शीघ्रतरप्रवृत्त्या तयैव लिङ्ग-विरोध्यर्थो झटिति बोधितः। वाक्येन तु तद्विरोधस्फुटीकरणमात्रम्। अतः प्रधानभूतश्रुतिविरोध एवायमिति परिहरति—**स्वार्थबोधे इति।**

P. 792-1

**यथेति।** विरोधस्थले येन प्रकारेण श्रुतिः शीघ्रं प्रवर्तत इति कृत्वा लिङ्गादेर्बाधिका, तेनैव प्रकारेण विरोधाभावस्थलेऽपि सैव पूर्वं प्रवर्तत इत्यर्थः। **इन्द्रशेषत्वेनेति।** 'तस्येद'मित्यर्थे विहिततद्धितबोध्यस्य सम्बन्धसामान्यस्य बोध्यबोधकभावलक्षणविशेषरूपतया शेषत्वपर्यवसानादिति भावः।

---

१. कल्पतरौ 'तदर्थं किं बलीय इति' इति पाठः। उपरि 'किं वा पदान्तरैक-वाक्यतापन्नयोः' इति पाठः।

२. कल्पतरौ पूर्ववाक्ये, 'ऐन्द्री शेषत्वेन' इति, 'गार्हपत्यः शेषित्वेन' इति, उपरि, 'तत् गार्हपत्य' इति, 'ऐन्द्रीकरणकोपस्थाने' इति च पाठः।

३. अत्र कल्पतरौ 'लिङ्गविरोध्यर्थः तया' इति शोध्यम्।

P. 792-6 पदार्थमुक्त्वा वाक्यार्थमाह—**ऐन्द्र्या इति**। उपस्थानस्य प्रकाशनत्वेन व्याख्यानं कथमित्यत आह—**ऋच इति**। 'उपान्मन्त्रकरणे' इत्यनेन सूत्रेणोपपूर्वात्तिष्ठतेर्मन्त्रकरणकेऽर्थे वर्तमानादात्मनेपदं विहितम्। मन्त्रकरणकत्वं च न समीपावस्थानमात्रस्येति तद्बलात् प्रकाशनं गम्यत इत्यर्थः।

यद्यपि प्रदर्शितः पूर्वपक्षो 'वचनात्त्वयथार्थमैन्द्री स्या'दित्यधिकरणस्य, न तु श्रुतिलिङ्गाधिकरणस्य। तत्र द्वाभ्यामपि प्रमाणाभ्यामुभयत्र विनियोग इत्येव पूर्वपक्षस्य प्रधानत्वात्। '**तदनेन श्रुतिलिङ्गाधिकरणमप्याक्षिप्त**'मित्यनेन वाक्येन तत्राविरोधेनैव पूर्वपक्ष इति सूचनाच्च। तथापि विरोधे सत्यपि लिङ्गस्य विनियोजकत्वे, तदभावे किमु वक्तव्यमिति कैमुतिकन्यायेन द्वयोरपि विनियोजकत्वमिति युक्त्यन्तरं दर्शयितुमैन्द्र्यधिकरणं श्रुतिलिङ्गाधिकरणं चैकीकृत्य पूर्वपक्षप्रदर्शनार्थं **टीका** प्रवृत्तेति मनसि निधाय तदनुरोधेनैव व्याख्यातमिति ध्येयम्।

श्रुतिबोधितविनियोगनिर्वाहाय सामर्थ्यावधारणं, तदभावाच्च 'वह्निना सिञ्चे'दित्यप्रमाणमिति परिहाराभिप्रायमाह—**यथा[1] स्फोट इति**। तर्हि ऐन्द्र्या गार्हपत्यमिति वाक्यमपि वह्निना सिञ्चेदिति वाक्यतुल्यमिति शङ्कते—**ननु**

P. 792-12 **यदीति**। किं 'वह्निना सिञ्चे'दित्यादिवदप्रमाणमेवास्त्विति ब्रवीषि? किं वा सामर्थ्याभावे कथं तन्निर्वाह इति? तत्राद्यं निराकरोति—**मन्त्रो हीति**। अभ्रान्तया स्वमूलत्वेन प्रसक्तभ्रमादिरहितया। निर्दुष्टयेति यावत्।

P. 792-13 द्वितीयं निराकरोति—**यदर्थे[2] चेति**। **प्रथमावगतविनियोगस्येति**। नचैन्द्रीति तद्धितान्तेन प्रातिपदिकेनेन्द्रशेषतयावगतस्य मन्त्रस्य तृतीयया पश्चादेव गार्हपत्यशेषत्वं बोधनीयम्। तच्च न सम्भवति। प्रथमावगतिविरोधादिति वाच्यम्। तद्धितेन सम्बन्धमात्रावगमेऽपि तदुद्देशप्रवृत्तकृतिविषयत्वस्य तच्छेषत्वस्य विधिमन्तरेणानवगमात् गार्हपत्ये विनियोग एव प्रथमावगत इति भावः।

---

१. कल्पतरौ 'यथा स्फोटे ज्ञाते' इति पाठः।

२. कल्पतरौ 'यदर्थे च विनियुज्यते तत्र यदि मुख्यं' इति पाठः इति ज्ञायते अनेन।

**गौणमपि सामर्थ्यमिति ।** इन्द्रगतैश्वर्यगुणयोगनिबन्धनमित्यर्थः | P. 792-13
**प्रभवति हीति ।** न च तत्र यौगिकत्वमेवोक्तम्, न गौणत्वम्, **इन्देर्धातोरैश्वर्यार्थकत्वप्रदर्शनादिति** वाच्यम् । इन्द्रशब्दस्य मुख्यार्थगुणयोगेन गार्हपत्ये गौणत्वं दर्शयितुमेवेन्द्रशब्दरूढ्यर्थे धातुवाच्यैश्वर्यगुणस्य वस्तुतः सद्भावप्रदर्शनात् । अन्यथा गवादिपदानामपि रूढ्युच्छेदापत्तेरिति भावः ।

**प्रकरणाम्नानसामर्थ्या**दित्येतत्पदं व्याचष्टे—**दर्शपूर्णमासेति ।** न चैन्द्रीमन्त्रतद्विध्योरग्निचयनप्रकरणगतत्वादिदमयुक्तमिति वाच्यम् । 'निवेशनस्सङ्गमनो वसूना'मित्यैन्द्रीतद्विनियोगविध्योरग्नि[चयन]प्रकरणगतत्वेऽपि 'कदाचन स्तरीरि'त्यैन्द्रीतद्विनियोगविध्योरग्निहोत्रप्रकरण इव दर्शपूर्णमासप्रकरणेऽपि समाम्नानसम्भवेन तदादाय व्याख्यानसम्भवात् ।

**टीकायां विनियोगकल्पनायामपीत्यपिशब्देन** विनियोगकल्पना न सम्भवतीति श्रुतिलिङ्गाधिकरणपूर्वपक्षनिरासप्रतिज्ञा कृता, तत्र हेतुं दर्शयितुं **श्रौताद्विनियोगादित्यादिटीका ।** तां शङ्कापूर्वकमवतारयति—**ननु यथेत्यादिना ।** P. 793-3 यदुक्तमस्माभि**'रधिकरणद्वयमेकीकृत्य प्रदर्श्यत'** इति तदितस्समुत्थितम् । श्रुतिलिङ्गयोरुभयोरप्येको मन्त्रो विषयो भवितुमर्हतीत्यत्र दृष्टान्तो—**यथेति ।** अनेन च प्रबलप्रमाणाक्रान्ते विषये कथं दुर्बलं प्रमाणं प्रवर्तेतेति शङ्का वारिता ।

अत्र झटिति प्रवृत्तया श्रुत्या गार्हपत्ये विनियोगेन मन्त्राम्नानस्य निराकांक्षतया कल्पनामूलोच्छेदात् न लिङ्गाद्विनियोजकश्रुतिकल्पनया विनियोगकल्पनम्, प्रत्यक्षानुमानस्थले तु नैवमिति परिहारं दर्शयितुं, ननु यथा श्रुतिराहत्य विनियोगं बोधयति, तथा लिङ्गमप्याहत्यैव विनियोगं कल्पयिष्यति । न श्रुतिकल्पनया । तथा च तुल्यकालप्रवृत्तत्वान्न बाध्यबाधकभाव इत्याशङ्क्य, तन्निराकरणमुखेन

---

१. परिमले 'अग्निचयनप्रकरणाम्नानसामर्थ्यादित्येव पाठः । दर्शपूर्णमासप्रकरणाम्नानसामर्थ्यात् इति लेखकप्रमादापादितम्' इत्युक्तम् । तदुक्तः प्रत्युक्तिर्वक्तव्येत्येव भावेन आभोगकारः दर्शपूर्णमासप्रकरणे समाम्नानसंभवेनेति वक्ति । दर्शपूर्णमासप्रकरणे समाम्नातमिति धैर्येण न वक्ति । समाम्नातत्वे खलु तथा ब्रूयात् । 'निवेशन' इत्यैन्द्रिया गार्हपत्योपस्थानं चयने श्रुतम् । 'कदाचनस्तरीरसी'त्यैन्द्रया गार्हपत्योपस्थानं च अग्निहोत्रे श्रुतम्' इति सोमनाथीये ।

पूर्वपक्षनिरासहेतुं दर्शयितुं, **श्रौताद्विनियोगादिति टीकावाक्यं,** तत्रार्थविप्र-
P. 793-5 कर्षं विशदयति—**शब्दप्रकाशितार्थेनेति । शब्दप्रकाशितः अर्थः इन्द्रः,** ऐन्द्रीं प्रति शेषित्वमार्थिकोऽर्थः । तयोरसम्बन्धादित्यर्थः ।

एवकारानुषङ्गेण टीकावाक्यार्थमाह—**श्रुत्यर्थो [1]विनियोग एवेति ।** लोकसिद्धस्यापि प्रश्नविषयत्वसम्भवात् कथं तन्निषेध इत्यत आह—**अनुयोग आक्षेप इति । टीकायां लिङ्गं विनियोजिकां श्रुतिं कल्पयितुं प्रक्रान्त-व्यापारमिति कश्चित् पाठः ।** स तु स्पष्टार्थ इति मनसि निधाय, **लिङ्गात् विनियोजिकां श्रुतिं कल्पयितुं प्रक्रान्तव्यापार इति पाठे** विशेष्यं दर्शयति—**प्रतिपत्त्रेति शेष इति ।** गौणस्थले मुख्यवृत्त्यनभ्युपगमात् **प्रथमां वृत्तिमजह-दिति टीका**नुपपत्तिरित्यत आह—**प्रथमां [2]मुख्यामिति ।**

ननु सदनकरण इति वक्तव्ये कथमुपस्तरण इति टीकेत्याशंक्य, सदन-
P. 794-3 करणमुपस्तरणात्मकमेव लिङ्गादवगम्यत इति तथोक्तमित्याह—**घृतस्येति । एतदपेक्षो हीति** प्रतीकग्रहणे, **एतत्पदेन सुशेवं कल्पयामीति** पूर्वभागोऽप्या-कृष्टो भवतीति तन्मात्रं गृहीतम् । **यत्तत्पदेति ।** तत्पदेन यत्पदस्याक्षेपादुभयस-मभिव्याहार उक्तः । ननु प्रकृतिप्रत्यययोरपि पृथगुच्चारणे विभागो विद्यत इत्यत आह—**विभज्यमानत्वेनेति । सूत्रे विभागे सति यत्पदमिति विवक्षित-त्वान्न दोष** इति भावः ।

**तावत्[3]युक्त इति ।** विभागे सति यत्पदवृन्दं तदेकं वाक्यमित्येतावत्युक्त इत्यर्थः । **इदमेव व्यावर्त्यमिति ।** न च 'तप्ते पयसि दध्यानयति सा वैश्वदे-व्यामिक्षे'त्यादिकमपि व्यावर्त्यं सम्भवतीति कथमेतदिति वाच्यम् । प्रस्तुतमन्त्र-विभागपरिज्ञानाय तदेकत्वस्यैव लक्ष्यतया विभज्यमानत्वे सति साकांक्षमन्त्र-पदत्वस्य 'तप्ते पयसी'त्यादावभावेन तत एव तद्वारणादिति भावः । **तदेवमि-त्यादिटीकायां—प्रतीतैकवाक्यत्वानुगुणतया क्लृप्तं सामर्थ्यं, न तद्बाधि-तुमर्हतीत्यन्वयः ।**

---

१. प्रतीकोऽयं मूले न दृश्यते । 'कल्पयितुमुचिता' इत्यनन्तरं 'ननु श्रुत्यर्थो विनियोग एवेत्यर्थः' इति कल्पतरौ पाठः ऊह्यते ।

२. कल्पतरौ 'यद्यजहत् तिष्ठेत्' इति पाठः ।

३. कल्पतरौ 'निरपेक्षविभागेऽपि एकवाक्यत्वं स्यात्' इति पाठः ।

**टीकायां—तदनुगुणमिति** क्रियाविशेषणम्। **एकवाक्यतां कल्पयित्वेति। प्रतीयमानामेकवाक्यतां निर्वापरूपैकार्थपरत्वेन दृढीकृत्येत्यर्थः। अभिधानसामर्थ्यमिति।** प्राशस्त्यविशिष्टरूपेण निर्वापाभिधानसामर्थ्यमित्यर्थः। **अत्रैकशब्दः प्रयुक्त इति।** सिद्धान्ते व्यावर्त्यसम्भवेन सूत्रगतार्थैकत्वविशेषणमावश्यकमिति तद्घटितमेव लक्षणं दर्शयितुमेकशब्दः प्रयुक्त इत्यर्थः। एकत्वविशेषणे सति प्राधान्यविशेषणमावश्यकमासीदित्याशयेनाह—**एकस्मिन्निति।** भावनाद्वारा पदार्थानामप्यस्ति प्राधान्यमिति परिहरति—**अत आहेति। ततश्च यौवदित्यादिटीकाभिप्रायमाह—मन्त्रावयवावित्यादिना।** P. 794-12 P. 795-3

ननु सदनकरणसादनप्रकाशनसामर्थ्यं मन्त्रस्य प्रत्यक्षमेव दृश्यत इति कथमनुमेयत्वमित्याशङ्क्य, कस्मिंश्चिदंशे प्रत्यक्षत्वेऽप्यंशान्तरे अनुमेयत्वमवर्जनीयमित्याशयेनाह—**तत्रोपस्तरण इति।** आसादनप्रयोजनकत्वात्प्रशस्तमुपस्तरणमिति, विशिष्टसादनयोगित्वादासादनं प्रशस्तमिति च, प्राशस्त्यलक्षणया भागद्वयमपि व्याख्येयमित्यनुमेयं सामर्थ्यमित्यर्थः।

लिङ्गकल्पितश्रुत्या झटिति विनियोगं **टीकोक्तमुपपादयति—एकं विनियोगमित्यादिना।** निःश्रेण्यारोहणानन्तरं यदि विलम्बेन प्राप्यं तर्हि द्वयोस्तुल्यमेव तत्फलं भवेदित्यत आह—**प्राप्तिमात्रोपपादी[ती]ति।** प्रासादादिप्राप्तिमात्रेणोपपतितुं प्राप्तुम् शीलमस्यास्तीति तथेत्यर्थः।

**एवमुत्तरत्रेति।** प्रकरणादावपीत्यर्थः। **भेदेन विनियोगः स्यादिति।** देवस्य त्वेत्यादिपदानामित्यर्थः। दूषणान्तरमाह—**तथाचेति। सा क्वापीति। या पदान्तराणामेकवाक्यता कल्पिता सेत्यर्थः। अगतेर्वरमिति।** गत्यन्तराभावाद्वाक्यमपि विनियोजकं वरमित्यर्थः। **श्लोकस्थमेवमिति** पदमुपादाय व्याचष्टे—**एवमितीति।** P. 795-21

---

१. कल्पतरौ 'एकशब्दः प्रयुक्तः 'स्योनं ते' इत्यस्य वाक्यभेदप्रतिपादनात्।' इति पाठः।

२. टीकायां—'एकैकत्र विनियोगे सति' इति पाठः।

३. कल्पतरौ 'नावयविरूपं वाक्येन' इति, 'सिद्धमिति देवस्य त्वेत्यादौ' इति च पाठः।

ननु टीकायां स्वोक्ते प्रकरणलक्षणे सम्मतित्वेन वृद्धवचनमुदाहृतम्। तदयुक्तम्। स्वेन, सम्बन्धः प्रकरणमित्युक्तम्। वृद्धवचने च, वचनमिति

P. 796-1 इति विरोधादित्यत आह—कार्यान्तरापेक्षेति। इतिकर्तव्यताकाङ्क्षा प्रकरणमित्युक्तेऽर्थे सम्मतिः। ततश्च सन्निध्याम्नातपदार्थसम्बन्धापादकेतिकर्तव्यताकाङ्क्षावत्प्रधानवचनं प्रकरणम्। तत्र च विशेषणविशेष्यभावे कामचारेण 'सम्बन्धः प्रकरण'मिति 'आकाङ्क्षा प्रकरण'मिति च व्यवह्रियते। तथा च न विरोध इति भावः। सन्निहितकरणोपकार इति। फलभावनाकाङ्क्षितत्वात् करणोपकारः सन्निहित इति भावः।

स्वर्गस्यानाकाङ्क्षत्वादिति। सन्निहितकरणोपकारेण प्रयाजादीनां चरितार्थत्वाच्च नाकाङ्क्षोत्थापनेनानुषङ्ग इति भावः। वर्मकरणेति। वर्मकरणरूपं 'वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानाये'त्यर्थवादबोधितं यत्फलमित्यर्थः।

P. 796-10 देवतासम्बोधनेति। यद्यपि निगदाधिकरणे पूर्वमीमांसकैः 'लोडन्ताख्यातयुक्तः पदसमूहः निगद' इत्युक्तम्। तथापि सूक्तवाकादिष्वपि निगदव्यवहारदर्शनात् तत्साधारण्यार्थमस्मिन्नेव लक्षणे तेषामपि तात्पर्यमिति भावः।

अमावास्यायामिन्द्राग्निदेवसद्भावं प्रकटयति—नासोमयाजीति। दधिपयसोरभाव इति। असन्नयत एवैन्द्राग्नविधानात् दधिपयसोरभावः तद्विधिप्रयोजक इति अभावे सति विहितमित्युक्तम्। अथेदानीमित्यादिसन्देहटीकाभिप्रायं दर्शयन्नुत्तरटीकामवतारयति—एकत्र सहपाठेऽपीति। 'अवीवृधेता'मित्यादिमन्त्रशेष इति। 'इदं हविरजुषेता'मिति पूर्वभागस्याप्युपलक्षणमेतत्। तत्परित्यागे कारणाभावात्। फलवती हि भावनेति टीकायां फलवत्त्वं प्राधान्ये हेतुरिति व्याचष्टे—फलवतीति।

आकाङ्क्षात्मकं हीति। आकाङ्क्षावत्प्रधानवचनं प्रकरणमिति पक्षेऽपि केवलस्य प्रधानवाक्यस्य प्रयाजादिविनियोगबोधने सामर्थ्याभावेन पर्यवसानगत्या

P. 797-4 आकाङ्क्षाया एव विनियोजकत्वादाकाङ्क्षात्मकं हीत्युक्तम्। अन्यत्रेति। यत्र

---

१. कल्पतरौ 'रात्रिसत्रन्यायेन' इति पाठः।

२. प्रयोज्यप्रयोजकभावो नेति परिमलम्।

३. कल्पतरौ 'इतिकर्तव्यतात्व'मिति पाठः।

देवतावाचकपदं समवेतार्थकं तत्रेत्यर्थः । **कृत्स्नार्थत्वेन** । सकलप्रकरण्यर्थत्वेन । **नानेष्टीति** । 'स्वाराज्यकामो राजसूयेन यजेते'ति वाक्ये अप्रसिद्धार्थकस्य राजसूयपदस्य यजिपरतन्त्रतया यजिना च प्राकरणिकसकलेष्टिपशुसोमानामभिधानेन तत्समुदायो राजसूय इत्यर्थः । P. 797-4

शौनश्शेपमाख्यानं सङ्ग्रहेण दर्शयति—**शुनश्शेपः किलेति** । पुत्रेप्सुना हरिश्चन्द्रेण वरुणः प्रार्थितो मम यदि पुत्रो भविता तदा तेन त्वां यक्ष्य इति । ततस्तस्य पुत्रो जातः तेन च वरुणं नेष्टवान् । ततो जलोदरव्याधिगृहीते पितरि हरिश्चन्द्रे, **तत्पुत्रेण स्वनिष्क्रयार्थमृषिपुत्रः शुनश्शेपः क्रीत** इत्यर्थः । **पुरुषमेधार्थमिति** । पुरुषपशुद्रव्यकयागार्थमित्यर्थः। तेन च शुनश्शेपोऽभिषेचनीये वरुणं प्रत्यालम्भं कर्तुं गृहीतो **वरुणं तुष्टाव । स च तुष्ट एनं** ररक्षेत्येतदाख्यानमित्यर्थः । गामानय प्रासादं पश्येति वाक्यं मनसि निधायाह—**तर्ह्यानयेति** । P. 797-11

**ननु टीकायां सन्देहप्रदर्शनावसरे सन्निधिप्राबल्येन पूर्वपक्षकोटिं** प्रदर्श्य, **समानबलत्वेन पूर्वपक्षवर्णनमयुक्तमित्याशंक्य,** पूर्वमीमांसकोक्तरीत्या अधिकरणप्रवृत्तिमुपवर्ण्य, तस्य युक्तिसहत्वाभावादसाङ्गत्यसूचनाय प्रकारान्तरेण पक्षवर्णने तदनुगुणतया संशयः उन्नेतुं शक्यत इति मनसि निधाय भङ्ग्यन्तरेण पूर्वपक्षं दर्शयतीत्याशयेनाह—**अत्र विकल्पेनेति** । अत्र पूर्वोक्तरीत्या प्रवर्तिते अधिकरण इत्यर्थः । अनेन प्रदर्श्यमानपूर्वपक्षानुगुणतया संशयटीका किमिति न व्याख्यातेति शङ्का निरस्ता ।

'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यता'मिति वाक्यं मनसि निधायाह—**अयमेतीति वाक्य इति** । पुरुषपदस्य सम्बन्धिशब्दत्वाभावात् क्रियासम्बन्धेनैव चारितार्थ्यमिति परिहरति—**तत्राहेति** । प्रमाणयोस्तुल्यबलत्वेऽपि विरोधाभावान्न विकल्प इति शङ्कते—**ननु प्रकरणादिति** । प्रमाणयोर्बोध्यभेदेन वा समुच्चयः स्यात् ? तदर्थानुष्ठानभेदेन वा ? तत्र बोध्यभेदस्तावत् अनाशङ्कनीयः । प्रकरणेन सर्वाङ्गत्वं बोधयतैवाभिषेचनीयाङ्गत्वमपि बोधितमिति, तदतिरिक्तसन्निधिबोध्याभावात् । अतः परिशेषादनुष्ठानभेदेन समुच्चयो वक्तव्यः । स च न संभवतीत्याह—**अभिषेचनीयस्यापीति** । P. 798-6

---

१. टीकायां 'अन्तरा कल्पिते विलीयेते' इति पाठः, लिङ्गवाक्ये इति तदर्थः ।

ननु सन्निधिबलादभिषेचनीयमात्राङ्गत्वं, प्रकरणबलात् सकलराजसूयाङ्गत्वं वेति विकल्पपक्षेऽपि, यत्राम्नानं तत्रैव सकृदनुष्ठानेन फलभेदाभावात् चिन्तावैयर्थ्यमित्यत आह—**नचैवमिति। तत्सिद्धय इति।** राजसूयान्तर्गतसर्वार्थत्वसिद्धय इत्यर्थः। ततश्च नित्यतया पवित्रादिविकृतिष्वपि तदतिदेशः सिध्यति, पूर्वपक्षे त्वभिषेचनीयविकृतौ नित्योऽतिदेशः, सन्निधिपक्षे प्रकरणपक्षे च तदङ्गत्वानपायात्। पवित्रादिविकृतिषु त्वनित्योऽतिदेशः। सन्निधिपक्षे तदङ्गत्वाभावादिति फलभेद इति भावः। (P. 799-2)

**क्षत्रस्य धृतिरिष्टिरिति।** यद्यपि 'अग्निष्टोमं तत आहरती'ति श्रवणात्, 'क्षत्राणां धृतिरग्निष्टोमः तेनान्ततो यजेत। सन्तिष्ठते राजसूय' इत्यापस्तम्बवचनाच्च, क्षत्रस्य धृतिस्सोमयाग इत्यवगम्यते, तथापि, शाखान्तरं कल्पसूत्रान्तरं च दृष्ट्वा तथोक्तमिति ध्येयम्। **'अविच्छिन्ने कथंभावे'** इति श्लोकार्थमाह—**प्रधानस्येति। प्रकरणानुत्थाने हेतुरिति।** स्ववाक्योपात्तैरातिदेशिकैः पदार्थैर्निराकाङ्क्षस्य स्वतः प्रकरणानुत्थानादित्यर्थः। राजसूयरूपस्यापि विदेवनादिसन्निधिः अविशिष्ट इति **परिहारटीका**भिप्रायमाह—**सर्वव्यापकत्वादिति।** (P. 799-8)

अत्र यद्यपि राजसूयमहाप्रकरणादपि प्रबलेनाभिषेचनीयावान्तरप्रकरणेन विदेवनादेरभिषेचनीयाङ्गत्वमेवेति नेदं क्रमप्रकरणविरोधोदाहरणम्। तथापि 'नोदाहरणमादर्तव्य'मिति मनसि निधाय यत्किञ्चिदुदाहृतमिति ध्येयम्। **यौगिकशब्देनेति।** विशेषणविशेष्यतत्सम्बन्धापेक्षया विशिष्टं अतिरिक्तं तदेव यौगिकशब्देन बोध्यते लाघवात्। तद्बलाच्च सम्बन्धोऽनुमेय इत्यर्थः। विशिष्टमतिरिक्तं न भवतीति पक्षेऽप्याह—**अपि चेति। प्रकृतमात्रार्थत्वमिति।** (P. 800 7) प्रकृतसकलार्थत्वमित्यर्थः। दुर्बलेन प्रबलस्य सङ्कोचोऽपि न युक्त इति शङ्कते—**नन्विति।** प्रकरणानुमतत्वान्न दोष इति परिहारतात्पर्यमाह—**पदार्थशक्तीति।**

(P. 801-2) **असन्निहितयोरिति।** पदार्थयोः सम्बन्धे सन्निधिरावश्यक इति प्रागुक्तत्वादिति भावः। प्रवृत्तिदशायामपि क्रमसमाख्ययोः प्रत्यक्षत्वतदभावाभ्यामस्ति

---

१. कल्पतरौ 'गोदोहनादेर्नाङ्गता' इति शोधनीयम्। टीकायां—'प्रमाणाभावे प्रातिभत्वात्' इति पाठः।

२. कल्पतरौ पूर्वं 'क्रमेण मन्त्राः' इति, 'आमावास्यिकसांनाय्ये'ति च पाठः। टीकायां 'समाख्यया श्रुत्येव' इति पाठः।

वैषम्यमिति दर्शयितुं, क्रमस्य **वैदिकत्वेन प्रत्यक्षत्वमुक्तम्** । तदुपपादयति— **पौरोडाशिकेति** । ननु सान्नाय्यपात्रशुन्धनस्य स्मारका[काङ्क्षा] क्लृप्तैवेति कथं कल्प्यत्वमित्याशंक्य, सामान्यतः स्मारकमात्राकाङ्क्षाक्लृप्तावपि मन्त्ररूप-स्मारकविशेषाकाङ्क्षा कल्प्यैवेत्याह—**सान्नाय्यपात्रेति । एवमुत्तरत्रापीति** । एकवाक्यतासामर्थ्यादिकल्पनमपि तत्तद्विशेषविषयतया योज्यमित्यर्थः । **अन्तरय** इत्यस्य व्याख्यानं **व्यवधानमिति** । सामर्थ्यस्य क्रमविरोधं दर्शयितुं मन्त्रयोरर्थ-माह—**उपह्वयस्वेत्यादिना** । . 801-3

**अथैष प्रतीतिविरोधो न च वस्तुविरोध इति टीकाखण्डं** हेतु-प्रदर्शनेन व्याचष्टे—**विनियुक्तेत्यादिना** । **अन्यशेषस्येति** । अन्यशेषत्वेना-वगम्यमानस्यान्यशेषत्वावगमविरोधात् इत्यर्थः । अङ्गीकृतस्य प्रतीतिविरोधस्य वा कथं समाधानमित्याशङ्क्य, शङ्कितुरभिमतं परिहारमाह—**तर्ह्यधिष्ठानेति** । 'पुरोडाशकपालेन तुषानुपवपती'त्यादाविवेति भावः । P. 801-17

यद्यपि 'पुरोडाशकपालेने'त्यत्र पुरोडाशार्थत्वेन कपालस्यावगम्यमान-त्वाद्युक्ता तत्राधिष्ठानलक्षणा बृहस्पतिसवस्य तु स्वरूपेणैवावगम्यमानतया अन्य-शेषत्वेनानवगमान्नाधिष्ठानलक्षणाप्रसक्तिः, तथापि, बृहस्पतिसवस्य शब्दतोऽन्य-शेषत्वेनानवगमेऽपि प्रसिद्धस्यैव तस्य वाजपेयाङ्गताबोधनाभ्युपगमात् फलान्तर-शेषत्वेनावगम्यमानस्य च वाजपेयशेषताबोधनं शुद्धरूपोपस्थितिमन्तरा न संभव-तीति तदभिप्रायेण अधिष्ठानलक्षणोक्तिः ।

**विद्यायामिति** । सन्निधिना मन्त्रस्य प्रकरणादिकल्पनया विद्याविनियोग-कल्पनावसरे अवर्जनीयतया सामर्थ्यबलेन प्रवर्ग्यशेषत्वेनावगतस्यापि शुद्धरूपोप-स्थितिकल्पनया विद्यायामपि विनियोग इति तुल्यमित्यर्थः । **एकस्मिन् प्रयोगे इति** । यत्र बाधकं नास्ति तत्राधिष्ठानलक्षणया दुर्बलेनापि विनियोग इष्यते । ऐन्द्रीस्थले त्वेकस्मिन्नेव प्रयोग आवृत्तिरापततीति न तत्र दुर्बलेन विनियोग इत्यर्थः । P. 802-1

ननु प्रकरणान्तरन्यायेन वाजपेयाङ्गस्य बृहस्पतिसवस्य प्रसिद्धबृहस्पति-सवादन्यत्वेन फलान्तरशेषत्वेनानवगमात् किमर्थमधिष्ठानलक्षणेत्यत आह—

---

१. टीकायां 'वृद्धैः' इत्यस्य वार्तिककारैरित्यर्थः । 'लिङ्गतोऽनुज्ञापनमन्त्रो नानु-ज्ञायाम्' इति, 'विनियोगं प्रति एकान्तरितेन' इति च पाठः ।

P. 802-2 **बृहस्पतिसवेति**। **अस्याभ्यधिकाशङ्केति टीकापाठं** दृष्ट्वा व्याचष्टे— **अस्येति**। ननु पूर्वतन्त्रे श्रुत्यादिभिः लिङ्गादीनां यो बाध उक्तः सः वस्तु-परिच्छेदकत्वाभावात्मक एव, प्रथमप्रवृत्तेन प्रमाणेन विनियोगे परिच्छिन्ने चरम-प्रवृत्तस्य न विनियोगपरिच्छेदकत्वमित्येवंरूपस्याप्राप्तबाधस्यैव **तृतीये चिन्ति-तत्वादिति** शङ्कते—**यद्यपीति**। **तथापीति**। अत्रत्यानां मन्त्रकर्मणां श्रुतिलिङ्गा-धिकरणविषयत्वमेव नास्ति। तत्र हि प्रबलप्रमाणेन शेषस्य निराकांक्षत्वेऽपि शेष्यन्तरस्यानुष्ठेयस्य साकांक्षत्वेनान्यतराकांक्षावशेन विनियुक्तस्याप्यस्तु विनि-योग इति शङ्का वार्यते। न चेह तथा शंका संभवति। अन्यतराकांक्षाया अप्य-भावादित्यर्थः।

न च मन्त्रकर्मणां तदधिकरणविषयत्वाभावेऽपि साकांक्षस्थलेऽपि लिङ्गा-दीनां श्रुत्यादिभिर्बाधे निराकाङ्क्षस्थले कैमुतिकन्यायेनैव बाधः सिद्ध इति व्यर्थमिदमधिकरणमिति वाच्यम्। विद्याङ्गत्वाभावे विद्यासन्निध्याम्नानं व्यर्थं स्यादिति तत्सार्थक्याय तत्रापि विनियोग इति शंकायां, विद्यासंनिध्याम्नानस्या-रण्यकत्वप्राप्त्यर्थतया अन्यथासिद्धत्वात् न तद्बलाद्विनियोगकल्पनं इति तन्नि-रासार्थत्वेनास्याधिकरणस्यावश्यकत्वादिति भावः॥

**अपिचशब्दस्य भाष्यगतस्य** स्वतन्त्रयुक्तिपरत्वाभावे **टीकायां** P. 803-3 हेतुरुक्तः **परस्परापेक्षत्वादिति**, तं विशदयति—**भाष्य इत्यादिना**। **तुल्यार्थ-योगनिबन्धनेति**। 'तुल्यार्थैरतुलोपमाभ्या'मिति सूत्रविहितेयं षष्ठीत्यर्थः।

यजेतेत्यादिसमानपदश्रुतौ प्रकृतिप्रत्यययोरन्योन्यापेक्षत्वात् अव्याप्ति-रित्यत उक्तम्—**पदेऽन्यस्मिन्निति**। तथा च प्रकृतिप्रत्यययोः परस्परा-पेक्षत्वेऽपि पदान्तरनिरपेक्षस्वार्थाभिधायकशब्दत्वस्य **श्रुतिलक्षणस्य** समानपद-श्रुतावपि सत्वान्नाव्याप्तिरिति भावः। मन्त्रगतसामर्थ्यवत् स्रुवादिगतद्रवद्रव्याद्यव-दानसामर्थ्यमपि शेषशेषिभावव्यवस्थाहेतुत्वाल्लिङ्गमिति तत्साधारण्याय **भाक्तगते-त्युक्तम्**। **समानदेशत्वमिति**। समानत्वं च देशस्य यथासंख्याम्नानेन P. 803-5 प्रथमद्वितीयत्वादिना वा, समीपदेशाम्नानेन वेत्युभयथेति भावः। **लक्ष्म** लक्षणम्।

---

१. टीकायां 'अस्त्यभ्यधिका शङ्का' इति, 'अस्याभ्यधिका शङ्का' इति च पाठद्वयमिति ज्ञायते। टीकायां 'नेह लिङ्गविरोधेन' इति पाठः।

२. कल्पतरौ श्लोके 'लक्ष्मोक्तं' इति, 'स्रुवत्' इति च पाठः।

'सर्वं प्रविध्ये'त्यादिश्रुतिं व्याचष्टे—**अभिचारेति** । 'श्वेताश्वो हरित- P. 803 6
नीलोंऽसी'ति श्रुतिं व्याचष्टे—'**हरिरिन्द्रनील**' **इति** । 'शं नो मित्र' इति श्रुत्यर्थमाह—'**मित्र' इति** 'ब्रह्म वा अग्निष्टोम' इत्यादिश्रुतिं व्याचष्टे—**अग्निष्टोम इति** । 'भूः प्रपद्येऽमुनामुनामुने'ति मन्त्रार्थं दर्शयति—**पुत्रस्येति** । 'अन्तरिक्षोदरः कोश' इत्यादिखण्डे 'स एष कोशो वसुधान' इत्यादिना कर्मफलरूपवसुनिधानार्थपेटिकात्वेन त्रैलोक्यं परिकल्प्योपासनमुक्तमित्यर्थः । **त्रिर्नाम गृह्णातीति** । अमुनामुनामुनेति पाठादिति भावः ॥

॥ इति **वेधाद्यधिकरणम्** ॥

—.—

## ॥ अथ हान्यधिकरणम् ॥

### सू०॥ हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्स्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

पूर्वाधिकरणेन दृष्टान्तसङ्गतिमाह—**यथेति** । **तदन्तरेण तदिति** । P. 804-7
कुतश्चित् हीनस्य क्वचिदवस्थानावश्यंभावेन उपायनमन्तरेण हानानुपपत्तेरित्यर्थः । **कर्तृभेदकथनं त्विति** टीकार्थमाह—**कर्तृभेद इति** । **अनावश्यकत्वे** । हानस्योपायननैयत्याभावे, न प्रयोजक इत्यर्थः । यद्येन भिन्नकर्तृकं तत्तेनानियतमिति व्याप्तेः व्यभिचारमाह—**परकर्तृकेति** ।

हानं द्विविधं, विलय(न)रूपं विभागरूपं चेति । तत्राद्यस्योपायननैयत्याभावेऽपि द्वितीयस्य तदस्तीति परिहरति—**तत्राहेति** । **तत्कृतो विशेष इति** । P. 805-3
हानोपायनशब्दसन्निधिकृतो हानोपायनशब्दयोरेकदेशस्थत्वलक्षणो विशेषो(न)-

---

१. अत्र टीकायां—'न पुनरनवश्यंभावस्य प्रयोजक'मिति पाठः । अत्राधिकरणे भाष्ये 'तथा आथर्वणिकानां—तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति । इति दृश्यते । 'तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति' (मुण्ड. ३-१-३) इति' शोधनीयम् ।

२. कल्पतरौ 'न केवलमश्वरोमराहुदृष्टान्तात्' इति पाठः ।

३. आदर्शकोशे 'एकदेश' इत्यनन्तरं 'स्थत्वलक्षणः' इत्यतः प्राक् कियानप्यक्षरराशिः त्रुटित इति सूचना दत्ता । कोऽयमक्षरराशिरिति न ज्ञायते ।

[हान]श्रवणेन बुद्धिस्थो निर्गुणविद्यायामप्युपायनं सन्निधापयतीत्यर्थः । उक्तम-
P 805 6 भिप्रायं प्रकटयन्नुत्तरटीकामवतारयति—**यद्यश्चेति । श्रुतहानेनापीति ।**
विद्येयं प्रशस्ता, यतो बन्धकं कर्मापिप्रहीणं भवतीति श्रुतहानमात्रेणापि
स्तुतेरुपपत्तेरित्यर्थः । **प्रमाणसिद्धस्येति** । अर्थापत्तिप्रमाणसिद्धस्येत्यर्थः ।
**आशंक्याहेति । यद्यपीत्यादिना** आशंक्य **तथापीत्यादिना** परिहार-
माहेत्यर्थः ।

**सुकृतादिस्वरूपपर इति** । तथा च, सुकृतदुष्कृतयोरन्यदीययोः कथं
अन्यत्र स्वरूपेणावस्थानमिति नाभिनिवेष्टव्यम् । फलद्वारेणावस्थानसंभवादिति
**भाष्यार्थ** इति भावः । प्रसङ्गात् **पूर्वभाष्यस्याप्यर्थं** दर्शयति—**स्तुत्यर्थत्वाच्चेति**
**भाष्यस्येति । इतिशब्दोऽध्याहर्तव्य इति** । तथा च, **सञ्चाराभिप्राय**मित्यत्र
मध्यमपदलोपी समास इति भावः। **यद्यपि स नोपास्य इत्यर्थ इति । सः**
परत्र सञ्चाररूपो गुणो **यद्यपि नोपास्यत** इति न प्रकरणे सङ्गतस्तद्विचारः,
तथापि विद्यागुणोपसंहारप्रसङ्गतः स विचारित इति नासङ्गतिरित्यर्थ इति भावः ।

P. 806-1 **आच्छन्द इति** पदच्छेदे हेतुमाह—**कुशशब्दो हीति । तदनुरो-**
**धेनेति** । इदमुपलक्षणम् । **शाट्यायनशाखायां** 'औदुम्बराः कुशा' इति
पुंलिङ्गनिर्देशात् तदनुरोधेनेत्यपि द्रष्टव्यम् । **समिध इति** । उद्गातॄणां प्रस्ताव-
कर्मणि स्तोत्रसंख्यागणनार्थाः शलाकाविशेषा इत्यर्थः । वाचस्पतिविषये
कैश्चिदुक्तं दूषणमनुवदति—**समिद्वाचीति । कुशसम्बन्धादिति** । कुशेन
साकमेककर्मसम्बन्धादित्यर्थः । **यदि तु कस्यांचिदिति । औदुम्बर्य इति**
भाष्यप्रयोगानुमितायामित्यर्थः । **छान्दस इति** । इदमुपलक्षणम् । 'कुशा वा-
P. 806-6 नस्पत्याः स्थ ता मा पाते'ति तच्छब्दप्रयोगोऽपीत्यपि द्रष्टव्यम् । **पदवाक्येति** ।
**पदशब्देन** पदस्वरूपं पुरस्कृत्य प्रवृत्तं व्याकरणकोशादिकमुच्यते । **वाक्य-**
**शब्देन** पूर्वोत्तरमीमांसे । **प्रमाणशब्देन** न्यायवैशेषिकसांख्यादिकमुच्यत इति
विवेकः ।

---

१. प्रकटार्थविवरणकारैः । 'औदुंबर्यः कुशा इति । समिद्वाचिकुशाशब्दस्य स्त्रीलिङ्गत्वापरिज्ञानात् छन्द एव आच्छन्द इति पदं चिच्छेद वाचस्पतिः' इति प्रकटार्थ-विवरणे उक्तम् ।

वाक्यस्येति । 'नाध्वर्यु'रिति वाक्यस्येत्यर्थः । पर्युदासाधिकरणमनुक्रान्तं, आचार्यैरपि तदङ्गीकृत्यैव व्याख्यायते । इदमयुक्तं, यथाश्रुतभाष्यस्यैव युक्तत्वात् । न च नदीक्षिताधिकरणविषये प्रतिषेधेऽपि न विकल्पप्रसक्तिः । निषेध्यो होमः पुरुषार्थः । तन्निषेधश्च क्रत्वर्थ इति विषयभेदात् । सूत्रं तु कृत्वाचिन्तया । प्रतिषेधस्य विकल्पावहत्वात्तदपेक्षया ज्योतिष्टोमप्रकरणपठितस्यापि नदीक्षितवाक्यस्य प्रदेशान्तरस्थाग्निहोत्रादिविध्येकवाक्यतया अदीक्षितोऽग्निहोत्रादि कुर्यादित्याश्रयणेन, प्रदेशान्तरस्थानेकवाक्यशेषभावादपि पापीयान् विकल्प इति न्यायव्युत्पादनार्थमिति वाच्यम् । क्रत्वर्थपुरुषार्थतया विधिप्रतिषेधयोर्विषयभेदेऽपि होमानुष्ठाने सोमयागवैकल्यं, तदननुष्ठाने यावज्जीवाग्निहोत्रसंकल्पवैकल्यमित्यन्यतरवैकल्याभ्युपगमेनान्यतरसाकल्यार्थमन्यतरस्यैवाश्रयणीय — तया विकल्पस्यावर्जनीयत्वात् ।

P. 806.8

किञ्च चोदकप्राप्तक्रत्वर्थहोमप्रतिषेधपक्षे प्रत्यक्षविधिविहित[क्रत्वर्थ]होमप्रतिषेधपक्षे च दुरपह्नवो विकल्पः । यदि च विकल्पप्रसक्त्यभावेऽपि प्रदेशान्तरस्थवाक्यशेषभावेन तदन्वयादपि विकल्पः पापीयानिति न्यायव्युत्पादनार्थं नदीक्षिताधिकरणम्, तदा सुतरां तदधिकरणसूत्रोदाहरणं प्रकृतोपयोगि । प्रदेशान्तरस्थानां वाक्यानां प्रदेशान्तरस्थवाक्यशेषभाव एव युक्तः, अन्यथा विकल्पः स्यादित्यस्यैव प्रकृततया अस्यैव सूत्रस्य तदनुगुणत्वात् । तस्माट्टीका तद्व्याख्यानं चेति द्वयमप्यसङ्गत[मित्याहुः](मिति) ।

तच्चिन्त्यम् । 'दीक्षितो न जुहोती'त्यस्य प्रतिषेधत्वेऽपि विषयभेदेन विकल्पाप्रसङ्गात् । न च अग्निहोत्रादिहोमाननुष्ठाने यावज्जीवसङ्कल्पवैकल्यं, तस्याशास्त्रीयत्वात् । यदा यः प्रयोगः प्रसक्तः, तदा तत्राधिकारेऽपि भविष्यत्प्रयोगेष्वनधिकारेण तथा सङ्कल्पायोगात् । न च यावज्जीवविधिविरोधः, अवि-

---

१. कल्पतरौ 'तदेतदिति' इति प्रतीकधारणानुरोधेन 'तदेतदष्टदोषदुष्टे'ति टीकावाक्यं शोधनीयम् । टीकायामेव 'ततो नानुयाजेषु' इति च शोधनीयम् ।

२. अत्र कश्चन ग्रन्थः आभोगे कोशेषु त्रुटित इति ज्ञायते अनन्वयात् । स च इत्थमूह्यते—'पर्युदासाधिकरणविषयमाहेति । अत्र परिमलकृतः—भाष्यकारैः नदीक्षिताधिकरणसिद्धान्तसूत्रं पठितम् । टीकाकारैः पुनः, भाष्यकारैः पर्युदासाधिकरणसिद्धान्तसूत्रमत्र पठितमापाद्य' इति ।

शेषप्रवृत्ताया यावज्जीवश्रुतेः 'सायं जुहोती'त्यादिविधिभिरिव, 'दीक्षितो न जुहोति' इति निषेधेनापि स्वारस्यभङ्गे बाधकाभावात् ।

अत एव 'ऋतौ भार्यामुपेयात् अगच्छन् भ्रूणहा भवे'दित्यवश्यकर्तव्यस्यापि ऋतुगमनस्य 'न स्त्रियमुपेयात्' इति निषेधेन क्रतुमध्ये त्याग एव । न च तत्र विधिविरोधो न वा विकल्प इति, प्रकृतेऽपि न विधिविरोधो न वा विकल्पः । न च क्रत्वर्थहोमविषया विकल्पप्रसक्तिः । अविशेषप्रवृत्तस्य निषेधस्य 'न केसरिणो ददाती'त्यादेर्लौकिकाश्वदानवद्विकल्पानापादकविषयलाभे तदापादकं-क्रत्वङ्गविषयत्वायोगेन तेषामपि प्रतिषेध इति पक्षस्या (भ्युच्चयत्वात्) [युक्तत्वात्] ।

यदि चेत्यादिकमप्ययुक्तमेव । श्रुत्यन्तर(गतं) [कृतं] विशेषं श्रुत्यन्तरे अनभ्युपगच्छतः सर्वत्र विकल्पः स्यात् । स च सत्यां गतावन्याय्यः । तदुक्तमिति भाष्यपर्यालोचनया श्रुत्योरेकवाक्यत्वानभ्युपगमे वस्तुतो विकल्पः प्रसज्यत इत्यत्रैवार्थे सूत्रमुदाहृतमित्यवगमेन, वस्तुतो विकल्पप्रसक्त्यभावेऽपि कृत्वा चिन्तया तत्प्रसक्तिसंपादनेन न्यायव्युत्पादनार्थं सूत्रोदाहरणायोगात् ।

प्रकृतोपयोगोऽप्यसिद्ध एव । प्रदेशान्तरस्थानां वाक्यानां प्रदेशान्तरस्थ-वाक्यशेषभावो हि प्रकृतः । न च नदीक्षितवाक्ये तदस्ति । सिद्धान्तेऽपि तस्य प्रतिषेधतया पर्युदासत्वाभावेन प्रदेशान्तरस्थवाक्यशेषत्वाभावात् । प्रतिषेधत्वे-ऽपि क्रत्वर्थपुरुषार्थतया विषयभेदे सति न विकल्प इति न्यायस्यैवात्र व्युत्पाद्य-त्वात् । सूत्रभाष्ययोः पर्युदासत्वकीर्तनस्य फलतः पर्युदासाभिप्रायत्वात् । एतच्च नदीक्षिताधिकरणटुप्टीकातन्त्ररत्नयोः स्पष्टम् । तस्मात्सत्यां गतौ विकल्पो न न्याय्य इति पूर्ववाक्योपक्षिप्तेऽर्थे नेदं सूत्रमुदाहरणार्हमिति पर्युदासाधिकरणसिद्धान्तसूत्रमर्थतः पठितमित्युक्तम् टीकायामिति, तद-नुरोधेन पर्युदासाधिकरणविषयमाहेति युक्तमेवोक्तमिति सर्वमनवद्यम् ।

---

१. अत्र सूत्रे 'तदुक्त'मिति भागेन पर्युदासाधिकरणसिद्धान्तसूत्रमुदाहृतमिति टीकाकाराभिप्रायमनुसृत्यैव श्रीकण्ठाचार्येण स्वीयभाष्येऽपि तथैव व्याख्यातम् । प्रायशः श्रीकण्ठाचार्यप्रदर्शितमेव विशिष्टाद्वैतस्थापनमार्गमनुसरता स्वानभिमतशिवपरत्वस्थाप-नांशमात्रं परित्यज्य तत्स्थाने विष्णुपरत्वं व्यवस्थापयता रामानुजाचार्येणापि श्रीकण्ठानुसृत इति कृत्वा टीकोक्त एवार्थः प्रदर्शितः । श्रीकण्ठोक्त एवार्थः प्रायशः रामानुजाचार्येणाप्युक्त इति मया ग्रन्थान्तरे सोपपत्तिकं प्रदर्शितम् । एतेन केषांचित् रामानुजमार्गानुयायी श्री कण्ठ इति वादः परास्तः ॥

'एष वै सप्तदश' इति श्रुतेरभिप्रायमाह—**आश्रावयेतीति**। **विधिप्रतिषेधसन्निपातादिति**। तथा च **टीकायां विधिप्रतिषेधयोरित्यनन्तरं** सन्निपातादिति पदमध्याहर्तव्यमिति भावः। **अत्र कारणमाहेति**। विधिप्रतिषेधयोस्तुल्योपनिपाताभावहेतुमाहेत्यर्थः। **दृष्टपदस्य व्याख्यानम्, प्रत्यक्षेति**। **तर्हीति**। तुल्योपनिपाताभाव इत्यर्थः। ननु वर्तमानसुखे रागबलाद्भविष्यति दुःखे न भीतिरिति कथं **दुःखतो बिभ्यतमिति टीके**त्याशङ्क्याह—**यदिदानीमिति**। **अननुष्ठानमिति**। तथा च **टीकायां वैगुण्येऽपीत्यस्या**ननुष्ठानेऽपीत्यर्थ इति भावः। P. 806-9 P. 807-9

ननु **पूर्वतन्त्रे** दर्शपूर्णमासप्रकरणपठितस्य 'न तौ **पशौ** करोती'त्यस्य **पशौ** आज्यभागप्रतिषेधार्थत्वमेवोक्तम्। न त्वर्थवादत्वम्। तथा च कथं **टीके**त्याशङ्क्य, पूर्वमीमांसकैः पशुप्रकरणे, 'न तौ पशा'विति वाक्यं नास्तीति कृत्वा चिन्तया, पशावाज्यभागाभावस्य प्राप्त्यभावात् तदवलम्बनेन दर्शपूर्णमासयोः स्तुतिः कर्तुं न शक्यत इत्यर्थवादत्वासंभवात् प्रतिषेधत्वमुक्तम्। **टीकाकारैस्तु**—वस्तुगत्या पशुप्रकरणेऽपि 'न तौ पशौ' इति वाक्यस्य सत्त्वेन, तत एव पशावाज्यभागाभावसिद्धेः तदवलम्बनेन स्तुतिसंभवाद्दर्शपूर्णमासप्रकरणगतं वाक्यमर्थवाद इत्युक्तं, इति न कोऽपि दोष इत्याह—**तावाज्यभागावित्यादिना**। **हेतुमाहेति**। स्तुत्यवस्तुसमवेतार्थानुवादित्वाभावं **हेतुमाहेत्यर्थः**। P 808-4

**टीकायां, पक्षेऽपि** [2]**प्रामाण्य**मित्यनन्तरं यथा स्यादित्यध्याहार्यम्। विकल्पस्य तुल्यत्वात् पर्युदासाङ्गीकारो व्यर्थ इति शङ्कते—**ननु पर्युदासेऽपीति**।

'नानुयाजे'ष्वित्यस्य ये यजामहानुयाजसम्बन्धाभावबोधकत्वं किं पर्युदासविधयैव? किं वा पर्युदासस्यापि फलतः प्रतिषेधतामाश्रित्य तद्विधया वा? नाद्यः, तस्य स्वातन्त्र्येण यत्किञ्चिदर्थबोधकत्वाभावात् इत्याशयेनाह—**परिहरतीति**। **टीकायां—पूर्ववाक्यैकदेशेनेति तृतीया** इत्थंभावे। द्वितीयं शङ्कते—**नन्विति**। अनूयाजवर्जितत्वं न येयजामहगतमभिधीयते, येन फलतः प्रतिषेधत्वं स्यात्। P. 809-1

---

१. टीकायां 'अर्थप्राप्तवदिति चेन्न तुल्यहेतुत्वादुभयं' इति पाठः। कल्पतरौ 'विध्योर्हि सामान्यविशेषविषययोर्विशेषविधिर्बलवान्' इति पाठः।

२. 'पक्षेऽपि प्रामाण्यात्' इति टीकायां पाठो दृश्यते।

किं तु यजतिगतम्। तथा च विध्यन्तर्गतमेवेति ततो येयजामहानुयाजसंबन्धा-
P. 809-1 भावासिद्धिरिति परिहरति—**नेत्याहेति** ।

**सिद्धान्तेऽपि साम्यमाहेति**। सिद्धान्त्यभिमतस्यार्थस्य सुकृतदुष्कृत-योरनुपपत्तिसाम्यमाहेत्यर्थः। हानमित्यस्य विवरणमन्यत्र सञ्चार इति। एकत्र लक्षितस्य श्रुत्यन्तरेऽपि लक्षणीयत्वे नास्ति नियामकमिति परिहरति—**तत्राहेति**। नन्वेकत्र लक्षितं श्रुत्यन्तरे न लक्ष्येत, यदि तत्र मुख्यार्थसंभवः। तदसंभवेन लक्षणायामन्यत्र तेन पदेन यल्लक्षितं तत्परित्यागे नास्ति हेतुरिति शङ्कते—**नन्विति**। लक्षणामात्रेणैवोपपत्तौ लक्षितलक्षणाश्रयणमयुक्तम्। अत एव 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयादि'त्यत्र दीक्षणीयाशब्देन तदपूर्वमेव लक्ष्यते। न तु ज्योतिष्टोमापूर्वमिति सिद्धान्त इत्याशयेन परिहरति—**तत्राहेति**।

P. 809-6 **विरुद्धार्थद्वयेति**। अमूर्तत्वविरुद्धेत्यर्थः। उपस्थितत्वात् गुरुभूतमपि हानमेव लक्षणीयम्। न तु स्वफलात्प्रच्यावनं, अनुपस्थितत्वादित्याह—**उपाय-नैसन्निधाविति**। अपि चेत्यादिटीकया विधूननशब्दस्य त्यागे मुख्यत्व-मुक्तम्। तत्र शङ्कते—**ननु चालन इति**।

किं त्यागे गौणत्वं, तत्र शक्तिग्राहकप्रचुरप्रयोगाभावात्, किं वा 'धूञ्क-म्पन' इति गणपाठविरोधादिति विकल्प्य क्रमेण निराकर्तुं **प्राचुर्येणेत्यादि-टीका**। तत्र प्रयोगप्राचुर्यं दर्शयति—**अवधूत इत्यादाविति**। सर्वं त्यक्तव-त्यवधूतशब्दप्रयोगादिति भावः। 'अश्व इव रोमाणी'त्यादिश्रुतिं व्याचष्टे—
P. 809-16 **अश्वो यथेति**। सिद्धत्वमेवाह—**न पुनरिति**।

॥ इति हान्यधिकरणम् ॥

---

१. कल्पतरौ 'तस्या अप्रवृत्तत्वादित्याह' इति पाठः।

२. कल्पतरौ 'अकृतं सिद्धं, न पुनरपूर्वं पुण्योपचयेन साध्यम्। कृतः आत्मा' इति शोधनीयमिति भाति।

## ॥ अथ सांपरायाधिकरणम् ॥

सू०॥ सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥

सू०॥ छन्दत उभयाविरोधात् ॥ २८ ॥

आक्षेपसङ्गतिमाह—**सिद्धं कृत्वेति** । सिद्धान्तं विशदयन्, श्रुत्यर्थौ च पाठक्रमाद्बलीयांसाविति टीकां व्याचष्टे—**अत्र पाठादिति** । [विधूयेति]विधूननस्य ब्रह्मलोकप्राप्त्यपेक्षया प्राक्कालतोच्यत इत्यर्थः । त्यागप्रापणयोः शरीरहेतुकत्वात् नार्धपथे तत्संभव इति शङ्कते—**नन्विति** । अर्धपथे शरीरान्तरसत्त्वात् नासंभवबलाज्जीवदवस्थत्वं हानोपायनयोर्निश्चेतुं शक्यमिति, श्रुतिरेव तत्र मृग्या । सा च नास्तीति परिहरति—**न, एवं श्रुत्यभावादिति** । ताण्डिश्रुतौ यमादिसाहित्यं नोक्तमित्यत आह—**कौषीतकीति** । P. 810 1

**ग्रन्थच्छेद इति** । तथा च जीवत[२] एवेत्यस्य पूर्वेणान्वयो, नोत्तरेणेति भावः । ननु सर्वसमस्य विदुषः कथं केषुचिद्दुष्कृतप्रापणसंकल्प इत्यतः प्राप्तसङ्कल्प एवात्र विवक्षित इत्याह—**विदुषि य इति** । नन्वन्यदीययोः सुकृतदुष्कृतयोः अन्यत्र संक्रमे कथमियं श्रुतिः प्रमाणमित्यत आह—**अ[३]न्यकृतादपीति** । **गत[४] इति** । अतीते अधिकरण इत्यर्थः । P. 811-2 P. 811-7

---

१. हानसंनिधावुपायनोपसंहारः विद्यायाः कर्मक्षयहेतुत्वनिबन्धन इति कथमवगम्यत इति चेत् उच्यते—'स्तुतिप्रकर्षलाभाय हानसंनिधावुपायनोपसंहारः । इत्थं महाभागा विद्या, यत्सामर्थ्यादेव कर्मक्षयः उपायनं च ' इति पूर्वमुक्तत्वात् । इत्यवधेयम् । टीकायां ' विरजानदीमनोऽतिगमन'मिति पाठः ।

२. अत्र ग्रन्थच्छेदाकथने 'जीवत एव समर्थस्य' इत्यन्वयभ्रान्तिरुद्भवेदिति भावः । टीकायां—' भवितुमर्हति शङ्कापदेभ्यः' इत्यत्र ' 'शङ्कापदेभ्यः' इत्यधिकं प्रामादिकम् ।

३. अत्र कल्पतरौ भास्करोदाहृतश्रुतौ ' परिपिपृत ' इति पाठः । कल्पतरौ तद्विवरणे ' पापात् परिपिपृत ' इति पाठः । इति परिमलात् ज्ञायते । ' प्रियेषु स्वेषु ' इति स्मृतिपाठः ।

४. प्रतीकोऽयं मूले न दृश्यते ।

P. 811-12 जीवत्येवेति । अस्य शुभं भवत्विति सङ्कल्पस्य जीवद्विषयत्वनियमादिति भावः। प्रीत्यप्रीतीति। स्नेहद्वेषयोरेव शुभाशुभसंकल्प[हेतु]तया तयोः प्रायणानन्तरमपि संभवेन तेनापि प्रकारेण सुकृतादिसंक्रमोपपत्तेः न संक्रमणस्य संकल्पाधीनत्वसाधनेन जीवदवस्थायामेव कर्महानमिति सिध्यतीत्यर्थः ।

॥ इति सांपरायाधिकरणम् ॥

## ॥ अथ गतेरर्थवत्त्वाधिकरणम् ॥

सू०॥ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥

सू०॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

व्यवहिताधिकरणेन सङ्गतिकथने बीजं दर्शयन्नाह—विद्योदयेति । यदि परं प्रारब्धकर्मक्षयाय शरीरपातापेक्षास्ति, अस्तु । तथापि न देवयानेन पथा किञ्चित्प्रयोजनमस्तीति टीकया—कथं तृतीयकल्पनिराकरणमित्यतस्तद्दर्शयति—भोगादिति । भोगप्रयोजकाभावादिति । कर्मैव भोगजनकमित्यभिमानः । P. 813-1

॥ [1]इति गतेरर्थवत्त्वाधिकरणम् ॥

## ॥ अथ अनियमाधिकरणम् ॥

सू०॥ अनियमः स(र्वे)र्वासामविरोधः शब्दानुमानाभ्याम्॥ ३१॥

पूर्वपक्षानुन्मेषं शङ्कते—नन्विति । अप्रवृत्तत्वान्न लिङ्गस्य प्रकरणबाधकत्वमित्याह—लिङ्गस्येति । ततोऽतिप्रसङ्ग इति । दर्शपूर्णमासधर्माणां P. 813-7

१. अस्मिन्नधिकरणे 'अत्र न्यायमप्याह—भ्रमनिबन्धन इति । इति मुद्रापणीये कल्पतरुवाक्ये 'अन्यायमप्याह' इति अन्यायेन मुद्रितम्। अपरमप्याश्चर्यमत्र । अस्मिन्नधिकरणे परिमलं नोपलब्धम् त्रुटितं वा, ग्रन्थकारेणैव न कृतं वा, न ज्ञायते । सांपरायाधिकरणशेषपरिमलवाक्यानि एतदधिकरणसंबन्धिपरिमलग्रन्थत्वेन मुद्रितानि । एतादृशैर्ग्रन्थशोधकैस्संस्कृतग्रन्थस्यैव महिमा तिरोधीयते।

ज्योतिष्टोमे, ज्योतिष्टोमधर्माणां दर्शपूर्णमासयोश्च प्रसङ्ग इत्यर्थः। **न चेत्यादि-टीकोक्त**मतिप्रसङ्गान्तरं विशदयन्नवतारयति—**प्रकरणस्येति**। दर्वीहोमस्वरूपं प्रदर्शयन् तस्याधर्मकत्वमुपपादयति—**यदेकयेत्यादिना**। **उभयत्रापीति**। नारिष्ठहोमानामपि बर्हिराज्यादिकमङ्गमस्ति। तस्य साङ्गप्रधानार्थत्वादिति भावः। एवमधर्मकत्वं प्रदर्श्य तदसिद्धिरूपमतिप्रसङ्गान्तरं विशदयति—**तदेवमिति**। P. 813-8

ननु सत्यमतिप्रसङ्गः इति, तथापि स न दोषाय, प्रमाणायातत्वात्, प्रकरणमनादृत्य श्रुत्यादिभिरविशेषेणैव शेषशेषिभावबोधनादिति शङ्कते—**नन्विति**। प्रकरणेन विना श्रुत्यादीनां शेषशेषिभावबोधकत्वमसिद्धमिति परिहरति—**अत आहेति**। अत्र **टीकायां**—प्रकरणाम्नानस्थले प्रकरणेन सामान्यसम्बन्धे सति श्रुत्यादीनां विनियोजकत्वमिति **न चैवमित्यादिना** प्रदर्श्य, प्रकरणा[ना]म्नानस्थलेऽपि विनियोगनिर्वाहाय प्रकरणं कल्प्यमिति दर्शयितुं **यत्रापीत्यादिटीकेति** भाति। तदनुपपन्नम्। अनारभ्याधीतस्थले प्रकरणकल्पनानभ्युपगमात्। न हि अनारभ्याधीतानां 'यदाहवनीये जुहोती'-त्यादीनां प्रकरणेन क्रतुसम्बन्ध इति कश्चिदभ्युपैतीत्यतो भङ्ग्यन्तरेण व्याचष्टे—**श्रुत्यादयो हीत्यादिना**। P. 814-2

**सामान्येनेति**। लौकिकवैदिकसाधारण्येनेत्यर्थः। **इतरथेति**। व्रीहीणां प्रकरणेन दर्शपूर्णमाससम्बन्धे सति तदीयव्रीह्युद्देशेनैव प्रोक्षणं विधातव्यं, लौकिक-साधारणव्रीहिमात्रोद्देशेन तद्विधाने वैयर्थ्यापातादित्यर्थः। **विशेषत इति**। गार्हपत्यस्य वैदिकतया तत्स्वरूपविशेषोद्देशेन विधानसंभवादुद्देश्यविशेषसमर्पणाय प्रकरणानपेक्षणेऽपि विहितस्योपस्थानस्यानर्थक्यपरिहाराय प्रकरणेन प्रधानार्थत्वं कल्पनीयमिति भावः। **तस्मादिति टीकां** व्याचष्टे—**यत्रेति**।

ननु श्रुत्यादिकं स्वविषयस्यापूर्वसम्बन्धबोधनार्थं प्रकरणमपेक्षते, यदि न विरोधः। सति तु विरोधे तदनादृत्य प्रकारान्तरमेव सामान्यसम्बन्धायान्वेषते। अत एव पूषदेवताके यागे पूषानुमन्त्रणस्योत्कर्षः। ततश्च तत्र लिङ्गेन प्रकरण-बाधवदिह वाक्येन प्रकरणबाधोऽस्तु इत्याशयेनाशङ्कते—**प्रकरणस्येति**। वाक्यमन्यविषयमित्याशयेन परिहरति—**आशंक्याहेति**। P. 814-6

---

१. 'दश ते तनुवो यज्ञ यज्ञियाः' इत्यादिमन्त्रैराज्याहुतयो नारिष्ठहोमाः। इति जैमिनीयन्यायमालाविस्तरे।

P. 814-8 **प्रकरणबाधयेति**। सामान्यसम्बन्धोऽपि वाक्यबलादेव सिध्यतीति न तदर्थं वाक्यविरुद्धप्रमाणादर इति भावः। ननु सत्यशब्दस्य ब्रह्मपरत्वसाधनं प्रकृतम्। तत्र कथं **विद्यासाहचर्याच्चेति** टीकासङ्गतिरित्यत आह—**न केवल-मिति**। **अपि** [2]**त्विति**। पञ्चाग्निविद्यासंनिधानात् 'सत्यमुपासत' इति सत्यविद्यापरं, न सत्यपरिशीलनपरम्। ततश्च विद्यावगतिबलाद्द्वयस्य ब्रह्मत्व-सिद्धिरिति भावः।

P. 815-8 **उभयत्रानुचिन्तनमिति**। यद्यपि सर्वास्वपि सगुणब्रह्मविद्यासु मार्ग-चिन्तनमस्ति। तत्क्रतुन्यायेन प्राप्यत्वेन श्रुतस्य चिन्तनीयत्वावश्यंभावात्। सूत्रकृता 'विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्चे'ति सिद्धवन्निर्देशाच्च। तथापि सर्वविद्यासु तच्छेषभूतार्चिरादिगतिमात्रचिन्तनसत्त्वेऽपि, पञ्चाग्निविद्याम्नाताया अर्चिरादिगते'रथ यदु चैवास्मिञ्छव्यं कुर्वन्ती'त्यादिश्रुत्युक्तशव्यकर्मणोऽनपेक्षत्वादिविशेषणान्तरविशिष्टवेषेण चिन्तनार्थमुपकोसलविद्यायां आम्नानं, पञ्चाग्निविद्यायां तु प्राप्त्यर्थमेवाम्नानम्। तस्या अब्रह्मविद्यात्वेन 'ये चेमेऽरण्य' इति वाक्यतः प्रप्त्यभावात्। अत उभयत्राम्नानस्य स्वरूपेण विशिष्टरूपेण चोभयत्रानुचिन्तनं **भाष्योक्तप्रयोजनमित्यर्थः**।

'विद्यया तदारोहन्ति यत्र कामाः परागता' इति श्रुतिं व्याचष्टे—**यत्र यस्मिन्निति**। 'य एवमेतद्विदु'रित्यादिवाजसनेयिश्रुतेरर्थमाह—**य एत-**P. 815-12 **दिति**। 'अथ य एतौ पन्थाना'वित्यादिश्रुतिं व्याचष्टे—**एतौ पन्थाना-विति**। **दक्षिणोत्तरौ** देवयानपितृयाणौ।

**॥ इति अनियमाधिकरणम् ॥**

---

१. टीकायां 'श्रद्धातपोमात्रनिष्ठस्य' इति पाठः।

२. कल्पतरौ 'दक्षिणमार्गप्राप्तिरस्त्विति' इति, 'ये चामी अरण्ये श्रद्धां' इति च पाठः।

## ॥ अथ यावदधिकाराधिकरणम् ॥

### सू०॥ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥

अस्याधिकरणस्य पूर्वप्रघट्टकेन सङ्गतिमाह—**निर्गुणविद्यायां इत्यादिना**। **ऐश्वर्यविशेषेति**। ब्रह्मलोकगतैश्वर्येत्यर्थः। **ऐश्वर्यफलत्वं वक्तव्यमिति**। निर्गुणविद्याया मुक्तिफलत्वासंभवेन, 'स तत्र पर्येति जक्षत् क्रीडन् रममाण' इत्यादिवाक्यशेषाम्नातमेव फलमाश्रयणीयमित्यर्थः। तदित्यनेन देहपरिग्रहपरित्यागयोः परामर्शायोगादाह—**तदपवर्गेति**। ननु पुनर्देहानुपादानमात्रं नापवर्गः। जीवन्मुक्तस्यापि पुनः पुनः प्रारब्ध[कर्माधीन]देहोपादानसंभवादिति शंकते—**ननु पुनरिति**। भाविदेहस्य प्रारब्धकर्मजन्यत्वासिद्धेः उक्तलक्षणाभावादपि वसिष्ठादीनां नापवर्गसंभव इति परिहाराभिप्रायमाह—**भाविदेहस्येति**। P. 816-1 P. 816-6

**साक्षात्कारो(ह्रियते)**भ्रियत इति पाठं व्याचष्टे—**प्रतिबध्यत इति**। **सौभरिवदिति**। सौभरिर्हि पञ्चाशतं देहान् एकदैव गृहीत्वा मान्धातृदुहितृभिस्सह रेम इति **विष्णुपुराणे** प्रसिद्धम्। क्रमेण देहपरिग्रहस्तु जडभरतादेस्तत्रैव प्रसिद्ध इति पृथक् नोक्तः। पदद्वयं व्याख्याय फलितमर्थमाह—**दृढाभिमानेति**। **(तत्) [अतः] पूरयतीति**। तथा च **भाष्यकोशेषु** केषुचित् **फलदानायेति** पदं प्रक्षिप्तमिति द्रष्टव्यम्।

ननु स्वेच्छया कायान्तरसञ्चारोऽनधिकारिपुरुषस्य योगिनोऽपि (न) संभवतीत्यत आह—**बाधितेति**। ननु 'तत्त्वमसी'त्यत्र भविष्यदर्थकत्वमृतशब्दाध्याहारयोः कथं प्रसक्तिः? कथं वा तयोरशक्यत्वकथनमात्रेण शङ्कायाः परिहार इत्यत P 817-6

---

१. प्रतीकोऽयं मूले न दृश्यते। टीकायां 'तदपवर्गफलत्वे नोपपद्यते' इत्यत्रत्यः तच्छब्दः पूर्वप्रकृतदेहपरिग्रहपरित्यागयोः द्वित्वेन परामर्शायोग्यत्वेन 'श्रूयेते' इति प्रकृतश्रवणपरामर्शपर इति वक्तव्यम्। तदौचित्येन कल्पतरौ 'तत् श्रवणं' इति ग्रन्थः उचितः। आभोगधृतः 'तदपवर्गे'ति' इति प्रतीकः कथमपि नान्वेतीति भाति।

२. कल्पतरौ 'किं त्विदानीं अप्रवृत्तफलकर्म' इति शोधनीयम्।

३. टीकायां सिद्धान्तोपक्रमे 'अपवर्गलक्षणं फलं' इति, पश्चात् 'सेतुभेदेन' इति, 'गृहादिव गृहान्तरं' इति च पाठः।

४. भाष्योक्तं सुलभोपाख्यानं भारते मोक्षधर्मपर्वणि विद्यते।

५. कल्पतरौ 'परित्याज्यते, परित्यक्तृत्वेन क्रियते' इति पाठः।

P. 818-3 आह—**स्वप्रकाशमिति**। 'अथ तत उर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाते'ति श्रुतिं व्याचष्टे—**अथाधिकारिकेति**। **पदादिति**। स्थानादित्यर्थः।

॥ इति यावदधिकाराधिकरणम् ॥

---

## ॥ अथ अक्षरध्यधिकरणम् ॥

### सू०॥ अक्षरधियां त्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

**सङ्गतिमाह—पूर्वत्रेति**। प्रतिषेधत्वमात्रमतिप्रसक्तत्वान्नोपसंहार-प्रयोजकमित्यत आह—**प्रतिषेधानामिति**। प्रपञ्चनस्य विशेषाशङ्कानिराकरणार्थ-P. 819-5 त्वात्, तदुभयं दर्शयति—**अस्यार्थ इत्यादिना**। तर्हि कथं सर्वनिषेध-सिद्धिरित्यत आह—**स्थालीपुलाकवदिति**। पक्वतया निश्चितेन स्थालीगतेनैकेन पुलाकेन तत्सजातीयानां पुलाकान्तराणामिव **किञ्चिन्निषेधेन** तत्सजातीय-निषेधान्तरलक्षणे इत्यर्थः। **आत्मलक्षणतां** आत्मज्ञापकतां **गताः आत्मनः** स्थूलाद्यसंस्पर्शित्वेन **प्रमितिसिद्ध्यर्थं** शाखान्तरश्रुतिनिषेधानामुपसंहार एव। न तु लक्षणा, मानाभावादित्यर्थः।

**श्लोके अविद्या वेति च्छेदः**। **अन्यत्र त्वस्मादिति**। 'अकायमव्रण'मित्यादौ अपरिपूर्णनिषेधात् 'अस्थूल'मित्यादिवाक्यादुपसंहार इत्यर्थः। P. 819-13 सूचकमाह—**प्रधानतन्त्रत्वादिति**। **वारवन्तादिपदवन्तीति**। यद्यपि वार-

---

१. कल्पतरौ 'विलक्षणस्सन् उदेत्य' इति पाठः। टीकायां अन्ते—'अनुभवादपि स्फुटम्। उपपत्तिद्रढिम्नश्च। श्रुतेश्च। श्रुतिर्दर्शिता।' इति, 'कथमनुभवमवद्योतयति' इति च पाठः।

२. कल्पतरौ 'प्रतिषेधानां भ्रमनिवर्तकत्वे'ति पाठः' टीकायां 'शाबरे दत्तमन्त्रोदाहरणान्तरं' इति पाठः।

३. कल्पतरौ 'प्रधानतन्त्रत्वात्' इति, 'गुणमुख्याधिकरण' इति च पाठः। 'वारवन्तीयादेर्वेदसंयोग इति' इति भामतीप्रतीकधारणम्। कल्पतरुश्लोके 'निषेधपरिमेयतः' इति भावप्रधानो निर्देशः। निषेधानां परिमितत्वादित्यर्थः।

४. टीकायां 'अपेक्षितोपायत्वात्मना' इत्यस्य उपायत्वेन रूपेणेत्यर्थः। उपरि 'विनियुज्यमानत्वरूपेण' इति, 'विनियुज्यमानत्वार्थत्वात्' इति, 'प्रयोगरूपेषु चतुर्षु' इति च पाठः।

वन्तीययज्ञायज्ञीययो'रथं न त्वा वारवन्तं' 'यज्ञायज्ञावो अग्नय' इत्यृगध्यूढयो-रिदं संभवति। न तु 'कया नश्चित्रे'त्यृगध्यूढस्य वामदेव्यस्य। तस्य वामदेवदृष्टत्वेनैव वामदेव्यत्वात्। तथापि प्रदर्शनार्थमिदं उक्तम्। बहुवचनं च सामान्तराभिप्रायमिति द्रष्टव्यम्।

**विनियोगविधिस्तु प्रधानमिति टीकायां प्रधानशब्देन सूत्रगत-मुख्यशब्दार्थकथनम्। वेदसंयोगग्रहणस्य फलमाह—वेदसंयोगे इति।** P. 820.1 **चातूरूप्यस्य विधित्वनान्तरीयकत्वं दर्शयति—विधित्वं हीत्यादिना।** विधिस्वरूपस्य वाक्योल्लेख्यरूपाभावादाह—**विध्यर्थस्येति।**

**उत्पत्त्यादिषु मध्य इति।** दर्शपूर्णमासयोः 'दर्शपूर्णमासाभ्यां स्वर्ग-कामो यजेते'त्यनेन अधिकारस्य, प्रयाजादिवाक्यैकवाक्यतापन्नेन तेनैव विनि-योगस्य, 'पौर्णमास्यां पौर्णमास्ये'त्यादिवाक्याभ्यां प्रयोगस्य च, प्राप्तत्वात् 'यदाग्नेयोऽष्टाकपाल' इत्यादिभिरुत्पत्तिरेव तात्पर्येणोल्लिख्यते। नाधिकारादि। यत्र त्वधिकारादेः अन्यतो न प्राप्तिः 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम' इत्यादौ, तत्र चतुष्टयमपि तात्पर्येणोल्लिख्यत इत्यर्थः।

**समीहितार्थेत्यस्य फलपरत्वे, विनियोगवाक्येभ्यश्च तदवगतेरित्य-**सङ्गतं स्यादित्यतो व्याचष्टे—**समीहितशेष इति।** अथ **साधनत्वसंस्पर्शिनः रूपमात्रसंस्पर्शिन इति** विशेषणद्वयसूचितं हेतुद्वयं दर्शयन् **टीकां** व्याचष्टे—**येन वाक्येनेत्यादिना।** होमकर्त्रैव मंत्र उच्चार्य इति नायमस्ति नियम इति P. 820.10 शङ्कते—**यद्यपीति**[1]। दर्वीहोमविषयोऽयं नियम इति परिहरति—**तथापीति**[2]।

॥ इति अक्षरध्यधिकरणम् ॥

---

१. कल्पतरौ 'भवतु साम्नां सामवेदे' इति पाठः।

२. प्रतीकद्वयं कल्पतरौ न दृश्यते। कल्पतरौ शङ्कापरिहारभागद्वयात्मकग्रन्थ-भागः त्रुटित इति ज्ञायते।

## ॥ अथ इयदधिकरणम् ॥

### सू०॥ इयदामननात् ॥ ३४ ॥

**एकत्रेत्यादिटीकाया:** पूर्वाधिकरणवैषम्येण पूर्वपक्षप्रदर्शनार्थत्वं आह—

P. 821-2 **पूर्वत्रेति ।** **प्रपञ्चप्रकारमिति ।** विशेषाशङ्कानिराकरणरूपमित्यर्थ: । **ईजानानां सेतु:** व्यवस्थितफलप्रदानेन मर्यादाधारक: इत्यर्थ: । **उत्पत्ताविति** विशेषणस्य प्रयोजनमाह—**वस्तुप्रतीत्यनन्तरमिति ।** प्रथमप्रतीतिदशायामेव स्वरसतोऽन्यत्वनिश्चये तदनन्तरभाविसंख्याप्रत्यभिज्ञानस्याकिञ्चित्करत्वात् इति भाव: ।

**पिबदेपिबत्समूहिपरमिति टीकायां** परमित्यनन्वितमित्याशंक्य, **परमिति** भिन्नं पदं कैवल्यार्थकमित्याशयेनाह—**पिबदपिबतोरिति ।** समूहलक्षणयैवोपपत्तौ किमर्थं समूहिलक्षणा **टीकायामुक्ते**त्याशङ्क्य, समूहलक्षकस्यापि

P. 822-2 तस्य समूहिपर्यन्तत्वमावश्यकं, अन्यथा द्वित्वाद्यनन्वयापत्तेरित्याशयेनाह—**पिबच्छब्दो हीति ।**

ननु यथोक्तविशेषाशङ्कानिराकरणार्थतया गुहाधिकरणेन पौनरुक्त्यपरिहारे प्रतर्दनाधिकरणेन पौनरुक्त्यं स्यात् । उपक्रमोपसंहारानुरोधेन मध्यवर्तिनयनस्य तत्र व्युत्पादितत्वादित्याशङ्क्य, जीवस्यापि पृष्टत्वेनास्मिन् प्रकरणे जीवब्रह्मणोर्द्वयोरपि प्रतिपाद्यतया कथमेकवाक्यत्वमिति शङ्कायां, 'न जायते म्रियते वे'त्यादिना प्रतिपादितस्य जीवस्य परमात्माभेदप्रदर्शनार्थमनुवादादुपपन्नमेकवाक्यत्वमित्येकवाक्यताप्रसाधनार्थत्वात् न दोष इति वक्तुं **अपि चेत्यादिटीका ।** तत्र

P. 822-3 **त्रिष्वपीति** पदं व्याचष्टे—**मुण्डकेति ।**

॥ इति इयदधिकरणम् ॥

---

१. टीकायां—'पिबदपिबत्समूहिपर'मिति शोधनीयम् ।

## ॥ अथ अन्तरा भूतग्रामाधिकरणम् ॥

सू०॥ अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥

सू०॥ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

**कौषीतकेयेत्यादिविषयप्रदर्शकटीकां** श्रुत्यर्थकथनेन विशदयति—**बृहदारण्यक इत्यादिना**। **एनमित्यस्य** स्वयमर्थकथनं **याज्ञवल्क्यमिति**। P. 822-4
न तु श्रुतिगतमिति ध्येयम्। **उपक्रमे कथितमिति**। आदौ पठितमेकं **ब्राह्मणमित्यर्थः**। **युवेति**। 'जीवति तु वंश्ये युवे'ति **पाणिनिसूत्रेण** वंश्ये पित्रादौ जीवति सति पौत्रप्रभृत्यपत्यं युवसंज्ञं स्यादित्युक्तो **युवेत्यर्थः**। **अपरोक्षमित्यर्थ इति**। तथा च व्यत्ययेन पञ्चमीति भावः।

**सर्वान्तरत्वप्रत्यभिज्ञानाच्चेति**। इदं च वेद्यभेदाद्विद्याभेद इति पूर्वपक्ष्येकदेशिनिराकरणसिद्धान्तकोट्यभिप्रायेण। वेद्याभेदेऽपि अभ्याससामर्थ्याद्विद्याभेद इति प्रधानपूर्वपक्षिनिराकरणसिद्धान्तकोटेस्तु, पुनः श्रवणान्यथासिद्धिर्बीजमिति द्रष्टव्यम्। **इह त्वर्थैक्येऽपीति**। अर्थैक्यमेव नास्ति। ततश्च वेद्यभेदाद्विद्याभेद इति, सत्यप्यर्थैक्ये अभ्याससामर्थ्याद्विद्याभेद इति। [अर्थैक्य] सूचक एवकारोऽस्तीत्यत आह—**यदेवेति**। P. 823-1

इदानीमेकदेशिपूर्वपक्षे अरुच्या प्रधानपूर्वपक्षं दर्शयतीत्याह—**नन्वित्यादिना**। **यः प्राणेनेति**। 'यः प्राणेन प्राणिती'त्यादिना 'अतोऽन्यदार्त'-मित्यन्तेन संदर्भेण कार्यकरणविरहप्रतिपादनात् इत्यर्थः। ननु वेद्यैक्येऽपि विद्याभेद इति पूर्वपक्षे वेद्यस्य ब्रह्मण उपाधिभेदप्रदर्शनं व्यर्थमित्यत आह—**अयं चेति**। केनचिदप्यंशेन विशेषाभावे 'यदाग्नेयोऽष्टाकपालो भवति' इति वाक्यवदनुवाद एव स्यान्न विधिः इति भावः। परिहारटीकाभिप्रायमाह—**समिधो यजतीत्यादाविति**। P. 823-3

---

१. कल्पतरौ 'अपरोक्षत्वादिरूपवेद्यैक्ये'ति पाठः।

२. कल्पतरौ 'प्रश्नप्रवृत्तिः' इति, 'उपास्ति' इति च पाठः।

भाष्योक्तस्सिद्धान्तहेतुर्न प्रदर्शितपूर्वपक्षनिरासक्षम इति शङ्कते—

P. 823-10 **नन्विति** । भाष्योक्तो हेतुः पूर्वपक्ष्येकदेशिनं प्रति प्रवृत्तप्रथमसूत्रानुरोधेने-त्याशयेनाह—**प्रथमसूत्रमिति** । **साक्षात्पूर्वपक्षेति** । तथा च मुख्यपूर्वपक्ष-प्रदर्शने तदनुगुणः सिद्धान्तः, सिद्धान्तान्तरप्रदर्शने तदनुगुणः पूर्वपक्षश्च बुद्धि-मद्भिरुन्नेतुं शक्यते इति मनसि निधाय भाष्यकारैरेकस्मिन् विचारे पूर्वपक्षो, विचारान्तरे सिद्धान्तश्च प्रदर्शित इति भावः । दर्शितमर्थं स्मारयन्नाह—**भूय एवेति** ।

॥ इति अन्तरा भूतग्रामाधिकरणम् ॥

---

## ॥ अथ व्यतिहाराधिकरणम् ॥

### सू०॥ व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

P. 824-8 **दृष्टान्तसङ्गतिमाह—पूर्वत्रेति** । **अयमपीति** । व्यतिहारोऽपीत्यर्थः । ननु 'योऽसौ सोऽह'मित्यस्य तथा चिन्तनमात्रविधायकत्वेन ब्रह्मणि जीवतादात्म्य-परत्वाभावे, पूर्वपक्ष्युक्त एकत्वदृढीकारः सिद्धान्तेऽपि स्यादिति शङ्कते—**नन्विति** । सत्यमिष्ट एवैकत्वदृढीकारः । किन्तु पूर्वपक्षे सन्दर्भस्य तत्परत्वात् प्रधानभूतः । सिद्धान्ते त्वार्थिक इति भेद इति परिहरति—**अत**[2] **आहेति** ।

॥ इति व्यतिहाराधिकरणम् ॥

---

## ॥ अथ सत्याद्यधिकरणम् ॥

### सू०॥ सैव हि सत्यादयः ॥ ३८ ॥

यदि भिन्नरूपाम्नानात् ध्यानभेदः, तर्हि प्रकृतेऽपि स्यादिति **सङ्गति-**

P. 825-7 **माह—पूर्वत्रेति** । **एकेन तदा हृदयाख्यं ब्रह्म परामृशतीति** । अनेन

---

१. कल्पतरौ 'ननु ऐकविद्येऽपि' इति शोधनीयम् । टीकायां अन्ते 'अस्य तु' इत्यस्य 'अन्यथा भेदानुपपत्ति'रिति द्वितीयसूत्रस्येत्यर्थः ।

२. कल्पतरौ 'जीवतादात्म्यस्य' इत्येतत् 'ऐकात्म्यस्य' । इति भाष्यस्यार्थानुवादः।

वक्ष्यमाणं प्रकारान्तरं (इत्यनेन च), द्वितीयेन तदा तस्य ब्रह्मणो विशिष्टरूपं परामृशतीति सूचितम्। तदाह—**वैकारस्येति**। 'तद्वै तदेत'दिति श्रुतौ **वैश-ब्दस्योपरितनेनेत्यर्थः**। तथा च **तत्** हृदयाख्यं **वै** प्रसिद्धं **तत्** पूर्वोक्तोपासनादिप्रकारविशेषोपेतमेतदेव वक्ष्यमाणप्रकारोपेतमेव नानयोः स्वरूपतो भेद इति तदर्थ इति भावः। P. 825 8

**भौतिकानां मध्य इति**। घटपटादिभौतिकापेक्षया भूतपञ्चकं प्रथमजातमित्यर्थः। **इन्नुशब्दस्य** फलितमर्थं दर्शयन् पूर्वेणान्वयमाह—**यथेति**। इदमुपलक्षणम्। यथा च प्रजापतिना लोको वशीकृत एवमुपासकेनेत्यपि द्रष्टव्यम्। 'तद्यत्तत्सत्य'मित्यादिश्रुतिं **भाष्योदाहृतां** व्याख्यातुं **तद्यत्तत्सत्य-मित्यादिटीका**। तत्र द्वितीयस्य **तच्छब्दस्य** गतिर्नोक्तेति स्वयमाह—**एकस्येत्यादिना**। P. 825-10

**टीकाया** अयमर्थः—**किंशब्दाध्याहारेण** श्रुतिमुपादत्ते—**तद्यत्तत्सत्यं (किं) किमसाविति**। प्रश्नोद्गमार्थं तद्यत्पदयोरर्थमाह—**अत्रापीति**। तथा च, **तत्** ब्रह्म **यत्** यादृशोपासनाप्रकारोपेतं **तत्तस्मिन्** प्रकारे हृदयात्मत्वे ब्रह्मणः सिद्धे, तदुपासनाफललाभाय दृढीकृते सति, तदनन्तरं सत्यं ब्रह्म फलान्तरेच्छाया-मुपासनान्तरप्रकारोपेतं दृढीकर्तव्यमिति श्रुत्यर्थ इति भावः। **किमसाविति** प्रश्नभागं व्याचक्षाण एव तदुत्तरश्रुतिमवतारयति—**कस्मिन्नालम्बन इति**। 'तस्योपनिषदहरिति हन्ति पाप्मानं' 'तस्योपनिषदहमिति हन्ति पाप्मान'मिति च श्रुतिद्वयमेकीकृत्य पठितम्। **एतदहरहमिति च नामेत्यर्थः**।

**सनामाक्षरोपासनां विधायेति** भाष्यं श्रुतिप्रदर्शनेन विशदयति—**तथा च श्रुतिरिति**। **सत्यभूयमिति**। सत्यत्वं प्राप्तमेवेत्यर्थः। **इकारानुबन्ध इति**। तीत्येकमक्षरमित्यत्र तकारोपनिबद्ध इकारस्सुखोच्चारणार्थः। **निर-नुबन्ध इति**। इकारानुबन्धरहित एव **तीत्येकमक्षरं** इति वाक्यार्थान्वयो P. 826-5

---

१. अत्र कल्पतरौ 'यस्तस्य ब्रह्मणः 'तदेतत् त्र्यक्षरं हृदयमिति' इत्यादिना' इति, 'तदेतत्त्येतत् व्याचष्टे' इति च शोधनीयम्।

२. अत्र टीकायां 'अत्रापि तद्यत्पदाभ्यां' इति पाठः।

३. टीकायां 'तदेतत् त्र्यक्षरं' इति शोधनीयम्।

P. 826-6 **द्रष्टव्यः** । सत्यशब्दे तकारमात्रस्यैव सत्त्वादिति भावः । **मृत्य्वनृतयोः इति** । मृत्युश्च अनृतं चेति द्वन्द्वः । **अन्तर्भावितं सत्यरूपाभ्यामिति** । सत्यस्वरूपाभ्यां स, यं, इत्याभ्यां अन्तर्भावितमित्यर्थः । **शेषमिति** । **नैवं विद्वांसमिति** वाक्यमित्यर्थः ।

**अनुबन्धशब्देन** अनुबध्यते अवच्छिद्यत इति कृत्यवच्छेदकीभूतो धात्वर्थ उच्यत इत्याशयेनाह—**धात्वर्थाभेदेऽपीति** । **प्रधानतदङ्गानामर्थवादादिति** । प्रधानतदङ्गविधिशेषादर्थवादात् **रात्रिसत्रन्यायेन** प्रधानस्य फलकल्पनमाश्रित्येत्यर्थः । **अर्थवादोऽयं न फलविधिरिति टीकया** 'द्रव्यसंस्कारकर्मसु फलार्थत्वात्फलश्रुतिरर्थवादः स्या'दिति न्यायः सूचितः । तं प्रकटयति—**अङ्गानामिति** । **प्रयाजादिफलवदिति** । 'वर्म यजमानाय भ्रातृव्याभिभूत्यै ' इत्यादिफलवदित्यर्थः ।

P. 826-7

**अगृह्यमाणविशेषतयेति टीकार्थ**माह—**अमुकमिति** । ननु प्रधानस्य स्ववाक्यशेषगतेनैव फलेन निराकांक्षत्वात् कथमङ्गवाक्यशेषगतस्यापि फलस्य तत्फलत्वेन कल्पनमित्यत आह—**एतदुक्तमिति** । गुणिचिन्तनस्य फलाकांक्षादशायामेव गुणचिन्तनस्यापि फलाकांक्षितया क्वचिदप्येवंकामपदाभावेन अङ्गप्रधानभावाविनिगमे द्रव्यसंस्कारन्यायाप्रवृत्तेः, प्रत्येकं फलवत्त्वकल्पने वाक्यभेदापत्तेश्च, विशिष्टोपासनफलत्वकल्पनान्न विद्याभेदकत्वं इत्यर्थः ।

ननु कथमुपास्यब्रह्माभेदेन विद्याया अभेदः अतिप्रसङ्गादित्यत आह—

P. 827-2 **अक्ष्यादित्येति । अनेनेति । भाष्योक्तः पूर्वपक्ष एव यथोक्तैकदेशिसिद्धान्तदूषणत्वेन योजितः** । पूर्वपक्षन्यायस्य तदभिमतोदाहरणे अपवादाभावादित्यर्थः ।

**॥ इति सत्याद्यधिकरणम् ॥**

---

१. कल्पतरौ 'अविशेषात् ' 'अविशेषाच्च ' इति, ' अर्थवादगतं फलं तत् सर्व ' मिति च पाठः ।

२. भाष्ये 'अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते' (छा. १-७-५) इति शोधनीयम् ।

## ॥ अथ कामाद्यधिकरणम् ॥

### सू०॥ कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥

**क्वचित्** छान्दोग्यगतायां विद्यायाम्। **क्वचित्** वाजसनेयकगतायाम्। P. 827-5
**ध्येयं त्विति**। अलौकिकफलसाधनध्यानविषयत्वस्य मानान्तरागोचरत्वादिति भावः। ननु ध्यानार्थं वशित्वादीनामुपसंहारासंभवेऽपि, स्तुत्यर्थं तदुपसंहार-संभवात् किमिति सत्यकामादिगुणनान्तरीयकत्वमात्रेणोपसंहारत्ववर्णनं टीकाया-मित्यत आह—**स्तुत्यर्थत्वं तु स्यात् तदपि नेति**।

**व्याचक्षीतेति**। 'न स्थानतोऽपी'त्यनेन स्वत उपाधितश्च रूपवत्त्व-निषेधेन निर्विशेषस्य सर्ववेदान्तप्रतिपाद्यत्वकथनात् इति भावः। षष्ठीतत्पुरुषे उपास्यभेदो नोक्तः स्यादित्यत आह—**आकाश इति**। छान्दोग्ये आकाश-शब्दस्य ब्रह्मणि गौणत्वं न रूपभेद इत्याह—**छान्दोग्य इति**। P. 828-3

॥ इति [1]कामाद्यधिकरणम् ॥

---

१. अस्मिन्नधिकरणे भाष्ये 'तत्र विद्यैकत्वं परस्परगुणयोगश्च, किं वा नेति संशयः। तत्रेदमुच्यते कामादीति।' इति शुद्धः पाठः। 'संशये विद्यैकत्वमिति' इति अशुद्धम्। अस्मत्परिशोधितमुद्रापितायां अन्नंभट्टकृतब्रह्मसूत्रवृत्तौ पाठः एवम्—'तत्र परस्परगुणोप-संहारो भवति वा न वेति संशये, न भवति विद्याभेदात् इति प्राप्ते, ब्रूमः—कामादीति' इति। कल्पतरौ 'स्तुतिर्हि दृष्टेन द्वारेण कर्तुं शक्येति' इति वाक्यस्यायं भावः—कस्यचित् स्तुतिर्हि दृष्टद्वारेणैव कर्तुं शक्या। प्रशस्तमित्युक्त्या हि न प्रशस्तं भवति। अपि तु तत्प्रयोजकगुणसंबन्धादेव। गुणसंबन्ध एव च दृष्टद्वारं, तदर्थं गुणोपसंहारः इति।

## ॥ अथ आदराधिकरणम् ॥

### सू०॥ आदरादलोपः ॥ ४० ॥

### सू०॥ उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

P. 829-1 **पूर्वोऽतिथिभ्य इत्यादीति**। 'पूर्वोऽतिथिभ्योऽश्नीया'दिति विधिमहिमलब्धादरोपपत्त्यर्थमित्यर्थः। **पादसङ्गतिमिति**। प्रसङ्गलक्षणामित्यर्थः। पूर्वभोजनमात्रस्य विचारविषयत्वाभावादाह—**तद्यद्भक्तमिति**। **टीकायां** पांसुग्रहणस्य विषयत्वमुक्तम्। स्वयं तु '**पदकर्मे**'ति सूत्रस्याविशेषप्रवृत्तत्वात् अक्षाभ्यञ्जनमपि विषय इति मनसि निधाय विषयवाक्यं दर्शयति—**एकहायन्येत्यादिना**। **टीकोक्तं पांसुग्रहणं** सिद्धवत्कृत्य, स्वयमक्षाभ्यञ्जनांशं उपादाय संशयं दर्शयति— **यदेतदिति**। **टीकायां** पांसुग्रहणस्य विषयत्वाभ्युपगमादक्षाभ्यञ्जनं कथं विषयतया निर्दिश्यत इत्यत आह—**सप्तमपदसाध्यमिति**। सर्वं पदकर्म विषयः सूत्रानुरोधात्। **टीकायां** तु पांसुग्रहणमुपलक्षणार्थमिति भावः।

P 829-7 तादर्थ्यस्य तत्प्रयोज्यत्वसिद्धिः फलं इत्याह—**[अ]तश्चेति**। पांसुग्रहणादेः प्रयोजकत्वे च पांसुरहितप्रदेशे सप्तमपदनिधाने गृहीतपांस्वपचारे च पुनरप्येकहायनीनयनं कार्यम्। अप्रयोजकत्वे च नेति फलभेदो द्रष्टव्य इति भावः। नन्वेकहायन्याः क्रयार्थत्वेऽपि तन्नयनमुभयार्थं कुतो न स्यात् इत्यत आह—**यदर्था चेति**। संस्काराणां संस्कार्यद्वारकत्वनियमेन द्वारशेष्येव द्वारिणोऽपि शेषीति भावः। **तावच्छब्देनेति**[2]। अव्ययानां अनेकार्थतया 'प्रथमं तावदिदमुच्यत' इत्यादिप्रयोगादस्थिरत्वमपि तदर्थ इति तद्वार्यत इति भावः।

'पूर्वोऽतिथिभ्य'इत्यस्य विध्यन्तरविहितकालातिक्रमेण ततः पूर्वकाल P. 830 1 एव प्राणाग्निहोत्रप्रापकत्वादस्ति तन्नित्यतायां तात्पर्यमित्याह—**स्वामिभोजन-**

---

१. कल्पतरौ 'गुणालोपवत्' 'अग्निहोत्रालोपः' इति, 'सप्तमं पदमध्वर्युरञ्जलिना' इति च पाठः।

२. टीकायां 'तावच्छब्दः सिद्धान्तिशङ्के'ति पाठः।

**स्येति** । टीकायां 'पूर्वोऽतिथिभ्योऽश्नीया'दितीत्यनन्तर'मश्नीयादिति च प्राणाग्निहोत्रप्रधानं वच' इति क्वचित्पाठः । तं पाठमाश्रित्य प्रतीकमादत्ते—**अश्नीयादिति चेतीति** । नन्वग्निहोत्रस्य सर्वभूतोपास्यत्ववचनमात्रात् **अश्नीया-** P. 830 1 **दित्यस्य** कथं प्राणाग्निहोत्रपरत्वमित्यत आह—**अग्निहोत्रमिति** । 'यथेह क्षुधिता' इति दृष्टान्तबलादतिथिभिरपि तृप्त्यर्थमुपास्यमग्निहोत्रं भोजनरूपप्राणाग्निहोत्रमेव । तदेव च 'पूर्वोऽतिथिभ्य' इति वाक्ये अतिथ्यशनत्वेन निर्दिश्यत इति, ततः प्राक्कालकर्तव्यतयोच्यमानं स्वाम्यशनमपि प्राणाग्निहोत्रमेवेत्यर्थः ।

**आदरादिति सूत्रसूचितमिति** । वाक्यशेषसाहित्येनैव विधेरादरज्ञापकत्वादिति भावः । ननु **भाष्ये उक्तः प्राणाग्निहोत्रादरो** न प्रतीयते । **स्वामिभोजनं प्रथमं प्रापयन्तीति** पूर्ववाक्ये आदर्तव्ये **भोजनशब्द**प्रयोगादिति शङ्कते—**ननु भाष्य इति** । श्रुत्यनुरोधेन **भाष्येऽपि भोजनशब्दः** P. 830-6 प्राणाग्निहोत्रपर इति परिहरति—**अत आहेति** । **अतिथिभ्यो भोजनदान इति** । अनेन **टीकायां अतिथिभ्यो भोजनस्येत्येतत् भोजनदानस्येत्येवं** व्याख्यातम् ।

आदरः पाक्षिकत्वेनाप्युपपद्यते इति शङ्कते—**स्वामीति** । अविशेषप्रवृत्तस्यादरस्य पाक्षिकत्वकल्पनायां नास्ति प्रमाणमिति परिहर्तुमी**दृशः खल्वित्यादिटीका** । तत्र **स्वामिभोजनमिति** द्वितीयान्तं, अपकर्षकर्मत्वेनान्वितत्वात् । अत उत्तरत्र प्रथमान्तमध्याहर्तव्यमित्याशयेनाह—**स्वामिभोजन-** P. 830-10 **मित्यध्याहार इति** ॥

यद्यपि **स्वामिभोजनमपकृष्य विहितमिति** प्रथमान्तमेव स्वामिभोजनपदं, **विहितमिति** क्तप्रत्ययेन कर्मणोऽभिहिततया द्वितीयाऽयोगात् । प्रधानक्रियाकर्मानभिधानस्यैव द्वितीयाप्रयोजकतया अपकर्षरूपगुणभूतक्रियाकर्मानभिधानस्याकिञ्चित्करत्वात् । 'अयं ब्राह्मणस्ततोऽपकृष्यात्रानीतः' इत्यादिप्रयोगदर्शनात् । तथापि, प्रकृते 'पूर्वोऽतिथिभ्य' इत्यस्य प्राणाग्निहोत्रनित्यकर्तव्यतायामादरातिशयं दर्शयितुं विध्यन्तरविहिताद् कालादपकर्षेति । अपकृष्य विधत्त इति क्रियाद्वय-

---

१. परिमलनिरासोऽयम् ।

प्राधान्यं विवक्षित्वा, **विहितं स्वामिभोजनमपकृष्य, पुनश्च तद्विहितमिति** **टीका**भिप्रायं मनसि निधाय प्रथमान्तपदाध्याहार उक्त इति न कोऽपि दोषः।

P. 830-10 **कौण्डपायिनामयने इति।** कुण्डपायिनामयनसम्बन्धिन्यग्निहोत्रेऽप्युपसदानन्तर्यमासादिलक्षणा धर्माः सन्तीत्यर्थः। **रूपधर्मान्तरप्राप्तिः** इत्यत्र रूपस्य धर्मान्तरस्य चेति न संभवति। अग्निहोत्रस्यारादुपकारकधर्मैरहिततया, द्रव्यदेवतातिदेशसिद्धतत्संस्कारव्यतिरिक्तस्य कस्यचिद्धर्मस्य ततोऽप्राप्तिरित्यतो विवक्षितमर्थमाह—**यागस्येति**[2]।

यदि प्राणाग्निहोत्रस्य भोजनागतभक्तद्रव्यकत्वं विहितम्, तर्हि तादृशभक्ताभावे कथं तदनुष्ठानमिति शङ्कते—**नन्विति।** किं भोजनमाश्रित्य तद्भक्तद्रव्यकतया प्राणाग्निहोत्रविधानात् तादृशभक्ताभावे तल्लोपः? किं वा भोजनार्थभक्तैकदेशोपजीवित्वेन स्वयं द्रव्याप्रयोजकतया भोजनाभावे तदीयभक्तैकदेशरूपद्रव्याभावादिति विकल्प्य प्रथमं निराकरोति—**नेत्याहेति।** [द्वितीयं]

P. 831-2 शङ्कते—**मा भूदिति।** यत्रैकदेशिग्रहणमन्तरा नैकदेशस्य ग्रहणम्। तत्रैव परप्रयुक्तोपजीवित्वं, प्रकृते च न तथेति परिहरति—**अत आहेति।**

**देवतान्तरावरुद्धत्वादिति**[3]। 'यदाग्नेयोऽष्टाकपालः' इत्यादिभिर्वाक्यैः पुरोडाशादीनां कार्त्स्न्येनैव देवतान्तरार्थत्वावगमेन देवतान्तरसात्कृतस्य देवतान्तरार्थं ग्रहणायोगादन्यदेव हविः कर्तव्यमित्यर्थः। **जघनप्रदेशादवत्त इति।**

P. 831-14 गर्भस्थस्य पिण्डस्यावयवविभागदशायां जघनप्रदेशादुद्भूत इत्यर्थः। **प्राणिमात्रस्येति।** वराहमेषहरिणादेरित्यर्थः। **पशूपादानमन्तरेणेत्यंशं** व्याख्याय, **परप्रयुक्तपशूपजीवनं वेत्यंशं** व्याचष्टे—**अग्नीषोमीयमिति।**

---

१. कल्पतरावेतदनुसारेण शोध्यम्।

२. कल्पतरौ 'द्रव्यदेवते। ते एव धर्मान्तरं' इति पाठः। टीकायां 'कैव कथा धर्मिलोपं सहते इति। इत्यर्थः' इति पाठः। 'कैव कथा धर्मिलोपसहने इत्यर्थः' इत्यपि पाठान्तरम्।

३. कल्पतरौ 'तन्नाम्ना यागोऽपि गीयते' इति, 'किं वा अग्न्यादिप्रयुक्तपुरोडाश' इति, 'कृत्वाऽवद्येतेति' इति, 'कस्योत्तरार्धादिति सापेक्षत्वात्' इति, 'संबन्ध्यनिर्देशात अग्न्यादिप्रयुक्तस्य च' इति, 'मित्येतन्नास्तीत्यत्र' इति, 'उक्तमग्निहोत्र' इति, 'जाघन्येत्येतावन्मात्रं' इति च पाठाः।

**नन्वेवमिति** । प्राणाग्निहोत्रस्य द्रव्यप्रयोजकत्वे सतीत्यर्थः । **अविशिष्टत्वेन प्रत्यभिज्ञानादिति** । व्रीह्यादिसदृशेषु नीवारादिषु व्रीह्याद्यवयवसत्त्वेन नीवाराद्यनुष्ठितस्यापि व्रीह्याद्यवयवानुष्ठितत्वमविशिष्टमिति तेन हेतुना तदेवेदं कर्मेति प्रत्यभिज्ञानादित्यर्थः । **भाष्योदाहृतमिति** । 'गुणलोपे न मुख्यस्ये'त्यधिकरणमित्यर्थः । **नाग्निहोत्रहवणीति** । अग्निहोत्रसंबन्धस्य प्रवृत्तिनिमित्तस्य तदानीमसत्त्वादित्यर्थः । **तद्विशिष्टत्वेन** । तत्साधनकत्वेन । P. 831-17

ननु चोदकेन युगपदेव सर्वेषामपि प्रापणात् कथं निर्वापस्य प्राथम्यं अग्निहोत्रहवण्याश्चारम्यं चेत्यत उक्तं—**तद्द्वारेणेति** । सत्यं, युगपदेव प्राप्तिः । तथापि चोदकप्राप्तानां पदार्थानामनुष्ठापकः प्रयोगविधिः एतदर्थमिदं कर्तव्यमेतदर्थमिदमित्येवं पौर्वापर्यपुरस्कारेणैव प्रवर्तते । द्वारभूतशेषिप्राप्तिमन्तरा तद्द्वारा क्रतूपकारार्थं तदनुष्ठानविधानायोगादिति भावः ।

**टीकायां तद्धोमीयमिति तच्छब्देन** भोजनार्थसमागतभक्तस्यैव परामर्शेन प्रकृतेऽपि नैकदेशिग्रहणेन विना तदेकदेशग्रहणमिति 'उत्तरार्धात् स्विष्टकृत' इत्येतत्तुल्यतैव, न जाघनीतुल्यतेति, परप्रयुक्तद्रव्योपजीवित्वात् प्राणाग्निहोत्रं न भक्तस्य जलादेर्वा प्रयोजकमित्युक्तम् । तस्य प्रयोजकत्वे सति भोजनाङ्गभक्तप्रापणं फलमिति तदेव भक्तशब्देनोच्यत इत्याशयेनाह—**भोजनाङ्गमित्यर्थः** इति । P. 832 3

ननु तच्छब्दस्य पूर्ववाक्यनिर्दिष्टपरामर्शित्वेऽपि पूर्ववाक्ये तात्पर्येण यन्निर्दिष्टं तदेव परामृश्यत इति वक्तव्यम् । तस्यैव प्रधानत्वात् । 'तद्यद्भक्त'मिति वाक्ये च नामातिदेशप्राप्तद्रव्यबाधेन विधित्सितं द्रव्यान्तरं भक्तमेव तात्पर्येण निर्दिश्यते, अन्यत्त्वनूद्यत इति, तस्यैव तच्छब्देन परामर्शो न भोजनाङ्गत्वविशिष्टस्य इति शङ्कते—**नन्विति** । नात्र चोदकेन धर्मप्राप्तिः । येन तत्प्रापितद्रव्यबाधाय द्रव्यान्तरमात्रमेव विधित्सितं स्यात् । तथा च 'तद्यद्भक्त'मित्यादिपदसन्दर्भानुरोधेन भोजनाङ्गभक्तस्यैव पूर्ववाक्यनिर्दिष्टस्य तच्छब्देन परामर्श इति परिहरति—**इत्युक्तं अनूद्येति** । P. 832-5

---

१. भाष्ये 'भक्तद्रव्यकतागुणे'ति पाठः ।

२. कल्पतरौ पूर्वं 'ततो निरपेक्षाप्राप्तिः' इत्यस्य—निरपेक्षस्य प्रथममनपेक्षिताग्निहोत्रहवण्याः, अप्राप्तिः । असंभवादप्राप्तिः । इत्यर्थः ।

विध्यर्थवादगतयोः नाम्नोस्साध्यसादृश्यगमकत्वतदभावाभ्यां वैषम्य-
P. 832-6 माह—**विध्येकवाक्यतापन्न इति । अर्थवादगतस्त्विति ।** 'एष वै दर्शपूर्ण-
मासयोरवभृथ' इत्यादाविवेत्यर्थः । ननु कथञ्चित्सिद्धसादृश्यमात्रेण चरुशब्दो-
पपत्त्या गौणत्वाभावे, अग्निहोत्रनाम्नोऽपि तथात्वं किं न स्यादित्यत आह—
**सत्यां गताविति ।** तत्र विधीयमानस्य होमस्य द्रव्यदेवताद्यपेक्षत्वात् अनन्यगत्या
विधावपि गौणत्वमाश्रितम् । न त्वत्र कृष्णलाघवघाताद्यपेक्षेति गौणत्वं युक्त-
मित्यर्थः । यदुक्तमादरस्य पाक्षिकत्वकल्पने नास्ति प्रमाणमिति तत्र प्रमाणं
दर्शयन् टीकामवतारयति—**यदा चैवमिति ।**

P. 833-3 **न भोजनकालादिति ।** 'पूर्वोऽतिथिभ्य' इत्यादरप्रदर्शकं वाक्यं
'तद्धोमीय'मिति वाक्यगतपरप्रयुक्तद्रव्योपजीवित्वविरोधान्न प्राणाग्निहोत्रस्याहत्य
प्राथम्यविधिपरम् । किं तु स्वामिभोजनस्य प्राथम्यं विदधदर्थात्तस्यापि प्राथम्यम-
वगमयतीत्यर्थः । आदरातिशयद्योतकः कैमुतिकन्यायोऽप्यत एव निरस्त इति
दर्शयितुमुत्तरटीकेत्याह—**यदा चेति । नन्वतिथीत्यादिशङ्कायाः** पूर्वपक्षो-
पयोगं प्रदर्शयन्नाह—**नन्विति । अत इति ।** तथाचादरलिङ्गं न कथञ्चिन्नेतुमुचि-
तमिति भावः । सामान्यशास्त्रानुरोधेन विशेषशास्त्रस्वारस्यभङ्गोऽयुक्त इति
परिहरति—**इत्याशंक्य परिहरतीति ।**

॥ इति आदराधिकरणम् ॥

---

## ॥ अथ तन्निर्धारणाधिकरणम् ॥

### सू० ॥ तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ॥ ४२ ॥

**नित्यकर्माङ्गेति ।** नित्यं यत्कर्माङ्गमुद्गीथादीत्यर्थः । नित्यकर्माङ्गा-
P. 834-1 श्रितत्वं न नित्यत्वसाधनं व्यभिचारादित्याशंक्य, अनारभ्याधीतत्वं हेतुविशेषणं

---

१. कल्पतरौ 'विभक्तत्वात्' इत्यस्य विभक्तावयवत्वादित्यर्थः । अत एव सोम-
नाथीये शास्त्रदीपिकागतवैशद्यपदविवरणरूपतया विभक्तावयवत्वमिति उक्तम् ।

२. कल्पतरौ 'सहेतेति यत् तन्निरस्त'मिति, 'स्वकालादपकर्ष एवायुक्त' इति च
पाठः । भाष्ये 'आस्य एवैष होमः' इति पाठः ।

३. कल्पतरौ 'प्राणाग्निहोत्रस्यानित्यत्ववत्' इति शोधनीयम् ।

इवि परिहरति—**कर्माङ्गाश्रितस्यापीत्यादिना** । **रात्रिसत्राणामिति** । रात्रि- P. 834-13
सत्राणां प्रयोजनाकाङ्क्षाणां प्रयोजनप्रापकगत्यन्तराभावादित्यर्थः । **इह त्विति** ।
प्रयाजाञ्जनयोः प्रकरणेन, पर्णताया वाक्येन च, **क्रतूपकारस्य सिद्धत्वादित्यर्थः** ।
पूर्वपक्षोक्तदृष्टान्तनिरसनेन द्वितीयं निरस्यतीत्याह—**यत्त्वित्यादिना** । ईप्सित-
त्वनिषेधस्य फलं दर्शयन् तात्पर्यमाह—**अन्यार्थत्वेनेति** । **अनुपयुक्तत्वा-
दिति** । भूतभाव्युपयोगरहितत्वादित्यर्थः ।

**सा सप्तम्यर्थेति** । यद्यपि **तस्मिन्नधिकरणे** लोकशब्दस्य लोकदृष्टौ P 835-6
लक्षणामाश्रित्य लोकदृष्ट्या सामोपासितेत्यर्थ इत्येवोच्यते । न द्वितीया सप्तम्य-
र्थेति । तथापि सामसु लोकदृष्टिः कर्तव्येत्येव पर्यवस्यति । उपासनायाः सामशेषत्वे
अदृष्टार्थत्वापत्त्या साम्न एव तन्निर्वर्तकस्य तच्छेषत्वौचित्यादिति पर्यवसानलब्धा-
र्थाभिप्रायेण **द्वितीया सप्तम्यर्थेति** वक्ष्यत इत्युक्तमिति ध्येयम् । **गुणवादः**
अमुख्यवादः, लक्षणेत्यर्थः । सत्यमर्थवादत्वेऽपि फलपरत्वे च लक्षणा, परं
त्वर्थवादत्वे श्रूयमाणपदानुपस्थिते प्राशस्त्ये लक्षणेति पदानामत्यन्तपरोक्षा वृत्तिः
स्यात् । फलपरत्वे तु पदोपस्थित एव फले फलत्वविशिष्टवेषेण लक्षणेति नात्य-
न्तपरोक्षा वृत्तिरिति सैव ज्यायसीति परिहरति—**अत आहेति** ।

'तेनोभौ कुरुत' इत्यादिश्रुतिं व्याचष्टे—**तेनोङ्कारेणेत्यादिना** । P. 836-2
ननु 'यदेव विद्यये'ति तृतीयया विद्याया अतिशयहेतुत्वावगमात् कथमुभयोरपि
तुल्यफलकर्मकर्तृत्वमिति श्रुतिगता शङ्केत्यत आह—**दृष्टं हीति** । दृष्टविरोधा'द्य-
देव विद्यये'ति वाक्यं विद्याप्रशंसार्थमिति शङ्काशय इति भावः । अयमप्यर्थो

---

१. कल्पतरौ 'पर्णमयीतां' इति पाठः ।

२. कल्पतरौ 'क्रियाद्रव्यमाश्रित्य' इत्येतत् 'क्रियासंबन्धवत् द्रव्यमाश्रित्य' इति शोधनीयम् ।

३. कल्पतरौ उपरि 'तदाश्रयः तस्याः पर्णताया आश्रयः प्रकृते' इति पाठः । टीकायामपि 'प्रकृतेऽस्ति' इति पाठः । कल्पतरौ 'साक्षात्कमिपद' इति पाठः । कमिपद-युक्तफलश्रवण एव साक्षात् फलश्रवणम् । वर्तमानापदेशस्थले विपरिणामस्याश्रयणीय-त्वात् न साक्षादिति भावः ।

४. कल्पतरौ 'अन्यार्थे' इति पाठो दृश्यते ।

P. 836-4 दृष्ट एवेति, न वाक्यस्य प्रशंसामात्रपरत्वकल्पनं युक्तमित्याशयेनाह—दृष्टो हि मणिविक्रय इति ।

॥ इति तन्निर्धारणाधिकरणम् ॥

---

## ॥ अथ प्रदानाधिकरणम् ॥

### सू०॥ प्रदानवदेव तदुक्तम् ॥ ४३ ॥

ननु वायुप्राणयोस्तत्त्वाभेदेऽप्यवस्थाभेदात् पृथगनुचिन्तनमेव न्याय्यमित्याशंक्य, भवेत् प्राणत्वबाह्यवायुत्वपुरस्कारेण पृथगनुचिन्तनं, यदि तत्तदवस्थापुरस्कारेण अनुचिन्तनस्य फलभेदश्चोदितः स्यात् । न त्वेतदस्ति । तथा च, तत्क्रतुन्यायाभावात् आध्यात्मिकाधिदैविकगुणविशिष्टतया वायुतत्त्वमेकमेव चिन्तनीयमित्याशयेनाह—तत्प्राप्तीति । P. 836-8

ननु वाजसनेयके प्राणश्रैष्ठ्यचिन्तनस्य 'तेन ह वाव तत्कुलमाचक्षत' इति फलमुक्त्वा, वायुश्रैष्ठ्यानुचिन्तनस्यैव 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयती'ति तत्प्राप्तिलक्षणं फलमुक्तम् । छान्दोग्ये तु—'अ(न्नवान)न्नादो भवति' इत्येव फलं निर्दिष्टम् । न तु तत्प्राप्तिरिति चेन्न । अध्यात्माधिदैवतभेदेनोपदिष्टाया अपि विद्याया एकत्वं तावत्सिद्धम् । उपक्रमादिपर्यालोचनया तत्सन्दर्भस्यैकत्वावगमात् । ततश्च वायुतत्त्वविद्याफलं देवताप्राप्तिरेव, उत्कृष्टत्वात्, तत्क्रतुन्यायानुगुणत्वाच्च । स्वेन कुलव्यपदेशस्तु श्रैष्ठ्यगुणानुचिन्तनस्तुत्यर्थमर्थवादः ।

एवं संवर्गविद्याफलमपि वायुदेवतातादात्म्यमेव तत्क्रतुन्यायात् । अन्नवत्त्वादि[अन्नादत्वादि]कीर्तनं तु विराट्संपत्तिं पुरस्कृत्य विद्यास्तुत्यर्थं, तादृश्या महाविद्याया अल्पफलत्वायोगात् । उपक्रम एव 'यथा कृतायविजितायाधरेयास्संयन्त्येवमेनं सर्वं तदभिसमेति । यत्किञ्च प्रजास्साधु कुर्वन्ति यस्तद्वेद'ेति वायुतादात्म्यापत्तिसूचनाच्च । तथा च सुष्ठूक्तम्--तत्प्राप्तिलक्षणफलैक्याच्चेति ।

---

१. संवर्गविद्यायां 'अन्नादो भवति' इत्येव वर्तते अतः शोधनीयं कल्पतरावपि ।

उत्पन्नानामुपासनया संयोग इति भ्रमं वारयति—**उत्पन्नयेति**। उत्पन्न- P. 837-1
गुणविनिर्मुक्ताया उपासनाया उत्पत्तिं दर्शयति—**संवर्गविद्यायामिति**। **आ-
ख्यानार्थो हीति** उपात्तभाष्यव्याख्यानार्थं **अग्निहोत्रस्येवेत्यादिटीका**।
तां सत्यमित्यादिसिद्धान्तटीकोक्तार्थकथनपरत्वेनावतारयति—**यदुक्तमित्या-
दिना**। **वत्कारो धर्मस्येति**। आध्यात्मिकाधिदैविकगुणजातस्येत्यर्थः।
भाष्योक्तं **वाय्वानन्त्यमिति**। **अपरिच्छिन्नात्मकत्वस्येत्यादि**भाष्य-
सूचितमित्यर्थः।

**देवताकाण्डेति**। यद्यपि संकर्षकाण्डो द्वादशलक्षण्यविचारितनानाविषय-
[न्याय]विचारार्थं प्रवृत्तो न तु देवतामात्रविचारार्थः, तथापि तत्र देवताविचारो
बहुधा कृत इति देवताकाण्डव्यपदेशात् तथोक्तम्। **पूर्वपक्षसिद्धान्तावाहेति**। P. 838-2
**मिलितानां** त्रयाणामपि पुरोडाशानां 'सर्वेषामभिगमयन्नवद्यती' ति, सहैवावदान-
श्रवणाविशेषात् सहावत्तस्य च पृथक्प्रदाने मानाभावाद्देवतैक्याच्च सहप्रदान-
मिति पूर्वपक्षं, देवताभेदात् सहावत्तस्यापि पृथक् प्रदानसंभवात्, याज्यानुवाक्या-
व्यत्यासविधिबलाच्च, पृथगेव प्रदानमिति सिद्धान्तं चाहेत्यर्थः।

याज्यानुवाक्याव्यत्यासं विदर्शयन् द्वितीयहेतुमवतारयति—**त्रिपुरोडा-** P. 838-3
**शेत्यादिना**। अस्यास्त्रैधातवीयाख्याया इष्टेः याज्यानुवाक्यात्वेन 'प्राच्यां
दिशि त्वमिन्द्रोऽसि राजे'त्यादयः तिस्रः ऋचः पठिताः। तत्र प्रथमप्रदाने या
याज्या, सा द्वितीयप्रदाने अनुवाक्या। तदनन्तरपठिता तृतीया ऋक् तत्र याज्या,
सा च तृतीयप्रदाने अनुवाक्या। या च पूर्वं प्रथमप्रदाने अनुवाक्या सा
पश्चात्तृतीयप्रदाने याज्या भवतीत्यर्थः। तथा च संकर्षे 'अन्यार्थदर्शनाच्चे'त्येत-
दधिकरणगुणसूत्रस्य भवस्वामिभाष्यं—'प्रथमामनूच्य मध्यमया यजेत्,

---

१. टीकायां 'अग्निहोत्रस्य दधितण्डुलादि' इति पाठः।

२. कल्पतरौ 'प्रदानभेदविषयस्य' इति, 'पश्चाद्याज्या भवति इति 'व्यत्यासम-
न्वाहे'त्यनेन विहितं' इति, 'प्रैषानन्तरं' इति च पाठः। भाष्ये 'एकादशकपालं निर्वपेदि-
न्द्राय' इति, 'अछंवट्कारमित्यतो वचनात्' इति च पाठः।

३. कल्पतरौ 'पूर्वपक्षं सिद्धान्तं चाह' इति दृश्यते।

४. 'प्रथमप्रदाने प्रथमा अनुवाक्या। मध्यमा याज्या' इति परिमले।

मध्यमामनूच्योत्तमया यजेत् । उत्तमामनूच्य प्रथमया यजेत् । एवं सर्वा अनुवाक्याः सर्वा याज्या भवन्ति' इति व्याख्यातम् ।

P. 839-3 टीकामूलभाष्यगतां श्रुतिं प्रसङ्गात् इदानीमेव व्याचष्टे—**याज्ञिका हीत्यादिना**। **सर्वेषामिन्द्रादीनां** त्रयाणां ये पुरोडाशास्तान् । **अभिगमयन्** प्रापयन् । त्रयाणामपि पुरोडाशानां पूर्वपूर्वोपरि उत्तरोत्तरस्याधिश्रय[प]ण विधानेन तथाभूतानां त्रयाणामपि मध्यादिप्रदेशादवदानत्रयं युगपदेव यथा भवति तथा केनचिदुपायेन प्रापयन्नवद्यतीत्यर्थः। **यागानर्हः स्यादिति** । पुरोडाशानां सन्दष्टतया एकीभूतत्वादित्यर्थः ।

नन्वेकेनापि पुरुषेण त्रैधातवीयायाः फलार्थं पुनः पुनः प्रयोगसंभवात्, तादृशप्रयोगपौर्वापर्यमादाय व्यत्यासवचनमुपपद्यत इति तदन्यथासिद्धिमाशंक्य, तथासति तत्कर्माङ्गत्वेन नित्यवच्छ्रवणविरोधात् स्वरसावगतं यागत्रयानुष्ठानपौर्वापर्यकृतमेव व्यत्यस्तत्वं विवक्षितमिति वक्तुं **तथाविधस्यैवेति टीका** । तां व्याचष्टे—

P. 839-5 **व्यत्यस्तेति** ।

'एकमेव व्रतं चरेत्, प्राण्याच्चैवापान्याच्चे'ति भाष्यगतश्रुता'वेकमेव व्रतं चरे'दित्यंशः एकं वक्ष्यमाणं प्राणव्रतं चरेत् । न वागादिव्रतं, वागादीनां प्राणरूपतापत्तेः 'हन्तास्यैव सर्वे रूपमसामे'त्यादिना पूर्वमुक्तत्वात् । प्राणव्यापार एवावश्यमादरेणानुष्ठेयो, न वागादिव्यापारः । स त्ववर्जनीयतया भवति चेत्कामं भवतु, इत्येवमभिप्रायेण **एवकारश्च वागादिव्रतनिराकरणार्थ इति टीका**व्याख्यातः । स्वयमवशिष्टमंशं व्याचष्टे—**प्राण्यादितीति** । **प्राणने प्राप्ते प्राण्यादिति, अपानने प्राप्ते अपान्यादिति च व्रतं चरे**दित्यर्थ इति भावः । ननु सिद्धमेव तत् न विधेयमित्यतो वाक्यतात्पर्यमाह—**प्राणापानादीति** । **प्राणापाननिरोधं न कुर्यादित्यर्थः** । इति । केषुचित्कोशेषु नञ्पदं न दृश्यते । तत्र प्रमादपतितं तदिति ध्येयम् ॥

P. 839-7 'महात्मनश्चतुरो देव एकः कस्स जगारे'ति श्रुतिं व्याचष्टे—**महात्मन इत्यादिना** । स इत्यस्य व्याख्यानं **प्राणात्मक इति** । 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' इति श्रुतिं व्याचष्टे—**तेन व्रतेनेत्यादिना** ।

---

१. 'पुरोडाशानां मध्यभागे नलकप्रवेशनाद्युपायेन मध्यादपि युगपदवदानं प्राह्य'मिति परिमले ।

सायुज्यमैक्यमिति भ्रमं वारयति—समानदेहतामिति । अत्र देहग्रहणं भोग- P. 839-9
स्याप्युपलक्षणम् । तथा च 'भोगमात्रसाम्यलिङ्गाच्चे'ति सूत्रे उत्कृष्टोपासनायाः
समानभोगफलकत्वं वक्ष्यमाणं न विरुध्यत इति ध्येयम् । ननु सायुज्यसलोकते
उत्कृष्टे कथमेकोपासनाफलत्वेन निर्दिष्टे इत्यत आह—सायुज्यमिति । उत्कर्षश्च
दीर्घकालादरनैरन्तर्यकृतत्वं, तदभावश्च मन्दत्वम् ॥

॥ इति [1]प्रदानाधिकरणम् ॥

---

## ॥ अथ लिङ्गभूयस्त्वाधिकरणम् ॥

सू०॥ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥

सू०॥ पूर्वविकल्पः प्रकरणात् स्यात्क्रिया मानसवत् ॥ ४५ ॥

सू०॥ अतिदेशाच्च ॥ ४६ ॥

सू०॥ विद्यैव तु निर्धारणात् ॥ ४७ ॥

सू०॥ दर्शनाच्च ॥ ४८ ॥

सू०॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥

सू०॥ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ॥ ५० ॥

सू०॥ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥

सू०॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥

पूर्वाधिकरणवैषम्येण(द्रव्यवद्धानात्) [प्रयोगैक्यप्रतिपादनात्] सङ्गति-
रित्याह—पूर्वत्रेति । प्रकरणेनेति । क्रियामयस्य अग्नेः प्रकरणेनेत्यर्थः । अर्थ- P. 840-4

---

१. अस्मिन्नधिकरणे भाष्ये 'यथान्यासमेव' इत्यस्य यथाश्रुति इत्यर्थः । श्रुत्या तत्तद्गुणविशिष्टदेवताभेदादिति यावत् ।

२. अत्र टीकायां 'येनास्य स्वातन्त्र्येण प्रापकं भवेत्' इत्यत्र अस्येतिपदस्य स्वातन्त्र्यस्येत्यर्थः । अस्येति पदस्य लिङ्गस्येत्यर्थकरणे प्रापकत्वं भवेत् इति शोधनीयम् । टीकायां 'तद्धि सामर्थ्यमभिधानस्य' इति, 'असति सामर्थ्यलक्षणे लिङ्गे' इति च पाठः ।

P. 840-6 **गतमुदाहरति।** 'पशुना यजेते'त्यत्र तृतीयैकवचनावगतमेकत्वं समानपदश्रुत्यपेक्षया प्रबलया समानप्रत्ययश्रुत्या करणकारकान्वितं सत् क्रियाङ्गमवगतम्। तस्य च साक्षात्क्रियाङ्गत्वासंभवेन द्वाराकाङ्क्षायां संख्याया द्रव्यपरिच्छेदकत्वसामर्थ्येन पशुद्रव्यावच्छेदकतया क्रियाङ्गत्वमित्येवमभिप्रायेणोदाहरतीत्यर्थः। मानसग्रहस्य द्वादशाहाङ्गत्वाभावे कथं तदाप्यायनकर्तृत्वेन स्तुतिरित्यत आह—**रसवत्तापादकेति।**

ननु द्वादशाहप्रकरणाम्नातं पत्नीसंयाजान्तत्वमहरन्तरत्वपक्षे मानसस्यापि तुल्यमिति कथं तद्बलान्मानसस्याहरन्तरत्वसिद्धिरित्यत आह—**पत्नीसंयाजान्तानीति।** अन्तिममहर्वर्जयित्वा अवशिष्टानामेव पत्नीसंयाजान्तत्वमिति नवमे निर्णीतत्वात् मानसस्याहरन्तरत्वे त्रयोदशत्वान्न पत्नीसंयाजान्तत्वविरोधः। दशमस्याह्नोऽङ्गमिति पक्षे तु तद्विरोध इत्यर्थः। विसर्गशब्दश्रुत्या अङ्गत्वानवगमेऽपि तस्य चरमावयववाच्यन्तशब्दपर्यायतया तत्सामर्थ्यादङ्गत्वावगतिरिति परिहरति—**अत आहेति।**

ननु दशरात्रस्य द्वादशाहविकृतित्वेऽपि तदीये दशमेऽह्नि द्वादशाहान्तर्गतदशमाहर्विध्यन्त एव प्रवर्तेत। न त्वविवाक्यनामकाहर्विध्यन्तः। तस्य
P. 841-6 द्वादशाहे एकादशत्वादित्यत आह—**क्रमेणेति।** द्वादशाहविकृतिषु द्वादशाहस्य प्रथमोत्तमे अहनी वर्जयित्वा मध्यमदशरात्रविध्यन्त एव प्रवर्तत इति दशमे निर्णीतत्वात्, क्रमेण तद्धर्मप्राप्तौ दशरात्रगते दशमेऽह्नि द्वादशाहमध्यवर्तिदशरात्रदशमाहरङ्गस्य मानसस्य प्राप्तिरित्यर्थः। एवं च **द्वादशाहान्तर्वर्तिनो दशरात्रस्य यद्दशममहस्तदङ्गस्येति ग्रन्थार्थो** बोध्यः। एतच्च सर्वं **यथा दशरात्रस्य दशमेऽहनीति भाष्ये** स्वतन्त्रदशरात्र एव स्वरसतोऽवगम्यत इति मनसि निधाय। यदा तु द्वादशाहमध्यगतदशरात्र एव भाष्ये निर्दिष्टः। तदानीमतिदेशगवेषणमपि न कर्तव्यमिति ध्येयम्।

फलभेदस्य न प्रयोगभेदकत्वमिति शङ्कते—**ननु फलार्थस्यापीति।**
P. 842-3 अग्नित्वदर्शनस्य क्रियाङ्गं किञ्चिदनाश्रित्य विधानमेव दर्शयति—**षट्त्रिंशतै-**

---

१. कल्पतरौ 'द्वादशाहस्य स्तूयमानत्वात्' इति पाठः।

२. टीकायां 'विसर्गोऽन्तोऽन्तर्गतः' इति पाठः।

३. कल्पतरौ 'इति श्रुते'रिति पाठः। टीकायां 'नत्वैवमर्थवत्त्वे संभवती'ति पाठः।

मिति। 'षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नी'निति श्रुतेरथमर्थतो निर्देशः। ननु 'पूर्वविकल्प' इत्यादिपूर्वपक्षसूत्रे पूर्वविकल्पशब्दः पूर्वोक्तप्रसिद्धाग्निप्रकारविलक्षणोऽयं प्रकार इत्येवं भाष्ये व्याख्यातो, न तु विकल्पपरतया। तथा च कथं यदुक्तमित्यादिटीकेत्यत आह—क्रियानुप्रवेशमात्रमिति। P. 842 4

प्रसिद्धाग्निकार्ये आहवनीयधारणे मानसाग्नेरसामर्थ्येनातुल्यकार्यत्वेन प्रसिद्धेन चित्याग्निना सह विकल्पासंभवस्य स्पष्टतया स पक्षो मन्द इति क्रियानुप्रवेशमात्रमेव विवक्षितं पूर्वपक्षिणः। तच्च दूषितम्। स यद्यनास्थया विकल्पं ब्रूयात्, तर्हि स दूषित इत्याहेत्यर्थः। तथा च 'पूर्वविकल्प' इति पूर्वपक्षसूत्रे पूर्वेण सह विकल्प इत्यस्यार्थस्य स्पष्टत्वात्, तत्सिद्धवत्कारेणैव भाष्यकारैरर्थान्तरवर्णनेन दृढः पूर्वपक्षः प्रदर्शितः। अन्यथा सूत्रे विकल्पशब्दप्रयोगो निरर्थक एव स्यात्। पूर्ववदित्येव वक्तव्यत्वात्। सिद्धान्ते च विवक्षितपक्षनिरासानन्तरमनास्थाप्रवृत्तोऽप्ययं पक्षोऽनूद्य निरस्यत इत्यभिप्रेत्य टीका प्रवृत्तेति भावः।

प्राप्तिप्रकारमाहेति। किं राज्ययोगाद्राजा भवति? किं वा राजयोगाद्राज्यम्? इति तदर्थसंशयं सिद्धवत्कृत्य, पूर्व(पक्ष)कोटिमादाय त्रयाणामपि वर्णानामवेष्टौ प्राप्तिप्रकारमाहेत्यर्थः। ननु राज्यकर्तृत्वमपि क्षत्रियस्य धर्मो नेतरयोः। तथा च कथं तयोः प्राप्तिरित्यत आह—तर्हि त्रयाणामिति। अन्यधर्मस्यापि रागादनुष्ठानसंभवादस्ति तयोरपि राज्यकर्तृत्वेन राजसूये प्राप्तिरित्यर्थः। तदङ्गेति। तदन्तर्गतेत्यर्थः। विपर्ययप्रसङ्गादिति। लौकिकव्यवहारस्य यथाकथञ्चिदपि संभवेन तेषां शब्दार्थसम्बन्धनियमे आदराभावाद्विप्लुतिः इत्यर्थः। बाधकाभावान्न विप्लुतिशङ्केत्याह—तदर्थसम्बन्धे चेति। दृष्टान्तं विशदीकृत्य दार्ष्टान्तिकं योजयति—एवं यथेति। P. 844 3 P. 845-1

---

१. कल्पतरौ 'यदि ब्राह्मण इत्यादिः प्राप्तार्थत्वान्निमित्तार्थः' इति पाठः।

२. कल्पतरौ 'विप्लवप्रसङ्गात्' इति पाठः।

**टीकोक्तयोरविप्रतिपत्तिविप्रतिपत्त्योः** विषयभेदं दर्शयन् तात्पर्यमाह—**राज्यकर्तृमात्र इत्यादिना**। **शास्त्रसंहितेति**। शास्त्रसहितानामार्याणां प्रसिद्धयेत्यर्थः। **शास्त्रस्था वेति**। ये शास्त्रस्था आर्यास्तेषामेव प्रतिपत्तिर्ग्राह्या। शास्त्रनिमित्तकत्वात् तत्प्रसिद्धेः प्रबलत्वादिति सिद्धान्तसूत्रार्थः। **न काकमिति**। गवां वत्सभ्रान्त्यसंभवेन तदनुधावनाप्रसक्तेरित्यर्थः। केवलाया आर्यप्रसिद्धेः शास्त्रसहितया म्लेच्छप्रसिद्ध्या बाध इति शङ्कते—**नन्विति**। **शुक्लादिशब्देभ्य** इत्यनास्थया। जडादिशब्देभ्य इत्यर्थः। गुणवचनसूत्रे चेतनगतजाड्यादिगुणवचनानामेव ग्रहणेन तेषामनुदाहरणत्वात्। शौक्ल्यमित्यादिरूपं तु, 'वर्णदृढादिभ्यः ष्यञ्चे'ति सूत्रेण भावार्थे ष्यञ्प्रत्यये सतीति बोध्यम्।

P. 845-5

**राज्ञः कर्मेति**। ब्राह्मणादिषु राजशब्दस्य पाठादिति भावः। अतन्मूलत्वमात्रेण कथं बाध इत्यत आह—**प्रयोगमूला हीति**। प्रयोगमूलायाः स्मृतेरार्यप्रयोगमूलत्वासंभवे म्लेच्छप्रयोगमूलत्वमेव वक्तव्यम्। न च तत्संभवति, स्मृतिविरुद्धार्थकप्रबलप्रमाणविरोधे सति दुर्बलस्य न तन्मूलत्वमिति विरोधाधिकरणे व्युत्पादितत्वेन म्लेच्छप्रसिद्धेरार्यप्रसिद्धिविरुद्धाया मूलत्वायोगात्। ततश्च **मूलबाधेन स्मृतेरपि बाध** इत्यर्थः। आर्यप्रसिद्धेः म्लेच्छप्रसिद्धिबाधकत्वं किं स्वरूपकृताद्विशेषात्? किं वा यववराहशब्ददृष्टान्तबलात्? नाद्य इत्याह—**अनादीति**।

P. 845-18

न च मूलकृतविशेषाभावेऽपि विप्लुतिसद्भावासद्भावाभ्यामस्ति विशेष इति वाच्यम्। तत्र विप्लुतिग्राहकप्रमाणाभावात्। अभियुक्तपाणिनिस्मृतिविरोधेन हि गाव्यादिशब्देषु विप्लुतिरुन्नीयते। न शब्दार्थसम्बन्धेऽपि। तथात्वे पिकनेमादिष्वपि तथात्वापत्तिः। तत एवार्यप्रसिद्धिप्राबल्यसंभवे यवादिषु वाक्यशेषानुग्रहकथनवैफल्याच्चेति भावः। द्वितीयं निराकरोति—**यवादिशब्देषु त्विति**।

P. 847-1

१. कल्पतरौ 'राजत्वादवेष्टौ प्राप्तिः' इति पाठः।

२. संस्कृतेति मूले दृश्यते। 'फाल्गुनेऽन्यौषधीनां' इति वार्तिकश्लोके पाठः।

३. कल्पतरौ 'एवं राज्यशब्द इत्यर्थः' इति पाठः।

४. टीकायां 'कर्तृयोगाद्वा कर्मणीति' इति, 'तत्कर्मकर्तर्येतज्जातौ' इति च पाठः। कल्पतरौ 'सन्निबन्धनतया स्मृत्या' इति पाठः।

**वाक्यशेषानुग्रह इति** वक्तव्ये, वेदशब्दप्रयोगः, ननु वाक्यशेषाभावेऽपि 'सोमोऽस्माकं ब्राह्मणानां राजा' 'सोमो वा ओषधीनां राजे'त्यादिवेदानुगृहीतत्वात् आर्यप्रसिद्धेरिहापि प्राबल्यमिति शङ्कायां, 'राजानमभिषेचये'दित्यादिवेदस्यापि सत्त्वेन तदनुरोधेनैव एतस्य गौणत्वमेतदनुरोधेन तस्य वा गौणत्वमिति विनिगन्तुमशक्यतया नास्त्यनन्यथासिद्धवेदानुग्रह आर्यप्रसिद्धेरिति निराकरणार्थः। नन्वार्यप्रयोगापेक्षया स्मृत्या म्लेच्छप्रसिद्ध्यनुग्रहः (इति वाच्यम्।) [कथमिति चेदुच्यते] तया स्मृत्या राज्ञः सतः कर्म राज्यमित्यवगमे सति, राज्ययोगाद्राजेत्यस्य प्रसक्त्यभावेन, को राजा, यस्य कर्मणि ष्यञ्प्रत्यय इत्यपेक्षायां, म्लेच्छप्रसिद्ध्या जातिवाचित्वं निश्चीयत इति भवति तदनुग्रह इति भावः।

ननूभयोरपि प्रसिद्ध्योरनादिवृद्धव्यवहाररूढत्वेन विशेषाभावस्य प्रागुक्तत्वात् कथमिदानीमेकस्या अनादित्वमन्यस्यास्सादित्वं चोच्यत इत्याशङ्क्य, प्रकृते अनादित्वसादित्वे मुख्यत्वामुख्यत्वे विवक्षिते इत्याशयेनाह—**मुख्येत्यर्थ इति**। **गोगाव्यादिशब्दवदिति टीकया** गोगाव्यादिशब्दविषये यथा एका प्रसिद्धिर्मुख्या, अन्या अमुख्या, एवमत्रापीत्युक्तम्। तत्र फलितमर्थमाह—**गावीशब्दो हीति**। गावीशब्ददृष्टान्तेन प्रकृतेऽपि राज्यकर्तरि राजशब्दोऽसाधुरित्युक्तमिति मत्वा शङ्कते—**तत्किमिति**। अशक्तिजत्वात् गावीशब्दस्य गोत्वजातावसाधुत्वं नत्विहेति वैषम्येण परिहरति—**नेत्याहेति**।

P. 847-5

**क्रियाप्रकरणादिति**। क्रियामयाग्निप्रकरणात् इत्यर्थः। **अत एवाहुरित्यादिटीकामुत्तरार्धेन सह पठति—तदाहुरिति**। **परित्यागपक्षः प्रौढ्येति** मत्वा **पक्षान्तराणि** व्याचष्टे—**यदि रोचयेतेत्यादिना**। तद्विहितत्वादभिघारणस्य कथमनुष्ठानमित्यत आह—**अर्थाच्चेति**। **एकस्य** यजमानस्य। **अपरस्य** अभिघारणस्य। ननु राजपदं किमिति कर्तृविशेषणमाश्रीयते। प्रधानभूतस्वाराज्यकामविशेषणमेव किं न स्यादित्यत आह—**स्वाराज्यकामस्येति**। उद्देश्यविशेषणे वाक्यभेदापत्तेः विधेयकर्तृविशेषणमेवेत्यर्थः।

P. 847-18

अन्नाद्यकामाधिकारे राजपदानुवृत्तिः किं स्वरूपेणैवोच्यते? किं वा 'एतये'त्यनेन राजकर्तृकाया एवेष्टेः परामर्शेन फलतो राजपदानुवृत्तिरिति? नाद्य

१. कल्पतरौ 'निधायाहुतिमाहुतिं हुत्वा' इति पाठः।

P 843-3 इत्याह—**न ह्यधिकारेति**। द्वितीयमनूद्य निराकरोति—**यदुच्येतेत्यादिना**। आद्यन्तवाक्यपठनेन विषयं दर्शयति—**आग्नेयोऽष्टाकपाल इति**। तत्र राजसूयमध्यगतं प्रयोगमभिप्रेत्य संशयं दर्शयति–**तत्रेति**। **आग्नेयादिहविष्ष्विति**। आग्नेयैन्द्रवैश्वदेवादिहविष्ष्वित्यर्थः।

ननु दक्षिणाभेदेन प्रयोगभेदस्य स्पष्टत्वात् कथं पूर्वःपक्ष इत्यत आह–**तत्रेत्यादिना**। एकवचनलिङ्गदर्शनाभ्यां बहिःप्रयोगस्य तन्त्रत्वे, तदनुरोधेन दक्षिणाशब्दस्य दक्षिणैकदेशपरत्वान्न प्रयोगभेद इति बहिरिव राजसूयमध्येऽपि तन्त्रेणैव प्रयोग इति पूर्वः पक्षः इति भावः। अवेष्टे राजमात्रकर्तृकराजसूयमध्यप्रयोगापेक्षया वर्णत्रयकर्तृकस्य बहिःप्रयोगस्य भिन्नतया तत्रैकवचनलिङ्गदर्शनानुरोधेन दक्षिणाभेदेऽप्यगत्या प्रयोगैक्यमाश्रितम्। न त्विह दक्षिणाभेदावगतप्रयोगभेदपरित्यागे किञ्चित्प्रमाणमस्तीति सिद्धान्तमाह–**अर्थाद्यकामेत्यादिना**।

एवमधिकरणमुपवर्ण्य, द्वैतीयीकाधिकरणानुक्रमणस्य प्रसक्तिं संपादयितुं भाष्योदाहृतं सूत्रमवतार्य व्याचष्टे—**तत्र क्रत्वर्थाया(मपी)[मवेष्टावि]**

P. 849 1 **त्यादिना**। **विरुद्धत्वमिति**। वर्णत्रयसंयोगो हि मध्यनिधानप्रापणद्वारा बहिरिष्टौ प्रयोगैक्यसाधकत्वेनोपन्यस्तः। अर्थाच्च तदभावादन्तरिष्टौ प्रयोगभेदः फलति। तथा च वर्णत्रयसंयोगहेतोरन्तरिष्टावपि सत्त्वेन तत्र फलितप्रयोगभेदाभावापादकत्वात् **विरुद्धत्वमित्यर्थः**।

नन्वेवमपि भाष्यमसङ्गतम्। प्रकरणादुत्कर्षस्य प्रदर्शनीयतया तदर्थं द्वैतीयीकाधिकरणस्यैव प्रदर्शनीयत्वादित्याशङ्क्य, द्वितीये 'यदि ब्राह्मणो यजेते'-त्यादिवाक्यानां कर्मान्तरत्वविधायकत्वसमर्थनेऽपि भाष्यमसङ्गतम्। प्रकरणादुत्कर्षःकाम्यप्रयोगस्य क्रतुप्रयोगाद्वैलक्षण्यसिद्ध्यधीन इति प्रयोगभेदसाधकसूत्रो-

P. 849-2 दाहरणं सङ्गतमेवेत्याह—**एकप्रयोगत्वेति**।

---

१. कल्पतरौ 'फलवदङ्गभावाभावप्रसङ्गात्' इत्यस्यायमर्थः—अङ्गानामपि फलवत्त्वापत्त्या अङ्गित्वसंभवात् फलवदङ्गिनं प्रति अङ्गभावस्याभावप्रसङ्गादिति। इति भाति।

२. कल्पतरौ 'हिरण्यं दक्षिणा' इत्यस्यानन्तरं 'ऐन्द्रमेकादशकपालमृषभो दक्षिणा, वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा, मैत्रावरुणीमामिक्षां वशा दक्षिणा' इत्येतत् त्रुटितम्।

३. कल्पतरौ 'इदं लिङ्गदर्शनादि न क्रत्वर्थं' इति, 'वर्णत्रयसंयोगादि' इति, 'द्वितीयगताधिकरण' इति, 'एकप्रयोगत्वलिङ्गस्य' इति च पाठः।

षट्त्रिंशतं सहस्राणी'त्यादिविषयवाक्यं व्याचष्टे—**पुरुषायुषस्येत्यादिना**। नन्वेतेषां मनश्चिदादीनां अग्नित्वसंपादने सांपादिकाग्निचित एकत्वादग्निचित इति कथं बहुवचनेन निर्देश इत्यत आह—**प्रतीन्द्रियवृत्तीति**। 'इमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृति'रिति श्रुतिं व्याचष्टे—**तेषामेवेति**। 'ते मनसैवाधीयन्त' इति श्रुतिं व्याचष्टे—**तेऽग्नय इति**। **आहिता इति**। यद्यप्याधानविषयत्वं न चितानामग्नीनां संभवति। तस्याहवनीयादिनिष्पादकत्वात्, तथापि चितानामग्नीनां तदुपरि स्थाप्यस्याहवनीयस्याभेदविवक्षया तथा निर्देशः श्रुताविति भावः। **एष्वग्निषु चितेषु सत्सु, ग्रहा अगृह्यन्तेत्यर्थः**। P. 849.4

**यत्किञ्च यज्ञे कर्मेति**। साग्निचित्ये यज्ञ इत्यर्थः। तथा, चयनमपि मानसे चित्येऽग्नौ मानसः क्रतुरपि विहितः। अन्यथा स्तोत्रशस्त्रादिकल्पनावैफल्यात्। नचैवं मनश्चिदादीनां स्वातन्त्र्यसाधनविरोधः। क्रियानङ्गत्वमात्रेण क्रियामयाग्निप्रयोगात् पृथक्प्रयोगसिद्ध्या स्वातन्त्र्याविरोधात्। स च क्रतुर्मनश्चिदादीनां फलार्थप्रवृत्तानामाश्रयत्वेनोपकरोति। 'तेषामेकैक एव तावान् यावानसौ पूर्व' इति क्रियामयाग्निसाध्यस्य 'पशुकामश्चिन्वीते'ति वाक्यबोधितस्य पशुफलस्य विद्यामयाग्निष्वतिदेशेन तेषां फलार्थत्वात्। तथा चाग्रिमाधिकरणे भाष्यं '**मनश्चिदादीनां पुरुषार्थत्वं वर्णित**'मिति। 'अयं वाव लोक एषोऽग्निश्चित' इति श्रुतिं व्याचष्टे—**योऽग्निश्चित इति**। P. 849-13

॥ इति लिङ्गभूयस्त्वाधिकरणम् ॥

---

१. अस्मिन्नधिकरणे भाष्ये अन्ते 'न शुद्धकर्माङ्गविधित्वं' इत्यस्य कर्माङ्गावबद्धत्वेऽपि न कर्माङ्गत्वं लोकदृष्टेरिति भावः। 'अग्निना अनुबध्यते' इत्यस्य चित्याग्निसमीपे पठ्यते इत्यर्थः।

२. कल्पतरौ 'एतावत्संख्याकेष्टका मनसाऽग्नित्वेन' इति पाठः।

## ॥ अथ आत्मशरीरातिरेकाधिकरणम् ॥

### सू०॥ एक आत्मनश्शरीरे भावात् ॥ ५३ ॥

### सू०॥ व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥

P. 849-15 प्रमाणाध्याये कस्य वाक्यस्य प्रामाण्यं समर्थयितुमपकर्षः कृत इतः? इत्यत आह—यज्ञायुधीति। यज्ञसाधनानि स्रुक्चकपालादीनि यज्ञायुधानि, तद्वान् यज्ञायुधी। दहनकाले शरीरे आसादितैस्तैः दग्ध इत्यर्थः। ईहेत्युपादानाद्वक्तीति वक्तव्ये, कथं वक्ष्यतीति टीकेत्यत आह—वक्ष्यतीति। भाष्ये कोऽसाविति किंशब्दस्याक्षेपार्थकत्वं दर्शयन् आह—मनश्चिदादीनामिति। यद्यपीत्यादिग्रन्थस्य देहाचैतन्यानुमानप्रदर्शने, तथापीत्यादिग्रन्थस्य तत्र बाधोन्नीतपक्षेतरोपाध्युद्भावने च तात्पर्यं दर्शयति—देहो न चेतन इति। घटादिदृष्टान्तबलेन देहस्याचैतन्ये, जलादिदृष्टान्तबलेन मदिराया मदकरत्वमपि न P. 850-9 स्यादित्येवंरूपं प्रतिकूलतर्कमेव दर्शयति—यदि समस्तेति।

नन्वहमर्थस्य धर्मश्चैतन्यमिति निर्विवादम्। अहमर्थो न देहः। तथा च कथमनुमानस्य बाध इति शङ्कते—नन्विति। अहमर्थो देह एव नान्य इति परिहरति—तत्राहेति। देहाहमर्थावाश्रयाश्रितरूपेण भिन्नाविति पक्षे, तादात्म्यप्रतीतिनिर्वाहः किं देहधर्माणां आत्मनि भानात्, किं वा आत्मधर्माणां देहे भानात् इति विकल्प्य प्रथमनिराकरणे हेतुमाहेत्याह—अत्र हेतुमाहेति। तस्मादिति। अहंप्रत्ययविषयस्यात्मनो देहधर्मैस्तादात्म्येनानुभवादित्यन्वयः। द्वितीयं निराकर्तुमुत्तरटीकेत्याह—यच्चेत्यादिना। टीकायामहम P. 851-9 इति। अहंपदार्थस्येत्यर्थः। देहव्यतिरिक्तात्मानुमानस्येति। देहो न चेतन इत्यनुमानस्य, फलतो देहव्यतिरिक्तात्मसाधकत्वादिति भावः।

---

१. टीकायां 'येन पुनरुक्तं भवेत्' इति पाठः' कल्पतरौ 'अतश्शब्दं पूरयती' त्यत्र पूरयतीत्यस्य यत इत्यादिपूरणेन व्याख्यातीत्यर्थः।

२. कल्पतरौ 'देहान्यत्वमुपाधि'रिति शोधनीयम्।

३. कल्पतरौ 'श्वैत्यादीनि' इति पाठः' पूर्वं 'अत एवाहमर्थस्य' इति पाठः।

शङ्कितव्यभिचारत्वमाहेति । व्यभिचारशङ्कया व्याप्तिग्रहासंभवेनानुमानाप्रामाण्ये कथिते प्रकृतानुमानेऽपि व्यभिचारशङ्काकलङ्कितत्वस्य कथितप्रायत्वादिति भावः । अप्रत्यक्षमात्मतत्त्वमनुमानादिभिः उन्नेतुं न च शक्यमिति टीकान्वयमभिप्रेत्याह—अप्रत्यक्षमिति । श्लोके वस्तुशक्तिवैलक्षण्यकथनेन फलितमर्थमाह—व्याप्तिग्रहणदेशादाविति । लिङ्गस्य स्वाधिकरणे साध्यापादकव्याप्तिप्रत्यक्षोपोद्बलितत्वं दर्शयितुं उपलब्धिसाध्येत्यादिविशेषणमिति दर्शयति—उपलब्ध्येति । व्यापकमन्तरेण लिङ्गं न भवतीत्यन्वयः । न तिष्ठतीत्यर्थः । P. 851-10

लिङ्गनिराकरणेनैव सिद्धौ किमित्यर्थापत्तेः पृथङ्निराकरणमित्यत आह—अर्थापत्तेरिति । उपमानस्य च कृत्स्नैकदेशसादृश्यविकल्पितस्य कैव कथेत्युक्तम् टीकायां, तत्र शाबरोपमाने विकल्पं दर्शयन्नाह—गोसदृशमिति । सौत्रस्तु हेतुरिति टीकायां सूत्रे कण्ठोक्तो हेतुरि(त्युक्त्या)[त्यर्थात्] सूत्रसूचितो हेतुः स्वेन व्याख्यात इत्युक्तम् । तं प्रकटयन्नाह—सूत्र इत्यादिना । सदुपलंभकेति[2] । भावग्राहकेत्यर्थः । संभावनया यत्किञ्चिदाश्रितत्वमिच्छादीनां कल्प्यम् । सा च संभावना प्रत्यक्षसिद्धदेहैकदेश एव प्रवर्तते, न तदतिरिक्त आत्मनीत्यर्थः । न हीदमियँत इति संमतिग्रन्थं व्याचष्टे—इदं प्रत्यक्षमिति । संप्रतिपत्तिमानिति । समीचीनप्रतिपत्तिमानित्यर्थः । P 851-19

एवमिति । 'नाप्रत्यक्षं प्रमाण'मिति प्रतिज्ञाव्याघातं परबोधनार्थं प्रवृत्तिव्याघातं चोक्त्वा लोकव्यवहारविरोधमाहेत्यर्थः । प्रवृत्तिनिवृत्त्योः प्रत्यक्षत्वादनुमानगोचरत्वमनुपपन्नमित्यत आह—अनुमानेति[4] । नन्वोदनविषादेरेव प्रवृत्तिनिवृत्तिगोचरत्वं, नेष्टसाधनत्वादेरित्या-

---

१. कल्पतरौ, 'धूमादिलिङ्गेन प्रसिद्धिरतिदुर्लभा । कुतः ?' इति, उपरि 'हस्तियूथमित्यादौ' इति च पाठः ।

२. कल्पतरौ 'सदुपलंभके'ति शोध्यम् । अभावप्रमाणस्य । प्रमाणाभावरूपप्रमाणस्येत्यर्थः । टीकायां 'तदाश्रयस्यानुपलब्धेः' इति पाठः ।

३. टीकायां 'अप्रतिपन्नविप्रतिपन्नसंदिग्धाः' इति पाठः । उपरि 'तदेवं मा नाम' इति पाठः ।

४. कल्पतरौ 'प्रवृत्तिनिवृत्तिगोचरश्च' इति पाठः ।

P. 852-10 शंक्य, स्वरूपेण तेषां तद्गोचरत्वायोगेन इष्टसाधनत्वेन ज्ञायमानत्वं पुरस्कृत्यैव तद्गोचरत्वादस्ति इष्टसाधनत्वादेरपि तद्गोचरत्वमित्याशयेन आह—**अयमोदन इति । अनिष्टसाधनत्वेति ।** इदं विषमनिष्टसाधनं, विषत्वात्, यज्ञदत्तभक्षितविषवदित्याद्यनुमानादित्यर्थः ।

मूकत्वं शब्दोच्चारणाभावः । तत्र हेतुमाह—**शब्दप्रामाण्यानिष्टेरिति ।** अन्वयमुखेन विशिष्य व्याप्तिग्रहासंभवे, व्यतिरेकमुखेन सामान्यधर्मपुरस्कारप्रवृत्तव्याप्तिग्रहमादायापि अर्थापत्तिसंभवान्न दोष इति परिहरति—**तत्राहेतिं ।** वह्नेर्दाहशक्तिमन्तराऽनुपपद्यमानं यद्देहावयवगतं स्फोटादिकार्यमित्यर्थः । **किं तु बहुतरेति ।** बहुतरधर्मनिरूपितसादृश्यज्ञानमित्यर्थः ।

ननु सूत्रे आत्मनो देहव्यतिरेकप्रतिज्ञया कथं तद्भावाभावित्वादिति हेतोरन्वय इत्यत आह—**इह हि सूत्रकारेणेति ।** 'आत्मा देहाद्व्यतिरिक्तः, देहाधर्मज्ञानवत्त्वात्, यो यदधर्मधर्मवान् स ततो व्यतिरिक्त' इति प्रथमानुमाने विशेषणासिद्धिं परिहर्तुं प्रवृत्ते 'ज्ञानं न देहधर्म' इत्यनुमाने अयं हेतुरुक्त इति भावः । ननु 'ये विशेषगुणास्ते यावद्द्रव्यभाविन' इत्येव व्याप्तिस्संभवति । नास्तिकमते भूतचतुष्टयव्यतिरिक्तस्य कस्यचिद्द्रव्यस्याभावेन व्यभिचाराप्रसङ्गात् । तथा च भूतविशेषणं व्यर्थमित्याशंक्य, स्वमतानुरोधेन

P. 853-3 व्यभिचारवारणाय तद्विशेषणमित्याह—**यदा नित्यस्येति ।**

ननु सिद्धान्ते चैतन्यस्यैवात्मतया कथं गुणगुणिभाव इत्यत आह—**सिद्धान्तेऽपीति ।** भूतविशेषगुणेऽपि शब्दे व्यभिचार इत्यत आह—**शब्दस्य चेति ।** तस्मादित्युपसंहारटीकोक्तमनुमानं स्पष्टयति—**तदयमिति । किं तु निमित्तत्वेनेति ।** मृतावस्थायां सत्यपि देहे अभवतः प्राणादेस्तदतिरिक्तनिमित्तकत्वावश्यंभावादिति भावः । ननु देहातिरिक्तमदृष्टमेव तन्निमित्तमस्तु, किमात्मनेति शङ्कां निराकर्तुमदृष्टकारणत्व इत्यादिटीका । तत्र परि-

P. 853-10 हारांशमुपादाय व्याचष्टे—**तस्यापीति । गुणत्वे सतीति ।** गुणत्वविशिष्टं यद्देवदत्तेतरप्रत्यक्षत्वं तद्रहितत्वादित्यर्थः ।

---

१. कल्पतरौ 'प्राणादयो न स्वसमवायित्वेने'ति पाठः ।

२. कल्पतरौ 'विशेषणाभावेऽपि विशिष्टाभावात्' इत्यस्य—विशेष्याभावे यथा विशिष्टाभावः, तथा विशेषणाभावेऽपि विशिष्टाभावादित्यर्थः ।

**देहगतगुरुत्वादाविति।** एतच्च स्वमतेन। परमते स्वपरप्रत्यक्षस्य P. 853-12 संयोगविशेषादेरेव गुरुत्वादिरूपतया तत्र हेतोरेवाभावात्। तथा च वक्ष्यति—'इच्छाद्यतिरिक्तस्वपराप्रत्यक्षपदार्थस्य परेषामसिद्धत्वेने'ति। यथाश्रुते किमन्वयदृष्टान्तो विवक्षितो व्यतिरेकदृष्टान्तो वा? नाद्य इत्याह—**इच्छाद्यतिरिक्तेति।** न च देवदत्तेच्छादीनामेव पक्षतया यज्ञदत्तेच्छादीनां दृष्टान्तत्वे बाधकाभाव इति वाच्यम्। **इच्छादयस्तु (स्व) प्रत्यक्षा एवेति टीकया** इच्छादीनामविशेषेणैव पक्षत्वावगमात्। न च हेतौ परग्रहणबलादिच्छादीनां विशिष्यैव पक्षत्वं दर्शितम्, अन्यथा सर्वस्यापीच्छाश्रयस्य स्वत्वेन परशब्दार्थाभावादिति वाच्यम्। सामान्यरूपेण पक्षत्वेऽपि विशेषाभिप्रायेण परग्रहणसंभवादिति भावः।

न द्वितीय इत्याह—**वैधर्म्यमात्रस्य चेति।** व्यतिरेकयोर्व्याप्तिग्रहे सत्यपि अन्वययोर्व्याप्तिग्रहाभावे गृहीतव्याप्तिव्यतिरेकवैधर्म्यमात्रस्याकिञ्चित्करत्वादित्यर्थः। व्यतिरेकसहचारेणान्वयव्याप्तिग्रहो यत्र संभवति, तत्रैव व्यतिरेकदृष्टान्तस्योपयोगो नान्यत्र। अन्यथा आकाशाभावकालाभावयोः व्याप्तिग्रहे भूतलादिकं दृष्टान्त इति तत्प्रतियोगिनोरपि तद्ग्रहापत्तेः। अत एव केवलव्यतिरेक्यनुमानं नास्तीत्येव केचिदाहुरिति भावः।

**भूतेष्वयावद्भूतभाव्यपीति।** भूतेषु कार्त्स्न्येनावर्तमानमपीत्यर्थः। P. 854-1 सकलभूतावर्तीति यावत्। यद्यपि समस्तव्यस्तेष्विति पूर्वपक्षटीकायां देहातिरिक्तभूताद्यवृत्तित्वस्यैवोक्ततया, तस्यैवानुवाद्यत्वात्। **यावद्देहभावित्वानुमानवदिति।** यावद्देहभावित्वापादनवदित्यर्थः। अनुमानसदृशत्वात् तर्क एवानुमानशब्देनोक्तः। एवमुत्तरत्राप्यनुमानपदमापादनपरम्। चैतन्ये विशेषगुणत्वेन यावद्देहभावित्वानुमानस्य प्रागनुक्तत्वेन दृष्टान्तत्वायोगात्। चैतन्ये यावद्देहभावित्वसकलभूतवर्तित्वयोः बाधितत्वेनानुमानासंभवाच्च। तथा च यदि चैतन्यं देहविशेषगुणः स्यात्, यावद्देहभावि स्यादिति तर्कवत्सकलभूतवर्ति स्यात्, इत्यप्यापादनादित्येव ग्रन्थार्थः।

अत्र **टीकायां यदि चैतन्यमपीति** कश्चित्पाठः। स तु स्वरसः। कश्चित्तु तत्र यद्यपीति। स पाठः प्रतीकतया गृहीतः। तं व्याचष्टे—**पराप्रत्यक्षत्वेनेति।** P. 854-3 अस्मिन् पक्षे यावद्भूतमनुवर्तेत इत्यापादनबलादेव

P. 851-4 यदिशब्दलाभ इति भावः । **अयावद्राश्रयेति** । [अ]सकलाश्रयेत्यर्थः । **दृष्टान्तवैषम्यमिति** । रूपादिदृष्टान्तापेक्षया मदशक्तिलक्षणस्य सामर्थ्यस्य सामान्यगुणत्वलक्षणं वैषम्यमुक्तमित्यर्थः । ततश्च विशेषगुणत्वघटितस्यापादकस्यैवाभावात् न व्यभिचार इति भावः । **परिणामधर्मत्वमिति** । द्रव्यस्य पूर्वावस्थातोऽवस्थान्तरापत्तिलक्षणधर्मत्वमाश्रित्य । नतु कूटस्थद्रव्यधर्मत्वमित्यर्थः ।

**इदं चेति**[1] । 'यो यत्परिणामधर्मः, स तदवयवधर्म इत्येतदभिप्रायं अपि चेत्यादिटीकोक्तं युक्त्यन्तरमभ्युच्चयमात्रम् । क्रमुकनागवल्लीदलचूर्णत्रितयपरिणामताम्बूलधर्मस्य मदजनकत्वस्य तदवयवे चूर्णे अभावेन व्यभिचारादिति भावः । व्यभिचारमेव दर्शयति—**चूर्णे इति** । चूर्णं ताम्बूलपर्णपूगफलाभ्यां मिलित्वा ताम्बूलाकारेण परिणतं मदमुपजनयति । तत्र च केवले चूर्णे मात्रयापि मदजनकत्वादर्शनादित्यर्थः । न च तत्रापि तद्योग्यता अस्तीति वाच्यम् । केवलस्य चूर्णस्य मदहानिकरत्वदर्शनेन तत्र योग्यताकल्पनस्य विरुद्धत्वादिति भावः । **तस्मात्प्रस्तुतेति** । यदि देहगतं चैतन्यं किण्वादिगतमदशक्तितुल्यं स्यात् । तर्हि तद्वदेव तदवयवेष्वपि मात्रयावतिष्ठेत । तथा च बहवश्चेतयेरन्नित्येवं प्रस्तुतकिण्वाद्युदाहरणपरमेतद्युक्त्यन्तरमित्यर्थः ।

**भूतधर्मा रूपादय इत्यादिटीकया यदि चैतन्यं भूतधर्मः स्यात् । रूपादिवत् विषयि न स्यादिति** तर्को दर्शितः । तत्सूचितमनुमानं स्वयं दर्शयन्नुपलब्धिवदिति सूत्रावयवभाष्यस्योपलब्धेः स्वरूप इव तस्य देहव्यतिरेकेऽपि प्रत्यक्षोपलब्धिः प्रमाणमित्येवमभिप्रायकथनपरटीकावाक्यस्य तत्रोपयोगं दर्शयन्नवतारयति—**देवदत्तचैतन्यमित्यादिना** । औपाधिकोऽपि भेदो मिथ्याभूतः? सत्यो वा ? नाद्यः । इष्टापत्तेः। तावता वस्तुत उपलब्धेर्नाना-

P. 855-2 त्वासिद्धेः । न द्वितीय इत्याह—**अध्यासभाष्य इति** ।

---

१. अत्र कल्पतरौ 'इदं च अभ्युच्चयमात्रं, चूर्णे केवले मात्रयाऽपि मदजनकत्वादर्शनात् । तस्मात् प्रस्तुतपरमेतत् ।' इति ग्रन्थभागः त्रुटित इति आभोगप्रतीकधारणादूह्यते। परिमलेऽपि प्रतीकधारणं दृश्यते। स च त्रुटितो भागः कल्पतरौ 'किमात्मक'मिति ग्रन्थात् पूर्वं ज्ञेयः ।

२. टीकायां 'विरुद्धदिक्क्रियाभिमुखाः' इति, 'न किंचित् कर्तुमुत्सहेत' इति, 'स्वयंप्रकाशत्वप्रत्ययेन' इति पाठः । कल्पतरौ 'देहधर्मत्वग्राहिणोऽनुमानस्य' इति पाठः ।

द्वयोरपि **टीकावाक्ययोर**भिप्रायमाह—**उपलब्धीति**। **वित्तेरिति**। P. 855-6 न तावद्घटतन्निष्ठभेदयोर्युगपदेकवित्तिविषयत्वं संभवति। घटस्य वित्तौ घटस्य विधेयतया, तन्निष्ठपटादिप्रतियोगिकभेदवित्तौ च भेदं प्रति उद्देश्यतया युगपदेकनिरूपितविरुद्धरूपद्वयासंभवात्। क्रमादेकवित्तिविषयत्वे च वित्तेः प्रथमं घटविषयकत्वं, पश्चाच्च तन्निष्ठभेदविषयकत्वमिति विरम्य व्यापारप्रसङ्ग इत्यर्थः।

**प्रतियोगिभेदसिद्ध्योरिति**। 'घटः पटो ने'त्यत्र हि पटप्रतियोगिकत्वेन भेदो भासते, तच्च प्रतियोगित्वेन पटज्ञानाधीनम्। तच्च भेदज्ञानाधीनं, प्रतियोगित्वस्य भेदनिरूप्यत्वात्। ततश्च **परस्पराश्रय** इत्यर्थः। शरीरे सति भावात् तद्धर्मत्वं चैतन्यस्येति यो वदति, तं प्रति नेदं **भाष्यम्**। किं तु, शरीरे व्याप्रियमाणे सति भावादिति यस्तु वदति, तं प्रतीति न दोष इति परिहरति—**इत्याशङ्क्याहेति**। P. 855-9

॥ इति आत्मशरीरातिरेकाधिकरणम् ॥

---

## ॥ अथ अङ्गावबद्धाधिकरणम् ॥

### सू०॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥

### सू०॥ मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥

**स्वरादीत्यादिशब्देन** वर्णभेदः चित्याग्न्यादिप्रकारभेदश्च गृह्यते। सिद्धान्तपूर्वपक्षकोट्योरुत्थितौ क्रमेण हेतू दर्शयन्नाह—**उद्गीथादीति**। पूर्वाधि- P. 856-2 करणस्य प्रासङ्गिकत्वात्तेन सङ्गतिः नालमिति व्यवहिताधिकरणेनापि तामाह—**अथवेति**। अथशब्दः प्रारम्भार्थः। तथा च वक्ष्यमाणं चेति तदर्थः। अत एव वक्ष्यति—**सङ्गतिद्वयमिति**। **प्रकरणोपनीतेति**। संनिध्युपनीतेत्यर्थः। **संनिधेरित्यस्य** व्याख्यानं **स्थानादिति**। **श्रुत्यर्थाविति**। [श्रुति] समर्पितौ P. 856-3

---

१. कल्पतरौ 'उपलब्धेरिष्टप्रसंगता'मित्यत्र 'आपत्तेरिष्टप्रसंगता'मित्युचितमिति भाति। 'तस्याव्यापकत्वादित्याह' इत्येतत् 'तस्याप्रकृतत्वादित्याह' इति शोधनीयमिति भाति।

२. कल्पतरौ 'विशेषाकांक्षत्वेनाबाधकत्वात्' इति, उपरि 'शाखान्तरीयास्वीकारेऽपि' इति, 'श्रुतां पटत्वजातिं' इति च पाठः।

P. 856-9 शक्यलक्ष्यार्थावित्यर्थः। **भट्टोक्तिमाहेति**। श्रुतेः स्वरूपबाधलक्षणपीडाभावेऽपि सङ्कोचलक्षणा पीडा अस्त्येवेत्याशङ्कां, तादृशी पीडा अप्रयोजिकेति दृष्टान्तबलेन निराकर्तुं **भट्टोक्तिमाहे**त्यर्थः।

दृष्टान्तवैषम्यं विदर्शयन् **सिद्धान्तटीका**मवतारयति—**दृष्टान्त इत्या-दिना**। **सर्वशाखास्वुपासनोपसंहार इति**। ओङ्कारादौ स्वरवर्णादिभेदभिन्न-तत्तच्छाखागतोद्गीथावयवत्वाद्युपसंहार इत्यर्थः। ननु दृष्टान्तेऽपि शुक्लपदसमभि-व्याहारलक्षणेन वाक्येन सङ्कोचः[श्रुतेरयुक्त इत्याशङ्क्य] श्रुत्यनुमतमेव (तादृशस्य) [तत। श्रुत्या]वाक्यस्य बाधे विशिष्टार्थप्रत्यायनरूपप्रयोजनासि(द्धि)[द्धे]रिति परि-हरति—**तत्राहेति**। विशिष्टार्थप्रत्ययस्य पदप्रयोजनत्वमुपपादयति। **व्यवहारार्थं हीति**। किं पदार्थस्मरणस्य वैयर्थ्यमाशंक्यते? किं वा तेन वाक्यार्थप्रत्ययस्य बाधः?। नाद्य इत्याह—**द्वारमिति**। न द्वितीय इत्याह—**यदिति**।

P. 857-8 **इति युक्तमिति उपसंहारटीका**भिप्रायमाह—**तदेवमित्यादिना**। ननु सामन्यश्रुतेर्विशेषमपेक्ष्यैव बोधकत्वात् कथम**विशेषेणेति टीके**त्याशंक्य, विशेषापेक्षत्वेऽपि सन्निहितविशेषस्वीकारे संकोचापत्तेः, शुक्लं पदमित्यादाविव समभिव्याहृतश्रुतिलक्षणसंकोचकाभावाच्च, अविशेषेण सर्वविशेषोपादानेनैव बोध-कत्वमिति तदभिप्रायमाह—**अशुक्लमिति**। **मन्त्रादिसूत्रटीकां** पूर्वोत्तरविरोधं परिहरन्नवतारयति—**एकशाखागतस्येति**।

'लोकेषु पञ्चविधं सामोपासीते'ति श्रुतिं व्याचष्टे—**लोकेष्विति**। अग्न्यादित्ययोरलोकत्वादाह—**लोकशब्द इति**। लोकशब्द एकभागवर्तित्वेन लोकालोकलक्षणाद्द्वारा तद्दृष्टिलक्षकः। सप्तमी च तृतीयार्था। ततश्च फलित-मर्थमाह—**पृथिव्यादीति**। तदेव श्रुतिप्रदर्शनेन विशदयति—**पृथिवी हिंकार इति**। 'उक्थमुक्थमिति वै प्रजा वदन्ति, तदिदमेवोक्थमियमेव पृथि-वी'ति श्रुतिं व्याचष्टे—**उक्थमिति**। 'ऋतवो वै प्रयाजास्समानत्र होतव्या'

---

१. कल्पतरौ 'श्रुतिर्विद्यते। अतश्च' इति पाठः।

२. कल्पतरौ 'श्रुतिमिति शेषः' इत्युक्तम्। टीकायामपि तत् श्रुतिमिति पदं वर्तते। टीकायां 'अपबाधितुमर्हति श्रुतिं, सामान्य' इति शोधनीयम्। अत एव कल्पतरौ 'श्रुतिसामान्येति' प्रतीकधारणं 'सामान्येति' इति शोधनीयम्। कल्पतरा-वुपरि 'एकशाखागतस्य' इति पाठः।

इति श्रुतेरभिप्रेतमर्थमाह—**प्रयोजा इति**। 'छागस्य वपाया मेदसोऽनुब्रूही'ति P. 858-14 मन्त्रं व्याचष्टे—**छागादेरिति**। छागसम्बन्धिनो वपाख्यस्य मेदस इत्यर्थः।

'यो जात एव प्रथमो मनस्वान्' इत्यस्यार्थमाह—**यो जात एवेति**। ननु 'यो जात' इति पञ्चदशर्चस्य सूक्तस्य कथं **भाष्ये सजनीयमिति** नाम्ना निर्देशः कृत इत्याशङ्क्य, चरमामृचं वर्जयित्वा अवशिष्टानामृचां अन्ते सजनपदस्य विद्यमानतया सजनपदवत्सूक्तं सजनीयमिति व्युत्पत्तिमाश्रित्येत्याशयेन मन्त्रे तत्सद्भावमाह—**सजनास इन्द्र इति शेष इति**। **शेषो** मन्त्रशेषः मन्त्रान्त इत्यर्थः। तत्र स इति भिन्नं पदम्, जनास इत्यत्र च छान्दसः असुगागम इत्याशयेनाह—**हे जना इत्यर्थ इति**।

॥ इति अङ्गावबद्धाधिकरणम् ॥

---

## ॥ अथ भूमज्यायस्त्वाधिकरणम् ॥

### सू०॥ भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥

**दृष्टान्तसङ्गति**मभिप्रेत्य पूर्वपक्ष इत्याह—**पूर्वत्रेति**। **तैत्तिरीय-** P. 858-8 **शाखोक्तं** विषयमर्थतः संग्रहेण दर्शयति—**वैश्वानरमिति**। किमष्टाकपालादि-शब्दैरष्टाकपालत्वादिगुणविधिः, किं वा कपालस्तुतिः। इति संशये, महासंख्या-यामवान्तरसंख्यानामन्तर्भूततया द्वादशकपालविधिनैव अष्टाकपालत्वादीनामपि प्राप्तत्वात् [स्तुत्यर्थतैव युक्तेति] कथं विधिरिति [पूर्वपक्ष इति] शङ्कते—**यद्य-पीति। तथापीति**। अष्टाकपालादिशब्दा हीतरनिरपेक्षाष्टत्वादिसंख्यापरिच्छिन्नत्वं कपालानां प्रतिपादयन्ति। अष्टसु कपालेषु संस्कृत इत्यर्थे विहितयोः द्विगुसमास-तद्धितयोः इतरनैरपेक्ष्यलक्षणे सामर्थ्ये सत्येव भावात्। तथा च द्वादशसंख्या-परिच्छिन्नेषु नाष्टत्वादिपरिच्छिन्नत्वं इत्यष्टाकपालत्वादीनामप्राप्तत्वात् युक्तो विधिः।

ननु कथमुत्पत्तिशिष्टद्वादशकपालत्वावरुद्धे अष्टाकपालत्वादीनां विधान-मित्याशङ्कां निराकर्तुमुक्तम्—**वैश्वानरेष्टाविति**। उत्पत्तिवाक्ये द्रव्यदेवतामात्र- P. 859-3 विशिष्टयागविधिरेव। न तु द्वादशकपालत्वस्यापि तत्र विधिः, वाक्यान्तरेणैव

---

१. कल्पतरौ 'समानत्र एकत्र' इति शोध्यम्।

तत्प्राप्त्या विशिष्टविधिगौरवाभ्युपगमायोगात्। तथा च सर्वेऽप्युत्पन्नशिष्टा इति विकल्प इति भावः। **उत्पत्तिशिष्टेति**। उत्पत्तिवाक्य एव द्वादशकपालत्व-विधिः। 'यद्द्वादशकपाल' इत्यस्य विधिविभक्तिरहिततया तद्विधायकत्वा-योगात्। उत्पत्तिवाक्यविहितद्वादशकपालस्तुत्यर्थत्वसंभवाच्च। तथा च तदु-त्पत्तिशिष्टमिति, नाष्टाकपालत्वादीनां विकल्पेन विधानं संभवतीत्यर्थः।

P. 859-4

उपक्रमोपसंहारैकरूप्यस्य फलमाह—**तेनेति**। अष्टत्वादीनामप्राप्तत्वात् कथं कृत्स्नं वाक्यमेकार्थविधिपरमित्यत आह—**अष्टत्वादीनि त्विति**। परिच्छे-दकत्वेनाप्राप्तत्वेऽपि, स्वरूपेण प्राप्तत्वात् स्वतन्त्राष्टाकपालादिवाचकैः अष्टा-कपालादिशब्दैः अष्टत्वादिसंक्रान्तकपालसंस्कृतपुरोडाशावयवलक्षणया यागस्तुत्यर्थं अष्टत्वादीन्यनूद्यन्त इत्यर्थः। न केवलमेकवाक्यताबलादेव स्तावकत्वम्, किन्तु विध्यश्रवणादपीत्याशयेनाह—**कॢप्तविधीति**।

P. 859-6

निन्दितत्वान्न व्यस्तोपासनेषु विधिः कल्पयितुमुचित इति शङ्कते—**तर्हीति**। निन्दाया अन्यथासिद्धत्वान्न फलवत्त्वेनावगतव्यस्तोपासनविधि-भञ्जकत्वमिति परिहरति—**अत आहेति**। **उदितहोमप्रारम्भ इति**। यावज्जीव-संकल्पपूर्वकमुदितहोमप्रारम्भे तत्त्यागे च सतीत्यर्थः। एवमुत्तरत्रापि योज्यम्। **अभ्युपेत्येति**। एककालनियममभ्युपेत्येत्यर्थः।

**न व्यस्तोपासनाविधिरिति**। कल्पनीय इति शेषः। तथा च, भूमविद्यायामुपक्रमोपसंहारयोरेकात्मविद्याविषयत्वेऽपि अवान्तरभेदकल्पनया यथा नामाद्युपासनानामपि विधानम्, तथा प्रकृतेऽपि व्यस्तोपासनानामपि विधान-मस्त्विति शङ्का निरस्ता। तत्र विधीनां कॢप्तत्वेन कल्पनीयत्वाभावात् तन्निन्दा-(पूर्ववाक्यस्था) [पूर्वं वा कस्याप्य] विधानात्। तत्र श्रुतानां फलानां ब्रह्मविद्यया असिद्धेश्चेति भावः। उपक्रमस्य व्यस्तोपासनापरत्वाभावं प्रकटयति—**व्यस्तो-पास्तीति**।

P. 860-6

॥ इति [2]भूमज्यायस्त्वाधिकरणम् ॥

---

१. अत्र टीकायां 'उभयत्रापि विधिकल्पनया फलकल्पनया च भेदात्' इति पाठः। उपरि टीकायां 'श्यामः श्वा आहुतिमभ्यवहरतीतिवत्' इत्यनन्तरं, तथा चेति शेषः। श्यावः इत्यपि पाठान्तरम्।

२. अस्मिन्नधिकरणे भाष्ये 'ज्यायस्त्वं प्राधान्यमस्मिन् वाक्ये विवक्षितत्वं' इति पाठः।

## ॥ अथ शब्दादिभेदाधिकरणम् ॥

### सू०॥ नाना शब्दादिभेदात् ॥ ५८ ॥

प्राक्तनविचारोपोद्घातत्वेन अस्याधिकरणस्य **सङ्गतिं** दर्शयितुं **सिद्धं कृत्वेत्यादिटीका** । तामुपोद्घातत्वं प्रकटयन्नवतारयति—**नन्विति** । P. 861-1 **अपूर्वसाधनमिति** । अपूर्वसाधनभूता या पुरुषप्रवृत्तिः इत्यर्थः । **यागादिनेति** । भावनायाः कृतिरूपतया विषयनिरूपणाधीननिरूपणकत्वादिति भावः । **तत्र हेतुरिति । सर्वत्र विद्यासु ब्रह्मणो वेद्यस्याभेद इत्यर्थः**। [**इत्यन्वयः**] तत्र स्वरूपेण भेदाभावे, गुणिनः **सिद्धत्वं** हेतुः । विशिष्टवेषेण भेदाभावे, गुणानां सिद्धत्वं हेतुरिति विवेकः ।

ननु गुणानां सिद्धत्वेऽपि यस्यां विद्यायां ये गुणा उपदिष्टास्तत्र तद्गुण-विशिष्टमेव वेद्यमिति वेद्यभेदः कुतो न भवेदित्याशङ्क्य, कतिपयगुणोपदेशस्थलीय-वेद्यस्यापि ब्रह्मणो गुणान्तरवैशिष्ट्यानपायात्, अर्थात् सकलगुणविशिष्टमेव सर्वत्र वेद्यमिति न तद्भेद इति दर्शयितुम्, **न हि विशालवक्षा इत्यादि-टीका**। तत्र **दुश्च्यवनधर्मशब्दार्थं** दर्शयन्नाह—**इन्द्रेति** । P. 861-5

वेद्याभेदात् विद्यानामभेद इति वदन् प्रष्टव्यः। किमुपासनाकाण्डस्य वेद्यनिष्ठतया तात्पर्यविषयस्य प्राधान्यात्तदभेदाद्विद्यानामभेदः इति ? किं वा तस्य भावनानिष्ठत्वेऽपि तदनुबन्धभूताया उपासनाया वेद्याभेदेन भेदाभावादिति विकल्प्य, प्रथमं निराकर्तुं **भवेदेतदेवमित्यादिटीका** । तत्र शेषपूरणेन तां व्याचष्टे—**यदीति**। द्वितीयेऽपि, वेद्यस्य किं कथञ्चिदपि भेदाभावः ? किं वा विशेष्यस्य प्रधानस्य ? तत्राद्यमाशङ्क्य निराकरोतीत्याह—**उपासनाप्रवृत्ते-रिति**। तत्तद्गुणोपहितरूपेण वेद्यभेदं दर्शयितुं **तथापीत्यादिटीका**। तां व्याचष्टे—**अस्येश्वरादेरिति**। **यथैकः स्त्रीकाय इत्यादिटीकायां** वस्तुपरे P 862-2 वाक्ये कतिपयगुणविशिष्टतया बोधितस्य तन्निष्ठगुणान्तरवैशिष्ट्यबोधहाना-

---

१. कल्पतरौ पूर्ववाक्ये 'विद्यास्वभेद इत्यन्वयः।' इति पाठः। उपरि 'ब्रह्मणः सिद्धत्वादिति' इति पाठः। टीकायां 'वेद्यस्येश्वरस्याभेदेनाभेदेऽपि' इति पाठः।

२. कल्पतरौ 'कस्यचित् षोडशकलादेः' 'केनचित् सत्यकामत्वादिना' इति पाठः।

भावेऽपि, यत्र वस्तु[नो]विशिष्टवेषेण चिन्तादेः कार्यत्वम् तत्र पुरुषेच्छातन्त्रतया तत्तच्चिन्तादौ न गुणान्तरवैशिष्ट्यप्रसक्तिरिति, **नहि विशालवक्षा इत्यादि-** P. 862-3 **दृष्टान्तो** विघटितः । तदभिप्रायं दर्शयन् द्वितीयं शङ्कते—**नन्विति** ।

विधितात्पर्यविषयस्य विशिष्टस्यैव प्रधानतया तद्भेदे विद्याभेद आवश्यक इति **टीका**भिप्रायमाह—**तृतीयेयमिति** । गुणभेदे प्रधानभेद इव प्रधानाभेदेऽपि दृष्टान्तोऽस्तीति तमादाय शङ्कते—**नन्विति** । यत्र विशिष्टं तात्पर्य-विषयभूतं तत्र तद्भेदात् क्रियाऽपि भिद्यत एव । अग्निहोत्रे च नैवमिति परिहार-**टीका**भिप्रायमाह—**अग्निहोत्र इति** । **पयोदध्याज्यतण्डुलौदनयवागूमांस-सोमजलतैलानि दश द्रव्याणि** ।

ननु विद्याया रूपं वेद्यं, तद्भेदाच्च विद्याया भेद इति **टीकाया**मुक्तम् । एवं च **शब्दादिभेदादिति** सूत्रविरोध इत्याशङ्क्य रूपभेदस्य शब्दभेदसंपादने-P. 863-1 नैव भेदकत्वान्न सूत्रविरोध इत्याशयेनाह—**रूपभेदादिति** । **अप्रवर्तिनीं** पुनः प्रवृत्त्यनपेक्षामित्यर्थः ।

॥ इति शब्दादिभेदाधिकरणम् ॥

---

## ॥ अथ विकल्पाधिकरणम् ॥

### सू०॥ विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥

उत्तराधिकरणानां पूर्वाधिकरणसिद्धविद्याभेदोपजीवित्वात् **संगतिः** इत्या-शयेनाह—**विद्याभेदेति** । **पृथगधिकाराणा**मित्यनेन अग्निहोत्रादीनामेव परा-मर्शात्, **अग्निहोत्रदर्शपूर्णमासादिष्विति** सप्तम्यन्तमनन्वितं इत्याशंक्य, भेदेन P. 863-5 योजयति—**पृथगधिकाराणामिति** । विषयसप्तमीति दर्शयितुं षष्ठ्यन्ततया निर्देशः कृत इति द्रष्टव्यम् । **सिद्धान्तटीकाया** अयमर्थः—किमुपासनानामा-हत्य फलहेतुत्वमाश्रित्य तद्धर्मार्थिनः समुच्चय इत्युच्यते ? किं वा साक्षात्कार-द्वारा फलहेतुत्वमाश्रित्य ? । नाद्यः, 'यस्य स्यादद्धा न विचिकित्सास्ती'त्यादि-

१· कल्पतरौ 'तदनुरक्तोपासनाविच्छिन्नभावना' इति पाठः ।

श्रुतिभिरुपासनानां च साक्षात्कारद्वारैव फलहेतुत्वावगमेनाहत्य फलविशेषहेतुत्वायोगादित्याह—उपासनानाममूषामिति । P. 863-4

द्वितीये किमुपासनान्तराणां साक्षात्कार एवोपयोगः ? किं वा तद्गते ऽतिशये ? अथ वा साक्षात्कारेण फले जनयितव्ये आरादुपकारकतया ? नाद्य इत्याह—एकेनेति[1] । न द्वितीय इत्याह—न चेति । न तृतीय इत्याह—तन्मात्रेति । 'यस्य स्यादद्धे'त्यादिश्रुत्या निर्विचिकित्ससाक्षात्कारमात्रेणैव ब्रह्मप्राप्तिफलश्रवणादिति भावः । न केवलमुपासनान्तराणां प्रयोजनाभावः । प्रत्युत विरोधश्चेत्याह—उपासनान्तराभ्यास इति । 'यस्य स्या'दित्यादिश्रुतिद्वयं क्रमेण व्याचष्टे—यस्याद्धेत्यादिना । P. 863-6

॥ इति विकल्पाधिकरणम् ॥

---

## ॥ अथ काम्याधिकरणम् ॥

### सू०॥ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥

[दृष्टान्त](प्रत्युदाहरण)सङ्गतिमाश्रित्य पूर्वपक्षसिद्धान्तौ दर्शयति—प्रतीकोपास्तीनामिति । 'यो वायुं दिशामि'त्यादिश्रुतिं व्याचष्टे—यो वायुमिति । P 864-2

॥ इति [2]काम्याधिकरणम् ॥

---

१. अत्र टीकायां 'तत एव फलप्रतिलंभेन' 'साक्षात्करणस्यातिशयसंभवः तस्य' 'कस्यचिदप्युपासनाऽनिष्पत्तेः' इति पाठाः । टीकायामेव पूर्वं 'काम्यत्वेन समानफलानां दर्श' इति पाठः ।

२. अत्र टीकायां 'साधन'मिति भावार्थकम् । 'यास्तूपासनाः' इति पाठान्तरे करणार्थकमिति बोध्यम् ।

## ॥ अथ यथाश्रयभावाधिकरणम् ॥

सू०॥ अङ्गेषु यथाश्रयभावः ॥ ६१ ॥

सू०॥ शिष्टेश्च ॥ ६२ ॥

सू०॥ समाहारात् ॥ ६३ ॥

सू०॥ गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

सू०॥ न वा तत्सहभावाश्रुतेः ॥ ६५ ॥

सू०॥ दर्शनाच्च ॥ ६६ ॥

स्वतन्त्रोपास्तीनां हे(तुभावे)त्वभावेन समुच्चयनियमाभावेऽपि क्रत्वर्थाश्रितानां क्रतुप्रयोगवचनपरिगृहीतानामस्तु समुच्चयनियम इति सङ्गतिमभिप्रेत्य गतार्थत्वमाशंक्य परिहरतीत्याशयेनाह—**नन्वित्यादि**। पूर्वपक्षमाक्षिपति—**नन्वङ्गमिति**। प्रयोगवचनपरिग्रहे क्रतुप्रयोगान्तर्भाव एव तन्त्रं, न क्रत्वङ्गत्वमिति परिहरति—**तत्राहेति**। अस्तु प्रयोगवचनपरिग्रहः। तथापि काम्यत्वान्न समुच्चय इति शङ्कते—**नन्विति**।

P. 864-4

किं समुच्चये प्रमाणं नास्तीति ब्रवीषि? किं वा फलकामनाधीनानुष्ठानत्वान्नियमेन समुच्चयो न संभवतीति। नाद्यः। आश्रयसमुच्चयविधायकस्य प्रयोगवचनस्यैव तन्नान्तरीयकतया तदाश्रितसमुच्चयेऽपि प्रमाणत्वादित्याह—**साङ्गं प्रधानमिति**। द्वितीयमाशंक्य निराकरोति—**नन्वित्यादिना**। **क्रत्वङ्गसमुच्चयेति**। क्रत्वङ्गेषु समुच्चयसिद्ध्यर्थमित्यर्थः। **नित्यवदित्यत्र** वतेः सति प्रयोजने न स्वार्थिकत्वं युक्तमित्याशयेनाह—**यथा नित्यं कर्मेति**। **विध्युपाधित्वादिति**। समुच्चयप्रापकप्रयोगविध्युपयोगित्वादित्यर्थः। **नित्यानित्यौ संयोगौ तद्विरोधादिति** हेत्वर्थं दर्शयति—**उद्गीथादीनां हीति**।

P. 865-10

---

१. कल्पतरौ 'आश्रयवन्नित्यत्वमाशङ्क्यते' इति पाठः। टीकायां 'एकप्रयोगवचनग्रहणाभावेन' इति पाठः।

२. कल्पतरौ 'यथा अन्यन्नित्यं फलं परामर्श' इत्यत्र 'फलपरामर्शमन्तरेण' इति शोधनीयम्।

३. कल्पतरौ उपरि 'उद्गीथादीनां उपासनानां च नित्यत्वानित्यत्वे' इति पाठः।

**तदर्थं कामानामिति । प्रयोगवचनावगतनित्यसमुच्चयनिर्वाहार्थं** P 865-14 **कामानां** काम्यमानानां प्रस्तरप्रहरणफलायुरादीनामिव नित्यत्वमाक्षेप्यमित्यर्थः । युक्तं प्रस्तरप्रहरणफलानां नित्यत्वं, कामनोपबन्धराहित्यात् । प्रस्तरप्रहरणे कृते आयुरादिफलमवर्जनीयतया भवतीत्येव तत्र करणमन्त्रसामर्थ्यानुरोधेन कल्पनात् । उद्गीथाद्युपासनाफलानां तु कामनोपबन्धेन स्वरसावगतं तदुपासनानामनित्यत्वं नित्याश्रयतन्त्रत्वमात्रेण न त्यक्तुं शक्यम्। उपासनानामनित्यकामाधीनत्वेनानित्यत्वेऽपि नित्याश्रयतन्त्रत्वस्योपपद्यमानतया कामनित्यत्वमन्तरेणानुपपत्त्यभावादिति परिहरति—**यथा धूमस्येति** ।

ननु सिद्धान्तभाष्यार्थकथनानन्तरं पूर्वपक्षसूत्रभाष्यव्याख्यानम् टीकायामसङ्गतमित्यत आह—**एवमिति । बुद्धिसौकर्यार्थं कृत्स्नमधिकरण-** P.866-1 शरीरं प्रदर्श्य, व्याख्येयांशग्रन्थयोजनामिदानीं करोतीत्यर्थः । नन्वपिशब्दस्य होतृषदनादपीत्यन्वयसंभवात् किमर्थं दुरुद्गीथमित्यत्रान्वयप्रदर्शनमित्यत आह—**एवमिति । वेदान्तरोदितेत्यादिटीकां** व्याचक्षाण एवावतारयति—**वेदान्तरेत्यादिना । वेदान्तरेऽपिचोदितः** प्रणवः सर्ववेदव्यापीत्यर्थः । **एकत्वविज्ञान**मित्यस्य व्याख्यानं 'अथ खल्वि'त्यादिवाक्यविहितमुपासनमिति । क्षतमेवाह—**स्वरादीति**[२] ।

ननु शंसनगतेन सम्यक्त्वेन कथमुद्गानगतक्षतसमाधानमित्यत आह—**ऋग्वेदादिति** । सम्यकुछंसनलब्धसम्यक्त्वप्रणवाभेदेन चिन्त्यमानस्योद्गानस्यापि सम्यक्त्वाश्रयतया तद्बलात्तद्गतक्षतसमाधानमिति भावः । **अन्वयमुखेन व्यतिरेकमुखेन च व्याख्येति टीकया** व्याख्याद्वयेऽपि फलैक्यं सूचितम् । तत्प्रकटयति—**आश्रयसाधारण्य इति । आश्रयसाधारण्याभावे खल्वाश्रितसाधारण्याभावो भवेदित्येवंरूपव्यतिरेकव्याख्ययेत्यर्थः ।**

'चमसं वोन्नीय स्तोत्रमुपाकरोती'ति श्रुतिं व्याचष्टे—**चमसमिति । उपाकरोतीत्यस्य व्याख्यानं प्रेष्यतीति** । 'एवं विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वाश्चर्त्विजोऽभिरक्षती'ति श्रुतिगतमेवंविदिति पदं व्याचष्टे—**ऋग्वेदादीति** । P. 867-3

---

१. कल्पतरौ 'ततश्चानित्यानामपी'ति पाठः ।

२. कल्पतरौ 'स्वकर्मणि उद्गातृत्वे क्षतं' इति, पूर्वं 'वेदान्तरोदितः प्रणवः' इति च पाठः । भाष्ये लिङ्गदर्शनत्वघटकमित्यस्य लिंगदर्शनत्वोपपादकमित्यर्थः ।

ऋग्वेदादिविहितानामङ्गानां लोपे व्याहृतिहोमरूपं यत्प्रायश्चित्तं तदभिज्ञत्वमित्यर्थः। छान्दोग्ये 'यदि ऋक्तो रिष्येत् भूःस्वाहेति गार्हपत्ये जुहुयात्। यदि यजुष्टो रिष्येत् भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्। यदि सामतो रिष्येत् स्वः स्वाहेत्याहवनीये जुहुयात्।' इत्युपदिश्य, तदनन्तरं, एवंवित् ब्रह्मा अङ्गवैकल्याद्यज्ञं यजमानमृत्विजश्च रक्षतीत्युपदेशादिति भावः।

॥ इति यथाश्रयभावाधिकरणम् ॥

इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डुभट्टमहोपाध्यायतनूभवेन
श्रीमन्नारायणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशगृह्यमाणेन
लक्ष्मीनृसिंहचरणारविन्दचञ्चरीकेण लक्ष्मीनृसिंहेन
विरचितायां कल्पवृक्षप्रदीपिकायां
आभोगाख्यायां तृतीयस्याध्यायस्य
तृतीयः पादः ॥

॥ श्रीः ॥

॥ श्रीलक्ष्मीनृसिंहाय मङ्गलम् ॥

## ॥ तृतीयस्याध्यायस्य चतुर्थः पादः ॥

नारायणेन्द्रयोगीन्द्रचरणाम्बुजसेवनात् ।
अनुपास्यैव सद्ब्रह्म गुणानामाकरोऽस्म्यहम् ॥

सू०॥ पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥ १ ॥

सू०॥ शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥

सू०॥ आचारदर्शनात् ॥ ३ ॥

सू०॥ तच्छ्रुतेः ॥ ४ ॥

सू०॥ समन्वारम्भणात् ॥ ५ ॥

सू०॥ तद्वतो विधानात् ॥ ६ ॥

सू०॥ नियमाच्च ॥ ७ ॥

सू०॥ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

सू०॥ तुल्यं तु दर्शनम् ॥ ९ ॥

सू०॥ असार्वत्रिकी ॥ १० ॥

सू०॥ विभागः शतवत् ॥ ११ ॥

सू०॥ अध्ययनमात्रवतः ॥ १२ ॥

सू०॥ नाविशेषात् ॥ १३ ॥

सू०॥ स्तुतयेऽनुमतिर्वा ॥ १४ ॥

सू०॥ कामकारेण चैके ॥ १५ ॥

सू०॥ उपमर्दं च ॥ १६ ॥

सू०॥ ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

करणस्वरूपनिरूपणानन्तरं तदितिकर्तव्यतानिरूपणं प्राप्तावसरमित्यत्र-
P. 869-1 सरसङ्गतिं दर्शयति—**पूर्वमिति**। ननु भाष्यटीकापर्यालोचनया विद्यानां पुरुषार्थसाधनत्वमस्मिन् **पादे** निरूप्यमित्याभाति। तदयुक्तम्। उत्तरत्र यज्ञादीतिकर्तव्यताया अपि निरूपणेनार्थभेदे पादभेदप्रसङ्गादित्याशंक्य, विद्येतिकर्तव्यतानिरूपणमेव पादार्थः। विद्यानामितिकर्तव्यताकाङ्क्षा च न करणत्वमन्तरेणेति तदुपोद्घाततया पुरुषार्थकरणत्वनिरूपणं प्राक्। तदभिप्राये एव भाष्यटीके अपीत्याशयेनाह—**तत्र कर्मानपेक्षाणामिति**। उपकार्यत्वेन कर्मापेक्षारहितानां, स्वयमेव फलकरणानां सतीनामित्यर्थः।

साक्षात्कारादिदृष्टफलासु विद्यासु नारादुपकारकापेक्षेत्यत उक्तम्—**विद्योत्पत्त्युपयोगिन्य इति। ननु फलभेदाभेदाविति**। यद्यपि फलाभेदेऽपि ब्रह्मलोकप्राप्तिफलानां विद्यानां गुणभेदेन भेदः, यद्यपि विद्याभेदेपि हृदयायतनत्वादिना सगुणनिर्गुणविद्ययोः सत्यकामत्वादिगुणोपसंहारः, तथापि प्रायोऽभिप्रायेणैतदुक्तम्। ननु यदि विद्यानां पुरुषार्थसाधनत्वसिद्धवत्कारेण प्राचीनविचा-
P. 869 5 रप्रवृत्तिः, तर्हि किमर्थमिदानीं तन्निरूपणमित्यत आह—**फलभेदेन हीति**।

**अपरेति**। आक्षेपलक्षणेत्यर्थः। **विद्यायाः कर्तृसंस्कारत्वं अपवर्गसाधनत्वं वेति कोटिप्रदर्शनावसरे क्रत्वर्थत्वपुरुषार्थत्वोक्तिः** किमर्थेत्यत आह—**औपनिषदेति**[1]। **नित्यत्वमपीत्यनेन सम्बध्यमानस्येति**। अपिशब्दबोधितसमुच्चयनिर्वाहाय **संबध्यमानस्येत्यर्थः**। ऐहिकफलकर्मकर्तृत्वादेः देहे संभवेऽपि, आमुष्मिकफलकर्मकर्तृत्वादेः तत्रासंभवात् देहव्यतिरिक्तस्यैव कर्तृत्वादिकमिति परिहरति—**अत आहेति। नाप्रकरणादिति**[2]। प्रकरणाभावात् आत्मज्ञानं न कर्माङ्गमिति यद्वदतीत्यर्थः।

P. 871-1 **अनुस्मारयन् वर्तत इत्यर्थः इति। अनुस्मारयन् जुह्वादिवद्वाक्येनैव तज्ज्ञानं पर्णतावत् क्रत्वर्थतामापाद्यत इति टीकापाठः।** तत्रानुस्मारय-

---

१. अत्र कल्पतरौ ‘औपनिषदात्मज्ञानस्य क्रत्वर्थत्वापवर्गार्थित्वे पूर्वपक्ष’ इति शोधनीयम्।

२. ‘न प्रकरणादात्मज्ञानं कर्माङ्गमिति’ इति पाठमभिप्रेत्य परिमले ‘प्रकरणादात्मज्ञानं कर्माङ्गं न भवति प्रकरणस्याभावादित्यर्थः’ इति व्याख्यातम्।

न्नित्यस्य आपाद्यत इत्यनेनान्वयायोगात् जुह्वादिवत् औपनिषद आत्मापि कर्मानुस्मारयन्वर्तेत इत्यध्याहारेण योजनीयं इति भावः।

औपनिषदात्मज्ञानस्य नियमेन कर्मस्मारकत्वं न संभवतीति शंकते— यद्यपीति। अन्यत्र कारणस्य कार्यव्याप्यत्वाभावेऽपि, देहादिव्यतिरिक्तात्मज्ञाने पारलौकिकफलसाधनविषयेच्छादिप्रवृत्तेः अनुभवसिद्धतया तत्कारणत्वेन तत्स्मरणमपि नियमेन जातमेवेति व्याप्यमेव[1] व्यतिरेकविज्ञानभिति परिहरति—तथापीति। अस्त्वनुस्मरणम्, ततः किं इत्याकाङ्क्षायां, उत्तरटीकाप्रवृत्तिः इत्याशयेनाह—अनुस्मारितेषु चेति। एवं च टीकायां जुह्वादिवदित्यनन्तरं, ततश्चेत्यध्याहार्यम्। ततश्च 'आत्मा द्रष्टव्य' इति वाक्येनैव तज्ज्ञानं क्रत्वर्थतामापाद्यत इति टीकार्थ इति भावः।

P. 871 1

क्रत्वर्थतामापादयतीति कश्चित्पाठः इदानींतनेषु केषुचित्कोशेषु दृश्यते। स तु केवलटीकादृष्टिभिः अन्वयसौकर्याय कल्पित इति ध्येयम्। अञ्जनादिफलश्रुतिवदिति। 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इत्यादिफलश्रुतिवदित्यर्थः। ननु ज्ञानस्य कर्तर्यतिशयानाधायकत्वात् कथं तद्द्वारा कर्माङ्गत्वं इत्यत आह—अदृष्टसंस्कारद्वारेणेति।

P. 871-4

ननु 'आचारदर्शना'दित्यादिसूत्रोक्तानां हेतूनां 'शेषत्वात् पुरुषार्थवाद' इति सूत्रोक्तहेतूपोद्बलनार्थत्वमुक्तं टीकायाम्। तत्र स्वतन्त्रहेतुतया भासमानानामन्योपोद्बलनार्थत्वकल्पने को हेतुरित्याशंक्य, तत्र नियामकं दर्शयन्नाह— आचारादीति। लिङ्गपराणीति। न च 'यदेव विद्यये'ति श्रुतिप्रदर्शकस्य 'तच्छ्रुते'रित्यस्य कथं लिङ्गपरत्वमिति वाच्यम्। 'यश्चैतदेवं वेदे'ति पूर्ववाक्यगतैवंशब्दसामर्थ्येन विद्याशब्दस्य प्रकृतोद्गीथविद्यापरत्वेऽपि, सर्वनामावधारणद्वयसामर्थ्यपरिकल्पितविद्यामात्रस्य कर्मगतातिशयहेतुत्वं कल्प्यमिति लिङ्गपरत्वमिति भावः। एवं च टीकायां तृतीयाश्रुतेश्चेत्यस्य तृतीयाश्रुतिसामर्थ्याच्चेति अर्थो बोध्यः।

कर्त्रनुगमस्येति। 'तं विद्याकर्मणी' इति श्रुतौ तमित्यनेन परलोकं प्रत्युत्क्रामतः परामर्शादिति भावः। दृष्टादृष्टद्वारेणेति। आत्मनो देहादि-

P. 871-3

---

१. 'व्याप्यं' इति कल्पतरौ पाठः।

व्यतिरिक्तत्वज्ञानमन्तरा पारलौकिकेषु कर्मसु प्रवृत्तेरसंभवात् तदंशेन ज्ञानं दृष्टार्थम्। अपहतपाप्मत्वाद्यालम्बनद्वारकस्तुत्यंशेन त्वदृष्टार्थमित्यर्थः। हिशब्दार्थ-
P. 873-1 कथनेन वाक्यस्य पूर्णतामाह—**प्रसिद्धेति**। निर्विचिकित्सप्रत्यक्षसिद्धस्य भोक्तुः द्रष्टव्यत्वाद्युपदेशवैयर्थ्यात्तदुपदेशव्याजेन दर्शनादियोग्यब्रह्माभेदपरमेव वाक्य-मित्याह—**भोक्तुरिति**।

'तुल्यं तु दर्शन'मित्यादिना प्रतिलिङ्गमुपन्यस्तम्। तत्र तु-शब्देनाकर्माङ्गत्वस्य यल्लिङ्गदर्शनं तस्य प्राबल्यं विशेष उक्त इत्यर्थः। **परोक्तां परिहरतीति**। एवंशब्दानुरोधेन विद्याशब्दस्य प्रकृतोद्गीथ-विद्यापरत्वे सर्वनामावधारणसामर्थ्याविगतव्याप्तेरपि उद्गीथविद्यामादायैव ज्योतिष्टो-मादिकर्मविषयत्वसंभवान्न विद्यामात्रस्य कर्माङ्गत्वप्रापकमित्येवं परिहरतीत्यर्थः।

**टीकाया** अयमर्थः—'विभागश्शतव'दिति **सूत्रेण** विद्याकर्मसमन्वारम्भ-वचनं विद्वदविद्वत्पुरुषभेदाभिप्रायमिति न ततो विद्याकर्मसाहित्यसिद्धिरित्युक्तम्। तदयुक्तम्। निर्गुणविद्यावत उत्क्रमणगमनयोरभावेन विद्यायास्तदनुव्रजनायोगात्। अतः प्रकारान्तरेणैव समन्वारम्भवचनस्यान्यथासिद्धिर्वक्तव्येत्यभिप्रायेण **भाष्यं**
P. 874-2 प्रवृत्तमित्याह—**अविभागेऽपीति**।

ननु 'अध्ययनमात्रवत्' इति मात्रग्रहणेन कथमर्थज्ञानं व्यवच्छिद्यते ज्ञानेन विना कर्मणामनुष्ठानायोगादित्यत आह—**न तूपनिषदिति**। 'स्वाध्यायोऽ-ध्येतव्य' इति वाक्येन कृत्स्नाया अपि स्वशाखाया अध्ययनविधानात् कथं
P. 875-2 तदन्तर्गतोपनिषदध्ययनव्यवच्छेद इत्यत आह—**एतदुक्तमिति**।

अध्ययनविधिरक्षरावाप्तिपर्यन्तः। तथा च कृत्स्नाया अपि स्वशाखाया अध्येतव्यत्वेऽपि तदर्थज्ञानं कर्तव्यैः कर्मभिराक्षिप्यते। ततश्च गार्हस्थ्यपरि-ग्रहानन्तरं यजने याजने च प्रसक्तिमतां कर्मणामेव विचारः स्नानात्पूर्वं कर्तव्यः। तदनन्तरं 'जायामवाप्य दशमेऽहन्यग्निमादधीते'त्यादिशास्त्रविरोधेन गुरुकुलवा-सेन वेदार्थविचारायोगात्।

---

१. कल्पतरौ 'भोक्तुर्द्रष्टव्यत्वव्यपदेशेन' इति, पूर्वं 'तदव्यभिचारः ततश्च' इति च पाठः। टीकायां 'एवमकर्माङ्गत्वे' इति पाठः।

२. टीकायां 'अर्थज्ञानं व्यवच्छिन्न'मिति पाठः।

उपनिषदर्थज्ञानं तु न कर्मभिराक्षिप्यते, प्रयोजनाभावात्। तत्त्वसाक्षात्कारेण तु तदाक्षिप्यते। तत्र च साधनचतुष्टयसंपन्नस्यैवाधिकार इति न स्नानात्पूर्वं तदुपयोगिनि विचारे प्रवृत्तिः। ततश्च नोपनिषदर्थज्ञानं कर्मविधिषूपयुज्यते। एवं च कर्मोपयुक्तार्थज्ञानशिरस्ककर्मकाण्डाध्ययनवत एव कर्मस्वधिकारो न त्वतादृशोपनिषदध्ययनवत इति भाष्यार्थ इति भावः। **उपनिषदध्ययनापेक्षमिति**। P. 875-5 अर्थज्ञानशिरस्कमुपनिषदध्ययनं व्यावर्त्यमपेक्ष्य **मात्रग्रहणमित्यर्थः**।

**अनुभवारूढमेव चेति** भाष्यगतः **चशब्दः किञ्चार्थ** इत्याशयेनाह—**अपि चेति**। एवं, 'कामकार' सूत्रगतं भाष्यं व्याख्याय **कामकार**पदं व्याख्यातुं सूत्रमुपादत्ते—**कामकारेण चैक इति**। एतावानपि **टीका**सन्दर्भ ए(व)तदधिकरणप्रथमसूत्रोक्तमर्थं स्मरतः स्पष्ट **इत्याचार्यैस्त्यक्त** इति द्रष्टव्यम्। पौनरुक्त्यप्रसक्तिं दर्शयति—**असंसारीति**। P. 874-2

जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' इति श्रुतिं व्याचष्टे—**वैदेह इति**। विश्वजिति सर्वस्वं दक्षिणा। आदिशब्दगृहीते अश्वमेधे, दीक्षणीयाप्रायणीयातिथ्यावङ्गुपसदग्नीषोमीयपशुसवनीयपशुसवनत्रयोदयनीयानूबन्ध्यपशुषु द्वादशशतमानमारभ्योत्तरोत्तरद्विगुणा दक्षिणेति बहुदक्षिणत्वमित्यर्थः। 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मी'ति श्रुतिं व्याचष्टे—**हे भगवन्त इति**।

'आचार्यकुलाद्वेदमधीत्ये'त्यादिश्रुतेरर्थमाह—**गुरोरिति**।

**कर्मशब्देन** शुश्रूषाख्यकर्मकालो विवक्षितः। ततोऽवशिष्टः कालः **कर्मातिशेषशब्देनोच्यत** इत्याह—**गुरुशुश्रूषेति**। **वेदमधीयान इति** धारणाध्ययनपरम्। 'कुर्वन्नेवेह कर्माणी'त्यादिश्रुतिं व्याचष्टे—**शतं समा इति**। **कर्माणि** शुभकर्माणि। **यतः** प्रकारान्तरादशुभं कर्म न लिप्यते। तन्नास्तीत्यर्थः। फलाभिसन्धिमन्तरा, यावज्जीवं शुभकर्मानुष्ठानप्रकार एव कर्मकृतबन्धाभावकारणं नान्यदिति भावः। 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक' इति P. 877-4 श्रुतेरर्थमाह—**येषामिति**। **प्रजया** प्रजासाध्येन कर्मणेत्यर्थः।

**॥ इति पुरुषार्थाधिकरणम् ॥**

---

१. टीकायामन्ते 'समस्तक्रियाकारकफलविभागोपमर्द इति' इति पाठः।

## ॥ अथ परामर्शाधिकरणम् ॥

सू०॥ परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

सू०॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

सू०॥ विधिर्वा धारणवत् ॥ २० ॥

P. 877-6 **आक्षेपलक्षणमिति**। 'उर्ध्वरेतस्सु च शब्दे ही'ति ऊर्ध्वरेतसां नैष्ठिकब्रह्मचारिवानप्रस्थसंन्यासिनामाश्रमाणां विद्योत्पत्त्युपयोगिशौचग्रासनियमशमदमादियत्किञ्चित्कर्मयोगित्वेऽपि विद्योपकार्यत्वयोग्यकर्माभावात्तदीयायाः विद्यायाः स्वातन्त्र्यमुक्तम्। तत्र तादृशानामाश्रमाणामेवाभावात् कथं तद्विद्यायाः स्वातन्त्र्यमित्याक्षेपलक्षणमित्यर्थः।

ननु अपि चापवदति हीति भाष्यस्य, न केवलमित्यादिटीकया व्याख्यानात् निन्दति हीत्यादिपूर्वटीकायाः किं प्रयोजनमित्यत आह— **अपि चेति**। **निन्दति हि प्रत्यक्षा श्रुतिरित्यादि**निन्दोपन्यासो यः पूर्वं कृतः स सूत्रगतापवदति हीत्यंशव्याख्यानार्थः। स्वयं सूत्रार्थमुपवर्ण्य, तदेतत्सर्वमाहेति भाष्यावतारणादिति भावः। **प्रणवाख्यब्रह्मणः प्रस्तुतत्वादिति**। मधुविद्यादिषु प्रणवे ब्रह्मशब्दप्रयोगात्, प्रणवाख्यत्वं ब्रह्मणः। **तस्य प्रस्तुतत्वात्** उत्तरत्र कीर्त्यमानत्वात्। 'ब्रह्मसंस्थोऽमृतत्वमेती'ति पूर्ववाक्येन ब्रह्मैकपरायणस्यामृतत्वप्राप्तिं निर्दिश्य, किं तद्ब्रह्मेत्यपेक्षायां 'प्रजापतिर्लोका'नित्यारभ्य 'ओंकार एवेदं सर्व'मित्यन्तेन कीर्तनादित्यर्थः।

ननु विधित्वानुवादत्वयोर्विकल्पायोगात् सूत्रे कथं वाशब्द इत्याशङ्क्य, P. 879-1 तस्यावधारणार्थकत्वान्न दोष इत्याशयेनाह—**एवं तावदिति**। तत्र वाक्य-

---

१. भाष्ये 'नह्यत्र लिङादीना'मिति पाठः।

२. टीकायां 'भवत्वयमन्यार्थः परामर्शः' इति, 'एवं हि तानि' इति च पाठः। भाष्ये 'अनुष्ठेय'मिति सूत्रविवरणस्थले 'वेदे अश्रवणात् अग्निहोत्रादीनां च', इति पाठः। 'साम्यश्रुतेः' इत्यस्य साम्येन श्रुतेः साम्योपलक्षितश्रुतेरित्यर्थः। 'समा हि' इत्यादिभाष्ये तथैव विवरणादिति ध्येयम्।

**भेदेति**। 'प्रजापतिर्लोका'नित्यादेरुत्तरसन्दर्भस्य प्रणवोपासनाविधिपरस्य स्वरसतो वाक्यान्तरत्वावगमेऽपि, सर्व एते पुण्यलोकभाज एव, ब्रह्मसंस्थस्त्वमृतत्वमेव प्राप्नोतीति 'त्रयो धर्मस्कन्धा' इत्यादे'रमृतत्वमेती'त्यन्तस्य ब्रह्मसंस्थतास्तावकत्वेन एकवाक्यतावगमेन तद्विरोधान्न चतुर्णामाश्रमाणामिह विधयः संभवन्तीत्याशङ्कयाहेत्यर्थः।

**अप्राप्तार्थद्वयेति**। यद्यप्यर्थचतुष्टयेति वक्तव्यम् चतुर्णामप्याश्रमाणाम-पूर्वत्वात्। तथा च वक्ष्यति—**चतुर्णामाश्रमाणामिहानुवादः, तत्सामर्थ्याद-न्यत्र विधिरिहैव वा विधिरिति पक्षद्वयमुक्त्वेति**। तथापि पुण्यलोकभागा-श्रमत्वेन त्रयाणमेकीकरणादर्थद्वयेत्युक्तम्। ननु प्राप्त्यभावे कथमनुवाद इत्यत आह—**उपरि समिध इति**। प्राप्तिश्च शिष्टाचारादित्याशयेनाह—**हविष इति**। **येन केनचित्प्राप्नोतीति**। ततश्चाचारादुपरि समिधः प्राप्तिरित्यर्थः। P. 879-5 P. 879-7

एवमपि कथं समिधो नित्यानुवाद इत्यत आह—**तत्रेति**। **वाक्यान्तर-प्राप्तेति**। आचारानुमितवाक्यान्तरप्राप्तेत्यर्थः। **समिन्नियम्यत इति**। तथा च 'समिधमेवोपसंगृह्ये'ति वाक्यार्थः। 'स्रुग्दण्डे' इति तु हविराच्छादनार्थं निक्षि-प्तायाः समिधः स्रुग्दण्डेऽप्यवस्थानादनुवाद इति भावः। न तावदुक्तादाचारात् समिधः प्राप्तिः, अयोग्यत्वात्। नापि 'स्रुग्दण्डे' इति वाक्यं तन्नियमार्थं, प्राप्त्यभावात्। स्रुग्दण्डमात्राधिकरणत्वेनैव प्रतीतेश्च। तथा च 'उपरि ही'ति वाक्यप्राप्तं स्रुगुपरिधारणमाश्रित्य तस्य प्रदेशनियमार्थमेवेदं वाक्यमिति सिद्धान्त-माह—**न समिदित्यादिना**। **हविषः प्राग्देश इति**। हविराधारबिलप्रदेशा-पेक्षया धारयितुर्मध्यवर्तिप्राग्देश इत्यर्थः।'

**सैवं विधीयत इति**। ततश्च नैकवाक्यताविरोध इति भावः। **अत्रा-वान्तरविचारमिति टीकया सा चेत्यादिभाष्यस्य यदापीत्यादिपूर्व-भाष्योपयोगो दर्शितः**। तं प्रकटयति—**ब्रह्मसंस्थताविधावपीति**। संन्यासा-श्रमसाधनमिह **प्रकृतं** तद्ब्रह्मसंस्थताविधिसाधने न सिध्यति। गृहस्थादीनामपि तत्संभवादिति **पूर्वभाष्ये** असङ्गतिमाशङ्कय, शङ्कितासङ्गतिनिराकरणार्थमुत्तर-भाष्यमित्याहेत्यर्थः। P. 880-3

---

१. कल्पतरौ 'तत्सामर्थ्यादन्यत्र विधिरिहैव वा' इति पाठः। उपरि 'सर्वे एते इत्यत्र' इति पाठः।

अयं भावः—यदि ब्रह्मसंस्थता चतुर्णामपि संभवेत्, तदा **ब्रह्मसंस्थ-शब्देन** गृहस्थादीनामेव परामर्शसंभवात् न तदनुरोधेन पारिव्राज्यसिद्धिः। यदि च परिव्राजकस्यैव ब्रह्मसंस्थता नेतरेषां, तदा **ब्रह्मसंस्थशब्देन** तस्यैव परामर्शात् तद्बलेन पारिव्राज्यसिद्धिरिति मनसि निधाय गृहस्थादीनां ब्रह्मसंस्थासंभवासंभवौ विचार्येते इति।

**यदि चेत्याद्युत्तरभाष्ये** 'त्रयो धर्मस्कन्धा' इति पूर्ववाक्ये परिव्राज-कोऽपि निर्दिष्टो न वेति विचारान्तरं **वृत्तिकारमतनिरासोपयोगितया** सिद्धव-त्कृत्य, **सा चेत्यादिभाष्योक्तेन** विचारेण फलफलिभावः प्रदर्श्यते। तस्य विचारस्य कथं पारिव्राज्यसिद्ध्यसिद्धिफलकत्वमित्याशंक्य, पूर्ववाक्ये चतुर्णामपि परामर्श इति वृत्तिकारमतप्रदर्शनेन गृहस्थादीनामपि ब्रह्मसंस्थतासंभवे दर्शिते, त्रय इत्यादिशब्दस्वारस्यानुरोधेन त्रयाणामेव पूर्ववाक्ये पराम(र्शस्ते)[र्शेन ते]षा-मेव च ब्रह्मसंस्थशब्देन निर्देशेन, न पारिव्राज्यं सिध्यति।

पूर्ववाक्ये त्रयाणामेव परामर्शो न तुरीयस्यापि[इति,]वृत्तिकारमतनिरासेन च तेषां ब्रह्मसंस्थत्वासंभवे स्थापिते परिव्राज एव ब्रह्मसंस्था इति सिध्यति पारिव्राज्यफलक[त्व]मिति परिहरति—**टीकायां—विचारप्रयोजकमाहेति**। प्राक्तनविचारप्रयोजकं तदर्थसंशयं फलफलिभावकथनव्याजेनाहेत्यर्थः। 1. 880-4

ननु पूर्ववाक्ये चतुर्णामाश्रमाणां परामर्शेऽपि न तेषां ब्रह्मसंस्थत्वं सिध्य-तीति शङ्कते—**टीकायां—नन्विति**। अनाश्रमित्वे सति ब्रह्मसंस्थत्वमनुपपन्नम्। **वृत्तिकारमते** तत्तदाश्रमविहितकर्मणां विद्याङ्गत्वाभ्युपगमादिति परिहरति—**टीकायामत आहेति**। **चतुर्गुणमिति**। गृहस्थापेक्षयेति भावः। **अष्टग्रा-सीति**। ततश्च **तद्रूपं भोजनमिति** विग्रह इति भावः। **पारिव्राज्य एवेति**। कर्मत्यागरूपे **पारिव्राज्ये** सत्येवेत्यर्थः।

किं तत्कर्म? यस्य त्यागो ब्रह्मसंस्थतायां प्रयोजकः। किं कर्ममात्रम्? उत काम्यं कर्म? उभयथापि दोषान्न तत्त्यागः प्रयोजकः। किं तु स्वर्गादि-फलापेक्षया ब्रह्मण्युत्कटेच्छारूपतात्पर्यमेव ब्रह्मगोचरश्रवणाद्यनुष्ठानरूपब्रह्मसंस्थ-तायां प्रयोजकमिति परिहरति—**इत्याशंक्याहेति**। **न घटेतेति**। ततश्च तद-नुरोधेन पूर्ववाक्ये त्रयाणामेव निर्देशात्तत्रानिर्दिष्टः परिव्राजक एव ब्रह्मसंस्थ-

शब्देन निर्देष्टुमुचित इति भावः। उपक्रमपरामर्शयोः अघटनमेवासिद्धमिति परिहरति—अत आहेति।

एवमपि पूर्वोत्तरसन्दर्भपर्यालोचनया न गृहस्थादीनां ब्रह्मसंस्थपदेन परामर्श इति शङ्कते—नन्विति। किं बहुवचनेन निर्दिष्टानामेकवचनेन निर्देशो न स्वरस इति ब्रह्मसंस्थपदेन परिव्राजकस्य ग्रहणम्? किं वा पूर्ववाक्ये त्रयाणां पुण्यलोकभाक्त्वेन निर्दिष्टत्वात् तुरीयस्य फलाकाङ्क्षिण एव तत्र निर्देशो युक्त इति? अथवा पुण्यलोकभाक्त्वेन निर्दिष्टानाममृतत्वभाक्त्वेन निर्देशो विरुद्ध इति? नाद्यः, बहुवचननिर्दिष्टानामपि ब्रह्मसंस्थत्वदौर्लभ्यसूचनार्थमेकवचनेन निर्देशोपपत्तेरित्याह—अत आहेति। P. 881-1

न द्वितीयः, पूर्ववाक्ये परिव्राजकस्यापि निर्दिष्टतया तस्यापि पुण्यलोकभाक्त्वेन फलान्तराकाङ्क्षाराहित्यादिति त्रय इति टीकापदव्याख्यानव्याजेनाह—परिव्राजोऽपीति। तृतीयं शङ्कते—नन्विति। किं यदवस्थस्य यो धर्मो निर्दिष्टस्तदवस्थस्यैव तद्विरुद्धधर्मवत्त्वं लोकविरुद्धम्? किं वा अवस्थान्तरापन्नस्यापि? अथवा प्रकृते अवस्थान्तरापत्तिं पुरस्कृत्य प्रकृतानामेव ग्रहणे किं प्रमाणमिति? नाद्यः। अनभ्युपगमात्। न द्वितीयः, दृष्टत्वेन विरोधासिद्धेरित्याशयेनाह—इत्याशंक्याहेति। P. 881-4

तृतीयं निराकर्तुं तथा चेत्यादिटीका। तया सर्वनामश्रुतिः प्रमाणमुपन्यस्तेत्याह—ब्रह्मणि संस्थेति। आग्नीध्रोपस्थाने। आग्नीध्रनामकमण्डपविशेषोपस्थाने। अप्रकृताग्नेयीग्रहण इति। आग्नेय्या ऋच आग्नीध्रोपस्थानस्वरूपमात्रार्थत्वे प्रयोजनाभावाज्ज्योतिष्टोमापूर्वसाधनताक्रान्ताग्नीध्रोपस्थानार्थत्वमेव वक्तव्यम्। ततश्चाप्रकृताग्नेयीग्रहणे तस्या अपूर्वसाधनत्वसामान्यरूपपुरस्कारबललभ्ये ज्योतिष्टोमसंबन्धे आग्नीध्रोपस्थानत्वे विशेषरूपपुरस्कारबललभ्ये विशेषसम्बन्धे च विधेरेव व्यापारः कल्पनीय इति गौरवं, प्रकृताग्नेयीग्रहणे तु तस्याः प्रकरणादेव सामान्यसम्बन्धसिद्धेः विशेषसंबन्धमात्र एव तात्पर्यमिति विधेर्लाघवमित्यर्थः। P. 881-11

---

१. टीकायां 'एते च त्रयोऽप्याश्रमाः' इति पाठः।
२. कल्पतरौ 'प्रथममाग्नेया मन्त्राः' इति पाठः।

P. 881-13 **आद्येपूर्वपक्षमिति**। एतच्च संशयकोटिप्रदर्शनमभिप्रेत्य। पूर्वपक्षोपपादनावसरे, स्वेन द्वितीयस्यैव प्रथमं प्रदर्शितत्वात्। तथा च या काचिदिति पक्षं निराकृत्य, अप्रकृतैवेति पक्षं **निराकरोति इत्यर्थः**। न वस्तुसदन्यशेषत्वमन्यत्र विनियोगविरोधि अतिप्रसङ्गात्। किं त्वन्यशेषत्वेन प्रतीयमानत्वं, तस्य निराकाङ्क्षतया शेष्यन्तरसम्बन्धबोधायोगात्। तच्च प्रकृते नास्तीत्याह—**तथापीति**। अनपेक्षितत्वमेव व्यतिरेकमुखेन दर्शयति—**यदि पुनरिति**। या आग्नेयी तया उपतिष्ठेतेति यदा विधीयेत, 'तदा व्रीहीन् प्रोक्षती'त्यादौ व्रीहीणामिव भवेत् परार्थत्वेन प्रतीतिरित्यर्थः। **न त्वेतदस्तीति**। उद्देश्यत्वविधेयत्वयोः एकत्रैकदा विरुद्धत्वादित्यर्थः।

किमाग्नेयीशब्दस्य जातिवाचितया तन्मुखेन सकलव्यक्तिप्रापकत्वात् संनिहितमात्रग्रहणे श्रुतिविरोध इत्युच्यते? किं वा व्यक्तिवाचित्वेऽपि अविशेषेण सकलव्यक्तिप्रापकत्वात्? आद्येऽपि किमाहत्यैव जातिवाचित्वं? किं वा योगमुखेन? नाद्य इत्याह—**आग्नेयीशब्दस्येति**। रूढशब्दानामेव जातिवाचित्वम्, न यौगिकानामिति भावः। नान्त्य इत्याह—**अग्निदेवतेति**। एतच्च सर्वास्वप्याग्नेयीषु सामान्यमभ्युपेत्योक्तम्। वस्तुतस्तु अवयवार्थातिरेकेण न तासु सामान्यमस्ति, मानाभावादिति ध्येयम्। (P. 882-2)

द्वितीयं निराकरोति—**तद्धितान्तर्वर्तीति**। तथा च सर्वनामश्रुतिविरोधात् नाविशेषेण सर्वव्यक्तिग्रहणमिति भावः। प्रधानविधिविरोधे सर्वनामश्रुतिर्हेयेत्याशयेन शङ्कते—**नन्विति**। यौगिकत्वात्[3] व्यक्त्यपेक्षत्वेऽपीत्यन्वयः। **गतरसत्वादिति**। गतरसत्वे विनियोगायोगादित्यर्थः। असिद्धो हेतुरिति परिहरति—**अत आहेति**। स्वोदाहृतश्रुतिगतं **परिप्लवपदं** व्याचष्टे—**परिप्लु**[4]- (P. 882-6)

---

१. टीकायां 'यदि ह्यत्राग्नेय्युद्दिश्येत' इति, 'विनियुक्ता च प्रतीता इति विनियुक्त' इति च पाठः।

२. कल्पतरौ 'न त्वेव'मिति पाठः।

३. यौगिकत्वादिति पदं मूले न दृश्यते।

४. कल्पतरौ 'परिप्लुत्य' इति पदद्वयं दृश्यते। एकमधिकम्। 'अनियमेन बुद्धिस्थकथनं पारिप्लवः' इति शास्त्रदर्पणे। कल्पतरौ 'मन्त्राणां प्रातिस्विकार्थेषु' इति शोधनीयम्।

त्येति। (तत्र) यथोपक्रान्तमित्यादिसिद्धान्तटीकया प्रक्रमविरोधान्न तपश्शब्देन भिक्षुवानप्रस्थयोः ग्रहणमित्युक्तम्। ततः फलितमर्थं दर्शयन्नाह—इहे हि वाक्ये इति। P. 882-7

गृहस्थानामसाधारणो धर्मो निर्दिष्टः। ततश्च तदैकरूप्याय तप इत्यादिना वानप्रस्थादीनामप्यसाधारण एव धर्मो निर्दिष्टः। तथा अनन्तरवाक्येऽपीत्यर्थः। नन्वेवमपि तपश्शब्देन यतेरेव ग्रहणं कुतो न भवेदित्यत आह—न तपसेति। व्यतिरेकमुखेनेति। न तु सत्यां गतावित्यादिटीकया अन्वयमुखेन विवृतम्। इदानीं नतु साधारणेत्यादिटीकया व्यतिरेकमुखेन विवृणोतीत्यर्थः। उपसंहारः अनन्तरकीर्तनम्।

न हि तपो नामेति टीकया तप इति प्रसिद्धं वस्तु वानप्रस्थानां नासाधारणमिति न हीत्युक्तम्। तत्र पूर्वोत्तरविरोधं परिहरन्नाह—तपस इति। P. 882-13 न खल्वित्यादिटीकाभिप्रायमाह—ग्रीष्म इति। टीकायां—पराकादयः कृच्छ्रविशेषाः। पूर्वमनुक्तस्याप्यनुवादे को हेतुरित्यत आह—तत्राधिकमप्याहेति। एकहेलया निरसितुमधिकमपि शमादिकं तपस्त्वेन निर्दिशतीत्यर्थः।

टीकायां—शौचादीनाचक्षत इत्यादिशब्देन शमादयो गृह्यन्ते। ते च पातञ्जलसूत्रे तपसो भेदेन सन्तोषशब्देन गृहीता इति भावः। भाष्यायोगमिति। पृथक्त्वे सत्येव व्यपदेशभेदः कल्पते, नान्यथेति P. 883-2 भाष्यायोगमित्यर्थः। श्रुतिस्वारस्यानुरोधेन भाष्यं प्रवृत्तं इति दर्शयितुं त्रय एत इत्यादिटीका। तत्रैतच्छब्दमाश्रित्यैव विकल्पस्य कर्तुं शक्यत्वात्

---

१. कल्पतरौ 'ब्रह्मसंस्थत्वेनैवासाधारणधर्मेण' इति, 'तस्य यतिष्वसाधारण' इति च पाठः। टीकायां 'असाधारणेन चैकैकेन' इति, 'वानप्रस्थानामित्याह' इति, 'तपः प्रसिद्धेरसिद्धे'रिति च पाठः।

२. अत्र टीकायां 'न तावत् त्रय इति, भिक्षुसंग्रहे' इति कल्पतरुसंमतः पाठः। कल्पतरुरीत्या टीकाया योजना अर्थश्च इत्थं—'त्रय एत' इत्यत्र 'त्रय' इति पदेन भिक्षुरपि परामृश्यते (गृह्यते)? उत तद्भिन्ना एव परामृश्यन्ते? 'एते त्रय' इत्यत्र 'एत' इति पदेन भिक्षुसंग्रहे, 'त्रय' इति पदेन भिक्षुवर्जनं कर्तुं न तावत् शक्यम्। इति। एवं कल्पतर्वनुरोधेन क्लिष्टयोजनामुपेक्ष्य 'न तावत् तप इति भिक्षुसंग्रहे' इति टीकाशोधने सौलभ्येनार्थावबोधो भवेत्। शास्त्रदर्पणेऽपि 'किं च तप इति भिक्षुसंग्रहे' इति वाक्यं अस्य शोधनस्यानुकूलं भवेत्। परं तु कल्पतर्वनुसारो न भवेत्। इति बोध्यम्। एतत् सम्यगालोचनीयं पण्डितैः। टीकायां 'तेन तस्यैव सदा ब्रह्मसंस्थस्य पुण्यलोकत्व'मिति शोध्यम्।

P. ८८३ 3 त्रिशब्दस्यापि ग्रहणे को हेतुरित्यत आह—**त्रय इत्येत इति चेति । त्रयो वक्तुं (शक्यन्ते) [अशक्याः] इति ।** ततश्च **त्रय** इत्यनेन भिक्षुवर्जं त्रयाणां परामर्श इति पक्षे तपश्शब्दस्यापि न भिक्षुपरत्वमित्येव वक्तव्यमिति भावः ।

**तथा हीति ।** तथा हि सति, **त्रयाणां** त्रिशब्दनिर्दिष्टानां **चतुर्णामपि पुनरेतच्छब्दपरामृष्टानां पुण्यलोकभाक्त्वाभिधानादित्यर्थः।** [**वाक्यवैरूप्य-मिति**] वाक्यवैरूप्यं चेत्यर्थः। **तदिदमुक्तमिति टीकया** उक्तार्थपरत्वं **भाष्यस्य** दर्शितम् । तदुपपादयति—**एवं च भाष्यमपीति ।** 'त्रयो धर्मस्कन्धा' इति श्रुतौ **त्रिशब्दे तपश्शब्दे च** भिक्षुरूपार्थाध्याहारेण योजने अर्थविरोधं वाक्यवैरूप्यं चोक्तदोषं मनसि निधाय तद्दोषपरिहा(रं)राय **श्रुतिस्वरसावगतार्थोपादाने, पूर्वोक्तानां** ब्रह्मसंस्थशब्देन न परामर्श इत्यत्र **व्यपदेशभेदं हेतुमाहेति** व्याख्यातं भवतीत्यर्थः ।

P. 883-11 अर्थभेदाभावे व्यपदेशभेदो न संभवतीत्यत्र **केशवोक्तमनुवदति—यदि-हेति । को विरोध इति ।** तेषामेव ब्रह्मसंस्थायामसृतत्वभाक्त्वं इत्यन्वयसंभवादित्यर्थः । तपश्शब्देन भिक्षोर्ग्रहणेऽपि न दोष इत्याशयेनाह—**भिक्षोश्चेति । वैरूप्यं** परिहरति—**न च भिक्षोरिति ।** चतुर्ष्वपि यदा ब्रह्मसंस्थेत्येव सम्बन्धान्न वैरूप्यमित्यर्थः । आद्यपक्षे दोषमाह—**यदा तदेति । वैरूप्यादेवेति ।** नित्यश्रुताया ब्रह्मसंस्थाया यदा तदेति कादाचित्कत्वेनान्वये वैरूप्यादेवेत्यर्थः । द्वितीयपक्षे दोषमाह—**न च संन्यासस्येति । लोकैषणा** लोकेच्छा । **भवत्येव वैरूप्यमिति ।** गृहस्थादिषु यदेति, भिक्षौ सदेति च, सम्बन्धाद्वैरूप्यमित्यर्थः ।

आग्नेयीन्यायावलम्बनेन पूर्वपक्षस्य दृढत्वात् कथमाभासत्वमित्यत आह—

P. 883-16 **सिद्धान्तिनापीति ।** सिद्धान्त्यनभ्युपगतरूढ्यारोपेण प्रवृत्तत्वादाभासत्व-

---

१. कल्पतरौ 'तपश्शब्देन भिक्षुर्गृह्यते' 'प्रकृतवाचिना परामृष्टत्वात्' 'गृहस्थादीनामनित्यत्वात् ब्रह्मसंस्थायाः तेषु त्रिषु यदा ब्रह्मसंस्थः तदा अमृतत्वमेति, इति, भिक्षौ सदा ब्रह्मसंस्थोऽमृतत्वमेतीति च योजनीयम्' 'यथाश्रुतार्थोपादाने' 'यदिह केशवो बक्ति--यदि भिक्षोः पुण्यलोकप्राप्तिर्विरुध्यते, मा भूत्तपश्शब्देन भिक्षोर्ग्रहणं, ब्रह्मसंस्थपदस्य तु प्रकृताश्रमत्रयमात्रप्रवृत्तौ को विरोधः' 'प्राप्य पुण्यकृतान् लोकानित्यादिवत् । अतो भिक्षोर्नित्या ब्रह्मसंस्थेति भवत्येव वैरूप्यमिति' इति पाठाः शोध्याः, अन्यथा अर्थासंगतेरिति । विमृशन्तु विद्वांसः ।

२. 'तदा हि' इति कल्पतरौ पाठो दृश्यते ।

मित्यर्थः। **कथं त्रयाणां ब्रह्मसंस्थत्वासंभव इति।** प्रकृतपरामर्शिसर्वनाम- P. 883-17
श्रुत्यनुरोधेन गृहस्थादीनामपि ब्रह्मतात्पर्यकत्वरूपा ब्रह्मसंस्थता कल्प्येति भावः।
सर्वनाम्नः प्रकृतपरामर्शित्वासंभवे अप्रकृतपरामर्शित्वमपि दृश्यते। यथा अग्नि-
होत्रे द्वितीयाद्युपस्थाने(?)मन्त्रविनियोजके 'आग्नेयीमिश्चे'ति वाक्ये, आग्नेयी-
पदान्तर्गतस्य सर्वनाम्नः 'अग्निमीळे पुरोहित'मित्याद्यप्रकृताग्नेयीपरत्वम्। तथा
च न तद्बलेन गृहस्थादीनां ब्रह्मसंस्थताकल्पनमिति परिहरति—**अत आहेति।**
**वैरूप्यादिनेति।** वाक्यवैरूप्यार्थविरोधादिनेत्यर्थः।

एवं गृहस्थादीनां ब्रह्मसंस्थतासंभवमभ्युपेत्य न तेषां परामर्श इत्युक्तम्।
इदानीं तेषां ब्रह्मसंस्थतैव न संभवतीति व्याख्यायां दर्शयतीत्याह—**एवमिति।**
ब्रह्मसंस्थताया भिक्षुसाधारणत्वं शब्दार्थकथनेन दर्शयति—**संपूर्व इति। ब्रह्मणि** P 884-2
**समाप्तिर्न स्यादिति।** सर्वदा तत्परायणत्वं न स्यादित्यर्थः। नन्वाश्रमान्तराणां
तत्संस्थत्ववदतत्संस्थत्वसंभवेऽपि, तत्संस्थामादाय **ब्रह्मसंस्थशब्देन** परामर्शः
कुतो न भवेदित्याशंक्य, विशेषणस्य स्वविरोधिव्यवच्छेदकतया सदातनं ब्रह्मसंस्थ-
त्वं यस्य तस्यैव परामर्शो नान्यस्येति दर्शयितुं **तत्संस्था हीत्यादिटीका।** तां
योजयति—**स्वाभावेनेति। टीकायां विरोधादित्यनन्तरं ततश्चेत्यध्याहार्यम्।**

**टीकायां** प्रसिद्धिबलात् **न्यासशब्देन** संन्यास एवोच्यते। तस्य च
ब्रह्मत्वं ब्रह्मसाधर्म्येण स्तुत्यर्थं निर्दिश्यत इत्युक्तम्। तद्विशदयति—**अत्र हि**
**श्रुताविति।** तथा च **टीकायां** (ततः) पर उत्कृष्टो ब्रह्मा। **अत उत्कृष्टो**
**न्यासो ब्रह्मा हीत्यन्वयः** इति भावः। **ब्रह्मणि तात्पर्येणेति।** ब्रह्मप्राप्त्युद्देश्य-
कत्वेनेत्यर्थः। संन्यासस्य कर्मानधिकृतविषयत्वाभावे **ब्रह्मज्ञानपरिपाकाङ्गत्वाच्चेति**
न हेतुरिति शङ्कते—**तदनुपपन्नमिवेति।** अधिकार्यन्तरावरुद्धत्वमनेन हेतुना
विवक्षितमिति न दोष इति **टीकाशयमाह—संन्यासस्येति।** P. 884-9

न च ब्रह्मसाक्षात्कारकामं प्रति संन्यासविधाने, कथं तद्रहितानां वाम-
देवादीनामिन्द्रादिदेवानां च तत्साक्षात्कार इति वाच्यम्। संन्यासस्य तस्मिन्
जन्मनि जन्मान्तरे वा साक्षात्कारे जनकत्वं चित्रायागादिवत् इत्यभ्युपगमेन

---

१. 'अन्यनिष्ठतायां' इति कल्पतरौ पाठः।

P. 885-2 पूर्वजन्मकृतसंन्यासादेव तेषां तत्साक्षात्कारोपपत्तेरिति भावः। **घटिकास्थानानि**[1] पुण्यक्षेत्रविशेषाः **गोदावरीतटादिषु** प्रसिद्धाः। तेषु **पठ्यमानामाथर्वणीं श्रुतिं** 'अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ती'त्युपक्रमां **ब्रह्मोपनिषदि**ति प्रसिद्धां **'सशिख'मित्यादिकां न पश्यन्तीत्यर्थः**।

यत्त्वत्र 'सशिख'मित्यनेनोच्यमानं शिखासाहित्यं न कर्मकारकाभिप्रायम्। किं तु कर्तृकारकाभिप्रायमिति न शिखात्यागसिद्धिरिति परैरुक्तं[2], इदमुपलक्षणम्। यच्च 'बहिस्सूत्र'मित्येदपि 'अपपरिबहिरञ्चवः पञ्चम्ये'ति समासबलेन सूत्राद्बहिर्भूतस्य तद्व्यतिरिक्तस्यैव त्यागपरमिति न यज्ञोपवीतत्यागसिद्धिरपीत्युक्तम्। तन्निरा-

P. 885-3 करोति—**न चात्रेत्यादिना**। बाह्यशिखां यज्ञोपवीतं च व्यावर्त्य ज्ञानस्यैव शिखात्वयज्ञोपवीतत्वसंपादनादित्यर्थः। उपक्रमे 'सशिख'मित्यस्य कर्त्रभिप्रायत्वे विशेषणमेवेदं व्यर्थं स्यात्। कर्माङ्गवपन इव शिखात्यागस्यानुक्तसिद्धत्वेन प्रसक्त्यभावात्। उभयथान्वयसंभवेऽपि वाक्यशेषान्निर्णय इति भावः।

न च 'ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते।
काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः॥
स याति नरकान् घोरान् महारौरवसंज्ञकान्॥'

इति **परमहंसोपनिषद्वाक्यवत्** ज्ञानस्तुत्यर्थ एवायं सन्दर्भ इति, न 'सशिख'-मित्यस्य वाक्यशेष इति वाच्यम्। तत्र 'सर्वान् कामान् परित्यज्याद्वैते परमे स्थिति'रिति ब्रह्मनिष्ठायाः प्रकृतत्वेन तद्रहितयतिनिन्दापूर्वकं ज्ञानस्तुत्यर्थत्वेऽपि, प्रकृते सन्निधिश्रुतशिखायज्ञोपवीतत्यागविधिशेषत्वं परित्यज्य असन्निहितज्ञान-स्तुत्यर्थत्वायोगात्।

तस्मात् 'अथातः परमहंसपारिव्राज्यविधिं व्याख्यास्यामः।' इत्युपक्रम्य प्रवृत्तेन 'सशिखान् केशान्निकृत्य विसृज्य यज्ञोपवीतम्' इत्यादिलोकाक्षि-गृह्यवचनेन,

---

१. 'घटिकास्थाने, घटिकाव्यवहारवति देशविशेषे' इति न्यायरत्नदीपावल्या-मुक्तम्।

२. भास्करतदनुयायिभिः परमहंसप्रद्वेषिभिः त्रिदण्डित्वेन प्रसिद्धैः, तत्प्रदर्शितस्यैव पन्थानमाश्रितैः तदीयोक्तियुक्त्याभासमात्रशरणैः आधुनिकैः विशिष्टाद्वैतमार्गप्रचारकैर्वेङ्कट-नाथादिभिश्च।

'शिखां यज्ञोपवीतं च त्यक्त्वा सर्वान् परिग्रहान् ।
यः समस्सर्वभूतेषु परहंसः स उच्यते ॥'

इत्यादिपुराणवचनैश्चोपोद्बलितादुदाहृतात् संदर्भात् शिखायज्ञोपवीतव्यावर्तनं सिध्यतीति भावः ।

एतेन यज्ञोपवीतत्यागो गृहस्थधार्यद्वितीययज्ञोपवीतपर इत्याधुनिककल्पनं निरस्तम् । उक्तश्रुतिस्मृतिविरोधात् । आरुण्युपनिषदि 'दण्डमाच्छादनं कौपीनं परिग्रहेच्छेषं विसृजेत्' इत्यविशेषेण सर्वत्यागविधानात् । जाबालोपनिषदि यथाजातरूपधरत्वोक्तेः तथा संकोचे प्रमाणाभावात् । तदुदाहृतश्रुतिस्मृतीनां कल्पितत्वेन प्रामाणिकत्वाभावात् । प्रामाणिकत्वे वा कुटीचकादिसंन्यासिविषयत्वसंभवाच्च ।

शिखायज्ञोपवीतत्यागस्य विषयान्तरकल्पनमपि परोक्तं निरस्यति—न चैतद्द्वित्रिदिनेति । सर्वत्यागरूपपरमहंससंन्यासे स्मृतिमपि प्रमाणमाह—महार्णवे चेति । सर्वत्यागादिति । 'त्रिदण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रं मेखलां शिखां यज्ञोपवीतञ्चेत्येतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेत् यथाजातरूपधर' इति जाबालोपनिषद्वचनात्, परमहंसोपनिषदि दण्डादिधारिणं अमुख्यं परमहंसमुक्त्वा, 'अयं मुख्यो न दण्डं न कमण्डलुं न शिखां न यज्ञोपवीतं नाच्छादन'मित्युक्तत्वाच्चेति भावः । P. 885-5

'बहिस्सूत्रं' इत्यस्य यज्ञोपवीतपरत्वं किं तच्छब्दबलादेव? किं वा संन्यासविधिबलात्? अथ वा अन्तस्सूत्ररूपपरमात्मनिष्ठाबलात्? नाद्य इत्याह—बहिस्सूत्रं इत्यन्तर्यामिण इति । न च 'हृदि प्राणा' इति प्राणशब्दस्य चक्षुरादिपरत्वेन हिरण्यगर्भपरत्वाभावान्न तदुदाहर्तुं युक्तम्, किं तु 'हृदि प्राणश्च ज्योतिश्चे'त्येतदेवोदाहर्तव्यमिति वाच्यम् ।

'हृदिस्था देवतास्सर्वाः हृदि प्राणाः प्रतिष्ठिताः ।
हृदि प्राणश्च ज्योतिश्च त्रिवृत्सूत्रं च तद्विदुः ॥'

इति श्रुतौ देवतादीनामपि कीर्तितत्वेन विशिष्य हिरण्यगर्भस्य प्रकृतत्वं वक्तुमशक्यमिति, द्विवारकीर्तनात् प्राणशब्दार्थस्य प्रकृतत्ववर्णनेन तदन्तर्गतस्य हिरण्य-

गर्भस्यैव बहिस्सूत्रपदेन परामर्श इत्येवमभिप्रायेण ग्रन्थप्रवृत्तेः। अत एव हिरण्यगर्भोऽभिधीयत इत्युपक्रम्य प्राणप्रक्रमादित्युक्तम्।

P. 886-2 न द्वितीय इत्याह—**वाक्ये चेति**। तृतीयं निराकरोति—**परमात्मज्ञानेनेति**। यदि स्वतः सूत्रनामातिदेशेन वा परमात्मनो यज्ञोपवीतकार्यकरत्वं, तदा तदेव तन्निष्ठाबलात् त्याज्यं भवेत्, न त्वेतदस्तीत्यर्थः। **सूत्रसादृश्येति**। बहिर्भूतं सूत्रं बहिस्सूत्रं इति व्युत्पत्त्या बहिस्सूत्रपदमुपवीतपरमेव। हिरण्यगर्भपरत्वे तु, 'यदक्षरं परं ब्रह्म तत्सूत्र'मित्यादाविव सूत्रसादृश्येन सूत्रपदमन्तर्यामिणि गौणमाश्रित्य, तद्द्वारा सूत्राद्बहिर्भूतं बहिस्सूत्रमित्याश्रयणीयत्वेन गौरवं स्यात्, तच्चायुक्तं लक्षणयैवोपपत्तेरित्यर्थः। **सूत्रशब्देति**। बहिस्सूत्रशब्देत्यर्थः।

इतोऽपि बहिस्सूत्रपदमुपवीतपरमित्याह—**त्रिवृत्सूत्रं चेति**। 'त्रिवृत्सूत्रं

P. 886-6 च तद्विदु'रिति वाक्यगतेन तच्छब्देन परामृश्येत्यन्वयः। **त्रिसूत्रतासंपादनात् इति**। त्रिवृत्कृतप्रपञ्चात्मत्वेन त्रिसूत्रतासंपादनादित्यर्थः। बहिस्सूत्रपदस्योपवीतपरत्वे हेत्वन्तरमाह—**धारणादिति**। भोजनमूत्रपुरीषोत्सर्गादिप्रयुक्तमप्रायत्यमुच्छिष्टत्वं, स्वापादिनिमित्तकमशुचित्वं, तदुभयनिवृत्तिर्यज्ञोपवीतसाध्या। 'विना यज्ञोपवीतेन आचान्तोऽप्यशुचिर्भवे'दित्यादिस्मरणात्। **तस्या निवृत्तेरान्तरसूत्रात्मकपरमात्मना संपादनेनैवेत्यर्थः**।

वाक्यशेषबलादपि बहिस्सूत्रपदमुपवीतपरमित्याह—**तथोपसंहारेऽपीति**। ब्रह्मण एव प्रकृतत्वेन तत्कार्येषु विशिष्य हिरण्यगर्भपरामर्शेऽपि नास्ति प्रमाणमित्याह—**यत्त्वित्यादिना**। संन्यासविधिबलादपि बहिस्सूत्रपदं यज्ञोपवीतपरमित्याह—**यच्चेत्यादिना**। ज्ञानसाधनत्वसामर्थ्येन त्यागस्संन्यास इत्युक्त्वा, 'त्यागेनैके अमृतत्वमानशुः' 'स तानि प्राप्य त्यजे'दित्यादिप्रचुरप्रयोगादपि स एव स इत्याह—**त्यागसंन्यासेति**। तथा च 'बहिस्सूत्रं त्यजे'दित्यस्य संन्यासविधित्वेऽपि न दोष इति भावः।

P. 886-13 **अपरमहंस इति**। तथा च, 'परमहंसो यज्ञोपवीतादि त्यजे'दित्यस्य 'न परमहंसो यज्ञोपवीतादि धारये'दित्येवं विपरिणतस्य 'नित्ययज्ञोपवीती'त्यादि-

---

१. परिमलनिरासोऽयम्।

२. कल्पतरौ 'परमात्मना' इति दृश्यते।

विधिभिरेकवाक्यतेति भावः। **नित्यविधिभिरिति**। नित्यतया यज्ञोपवीतादि- P. 886-13
धारणविधायकैरित्यर्थः। **निवृत्तेः**। धारणनिवृत्तेः। **तत्र कथमिति**। विहि-
तप्रतिषेधे विकल्पापत्तेः, **धारणनिवृत्तेः बोधो निषेधेन न कथंचिदपि कर्तुं**
**शक्यत इत्यर्थः**।

ननु नित्यविधिभिरविशेषेण निवृत्तेः प्रत्यवायहेतुत्वावगमेऽपि, निषेधेन परमहंसविशेषविषये प्रवृत्तेरेव प्रत्यवायहेतुत्वकल्पने, निवृत्तिबोधने न कोऽपि दोष इत्यत आह—**न चेति**। **तथा सतीति**। अलौकिकस्य धारणस्य रागतः प्राप्त्यभावेन शास्त्रतोऽपि प्राप्त्यनभ्युपगमे, निषेध एव न सिध्येदित्यर्थः। **सर्वनाशेति**। 'सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः'। इति न्यायेन, विकल्पपक्षे निषेधशास्त्रस्य कदाचित्प्रामाण्यमस्तीति न सर्वस्यापि प्रामाण्यस्य नाशः। अस्मिंस्तु पक्षे निषेधस्यात्मलाभ एव नास्तीति सर्वस्यापि प्रामाण्यस्य नाश इत्यर्थः।

ननु पर्युदासपक्षेऽपि प्रदेशान्तरस्थैकवाक्यताकल्पनं दोष इत्याशंक्य, बहुदोषदुष्टविकल्पापेक्षया एकदोषदुष्टः पर्युदासो वरमित्याशयेनोपसंहरति—**तस्मादिति**। **व्यवह्रियमाणेति**। माधवाचार्यप्रभृतिभिः व्याख्यातायां द्वाद- P. 887-2
शाध्याय्यामदर्शनादित्यर्थः। **कल्पने चेति**। अन्यापि पराशरस्मृतिरुत्तरभाग-रूपा काचिदस्ति। यत्रैतद्वाक्यमिति कल्पने चेत्यर्थः। **सर्ववेष्टनादिस्मृतिव-दिति** वक्तव्ये, **बुद्धादिस्मृतिवदि**त्युक्तिरुत्तरपरामर्शेनाभ्युपगतस्य कात्स्न्येनैवाप्रामाण्यमिति दर्शयितुम्। न केवलं श्रुतेरेव बाधः। किं तु सकलशिष्ट-परिगृहीतस्मृतिभिरपीत्याशयेनाह—**भवन्ति च स्मृतय इति**।

**पूर्वं भिक्षुरिति**। कुटीचकाद्यवस्थायां परिगृहीतमित्यर्थः। **कौपी-नाच्छादनार्थं** [वासोऽधस्य परिग्रहं कुर्यादित्यर्थः] **यज्ञोपवीतं कर्माङ्गमिति**। पारमहंस्यव्यतिरिक्तकर्माङ्गमित्यर्थः। **तस्मादस्य परित्यागः क्रियते** **कर्मभिस्सहे**त्युत्तरत्र यज्ञोपवीतशेषिभूतानां कर्मणां त्याज्यत्वकीर्तनात्। **महा-** P. 888-9
**भारतेऽपीति**। त्रिदण्डित्वादिकं कुटीचकादिविषयं, एकदण्डित्वादिकं तु

---

१. 'सर्वं भिक्षुः' इति कल्पतरौ पाठो दृश्यते। कल्पतरौ 'पात्रपादुकासन' इति पाठः।

२. 'एकदण्डी'त्यादिकं महाभारते आश्वमेधिके भगवद्वचनम्।

परमहंसविषयम्। **आरुण्युपनिषदि** 'कुटीचको ब्रह्मचारी कुटुम्बं विसृजेत्पात्रं विसृजेत् दण्डान् विसृजे'दिति कुटीचकस्य पारमहंस्यप्रवेशकाले त्रिदण्डत्यागमुक्त्वा, 'सखा मा गोपाये'त्यादिमन्त्रपठनपूर्वकं 'वैणवं दण्डं कौपीनं परिग्रहे'-दिति विधानात्।

'अथापरं परिव्राजकलिङ्ग'मित्यादिना 'शिखायज्ञोपवीतत्रिदण्डकमण्डलुकपालानां त्यागी'ति **विश्वामित्रस्मरणात्**। 'अत ऊर्ध्वं यज्ञोपवीत'मित्युपक्रम्य 'एतानि वर्जयित्वा अथैकं दण्डमादत्ते' इति **बोधायनस्मरणाच्च**। न त्वेकदण्डत्रिदण्डधारणयोर्विकल्प इति वा, त्रिदण्डालाभे तल्लाभपर्यन्तमेकदण्डधारणमिति वा, कल्पनं युक्तम्। त्रिदण्डत्यागपूर्वकमेकदण्डधारणप्रतिपादकश्रुतिस्मृतिविरोधात्।

तथा च 'नष्टे जलपवित्रे च त्रिदण्डे वा प्रमादतः।
एकं तु वैणवं दण्डं पालाशं बैल्वमेव वा॥
गृहीत्वा विचरेत्तावद्यावल्लभ्यं त्रिदण्डकम्।'

इत्यादिवचनमपि कुटीचकादिविषयमेवेति भावः। एवमन्यस्तुत्यर्थसंन्यासनिन्दावचनबलादपि यज्ञोपवीतादित्यागसिद्धिरित्याह—**तथा जटेति**। **लिङ्गपुराणपाद्मपुराणवचनबलादपि** शिखायज्ञोपवीतादित्यागपूर्वक एव संन्यासः परमहंससंन्यास इत्याशयेनाह—**लिङ्गपुराणे इत्यादिना**। P. 880-2

ननु 'इन्द्रस्य वज्रोऽसीति वैणवान् दक्षिणे पाणौ धारयेदेकं वा, यद्येकं तदा सशिखं वपनं कृत्वा यज्ञोपवीतं त्यजे'दिति **मैत्रायणीयश्रुतिबलात्**, 'काममेकं वैणवं दण्डमाददीते'ति कामशब्दप्रयोगाच्च, परमहंसस्यैव दृढवैराग्यरहितस्य त्रिदण्डधारणादिकं धर्मः, दृढवैराग्यसहितस्य त्वेकदण्डधारणादिकं धर्म इत्येवं व्यवस्था कुतो न स्यात्। एवं च सति—

'चतुर्धा भिक्षवो विप्राः सर्वे चैव त्रिदण्डिनः।'

इत्यादिवचनान्यपि समञ्जसानि भवन्तीति चेन्न। उदाहृतबहुश्रुतिस्मृतिविरोधेन परमहंसे त्रिदण्डधारणकल्पनायोगात्। मैत्रायणीयश्रुतौ त्रिदण्डधारणस्य कुटीचकादिविषयत्वात्।

कामशब्दस्य च, 'यथाजातरूपधरः' 'अयं मुख्यो न दण्डं न शिखा'-मित्यादिश्रुत्यनुरोधेन संन्यासस्य विविदिषासंन्यासविद्वत्संन्यासभेदेन द्वैरूप्यात्, विद्वत्संन्यासिविषयदण्डधारणाभावापेक्षत्वात्। चतुर्णामपि कुटीचकबहूदकहंसपरमहंसानामविशेषेण कीर्त्यमानं च त्रिदण्डित्वं वाग्दण्डादित्रिदण्डविषयम्। तथा च मनुः—

'वाग्दण्डोऽथ मनोदण्डः कर्मदण्डश्च ते त्रयः।
यस्यै ते नियता बुद्धौ त्रिदण्डीति स उच्यते ॥'

इति। अतस्सिद्धमुदाहृतश्रुतिस्मृतीतिहासपुराणबलात् परमहंसस्य शिखायज्ञोपवीतादित्यागः सन्ध्यौपासनब्रह्मयज्ञवेदवैदिकादिसकलकर्मत्यागश्चेति। तदेतदभिप्रेत्याह—**पराक्रान्तं चेति**। P. 889 13

॥ इति परामर्शाधिकरणम् ॥

---

## ॥ अथ स्तुतिमात्राधिकरणम् ॥

### सू०॥ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

### सू०॥ भावशब्दाच्च ॥ २२ ॥

पूर्वाधिकरणोक्तार्थदृष्टान्तेन प्रत्यवस्थानात् सङ्गतिरित्याह—**पूर्वत्रेति**। अनुष्ठेयगार्हस्थ्यसाम्येत्यर्थः। कूर्मः पुरोडाशः। नन्वस्याधिकरणस्यावान्तरसङ्गतिसद्भावेऽपि, विद्यासाधनविचारत्वाभावात् कथमस्मिन् पादे सङ्गतिरित्याशङ्क्य, विद्यासाधनविचारोपोद्घातप्रथमाधिकरणोक्तं यद्विद्यायाः पुरुषार्थत्वं, तद्दृढीकरणार्थत्वात् पादसङ्गतिरित्याशयेनाह—**यदेति**। कर्माङ्गभूतोद्गीथादिनिष्ठानामपि P. 890 2 रसतमत्वादीनां उद्गीथादिस्तुतिः यदा न साध्या, तदा कर्मानङ्गात्मसंबन्धिन्या विद्यायाः कर्मफलं न साध्यमिति किमु वक्तव्यम्। एतदिह नः सिद्धान्ते फल[2]मित्यर्थः।

---

१. कल्पतरौ 'तत्तदागमाचार' 'व्रतानां' 'संज्ञाताः' इति पाठाः।

२. अत्र कल्पतरौ 'इति नस्सिद्धान्ते' इति पाठ इति ज्ञायते। फलमिति श्लोकस्थेनान्वयः। 'अङ्गनिष्ठमपि रसतमत्वादि यदा न स्तुतिः, तदा अनङ्गात्मधियः किं अङ्ग वक्तव्यम्। इति नः सिद्धान्ते फलम्। इत्यन्वयः। 'स्तुत्यर्थत्वमिति पूर्वपक्षे' इति पूर्वं पाठ इति सूचितमनेन। फलमिति तत्रापि श्लेषः।

प्रदेशान्तरस्थविध्येकवाक्यत्वासंभवः किं सन्निहितोपास्तिविध्येकवाक्यत्वसंभवात्? किं वा तदुपस्थापकाभावात्? अथ वा समभिव्याहाराभावात्? नाद्यः। संनिहितो विधिर्नास्तीति कृत्वाचिन्तया पूर्वपक्षप्रवृत्तेः। न द्वितीयः, उद्गीथस्यैव तदुपस्थापकत्वादित्याद्यकल्पमादाय परिहरति---**इत्याशङ्क्याहेति**। तृतीयं शङ्कते---**ननु विशेषणेति**। समभिव्याहाराभावेऽपि विशिष्टार्थतात्पर्येणैकवाक्यताकल्पनात् स्तुतिरुपपद्यत इति परिहरति---**अत आहेति**। [तत्राहेति].। (P. 890-5)

**एषोऽर्थवाद इति**। **विध्यसमभिव्याहृतैरर्थवादैरिति टीकायां** प्रधानशेषयोः विध्यर्थवादशब्दाभ्यां निर्दिष्टत्वात्, अनुष्ठेयपवनक्रियाप्रकाशकत्वेन प्रधानभूतं 'चित्पतिस्त्वा पुना'त्वित्यादिकमपेक्ष्य तत्करणप्रकाशक'मच्छिद्रेणे'-त्यादिकं **अर्थवाद इत्युक्तम्**। **प्रतिमन्त्रमनुषज्यत इति**। पवनक्रियाकरणप्रकाशनद्वारा पवनक्रियाशेषभूतस्यास्य 'त्रिभिः पवयती'ति वचनानुरोधेन त्रिभिरपि मन्त्रैः प्रत्येकं पवनक्रियाप्रकाशने तत्करणप्रकाशनाय प्रतिमन्त्रमनुषङ्गावश्यंभावादिति भावः।

(P. 890-10) **वैश्वदेव इति**। चातुर्मास्ये वैश्वदेवाख्यपर्वणि 'आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुं, सावित्रं द्वादशकपालं, सारस्वतं चरुं, पौष्णं चरुम्' इति विहितेषु हविष्षु श्रुता ये अर्थवादाः 'वार्त्रघ्नानि वा एतानि हवींषी'त्यादयः। ते वरुणप्रघासादिपर्वगतेषु आग्नेयादिपौष्णान्तेषु हविष्षु अतिदिश्यन्त इत्यर्थः। इतराणि वैश्वदेवगतानि।

ननु **सूत्रभाष्ययोः** कृत्वाचिन्तयैव पूर्वपक्षो वर्णितः। सिद्धान्ते **'भावशब्दाच्चे'ति सूत्रेण** कृत्वाचिन्तोद्घाटनात्। तथा च कथं **यद्यपीत्यादि-टीकेत्यत आह---सन्निहितेति**। अभ्युच्चयेनायं पक्ष उपपाद्यत इति। अत्र-**टीकायां** 'स एष रसाना'मित्यादेः प्रदेशान्तरस्थविध्येकवाक्यता हि सत्यामाकांक्षायां, सा च किं विधेः? अर्थवादस्य वा? आद्येऽपि सा किं रक्तपटन्यायेनोत्थापिता? स्वारसिकी वेति विकल्प्य, प्रथमं, **प्रतीतसमभिव्याहृ(ता)तीना-मित्यादिना** निराकृत्य, द्वितीयं निराकर्तुं **न तु स्तुत्या विनेत्यादिटीका**। (P. 891-1)

---

१. कल्पतरौ 'अव्यभिचरितः स्वार्थादि' इति पाठः।

२. टीकायां 'यदि तु' इति वर्तते।

तत्र 'अस्ति तु तदित्यतिरेके परिहार' इति प्रभाकरवाक्यं व्याख्येयभाष्याभिप्रायकथनपूर्वकमवतार्य व्याचष्टे—**विधिनैवेत्यादिना**। P. 891-2

नन्वनुषङ्गादाविव प्रकृतेऽपि भवत्वेकवाक्यतेति शङ्कते—**नन्वर्थवादेति**। अनुषङ्गादिस्थले किं प्रधानस्य स्वारसिक्येवाकाङ्क्षेति तद्दृष्टान्तेन प्रकृतेऽपीति ब्रवीषि ? किं वा तत्र यथा आकांक्षा तथा प्रकृतेऽप्यस्तीत्येतावन्मात्रमिति विकल्प्य, प्रथमं निराकर्तुं **अत एवेत्यादिटीका**। तत्रातश्शब्दार्थमाह—**यत एवेति**। प्रधानस्य स्वरसतोऽपेक्षाभावात्। **अर्थवादप्राप्त्यभिधानमसमञ्जसमिति टीकयैव** तत्र निमित्तान्तरवशादुत्थापितैवाकांक्षा, तच्च प्रकृते नास्तीति द्वितीयकल्पनिराकरणमपि सूचितम्। तद्विशदयति—**अतिदेशे त्वित्यादिना**। अर्थवादातिदेशविधिना हि विधीनामाकांक्षामुत्थाप्य तैर्व्यवहितै-(रर्थै)रर्थवादानां सम्बन्ध इत्यर्थः।

**न त्विह तदिति**। विधिरूपं प्रदेशान्तरस्थस्य विधेराकाङ्क्षोत्थापकमित्यर्थः[1]। **अनुषङ्गेऽपीति**। अनुषङ्गस्थलेऽप्यर्थवादस्य साकाङ्क्षत्वात्तद्बलेन प्रधानस्याप्याकाङ्क्षामुत्थाप्य व्यवहितार्थसम्बन्ध इत्यर्थः। साकाङ्क्षत्वमेवाह—**अच्छिद्रेणेति**। एवमप्यव्यवहितेन 'देवस्त्वा सविता पुना'त्विति मन्त्रेणैवान्वयः कुतो न भवेदित्यत आह—**क्वचित्त्विति**। प्रधानपवनक्रियानुरोधेन प्रतिमन्त्रमन्वयावश्यंभावादिति भावः। P. 891-9

ननु प्रकृतेऽप्यर्थवादाकाङ्क्षयैव विधेराकाङ्क्षा कल्प्यतामित्याशंक्य, **सन्निहितस्य तूपासनविधेः इत्यादिटीकया** द्वितीयपूर्वपक्षनिराकरणव्याजेन अर्थवादानां प्रदेशान्तरस्थविधिविषयाकांक्षाबलात् तदेकवाक्यतेति कल्पनिराकरणात् तत एव तदाकाङ्क्षाबलात् विधेराकांक्षा कल्प्यतामिति पक्षोऽपि निरस्तो भवतीत्याशयेनाह—**न त्विहेत्यादिना**। P. 891-10

**टीकायामगत्या हि स्तेत्यनेन**[2], ननु विधेः स्तुत्यपेक्षाभावे कथं केवलहानश्रवणस्थले स्तुतिप्रकर्षलाभार्थमुपायनमप्यन्वेतीति **'हानौ तूपायने'**त्यधि-

---

१. कल्पतरुवाक्यमिदं टीकाप्रतीकत्वभ्रान्तिजनकबृहदक्षरमुद्रितमभूत् कोशे प्रमादात्।

२. टीकायां 'स्तुत्येति विशये' इति पाठः।

**करणे** वर्णितम् । कथं वा सगुणविद्यायामुपास्यगुणत्वेनान्वितानामपि सत्यकामादीनां निर्गुणविद्यायां स्तुतिप्रकर्षलाभार्थमन्वयः **कामाद्यधिकरणे** वर्णितः ? इति शङ्का निराकृता । तथाहि—हानेन तावदुपस्थाप्यते उपायनं, हीनस्य कर्मणः फलजननार्थमाश्रयन्तरोपायनावश्यंभावात् । तथा च तत्रोपस्थापितस्योपायनस्य प्रयोजनान्तराभावादगत्या स्तुतिप्रकर्षार्थित्वम् । एवं हृदयायतनत्वादिसाम्येन विद्याद्वयाम्नातगुणसाम्येन चोपस्थापितानां सत्यकामत्वादीनां निर्गुणविद्यायां प्रयोजनान्तराभावादगत्या स्तुतिसमर्पकत्वमेवेति ।

ननु प्रणवात्मकस्योद्गीथस्य कर्मत्वाभावात् कथं तद्विधेः कर्मविधित्वमित्यत

P. 892-1 आह—**कर्माङ्गेति** । **न हि धात्वर्थभेद इति** । कृभ्वस्तिरूपधात्वर्थभेदे, कुर्यात् क्रियेतेति लकारार्थकर्तृकर्मरूपकारकभेदे वा विधिलक्षणं न हि भिद्यते, सर्वत्र विधेरेकरूपत्वावगमादिति भावः । **विधिलक्षणं तावदाहेति** । इष्टसाधनत्वं विधिः । तच्च लिङ्त्वाद्याकारेणाख्यातवाच्यं आख्यातत्वाकारेण तद्वाच्यायां पुरुषप्रयत्नरूपायां भावनायामेकप्रत्ययश्रुतिसामर्थ्यादन्वेति । तथा च भावनागतमिष्टसाधनत्वं विधिरित्येवं तल्लक्षणमाहेत्यर्थः ।

ननु लिङादिवाच्यो विधिरिह विचार्यः । भाष्ये **उपासीत विद्यादित्यादयो विधिशब्दाः श्रूयन्त** इति प्रक्रमात् । स च नेष्टसाधनत्वं, 'न हन्या'दित्यादिवाक्यगतानां लिङादीनां तदर्थकत्वाभावेन व्यभिचारादिति शङ्कते—**ननु विधाविति** । लिङादिशब्द एव विधिरिति केचित् । तद्वाच्यो नियोग

P. 893-1 इत्यन्ये । तद्वाच्या प्रवर्तनेत्यपरे । तदेतन्मतत्रयमप्यनुवदति—**ननु शब्द एवेति** ।

अर्थज्ञानविधुराणां लिङादिश्रवणेऽप्यप्रवृत्तेः, नियोगस्य कल्प्यतया लिङ्वाच्यत्वायोगादिष्टसाधनत्वातिरिक्तायां प्रवर्तनायां मानाभावाच्च लोके प्रवर्तकत्वेन प्रसिद्धस्येष्टसाधनताज्ञानस्य यो विषय इष्टसाधनत्वं तदेव विधिः । प्रवर्तकज्ञानविषयस्यैव लिङाद्यर्थत्वेन विधित्वौचित्यादिति परिहरति—**नेत्याहेति** ।

P. 893-1 **वार्तिकार्थमिति** । ननु यदि भावनागतमिष्टसाधनत्वं विधिः । तर्हि, 'यजेत उपासीत' इत्यादिकमेवोदाहर्तव्यम्, न तु 'कुर्यात् क्रियेते'त्यादि । तत्र प्रत्ययेन कृतिरूपाया भावनाया अनभिधानात् । न हि कृत्यनुकूला कृतिः संभवतीत्याशङ्कां, तत्र प्रत्ययस्य भावनानभिधायकत्वेऽपि धातूनामेव तदभिधाय-

कत्वाद्युक्तमुदाहरणत्वमिति निराकुर्वन्, **श्लोकवार्तिकार्थमुपपादयतीत्यर्थः**।
**कृञ्श्चेति**। कृञ्धात्वनुकरणशब्देन समासप्रदर्शनं स्पष्टतया धातुस्वरूपपरिज्ञानार्थं, का च, भूश्चेति विग्रहप्रदर्शने कृञ्धातुरत्र निर्दिष्ट इति स्पष्टमनवगमात् इति द्रष्टव्यम्। **उदाहृतवानिति**। '**कुर्यात् क्रियेते**'ति श्लोकक्कदिति शेषः। P. 893-2

नन्वेवमपि यजेतेत्यादिकमनुदाहृत्य कुर्यादित्यादेरेवोदाहरणे को हेतुरित्याशंकां निराकर्तुं **सामान्योक्ताविति** टीका। तदभिप्रायमाह—**यद्यपीत्यादिना**। सर्वत्र व्याप्तिमेव दर्शयति—**एतद्धातुगतेति**। यजेतेत्यादिषु भासमानानां यागाद्यनुरक्तानां भावनाविशेषाणां यत्सामान्यं भावनामात्रं तद्वाचिन एते कृभ्वस्तयो धातवः, तद्गतैश्च विधिरूपैः प्रत्ययैरेतद्धातुवाच्यभावनासामान्यगतेष्टसाधनत्वबोधकैः सामान्यद्वारा सकलभावनाविशेषगतमिष्टसाधनत्वं बोधितं भवतीत्यर्थः।

एवं च कुर्यादित्याद्यनेकोदाहरणस्य तत्तद्धातुगतेन विधिप्रत्ययेन तत्तद्भावनागतं श्रेयस्साधनत्वं प्रतिपाद्यत इत्येतदर्थस्फुटीकरणार्थत्वान्न धातुभेदेन कर्तृकर्मवाचिप्रत्ययभेदेन वा भावनाभेदः। येन तद्बलेन विधिलक्षणं भिद्येतेति न प्रागुक्तशङ्कावकाश इत्याह—**न तु प्रतिधात्विति**। नन्वेवमपि **कृञ्धातोः** त्रिवारमुदाहरणं किमर्थमित्याशंक्य, कारकभेदेऽपि भावनाया एकत्वात् तद्गतमेवेष्टसाधनत्वं विधिरिति दर्शयितुं तदुदाहरणमित्याशयेन **तत्र कुर्यादित्यादिटीका**। P. 893-4

तत्र कुर्यात् क्रियेतेत्यत्र भावनैव प्राधान्येनाभिधीयते। तया च कर्तृकर्मणोराक्षेपः। कर्तव्यमित्यत्र तु द्रव्यमेव प्रधानं, भावना तु तदुपसर्जनमित्यत्र किं नियामकमित्यत आह—**कर्तव्यमित्यस्येति**। 'भावप्रधानमाख्यात'मिति स्मरणादाख्यातस्थले भावनायाः प्राधान्येऽपि कृदन्तस्थले द्रव्यस्यैव प्राधान्यम्। कृतां सिद्धरूपवस्त्वभिधायकत्वस्वाभाव्येन प्रधानतया भावनाभिधायकत्वायोगादित्यर्थः।

**भावना च प्रयोजकव्यापार इति**। 'घटो भवति, तं कुलालो भावयती'त्यादिप्रयोगादिति भावः। तथा च भवत्यस्तिकर्त्रोः भावनाया अभावान्न तद्वाचित्वमस्तिभवत्योरिति भावः। अवस्थाभेदेन प्रयोज्यस्यापि प्रयोजकत्वसंभ- P. 893-6

वात् अस्तिभवत्योरपि प्रयोगविशेषे भावनावाचित्वं संभवतीति परिहरति—

P. 893-7 **तथापीति** । **एवमिति** । तथा च **श्लोके** करोतौ प्रयोगभेदप्रदर्शनमस्तिभवत्योरप्युपलक्षणमिति **टीकाशय** इति भावः ।

ननु **टीकायामस्तेः** प्रयोगान्तरं किमिति न प्रदर्शितम् । **श्लोके** स्यादित्येतावन्मात्रस्यैव प्रदर्शितत्वादित्यत आह—**अस्तेर्भ्वादेशादिति** । आर्धधातुकविषये 'अस्तेर्भूरि'त्यनेन **सूत्रेण** अस्तेः भ्वादेशविधानात् भूयेत भवितव्यमित्येतदुदाहरणद्वयमस्तेरपि साधारणतयैवोदाहृतमित्यर्थः । **धात्वर्थोपसर्जनेति** । यद्यपि भवितव्यमिति तव्यप्रत्ययो न कर्मणि, अस्तिभवत्योरकर्मकत्वात्, किन्तु भावे । तथापि तव्यप्रत्ययेन धात्वर्थस्यैव सिद्धरूपेण प्रधानतयाभिधानात् तदपेक्षया धात्वभिहिताया भावनाया उपसर्जनत्वमिति द्रष्टव्यम् ।

P. 894-2 **भूयेतेत्याक्षिप्तकर्मिकेति** । यद्यपि भूयेतेति भावे लकारो न तु कर्मणि, अकर्मकेभ्यो धातुभ्यो भावे कर्तरि च लकारविधानात् । तथा च न कर्माक्षेपः । तथापि 'देवदत्तेन दण्डिना भूयेते'ति दण्डित्वभवनानुकूलव्यापारस्यैव भावनाख्यस्य विधेयतया तत्सामर्थ्याद्दण्डित्वस्य कर्मत्वमाक्षिप्तं भवतीत्याक्षिप्तकर्मिका भावनेति भावः ।

भावनाया धात्वर्थत्वाभ्युपगमात् कथं धात्वर्थविषयत्वं भावनाया इत्याशंक्य, धात्वर्थैकदेशस्य विषयत्वाभ्युपगमान्न दोष इत्याशयेनाह—**दण्डित्वादीति** । **नन्विति** । तथा च **श्लोके** द्वयोरुदाहरणं व्यर्थमिति भावः । **तदर्थमिति** । प्राप्त्यर्थकस्य भवतेर्भावनासामान्यवाचित्वाभावात् तद्व्यावृत्त्यर्थमेष इति विशेषणमित्यर्थः । जन्मनोऽपि सत्तारूपत्वात् कथं भेद इत्यत आह—**जन्मवचन इति** । क्रियाविशेष एव जन्मनः सत्ता । 'जायते अस्ती'ति **यास्कस्मरणेन** सत्ताया जन्मानन्तरभावित्वात् तद्वचनो भवतिः । अस्तिस्तु तत्फलभूतसत्तावचन इत्यर्थः ।[1]

P. 894-6 उपक्रमप्रदर्शनपूर्वकं **भाष्योदाहृतायाः** श्रुतेरर्थमाह—**एषां भूतानामित्यादिना** । भूतानां पृथिव्याश्रितत्वात् तदपेक्षया पृथिवी रसः उत्कृष्टा । तदपेक्षया तदुपादानभूता आपः । ततोऽपि तत्कार्यभूता ओषधयः । तदपेक्षया तत्परिणामः पुरुषः । ततोऽपि तन्महिमप्रकाशिका वाक् । तदपेक्षया तद्विशेष-

---

१. कल्पतरौ 'अस्तिस्तु जनिफल[भू]तार्थसद्भाववचन' इति पाठः ।

त्वादृक् । ततोऽपि तत्परिष्कारकत्वात् साम । साम्न उद्गीथः उद्गीथावयव ओंकारः । इत्युपक्रम्येत्यर्थः । परमात्मप्रतीकत्वादिति । 'ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीते'त्यादिश्रुतेरिति भावः । P. 894-8

**अर्धं स्थानमिति** । 'अथ ह गौतमो राज्ञोऽर्धमेयाय' 'कस्यार्धं पयोज'-मित्यादिप्रयोगादिति भावः । **तदर्हतीति** । तथा च यत्प्रत्यये **परार्ध्यं** इति रूपमिति भावः । **ब्रह्मणः स्थानमर्हतीत्यनेन** ब्रह्मसाम्यमित्युक्तम् । तत्केन धर्मेणेत्यत उपास्यत्वेनेत्याह—**परब्रह्मवदिति** । वेदसारत्वात् ब्रह्मनामत्वाच्च ब्रह्मवदुपास्यता ।

॥ इति स्तुतिमात्राधिकरणम् ॥

---

## ॥ अथ पारिप्लवाधिकरणम् ॥

### सू०॥ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

### सू०॥ तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥

पादाद्याधिकरणे विद्यायाः पुरुषार्थत्वसाधनेन वेदान्तानां स्वतन्त्रविद्यार्थ-त्वमुक्तम् । तस्य केषुचिद्वेदान्तवाक्येषु आक्षेपसमाधानाभ्यां दृढीकरणात् पाद-सङ्गतिरिति मनसि निधायावान्तरसङ्गतिमाह—**पूर्वत्रेति** । **उद्गीथादिस्तु-त्यर्थत्वादित्यवधौ** पञ्चमी । तदपेक्षयेत्यर्थः । एवं **विद्यास्तुत्यर्थत्वादित्यपि** । **आश्विनग्रहशंसन इति** । आश्विनग्रहसंबन्धिशस्त्रशंसन इत्यर्थः । **प्राति-स्विकार्थेषु विनियोगवदिति** । गार्हपत्योपस्थानादिषु श्रुतिलिङ्गादिभिर्विनि-**योगवदित्यर्थः** । P. 895-1

नन्वेवमपि सर्वश्रुतेर्दुर्बललिङ्गादिविनियोगसहनं कथमित्यत आह—**क्वचित्समानस्येति** । **क्वचित्** प्रातिस्विकश्रौतविनियोगस्थले । तद्विनियोजक- P. 895-1

---

१. कल्पतरौ 'विनियोगवदाख्यानाना'मिति पाठः । उपरि 'सर्वं शंसतीत्यभि-धानात् पुन'रिति पाठः । टीकायां 'सर्वश्रुत्या निश्शेषार्थया' इति पाठः ।

२. कल्पतरौ 'क्वचित् समानस्य सकृत्प्रवृत्तस्य प्रातिस्विकविनियोगं सोढवतः अवकुण्ठनाभावा'दिति पाठ इति भाति ।

प्रमाणेन समानबलस्य सर्वशब्दस्य लिङ्गादिभिर्यो मन्त्रविनियोगः तद्विघातकत्वमेव। सकृन्मर्यादामुल्लङ्घ्य प्रवृत्तस्य जन्तोर्मर्यादाभङ्गस्य जातत्वेन पुनस्तत्परिपालनफलकावकुण्ठनवैफल्यमिति न्यायादित्यर्थः।

अयं भावः—प्रातिस्विकवचनविनियुक्तानामपि 'सर्वा दाशतयी'रित्यनेन विनियोगोऽवश्यं वक्तव्यः। अन्यथा सर्वशब्दविरोधात्। एवं च क्वचिदंशे विनियुक्तविनियोजकत्वे सति, 'सकृत्प्रवृत्ताया' इति न्यायेन, सर्वांशेऽपि विनियुक्तविनियोजकत्वं न निवारयितुं शक्यम्। विनियुक्ता अविनियुक्ताश्च सर्वा दाशतयीरिति सामान्यरूपेणैव विनियोजकत्वाभ्युपगमात्। 'सर्वाण्याख्यानानी'त्यत्र तु नैवम्। तत्र सर्वशब्दस्य विनियुक्तपरत्वे मानाभावादिति।

यद्यपि तत्रापि 'शौनश्शेपमाख्यापयत' इति प्रातिस्विकविनियोगानुसारेण सर्वशब्दस्य विनियुक्तपरत्वे, सन्निधिना विद्यास्तुतौ विनियुक्तानामपि पुनर्विनियोगो न विरुध्यत इति तुल्यतैव। तथापि 'सर्वाण्याख्यानानी'ति सर्वशब्दस्य विनियुक्तविषये न प्रवृत्तिः। अनन्तशाखागतानां आख्यानानां सामस्त्येन शंसनस्याशक्यतया सर्वशब्दस्य सङ्कोचावश्यंभावेन विशेषश्रुत्या झटिति विनियोगेन निराकांक्षशौनश्शेपाद्याख्यानेष्वपि प्रवृत्तौ मानाभावात्। तथा च प्रकृते विनियुक्तान्यविनियुक्तानि च सर्वाण्याख्यानानीत्येवं वाक्यार्थकल्पनाभावात् सर्वशब्दस्य दुर्बलसन्निधिविनियोगासहिष्णुत्वमेवेति वैषम्यमिति द्रष्टव्यम्।

औपनिषदानामाख्यानानां पारिप्लवार्थत्वमेव न विद्यार्थत्वमिति वदतः कोऽभिप्रायः? किं निरङ्कुशसर्वश्रुतिबलात् पारिप्लव एव विनियोगादिति? किं वा शक्यसर्वपरत्वेऽपि सर्वशब्दबलात् एतेषामपि तत्र विनियोगादिति? अथ वा श्रुतिविरोधेन सन्निधेर्विनियोजकत्वासंभवादिति? नाद्यः अनन्तशाखागतानामाख्यानानां सामस्त्येन शंसनासंभवस्य त्वयैवोक्ततया सर्वशब्दस्य निरङ्कुशप्रवृत्त्ययोगात्।

द्वितीयेऽपि, किं सर्वश्रुतेराख्यानविशेषेषु संकोचकाभावादेतदाख्यानपरत्वमपीत्युच्यते? किं वा सर्वश्रुतिबलात् संकोचत्वेनाभिमतस्यैवोपलक्षणार्थत्वकल्पनात्? नाद्य इत्याह—**अश्वमेधे हीति**। द्वितीयमाशङ्क्य निराकरोति—**नन्वित्यादिना**। ननु त्वन्मतेप्युपक्रमगतसर्वश्रुतिवैयर्थ्यमिति तुल्यत्वमाशङ्क्याह—**सर्वशब्दोऽपीति**। तृतीयं निराकरोति—**पुनर्विधीति**।

P. 895-7
P. 896-3

'तथाचैकवाक्योपबन्धा'दिति द्वितीयसूत्रयोजनाप्रकारमेव दर्शयति–सोऽरोदीदित्यादीनामिति। अवधीयन्त इत्यस्य कर्मार्थत्वे सौकर्यातिशयो न लभ्यत इत्यत आह—कर्मकर्तरीति। तथा च 'लूयते केदारः स्वयमेवे'त्यादिवत् उपाख्यानेन हेतुना बाला अपि स्वयमेवावहिता भवन्तीति टीकार्थ इति भावः। तन्त्रोपाख्यायिकाशब्देन कथाप्रतिपादकः पञ्चतन्त्रादिः उच्यत इत्याह—कथापरो ग्रन्थ इति। P. 896-5

॥ इति पारिप्लवाधिकरणम् ॥

## ॥ अथ अग्नीन्धनाधिकरणम् ॥

### सू०॥ अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

भाष्यटीकयोरस्फुटमधिकरणशरीरं दर्शयति—ब्रह्मविद्येति। ब्रह्मविद्या मोक्षे जनयितव्ये इतिकर्तव्यतात्वेन कर्माण्यपेक्षते, न वेति संशयः। तदर्थं च विविदिषावाक्ये यज्ञादीनां किं विद्याफले मोक्षे अन्वयः? उत विविदिषायामिति संशयः। आख्यानानां सन्निधिना विद्यान्वयवद्यज्ञादीनां लिङ्गान्मोक्षान्वय एव युक्त इति सङ्गतिः। तदेतत्सिद्धवत्कृत्य पूर्वपक्षमाह—ब्रह्मविद्येति। मोक्षेऽन्वय इति। यज्ञादीनां विषयसौन्दर्यलभ्यायामिच्छायामिव प्रमाणाधीनजन्मनि ज्ञानस्वरूपेऽपि करणत्वासंभवस्य तुल्यत्वात्, ज्ञानेन मोक्षे जनयितव्ये फलोपकार्यङ्गत्वेनैव ज्ञानान्वय इति पर्यवसानगत्या इच्छाविषयज्ञानसाध्यमोक्षान्वय इत्यर्थः। P. 897-1

सिद्धान्तमाह—अस्मिन् पक्ष इति। किं कर्मणां मोक्ष एवान्वयः? उतेच्छायामपि। नाद्य इत्याह—यज्ञेनेत्यादीति। यज्ञेन विविदिषन्ति, दानेन विविदिषन्तीत्यन्वयेन यज्ञादीनां विविदिषां प्रति करणत्वं तृतीयाविभक्त्यर्थः। ततश्च तत्प्रतिपादकविभक्तिश्रुतिबाधः स्यादित्यर्थः। न द्वितीय इत्याह—न हीति। ज्ञानेच्छाया मोक्षहेतुत्वाभावेन कर्मभिर्मोक्षे जनयितव्ये व्यापारत्वायोगात् मोक्षसाधनं सद्यज्ञादि, नेच्छासाधनं भवेत्। ततश्च करणविभक्तिबाधस्तदवस्थ इति भावः। P. 897-3

यज्ञादीनामिच्छायां करणत्वेनान्वयसंभवादिष्यमाणज्ञानद्वारा मोक्ष
P. 897-3 एवान्वय इति पूर्वपक्षोक्तं निरस्यति—**भवति त्विति**। ब्रह्मविद्यायाः परमपुरुषार्थ-साधनत्वेन माहात्म्यज्ञानेऽपि चित्तशुद्धिरहितानां, तत्रेच्छाया अदर्शनेन चित्त-शुद्धेरपि तद्धेतुतया तद्द्वारा यज्ञादीनां विविदिषाहेतुत्वमित्यर्थः। **आग्नेयादि-ष्वदर्शनादिति**। स्वर्गसाधनानामाग्नेयादीनां प्रयाजादिकर्मापेक्षादर्शनेन कर्मा-पेक्षाविरोधित्वादर्शनादित्यर्थः।

**पुरुषार्थाधिकरणेति**। विद्यायाः पुरुषार्थत्वसाधकमधिकरणं पादाद्याधि-करणमित्यर्थः। **विद्याया इति**। **क्रतूपकारः** स्वसाध्यं प्रयोजनमित्यर्थः। तत्र क्रत्वपेक्षां दर्शयति—**तदा(था)चेति**। मोक्षस्य कर्मापेक्षाभावे अविद्या-स्तमयरूपत्वं हेतुगर्भं विशेषणम्। न तु स्वसिद्धाविति टीकां नापेक्षित-व्यानीति पदानुषङ्गेण योजयति—**स्वसिद्धाविति**। भाष्ये अधिकशब्देन
P. 897-9 स्वसिद्धौ अपेक्षितव्यत्वमेवोच्यत इति दर्शयतीत्याह—**अधिकेति**।

॥ इति अग्नीन्धनाधिकरणम् ॥

---

## ॥ अथ सर्वापेक्षाधिकरणम् ॥

**सू०॥ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥**

**सू०॥ शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥**

**आक्षेपसङ्गतिं** दर्शयन् पूर्वपक्षमाहेत्याह—**पूर्वत्रेति**। कर्मण्यपेक्षा यस्या इति बहुव्रीहिः। यज्ञादीनां पूर्वाधिकरणोक्तं विविदिषासाधनत्वं [विद्या]
P. 898-3 साधनत्वपर्यवसायीति [तदभावात्](तथैव) सङ्गतिरुक्तेति द्रष्टव्यम्। **अपि चानेनै-**

---

१. 'पूर्वाधिकरणे यज्ञादीनां यद्विविदिषासाधनत्वमुक्तं तद्विद्यासाधनत्वपर्यसायि, विविदिषायाः स्वतः पुरुषार्थत्वाभावेन आनन्दसाक्षात्काररूपब्रह्मविद्योपयोगेनैव पुरुषार्थता वक्तव्येति, तदभावात् पूर्वाधिकरणेनाक्षेपिकी संगतिरुक्ता' इति परिमलमिहानुसंधेयम्। भाष्ये 'विद्यया स्वसिद्धौ नापेक्ष्यन्ते' इति युक्तः पाठः। 'स्वार्थसिद्धौ' इति पाठे अन्वयक्लेशः अध्याहारापातश्च। टीकायां 'मीमांसासहितात् तस्मादेव' 'चिन्तासन्ततिमयीं तृतीयां' इति पाठः।

**वेति।** नन्वयं विकल्पोऽस्थानविजृम्भितः, विविदिषोद्देशेन यज्ञादिविधानस्यैव प्रागुक्तत्वात्। न च विविदिषोद्देशेन यज्ञादिविधानासंभवे उक्ते निरुद्धरातिकस्य मन्दमतेर्यज्ञादिवाक्ये विविदिषैव विधीयते इति शङ्केति, तन्निराकरणार्थं विकल्प इति **परिमलोक्तं समाधानं** युक्तम्। तस्य पूर्वमनुक्तत्वेन ग्रन्थबहिर्भूतशङ्काभिप्रायपरिज्ञा(नार्थ)[नोत्थ]विकल्पस्य ग्रन्थशैल्यनुगुणत्वाभावात्। **अत एव न तत्साधनत्वेन यज्ञादिविधान**मित्युत्तरवाक्येन **प्रकृतग्रन्थस्य** यज्ञादिविधिपरत्वावगमात्। द्वितीयकल्पनिराकरणार्थं**टीकायां न तत्र कर्मापेक्षे**त्येव दर्शनाच्चेति चेन्न।

विध्यधीनकृतिसाध्यत्वं किमिच्छायाः? उतेष्यमाणज्ञानस्येत्येवं विकल्पसंभवेन दोषाभावात्। तथा च **विधीयत** इत्यस्य विध्यधीनकृतिसाध्यत्वमर्थः। तच्चोद्देश्यस्यापीति न दोष इति द्रष्टव्यम्। इच्छायास्साक्षात्कृतिसाध्यत्वासंभवेऽपि तत्प्रतिबन्धकद्वेषनिरासद्वारा तत्साध्यत्वमविरुद्धमिति **सिद्धान्तटीका**भिप्रायमाह—**यथा अतिसुन्दरेऽपीति**। विस्पष्टसंन्यासविधिविरोधान्न कर्मणां विज्ञाने विधिरुपपद्यत इति शङ्कते—**ननु कर्मणामिति**। P. 898-5

शमादीनां 'तस्मादेवंविच्छान्तो दान्त' इत्यादिवाक्यविहितानामाहत्य ज्ञानोत्पादकत्वेन ज्ञानकाले अवस्थानावश्यंभावेऽपि, कर्मणां चित्तशुद्धिद्वारा विविदिषोपहारमुखेनैव ज्ञानोत्पादकतया, द्वारभूतायां चित्तशुद्धावुत्पन्नायां, तत्फले च ब्रह्माभिन्नप्रत्यगात्माभिरुचिलक्षणे तत्प्रावण्ये सति, विषयेषु वैराग्यात् कर्मत्याग उपपद्यत इति **परिहारटीका**भिप्रायमाह—**चित्तस्येति**। कर्मणां विविदिषासंयोगेन ज्ञानोपयोगमुपपादयति—**टीकायां—तथाहीति**।

**टीकायां—संसारे** इति। अन्तःकरणचक्षुरादिशरीरपुत्रादिरूप इत्यर्थः। **टीकायां, प्रत्यक्षोपपत्तीति**। **प्रत्यक्षोपपत्त्योः** प्रवृत्तौ यद्द्वारं चित्तैकाग्र्यं तस्य **यदावरणं** पाप्मरूपं तस्मिन्नपगते सतीत्यर्थः। **टीकायां—पर्येषते**। गवेषते। व्युत्पन्नस्य वाक्यश्रवणमात्रेणैव वाक्यार्थज्ञानसंभवेन विविदिषाया एवान- P. 899-7

---

१. टीकायां 'नित्यशुचिसुखात्मलक्षणेन' इत्यस्य नित्यशुचिसुखात्मत्वविषयेणेत्यर्थः' उपरि 'अनित्याशुचिदुःखानात्मरूपता'मिति पाठः।

२. 'टीकायां 'प्रत्यक्षोपपत्तिद्वारावरणापगमे सति' इति पाठ इति ज्ञायते। यथास्थितपाठे द्वारस्य अपावरणे उद्घाटने इत्यर्थः।

P. 899 2 पेक्षितत्वान्न तदुपहारमुखेन कर्मणामुपयोग इति शङ्कते—**नन्विति**। अन्यत्र वाक्यार्थज्ञाने विविदिषानपेक्षायामपि प्रकृते तया विना न निर्विचिकित्सज्ञानोत्पत्तिरिति परिहारतात्पर्यमाह—**अतिसूक्ष्मत्वादिति**। मनस्समाधानमैकाग्र्यम्। **आदिशब्देन** श्रवणादिकं गृह्यते। तद्ब्रह्मात्मत्व(प्रात्यग्य)प्रतिपत्त्यर्थमनुष्ठेयम्। तच्च तत्र बलवदिच्छारूपायां **विविदिषायां सत्यामेवानुष्ठीयते नान्यथेति** तदुपहारमुखेन कर्मणामुपयोग इति।

**शाब्दज्ञानस्य**[1] श्रवणमननात्मकस्य **भावना** निदिध्यासनमित्यर्थः। **बाधितत्वादिति**। मिथ्यात्वनिश्चयादित्यर्थः। **भास्करोक्तमिति**। विद्याविविदिषयोरिव मोक्षेऽपि प्रतिबन्धककर्मसंभवात्तन्निरासार्थं शमादिवदाश्रमकर्मणोऽपि अनुवृत्तिरावश्यकीति **भास्करोक्तं**, 'भिद्यते हृदयग्रन्थि'रित्यादिशास्त्रबलेन साक्षात्कारसमनन्तरमेव सकलकर्मनिवृत्तिश्रवणेन विदुषस्तत्राधिकारायोगाच्च, न विद्योदयानन्तरं कर्मानुवृत्तिरित्येवमपवदतीत्यर्थः।

P. 900-1 **अधः पातः स्यादिति**। पातित्यं स्यादित्यर्थः **शास्त्रकृतत्वादिति**। तत्त्वमस्यादिशास्त्रेण कर्माधिकारनिमित्तस्य ब्राह्मणत्वादेर्मिथ्यात्वज्ञापनद्वारा **तत्राश्रद्धायाः कृतत्वादित्यर्थः**। ततश्चाधिकारनिमित्ततत्फलानां तात्त्विकत्वहेतुको यः, तत्र विश्वासः तल्लक्षणश्रद्धाराहित्येन नादृष्टफलकेषु कर्मसु प्रवृत्तिः इति भावः। हेत्वभावान्न कोपादिप्रसक्तिः इति परिहरति—**अत आहेति**। हेत्वभावमेव टीकाव्याख्यया दर्शयति—**परमशान्तमिति**। रागद्वेषादिवासनानां
P. 900-3 सर्वोपरमात्मककारणेनैव समूलमुन्मूलितत्वान्न तद्धेतुकरागादिप्रवृत्तिरिति भावः।

॥ इति सर्वापेक्षाधिकरणम् ॥

---

१. कल्पतरौ 'शाब्दज्ञानस्य' 'शाब्दज्ञानेन' इति शोधनीयम्।

## ॥ अथ सर्वान्नानुमत्यधिकरणम् ॥

सू०॥ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

सू०॥ अबाधाच्च ॥ २९ ॥

सू०॥ अपि च स्मर्यते ॥ ३० ॥

सू०॥ शब्दश्चातोऽकामकारे ॥ ३१ ॥

प्राणसंवादे श्रूयत इति भाष्ये प्राणेन साकं केषां संवाद इत्याशङ्क्य, टीकायां सर्वेन्द्रियाणामित्युक्तमिति दर्शयन्नुत्तरटीकामवतारयति—सर्वेन्द्रि- P. 900-7 याणामिति । 'अथ ह प्राणा अहंश्रेयसे व्यूदिरे' इत्यादिश्रुत्यर्थं दर्शयन् टीकां व्याकरोति—इन्द्रियाणि किलेत्यादिना । अभ्यमन्यन्त । अभिमानमकुर्वन्नित्यर्थः । टीकाया'माच शकुनिभ्य' इत्यन्तेन वाक्येन 'यत्किञ्चिदिदमाश्वभ्य' इति श्रुत्यर्थमुपवर्ण्य, सर्वप्राणिनामित्यादिना, तात्पर्यार्थो वर्णितः । तद्व्याचष्टे—पराजितैरिति । सर्वान्नादिति । सर्वमन्नमत्ति इति सर्वान्नादित्यर्थः । 'तद्वा एतदनस्यान्न'मिति श्रुतौ विध्यश्रवणेऽपि अपूर्वत्वाद्विधिः कल्पनीय इत्याह—प्राणस्येति । प्रवृत्तिविशेषकरतालाभेन प्रयोज- P. 901-4 नेन इति । तथा च प्रयोजनस्यापि हेतुत्वविवक्षया तृतीयेति भावः[2] ।

ग्राम्यव्यापारगतचेष्टासु हिंकारादिदृष्टिर्विहितेति । हिंकारादिषु ग्राम्यव्यापारदृष्टिर्विहितेत्यर्थः । 'लोकेषु पञ्चविधं सामोपसीते'त्यादिश्रुतौ व्यवधा[3]रणकल्पनया सामभागेषु लोकदृष्टिरित्यस्यार्थस्य वक्ष्यमाणतया, तां श्रुतिशैलीमनुसृत्याचार्यैरपि तथैव निर्देशः कृत इति द्रष्टव्यम् ।

श्लोकं प्रतीकत आदाय व्याचष्टे—अशक्तेरितीत्यादिना । न केवलं शब्दमात्रकल्पनम्, किं तु सर्वान्नभक्षणकर्तव्यताऽपि कल्प्येत्याह—कल्पयि- P. 901-11

---

१. 'सर्वान्नाद' इति पाठो मूले दृश्यते ।

२. मूले सप्तम्यन्तपाठो दृश्यते । परिमलेऽपि स एव व्याख्यातः । भाष्ये 'तथाहि प्रवृत्तिविशेषकरः' इति पाठः ।

३. व्यत्यस्य योजना व्यवधारणकल्पना ।

P 901-9 **त्वा चेति** । सर्वस्त्र्यपरिहारशास्त्रवैषम्यं दर्शयितुमाह—**क्लृप्तो हीति । करभ उष्ट्र इति** । उष्ट्रशिशुरित्यर्थः । ननु लिङभावेऽपि यथा 'यजति, तारिष'दित्यादौ 'लिङर्थे ले'डिति विहितलेट्प्रत्ययबलादेव स्पष्टं विधिप्रतीतिः, तथा प्रकृतेऽपि किं न स्यादित्यत आह—**पञ्चमलकारेति** । 'लेटोऽडाटा'विति सूत्रविहिस्याडादेरश्रवणान्न पञ्चमलकारत्वनिश्चय इत्यर्थः । लट्, लिट्, लुट्, लृट्, लेट् इति लकारपाठात् पञ्चमलकारत्वं लेट इति द्रष्टव्यम् ।

**टीकायामपूर्वत्वाभावो** विधियोग्यार्थकत्वाभाव इति व्याचष्टे—**सर्वमन्नं भवतीति । अदनीये अत्तुमर्हे** । नन्वोदनादावदनस्य स्वरूपेण सिद्धत्वेऽपि प्राणविद्याङ्गत्वेन तदसिद्धेर्न विधिवैयर्थ्यमित्याशङ्क्य, विध्यकल्पनेऽपि सन्निहितविध्यपेक्षितस्तुतिसमर्पणेन वाक्यस्य साफल्यान्न विधिकल्पनेन कथञ्चित्साफल्यवर्णनं युक्तमिति **स्तुत्याऽपि चेति टीकायामुक्तम्** । अत एव च कलञ्जादिविषये भक्षणनिषेधस्य प्राणविद्याङ्गभक्षणव्यतिरिक्तभक्षणविषयत्वकल्पनमप्ययुक्तम्, अनन्यगतिकस्य क्लृप्तस्यैव शास्त्रस्य तत्सङ्कोचनसमर्थतया प्रकृते तदभावात्, क्लृप्तनिषेधविरोधे कल्पनायोगाच्चेति वक्तुं **न च सत्यामिति टीका** ।

P. 902-4 तत्र **प्रवृत्तस्येति** विशेषणं कल्पनप्रतिक्षेपार्थमित्याह—[1]**क्लृप्तत्वादिति** ।

**टीकायां—शक्यत्वे चेति** । श्रुतस्यार्थस्य विधातुं योग्यत्व इत्यर्थः । सूत्रे चशब्द एवकारार्थः प्राणात्यय इत्यनेन संबध्यते । तथा च तद्भलादितरकाले प्राणविदोऽपि सर्वान्नभक्षणवारणसिद्धिरिति परिहरति—**अत आहेति । सामान्यशास्त्रेति** । भक्ष्याभक्ष्यविभागबोधक**सामान्यशास्त्राणां बाधक** इत्यर्थः । स्मृत्यनुरोधादुपाख्यानेऽपि विधिः कल्प्यत इति परिहरति—**अत आहेति । विधिस्मृतिरिति । नित्यमिति** विशेषणेन मद्यस्य प्राणात्ययेऽपि वर्जनोक्त्या तद्व्यतिरिक्तस्याभक्ष्यस्य प्राणात्यये विधिः स्पष्टं प्रतीयत इत्यर्थः ।

ननु गौडीपैष्ट्यादिभेदेन सुराणां नानात्वात् किं सर्वा अपि सुरा वर्ज्या एवेत्याशङ्क्य, यत्र मरणान्तिकं प्रायश्चित्तं चोद्यते, सैव वर्ज्या नान्येत्याशयेनाह—**सुरापस्येति** । स्वोदाहृतस्मृतिगतमुष्णपदं व्याचष्टे—**अग्निवदिति** ।

P. 903-4

१. कल्पतरौ 'क्लृप्तत्वात्परिच्छेत्तुं प्रवृत्तस्य' इति शोध्यम् ।

विद्वद्विषय एव प्राणात्यये किं सर्वान्नत्वमित्यर्थः। प्राणात्यय एव सर्वान्नत्वमिति पूर्ववाक्येन योजनामाह—चाक्रायणेति। 'मद्यन्नित्यं ब्राह्मण' इति भाष्योदीहृतस्मृतौ पूर्ववाक्यगतस्य वर्जयेदित्यस्यानुषङ्ग इत्याशयेनाह—वर्जयेदिति शेष इति। P. 903-4

॥ इति सर्वान्नानुमत्यधिकरणम् ॥

---

## ॥ अथ आश्रमकर्माधिकरणम् ॥

सू०॥ विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

सू०॥ सहकारित्वेन च ॥ ३३ ॥

सू०॥ सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३४ ॥

सू०॥ अनभिभवं च दर्शयति ॥ ३५ ॥

स्तुतिरितीति। यज्ञादिभिरपि संपाद्यमात्मवेदनमित्येवमात्मवेदनस्तुतिरित्यर्थः। नन्ववश्यकर्तव्यताबोधकेषु यावज्जीवादिवाक्येषु स्पष्टं विधिश्रवणात् तत्सन्निधावितिकर्तव्यताज्ञानाच्च तद्बलेन कर्मणामवश्यंभावे निश्चिते, तद्विरोधेन विध्यादिरहितस्य विविदिषावाक्यस्य स्तुत्यर्थत्वनिश्चयेन, कर्मणां विद्याङ्गत्वस्यैवाबोधनात्, कथमवश्यंभावानवश्यंभावयोरिति, अनध्यवसाय इति च टीकेत्याशङ्क्य, तन्मुखेन स्तुत्यर्थत्वपूर्वपक्षपरैव टीकेत्याह—अध्यवसाये वेति। पूर्वपक्षानुन्मेषमाशङ्क्य परिहरति—नन्वित्यादिना। ननु न्यायसिद्धस्यार्थस्य कथमाक्षेपः इत्याशंक्य, लोकप्रसिद्धवस्तुस्वभावविरोधे सत्यकिञ्चित्करो न्याय इत्याशयेनाह—वास्तवेति। P. 903-11 P. 903-13

---

१. 'प्राणात्ययोऽपि किं विद्वद्विषय एव' इति कल्पतरौ पाठः। टीकायां—'विद्वांसमविद्वांसं च प्रति' इति, 'सामि जग्धान् कुल्माषान् खादयामास' इति च पाठः।

२. कल्पतरौ 'भवत्वित्यप्याशयः' इति पाठान्तरम्।

लोके प्रसिद्धस्य वस्तुस्वभावस्य भिन्नविषयत्वान्न न्यायबाधकत्वमिति

P. 904-1 **सिद्धान्तटीका**भिप्रायमाह— **विधिव्यतिरेकेणेति** । **नित्यानित्ययोरि**[1]ति भावप्रधानो निर्देशः । यद्वस्तु नित्यत्वे अनित्यत्वे वा व्यवस्थितं तदन्यथाकर्तुं न शक्यत इत्यर्थः । **विधितश्चेति** । यावज्जीवादिविधिभिः विविदिषाविधिना चेत्यर्थः । उक्तरीत्या यावज्जीवादिशास्त्रविरोधाभावे विविदिषावाक्यमपि विधिरेवेति, तेन विविदिषासंयोगे तदभावदशायां कर्तव्यत्वाभावादनावश्यकत्वप्रतीति[2]रिति भावः । विद्याकामनाभावदशायामकर्तव्यत्वस्फोरणाय कर्तव्यमित्येतावन्मात्रस्यैवानुषङ्गमाह— **विद्याङ्गतया चेत्यत्रेति** ।

ननु सिद्धविषय इव साध्यविषयेऽपि प्रयोगैक्ये विरोधो दुष्परिहरः । अनवश्यकर्तव्यादेवावश्यकर्तव्यफलसिद्ध्यभ्युपगमे तदर्थं नित्यस्य पृथगनुष्ठानाभावे अनावश्यकत्वापातात्, तदनभ्युपगमे च नित्यस्य पृथक् कर्तव्यत्वापत्त्या काम्यादेर्नित्यबाधकत्वन्यायविरोध इत्याशयेन शङ्कते— **ननु विरक्तेति** । विद्याया अनित्यसमीहित[फल]त्वे हेतुः **विरक्ताधिकाराया इति** । गृहस्थादीनामपि स्वर्गादिफलेषु वैराग्ये सत्येव विद्यामिच्छोदये तदर्थं कर्मानुष्ठाने अधिकारादिति भावः ।

P. 904-6 **टीकोक्तं** न्यायं विशदयति— **यथेति** । **विकृत्येत्यस्य** व्याख्यानं **प्रयोगस्येत्यादि** **बाधित्वेत्यन्तम्**[3] । अनेन नित्यविधिना दुरितक्षयार्थं पृथक् प्रयोगे विहिते कथं तदननुष्ठानमिति शङ्का निराकृता । अन्यार्थस्यापि प्रयोगस्य नित्यविधिविधेयप्रयोगतुल्यतया काम्यफले नित्यफले च विरोधाभावेन जनकत्वं पर्यालोच्य नित्यविधेः प्रयोगविधायकत्वबाधनादित्यर्थः । **तेनापि तत्सिद्धिरिति** **टीकां** व्याचष्टे— **काम्यनैमित्तिकाभ्यामिति** । तदेवोपपादयति— **यादृशो**

P. 904-10 **हीति** । न **प्रयोगावृत्तिः** । प्रयोगभेदः । **न च यादृशः** इति पाठेऽपि

---

१. कल्पतरौ 'नित्यमनित्यं वा यद्वस्तु' इति पाठो दृश्यते । 'नित्यानित्ययोर्यद्वस्तु' इति पाठमभिप्रेत्याभोगप्रवृत्तिः ।

२. कल्पतरौ 'आवश्यकत्वानावश्यकत्वप्रतीतेः' 'तमस्मै भक्षं प्रयच्छेन्न सोमम्' 'नित्यः प्रयोगः कर्तव्यत्वेन विहितः' इति पाठाः । टीकायां 'न्यायादनित्याधिकारेण' इत्यत्र 'न्यायात् नित्यविकारेण' इति पाठान्तरम् ।

३. अत्र कल्पतरौ 'प्रयोजकत्वं' इत्यस्य पृथक् प्रयोक्तृत्वमित्यर्थः ।

नञः एवमेवान्वयो बोध्यः। **नापीति**। तस्यैव नित्यप्रयोगत्वादिति भावः। P. 904-10 कार्यपदस्य फलपरत्वभ्रमं वारयति—**कर्तव्यस्येत्यर्थ** इति। ततश्च विधिबलादेकस्य कर्मण एकस्मिन्नपि प्रयोगे नित्यानित्यात्मकत्वं न विरुद्धमिति भावः।

ननु यदि **विद्याकार्ये कर्मणामनुपयोगः** कथं तर्हि विद्यासहकारित्वव्यपदेश इत्याकाङ्क्षां निराकर्तुं **कोऽर्थ इत्यादिटीका**। तत्र कर्मणां विद्याकाले सत्त्वकथनं विद्याङ्गत्वपक्षाभिप्रायेण। विविदिषाङ्गत्वपक्षे विद्योत्पत्तिपर्यन्तं अवस्थानाप्रसक्तेरित्याशयेनाह—**विद्याकारणत्वेनेति**। **तदनुपपत्तेरिति** तच्छब्देन ग्राहकग्रहणं परामृश्यत इति दर्शयन्नाह—**अविहिते चेति**। P. 905-2 द्रष्टव्य इत्यादिविधिश्रवणादविहितत्वमसिद्धमिति विस्मरणशीलस्य शंकां आशङ्क्य निराकरोति—**नन्वित्यादिना**। **साङ्गाध्ययनेति**। अङ्गग्रहणमुपाङ्गानामप्युपलक्षणम्। तथा च मीमांसानिरूपितन्यायानुगृहीतवेदान्तवाक्याध्ययनप्रसवा श्रवणरूपेत्यर्थः। **श्रवणजा मननरूपा**। **टीकायां 'द्रष्टव्यो' 'निदिध्यासितव्य'** इत्येत'च्छ्रोतव्यो' 'मन्तव्य' इत्येतयोरप्युपलक्षणं बोध्यम्।

अत्र **'सर्वथापि त्विति सूत्रटीकायां प्राप्तावुच्यते** इत्येवं दर्शनादधिकरणान्तरपरत्वेन सूत्रं व्याख्यायत इति न मन्तव्यम्। **त एवेत्यवधारयन्नाचार्यः किं निवर्तयति कर्मभेदशङ्कामिति ब्रूम इति भाष्ये** शङ्कामात्रस्यैव निवर्त्यत्वकथनात्। **'अनभिभवं च दर्शयती'**त्यनन्तरसूत्रतद्भाष्यविरोधाच्च। किं तु कथमत्र संयोगपृथक्त्वन्यायः? प्रकरणान्तरन्यायेन कर्मभेदस्यैव युक्ततया कर्मैक्यासिद्धेरिति शङ्कैव भङ्ग्यन्तरेण प्रदर्शितेति ध्येयम्।

किं प्रकरणान्तरश्रुतस्य प्रसिद्धकर्माभेदप्रमाणं नास्तीति ब्रवीषि? किं वा न्यायबलेन कर्मान्तरत्वमेवेति विकल्प्य, प्रथमं निराकृतम्—**सत्यपीत्यादि**- P. 905-7

---

१. कल्पतरौ 'जटाः स्तिभ्यः' इत्युक्तम्। स्तिभिनीरिति मीमांसाग्रन्थेषु पाठः। 'न्यग्रोधस्तिभिनीः न्यग्रोधफलानि' इति सोमनाथीये। 'स्तिभिन्यो मुकुलानी'ति न्यायमालाविस्तरे।

२. शास्त्रदर्पणे स्पष्टमुक्तम्—' सूत्रोक्तसहकारित्वं च विद्योत्पत्तिप्रतिबन्धकदुरितनिवर्तकत्वेन विद्यासाधनश्रवणादीनां यज्ञादीनि सहकारीणीत्येवमभिप्रायम्। न प्रयाजादिवत् विद्याफलोपकारकत्वपरं, अत एव चाग्नीन्धनादीत्यत्र तन्निषेधात्' इति। कर्मणां विद्यांगत्वपक्षेऽपि विवरणाद्यभिमते कर्मणां न विद्याकाले सत्त्वमित्यवगन्तव्यम्।

३. आपातदर्शनरूपा इति परिमलम्।

P. 905-7 **टीकया।** द्वितीयं शङ्कते—**ननु यावज्जीवमिति। किं तु कर्मान्तरेति।** न च प्रसिद्धयज्ञादिव्यवच्छेदकधर्माभावे इतिकर्तव्यताऽभावे च कथं कर्मान्तर-विधानमिति वाच्यम्, फलस्यैव व्यवच्छेदकत्वात्। यज्ञादि(कर्तव्यानामवश्यलघु) [नाम्नां]शीघ्रोपस्थितप्रसिद्धयज्ञादिसादृश्यप्रतिपादनपरतया तत इतिकर्तव्यता-लाभसंभवाचेति भावः।

मासाग्निहोत्रवाक्य इव विविदिषावाक्येऽपि कर्मान्तरविधिरेवेति वदन् प्रष्टव्यः। किं तत्र यज्ञादीनां स्वरूपेण विधानमाश्रित्य कर्मान्तरत्वमुच्यते? उत विधानमात्रम्? अथ वा तत्र कर्मभेदाभावे मासाग्निहोत्रवाक्येऽपि कर्मभेदो न स्यात्? इति। तत्राद्यं निराकर्तुं **किन्त्वित्यादिटीका।** तत्र स्वरूपेण विधाने धातुना साध्यरूपेणोपात्तत्वस्य तन्त्रतया तदभावान्न स्वरूपेण विधानं इत्याह—**यत्र कर्मैवेति।** द्वितीयं निराकर्तुमिह **त्वित्यादिटीका।** तां व्याचष्टे—**विविदिषावाक्ये त्विति।**

यज्ञादिर्न धात्वर्थः। किं तु नाम्ना सिद्धरूपेणैवोपस्थितः, अतः स्वरू-P. 906-2 पेण न विधीयते। किं तु विविदिषायामेव विधीयत इत्यर्थः। **विविदिषा-वाक्ये तु न यज्ञादिधात्वर्थे विधिः श्रूयते, किंतु विविदिषायामिति क्वचित्पाठः।** स तु सुगमः। नन्वग्निहोत्रनामोपात्तस्यापि स्वरूपेण विधानवत् प्रकृतेऽपि किं न स्यात् इत्याशंक्य, प्रधानभूताख्यातसामानाधिकरण्यात् तत्र तथा, प्रकृते तु न तथेत्याशयेनाह—**यज्ञादयस्त्विति। अनूद्यन्ते।** विवि-दिषायां विधातुं निर्दिश्यन्ते। ननु विविदिषापि किमिति न विधीयत इत्यत आह—**तत्रेति। न यज्ञादीन् भिनत्तीति।** प्रसिद्धानामेव विनियोगान्तर-बोधनेन चारितार्थ्यादिति भावः। तृतीयमाशङ्क्य निराकरोति—**यदीत्यादिना।**

सगुणश्रवणे गुणविधिरेव स्वरस इति मनसि निधाय शङ्कते—**नन्विति।** विधियोग्यगुणश्रवण एव तथेति परिहरति—**अत आहेति।** तदेव विशद-यति—**पुरुषानुष्ठेयेति।** तर्हि विधिवाक्येषु कालश्रवणस्य वैयर्थ्यमेव प्राप्त-मित्याशयेन शङ्कते—**नन्विति।** अयोग्यत्वादेव तत्रापि न कालविधिः। P. 906-9 किन्तु कालश्रवणानुरोधेन तत्रैव कर्मविधिरित्याशयेनाह—**तत्रापीति।** अनु-

१. अयमेव पाठः मूले दृश्यते, आभोगे व्याख्यातः पाठस्तु ऊह्यः।

पादेयस्य स्वरूपोपादानेन विध्यसंभवेऽपि विधितात्पर्यपर्यवसानेन विधेयत्वमस्ती-त्युत्सर्गत इत्युक्तमित्याह—सायं जुहोतीत्यादाविति । तर्हि तद्वदेव मासविधिरप्यस्तु, नेत्याह—अन्यत्र इति । P. 906-10

॥ इति आश्रमकर्माधिकरणम् ॥

---

## ॥ अथ विधुराधिकरणम् ॥

सू० ॥ अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

सू० ॥ अपि च स्मर्यते ॥ ३७ ॥

सू० ॥ विशेषानुग्रहश्च ॥ ३८ ॥

सू० ॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

यद्याश्रमकर्मणां विद्यार्थत्वम्, तर्हि तद्रहितानां विधुरविधवादीनां स्नातक-पङ्गुप्रभृतीनामपि द्रव्यादिसंपत्त्यभावेन गार्हस्थ्यपरिग्रहरहितानां विद्याधिकारो न स्यादिति सङ्गतिः, जपयज्ञादिकतिपयकर्मसद्भावेन संशयोन्मेषश्च भाष्यपर्यालोच-नया सुज्ञानत्वान्नोक्तः । किं कर्माभावादनधिकारो विधुरादीनां ? उताश्रमकर्मा-भावादिति विकल्प्य नाद्य इत्याह टीकायां—नात्यन्तेति । विधुरग्रहणमना- P. 907-4 श्रमिपरम् । द्वितीयं निराकरोति टीकायां—नात्यन्तेति । 'यज्ञेने'त्यादि-श्रुतेरविशेषेण कर्ममात्रविधायकतया 'सहकारित्वेन'चेति सूत्रमपि तत्परमेवेति भावः । कथं तर्हि तद्भाष्ये आश्रमकर्मनिर्देश इत्यत आह टीकायां—आश्रमेति ।

भवत्वाश्रमकर्मणामेव सहकारित्वम्, तथापि न दोष इत्यभ्युपेत्य परि-हारप्रदर्शनपरत्वेन जन्मान्तरानुष्ठितैरपि चेत्यादिभाष्यं व्याख्यातुं—न खल्वित्यादिटीका । तां विकल्पपूर्वकं व्याचष्टे—आश्रमकर्मेत्यादिना । अप्रतिषिद्धानामपीति । अप्रतिषिद्धविद्याधिकाराणामप्यननुष्ठितविद्यासाधनाना- P. 908-1

---

१. कल्पतरौ 'सा च मासमग्निहोत्रमित्यत्र संदिग्धा' इति शोधनीयम् । टीकायां 'स्मृतिरुक्ता' इति पाठः ।

मित्यर्थः। सोमालाभे पूतीकवत् कथंचिदप्याश्रमवर्तित्वासंभव एव, अनाश्रमवर्तिनोऽपि विद्याधिकारबोधनेनाश्रमवर्तिनां विद्योदये प्रतिबन्धाभावसाकल्यातिशयकल्पनान्न तेषां वैफल्यं इति दर्शयति **टीकायां—स्वास्थ्य इत्यादिना।** P. 908-3

स्वास्थ्ये पुनर्विवाहादिसाधनसाकल्ये सत्यनाश्रमित्वं नास्थेयमित्यर्थः। **श्रुतिस्मृतिसंदब्धत्वादिति** भाष्यमर्थतो गृहीत्वा व्याचष्टे **टीकायां—श्रुतिसन्दर्भेणेत्यादिना। श्रुतिलिङ्गादित्यादि**भाष्यमादाय व्याख्यातुं **श्रुतिलिङ्गादित्यादिटीकेति** ध्येयम्। **भाष्योदाहृतस्मृतौ**—यो ब्राह्मणो जपार्हेण मन्त्रेणैव सिद्धो भवति, स कीदृश इत्युक्तं **मैत्रो ब्राह्मण उच्यत इति।** तदभिप्रायमाह—**स्मृताविति।** फलितमर्थमाह—**ततश्चेति।** P. 908-2

॥ इति विधुराधिकरणम् ॥

---

## ॥ अथ तद्भूताधिकरणम् ॥

### सू०॥ तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ४० ॥

**अनाश्रमकर्मेति**[1]। अनाश्रमस्य कर्मेत्यर्थः। **किम्नु वक्तव्यमिति। अनाश्रमवर्तित्वादाश्रमवर्तित्वं** ज्याय इति **पूर्वसूत्रेण** कथितत्वादिति भावः। **मन्दाशंकानिराकरणार्थमिदमधिकरणमित्युक्तत्वात्**[3] **पूर्वधर्मेष्विन्त्यादिका स्यामितीत्यन्ता टीका** सिद्धान्तपरेति भ्रमः स्यात्। तं वारयितुमाह—**पूर्वकर्मेति।** 'अरण्यमियादिति पद'मित्यादिश्रुतिं व्याचष्टे—**अरण्यमिति यत्पदमिति**[4]**। इयात्** प्रेयात्। P. 909-1

॥ इति तद्भूताधिकरणम् ॥

---

१. टीकायां 'स्वस्थेन' इति पाठो दृश्यते।

२. कल्पतरौ 'यदा अनाश्रमकर्मापि विद्यासाधन'मिति पाठः।

३. टीकायां 'अतद्रूपं आरोहतुल्यताभाव'मिति पाठः।

४. कल्पतरौ 'अरण्यमिति यत् पदं आश्रमः तत् इयात्। पुनस्ततो नेयात् नावर्ततेत्यर्थः' इति शुद्धः पाठ इति भाति।

## ॥ अथ आधिकारिकाधिकरणम् ॥

सू०॥ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥

सू०॥ उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥

प्रसङ्गसङ्गत्या चिन्तेत्याशयेनाह—**प्रत्यवरोह इति**। अविशेषप्रवृत्ताया: P. 909-1
'ब्रह्मचार्यवकीर्णी'त्यादिश्रुतेः स्मृत्या संकोचायोगात् कथं पूर्वपक्षः इति शंकते—
**ब्रह्मचारित्वादिति**। स्मरणस्य नैष्ठिकविषयतया विशेषशास्त्रत्वात् सामान्यश्रुति-
बाधकत्वं युक्तमेवेति परिहरति—**आशङ्क्याहेति**। **टीकायां—प्रायश्चित्त-
स्मरणाभावादिति**। प्रायश्चित्ताभावस्मरणादित्यर्थः[1]।

'अवकीर्णिपशुश्च तद्व'दित्यतिदेशो नाव्यवहितस्य स्थपतीष्टिन्यायस्य।
सूत्रे 'आधानस्याप्राप्तकालत्वा'दित्याधानाधिकारयोग्यतामङ्गीकृत्य दारपरिग्रहा-
भावेनाप्राप्तकालत्वस्यैव हेतुत्वेनोपन्यासात्। निषादस्य च कथञ्चिदप्यधिकारा-
भावात्। अतो व्यवहितस्योपनयनहोमन्यायस्यैवातिदेश इत्यभिप्रेत्य तन्न्यायं
दर्शयति—**उपनयनहोमा इति**[2]। P. 909-5

न चातिदेशेनैव सिद्धान्तसंभवे किमिति सूत्रे हेतूपन्यास इति वाच्यम्।
अवकीर्ण्यपि स्नातकव्रतपूर्वकं भार्यामधिगम्याग्नीनाधाय पशुं करोत्विति विशेषा-
शंकाया'मविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहे'दिति वचनेन प्रायश्चित्तानुष्ठानात्
पूर्वं दारपरिग्रहासंभवेन आधानस्याप्राप्तकालत्वमिति तन्निराकरणार्थत्वादिति
ध्येयम्।

पूर्वपक्षोक्तं स्मृतिप्राबल्यमनूद्य निराकरोति—**नन्वित्यादिना**। विशेषविष-
यस्यापि स्मरणस्य मन्थरप्रवृत्तिकत्वान्न सामान्यश्रुतिबाधकत्वमित्याह—**श्रुतेरिति**।
**निर्णेजनं शुद्धिकरं प्रायश्चित्तम्**। संख्यानमिति पाठं दृष्ट्वा व्याचष्टे—
**संख्यानं संप्रतिपत्तिरिति**। **न संसर्गः कर्तव्य इति टीकापाठस्तु** सुगमः। P. 910-5

---

१. टीकायां 'प्रायश्चित्ताभावस्मरणा' दित्येव पाठो दृश्यते।

२. कल्पतरौ 'यदाहवनीये जुहोति' इति पाठः।

P. 910-11 **एवं दृष्टान्तमिति**[1]। एवंरूपं दृष्टान्तमित्यर्थः। **तन्मूलत्वमिति**। तथा च प्रायश्चित्तसद्भावप्रसिद्धिः श्रुतिमूलत्वात् शास्त्रस्था। प्रायश्चित्ताभावप्रसिद्धिस्तु स्मृतिमूलत्वान्न शास्त्रस्था। प्रबलश्रुतिविरुद्धायाः स्मृतेरशास्त्रत्वादिति भावः।

॥ इति [2]आधिकारिकाधिकरणम् ॥

---

## ॥ अथ बहिरधिकरणम् ॥

### सू०॥ बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥

**सङ्गतिगर्भमिति**। यदि नैष्ठिकस्याप्यस्ति प्रायश्चित्तम्, तर्हि कृतप्रायश्चित्तेन तेन संव्यवहारोऽपि स्यादिति प्रत्यवस्थानं **सङ्गतिगर्भ**मित्यर्थः। विद्यासाधनविचारात्मकेऽस्मिन् पादे कथं सङ्गतिरित्यत आह—**कृत[3]प्रायश्चित्ताना-** P. 911-2 **मिति**।

ननु प्रायश्चित्तत्वाविशेषेऽपि कस्यचित् क्वचिल्लोकद्वयाशुद्धिनिवर्तकत्वं कस्यचिन्नेत्यत्र किं प्रमाणमित्याशंक्य, यत्र निषिद्धे कर्मणि तत्कर्तरि वा निन्दाबाहुल्यं, तत्र तद्बलादैहिकाशुद्धिनिवर्तकत्वं नास्तीति कल्प्यते। अत एव **आपस्तम्बैरुक्तम्**—'नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते, कल्मषं तु निर्हन्यते' इतीत्यभिप्रायं दर्शयन्नेव **सिद्धान्तटीका**मवतारयति— **सर्वपातकमित्यादिना**। **निन्दाबाहुल्यं च भाष्ये दर्शितम्**।

P. 911-5 **निमित्तनिवृत्ताविति**। दण्डादिनिवृत्तावपि घटादेरुपलम्भादित्यर्थः। अवकीर्णिनैष्ठिकादीनामिव बाल[4]घ्नादीनामप्यैहिकाशुद्ध्यपनयाभावसाधने तुल्ये,

---

१. कल्पतरौ 'एष दृष्टान्तः' इति दृश्यते। आभोगानुसारेण शोधनीयम्।

२. अत्र भाष्ये अन्ते 'अनुसर्तव्य'मिति पाठः।

३. कल्पतरौ 'श्रवणादिकं विद्यासाधनम्, अन्यथा नेति चिन्ताप्रयोजन'मिति पाठः।

४. कल्पतरौ 'निषिद्धकर्मत्रितयात्' इत्यत्र त्रितयपदेन बालस्त्रीशरणागतहननत्रितयं विवक्षितम्।

कथं दृष्टान्तभाव इत्याशंक्य, आश्रमपरिभ्रष्टयत्यादिविषयविचारस्य प्रस्तुतत्वात्, तद्व्यतिरिक्तस्य युज्यते दृष्टान्तभाव इत्याशयेनाह—**यत्यादीति**। **यथाहुरि-** P. 911-7 **त्यादिटीकया** अर्थतोऽनुक्रान्तं वचनं दर्शयति—**बालघ्नांश्चेति**। **न संपिबेदिति पाठान्तरम्**। तद्व्याचष्टे—**अन्योन्यमिति**।

ननु **तथाचेत्यादिटीकया याज्ञवल्क्यवचनमुदाहृतमि**ति प्रतिभाति। तत्र **कामत** इत्युत्तरार्धमन्यथा दृश्यते। तत्कथमित्यत आह—**मनुवचनेत्या- दिना**। **टीकोक्तमर्थं** स्वोदाहृतयाज्ञवल्क्यवचने योजयन्नाह—**अज्ञान- कृतमिति**। **ननु याज्ञवल्क्यवचने अव्यवहार्यस्त्वित्यादिश्लोकशेषव्याख्या- नार्थं टीका—बालघ्नादिस्त्विति**। तदयुक्तम्—याज्ञवल्क्यवचनस्य महापातकि- विषयत्वेन बालघ्नादेः प्रसक्त्यभावादित्यत आह—**ब्रह्मवधादिग्रहणमिति**। P. 911-12 **बालघ्नांश्चेत्यादिमनुवचनानुरोधेन** उपलक्षणत्वमाश्रितमिति भावः।

॥ इति बहिरधिकरणम् ॥

---

## ॥ अथ स्वाम्यधिकरणम् ॥

सू०॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

सू०॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

सू०॥ श्रुतेश्च ॥ ४६ ॥

पूर्वाधिकरणदृष्टान्तेन प्रत्यवस्थानात्संगतिरित्याह—**पूर्वत्रेति**। **आश्रि-** P. 912-2 **तोपास्तीति**। अत्रोपास्तिग्रहणं प्रकृताभिप्रायेण। न तूत्सर्गशरीरप्रविष्टम्। एतदधिकरणसिद्धान्तस्थितेः प्राक् तथोत्सर्गसंप्रतिपत्त्यसिद्धेः। अङ्गानुष्ठातुरेवा- ङ्गाश्रितकर्तृत्वमित्युत्सर्गस्तु पूर्वतन्त्रसिद्धः। 'ममाग्ने वर्चः' इत्यादिमन्त्रगतस्य फलस्य यजमानगामित्वेऽपि, नायं मन्त्रो यजमानेन वक्तव्यः। किन्त्वन्वाधान- रूपाङ्गकर्त्रैव तत्करणतया तदाश्रितमन्त्रोच्चारणमपि कर्तव्यमित्यस्यार्थस्य संप्रति- पन्नत्वादिति ध्येयम्।

P. 912-2 **'वर्षति हास्मै य उपास्त' इत्यादिवचनादिति** । इदमुपलक्षणम्—'उपास्त' इत्येकवचनेन तत्कर्तुरेकत्वावगमात् । पुरोवातादिदृष्टयोपास्यानां च हिंकारप्रस्तावोद्गीथादीनामनेककर्तृ[कत्वात् अनेक]कर्तृकप्रस्तावादिकर्तृणां प्रस्तोत्रादीनां मध्ये क एक उपास्तिकर्तेति विनिगमनाविरहादप्युत्सर्गबाधः । एवमुपास्तीनां फलकरणतया प्रधानत्वात्, फलभाज एव प्रधानकर्तृत्वमिति न्यायादप्युत्सर्गबाध इतीति द्रष्टव्यम् ।

एवमवान्तरसङ्गतिं प्रदर्श्य **पादसंगतिं** दर्शयति—**पतितैरिति** । दाक्षिण्यादिना पतितैरपि संव्यवहारः कादाचित्कः स्यादपि द्विजानाम् । आहिताग्निस्तु तं यत्नेन वर्जयेत् । कुतः ? उपास्तीनामार्त्वि(ज्यात्) [ज्यत्वात्] ऋत्विक्कर्तृत्वात् । ततश्च सोपासनौद्गात्रकर्तुरन्यस्यालाभे पतितेन केनचिदहं सोपासनमौद्गात्रं करिष्यामीति चोक्ते, दाक्षिण्येन तदङ्गीकारापत्तौ प्रत्यवायवत् P. 912-4 कर्मनाशस्याप्यापत्तेः, तैस्संपर्कं यत्नतस्त्यजेदित्यर्थः । **इति प्रकृतोपयोग इति** । **प्रकृते** पूर्वाधिकरणोक्ते पतितबहिष्करणे उक्तकर्मनाशापत्तिहेत्वन्तरसूचकतया अस्य विचारस्योपयोग इत्यर्थः । ततश्च पादसङ्गतपूर्वाधिकरणोपयोगादस्यापि **पादसङ्गतिः** इति भावः ।

यद्यपि विविदिषार्थानुष्ठीयमानकर्मवीर्यवत्तरत्वसंपादकोपासनाविषयत्वादेवास्य विचारस्य **पादसंगतिर्वक्तुं** शक्यते । तथापि प्रकारान्तरमपि संभवतीति तथोक्तमिति ध्येयम् । ननु स्वशास्त्रे विचारितस्य पुनर्विचारे(ण) पौनरुक्त्यं दोषः, नतु शास्त्रान्तरविचारितस्यापि, अप्रयोजकत्वात् । तत्कथं **टीकायां** पौनरुक्त्यपरिहार इत्यत आह—**शास्त्रपौनरुक्त्यमिति** । शास्त्रान्तरेण पौनरुक्त्यमपि दोष एव । अत्र शास्त्रे शास्त्रान्तरव्युत्पादिताविरुद्धन्यायाभ्युपगमेन तद्व्यतिरिक्तानामेव न्यायानां व्युत्पादनात् इति भावः ।

किमत्र '**तथा कामोऽर्थसंयोगा**'दित्यनेन पौनरुक्त्यमाशङ्क्यते ? किं वा '**शास्त्रफलं प्रयोक्तरी**'त्यनेन ? तत्राद्यं निराकरोति—**आशंक्याहेति** । P. 912-1 **यदि कामयेतेति वाक्येनेति** । समाख्यासंनिधापितस्याध्वर्यो'र्मिनुया'दिति सदो-

---

१. कल्पतरौ 'सदः सभामण्डपम्' 'सांगप्रधानफलस्य' 'नेतव्यः उपासनानि चेति' 'न चिन्तितं, नापि तदाश्रितोपास्तीनाम्' इति पाठाः ।

माने कर्तृत्वेनान्वितस्यैव 'मिनुया'दित्येतत्समभिव्याहृतेन 'यदि कामयेते'ति वाक्येन फलसंबन्धबोधनादित्यर्थः। किं समाख्याबलादाध्वर्यवत्वं फलस्य? किं वा वाक्यबलात्? नाद्य इत्याह—**यथा त्र्यहमिति। तपसः प्रधानफलसिध्यर्थत्वादिति।** अनशनादिरूपस्य तपसः फलिसंस्कारकत्वस्वाभाव्येन फलोत्पत्तिप्रतिबन्धककल्मषनिबर्हणरूपफलिसंस्कारद्वारा प्रधानफलोत्पत्त्यर्थतया अङ्गान्तराद्वैलक्षण्यादित्यर्थः। P. 913-4

ननु भवतु यत्र सामर्थ्यरूपाल्लिङ्गात्समाख्याबाधः। प्रकृते तु कथमित्याशंकां निराकुर्वन्, द्वितीयकल्पमपि निराकरोति—**तथा काम इत्यादिना।** P. 913-4 अर्थेन फलेन यजमानस्य **संयोगादित्येवं सौत्रहेतुं** योजयति—**यजेतेति।** न च वृष्ट्यादिकं नीचैस्त्वादिगुणफलं, नाङ्गफलमिति वाच्यम्। सदोमानादिकं अङ्गमाश्रित्यैव नीचैस्त्वादेरपि फलजनकतया अङ्गस्यापि फलजनकत्वानपायात्। तथा च प्रधानवाक्यगतात्मनेपदश्रुतिविरोधाद्वाक्यसमाख्ययोर्बाध इति भावः।

नन्वस्मिन्नधिकरणे अङ्गाश्रितगुणफलानां याजमानत्वमुक्तम्। न तूपासनानामृत्विक्कर्तृकत्वम्। तथा च कथं पुनरुक्तिशङ्केत्यत आह—**अत्राङ्गेति। अर्थादिति।** अङ्गतदाश्रितपरित्यागेन फलमात्रस्य याजमानत्वकीर्तनेन तद्व्यतिरिक्तमृत्विक्कर्तृकमित्यर्थादुक्तमित्यर्थः। कथं तर्हि तस्याः परिहार इत्यत आह—**सा न कार्येति।** तत्र न्यायान्तरसिद्धमृत्विक्कर्तृकत्वं अङ्गादिविषये सिद्धवत्कृत्य फलमात्रस्य याजमानत्वमुक्तम्। न तु तदपि तत्र साधितं, तद्धेत्वनुपन्यासात्, अतो न तेन पौनरुक्त्यमिति भावः।

**टीकायां—एवंजातीयकानीति।** अङ्गाश्रितनीचैस्त्वादिगुणजातीयानीति नार्थः। तेषां सदोमानादिकर्त्रध्वर्युव्यतिरिक्तेन निर्वर्तयितुमशक्यतया सामर्थ्यादेव तत्कर्तृकत्वेन याजमानत्वशङ्कायोगादित्यभिप्रेत्य व्याचष्टे—**सदःकरणादीति। अङ्गसंबन्धानि चेति पाठं** दृष्ट्वा योजयति—**चकार इति।** ननु सदःकरणादिकृत्वङ्गजातीयानि इति व्याख्यानमयुक्तम्। अङ्गानां ऋत्विक्कर्तृकत्वस्य 'शास्त्रफलं प्रयोक्तरी'त्यधिकरणसिद्धतया अत्राविचार्यत्वादित्याशंक्य, सदःकरणादिकीर्तनं नास्मिन्नधिकरणे विचार्यत्वाभिप्रायेण। किं तु, 'तथाकाम' इत्यधिकरणे अविचारितत्वस्फुटीकरणेन कैमुतिकन्यायसूचनार्थमित्याह—**तथाकाम इति।** P. 913-S

तर्हि 'शास्त्रफलं प्रयोक्तरी'ति न्यायेनोपासनानामप्यृत्विक्कर्मत्वसिद्धेस्तेन पौनरुक्त्यमिति द्वितीयकल्पमाशंक्य निराकरोति—**यद्यपीति**। **अनङ्गत्वादिति**। स्वतन्त्रफलवत्त्वादित्यर्थः। नन्वनङ्गस्य तन्न्यायाविषयत्वे कथं गोदोहनादेरध्वर्य्वादिप्रयोज्यत्वसिद्धिः? तत्र हेत्वन्तरेण तत्सिद्धौ वा उपसनास्वपि किमिति न सिध्यतीत्याशंक्य, सामर्थ्यात्तत्र तत्सिद्धिः। प्रकृते तु न सामर्थ्यमस्तीति वैषम्येण परिहरति—**न चैवमित्यादिना**।

P. 914-1

उपासनायजमानयोरङ्गाङ्गिभावबोधकप्रमाणाभावे कथमुपासनाया याजमानत्वमिति शङ्कते—**ननु वर्षतीति**। 'वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधं सामोपास्त' इति श्रुतिः सोपस्करा दर्शिता। प्रमाणाभावोऽसिद्ध इति परिहरति—**अत आहेति**। अनया **टीकया** किं प्रमाणमुपन्यस्तमित्याशंक्य, फलस्वामित्वेन निश्चितस्य यजमानस्यैवोपासनायां कर्तृत्वावगमात् पदद्वयसमभिव्याहारात्मकेन वाक्येन याजमानत्वं गम्यत इत्युक्तमिति तदभिप्रायमाह—**कर्मणीश्वर इति**।

P. 914-6

ननु सत्यं वाक्येन फलभाज उपासनाकर्तुश्चैक्यं गम्यत इति। तच्च फलभाक्त्वं यजमानस्यैवेति नायमस्ति नियमः, व्यभिचारात्। तथा च कथं तद्बलेनोपासनानां याजमानत्वनिश्चय इति शङ्कते—**नन्विति**। **आगायतीत्यस्य व्याख्यानमागानेनेति**। 'यजेते'त्यात्मनेपदरूपसामान्यश्रुतिमूलकस्य फलं यजमानगामीति न्यायस्यौत्सर्गिकस्य विशेषवचनमपवादकम्। तद्यत्र नास्ति तत्रोत्सर्गबलादप्यर्थनिश्चय इति परिहाराभिप्रायमाह—**औत्सर्गिकस्येति**। **तस्य फलश्रुतेरिति टीकार्थं** दर्शयन्नेव **फलवदिति** वतिप्रत्ययान्तः शब्द इति दर्शयति—**उपासकस्येति**।

(यजमानानां) [उपासनानां] याजमानत्वप्रत्यायकस्य वाक्यस्य लिङ्गेन बाधं शङ्कते—**ननु तमुद्गीथमिति**। **टीको**दाहृतां श्रुतिमर्थतोऽनुक्रम्य, तत्रादिशब्दगृहीतां 'स ह नैमिशीयानां उद्गाता बभूवे'ति श्रुतिमप्यर्थतोऽनुक्रामति सहेतु। नन्विदं प्राणदृष्ट्योद्गीथोपासनस्यैवर्त्विक्कर्तृकत्वमापादयति, तत्सन्निधिपठितत्वात्। **न सर्वेषाम्**। ततश्च कथमनेन वाक्यबाध इत्यत आह—**तच्चेति**।[1] उपासकत्वेन

P. 914-11

१. कल्पतरौ 'दल्भस्यापत्यं' 'तच्च लिङ्गं सर्वत्रार्त्विज्यमुपास्तीनां' इति पाठः।

हेतुना अविशेषेण सर्वेष्वपि कर्मसूद्गातृत्वकीर्तनसामर्थ्येन स्वरसतः सर्वोपास्तिविषयं लिङ्गं न संनिधानात् संकोचमर्हतीति भावः ।

प्राणोपासनस्तुतिपरवाक्यशेषगतत्वादस्य लिङ्गस्य न स्वातंत्र्येण किञ्चिदर्थप्रत्यायकत्वम् । ततश्च वाक्यप्रमाणमूलकं पूर्वपक्षन्यायं न बाधते । किं तु तेन न्यायेनास्यैव बाध इति परिहारटीकाभिप्रायमाह—**अन्यार्थदर्शनं हीति** । P. 914.11 ननु **टीकायां** 'तस्मै हि परिक्रीयत' इति **सौत्रं** हेतुमपहाय लिङ्गदर्शनमेव किमिति सिद्धान्तसाधकत्वेनोपन्यस्यत इत्याशंक्य, तस्य सिद्धान्तासाधकत्वादित्यभिप्रायमाह—**ननु तस्मै हीति** । किमृत्विक्परिक्रयस्याङ्गाश्रितोपास्त्यर्थत्वं साक्षादेव? किं वा अर्थात्? नाद्य इत्याह—**अङ्गाश्रितेति** । द्वितीयमाशंक्य निराकरोति—**न चाङ्गेति** ।

**यत्र हीति** । यद्यपि परिक्रयबलात् ऋत्विजामङ्गेषु कर्तृत्वं, 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात् स्वयं प्रयोगे स्यात्' 'अन्यो वा स्यात् परिक्रयाम्नानात्' इति न्यायात् । न तु कर्तृत्वप्रमित्यनन्तरं परिक्रयः, तथापि परिक्रयबललब्धमपि यजमानान्यकर्तृकत्वं येषु पदार्थेषु श्रुत्यादिना निश्चितं तदर्थमेव ते परिक्रेतव्या भवन्ति । न त्वन्यार्थमपीत्यर्थः । तथा च प्रधानत्वेन याजमानत्वादुपास्तीनां न तदर्थमृत्विक्परिक्रय इति नायं हेतुरित्युपसंहरति—**तस्मादिति** । P. 915.2

ननु सौर्यादिविकृतिषु वैदिक्येवेतिकर्तव्यता प्रवर्तते न लौकिकीत्यत्र यथा 'प्रयाजे प्रयाजे कृष्णलं जुहोती'ति प्रयाजश्रवणमन्यार्थदर्शनरूपत्वाद्वैदिकेतिकर्तव्यताप्रापकन्यायमपेक्ष्य तदुपोद्बलनार्थम्, एवमिदमपि प्रापकं प्रमाणमपेक्ष्य तदुपोद्बलनार्थं भवेत् । न तु स्वयमेव कस्यचिदर्थस्य साधकमित्यत आह—**तच्चेति** । युक्तं प्रयाजादिश्रवणमन्यार्थदर्शनमिति, तत्र प्रयाजानां सौर्ययागस्य च सम्बन्धबोधकाभावेन तस्य कल्प्यत्वात् । प्रकृते तु 'विदाञ्चकार' 'उद्गाता बभूव' इत्युद्गात्रुपास्त्योः क्रियाकर्तृभावः शब्दादवगम्यमानो विना प्रमाणान्तरविरोधं न त्यक्तुं शक्यत इति भावः ।

नन्वस्ति प्रकृतेऽपि वाक्यमूलकन्यायविरोध इत्याशङ्क्य, निराकरोति—**येस्त्वत्रेत्यादिना** । न्यायेन लिङ्गस्य बाध इत्यर्थः । **पूर्वसूत्रनिर्दिष्टयोः** P. 915.3

१. 'यस्त्वत्र' इति कल्पतरौ शोधनीयम् ।

**स्वामिफलयोरेतत्सूत्रनिर्दिष्टस्यर्त्विजश्च, टीकागतैस्तच्छब्दैः**[1] परामर्श इति दर्शयन्, स्वकीयफलाय हि परिक्रीयते, इत्येवं सूत्रावयवो व्याख्यात इति P. 915-4 दर्शयति—**तेन यजमानेनेति**। फलाय घटते चेष्टते फलसिद्ध्युपयोगिषु कर्मसु व्याप्रियत इत्यर्थः। फलितमर्थं दर्शयति—**संपादयितुमिति**। फलं संपादयितुमित्यर्थः। अन्यथासिद्धत्वान्न वाक्यमूलकस्य न्यायस्य लिङ्गोन्मेषप्रतिबन्धकत्वमित्याह—**एतदुक्तमिति**। आश्रयतीत्यत्र यजमानगामितेत्यस्यानुषङ्गः।

न च प्रधानत्वादुपास्तीनां प्रधानयागादिवत् फलभाजैव कर्तव्यत्वात् कथं **कांस्यभोजिन्याय** इति वाच्यम्। प्रधानयागादेर्याजमानत्वं यजमानद्रव्यमन्येन त्यक्तुं न शक्यत इत्यन्येषां तत्राशक्तिप्रयुक्तम्। न तु प्राधान्यप्रयुक्तम्। प्रधानभूताग्निहोत्रादिहोमांशस्यापि प्रक्षेपस्यान्यकर्तृत्वात्। अप्रधानस्यापि परिक्रयस्यान्यकर्तृकत्वासंभवेन याजमानत्वाच्च। तथा च विरोधाभावाद्युक्तः **कांस्यभोजिन्यायावतार** इति। एतेन 'य उपास्त' इत्येकवचनमपि समर्थितम्। परम्पराकर्तृयजमानगतैकत्वबोधकत्वेन तदुपपत्तेरिति द्रष्टव्यम्।

ननु यदि **सौत्रो हेतुरुपाख्यानस्य** न्यायेन बाधाभावसाधक एव। कथं तर्हि **भाष्ये** उपास्तीनामृत्विक्कर्तृकत्वसाधकत्वेन व्याख्यानमित्यत आह—**एवं चेति**। फलश्रुतिमूलकन्यायान्यथासिद्धिसाधकत्वेन **सौत्रहेतुव्याख्यानं** सिद्धवत्कृत्य, प्रकारान्तरेणापि **भाष्ये सौत्रो हेतुर्व्याख्यात** इत्यर्थः। लिङ्गप्राबल्यं P. 915-7 **भाष्यकाराणामपि** संमतमित्याह—**एतच्चेति**। **तथा चेत्यादिरूपेण** प्रवृत्तं **यद्भाष्यं तस्मादुत्थितमित्यर्थः**। न च **भाष्यशैलीपर्यालोचनायां सौत्रं हेतुं** प्राधान्येनोपन्यस्य, **तथा चेत्यादिना** तदुपोद्बलकं लिङ्गमुपन्यस्तमित्येव दृश्यत इति वाच्यम्। पाठक्रमेण **सौत्रहेतुप्राधान्यावगमेऽपि**, तदसंभवस्योक्ततया आर्थक्रमेण लिङ्गदर्शनस्यैव प्राधान्यावगमात्। अत एव **भाष्ये** लिङ्गस्य स्वातन्त्र्यं सूचयितुं **दर्शयतीति** श्रौतत्वमुक्तमिति भावः।

ननु 'वर्षति हास्मा' इत्यादिश्रुतौ सामानाधिकरण्यबलेन कर्तृगामिता फलस्य श्रूयत इति शङ्काया **यत्तूक्तमित्यादिभाष्येणानुदितायाः**, ऋत्विजः

---

१. फलपरामर्शकः तच्छब्दः टीकायां न दृश्यते। तस्मात् फलपरामर्शकथनं कथमिति चिन्त्यम्।

फलसम्बन्धानुपपत्तिमात्रेण कथं परिहार इत्यतः **परिहारभाष्यं** योजयति—**परार्थत्वादिति भाष्येणेति**। किमकर्तुर्यजमानस्य कथं फलमिति ब्रवीषि? किं वा ऋत्विज एवं कर्तुः किमिति फलं न भवतीति? इति विकल्प्य तत्राद्यं **परार्थत्वादृत्विज इति भाष्येण** निराकृतमिति प्रदर्श्य, द्वितीयं **परार्थत्वादित्यादिना अनुपपत्तेरित्यन्तेन भाष्येण** निराकृतमिति दर्शयति—**अन्यत्रेत्यनेनेति**। **उभयथेति**। यजमानस्य साक्षात्कर्तृत्वे, ऋत्विग्द्वारा कर्तृत्वे च, न्यायस्य संभवे निर्वाहे सति, साक्षाद्यजमानकर्तृत्वविषय आग्रहो व्यसनितेत्यर्थः। P. 916-1

भाष्ये आर्त्विज्यफलमात्रस्य, यजमानगामित्वे, 'यां वै काञ्चने'त्यादिश्रुतिमुदाहृत्य, विशिष्यर्त्विक्कर्तृकोपासनफलस्य यजमानगामित्वे 'तस्मादु हैवंवि'दित्यादिश्रुतिरुदाहृता। तां व्याचष्टे—**यस्मादित्यादिना**। तत्र **तस्मादि**त्यनेन 'सोऽमुनैव स एष ये चामुष्मा'दित्यादिपूर्ववाक्यार्थ उत्तरवाक्यार्थे हेतुत्वेन निर्दिष्ट इत्याशयेनाह—**यस्मादाधिदैविकमिति**। **उपासीन उद्गातेति**।[1] 'य एवं विद्वान् साम गायत्युभौ स गायती'ति पूर्ववाक्ये सामगातृत्वेन निर्दिष्टस्यैव'सोऽमुनैवे'ति तच्छब्देन परामर्शादिति भावः। P. 916-3

न चैवं फलमपि तस्यैव स्यादिति वाच्यम्। वचनबलात् तस्यापि फलाभ्युपगमे बाधकाभावात्। अनन्यथासिद्धवचनाभावे ऋत्विग्गतत्वेन श्रुतस्यापि फलस्य यजमानगामित्वनियमाच्चेति भावः। **तदुभयात्मको भूत्वेति**। तत्क्रतुन्यायेनोपासकस्योपास्यरूपापत्तेरिति भावः। **सर्वान् लोकानिति**। 'ये चामुष्मात् पराञ्चो लोका' 'ये चैतस्मात् अर्वाञ्चो लोकास्तांश्चाप्नोती'ति वाक्यार्थयोः फलतः कीर्तनमेतत्।

**किं फलमिति**।[2] यद्यप्यत्र फलभेदो नास्ति, अक्ष्यादित्यपुरुषोपासनयोरेकविद्यात्वेन द्विविधलोकावाप्त्योरपि सर्वलोकावाप्तिरूपेणैकत्वात्। तथा P. 917-1

---

१. कल्पतरौ 'उपासीन उद्गाता' इति शोधनीयम्। पूर्व 'आध्यात्मिके च चाक्षुष' इति पाठः।

२. कल्पतरौ 'कं कामं किं फलं' इति पाठः। भाष्ये 'इति चर्त्विक्कर्तृकस्य' इति पाठः।

च 'कन्ते काम'मिति प्रश्नानुपपत्तिः। तथापि 'यदेव विद्यये'त्यादिश्रुत्यनुरोधेन कर्मणो वीर्यवत्तरत्वमतिशयितफलजनकत्वमप्येतत्फलमिति तदादाय प्रश्नो बोध्यः। एवं भाष्योदाहृतां श्रुतिं व्याख्याय प्रसङ्गा'देष ह्येव कामागानस्येष्ट' इत्युत्तरवाक्यं व्याचष्टे—**समर्थो हीति**।

P. 917-1

॥ इति स्वाम्यधिकरणम् ॥

---

## ॥ अथ सहकार्यन्तरविध्यधिकरणम् ॥

**सू०॥सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥४७॥**

**सू०॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥**

**सू०॥ मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥**

'तस्मात् ब्राह्मण' इति श्रुतौ तस्मादित्यनेन 'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं[1] चरन्ती'ति पूर्ववाक्यार्थो हेतुत्वेन निर्दिश्यत इति दर्शयन् भाष्योदाहृतां श्रुतिं व्याकुर्वन्, तद्व्याख्यानटीकां व्याचष्टे—**यस्मादित्यादिना**। **तद्वान् पण्डित इति**। पण्डा अस्य सञ्जातेति विग्रहे, 'तदस्य सञ्जातं तारकादिभ्य इत'जिति सूत्रेण इतच्प्रत्ययान्तत्वादिति भावः। **तस्य कृत्यं** तस्य भावः। **निर्विद्येत्येतत् निश्चयात्मना लब्ध्वेत्येवं टीकायां** व्याख्यातमिति स्वयं न व्याख्यातम्। **ज्ञानस्य** श्रवणस्य **बलं** मननं, तत्प्रतिष्ठापकत्वात्, तस्य **भावः असंभावनानिरासः**। भावभवित्रोरभेदं विवक्षित्वाऽऽह—**युक्तितोऽसंभावनानिरासरूपमननेनेति**। असंभावनानिरासे सति फलितमाह—**शुद्धहृदयत्वेनेति**।

ब्रह्म अणतीति विग्रहे, शब्दार्थकादप्यणतेः धातूनामनेकार्थकत्वेन प्रकृते अवगत्यर्थकात्, कर्मण्यणि, पृषोदरादित्वेन ब्राह्मणशब्दो व्युत्पन्न इत्या-

---

१ कल्पतरौ 'भिक्षाचर्यमाचरंस्तस्मात्' इति पाठः।

२. कल्पतरौ वाकारद्वयं दृश्यते, आभोगरीत्या तत् नास्तीति भाति।

शयेनाह—**ब्रह्माहमिति**। दृष्टान्तसङ्गतिमाह—**पूर्वत्रेति**। वाक्यशेषप्राय- P. 918-4
पाठात् वाक्योपक्रमप्रायपाठो बलीयानित्यभिप्रेत्य शङ्कते—**नन्विति**। अर्थापत्ति-
लक्षणेन लिङ्गेन वाक्योपक्रमप्रायपाठो बाध्यत इति **परिहारटीकाशयमाह—
यद्यत्रापीति**। **न हीति**। **पाण्डित्यं स्वरूपेण ज्ञानं न भवति**, न सुप्रति-
ष्ठितं भवति। **अपि तु, बाल्ये** मनने **अनुष्ठिते** तेनासंभावनादिनिरासे,
**अनन्तरमेव तत्कृतं भवेत्**। सुप्रतिष्ठितं भवेत्। **तस्मात्** पाण्डित्यप्रतिष्ठाप-
कत्वात् **बाल्यं प्रशस्तं भवेदि**त्येवं प्रशंसेत्यर्थः।

'अथ मुनि'रित्यत्र 'तिष्ठासे'दिति विध्यनुषङ्गं सिद्धवत्कृत्य पुनर्विध्यनु-
च्चारणेन, श्रोतव्याश्रवणस्यैवासिद्धत्वान्नार्थापत्तिलिङ्गस्योन्मेष इति दर्शयितुं, **टीका-
यामपिशब्द** इत्याह—**तत्र तावदिति**। अधिकार्यलाभान्मौनविधिरनुपपन्न
इति शङ्कते **टीकायां—कस्येदमिति**। स्ववाक्ये अधिकार्यलाभेऽपि, पूर्व-
वाक्यानुरोधादधिकारी लभ्यत इत्याशयेनाह **टीकायाम्—अत आहेति**।
पूर्ववाक्ये 'विदित्वे'ति श्रवणात् विद्वत्संन्यासिनो लाभेऽपि, मौनविधियोग्यो
विविदिषुसंन्यासी पूर्ववाक्यादपि न लभ्यत इति पुनः शङ्कते **टीकायाम्**— P. 918 9
**पृच्छतीति**।

पूर्ववाक्ये विद्वत्संन्यासिनः प्रतीतत्वेऽपि तं हेतुत्वेनोपादाय तदितरेषां
बाल्यादिविधिमहिम्ना अर्थादप्रतिष्ठितविद्यावतो विविदिषोरधिकारिणो लाभान्न
मौनविध्यनुपपत्तिरिति परिहरति **टीकायाम्—उत्तरमिति**। **विदुषो भिक्षो-
रधिकारात्** एतद्वाक्यविधेयानुरोधात्, अर्थाद्विविदिषोर्लाभादिति भावः।

**विद्यातिशयस्य सिद्धत्वादिति**। विद्यायामापरोक्ष्यस्यैवातिशयत्वादिति P. 919-1
भावः। **सूत्रभाष्ययोर्निष्कलङ्का** विद्या न विवक्षिता। किं तु विद्यामात्रम्। तथा च
कदाचित् भेददर्शनादेरपि संभवादस्ति विधेरवकाश इति **परिहारटीकाभिप्रायमाह**-

---

१. कल्पतरौ 'तत्र तावत् अथ मुनिरिति साकाङ्क्ष' इति पाठः। भाष्ये 'वाल्मीकिर्मुनिपुंगवः' इति रामायणे उत्तरकाण्डे (४९) सर्गे (१०) श्लोकः उदाहृतः। एतेन उत्तरकाण्डस्य वाल्मीकीयत्वविषये विप्रतिपत्तिमतां केषांचिदाधुनिकानां शंका निराकृतेति ध्येयम्।

२. अनेन टीकायां—'तदधिकारात्, विदुषो भिक्षोरधिकारात्' इति पाठ इति ज्ञायते।

P. 919-1 विद्यावत इत्यत्रेति । विद्याशब्देन मतुबन्तेनेति शेषः । विद्याया अतिशयो निष्कलङ्कता न विवक्षितेत्यर्थः । विद्यावत इति भाष्ये विद्यावानिति प्रकृत्यंशेन न तु विद्यातिशयो विवक्षितः । किं त्वतिशयितविद्योदयाय तदभ्यासे प्रवृत्त इति टीकार्थो बोध्यः ।

विध्यादिशब्दस्य मुख्यविधिपरत्वेन व्याख्याने बीजमाह—विधिर्हीति । समिदादिविधेर्विध्यन्तत्वकथनस्य प्रकृतोपयोगं दर्शयति—अत इति । पूर्वापरविरोधं परिहरति—समन्वयसूत्र इति । शाब्दज्ञानादिति । निदिध्यासनविध्यभावे, श्रवणमात्रेणैव कालपरिपाकवशात् साक्षात्कारो भविष्यतीति बुद्ध्या तत्र कस्यचिदप्राप्तिसंभवात्तं प्रति तन्नियम्यत इति अस्मिन् सूत्रे उच्यते । समन्वयसूत्रे चाविधेयत्वमपूर्वविध्यविषयत्वमुक्तमिति न विरोध इत्यर्थः ।

अस्मिन् पक्षे 'विधिच्छायानि वचनानि' इत्यादिसमन्वयसूत्रभाष्यटीकयोर्नाञ्जस्यम् । तत्र विधिमात्रस्यैव निराकरणादित्यपरितोषादाह—अथ वेति । ततश्च, प्रस्तुतसूत्रभाष्ययोरपि भेददर्शनव्यासङ्गात् कदाचिन्निदिध्यासने अनुत्सहमानस्य तस्मिन्नुत्साहजननार्थं विधिसरूपोऽयमर्थवाद इत्यत्रैव P. 919-8 तात्पर्यमिति भावः । युक्त्यसहत्वादपि न विधिसंभव इत्याह—अपि चेति । अत्र श्रवणादिः नापूर्वविधिः। दुर्विज्ञेयवस्तुतत्त्वसाक्षात्कारे श्रवणमनननिदिध्यासनानामन्वयव्यतिरेकाभ्यामेव रागविशेषतत्त्वसाक्षात्कारे गान्धर्वशास्त्रश्रवणादीनामिव प्राप्तत्वात् ।

नापि नियमविधिः । ब्रह्मात्मत्वसाक्षात्कारे श्रवणादितुल्यतया उपायान्तरस्यैवाभावेन तस्य कथञ्चिदप्यप्राप्तेः । भ्रान्त्यादिकल्पितस्योपायान्तरस्य विध्यनिवार्यत्वात् । अत एव नोपायपरिसंख्या, उपायान्तरस्य प्रसक्तेरेवाभावेन तस्य नित्यप्राप्तेः दूरापास्ततया तन्निवृत्तिफलकपरिसंख्याविध्ययोगादित्यर्थः । अपूर्वविधित्वशङ्काया मन्दतया कथञ्चिदेव संपाद्य निरस्यत्वात्तमंशमुपेक्ष्य P. 920-2 श्लोकोक्तं नियमपरिसंख्याविध्यसंभवमुपपादयति—अवघातो हीत्यादिना ।

---

१. कल्पतरौ 'आशङ्क्याह—न विद्यातिशय इति ।' 'विद्याशब्देन न विद्यातिशयः' इति पाठः । टीकायां 'स हि विधेः प्रधानविधेः' इति पाठः ।

२. कल्पतरौ 'अपूर्वत्वाद्विधिरास्थेय इति' इति टीकाप्रतीकधारणमिति ज्ञेयम् ।

**इमामगृभ्णन्निति** । यद्यपि, नेयमुपायपरिसंख्या । अपि त्वेकस्मिन्नुपाये मन्त्रे अश्वगर्दभरशनादानयोर्द्वयोरुपेययोः मन्त्रलिङ्गान्नित्यं प्राप्तयोरन्यतरनिवृत्तेरुपेयपरिसंख्यैव । तथा च नोपायपरिसंख्यायामयं दृष्टान्तीकर्तुमुचितः । तथापि द्वयोरेकत्र प्राप्तावन्यतरनिवृत्तिफलकः परिसंख्याविधिरित्येतावत्यंशे दृष्टान्तो बोध्यः । इदानीमपूर्वविधित्वशङ्कामुद्भाव्य निराकरोति—**न चेत्यादिना** । **सामान्योपाधाविति** । तथा च ब्रह्मसाक्षात्कारव्यक्तावपि दुर्विज्ञेयवस्तुसाक्षात्कारत्वेन वेषेण श्रवणादेः प्राप्तत्वान्नापूर्वविधित्वसंभव इत्यर्थः । P. 920-2

**सर्वमानेति** । **सर्वेषामपि मानानां यत्फलं** दर्शनं तस्य 'द्रष्टव्य' इति श्रुतस्याश्रयणात्, **सर्वेषामपि प्रमाणानामनियमेन प्राप्तौ वेदान्ता एवावरोद्धव्या नियन्तव्या इतीच्छया 'श्रोतव्य' इत्यनेन** वाक्येन वेदान्तश्रवणमाह **श्रुतिरित्यर्थः** । **सन्निधानादेवेति** । 'द्रष्टव्य' इत्युक्ते, केन द्रष्टव्य इत्याकांक्षायामुपस्थितत्वेन वेदान्तानामेव तत्र प्रमाणत्वेन पर्यवसानादित्यर्थः । इदमुपलक्षणम् । ब्रह्मात्मैकत्वस्य वेदान्तैकवेद्यतया तत्र मानान्तराणामयोग्यत्वादपि वेदान्तनियमलाभादित्यपि द्रष्टव्यम् । तथा च, न्यायलब्धवेदान्त**नियम**प्रकटनेच्छया 'श्रोतव्य' इत्यनेन श्रवणमनुवदतीति **वार्तिकार्थ** इति भावः । P. 921-2

**एतेनेति** । प्रत्यक्षादिप्रमाणप्रसक्त्यधीनवेदान्तनियमनिराकरणेन, **पुराणादिप्रसक्तिप्राप्तमपि वेदान्तनियमं निरस्तं व्याचक्षीत**[१], उक्तरीत्या पुराणादीनां प्रसक्तेरेवाभावादित्यर्थः । **तच्चानुपपन्नमिति** । तथा च, श्रुतगार्हस्थ्योपसंहारान्यथानुपपत्त्या आश्रमान्तराभावो विज्ञायत इत्यर्थः । अन्यथाप्युपपन्नत्वात् गार्हस्थ्योपसंहारो नाश्रमान्तराभावप्रमापक इति परिहारश्च **टीकायामेव** P. 922-1

---

१. कल्पतरौ 'उपायान्तरासंभवपरिज्ञानात्' इत्यत्र, 'उपायान्तरापरिज्ञानात्' इति पाठान्तरम् ।

२. कल्पतरौ 'सूत्रभाष्यार्थानभिज्ञतेति' इति पाठः । 'वाचस्पतिस्तु मण्डनपृष्ठसेवी सूत्रभाष्यार्थानभिज्ञः समन्वयसूत्रे श्रवणादिविधिं निराचचक्षे । अत्र तु तद्विधिमूरीचक्रे । अहो बतास्य पाण्डित्यं, श्रवणादीनां च संन्यासाश्रमधर्मत्वात् तद्विधिं निराकुर्वन् संन्यासाश्रमायैव द्वेष्टि । विध्यभावे च अथशब्देन साधनचतुष्टयसंपन्नाधिकारिसूत्रणं चानुपपन्नम् । तस्माद्वाचस्पतिप्रलापमुपेक्ष्य यावत्साक्षात्कारं श्रवणादि विधितोऽनुष्ठेयम्, इति प्रकटार्थविवरणकारः । तदिह कल्पतरौ निरस्तम् ।

P. 922-2 स्पष्ट इति न पृथगुपपादित इति ध्येयम्। इति वानप्रस्थवृत्तिभेदा इति। इत्येवं स्मृतिषु वानप्रस्थानां वृत्तिभेदाः चर्याभेदाः श्रुता इत्यर्थः। एवमुत्तरत्रापि योजनीयम्।

॥ इति सहकार्यन्तरविध्यधिकरणम् ॥

---

## ॥ अथ अनाविष्काराधिकरणम् ॥

### सू०॥ अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥

पातित्यबोधकशास्त्रानुरोधेन बाल्यशब्दस्य संकोच एव युक्त इति कथं कामचारवादभक्षता बाल्यमिति पूर्वपक्षो भाष्य इत्याशयेन शङ्कते—नन्विति। पातित्यबोधकशास्त्रस्य सामान्यशास्त्रतया वामदेवविद्योपासकादिषु कॢप्तसंकोचतया च, प्रकृतेऽपि विद्यावत्संन्यासिव्यतिरिक्तविषयतया तस्यैव सङ्कोचो युक्तो न बाल्यशब्दस्येत्याशयेन परिहरति—अत आहेति। (अप्राप्तार्थप्रापक)[प्रसिद्धार्थक] मौनंशब्दसमभिव्याहारादपि बाल्यशब्दस्य [प्रसिद्ध] काम-
P. 922-7 चाराद्यर्थकत्वमित्याशयेनाह—अपि चेति। तदेव बाल्यमिति। तद्बाल्यमेव बाल्यशब्दार्थ इत्यर्थः। सकलबालचरितविधानमिति पूर्वपक्षे इतरव्यावृत्तेरयोगादिति ध्येयम्।

प्रसिद्धिविरोधात् कथं तदेवेति टीकेत्याशङ्क्य, लक्षणाभिप्राया टीकेति दर्शयति—यद्यपीत्यादिना। शेषिविध्यनुग्रह इति। 'नाविरतो दुश्चरितात्' इत्यादिश्रुतिबलेन कामचारादिभ्यो निवृत्तेनैव विद्याया लभ्यतया बाल्यशब्दस्य
P. 922-9 तदंशे संकोचे सत्येव प्रधानस्य विद्याविधेः अनुग्रह इत्यर्थः। अपरं चाहेति। विशेषशास्त्रस्य कथञ्चिदप्यनुपपत्तावेव सामान्यशास्त्रबाधेन निवेशो नान्यथेति भावः।

॥ इति अनाविष्काराधिकरणम् ॥

---

१. अत्र भाष्ये 'यथोपपादमूत्रपुरीषत्वादि' 'दर्पादिरहितत्वं' इति पाठः। टीकायां—'अत्यन्तबाल्येन' इत्यस्य 'अत्यन्तबाल्यात्मना' इत्यर्थः। इति भाति।

## ॥ अथ ऐहिकाधिकरणम् ॥

सू०॥ ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥

**श्रवणादिघटकत्वादिति** । विविदिषोत्पादनद्वारेणेति शेषः । **अवश्यं भाव्यमिति** । प्रवृत्त्यनन्तरं प्रमोत्पत्तौ विलम्बायोगादिति भावः । **तदात्वे** इत्यस्य व्याख्यानं तत्काले इत्यादि । **विद्योत्पत्तये चेति** । 'विविदिषन्ती'ति श्रुत्या यज्ञादीनां विविदिषाद्वारा वेदनार्थत्वश्रवणात् 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इत्यादिवचनाच्च विद्योत्पत्त्यनुगुणावपि **सत्त्वशुद्धिप्रतिब-न्धकदुरितनिरासौ तैः कर्तव्यावित्यर्थः** । P. 924-2

श्रवणादिप्रवृत्त्यनन्तरं विद्योत्पत्तिप्रतिबन्धकसद्भावे किं प्रमाणमित्यत आह—**तत्र यज्ञादिभिरिति** । **विरोधिकर्मान्तरैरिति** । श्रवणादिविरोधि-कर्मान्तरैरित्यर्थः । **प्रतिबन्धाप्रतिबन्धाविति** । यज्ञाद्यपेक्षया तेषां प्राबल्ये श्रवणादिप्रतिबन्धः । दौर्बल्ये च न प्रतिबन्ध इति विवेकः । **यः आत्मा श्रवणाय** श्रवणार्थमपि **न लभ्यः** । तच्छ्रवणे मनो न प्रवर्तत इत्यर्थः । **न चैवमिति** । श्रवणादिप्रतिबन्धकदुरितनिवर्तकस्य यज्ञादेरपि दुरितनिवृत्ति-लक्षणे कार्ये कर्तव्ये **यदि प्रतिबन्धकान्तरमभ्युपगम्यते**, तदा तन्निवृत्तावपि प्रतिबन्धकान्तरं स्यादिति **तन्निवृत्त्यर्थं कर्मानुष्ठानेऽनवस्था** कर्मानुष्ठानानु-परमश्च स्यादित्यर्थः ।

यज्ञादिभिः सत्त्वशुद्ध्यादौ कर्तव्ये, तत्प्रतिबन्धकानि दुरितानि प्रारब्धा-न्यप्रारब्धानि चेति द्विविधानि । तत्र न तावदप्रारब्धनिवृत्त्यर्थं कर्मान्तरानुष्ठाना-पेक्षा, तेषां यज्ञादिभिर्नाशेन प्रतिबन्धकत्वायोगादित्याह—**यज्ञादीति** । यज्ञादि-भिर्दुरितनिवृत्तौ कर्तव्यायां प्रतिबन्धकस्य । **भोगद्वारेणेति** । तथा च कर्मणाम- P. 924-6

---

१. टीकायां 'श्रवणादिभिरिहैव जन्मनि' 'तथा गर्भस्थस्य' इति पाठः । टीकायामेव पूर्वपक्षावसाने 'विद्यामुत्पादयन्तीति प्राप्तम् ।' इति पाठः । सिद्धान्तग्रन्थे 'अविशुद्धसत्त्वान्वा पुंसः' इति, 'एवं श्रुतिस्मृतिप्रबन्धः' इति च पाठः ।

२. कल्पतरौ पूर्वं 'यज्ञादिभिः कर्तव्यौ' इति पाठः ।

प्रारब्धस्वरूपाणामिह जन्मनि भोगप्रदत्वाभावात् प्रत्युत विरोधिभिर्नाशाच्च तेषां प्रतिबन्धकत्वमिति भावः। प्रारब्धनिवृत्त्यर्थमपि न कर्मानुष्ठानापेक्षेत्याह—

P. 924-6 **भोगनिवृत्ताविति।**

**कथंकारमिति।** कथं कृत्वा, अयं श्रवणादिषु विधिर्नास्तीति वदन्, **वाचस्पतिः भवेत्।** विरुद्धार्थाभिलापस्य भिन्नकर्तृकत्वनियमादिति भावः। **षड्जादीति।** षड्जादीनां स्वराणां वैशद्यं विविक्ततया साक्षात्कारः तद्धेतुभावस्येत्यर्थः। अत एव, गान्धर्वशास्त्रमभ्यस्यतां मध्ये, कस्य चित् सकृच्छ्रवणमात्रेणैव षड्जादिसाक्षात्कार इति भावः। दृष्टफलस्य जन्मान्तरीयत्वं

P. 925-1 निर्दिश्यादृष्टापेक्षत्वमपि निदर्शयति—**देवतेति।**

'वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः।
तालज्ञश्चाप्रयासेन मोक्षमार्गं निगच्छति॥

गीतिज्ञो यदि योगेन नाप्नोति परमां गतिम्।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते॥'

इति याज्ञवल्क्यस्मृतौ सङ्गीतज्ञानस्य महाफलत्वस्मरणेन देवताप्रसादापेक्षिताया अवश्यंभावादिति भावः। **भाष्योदाहृतश्रुतौ उत्तरार्धमवतार्य व्याचष्टे— शृण्वन्तोऽपीत्यादिना।**

**॥ इति ऐहिकाधिकरणम्॥**

---

१. कल्पतरौ 'एवं च—विधिसामर्थ्यमाश्रित्य ब्रुवन्नामुत्रिकं फलम्। श्रवणादेः कथंकारं वाक्पतिर्न च तत्रपे। इति कैश्चित्कृतः' इति पाठः। कैश्चित्। प्रकटार्थविवरणकारैः इत्यर्थः, कल्पतरावुपरि 'इत्यत्र हेतुरुच्यते—आश्चर्य इति' इति पाठः।

२. 'कथं कारमयं वाचस्पतिर्भवेत्' इति पाठमभिप्रेत्याभोग इति ज्ञायते।

## ॥ अथ मुक्तिफलानियमाधिकरणम् ॥

### सू०॥ एवं मुक्तिफलानियमस्तदवस्थावधृते-स्तदवस्थावधृतेः ॥ ५२ ॥

ननु मुक्तावुत्कर्षापकर्षौ संभावितावप्यैहिकामुष्मिकत्वलक्षणौ भविष्यतः। तथा च न पूर्वपक्ष्यभिमतं सातिशयत्वं सिध्यतीत्याशङ्कां निराकर्तुं, न च मुक्तावित्यादिटीका। तत्र ब्रह्मोपासनेत्यादिपदं योजयति—ब्रह्मोपासनेति। P. 925-6 विद्योदयानन्तरं मुक्तौ विलम्बाभावान्नामुष्मिकत्वप्रसक्तिरित्युक्तम्। तत्र शङ्कते—ननु विद्यावतोऽपीति। अशरीरत्वस्य मोक्षस्य शरीरे सत्ययोगादिति भावः। जीवन्मुक्तिप्रतिपादकबहुश्रुत्यनुरोधेन शरीराभिमानत्याग एवाशरीरत्वं, तच्च जीवतोऽपि न विरुध्यत इति परिहरति—तत्राहेति। टीकायां—कर्मप्रक्षये सत्यपि मुक्तेरवश्यंभावनियमादिति पूर्वेणान्वयः।

मुक्तावुत्कर्षनिकर्षसाधनस्य पादार्थसम्बन्धमाह—तथा चेति। अनुमानान्तरमिति। P. 926-1 ब्रह्मात्मैकत्वविद्या सातिशयफला, विद्यात्वात् सगुणविद्यावदित्येवंरूपमित्यर्थः। तत्र तत्रेति टीकापदस्य व्याख्यानं साधकेष्विति। प्रमाणेष्वित्यर्थः। श्रुतेरिति टीकोक्तं हेतुं व्याचष्टे—न कर्मणेति। ननु सवासनाविद्याध्वंसस्य विशेषराहित्ये तस्य संसारकालीनघटादिध्वंसादप्यविशेषप्रसङ्ग इत्यत आह—निवर्त्यविशेषेति। तर्हीति। निवर्त्यविशेषद्वारा यो विशेषः, P. 926-5 स एव मोक्षे विशेषोऽस्त्वित्यर्थः। ततश्चाविद्याकामकर्मादिक्षये[सावशेषे] अवशिष्टावरणतारतम्येन सूक्ष्मसूक्ष्मतरसूक्ष्मतमवस्त्रावृतरविमण्डलप्रकाशवत् ब्रह्मानन्दप्रकाशोऽपि [मोक्षे] तारतम्येनैन भवेदिति सातिशयो मोक्ष इति भावः।

---

१. टीकायां 'विद्यायामैहिकत्वलक्षण उत्कर्ष' इति पाठः।

२. श्रुत्युपपत्तिरूपेषु बहुषु प्रमाणेषु सत्स्वित्यर्थः। तत्र तत्र साधकेषु मुमुक्षुषु ऐकरूप्यमिति अर्थस्वीकारे, मुक्तानां मिथो भेदः प्रतीयेतेति तत्परित्यागः। 'ऐकरूप्यं' इति टीकायां पाठः।

३. टीकायां 'विद्याजन्म' इति पाठमभिप्रेत्य कल्पतरुव्याख्या। विद्याजन्मा' इति पाठसत्त्वे बहुव्रीहिः इति बोध्यम्।

सविलासाविद्यानिवृत्तेरेव मोक्षतया सावशेषः तद्ध्वंसो न मोक्षः। अन्यथा संसारावस्थाया अपि मोक्षावस्थात्वापत्तेरिति परिहरति—**तत्राहेति**। साधनगतो विशेषः किं चिराचिरत्वरूपः? उत, स्वरूपगत एव ?[१] आद्ये हेतुः अप्रयोजक इत्याह—**साधनविद्येति**। अथ स्वरूपगतमेव विशेषं आश्रित्य विलक्षणसाधनसाध्यत्वादिति हेतुः क्रियते, तत्राह—**स्वाभाविकस्त्विति**।

P. 926-6

**विद्याकार्यस्येति**। सगुणविद्याकार्यस्य सत्यलोकादिफलस्येत्यर्थः। **भेदाभेदविकल्पासहत्वमिति**। न तावत् ब्रह्मस्वरूपमोक्षविशेषा भिन्ना भवितुमर्हन्ति। अद्वैतश्रुतिविरोधात्। नाप्यभिन्नाः। विशेषाणां परस्परं वैलक्षण्यानापत्तेः। भेदाभेदपक्षश्च दूषितः, इत्येवंरूपा युक्तिरिति भावः। **टीकायां**—सूत्रार्थं दर्शयन् सिद्धान्तमुपसंहरति—**तस्मात्तस्या इति**।

P. 927-3

इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डभट्टमहोपाध्यायतनूभवेन
श्रीमन्नारयणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशगृहायमाणेन श्रीलक्ष्मी-
नृसिंहचरणारविन्दचञ्चरीकेण श्रीलक्ष्मीनृसिंहेन
विरचितायां कल्पवृक्षप्रदीपिकायां
आभोगाख्यायां तृतीयाध्यायस्य
चतुर्थः पादः॥

---

१. कल्पतरौ 'असत्पक्षे हेतोरसिद्धिः' इति पाठः।

२. कल्पतरौ 'मोक्षे अभ्युपेयविशेषाणां' इति शोधनीयम्।

॥ श्रीः ॥

॥ श्रीलक्ष्मीनृसिंहाय नमः ॥

# ॥ अथ चतुर्थाध्यायस्य प्रथमः पादः ॥

## सू०॥ आवृत्तिरसकृदुपदेशात् ॥ १ ॥

## सू०॥ लिङ्गाच्च ॥ २ ॥

अत्र भाष्ये **प्रथमं तावत् कतिभिश्चिदधिकरणैरित्यादिना** फलाध्यायेऽपि साधनविचारशेषानुवृत्तिरुक्ता। तत्र साधनैकदेशस्य पृथक्करणे को हेतुरित्याशंक्य, फलसन्निहितस्य साधनस्य फलविचारसन्निधावेव विचारो युक्त इति तात्पर्येण पृथक्करणमित्यह—**तृतीय इति**। **आवृत्त्यादीत्यादिशब्दादा**- P. 928-1 सनादिकं गृह्यते। ननु 'आत्मेति तूपगच्छन्ती'त्यादेः साधनविचारात्मकत्वाभावात् कथमत्र सङ्गतिरित्यत आह—**आत्मेति त्विति**। ब्रह्मात्मैक्यसाक्षात्काराय श्रवणादिकमावर्तनीयमिति विरुद्धं, ब्रह्मात्मैक्यस्यैवाभावात्, इत्येवं शङ्कितो यो विरोधः तत्परिहारफलमित्यर्थः। तर्हि विरोधाध्याय एव कर्तव्येयं चिन्तेत्यत आह—**तस्य चेति**। **महावाक्यार्थविरोधसमाधानस्य** समाधावन्तरङ्गत्वादिह करणमित्येवं वक्ष्यत इत्यर्थः।

**न प्रतीक इत्यादि त्विति**। तत्र प्रतीकेष्वात्मदृष्टिः कर्तव्या न वेत्ये- P. 928-2 वमादिविचारस्यैव करणादिति भावः। **तस्मादिति**। यस्मा[1]'दात्मेति तु' इत्यादेः कारणान्तरवशात् प्रसङ्गाच्च मध्ये निवेशस्तस्मात् **भाष्यकारोक्तस्य चतुर्थे तार्तीयसाधनविचारशेषानुवर्तनस्य**, फलार्थापत्तिसंसिद्धत्वात् आवृत्त्यादेरत्र विचार **इत्युक्तोऽभिप्रायो भवत्येवेत्यर्थः**। **सन्त** इत्यस्य व्याख्यानं **अमत्सरिणस्सज्जना इति**। **अरोचकमेवाह—सत्कवीति**। अचिकित्स्यत्वे पापबाहुल्यं हेतुरिति सूचयन्नाह—**केषांचिद्धीति**। P. 928-3

---

१. कल्पतरौ 'आत्मेति तु इति (अधिकरणं) विरोध' इति पाठः।

मात्सर्यस्य चिकित्स्यत्वाचिकित्स्यत्वाभ्यां तन्निमित्तकस्यारोचकस्यापि चिकित्स्यत्वाचिकित्स्यत्वे सुज्ञाने इति तत्रैव तद्दर्शितमिति ध्येयम्। **इदं**

P. 928-10 **त्विति**। सत्कविफणितिष्वरुच्यापादकमित्यर्थः। **निमित्तेष्विति**। उद्वेगनिमित्तेष्वित्यर्थः। **अध्यायविषययोरिति**। विचारस्य विचार्यशेषतया शेषिक्रमेण क्रमो न्याय्य इति भावः।

श्रवणादीनां प्रयाजादिवत् सकृत्प्रयोग इति कथं पूर्वपक्षः? वैषम्यादिति शङ्कते—**नन्विति**। **मन्यते इति**। अभिमाने च मूलमत्राहेत्यादिशङ्काभाष्यतद्व्याख्यानटीकयोः स्पष्टम्। विधेयत्वे च सति प्रयाजादितुल्यतैवेत्याह—**विधिषु चेति**। श्रवणादिषु पूर्वपक्षस्य प्रदर्शितत्वात् यत्र पुनरित्यादिटीकावैफल्यमित्यत आह—**श्रवणादय इति**। साक्षात्कारफलकत्वेन सिद्धान्त्यभ्युपगतानां सर्वेषामपि तत्फलकत्वानभ्युपगमेन आवृत्तिवैफल्यपूर्वपक्षस्य श्रवणादिष्विव अहंग्रहोपास्तिष्वपि तुल्यत्वादिति भावः।

P. 929-2 **उपास्तिष्वप्याहेति**। उपासिधात्वर्थस्योपासनाया अन्तर्नीतावृत्तिकत्वे मानाभावात् सकृत्प्रयोगमाहेत्यर्थः। विद्याया मुक्तिसाधनत्वं, श्रवणादेर्वा विद्यासाधनत्वं, यदि मानान्तरासिद्धं स्यात्, स्यात्तदा विधेयत्वमदृष्टार्थत्वं च श्रवणादीनामिति नावृत्तिस्सिध्येत्। तदेव तु नास्तीति वक्तुं **यद्यपि** इत्यादिटीकेत्याशयेनाह—**अत्र किमित्यादिना**। **नाद्य इत्याहेति**। अदृष्टत्वेन प्रत्यक्षसिद्धत्वाभावेऽप्यनुमानसिद्धत्वादिति भावः। **विद्योत्पादविरोधितयेति** टीकालब्धं हेतुमाह—**अनिर्वाच्यत्वादिति**।

P. 929-7 वाक्यार्थप्रदर्शनपूर्वकं उपरि नीतस्येवकारस्यार्थमाह—**गान्धर्वेति**। ततश्च **टीकायां श्रवणादिपदं गान्धर्वशास्त्रार्थश्रवणादिपरमिति** भावः। **तद्वदिति तच्छब्देन साक्षात्कारजनकत्वेनेति पूर्ववाक्यनिर्दिष्टो गान्धर्वशास्त्रार्थसाक्षात्कार** उच्यते। **तस्यैव यथोक्तानुभवस्यापि श्रवणाद्यभ्याससाधनत्वेन वेषेणानुमानादित्यर्थः**। अनेन **लोकसिद्धत्वादित्यनन्तरं पूर्वनिर्दिष्टसाक्षात्कारवाचकं तस्येति पदमध्याहृत्य तस्यैवेत्येवं टीकायामिवकारस्यान्वय इति व्याख्यातम्**।

---

१. अत्र टीकायां 'श्रवणमनननिदिध्यासनाभ्यासस्येव' इति पाठः इति ज्ञायते। अन्यथा उपरि नेतव्यस्य इवकारस्यालाभप्रसंगात्। 'इवकारो लोकसिद्धत्वादित्यत उपरि

**श्रवणाद्यभ्याससाध्य इति** । तथा च साक्षात्परंपरया वा साध्यत्वमात्रस्य विवक्षितत्वान्न पर्यङ्कविद्यादिप्रतिपन्नपारत्रिकसगुणेश्वरसाक्षात्कारे व्यभिचार इति भावः । **शास्त्रार्थसाक्षात्कारत्वादिति** । शास्त्रश्रवणादिजन्यसंस्कारसहकृतकरणजन्यसाक्षात्कारत्वादित्यर्थः । तेन स्वर्गादिसाक्षात्कारे तपःप्रभावसन्निधापितदेवतासाक्षात्कारे च न व्यभिचारः । एवं च तत्र व्यभिचारपरिहाराय क्लेशेन साध्यसंपादनं परिमले निरर्थकम् । स्वर्गकामादिवाक्यार्थविषयका(नन्या)-पातज्ञानन्यायविचारजन्यतन्निर्णययागादिसङ्कल्पकालकर्तव्यफलध्यानानां श्रवणादित्वप्रसिद्ध्यभावाच्चेति ध्येयम् । P. 929-3

श्रुतिविरोधान्नानुमानप्रवृत्तिरित्यभिप्रेत्य शंकते—**नन्विति** । विध्यर्थिका श्रुतिरेव नास्तीति परिहरति—**तत्राहेति** । एवमपि ब्रह्मसाक्षात्कारो नाभ्याससाध्यः साक्षात्कारत्वात्, इन्द्रियसन्निकर्षजन्यसाक्षात्कारवदिति प्रतिरोधग्रस्तमनुमानमिति मनसि निधायाशंकते—**नन्विति** । षड्जादिसाक्षात्कारस्थलेऽपि नावृत्त्यपेक्षेति न तत्र व्यभिचार इति भावः । **सकृदिति** । तथा च प्रतिरोधानुमानस्य बाधो व्यभिचारश्चेति भावः । P. 930-1

एवमपि प्रथमानुमाने हेतोरप्रयोजकत्वमविद्यायाः परोक्षरूपयापि विद्यया निवर्त्यत्वसंभवात्, द्वितीयानुमाने च हेतोरसिद्धिरित्याशयेन शंकते—**नन्विति** । समानस्वभावयोरेव विद्याविद्ययोः निवर्त्यनिवर्तकभावदर्शनान्नाप्रयोजकत्वमिति परिहरति—**तत्राहेति** । दृष्टार्थत्वस्य **तदेवमित्यादिटीकोक्तमावृत्तिहेतुत्वं** प्रकटयन्, **ध्यानोपासनयोश्चेत्यादिटीकां** अवतारयति—**एवमिति** ।

---

नेतव्यः' इति कल्पतरुपाठमभिप्रेत्य आभोगकारेण तन्मार्गप्रदर्शकपरिमलकृता च महान् प्रयासोऽवलंबितः। स च प्रयासः कल्पतरुलेखकप्रमादनिबन्धनः। कल्पतरौ 'अन्वयव्यतिरेकाभ्यां चेति' इति प्रतीकधारणानन्तरं 'चकारो लोकसिद्धत्वादित्यत उपरि नेतव्यः' इति पाठः। इति ऊह्यते। 'उपपत्तिसिद्धत्वात, लोकसिद्धत्वाच्च' इति चकारस्यान्वयः । एवं च टीकायां नास्ति इवकारः। एवकार एव। अस्य युक्तत्वायुक्तत्वे सहृदयैर्निश्चेतव्ये। टीकायां कल्पतरौ च 'चैतन्यात्मकोऽहं'मिति पाठः। भाष्ये 'तावता शास्त्रस्य कृतार्थत्वात्' इति स्थाने 'तावता शास्त्रार्थस्य कृतत्वात्' इति पाठान्तरम्।

१. कल्पतरौ 'सकृच्छ्रवणादिना फला' इति पाठः।

२. कल्पतरौ 'ब्रह्मसाक्षात्कारोद्देशेन' इति पाठः।

P. 930-4 प्रत्येकावृत्तौ हेतुमाह—**अनेकेति**। श्रवणादीनां त्रयाणामुपदेशसामर्थ्यात् तत्तत्फलं भिद्यते। तथा च तत्तत्फलसिद्ध्यर्थं प्रत्येकमभ्यसनीयमिति भावः।

ननु किं प्रत्येकमभ्यासोऽपि नियतः? तर्हि केषाञ्चित् पुरुषधौरेयाणां सकृच्छ्रवणेन साभ्यासश्रवणेन वा, एवं मननादि विनापि साक्षात्कारो जायमानो न स्यात्। तथा च प्रत्यक्षविरोधः, 'सहकार्यन्तरविधिः' इति सूत्रभाष्योक्तमननादिपाक्षिकत्वविरोधश्चेत्यत आह—**आविद्यमिति**[2]। प्रत्येकमभ्यसनीयमित्ये-तदाविद्यं विद्योदयपर्यन्तम्, विद्योदये सति न किञ्चिदभ्यसनीयमित्यर्थः।

ततश्च यस्य दृढनिश्चयप्रतिबन्धककल्मषराहित्येन सकृच्छ्रवणेनैव दृढं ब्रह्मनिश्चयो जायते, न तस्य श्रवणाभ्यासः। यस्य च निश्चिते ब्रह्मण्यसंभावनादिशंकाजनकमल्पं कल्मषम्, तस्य सकृन्मननमपेक्षितम्। कल्मषबाहुल्ये च तन्निवृत्त्यर्थं तदभ्यासः। यस्य च साक्षात्कारप्रतिबन्धकमल्पं कल्मषम्, तस्य सकृन्निदिध्यासनमपेक्षितम्। कल्मषबाहुल्ये च तन्निवृत्त्यर्थं तदभ्यासः। यस्य त्वसंभावनादिशंकाजनकमपि पापं नास्ति, तस्य श्रवणमात्रेणैव साक्षात्कारोदय इति मननादिप्रसक्तेरेवाभावात् तदभ्यासो दूरापास्त इति भावः।

**भाष्ये भवतु नामेत्यादिना** सगुणब्रह्मसाक्षात्कारस्थले प्रत्ययावृत्तिरङ्गीकृता। तत्र सोपाधिकस्य जीवस्य कथं सोपाधिकब्रह्मसाक्षात्कारः? अन्यात्मनोऽन्यायोग्यत्वादित्याशंक्य, प्रमाणसिद्धत्वात् सगुणब्रह्मसाक्षात्कारस्य न तत्र पर्यनुयोगावकाश इत्यभिप्रायेण व्याचष्ट इत्याह—**अहंग्रहेति**। प्रत्ययस्य ब्रह्माभेदे
P. 930 8 हेतुमाह—**स्वप्रकाशत्वादिति**। **ब्रह्मविषय इति त्विति**। **भाष्य** इत्यनुषज्यते। **न चेति**। ब्रह्मकर्मकस्य प्रत्ययस्य स्वप्रकाशब्रह्मात्मकप्रत्ययात्मत्वविरोधेऽपि, वृत्ति-

---

१. अत्र भाष्ये 'असकृदुपदेशस्तु आवृत्तेस्सूचकः' इति वाक्यम्। तस्याभिप्रायः ब्रह्मविद्याभरणे उक्तः—'सांगवेदाध्ययनादेवात्मप्रतीतेस्सिद्धतया पुनः श्रवणादिकर्तव्यताप्रतिपादनं हि तस्याः प्रतीतेरसंभावनादिना आपातत्वं सूचयत् असंभावनादिनिवृत्त्यर्थमावृत्तिं सूचयतीति भावः' इति।

२. एतेन कल्पतरौ 'श्रवणादि आविद्यं अभ्यसनीय'मिति पाठः आभोगसंमतः ऊह्यते। परिमलेऽपि तं पाठमनूद्य विशेष उक्तः—'प्रत्येकमाविद्यमभ्यसनीयमिति पाठे, आविद्यमिति एकैकाभ्यासस्य नावधिनिर्देशः। किं तु स्वस्वावान्तरफलपर्यन्तानां श्रवणादीनामभ्यासपरंपरायाः' इति।

मदन्तःकरणसंपिण्डितजीवात्मत्वाविरोधादिति भावः। **अध्याहारेति।** पूर्वत्र P. 630-9
जीववाचकपदाभावादिति भावः।

**अनुषङ्ग एवेति।** यद्यपि **प्रत्यय** इति प्रथमान्तं श्रुतम्। प्रकृते च षष्ठ्यन्तं अपेक्षितमित्यध्याहार एव। अत एव 'संयजत्रैरङ्गानी'त्यत्र गच्छन्तां इति पदस्याध्याहार एव समाश्रितः, तथापि पूर्वोपस्थितस्य **प्रत्यय**पदस्यैव विभक्तिविपरिणामेनान्वयमात्रादनुषङ्गव्यवहार इति भावः। **नन्विति।** ब्रह्मणो यत्प्रथनं व्यवहारस्तस्य **स्वरूपप्रकाशेनैव सिद्धेः** तदतिरिक्तप्रकाशवैफल्यान्न तदर्थमावृत्तिरित्यर्थः। अविद्यानिवर्तकत्वेन वृत्तिरूपस्साक्षात्कार आवश्यक इति परिहरति—**अत आहेति।**

मूलाविद्याया अनादितया उत्पत्त्ययोगादाह—**नाविद्येति।** **सर्वपूर्वोक्तपक्षाक्षेपेणेति**[2] P. 930-11 **टीकायां** पूर्वोक्तसकलपक्षाक्षेपेणेति न विवक्षितम्, भाष्यटीकयोस्तददर्शनात्। किं तु, सर्वं यत्पूर्वोक्तं सोपपत्तिकं वृत्तिसाक्षात्कारसाधनं तस्मिन्नपि पक्षे आवृत्त्याक्षेपेणेत्येवं विवक्षितमित्याह—**वृत्तिरूपेति।** **परोक्षप्रतीत्युत्पत्तेरेवेति।** तत्त्वमसीति वाक्यात् परोक्षप्रतीत्युत्पत्तेरेव हेतोः तस्य तदुत्पादकत्वाभावाभिधानानुपपत्तेरित्यर्थः। वाक्यस्य साक्षात्कारजननायोग्यतां परिहरन् आवृत्तिफलकतां शङ्काया दर्शयति—**केवलं वाक्यमिति।**

वाक्ययुक्त्योरुभयोरप्यावश्यकत्वे आवृत्तेरवर्जनीयत्वात् कथं भाष्ये तदानर्थक्योक्तिरित्यतस्तत्तात्पर्यं दर्शयन्नाह—**एवमपीति।** **इदानीमिति।** आवृत्तिसहकृतं वाक्यमिति पक्षे, युक्तिसहकृतं वाक्यमिति च पक्षे दूषिते, अस्य पक्षस्य शङ्का प्राप्तावसरेत्यर्थः। **मा च युक्तीति।** **न युक्तीत्यादिटीकोक्तरीत्या** वस्तु- P. 931-6 स्वरूपविशे(षे)षसाक्षात्कारे(च)तस्यासामर्थ्यादिति भावः।

**टीकायां स खल्वयमित्यादिर्विकल्पः** शङ्काननुगुण इत्याशङ्क्य, भावनासहकृतयोर्युक्तिवाक्ययोरपरोक्षप्रमाजनकत्वस्यैव शङ्कितत्वात्तद्दूषणपरो विक-

---

१. टीकायां 'तथा च प्रत्ययाऽऽवृत्तिरर्थवती'ति पाठः।

२. टीकायां कल्पतरौ च सर्वपूर्वोक्तपक्षाक्षेपेण' इति पाठ इति ज्ञायते।

P. 931 11 स्योऽपि तदनुगुण एवेत्याशयेनाह—यद्यपीत्यादिना। अभ्यासवैफल्य-मिति। व्यभिचारेण तत्कारणत्वाभावादिति भावः।

अत्राहेत्यादिभाष्येण श्रवणादेरावृत्त्यानर्थक्यं त्रेधा वर्णितम्—श्रवणाद्यावृत्तिसहकृतयोरपि युक्तिवाक्ययोरपरोक्षप्रमाजनकत्वासंभवात् सकृत्प्रवृत्ताभ्याम-परोक्षप्रमादर्शनेन व्यभिचारात्, भिन्नप्रत्ययवेदनीयनानांशराहित्याच्चेति। तत्र भवेदावृत्त्यानर्थक्यमिति भाष्येणैव प्रथमप्रकारोपि निराक्रियते, भाष्यान्तरस्य तन्निराकरणपरस्यादर्शनादित्यभिप्रेत्य, तदभिप्रायं दर्शयति टीकाकार इत्याह—अपरोक्षेत्यादिना।

ब्रह्मसाक्षात्कारो न प्रमा भावनाजन्यत्वात्, विनष्टकामिनीसाक्षात्कारवदित्य-नुमानं आशंक्य परोक्षविषयत्वमुपाधिमाह—भावनाभुव इति। उक्तोपाधेः साधन-

P. 932-6 व्यापकत्वमाशंक्य निराकरोति—नन्वित्यादिना। परमार्थेति। यस्मिन्नधि-करणे यस्याभाव इष्यते तदधिकरणसत्तातिरिक्तसत्ताकत्वं तस्य पामार्थिकत्वम्। तथा च भूतलसत्तातिरिक्तसत्ताकत्वं तस्य [कुम्भस्य] पारमार्थिकत्वम्। तथा च भूतलसत्तातिरिक्तसत्ताकस्य कुंभस्याभावो भूतलात् भिद्यत इत्यर्थः। अत एवेति। प्रतियोगिसमानस्वभावत्वादेवाभावस्य तद्ग्राहकमेव प्रमाणं तद्ग्राहकमिति वैशेषिकादयो मन्यन्ते इत्यर्थः।

P. 933-8 इहेति। उपाधीनां सत्यकामादिगुणानां ब्रह्मण्येव कल्पिततया तत्सत्ता-तिरिक्तसत्ताराहित्येन पारमार्थिकत्वाभावात् तत्प्रतियोगिकोऽभावो न ब्रह्मणि पारमार्थिकोऽस्तीत्यर्थः। नचैवमभावबोधकानां 'अथात आदेशो नेति नेती'त्या-दीनां निर्विषयत्वापातः, परैरभावाधिकरणत्वेनाभ्युपगतस्य केवलस्वरूपस्यैव तद्विष-यत्वात्। अत एव 'न ह्येतस्मादिति नेत्यन्यत्परमस्ती'ति निषेधप्रतीतिविषयाद-न्यस्य सत्त्वं वारयति श्रुतिरिति भावः।

---

१. कल्पतरौ 'यद्यप्यभ्यासवत्यौ शास्त्रयुक्ती' इति पाठः।

२. अत्र कल्पतरौ 'पूर्वं वादिना' इति पाठः। आक्षेप्ता, इत्याक्षेपान्तरं आह न च सकृत्प्रयुक्तेत्यादिग्रन्थेन। इत्यन्वयः। कल्पतरौ इतिपदं समाप्तिद्योतकम्। टीकायां—पूर्वपक्षावसाने 'पद्मरागादिवदित्याह—अपि चानेकांशेति' इति पाठः। सिद्धान्ते 'सा च नानुमितभावितवह्निसाक्षात्कारवत्' इति पाठः।

३. कल्पतरौ 'अपरोक्षप्रमोत्पत्त्यर्थावृत्त्याक्षेपः' 'भावनाभुवः' 'अनुमितभावनाकाले' 'परमार्थः सन् अधिकरणात् भिद्यते' 'न च भावान्तरप्रसंगः' इति पाठः।

**न चैवमिति।** ब्रह्मण्यतिरिक्ताभावनिषेधे स एव निषेधोऽतिरिक्तः स्यात्। तस्यापि निषेधे सोऽप्यतिरिक्त इत्येवमनवस्थेत्यर्थः। पराभ्युपगत-दृष्टान्तेन परिहरति—**यथेति।** ननु यद्युपाधिविरहोऽपि स्वरूपमेव, तर्हि शास्त्र-श्रवणाद्यनन्तरभाविनः साक्षात्कारस्य संसारकालीनसाक्षात्कारविषयादनतिरिक्त-विषयत्वे तद्वैयर्थ्यमिति शङ्कते—**नन्वेवमपीति।** शास्त्रीयज्ञानस्य वैयर्थ्यं किं प्रयोजनाभावात्? किं वा स्वरूपविषयत्वाविशेषे शास्त्रीयज्ञानसाध्यं प्रयोजनं संसारकालीनादपि किमिति न भवतीति? नाद्य इत्याह—**षड्जादयो हीत्यादिना।** **अभिभवमिति।** अविद्याद्युपाधिकृताखण्डानन्दाद्यभिभवमित्यर्थः। P. 932 8

न द्वितीय इत्याह—**एतदुक्तमित्यादिना। येनाकारेणेति।** 'ब्रह्मा-न्यत् जीवोऽन्य' इत्येवमन्यत्वाकारेण प्रवृत्तस्य जीवारोपस्य योऽयमन्यत्व-विपरीत आकारः अभिन्नस्वरूपं तद्विषयकप्रमाणवृत्तीत्यर्थः। तथा च पूर्वो-त्तरयोः ज्ञानयोः स्वरूपविषयकत्वाविशेषेऽपि, शास्त्राधीनज्ञानस्य समारोपितभेद-निषेधात्मना स्वरूपावगाहित्वात् तस्यैव भेदभ्रमनिवर्तकत्वं, न संसारकालीन-स्येति भावः। P. 933 6

**तन्त्रीकण्ठोद्भवा इति।** वीणागाने तन्त्र्युद्भवाः, गात्रगाने **कण्ठो-द्भवाश्चेत्यर्थः।** अयोमय्यस्तन्तुसदृशाः शलाकाः तन्त्र्यः। **ग्राम इति।** षड्जादीनां केषांचित् स्वराणां समूहः षड्जग्रामः। तथा, मध्यमादीनां समूहो मध्यमग्रामो, गान्धारादीनां समूहो गान्धारग्राम इत्येवं त्रिविधो ग्राम इत्यर्थः। **मूर्च्छना त्विति।** तेषां ग्रामभावमापन्नानां स्वराणां आरोहावरोहरूपा प्रति-ग्रामं सप्तविधा एकविंशतिप्रभेदा मूर्च्छनेत्यर्थः। **प्राग्भवीयेत्यादिटीकया** सकृच्छ्रवणेन साक्षात्कुर्वतोऽपि जन्मान्तरीयश्रवणाद्यावृत्तिसद्भाव उच्यते। तत्र हेतुमाह—**सर्वथैवेति। नियतत्वादिति।** कार्यनैयत्याभावे उपायत्वस्यैव भङ्गादिति भावः। P. 933-7

**न हि दृष्टे इत्यादिभाष्यं टीकाकारेण** कैमुतिकन्यायप्रदर्शनपरत्वेन व्याख्यायते। तत्र **यथाश्रुतभाष्ये** तत्त्वमस्यादिवाक्यजन्यसम्यग्ज्ञान एव

---

१. कल्पतरौ 'समारोपितोपाधिकृतं' इति। 'येनाकारेणारोपः' इति च पाठः। टीकायां 'मननोत्तरकालंनिदिध्यासनाभ्यासजन्मनि' इति पाठः।

श्रवणाद्यावृत्तिसापेक्षत्वकथनावगमात् तदर्थत्यागे किं कारणमित्यतः तद्दर्शयन्नाह—

P. 933-8 **पूर्वपक्षावसरे हीत्यादिना**। किं तत्त्वमस्यादिवाक्यजन्ये परोक्षनिश्चय एव श्रवणाद्यावृत्तिसापेक्षत्वं **भाष्यार्थ** इति ब्रवीषि? किं वा तद्वाक्याधीने अपरोक्षनिश्चये? नाद्यः, शङ्कानुवादाननुगुणत्वापत्तेरित्याशयेनाह—**पूर्वपक्षावसरे हीत्यादिना**। न द्वितीयः, दृश्यन्ते हीति हिशब्दबलादावृत्त्यपेक्षायाः सिद्धत्वमवगम्यते। न च तत्त्वमस्यादिवाक्याधीने साक्षात्कारे श्रवणाद्यावृत्त्यपेक्षा सिद्धा। इदानीमेव साध्यमानत्वात्। अतः श्रवणाद्यावृत्तिसापेक्षत्वेन संप्रतिपन्नं परोक्षार्थं वाक्यं दृष्टान्तत्वेन मनसि निधायैव भाष्यं प्रवृत्तमित्याह—**परोक्षार्थेति**।

एवं च सति भाष्यमिदमनुपपन्नम्। तत्त्वमस्यादिवाक्यात् साक्षात्कारोत्पत्तिप्रकारस्य भाष्यकारेणैव[1] **यस्तु सकृदुक्तमेव ब्रह्मात्मत्वं साक्षात्कर्तुं न शक्नोतीत्यारभ्य दर्शितं इत्यन्तेन भाष्येणो**पपादितत्वात् इत्याह—**तदसङ्गतमिवेति**। **यः प्रथमश्रवण इति**। ततश्च तत्त्वमस्यादिवाक्यस्य प्रथमश्रवणे सत्यपि तदर्थनिश्चये अभवतोऽपरोक्षत्वस्य पुनः श्रवणेन तदर्थस्य मननेन निदिध्यासनेन वाक्यस्यावृत्तौ सत्यां अनन्तरं भवने नास्ति प्रमाणमिति भावः।

P. 934-1 **तस्येति**[2]। आवृत्तेरतिशयहेतुत्वस्य दृष्टत्वादिति भावः। **टीकोक्ते**ऽर्थे भाष्यं योजयति—**वाक्याभ्यासाभ्यामिति**। वाक्यं च, तदभ्यासश्च, ताभ्यामित्यर्थः।

अत्र **परिमलकृतः** वाक्यस्य सार्वत्रिकस्वारसिकशाब्दज्ञानोत्पत्तावप्यावृत्त्यपेक्षायां, क्वचित् शब्दादपरोक्षज्ञानोत्पत्तौ तदपेक्षास्तीति किमु वक्तव्यमित्येवं **टीकोक्त**कैमुतिकन्यायव्याख्यानमयुक्तम्, वाक्यादाहत्य साक्षात्कारोत्पत्तेरनभ्युपगमात्। टीकाननुगुणं चेदं व्याख्यानम्। **यत्र परोक्षेत्यादिटीकया** शाब्दज्ञानेऽपि वाक्यश्रवणावृत्त्या व्यक्तितारतम्यं दृश्यते। निदिध्यासनरूपप्रत्ययप्रवाहे साक्षात्कारोत्पत्त्यर्थं प्रवृत्ते व्यक्तितारतम्यं प्रति कैव कथेत्येवं ध्यानावृत्तावेव कैमुतिकन्यायप्रदर्शनात्।

---

१. कल्पतरौ 'स्वेनैव' इत्यस्य भाष्यकारेणैव इत्यर्थ इत्युक्तं भवति अनेन। परिमले 'टीकाकृतैव' इति व्याख्यातम्।

२. कल्पतरौ 'परिहारं भाष्यार्थ'मिति पाठः। 'वाक्याभ्यासानभ्यासाभ्या'मित्यस्य स्थाने, 'वाक्याभ्यासाभ्या'मिति पाठान्तरं, तदेवाभोगसंमतम्।

ननु अनूदितवाक्यश्रवणावृत्तिवैयर्थ्यशंकापरिहारार्थभाष्यतात्पर्यकथनार्थस्य टीकाग्रन्थस्य ध्यानावृत्तिसमर्थनपरत्वं अयुक्तमिति, स्वरसतः प्रतीयमानस्तदर्थ आचार्यैस्त्यक्तः[1] इति चेत्, तर्हि, **नहि दृष्ट** इत्यादिभाष्यस्वारस्यमवलंब्य लोकदृष्ट्यनुसारेण तत्त्वमस्यादिवाक्यजन्यशाब्दज्ञानार्थमेवावृत्त्यपेक्षा समर्थ्यतां, गहनवाक्येषु वाक्यार्थबोधार्थं आवृत्त्यपेक्षाया लोकदृष्टत्वात् ।

ननु [अत्राहेति] पूर्वपक्षे **आवृत्तावपि तदनुपपत्तेरिति** भाष्येण वाक्यमावर्त्यमानमपि नापरोक्षज्ञानं जनयतीति या शंका कृता, सैवेह सिद्धान्ते **ननूक्तं सकृच्छ्रुतं चेदित्यादि**भाष्येणानुदिता, अतस्तत्परिहारभाष्यस्यावृत्तेरपरोक्षज्ञानोपयोग एव तात्पर्यं वर्णनीयम्, न शाब्दज्ञान इति चेन्न। पूर्वपक्षगतशंकाग्रन्थस्याप्यावृत्तेः शाब्दज्ञानानुपयोगपरतायामेव स्वारस्यात् ।

ननु **अत्राहेत्यादि**भाष्ये, **यस्तु प्रत्यय आत्मभूतं परं ब्रह्म समर्पयति तत्र किमर्था आवृत्तिरिति** ब्रह्माभिन्ने प्रत्यये आवृत्त्यानर्थक्यमुच्यमानं कथं शाब्दज्ञाने योजयितुं शक्यमिति चेन्न। तत्रापि जीवस्यात्मभूतं इत्येव तदर्थः। प्रत्ययेन प्रत्येतुरपि बुद्धौ सन्निधापितत्वात् । तथा च, विरुद्धांशप्रहाण्या जीवैक्येन बोध्यं ब्रह्म निर्विशेषमिति तद्विषयायां वृत्तावावृत्तिसाध्यविशेषविषयत्वासंभवात् आवृत्तिरनर्थिकेति प्रथममाक्षेपः । आवृत्त्यभावे तद्विषयवृत्तिरेव नोदियादिति ततः सिद्धान्तिनः शङ्का । सकृच्छ्रुतान्नोदेति चेदावृत्तावपि नोदियादिति पुनराक्षेपः । ततः शाब्दज्ञानार्थमावृत्त्यनपेक्षायामपि साक्षात्कारार्थं तदपेक्षास्त्विति शङ्कातत्परिहारयोः प्रपञ्चः ।

**अपि चानेकांशोपेत** इत्यादिपूर्वपक्षावसानभाष्यं **आत्मभूत**मिति विशेषणसामर्थ्यलभ्ययुक्तिविवरणार्थमिति पूर्वपक्षग्रन्थसामञ्जस्यात्। **न हि दृष्टेऽनुपपन्नं नामेत्यादि**सिद्धान्तग्रन्थसामञ्जस्याच्च। किञ्च, **अपि च तत्त्वमसीत्येतद्वाक्यमित्यादि**समनन्तरभाष्यग्रन्थस्य शाब्दज्ञानार्थमेवावृत्त्यपेक्षाप्रतिपादकत्वं स्पष्टं दृश्यत इति तदनुरोधेन कृत्स्नमपि **भाष्यं** पूर्वोक्तरीत्यैव

---

१. अत्र परिमलेऽपि ग्रन्थः कियानपि त्रुटित इति ज्ञायते। एतदाभोगानुसारेण वा समीचीनकोशान्तरानुसारेण वा परिमलग्रन्थः शोधनीयः। लेखकप्रमादेन सर्वेष्वपि ग्रन्थेषु बहवः अशुद्धभागाः प्राप्ताः। किं कुर्मः ।

योजयितुं युक्तम् । एवं अक्लिष्टे भाष्यार्थे व्यक्तेऽप्यर्थान्तरवर्णनमेवमपि योजयितुं शक्यमिति प्रौढोक्तिमात्रं द्रष्टव्यमित्याहुः ।

तच्चिन्त्यम् । अत्राहेत्यादिपूर्वपक्षगतशंकाग्रन्थस्याप्यावृत्तेः शाब्दज्ञानानुपयोगपरतायामेव स्वारस्यादिति यदुक्तं, तदेवासिद्धम् । इह हि सिद्धान्तार्थस्य निरुपाधिकब्रह्मविषयत्वमाक्षेप्यम् । सिद्धान्तार्थश्च, दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्तीत्यादिभाष्यानुरोधेन साक्षात्कारफलकप्रत्ययावृत्तिः । नचैवंरूपस्य सिद्धान्तार्थस्य परोक्षे शाब्दज्ञाने प्रसक्तिरस्ति, सिद्धान्तिना प्रागुपपादितो वा, येनाक्षिप्येत । भवतु नामेत्यादिभाष्यशैलीपर्यालोचनायामपि प्रागुक्तस्य सिद्धान्तस्य क्वचिदङ्गीकारेण क्वचिदाक्षेप इत्येवं दृश्यते ।

अङ्गीकारश्च सगुणब्रह्मसाक्षात्कारफलेषु श्रवणादिषु । तत्र सोपाधिकस्य ब्रह्मणश्चिन्मात्रत्वाभावेन तत्साक्षात्कारस्य स्वरूपातिरिक्तस्य श्रवणादिसाध्यतया श्रवणाद्यावृत्तिसाध्यस्य साक्षात्काररूपस्यातिशयस्य संभवादित्येवं भाष्योपन्यस्तस्य हेतोस्सत्त्वात् । यस्तु परब्रह्मविषय इत्युत्तरभाष्ये ब्रह्मणः परत्वेन विशेषणाच्च । ततश्च, तत्प्रतिपक्षत्वेन निर्विशेषब्रह्मसाक्षात्कारोपयोगिश्रवणादिष्वेवावृत्तिराक्षेप्तुं युक्ता, न शाब्दज्ञानमात्रे ।

एवं, पूर्वत्र साध्यफलेषु इति साध्यफलकत्वनिर्देशात् असाध्यफलकत्वमुत्तरत्र वक्तव्यम् । तथा पूर्ववाक्ये आवृत्त्यधिकरणत्वेन निर्दिष्टस्य प्रत्ययेष्वित्यस्यैव किमर्था आवृत्तिरित्युत्तरवाक्येऽप्यन्वयो युक्तः । तथा च, यस्तु परब्रह्मविषयव्यवहारजनकः साक्षात्कारः स्वाभिन्नं नित्यशुद्धादिस्वभावं ब्रह्म समर्पयति । तत्र तस्मिन् विषये श्रवणादिषु किमर्था आवृत्तिरिति भाष्यार्थः संपद्यते ।

एवं, तेष्वावृत्तिसाध्यस्यातिशयस्य संभवादित्यनेन प्रकृते साध्यस्यातिशयस्यासंभवः सूचितः । स चातिशयस्साक्षात्कार एव सगुणस्थले ग्राह्यः । प्रत्यभ्यासं विषयगतातिशयसद्भावे मानाभावात् । तथा च, निर्विशेषस्थलेऽपि तादृशस्यातिशयस्यासंभवः, साक्षात्कारस्य सतः साध्यत्वासंभवेन, साध्यस्य सतः साक्षात्कारत्वासंभवेन वा वक्तव्य इति तत्परत्वमेवोत्तरभाष्यस्य युक्तम् । न शाब्दज्ञानमात्रे आवृत्त्याक्षेपपरत्वम् ।

तथा, यस्त्वित्यादिभाष्ये आत्मभूतमिति विशेषणादपि स्वरूपसाक्षात्कार एव तत्र विवक्षितः, आत्मशब्देन प्रत्ययशब्दोपस्थापितस्य प्रत्ययस्यैवाभिधानात्। प्रत्ययेन प्रत्येतुर्जीवस्य कथञ्चिदुपस्थापितत्वेऽपि, तस्य व्यवहितस्यात्मशब्देन परामर्शायोगात्। निर्विशेषस्य ब्रह्मणः प्रत्येतव्यभावायोगात्। ब्रह्मणो जीवाभेदकथनवैफल्याच्च।

न च विरुद्धांशप्रहाण्या जीवैक्येन बोध्यं निर्विशेषमिति तद्विषयायां वृत्तावावृत्तिसाध्यस्य विशेषविषयत्वलक्षणस्यातिशयस्यासंभवं दर्शयितुं तत्कथनमिति वाच्यम्। जीवे ब्रह्मैक्यबोधकं हि तत्त्वमस्यादिवाक्यम्। तथा च भाष्यं 'तत्त्वमसीत्येतद्वाक्यं त्वंपदार्थस्य तत्पदार्थभावमाचष्ट इति। तथा च तज्जन्यप्रत्ययस्य जीवैक्येन ब्रह्मसमर्पकत्वं भाष्ये उक्तमिति व्याख्यायां भाष्यकाराणामपि सम्यगेवाचातुर्यप्रकटनात्। पूर्ववाक्ये विशेषविषयत्वस्यातिशयत्वेनानुक्ततया, तस्येह ग्रहणायोगात्।

अपि चानेकांशोपेत इत्युत्तरभाष्येणैव ब्रह्मप्रत्ययस्य विशेषविषयत्वनिराकरणाच्च। न च तद्भाष्यमात्मभूतमिति विशेषणसामर्थ्यलभ्ययुक्तिविवरणार्थमिति वाच्यम्। अपि चेत्यादिना युक्त्यन्तरत्वावगमात्। प्रथमं शाब्दज्ञानार्थं आवृत्तिरनर्थिकेत्याक्षेपः। तदनन्तरं शाब्दज्ञानार्थमावृत्त्यनपेक्षायामपि साक्षात्कारार्थं तदपेक्षास्त्विति शङ्का। ततस्तदर्थमपि नावृत्त्यपेक्षेति परिहारः। पुनश्च प्रथमाक्षेपहेतुविवरणमिति सम्यगेव भाष्यसमर्थनात्।

एवमत्रोच्यत इत्यादिपरिहारग्रन्थेऽपि, भवेदावृत्त्यानर्थक्यं तं प्रति, यः 'तत्त्वमसी'ति सकृदुक्तमेवं ब्रह्मात्मकत्वं अनुभवितुं शक्नुयात्। यस्तु न शक्नोति तं प्रत्युपयुज्यत एवावृत्तिरिति साक्षात्कारार्थमेवावृत्तिसमर्थनादाक्षेपोऽपि साक्षात्कारविषय एवेति निश्चीयते। अनुभवशब्दस्य साक्षात्कार एव प्राचुर्येण प्रयोगात्।

तथा च भाष्यम्—'न विशेषमनुभवति' 'विशेषानुभवश्चाविद्याया निवर्तकः' 'न च सकृत्प्रयुक्ते शास्त्रयुक्ती कस्यचिदप्यनुभवं नोत्पादयत इति शक्यते नियन्तु'मिति च। अन्ते च तस्मात् सर्वदुःखविनिर्मुक्तैकचैतन्यात्मकोऽहमित्येष आत्मानुभवः' इत्यारभ्य 'यस्य तु नैषोऽनुभवो द्रागिव जायते तं प्रत्यनुभवार्थ एवावृत्त्यभ्युपगम' इति साक्षा-

त्कारार्थत्वमेवावृत्तेः उपसंहृतम् । नहि शाब्दज्ञानार्थमावृत्तावाक्षिप्तायां साक्षात्कारार्थमावृत्तिसमर्थनोपसंहारौ युज्येते ।

**अपि च तत्त्वमसीत्यादिभाष्यं** तु न केवलं तत्त्वमस्यादिवाक्यस्थले साक्षात्कारार्थमेव [अपि तु परोक्षज्ञानार्थमपि आवृत्तिं साधयति] । तस्मात् पूर्वोत्तरभाष्यपर्यालोचनया आवृत्त्याक्षेपसमाधानयोः साक्षात्[कारार्थत्वमिति] **टीकोक्त एव भाष्यार्थ इति** तदनुसारेणैवाचार्यैः व्याख्यातमिति, व्याख्यातृपुरातनत्वनूतनत्वकृतं वैषम्यमुत्सृज्य युक्तिमात्रमेव पुरस्कृत्य विद्वद्भिर्वीतमत्सरैः विभावनीयम् ।

**दृश्यन्ते हीत्यादिभाष्यस्य** परोक्षार्थकवाक्यविषयत्वात् तदर्थानुवादके **तदेवमित्यादिटीकावाक्ये वाक्यपदं** परोक्षार्थकवाक्यपरमेव युक्तमित्याशयेनाह—**परोक्षार्थस्येत्यर्थ इति** । ननु दृश्यन्ते हीत्यादिभाष्येण वाक्यजन्ये परोक्षज्ञाने आवृत्त्यपेक्षाया उक्तत्वात् **अपि चेत्यादिभाष्येण** विशिष्य तत्कथनं व्यर्थं इत्याशंक्य, तेन **भाष्येण** क्वचित् गहनार्थवाक्यस्थले परोक्षज्ञाने आवृत्तेरतिशयकरत्वप्रदर्शनेन, 'तत्त्वमसी'त्यादिवाक्यार्थसाक्षात्कारे आवृत्तेरावश्यकत्वं समर्थितम् । **अपि चेत्यादिभाष्येण** तु 'तत्त्वमसि'वाक्यजन्यपरोक्षज्ञानेऽप्यावृत्तेः आवश्यकत्वमुच्यत इति न वैयर्थ्यमित्याशयेनाह—[**वाक्यार्थेति**] **परोक्षेति** ।

(P. 934-3)

**वाक्यमात्रात्** । श्रवणादिसंस्कृतबुद्ध्यसहकृतात् । तत्सहकृतं तु वाक्यं साक्षात्काराय कल्पते । बुद्धिजन्यस्यापि साक्षात्कारस्य वाक्यप्रयोज्यत्वाभ्युपगमात् । अत एव 'शास्त्रदृष्ट्या तूपदेश' इति सूत्रमिति भावः । **असंसृष्टनानात्वपदार्थकमिति टीकायां संसृष्टपदं** भावपरम् । तथा च, **संसृष्टत्वं च नानात्वं** चेति द्वन्द्वः । ततो, **न विद्येते संसृष्टनानात्वे ययोरिति बहुव्रीहिः** । पुनश्च, **असंसृष्टनानात्वौ पदार्थौ यस्य वाक्यार्थस्य ब्रह्मण** इति बहुव्रीहिरिति, मनसि निधाय फलितमर्थमाह—**संसृष्टत्वमिति** ।

---

१. टीकायां पूर्ववाक्ये 'न पदार्थज्ञानपूर्वके स्वार्थज्ञाने' इति, 'विलंबिततमपदार्थज्ञानमिति' इति च पाठः । उपरि 'निरंशोऽपि अहमित्यपरोक्षोऽपि' इति, 'अनागमफलत्वादस्याः' इति च पाठः ।

**टीकायां—न वा गृह्येतेत्युक्तमिति। आतश्चावृत्तिरनर्थिकेत्यादिना,** यत्र व्यक्ताव्यक्तत्वे संभवतः, तत्र प्रत्ययावृत्तिरर्थवती। ते च विषयस्य सामान्यविशेषरूपनानांशयोगित्वे, परोक्षत्वापरोक्षत्वयोगित्वे वा संभवतः। तदुभयमपि निरंशे नित्यापरोक्षे च ब्रह्मणि न संभवतीति ग्रहणमग्रहणं वा स्यात्। न तु व्यक्ताव्यक्तत्वे इत्युक्तमित्यर्थः। अविद्याबलादुभयमपि ब्रह्मणि संभवतीति **परिहार**भाष्याभिप्रायमाह **टीकायां—निरंशोऽपीति।** P. 935-3

आत्मनि शाब्दज्ञानव्यतिरेकेण साक्षात्कारस्याप्यभ्युपगमात् **तत्किमित्यादि**शङ्कानुपपत्तिरित्यतस्तात्पर्यमाह—**येयमिति**। श्रवणाद्यावृत्त्या पदार्थविवेकपूर्वकं वाक्यजनितेत्यर्थः। ततश्च वाक्यजन्यप्रतीतावेव श्रवणाद्यभ्यासस्य चरितार्थत्वा**दतिरिक्ता प्रतीतिः आत्मनि न स्यात्**। तथा च साक्षात्काराभ्युपगमविरोधः। अन्यस्याभावादिति भावः।

ननु शब्दजन्यैव प्रतीतिः साक्षात्कारोऽस्तु। तथा च नाभ्युपगमविरोध इत्येकदेशी पृच्छति—**कुत इति**। इन्द्रियादेरेव साक्षात्कारोपपत्तौ शब्दस्यापि तज्जनकत्वकल्पने नास्ति प्रमाणमित्युत्तर**मनागमफलत्वादिति टीका**व्याख्यानेनाह—**अस्या इति**। श्रवणाद्यभ्यासस्य (सत्त्वात्) [साक्षात्कारपूर्वरूपत्वात्] नाभ्युपगमविरोध इति परिहृतं **टीकायामत आहेति**। तत्र शङ्कते—**नन्विति**। भाष्ये **प्रतिपत्तिशब्देन साक्षात्कारो** विवक्षित इति परिहरति—**नेत्याहेति। टीकायां साक्षात्कारशब्दो भावप्रधानः**। तथा च **साक्षात्कारत्ववत्याः साक्षात्काररूपाया** इत्यर्थः। P. 935-4

तथा च वक्ष्यति **टीकाकारो 'वाक्यार्थप्रतीतिः साक्षात्कारस्य पूर्वरूपं' इति**। वाक्यार्थप्रतीतेः साक्षात्कारं प्रति, **पूर्वरूपमेवेति भाष्योक्तं**, जनकत्वं परंपरयेति दर्शयितु**मेतदुक्तमित्यादिटीका**। तत्र वाक्यार्थप्रतीतेः

---

१. भाष्ये 'पदार्थज्ञानपूर्वकत्वाद्वाक्यार्थज्ञानस्य' इति पाठः। भाष्ये 'अजममरम्' इति श्रुतिः न बृहदारण्यकगता, अपितु श्रुत्यन्तरमिति बोध्यम्।

२. कल्पतरौ 'वाक्यजन्या प्रतीतिः इयमेव स्यात् किमात्मनि' इति पाठः।

३. साक्षात्कारशब्दः विषयिताविशेषपरः। अत एव साक्षात्कारिप्रत्ययः इति प्राचीनग्रन्थेषु प्रत्यक्षज्ञानस्य व्यवहारः। तथा च भावप्रधानत्वमनावश्यकमिति बोध्यम्।

साक्षात्कारं प्रति साक्षाज्जनकत्वासंभवहेतुं दर्शयन्, भावनाशब्दस्तत्सहकृत-बुद्धिपर इति व्याचष्टे—**शाब्दधियोऽनिन्द्रियजत्वादिति ।** P. 935-4

**टीकायां दुःखित्वादिप्रत्ययस्य** तात्त्विकत्वं, किं सर्वदोत्पद्यमानत्वात्? अथवा दुःखित्वादीनामात्मधर्मत्वेन तत्प्रत्ययस्य बाधासंभवात्? उत तेषामात्मानन्यत्वेन बाधासंभवात्? इति विकल्प्य, प्रथमद्वितीयौ निराकृत्य, तृतीयेऽपि दुःखित्वादीनां आत्मधर्मत्वेनाभ्युपगम्यमानानां किमात्मना तादात्म्यम्? किं वा भेद एवेति? विकल्प्य, प्रथमं, **नहि नित्यशुद्धबुद्धेत्यादिटीकया** निराकृत्य, द्वितीयेऽपि, किमत्यन्तभेदः? किं वा भेदाभेदाविति विकल्पयोराद्यं कल्पं निराकर्तुं—**नापि तद्धर्मा इत्यादिवाक्यम् ।** तत्र तदभिन्नानामेव तद्धर्मत्वमिति कल्पान्तरनिराकरणमप्यनुमतमित्याह—**अभिन्नानामित्यपि द्रष्टव्यमिति ।**

(ननु)दुःखित्वादीनामात्मनो भेदे अभेदे च तद्धर्मत्वं न संभवतीत्युक्त्या भेदाभेदयोरुभयोरप्यनङ्गीकारः सूचितः। दुःखादिर्नात्मधर्मः, तद्भिन्नत्वात्, यो यद्भिन्नः स न तद्धर्मः। यथा गौरश्वस्येत्यनुमाने तदसमवेतत्वमुपाधिरित्याशयेन शङ्कते—**नन्विति ।** एव(मिति)मपि उपाधिव्यतिरेकेण समवेतत्वेन साध्यमानस्साध्यव्यतिरेकः तद्धर्मत्वरूपो न वास्तवस्सिध्यति। तन्निर्वाहकस्य सम्बन्धस्यावास्तवत्वात् इति परिहरति—**तर्हीति ।** द्वितीयं कल्पमाशंक्य **टीकया** परिहरति—**नन्वित्यादिना ।** P. 935-8

**ननु भाष्ये चैतन्याद्बहिरिति** बहिष्ट्वमत्यन्तभेदो निर्दिष्टः। स च न संभवति। सिद्धान्ते वास्तवभेदानभ्युपगमादित्यत आह—**बहिष्ट्वमवास्तवमिति ।** तत्रोपपत्तिं सूचयितुं **चैतन्यस्य वास्तवत्वमुक्तम् ।** वास्तवत्वं हि सर्वत्र सर्वदा सर्वरूपस्य सत एव संभवतीति, न तस्मिन् कल्पितस्य वास्तवं बहिष्ट्वं संभवतीत्यर्थः। ननु **नित्यशुद्धेत्यादिटीकया** दुःखत्वादीनामात्मतादात्म्यस्य निरस्तत्वात्, पुनस्तन्निरसनं व्यर्थमित्याशङ्क्य, पूर्वमुपजनापायधर्मतया कल्पितत्वेन हेतुना धर्मधर्मिभावनिर्वाहकं सम्बन्धरूपं तादात्म्यं निरस्तम्, इदानीं तु व्यावृत्तत्वेन हेतुना दुःखित्वादिप्रत्ययस्य निर्वाहकमात्मानन्यत्वलक्षणं तादात्म्यं चतुर्थकल्पतया प्रागुपक्षिप्तं निराक्रियत इति न वैयर्थ्यमित्याशयेनाह—**कल्पितत्वेन हीत्यादिना ।** P. 933-1

**संपदादीति।** तथा च 'द्रष्टव्य' इत्यादीनामात्मा ब्रह्मसंपत्त्या द्रष्टव्य इत्यादिः अर्थ इति भावः। सिद्धान्ते विध्यनभ्युपगमादाह—**आत्मेस्तुतीति।** 'द्रष्टव्य' इति [1]श्रुत्या दर्शनं पुरुषप्रवृत्त्यतिशयविषयत्वं प्राप्यत इत्यर्थः। **तत्रापीत्यादिभाष्येण** 'तत्त्वमसि'वाक्यर्थानुभवात् प्रच्युतौ मुक्तिविरोधं दर्शयित्वा, प्रत्यगभिन्नं ब्रह्मैव तत्त्वमसिवाक्यार्थ इत्युक्तम्। तत्रोपपत्तिं दर्शयन् प्रधानविरोधित्वं दृष्टान्ते दर्शयति **टीकायां—येन चेत्यादिना। तदापत्तावपीति।** मुक्तिविरोधापत्तावपीत्यर्थः। समन्वयसूत्रोक्तयुक्त्युपजीवनेन प्रवृत्तत्वादियं युक्तिरभ्युच्चय इत्याह—**समन्वयेति। तादृशब्रह्मज्ञानादेवेति।** सिद्धरूपप्रत्यगभिन्नब्रह्मज्ञानादेवेत्यर्थः। P. 933-3

'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः।' इति श्रुतिं व्याचष्टे—**शास्त्रत इति।** 'यस्तद्वेद यत्स वेद स मयैतदुक्त' इति श्रुतिं व्याचष्टे—**यत् स रैक्व इति।** स रैक्वो यद्वेद तत्प्राणतत्त्वं यो वेदेत्यन्वयं सिद्धवत्कृत्य, 'सर्वं तदभिसमेति, यत्किञ्च प्रजाः साधु कुर्वन्ती'त्यस्यानुषङ्गमाश्रित्य तदर्थमाह—**सर्वं धर्मफलं इति।** P. 937-1

पूर्ववाक्यार्थमुक्तं स्पष्टीकुर्वन् 'स मयैतदुक्त' इत्यंशं व्याचष्टे—**स एवमित्यादिना।** इत्थमित्यनेन निर्दिष्टप्रकारं दर्शयन् पूर्ववाक्येन सम्बन्धं दर्शयति—**रैक्वमिवेति।** 'कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थे'त्येवं प्रकारेण यथोक्तमहिमशाली रैक्वनामको मयोक्त इति, कथं सयुग्वा रैक्व इति पृच्छन्तं पश्चाद्गामिनं हंसं प्रति पुरोगामिहंसो वक्तीत्यर्थः। 'अनुम एतां भगवो देवतां शाधि यां देवतामुपास्स' इति श्रुतिं व्याचष्टे—**भो रैक्वेति।** P. 937-3

**भाष्ये तथा ह्युद्गीथविज्ञानं प्रस्तुत्य** 'आदित्य उद्गीथ' इत्येवमादित्यमात्रोपासन'मेतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसी'त्येकपुत्रदोषेणापोद्य, 'रश्मींस्त्वं पर्यावर्तया'दिति वाक्येन रश्मीनादित्यं च त्वं भेदेनोपास्स्वेति

---

१. कल्पतरौ 'विषयत्वमापाद्यते' इति पाठः। टीकायां 'न च तत्त्वमसिवाक्यविषया'दिति पाठः।

२. कल्पतरौ 'एवं रैक्वादन्योऽपि' इति, 'कमात्थेति' इति, 'येषां नः' इति च पाठः।

रश्मिबहुत्वविज्ञानं बहुपुत्रतायै विदधत् सिद्धवत् प्रत्ययावृत्तिं दर्शयतीत्युक्तम् । तत्र 'रश्मींस्त्वं पर्यावर्तया'दिति श्रुतिं व्याचष्टे—हे पुत्रेति । P. 937 4

'कोषीतकिः पुत्रमुवाचे'ति पूर्ववाक्यानुरोधेन हे पुत्रेत्युक्तम् । मध्यमपुरुषैकवचनत्वे हेतुमाह—त्वंयोगादिति । त्वमिति युष्मच्छब्दयोगादित्यर्थः । विहितोपास्तिफलप्रदर्शनाय 'बहवो वै ते भविष्यन्ती'ति श्रुत्यर्थमपि दर्शयति—बहवः पुत्रा इति । 'यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यती'ति श्रुतिं व्याचष्टे—तत्तत्रेति । 'किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक' इति श्रुतेरर्थमाह—येषामिति । स्मृतौ रत्यादीनां भेदमाह—आसक्तीति । निष्ठा व्यापारः । P. 937-7

॥ इति आवृत्त्यधिकरणम् ॥

---

## ॥ अथ आत्मत्वोपासनाधिकरणम् ॥

### सू०॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

P. 938-1 कस्य साक्षाकारायेति । नित्यापरोक्षो जीवः, नित्यपरोक्षश्च जीवभिन्न ईश्वरः । अतः कस्यापि साक्षात्कारः श्रवणाद्यावृत्तिसाध्यो नास्तीत्यर्थः । यद्यपीत्यादिटीकाया गतार्थत्वाशङ्कापर्यवसानं दर्शयन्नाह—नन्विति । किं जीवस्य ईश्वरभावः पारमार्थिकः ? उत कल्पितः ? नाद्य इत्याह—तासामेवेति । विरुद्धार्थत्वादिति । न्यायविरुद्धार्थत्वादित्यर्थः । (विरुद्धधर्मसंसर्गः पारमार्थिको यदि हेतुः, तदानीमसिद्धिः । विरुद्धसंसर्गमात्रं तु रज्जुतद्विवर्तसर्पादौ व्यभिचारीति द्वितीयं कल्पमाशंक्य निराकरोति—अनादीति ।)

---

१. कल्पतरौ न दृश्यते प्रतीकोऽयम् ।

२. कल्पतरौ उपचरितविषयत्वमाशंक्यते' इति पाठः । टीकायां 'प्रकाशात्मन' इति स्थाने 'प्रत्यगात्मन' इति पाठान्तरम् ।

३. कुण्डलितग्रन्थसागत्यं न भाति । अनादीति प्रतीकश्च मूले न दृश्यते । इति ज्ञेयम् । कियानपि आभोगग्रन्थस्त्रुटित इति च भाति ।

उक्तस्यार्थस्य पुनः कथनमात्रं पौनरुक्त्यावहम्। सोपपत्तिकतया पुनः कथनं तु तस्यार्थस्य निरपवादतया अवश्यादर्तव्यत्वं ज्ञापयतीत्याशयेनाह— **अर्थस्येति**। [1]**न च मानान्तरेत्यादिटीकाया** विविच्य तात्पर्यं दर्शयति— **न च मानान्तरेत्यादिना**। औपाधिकमप्यंशभेदमादाय ग्रहणाग्रहणे दृष्टान्तेन उपपादयति—**यथा हीति**। **यद्यद्वैते न तोषोऽस्तीत्यर्धं** प्रतीकत आदाय व्याचष्टे—**यद्यद्वैत इतीति**। [सत्त्वप्रसंगादिति] ध्वंसात्पूर्वमित्यर्थः। ततश्च कदाचिदपि द्वैतस्य सत्त्वाभ्युपगमे तस्य त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वायोगादद्वैतं न स्यादिति भावः। **अप्रसक्तेति**। अविद्यमानसत्ताकेत्यर्थः। P. 938-7

॥ इति आत्मत्वोपासनाधिकरणम् ॥

---

## ॥ अथ प्रतीकाधिकरणम् ॥

### सू०॥ न प्रतीके न हि सः ॥ ४ ॥

**भाष्ये मनआदिष्वहंमतिः कर्तव्येत्यत्र, ब्रह्मण आत्मत्वेन प्रसिद्धत्वादिति** हेतुरुक्तः। तस्य कथं यथोक्तसाध्यसाधकत्वमित्याशंक्य, तत्सूचितमनुमानं दर्शयितुं, **यथा हीत्यादिटीकेति** पूर्वाधिकरणेन सङ्गतिं दर्शयन्नाह— **पूर्वोक्तमित्यनेन**। ब्रह्मप्रतीकत्वेन श्रुतं मनआदिकमहंदृष्टिभाक् भवितुमर्हति, ब्रह्मदृष्टिभाक्त्वात्, यत् ब्रह्मदृष्टिभाक् तदहंदृष्टिभाक्, यथा ब्रह्म। न चाप्रयोजकत्वम्। जीवब्रह्मणोरभेदेन ब्रह्मदृष्टिभाक्षु तदभिन्नजीवदृष्टिभाक्त्वावश्यंभावात्। अन्यथा अभेदस्यैव भङ्गापत्तेः, इत्यनुमानं सूचितम्। P. 939-1

ननु ब्रह्मदृष्टिभाक्षु आकाशादिदृष्ट्यभावेऽपि, यथा आकाशस्य ब्रह्माभेदो न विरुध्यते, एवं जीवदृष्ट्यभावेऽपि जीवे ब्रह्माभेदो न विरोत्स्यत इत्याशयेन शङ्कते—**नन्विति**। आकाशादेर्ब्रह्मव्यतिरेकेणाभाव एव, न तु ब्रह्माभेद इति वैधर्म्येण परिहरति—**अत आहेत्यादिना**। प्रतिबिम्बजीवानभ्युपगमादाह— P. 939-6

---

[1] टीकायां 'अपि च प्रतीकोपदेशे सकृद्वचनं भवेत्। असकृद्वचनं तु प्रतीयते। भेददर्शननिन्दा च।' इति, 'नाल्पत्वमपि, दवीयः' इति च पाठभेदः। 'परमार्थतस्तु न विभ्रमः' इति पाठः।

P. 939-7 **अविद्योपाधिका इति** । दृष्टान्तभागस्य व्यवहितत्वात् योजनां दर्शयति—**यथेति** । मनः अहमित्येवं द्रष्टव्यं इत्यर्थः । मनसि प्रतीके ब्रह्माभिन्नजीवदृष्टिः कर्तव्येत्येव प्रागुक्तत्वादिति द्रष्टव्यम् ।

केषुचित्कोशेषु पुनर्यथाशब्दपाठं दृष्ट्वा तस्य निर्वाहमाह—**अविद्येति** । अविद्यादर्पणा इत्यादिवाक्यादुपरितन इत्यर्थः । मनआदिकमहंदृष्टिभाक्, ब्रह्माभिन्नत्वात्, ब्रह्मवत्, इत्येवं प्रकारान्तरेण पूर्वपक्षं दर्शयितुमुपपन्नं चेत्यादिटीकेत्याह—**एवं तावदिति** । पक्षद्वयमपि भाष्यानुमतमित्याह—**द्वावेताविति** । **प्रतीकानामिति** । प्रतीकानां ब्रह्मविकारत्वात् ब्रह्मात्मत्वे सत्यात्मत्वोपपत्तेरिति चेत्यर्थः ।

ननु अस्मिन्पक्षे मनःप्रभृतिषु ब्रह्मदृष्टेरकर्तव्यत्वेन तद्विधायकत्वाभावात् 'मनो ब्रह्मेत्युपासीते'त्यादीनामानर्थक्यम्, तत्त्वमसीत्यादिवाक्यावष्टम्भेन ब्रह्मण्येवाहंमतेः कर्तुं शक्यत्वात् ब्रह्माभिन्नतद्विकारपर्यन्तधावनं च निरर्थकमित्याशङ्क्य, 'मनो ब्रह्मेत्युपासीते'त्यादाविति**शब्दो** यस्मादर्थः । ततश्च, यस्मान्मनआदिकं ब्रह्मैव तस्मादुपासीतेत्युक्ते, अर्थादात्मत्वेनोपासीत, इति पर्यवस्यति । तथा च न तेषां वाक्यानामानर्थक्यं, तत्त्वमस्यादिवाक्यावष्टम्भेन प्रवर्तमाननित्यशुद्धबुद्धादिस्वरूपब्रह्माहंमतिनिर्वाहकत्वात् ब्रह्मविकारमनआद्यहंमतेः सार्थक्यमपीत्याशयेनाह—**प्रतीकेष्विति** । 'मनो ब्रह्मे'त्यादिभिरुपदेशैः प्रतीकेषु ब्रह्मात्मतामापादितेष्वित्यर्थः । **अत एवेति** । यतः स्वरूपेण लये मनआदीनां, न संभवति अहंग्रहालम्बनत्वम्, अत एव, रूपान्तरापत्तिरेव लय इत्यभिप्रायमुद्भाव्य निराकरिष्यतीत्यर्थः । ततश्च, मनआदीनां रूपान्तरेण सतामहंग्रहालम्बनत्वमुपपन्नमिति भावः ।

P. 939-12

जीवब्रह्मणोरभेदेन हेतुना ब्रह्मदृष्टिभाक्षु मनआदिषु जीवदृष्ट्यापादनं किं ब्रह्मदृष्टिविधायकेषु वाक्येषु जीवदृष्टिविधानादपि संभवति ? तदभावेऽप्यर्थाद्वा संभवतीति विकल्पयति—**अत्र मनआदाविति** । निरुपाधिकब्रह्मदृष्टिविधायकस्य न सोपाधिकब्रह्मदृष्टिविधायकत्वमिति दर्शयति—**मनःप्रभृतीनामिति** ।

P. 940-2

---

१. कल्पतरौ 'जीवेनात्मत्वेनोपास्यते' इति पाठः ।

२. 'जीवस्य ब्रह्माभेदयुक्त्या' इति पाठः ।

किं सजातीये क्वचिच्छ्रवणेनोपोद्बलितात् सामर्थ्यान्मनआदिष्वहंमतिः कल्प्यते? सामर्थ्यमात्राद्वा? नाद्यः इत्याह—**यदि श्रुतेरिति**। **तर्हि ब्रह्मणीवेति**। P. 940-4 तथा च क्वचि'दहं ब्रह्मास्मी'ति श्रुतत्वात् 'तत्त्वमसी'त्यादिस्थलेऽपि ब्रह्मण्यहंमतिर्युक्ता न मनआदौ। तज्जातीये क्वचिदप्यहंमतेः अश्रवणादित्यर्थः।

द्वितीयमनुवदति—**यत्त्वर्थादिति**। अत्रापि कल्पे, किं ब्रह्माभेदमात्रमहंमतिकल्पकं? ब्रह्मस्वरूपत्वं वा? आद्यं दूषयति—**तत्रातिप्रसङ्गमाहेति**। द्वितीये किं शुद्धजीवस्वरूपदृष्टिः कल्प्या? किं वा विशिष्टजीवदृष्टिः? नाद्य इत्याह—**जीवस्येति**। न द्वितीय इत्याह—**अहंदृष्टिस्त्विति**। निरुपाधिके जीवस्वरूपे ब्रह्माभेदो न सोपाधिकजीवदृष्टिकल्पकः। तस्य ततो भेदात्। सोपाधिके तु ब्रह्माभेद एव नास्तीति कथं कल्पनेत्यर्थः।

एवमार्थिकत्वमहंमतेरभ्युपेत्य दूषणमुक्तम्। तदेव तु नास्तीति दर्शयन् आह—**आर्थिकी हीति**। **तस्माद्यस्येत्यादिटीकयैव** द्वितीयः कल्पो निरस्त P. 940-7 इति दर्शयति—**ब्रह्मविकारत्वादिति(-त्वेनेति)**। **न च सर्वस्येति टीकायां चशब्दः किमर्थक** इत्याशयेनाह—**य आदीति**। यस्मिन् वाक्ये श्रुतं ब्रह्मसामानाधिकरण्यमन्यथा न निर्वहति, तत्रैव वाधायां सामानाधिकरण्याश्रयणेन प्रविलयार्थत्वम्। प्रकृते च मनआदिषु ब्रह्मदृष्टिविधानार्थत्वेन सामानाधिकरण्यस्य निर्वाहान्न प्रविलयार्थत्वमित्याह—**सर्वं खल्वित्यादौ हीति**। मनोग्रहणस्य सर्वोपलक्षकत्वपक्षे, 'आदित्यो ब्रह्मे'त्यादेरानर्थक्यं **टीकोक्त**मुपपादयति—**यदि चेति**।

**आत्मत्वकल्पनस्य** आत्मत्वेनाकलनस्य आत्मत्वेनोपासनस्येत्यर्थः। प्रतीकानां कल्पितेन रूपेण प्रविलयेऽपि तात्त्विकेन रूपेण सत्त्वान्नोपासनविरोध इति पूर्वपक्षाभिप्रायं **नन्वित्यादिना** आशङ्क्य **भाष्येण** परिहरतीत्याह—**यत्स्वयमिति**। **टीकायां अनवच्छिन्नब्रह्मात्मतया हेतुना भवत्यवच्छिन्नस्याभाव** इत्यर्थः। जीवस्येव प्रतीकानामपि कल्पितेन रूपेण लयेऽपि, P. 941-1

१. टीकायां 'तन्मात्रात्मतयैव तत् प्रतिपत्तव्यम्' इति पाठः।
२. प्रतीकोऽयं मूले न दृश्यते।
३. कल्पतरौ 'यत्' इति नास्ति। शोधनीयम्।

बाधकाभावस्योक्तत्वात् भाष्यायोगमाशङ्क्य, वैषम्यं दर्शयितुमिह हीत्यादि-
P. 941-2 टीकेत्याह—जीवलयादिति ।

प्रतीकानां कल्पितरूपप्रविलयेऽपि रूपान्तरेणोपास्यत्वसंभवान्न प्राधान्य-विरोध इत्याशङ्क्य, परिहर्तुं किमत इत्यादिटीका। तदभिप्रायमाह—प्रधानं त्विति । टीकायां—न च तदुच्छेदे इति। श्रुतमनआदिस्वरूपोच्छेदे तदीयतात्त्विकरूपस्य ब्रह्मतया विधेयस्य ब्रह्मोपासनस्याप्यनुपपत्तिः । ब्रह्मणि ब्रह्मोपासनविध्ययोगात् । न च वाक्यमसति बाधके अर्थान्तरपरं युक्तमिति
P. 941-4 भावः । अपि चेत्यस्य भाष्यप्रतीकान्तर्भावभ्रमं वारयति—न च ब्रह्मण इति । तर्ह्यस्मिन् कल्पे भाष्यकारेण पूर्वं दूषणानभिधानात् कथं समुच्चयार्थश्चकार इत्याशंक्य, न प्रतीकेष्वात्ममतिं बध्नीयादिति सिद्धान्तप्रतिज्ञाभाष्यभावतया वर्णितेन पूर्वोक्तातिप्रसङ्गेन समुच्चय इति टीकाकाराशय इत्याह—पूर्वोक्तेति । आकाशादेरप्युपासाप्रसङ्ग इति पूर्वोक्तेन दूषणेन जीवगतस्य कर्तृत्वादेरनिराकृतत्वेन तादृशस्य ब्रह्माभेद एव नास्तीति कथं तद्बलादहंग्रह इति दूषणस्य समुच्चय इत्यर्थः ।

P. 941-7 तदेकवाक्यतामात्रेण नात्मदृष्टिकल्पकत्वमित्यतः पूरयति—कर्तृत्वादीति । न च मनःप्रभृतिषु त्रिविधपरिच्छेदरहितब्रह्मोपासनसिद्ध्यर्थं कर्तृत्वादिबाधेन जीवस्य ब्रह्मभावोपि ज्ञातव्य एवेति वाच्यम्। कर्तृत्वादिबाधे प्रधानभूतोपासनाया एव विलोपप्रसङ्गेन तदविरोधिरूपेणैव ब्रह्मण उपास्यतया कर्तृत्वादिबाधाप्रसङ्गादिति भावः ।

॥ इति [२]प्रतीकाधिकरणम् ॥

---

१. कल्पतरौ 'जीवलयात् मनआदिलयस्य' इति पाठः ।

२. अस्मिन्नधिकरणे भाष्ये 'न हि स उपासकः प्रतीकानि व्यस्तानि आत्मत्वेनाकलयेत्' इति वाक्येन 'सकलमिदमहं च वासुदेवः' इति समस्तानि आत्मत्वेनाकलयेदपि कदाचिदुपासकः सकलस्याभावतात्पर्येण इति सूच्यते। अयं विषयः अनन्तराधिकरणेऽपि 'परिमितविकारोपादानं च व्यर्थं' इति वाक्येन भाष्ये स्फुटीक्रियते ।

## ॥ अथ ब्रह्मदृष्ट्यधिकरणम् ॥

### सू०॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

नामादिषु श्रुतिसामर्थ्यसिद्धब्रह्माभेदजीवदृष्टेरिव श्रुतिसामर्थ्यसिद्धफलप्रदत्व-ब्रह्मदृष्टेरप्यतिप्रसङ्गेन प्रतिक्षेप इति दृष्टान्तसंगत्या पूर्वपक्ष इत्याह—**पूर्वत्रेति**। P. 941-9
जीवब्रह्माभेदबोधकश्रुतिवशात् ब्रह्मदृष्टिभाक्षु जीवदृष्टेरप्युपपत्तेः करणे सतीत्यर्थः। आदित्यादिदृष्टयो ब्रह्मणि कर्तव्या इत्यत्र हेत्वन्तरं दर्शयितुं **प्राधान्येनेत्यादि-टीका**। तदुपपादयति—**प्रयोजनवत्त्वेनेति**। शाब्दान्वये वास्तवं प्राधान्यम-प्रयोजकमिति दर्शयितुं **टीकेत्याह**—**यथेत्यादिना**। दृष्टान्तान्तरकथनस्य प्रयोजनमाह—**ऐहिकफलमित्यादिना**।

नन्वर्थतः प्रधानेऽन्यस्मिन् विद्यमानेऽपि, यच्छब्दतः प्रधानं, तस्यैव प्रकृते उदाहर्तव्यत्वात् कथं **टीकायां** व्रीह्याद्युदाहरणं? अङ्गे फलाभावेन तत्र फलप्रदातृत्वेन वास्तवप्राधान्ययोगिन्या देवताया अभावादित्यत आह—**अत्रा-पीति**। व्रीहिप्रोक्षणादिरूपाङ्गानुष्ठानाराधितः परमेश्वर एव प्रसन्नस्सन् व्रीह्या-दिभिः पुरोडाशनिर्वर्तनद्वारा फलकरणयागादिसिद्धिहेतुरित्यर्थः। **तस्यैवेति**। P. 942-6
सर्वत्र फलप्रदानसामर्थ्यं तस्यैव। देवताप्रीतिद्रव्यसंस्कारादिकं तु द्वार-मिति भावः।

**सञ्चिकीर्ष्यत इति प्रतीयते**। संस्क्रियत इति प्रतीयते, संस्कार्यत्वेन प्रतीयत इत्यर्थः। **अतिथ्याद्युपासन इवेति**। **आदिपदेन** पान्थशुश्रूषादिकं गृह्यते। शास्त्रसमधिगम्यत्वादस्यार्थस्य नातिप्रसङ्गशङ्कावकाश इति भावः। **यदि स्वार्थोऽस्य विवक्षितस्स्यादिति टीकायाः** पूर्ववाक्येनान्वयं दर्शयन् विपर्यये पर्यवसानमाह—**यदि स्वार्थ इति**। **अस्य** ब्रह्मशब्दस्य। विपक्षे दण्डं दर्शयितुं **तथाचेत्यादिटीकेत्याह**—**यदीति**। **ज्ञानपरमिति टीकायां ज्ञानपदं** P. 943-2

---

१. कल्पतरौ 'तदिहेत्यादिना विमृशति। तत्र 'फलाय कल्पत इत्यभिवदती' त्यन्तं' इति, 'अत्रापि इत्यभिवदति शास्त्रं' इति, 'लौकिकन्यायस्यानुगृहीतृत्वं' इति च पाठः।

P. 943-4 सामर्थ्यात् ब्रह्मज्ञानपरमेवेति दर्शयन्नर्थद्वयपरत्वे प्रतीतिं प्रमाणमाह—**ब्रह्मेति ज्ञानमिति** ।

प्रतीतिस्थले तद्विषयं आदाय सामानाधिकरण्यनिर्वाहस्य लोके प्रसिद्धत्वान्न विरोध इति वैषम्यं दर्शयितुं **टीकायां यथा गौरिति** दृष्टान्तो दर्शितः । तदभिप्रायमाह—**भ्रान्तो हीति** । दृष्टान्तटीकासूचितमेवार्थं शङ्कापरिहाराभ्यां स्पष्टयति—**यद्यपीत्यादिना** । आदित्यं ब्रह्मप्रतीतिविषयं कृत्वा उपासीतेति—प्रतीतिविषयत्वमपेक्ष्यैव ब्रह्मप्रतीतेरादित्यादिसामानाधिकरण्यमिति गौणमेवेदं न मुख्यम्, तथा च, ब्रह्मशब्दस्यापि कथञ्चित्सामानाधिकरण्यं गौणमाश्रयितुं शक्यमिति को विशेष इति शङ्कार्थः । निरूढत्वानिरूढत्वाभ्यां विशेष इति समाधानार्थः ।

॥ इति ब्रह्मदृष्ट्यधिकरणम् ॥

---

## ॥ अथ आदित्यादिमत्यधिकरणम् ॥

### सू०॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

P. 944-3 **भाष्य एवेति** । द्विप्रकारपूर्वपक्षोपपादकभाष्य एव विशदा इत्यर्थः । कर्मात्मकत्वादुद्गीथादीनामिति भाष्ये कर्मशब्दो न कर्मकारकपरः, आदित्यादीनामप्युपास्तौ कर्मत्वेन विशेषाभावात् । किं तु, क्रियापर इति दर्शयितुं तथा निर्दिशन् शङ्कते—**भाष्य इति** । प्रतीकोपासनेषु प्रतीकासाधारणस्वरूपनिगरणेन धर्म्यन्तरासाधारणस्वरूपानिगरणेन धर्म्यन्तरासाधारणस्वरूपस्यैवारोपान्नाधिष्ठानस्वरूपविशेषप्रयुक्तं कार्यमिति दृष्टान्तमुखेन प्रतिपादयति—**शुक्त्यादाविति** । **तत्प्रयुक्तेति** । शुक्त्यादिप्रयुक्तेत्यर्थः । **आदित्यादिषु पुन**रित्यादिटीकायामप्यादित्याद्यसाधारणस्वरूपाभिभवो- विवक्षित इति दर्शयन्नाह—

P. 944-6 **आदित्यादिष्विति** ।

---

१. कल्पतरौ 'ब्रह्मेति ज्ञानं ब्रह्मेति शब्द इति वा' इति पाठः संशोध्यः ।

२. कल्पतरौ 'गीत्यात्मकत्वेन' इति पाठः ।

तथा चेयमेवेत्यादिभाष्ये 'इयमेवर्गग्निस्सामे'त्यत्र, पृथिव्यामृग्दृष्टिः, अग्नौ च सामदृष्टिः, न त्वग्नौ पृथिवीदृष्टिस्साम्नि चाग्निदृष्टिः इत्यत्र, 'तदेतदेतस्यामृच्यध्यूढं सामे'त्युत्तरवाक्ये ऋक्छब्देन पृथिव्यास्सामशब्देनाग्नेश्च निर्देशो हेतुरुक्तः। तस्य कथमुक्तार्थसाधकत्वमित्याशंक्य, लोके आरोप्यवाचकस्यैवाधिष्ठाने उपचारदर्शनात् पृथिव्यग्न्यो ऋक्सामदृष्ट्यध्यास एव ऋक्सामशब्दप्रयोगो घटते। अन्यथा ऋक्सामयोरेव पृथिव्यग्निशब्दप्रयोगो भवेदित्येवं **टीकायामत एवेत्यादिना** स हेतुर्विवृतः।

एवमपि कथमन्यवाक्यगतनिर्देशबलादन्यवाक्यार्थनिर्णयः, 'तदेतदेतस्या' मिति वाक्ये वा पृथिव्यग्न्योरेवर्कसामशब्दप्रयोगो, न वैपरीत्येन इत्यत्र किं नियामकमित्यतस्तात्पर्यं दर्शयन्नवतारयति—**इयमेवेत्यादिना**। **ततः प्रसिद्धयोरिति**। ततश्च, लोकप्रसिद्धस्य पृथिव्यग्न्याधाराधेयभावस्यैव हेतुत्वौचित्यात् 'तदेतदेतस्या'मिति वाक्ये ऋक्सामशब्दाभ्यामेव पृथिव्यग्नी निर्दिश्येते। न त्वेतस्यामध्यूढमित्याभ्यां शब्दाभ्यां पृथिव्यग्निपराभ्यामृक्सामे इति भावः। एवं श्रुत्यर्थमुपवर्ण्य तदर्थपरत्वं **टीकाया** दर्शयन्नाह—**अत्र हेतुवाक्य इति**। **अग्न्यादेरित्यादिशब्देन** भाष्योदाहरणगतस्य राजशब्दस्य ग्रहणम्।

P. 944-4

अत्र **टीकायामा**दित्यादीनां संस्कार्यत्वं किं सामर्थ्यादाश्रीयते? 'यदेव विद्यये'ति वचनबलाद्वेति विकल्प्य, प्रथमं **यद्युद्गीथादीत्यादिना** निराकृत्य, **न ह्यादित्यादिभिरित्यादिना** द्वितीयं निराकृतम्। तत्र तत्र वैयर्थ्ये कथमकार्यत्व[मसंस्कार्यत्वं] (मसाध्यत्वं)हेतुरित्याशंक्य, प्रकृते उत्पत्त्यादीनामसंभवात्संस्कार एव वक्तव्यः। स च न संभवतीति दर्शयन्नाह—**भूतभावीति**। **वस्तु संस्कार्यमिष्यत इति**। यद्यप्यस्मिन् **वार्तिकश्लोके द्रव्यमित्येव पाठः**, तथापि भूतभाव्युपयोगवत्त्वमात्रं संस्कार्यत्वे तन्त्रम्। न तु द्रव्यत्वमपि, अप्रयोजकत्वात्। तथा च क्रियारूपस्यापि उद्गीथस्य संस्कार्यत्वं संभवतीति मनसि निधाय द्रव्यशब्दस्थाने वस्तुशब्दः प्रयुक्त इति द्रष्टव्यम्।

P. 944-12

---

१. कल्पतरौ 'वह्न्यादे'रिति वर्तते।

२. भाष्ये सिद्धान्तोपक्रमे 'अपूर्वसंनिकर्षात्' इत्यस्य उद्गीथादीनामपूर्वसन्निकर्षात् क्रतुसाधकत्वेन क्रत्वपूर्वजनकत्वादित्यर्थः। भाष्य एव उपरि 'प्रकृतापूर्वसन्निकर्षेणैव' इत्यस्य प्रकृतापूर्वसन्निकृष्ट(प्रकृतापूर्वजनक) सामादिकर्मकत्वेनैव। इत्यर्थः।

**कर्मस्विति** टीकासूचितं 'यदेव विद्यये'ति वचनविषयत्वहेतुं प्रकटयति— **उद्गीथादीनां चेति**। **कार्येष्विति** टीकासूचितं संस्कार्यत्वहेतुं प्रकटयति— P. 945 1 **प्रकृतेति**। ननु 'तन्निर्धारणानियम' इत्यधिकरणे उद्गीथाद्युपासनस्य प्रधानकर्मत्वं साधितम्। तत्कथमिह संस्कारकर्मत्वोक्तिरित्याशङ्कां निराकर्तुमाह— **अतिशयाय संस्क्रियेरन्निति**। वीर्यवत्तरत्वलक्षणमतिशयं साधयितुं प्रवृत्तस्योपासनस्य वीर्यवत्क्रतुसम्बन्धित्वमावश्यकमित्येतावता संस्कारत्वोक्तिः। न गुणकर्मत्वेनेति भावः।

'लोकेषु पञ्चविध'मित्यादीनां स्वतन्त्रफलकत्वं किं कर्मसमृद्धिफलकत्वे प्रमाणाभावात्? किं वा प्रबलेन वचनेन स्वतन्त्रफलकत्वबोधनात्? नाद्य इत्याह—**लोकेष्विति**। तथा च, वीर्यवत्क्रत्वङ्गसामसम्बन्धेन 'यदेव विद्यये'ति वाक्यप्रवृत्तौ कर्मसमृद्धिफलकत्वसिद्धिरिति भावः। न द्वितीय इत्याह—**न चेति**। असति वीर्यवत्क्रत्वङ्गसम्बन्धे 'यदेवे'ति वाक्याप्रवृत्तौ 'कल्पत' इत्यादिवाक्यं फलाय कल्पिष्यते। सति तु तस्मिन्, तेनैव वचनेन कर्मसमृद्धिफलेऽवगते, कमिपदरहितं वाक्यमर्थवाद इत्यर्थः।

'लोकेषु पञ्चविध'मिति वाक्ये गुणफलसम्बन्धविधिमुपपादयन् **टीकाभि**-P. 945 6 **प्रायमाह—इह तावदित्यादिना**। इह 'लोकेषु पञ्चविध'मिति वाक्ये। **पञ्चविधत्वमात्रं गुणः** 'कल्पन्त' इत्यादिवाक्यबोधितफलोद्देशेनो**पादीयते**। विधीयत इत्यर्थः। फलं साधयितुं प्रवृत्तस्य गुणस्य नान्तरीयकतया आश्रयीभूतोपासनानिर्वर्तकत्वमपीत्याशयेन **उक्तमुपासनायेति**। ननु 'लोके'ष्वित्यपि श्रवणादुद्दिश्यगुणद्वयविधौ वाक्यभेद इत्याशङ्कां निराकर्तुं **मात्रग्रहणम्**। 'पृथिवी हिंकार' इत्यादिवाक्यैरेव सामावयवेषु लोकदृष्टेः प्राप्तत्वात् तदंशे अनुवाद इति भावः।

गुणफलविधिरेवेत्यत्र **हेतुस्समस्तस्येत्यादिः**। 'समस्तस्य खलु साम्न उपासनं साध्वि'ति वाक्यान्तरेण साधुदृष्ट्या सकलसामोपासनस्य विहित-P 945-7 त्वादित्यर्थः। **फलं लोकादीति**। 'कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्चे'ति

---

१. कल्पतरौ 'उपादीयते' इति पाठः। 'उपाधीयते' इति तु अशुद्धम्। 'एवं सति' इत्यस्य 'एवं च' इति पाठान्तरम्। 'लोकविषया' इति शोधनीयम्।

परलोकगमनसमये ये ऊर्ध्वा लोकाः पृथिव्यादयस्त एव पुनरागमनसमये आवृत्ता-लोकास्ते अस्मै भोगं संपादयितुं कल्पन्त इति **लोकाः फलमि**त्यर्थः । आदि-शब्देन 'वर्षति हास्मा' इत्यादिकं गृह्यते । **अक्रियात्वेनेति** । क्रतूद्देशप्रवृत्त- P. 945-8 कृतिसाध्यत्वलक्षणक्रियात्वाभावेनेत्यर्थः । ततश्च **लोकादिभिरित्यादिशब्द-गृहीतस्य** वृष्ट्युपमन्त्रणादेः क्रियात्वात् कथं तत्साम्यं पाञ्चविध्यस्येति शङ्काया नावकाश इति ध्येयम् ।

फलितमाह—**अत इति** । यतो 'लोकेषु पञ्चविध'मिति वाक्ये क्रत्वन-ङ्गस्य सिद्धरूपस्य पाञ्चविध्यस्यैव विधानेन 'यदेव विद्यये'ति वाक्याप्रवृत्त्या स्वतन्त्रफलकत्वम्, अतः स्वतन्त्रं फलं साधयितुं प्रवृत्तस्य पाञ्चविध्यस्य क्रत्वङ्ग-द्वारेणैव फलसाधकत्वमिति नियमकारणाभावाल्लोकदृष्टिपरिगृहीतसामोपासना-श्रयेणेव सामदृष्टिपरिगृहीतलोकोपासनाश्रयेणापि फलसाधनत्वसंभवाल्लोकादिष्वपि सामाध्याससंभव इत्यर्थः ।

यद्यपि 'समस्तस्य खल्वि'त्यादिवाक्यविहितं सामोपासनमेव प्रकृतत्वादा-श्रय इति न लोकादिषु सामाध्याससंभवः । तथापि तस्मिन् वाक्ये साधुत्वगुणा-पेक्षया साम्नः प्राधान्येनोपास्यत्वावगमेऽपि, 'पृथिवी हिंकारो' 'लोकेषु पञ्चविधं' इत्यादिवाक्यशैलीमनुसृत्य साधुत्वविशिष्टपाञ्चभक्तिकसामदृष्टिपरिगृहीतलोको-पासनस्याश्रयत्वेऽपि न दोष इति भावः ।

न क्रत्वङ्गत्वं संस्कार्यत्वे तन्त्रम् । 'शकृत्संप्रविध्यति' 'लोहितं निर-स्यती'त्यादावनङ्गस्यापि संस्कारदर्शनात् । किं तु क्रतुसम्बन्धित्वमात्रम् । ततश्च, क्रत्वङ्गसामगतपाञ्चविध्यस्यापि क्रतुसम्बन्धित्वेन संस्कार्यत्वात्, क्रियाविष्टवेषेण साध्यत्वाच्च, 'यदेव विद्यये'ति वाक्यप्रवृत्त्या कर्मसमृद्धिफलकत्वात् पाञ्चविध्य-विशिष्टस्य साम्न एव लोकादिदृष्टिसंस्कार्यत्वम् । न पाञ्चविध्यविशिष्टसामदृष्ट्या लोकादेः संस्कार्यत्वम् । तत्र संस्कारस्य वैयर्थ्यादिति **परिहारटीका**भिप्रायमाह—
**गुणात्फलसिद्धिरित्यादिना** । P. 945-9

---

१. टीकायां—' विद्यायाः क उपयोगः' 'मा भूत् सर्वदा फलोत्पादः, मा च भूत् प्रकृतकर्मानिवेशिनो यत्किंचित्क्रियानिवेशिनः फलोत्पादः' 'तदेतदेतस्यामृच्यध्यूढं' इति पाठः ।

अथ वेत्यादिटीका स्पष्टत्वान्न व्याख्याता। तस्या अयमर्थः। भाष्यस्वारस्ये पर्यालोच्यमाने स्वतन्त्रफलकत्वमेव शङ्काबीजं दृश्यते, न सिद्धरूपत्वमित्यस्वरसादाह—अथ वेति। प्रकारान्तरेणेति। व्याख्यायत इति शेषः। तदेवाह—चोदयतीति। कर्माङ्गभूता हीति। कर्मानङ्गोद्गीथादिसम्बन्धे उपासनायाः कर्मसमृद्धिफलकत्वायोगादिति भावः। इत्यादिषूपासनास्विति। इत्यादिषु वाक्येषु विहितासूपासनास्वित्यर्थः। न च 'समस्तस्य खल्वि'त्यादिवाक्यविहितोपासनाश्रयणेन पाञ्चविध्यगुणमात्रमत्र फलाय विधीयत इति वाच्यम्। 'उपासीते'ति विधिश्रवणेन, 'लोकेष्वि'ति गुणान्तरश्रवणेन, फलश्रवणेन च, तत्रैव विशिष्टोपासनविधौ 'समस्तस्ये'ति वाक्यस्य साधुत्वगुणमात्रविधिपरत्वात् इति भावः।

श्रूयत इति। तथा च सन्निधावश्रवणात् प्रदेशान्तरस्थेन 'यदेव विद्यये'ति वाक्येन कर्मसमृद्धिफलकल्पनासन्निधौ फलान्तराश्रवणादेवेति भावः। नावश्यमेषितव्य इति। क्रतोर्बहिरपि साम्नः सत्त्वादित्यर्थः। भाष्ये—अधिकृताधिकारादिति सिद्धवद्धेतुनिर्देशानुपपत्तिरित्यत आह—अयमर्थ इति। लोकाद्युपासनानां स्वतन्त्रफलकत्वेऽप्यङ्गभूतसामभक्तिसम्बन्धः कर्मसमृद्धिफलकादित्योपासनया तुल्यः। सामभक्तीनां कर्माङ्गत्वश्रुतेरित्यर्थः।

ननु बहिरपि क्रतोरस्ति सामभक्तिरिति न नियमेनाङ्गावबन्ध इत्यत आह—तत्र यदिति। क्रत्वनन्तर्गतसामभक्तिपरिग्रहे तदनुष्ठापकत्वमप्यस्य विधेः कल्पनीयम्। क्रतुविधिप्रयुक्तसामभक्तिपरिग्रहे तु, नास्य विधेः तत्प्रयोजकत्वमिति, प्रयुक्तिलाघवानुरोधेन नैयत्यमङ्गावबन्धस्येत्यर्थः। एवं च भाष्येऽधि-

---

१. अथवेत्यादिः महान् टीकाग्रन्थभागः 'फलात्मकत्वाच्चादित्यादीनामिति' इति प्रतीकधारणात् पूर्वतनः टीकाकोशे न दृश्यते। स त्रुटितः। स च कल्पतरौ अव्याख्यातोऽपि आभोगे व्याख्यायते। परं तु व्याख्येयो मूलभागः न दृश्यते। भामतीलेखकेन प्रमादात् त्यक्तः। परिमलेऽपि 'यथाभाष्यस्वारस्यं लोकादिमात्रफलकत्वमभ्युपगम्य टीकायां उद्गीथोपासनावैषम्येण या शङ्का, यश्च प्रयुक्तिलाघवेन तत्परिहारः, तदुभयं स्पष्टत्वात् न व्याख्यातम्' इति ग्रन्थेन स टीकाग्रन्थः सूचितः। अहो टीकायामपि ग्रन्थत्रुटिः।

२. 'अङ्गानङ्गसमभिव्याहारवतीनां विद्यानां अङ्गेष्वनङ्गदृष्टिरूपत्वे प्रधानकर्मप्रयुक्ताङ्गाश्रयत्वात् स्वतन्त्रफलानामपि तासां पृथक् प्रयुक्तिर्न कल्प्येति प्रयुक्तिलाघवं

कृताधिकारादिति ल्यब्लोपे पञ्चमी। ततश्च अधिकृताधिकारलाभं पर्यालोच्य गोदोहनादिवत् प्रकृतापूर्वसन्निकर्षेणैव फलकल्पना युक्तेत्यर्थ इति भावः।

**उपपत्तेरिति सौत्रं हेतुमादित्यादीनां फलात्मकत्वेन उत्कर्षोपपत्तेः** 'ब्रह्मदृष्टिरुत्कर्षा'दिति पूर्वन्यायादप्यादित्यादिदृष्टिरेवाङ्गेषु कर्तव्येति प्रकारान्तरेण व्याख्यातुं **फलात्मकत्वाचेति भाष्यम्**। तत्र पूर्वपक्षोक्तशङ्का-निरासेन तदर्थसमर्थनार्थं प्रवृत्तं **यत्तूक्तमित्यादिभाष्यं** तच्छेष इति मनसि निधाय, पाठक्रमप्राप्तमप्यपि चेत्यादिभाष्यमुलंध्यार्थक्रमप्राप्तं **यत्तूक्तमित्यादि-भाष्यं** व्याख्यातुं **स्वयमेवेत्यादिटीका**।

तत्र **यत्तूक्तमिति** भाष्यानूदितशंकासामर्थ्यात् सिद्धान्ते दोषद्वयं आपतति, सिद्धैरादित्यादिभिः कथं फलमिति, उद्गीथादीनां सिद्धरूपतापत्त्या साध्यरूपाभिभवे, कथं 'यदेव विद्यया करोती'ति वचनप्रवृत्तिरिति। तत्र आद्यं दोषमाशंक्य भाष्यवाक्येन परिहरतीत्याह—**एवन्तूत्कृष्टा इत्यादिना**। P. 946.2

द्वितीयमाशंक्य निराकर्तुं **ननूक्तमित्यादिटीका**। तां व्याचष्टे—**यथेति**। (प्रमा) [तीव्र]त्वादीत्यादिशब्दार्थमाह—**शुचित्वादीति**[3]। **लक्षणैवेत्यत्र** नियामकं दर्शयन्नन्यथापीत्यादिटीकाभिप्रायमाह—**सत्यां लक्षणायामित्यादिना**।

**ऋक्सामाध्यस्तत्वमपीति**। 'इयमेवर्गग्निस्सामे'ति पूर्ववाक्ये सामा-नाधिकरण्यनिर्देशबललब्धः पृथिव्यग्न्योः ऋक्सामसम्बन्धश्च ऋक्सामयोः पृथिव्यग्न्यध्यस्तत्वमिव पृथिव्यग्न्योः ऋक्सामाध्यस्तत्वमपि संभवतीत्यर्थः। ततश्च P. 946-7

---

लभ्यते। वैपरीत्ये तु प्रयुक्त्यन्तरकल्पनागौरवं भवेत्' इति शिवार्कमणिदीपिकायामुक्तं श्रीमदप्पय्यदीक्षितैरेव। सर्वदीक्षितग्रन्थदर्शिभिः ब्रह्मविद्याभरणकारैरपि उक्तम्—'आदि-त्यमुद्दिश्य सामविशिष्टदृष्टिविधाने सामापि प्रयुज्य, तदभेदो विधेयः। वैपरीत्ये क्रतुप्रयुक्त-साम्नि प्राक्सिद्धादित्यदृष्टिमात्रविधानमिति लाघवम्' इति। एतत्सर्वग्रन्थमूलभूतः प्रकृतटीकाग्रन्थः एतावत्पर्यन्ताभोगग्रन्थे विवृतः दैवदुर्विपाकेन नष्टः। किं कुर्मः।

१. टीकायां पाठक्रमप्राप्तमपिचेत्यादिभाष्यमेव पूर्वं व्याख्यातम् 'द्वितीयादि-निर्देशादप्युद्गीथादीनां प्राधान्यमित्याह—अपि चोमितीति' इति। तदनन्तरमेव 'स्वय-मेवे'त्यादिटीका दृश्यते। आभोगरीत्या टीकायां पूर्ववाक्यं नास्तीति भाति।

२. कल्पतरौ 'तद्दृष्टेः फलं' इति पाठः।

३. प्रतीकोऽयं मूले न दृश्यते 'तीव्रत्वादीत्यादिपदेन शुचित्वादिपरिग्रहः' इति पाठ ऊह्यते।

पूर्ववाक्ये ऋक्सामयोः पृथिव्यग्निदृष्टिचिकीर्षायामपि हेतुवाक्ये, राजनि सारथ्येऽपि सामर्थ्यं प्रकटयितुं क्षत्रशब्दस्येव, ऋक्सामाधिष्ठानकाहार्यारोपकर्मत्वं संबन्धमाश्रित्य प्रयुक्ताभ्यां ऋक्सामशब्दाभ्यां अवगम्यमानयोः पृथिव्यग्न्योराधाराधेयभाव आधारत्वेन प्रसिद्धायामृचि आधारपृथिवीदृष्टिराधेयत्वेन प्रसिद्धे च साम्न्याधेयत्वेन प्रसिद्धाग्निदृष्टिश्च युक्तेत्येवं हेतुसमर्पणसंभवात् न पूर्ववाक्ये पृथिव्यग्न्योः ऋक्सामदृष्टिचिकीर्षा नियन्तुमर्हतीत्यर्थः ।

P. 946-7 **अन्यथाप्युपपत्तिमिति** । लक्षणया इत्यर्थः । लोकेषु[1] सामधीप्रक्षेपे लोकानां सामबुद्धिसंस्कृतत्वात् साम्नां नोपास्यता । नापि सामबुद्धिपरिगृहीतानां लोकानामुपास्यत्वम् । तेषां सिद्धत्वेन साध्यत्वायोगादित्येवं, **तत्र यदीत्यादि-टीकोक्तयोरर्थयोः** प्रयोजनकथनपरत्वेन **तथाचेत्यादिटीकां** योजयति—**तदा सामानीति** । 'अगारे गाव' इत्यादौ सप्तमीभङ्गे किं नियामकमित्याशंक्य, विधीयमानगोसञ्चारणादि [संस्कार्यत्व] (सामर्थ्य) मित्याशयेनाह—**आगरे गृह इत्यादिना** ।

ननु सप्तम्यास्तृतीयार्थत्वं क्वचिदप्यदृष्टं भवन्मते कल्पनीयम् । मन्मते तु सप्तम्या द्वितीयार्थत्वं 'अगार' इत्यादौ दृष्टम् । द्वितीयायास्तृतीयार्थत्वं च 'सक्तूञ्जुहोती'त्यादौ दृष्टं, ततश्चात्यन्तापरिदृष्टैककल्पनापेक्षया द्वयकल्पनमपि दृष्टमेव

P. 947-7 वरमित्यत आह—**इत्युभयथापीति** । 'अक्षेषु रमते' 'स्त्रीषु रमत' इत्यादौ सप्तम्या अपि तृतीयार्थकत्वदर्शनाल्लक्षणयोर्निरूढासांप्रतिकताभ्यां भेदेऽपि श्रुतिभङ्गस्याविशिष्टत्वाच्छ्रुतिद्वयभङ्गादेकश्रुतिभङ्गो वर इति भावः ।

उक्तनियामकेन न सर्वोदाहरणेषु सिद्धान्तसिद्धिरित्याशंक्य, यत्र साम्न एवोपास्यत्वं स्पष्टं न श्रुतं तत्रैतन्न्यायापेक्षा । यत्र तु स्पष्टं श्रुतं न तत्रैतन्नियामकापेक्षेत्याशयेनाह—**यत्र द्वितीयेत्यादिना** । ननु छन्दोगैरोङ्कारः सामभक्तित्वेन न व्यवह्रियते । तथा च कथं **टीके**त्यत आह—**ओंकारोऽपीति** । **छन्दोगैरादिशब्देन** व्यवहृतो भक्तिविशेषः । स्पष्टप्रतिपत्त्यर्थं **टीकाया**मेष **ओंकारशब्देन** निर्दिष्ट इति भावः । ननु श्रुतौ सप्तविधस्य साम्न उपासनमिति

P. 948-1 न दृश्यते । तथा च कथं **टीके**त्यत आह—**श्रुतिगतेति** । **टीकोक्तं** पञ्च-

१. कल्पतरौ 'दर्शयन् तथा लोकेषु' इति पाठः ।

विधसामोपासनं च विशदयन् साकाङ्क्षाणां **टीकापदानां भाष्यगतैः** पदैर्योजनामाह—**छान्दोग्ये हीत्यादिना**। वागवयवानां, हुं प्र आ उत् प्रति उप नि P. 948-1 इत्येवंरूपाणां हिंकाराद्यात्मनोपास्यत्वमित्यर्थः ।

यद्यपि पूर्वं, 'समस्तस्य खलु साम्न उपासनं साध्वि'त्युपक्रमगतमेव वाक्यं पञ्चभक्तिकसप्तभक्तिकसकलसामोपासनविधायकमित्युक्तम्, इदानीं तु 'समस्तस्ये'ति वाक्येन सप्तविधसामोपासनविधान'मिति तु पञ्चविधस्ये'ति पञ्चविधसामोपासनविधानमिति विभज्य व्याख्यायत इति विरोधः, तथापि **च्छान्दोग्यभाष्यानुसारेण** पूर्वमुक्तम् । **टीकानुसारेणे**दानीमुच्यत इति न विरोध इति ध्येयम् । **विपरीतनिर्देशपदसूचितमपेक्षितं पूरयति—स भञ्जनीय इत्यर्थ इति** । P. 948-10 पाठक्रमादार्थक्रमस्य प्रबलत्वादिति भावः ।

॥ इति आदित्यादिमत्यधिकरणम् ॥

---

## ॥ अथ आसीनाधिकरणम् ॥

### सू०॥ आसीनस्संभवात् ॥ ७ ॥

### सू०॥ ध्यानाच्च ॥ ८ ॥

### सू०॥ अचलत्वं चापेक्ष्य ॥ ९ ॥

### सू०॥ स्मरन्ति च ॥ १० ॥

प्रसङ्गसङ्गतिमाह—**अङ्गावबद्धेति । तत्पर्युदासं सिद्धमिति** । अङ्गा- P. 948-12 वबद्धोपासनस्वरूपे अवधारिते, यथा कर्माङ्गमनुष्ठीयते, तथैव तदवबद्धमुपासनमपीत्येवं निर्णयेन तद्व्यतिरिक्तेष्वेव उपासनेषु प्रकारविशेषजिज्ञासोदयादिति भावः। ननु वेदान्तवाक्यजन्ये सम्यग्दर्शने तदनुगुणन्यायसंकलनाय चित्तैकाग्र्य-

---

१. कल्पतरौ 'अथ सप्तविधस्य' 'यश्चेति' 'यदेति' 'यदुदिति' 'यश्चीति' इति पाठः ।

२. टीकायां 'कर्माङ्गसंबन्धिषु नैषा चिन्ता । यत्र हि' इति पाठः । उपरि 'प्रमाणं चासननियमं' इति पाठः ।

स्यावश्यकत्वात् तदर्थं सुखासनाद्यपेक्षा कुतो न भवेदित्याशङ्क्य, चरमसाक्षात्का-
P. 948-13 राभिप्रायेण तदुक्तिरित्याशयेनाह—**श्रवणमननेति** ।

वस्तुतन्त्रत्वहेतोरप्रयोजकत्वं शङ्कते—**न च वस्त्वधीनेऽपीति** । वस्तुयाथात्म्यनिश्चयस्य प्रमाणमात्रपरतन्त्रत्वं लोकप्रसिद्धमिति विपक्षे दण्डं मनसि निधाय परिहरति—**अत आहेति** । तर्हि प्रमाणद्वारैवासननियमस्य वस्तु-तत्त्वनिश्चयहेतुत्वमस्त्वित्याशयेन शङ्कते—**ननु प्रमाणमपीति** । चक्षुरादिकं प्रमाणं शुक्तितत्त्वनिश्चयप्रतिबन्धकरजतादिसंशयविपर्ययनिवृत्त्यर्थं भूयोऽवयवेन्द्रि-यसन्निकर्षापेक्षमपि न प्रमाजनने किञ्चिदपेक्षत इत्याशयेन परिहरति—**अत आहेति** । तर्हि प्रकृतेऽपि साक्षात्कारप्रतिबन्धापगमार्थमेव चित्तमासननियमम-पेक्षतामित्याशङ्क्य, मनननिदिध्यासनाभ्यामेव सकलप्रतिबन्धापगमेन चित्तस्य संस्कृतत्वान्न तदर्थमपि तदपेक्षेत्याह—**ध्यानादीति** ।

**यथा वेत्यादिटीकायां 'नापि सम्यग्दर्शने'** इत्यनेन विरोधं
P. 949-1 परिहर्तुं **तत्त्वमस्यादीति** विशेषणं, तदभिप्रायमाह—**तत्त्वमस्यादीति** । **टीकायां—चोदकशास्त्राभावादिति** । आसनस्योपासनाङ्गताबोधकशास्त्राभावा-दित्यर्थः। 'अर्थाद्वा कल्पनैकदेशत्वा'दिति न्यायसिद्धं शास्त्रं तद्बोधकमिति परि-हरति **टीकायां—यथा शक्यत इत्युपबन्धादिति** ।

**नन्वित्यादिशङ्काया उद्भाव्यत्वं** व्यावर्तयति—**ध्यायतिश्चेत्या-दीति** । शास्त्रीयचिन्तन एव लोकवेदयोर्ध्यायतेः प्रयोगाच्चिन्तनमात्रे औपचारिक एव प्रयोगः । अत एव 'ध्यायतीव बक' इत्यादाविवशब्दप्रयोग इत्याशयेन परिहरति—**अत आहेति** । तिष्ठत ऐकाग्र्यसंभवोऽसिद्ध इति, **न भवतीत्या-**
P. 949-5 **हेति** परिहारटीकाभिप्रायमाह—**तिष्ठतो हीति** । **बहुव्रीहीति** । न विद्यते आयासो यस्येत्येवमित्यर्थः ।

॥ इति आसीनाधिकरणम् ॥

---

१. टीकायां 'उपचर्यते' इत्यस्य 'प्रयुज्यते' इति विवरणेन औपचारिकत्वं नेति स्फुटीकृतं, कल्पतरावपि तथैव भाति, आभोगे तु अन्यथा औपचारिकत्वमेव उच्यते इति चिन्त्यमिदम् ।

२. कल्पतरौ 'फलातिशय' इत्येतत् 'प्रयत्नातिशय' इति शोधनीयम् ।

## ॥ अथ एकाग्रताधिकरणम् ॥

### सू० ॥ यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

दृष्टान्तसङ्गतिमाह—अनङ्गाश्रितेति[1]। दिगादीत्यादिपदेन देश- P. 949.7
कालौ गृह्येते। श्रुतेऽपि विशेषचिन्तनादुपपद्यते विचार इति परिहरति—तत्राहेति। भाष्योदाहृतश्रुतौ शर्करापदं व्याचष्टे—सूक्ष्मेति। शब्दजला-शयादिभिरित्यत्र विवर्जित इत्यस्यान्वयं सिद्धवत्कृत्य, शब्ददुर्गन्धादिवर्जनस्य मनोविक्षेपनिवृत्त्यर्थमावश्यकत्वेऽपि, जलाशयवर्जनस्य किं प्रयोजनमित्यत आह—जलाश्रयेति।

P. 950.1

यत्रैकाग्रतेति सूत्रपदसूचितं सिद्धान्तहेतुं प्रकटयितुं यत्रैकाग्रतेति टीकेत्याशयेनाह—एकाग्रयं हीति। तीर्थशब्दः पुण्यक्षेत्रपरः। पूर्वपक्षबीज-मनुभाष्य दूषयति—यदुक्तमित्यादिना। उपास्तिमात्रस्य पक्षत्वे, अङ्गोपा-स्त्यंशतः सिद्धसाधनं स्यात्। तत्र तदर्थं दिङ्नियमापेक्षणादित्यत उक्तमङ्गोपा-स्तिव्यतिरिक्तेति। तस्मादिति टीकाया अपेक्षितसमर्पणेनान्वयं दर्शयति—तस्मात्तत्रैवेति[2]।

P. 950.2

॥ इति एकाग्रताधिकरणम् ॥

---

१. 'अङ्गानाश्रिते'ति कल्पतरौ पाठो दृश्यते।

२. टीकायां 'दिग्देशादिनियममवाचनिकमपी'ति पाठः। कल्पतरौ 'तीर्थादि-देशाः' इति पाठः। परिमले 'देहधारणप्रयत्ने' इति, 'भित्त्याद्युपाश्रयणेन' इति च पाठः।

## ॥ अथ आप्रायणाधिकरणम् ॥

### सू०॥ आप्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥

P. 950-7 दृष्टान्तसङ्गतिमाह—**पूर्वत्रेति** । **भाष्यमिति** । **अनियोज्यब्रह्मात्म[त्व]प्रतिपत्तेरिति**[1] भाष्यं व्याचष्टे इत्यर्थः । **तस्या** इत्यन्तया **टीकया** अनियोज्यब्रह्मात्मप्रतिपत्तेरिति भाष्यं व्याख्यातम् । तस्य भाष्यस्योत्तरभाष्येणान्वयं शेषप्रदर्शनव्याजेनाह—**शास्त्राविषयत्वादिति शेष इति** । **अहंग्रहोपास्तीनामदृष्टार्थत्वेनेति** । यद्यपि 'यस्य स्यादद्धे'ति वचनादहंग्रहोपास्तीनामपि साक्षात्काररूपदृष्टफलार्थत्वमेव । तथाप्यन्त्यस्यात्मसाक्षात्कारस्यानुपयोगात्, उक्तवचनस्य च निष्कलङ्कनिश्चयपरत्वात्, साक्षात्कारपरत्वेऽपि वा, 'सविज्ञानो भवति सविज्ञानमेवान्ववक्रामती'त्यादिबहुश्रुत्यनुरोधेन प्रायणकाले 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामती'ति श्रुत्युक्तमनोवृत्तिपरत्वेनाप्युपपत्तेः, न मध्ये सगुणब्रह्मसाक्षात्कारकल्पने मानमिति जीवदवस्थायां अहंग्रहोपास्तिफलस्यादर्शनेन युक्तमदृष्टार्थत्वमिति भावः । **सकृत्कार्येति शास्त्रार्थे इति** । सकृत्त्वमत्र सामर्थ्यसिद्धं बोध्यम् । **कृतशास्त्रार्थत्वादित्यत्र** F. 951-1 अन्यपदार्थ उपासक इति सूचयितुमाह—**कृतशास्त्रार्थत्वात्पुंस इत्यर्थ इति** ।

ननु कर्मवदुपासनानामदृष्टद्वारैव कालान्तरभाविफलतदनुगुणचरमकालीनवृत्तिजनकत्वसंभवे, किमर्थमाप्रायणमावृत्तिरिष्यत इति शङ्कते—**ननु**[3] **कर्मवदिति** ।

---

१. 'अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः' इति भाष्यं आनन्दगिरीयरामानन्दीयब्रह्मविद्याभरणादिषु, अनियोज्ये ब्रह्मणि आत्मत्वप्रतिपत्तिमतो विदुषः शास्त्रागोचरत्वात्, इति, नियोज्यरहिता ब्रह्मात्मप्रतीतिर्यस्य विदुष उत्पन्ना, तस्य शास्त्रार्थे अनधिकार इति च, विद्वत्परतया व्याख्यातम् । भामत्यां पुनः अनियोज्या या ब्रह्मात्मप्रतिपत्तिः तस्याः बिध्यविषयत्वात् इति, प्रतीतिपरतया व्याख्यातम् । इति विशेषः ।

२. अत्र टीकायां 'न त्वेवमभ्युदयफलान्युपासनानि' इति शोधनीयम् । कल्पतरौ 'सम्यग्ज्ञानाद्वैषम्यमतश्च' इति, 'न त्वेवमित्यादिना' इति, 'शास्त्रार्थे ज्ञाते' इति च शोधनीयम् ।

३. कल्पतरौ 'तर्हि' इत्यधिकम् । उपरि 'किमत्र फलवदिति' इति प्रतीकधारणम् । ततः, 'उपासनफलवत्' इति पाठः । टीकायां 'स्वर्गादिविज्ञानाक्षेपकत्वं' इति

दृष्टद्वारसंभवे, नादृष्टद्वारकल्पनया चरमकाले बुद्ध्याक्षेपकत्वम्, किं तु पूर्व-पूर्वप्रत्ययानुरोधेन् उत्तरोत्तरप्रत्ययानां धारारूपेण उत्पत्त्या, सुषुप्त्यादिना कञ्चित्कालं विच्छेदेऽपि, पूर्वप्रत्ययजन्यसंस्कारदार्ढ्येन झटित्येव पुनर्धारासंभवात्, चरमकालीनवृत्तेश्च मरणादिना व्यवधानेऽपि, तृणजलूकान्यायेन भोक्तव्यस्य फलस्य परिगृहीतत्वेन तज्जनकत्वाविरोधाच्च, नादृष्टद्वारा बुद्ध्याक्षेपकत्वमिति परिहारतात्पर्यमाह—**दृष्टद्वारेणेति** ।    P. 951-3

दृष्टद्वारमेव दर्शयति—**प्रत्ययावृत्त्येति** । ननु प्रत्ययावृत्त्या साक्षात्काराभ्युपगमे कस्यचिदावृत्तिदार्ढ्येन जीवदवस्थायामपि साक्षात्कारसंभवात् फलप्रसङ्ग इत्यत आह—**विरोधीति** । एतच्छरीरोपभोग्यफलजनकेन प्रबलेन कर्मणा प्रतिबन्धान्न शरीरान्तरोपभोग्यफलप्रसक्तिः इति भावः । 'सविज्ञानमेवान्ववक्रामती'ति भाष्योदाहृतश्रुतौ **सविज्ञानमिति** पदं व्याचष्टे—**सविज्ञानमिति** । 'यच्चित्तस्तेनैष प्राणमायाती'त्यादिश्रुतेरर्थमाह—**यस्मिन्विषय इति** । तेजश्शब्देन कथमुदानस्य ग्रहणमित्यत आह—**उदानस्येति** । 'तेजो ह वाव उदान' इति प्रश्नोपनिषच्छ्रुतेरिति भावः ।    P. 952-1

**आत्मना भोक्त्रेति** । ततश्च, प्राण उदानेन संयुक्त आत्मना सह आत्मना सहितस्सन् तमात्मानं यथासङ्कल्पितं लोकं नयतीति श्रुत्यर्थ इति भावः । उदानस्य च परलोकनेतृत्वं 'उदानः पुण्येन कर्मणा पुण्यं लोकं नयति, पापेन पापमुभाभ्यां मनुष्यलोकम्' इति प्रश्नोपनिषत्सिद्धमिति द्रष्टव्यम् । **'सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येते'ति** भाष्यं व्याचष्टे—**सः उपासक इति** । उपास्तावन्त्यकालेऽपि कर्तव्यशेषोक्त्या ब्रह्मबुद्धौ कर्तव्यशेषाभावसूचनादापवादिकीं सङ्गतिमभिप्रेत्य समनन्तराधिकरणप्रवृत्तिरिति **भाष्यकाराणामाशय** इत्यभिप्रायेणाह—**अन्त्यकाल इति** । **मुनिः बादरायणः** । उत्तरमधिकरणं जगावित्यर्थः ।    P. 952-3

॥ इति आप्रायणाधिकरणम् ॥

---

पाठः । टीकायां स्वर्गादिफलककर्मणां ज्ञानानात्मकत्वेन प्रतिपत्तव्यवस्तुगोचरभिन्नानामपि प्रायणकाले स्वर्गादिविज्ञानाक्षेपकत्वे, प्रतिपत्तव्यवस्तुगोचराणां ज्ञानात्मकोपासनानां विज्ञानाक्षेपकत्वे का कथा इति कैमुतिकन्यायोपपादनं बोध्यम् ।

१. अस्मिन्नधिकरणे भाष्ये 'सम्यग्दर्शनार्थानि उपासनानि' इति निदिध्यासनं विवक्षितं, बहुत्वं चाविवक्षितं इति भाति । भाष्य एव मध्ये 'भावनाविज्ञानं' दृढसंस्कारजन्यविज्ञानं, इति, 'भावनात्मकाः प्रत्ययाः' भावनाद्वारकाः प्रत्ययाः, इति चार्थः ।

## ॥ अथ तदधिगमाधिकरणम् ॥

सू०॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥१३॥

P. 952-6 **शास्त्रेण हीत्यादिटीकां** विभज्य योजयति—**शास्त्रेणेति**। सूत्रे अघशब्दश्रवणेन पापस्यैवोदाहर्तव्यत्वात् अश्वमेधोदाहरणमसङ्गतमित्यत आह—**अश्वमेधादीति**। **इतरस्येति**। 'इतरस्याप्येवमसंश्लेषः पाते त्वि'ति उत्तराधिकरणस्य पूर्वाधिकरणन्यायातिदेशार्थतया विशेषाशङ्कानिराकरणमात्रफलकत्वेन, तदधिकरणोदाहरणमप्यत्रैव सौकर्यार्थमुपात्तमिति भावः। **इतिशब्दाध्याहारेण** तच्छब्दाध्याहारेण च **टीकां** योजयति—**अत्र लोका इत्यादिना**। **अत्र हेतुमिति**। भोगात् प्रागविरन्तुमेवार्हतीत्यत्र भोगैकनाश्यत्वं **हेतुमाहेत्यर्थः**।

**टीकायां—तदप्रक्षयेति**। पापक्षयहेतुत्वाभावादित्यर्थः। अधिकारिविशेषणस्य प्राप्यत्वेन निवर्त्यत्वेन वा विधीयमानकर्मफलत्वस्वाभाव्यात् प्रायश्चित्तानां

P. 952-9 च योग्यतया पापनिवृत्तिफलकत्वावगमात्तदभावोऽसिद्ध इत्याशयेन शङ्कते—**ननु स्वर्गकामस्येति**। 'यो ज्योगामयावी स्या'दित्यादौ वाक्यशेषवशात्, 'यो रोगी स औषधं पिबे'दित्यादौ वक्तृतात्पर्यवशाच्च तन्निवृत्तेः फलत्वावगमेऽपि, 'पापी चेदिदं कुर्या'दित्यादेः 'यस्याहिताग्नेरग्निर्गृहान् दहत्यग्नये क्षामवतेऽष्टाकपालं निर्वपे'दित्यादिवन्निमित्तपरत्वेनाप्युपपत्तेः न फलपरत्वे किञ्चिदस्ति नियामकमित्याशयेन परिहरति—**अत आहेति**।

ननु **एनस्विनराधिकारिप्राप्तीति टीकायामेनस्विनराधिकारप्रापकत्व**मात्रेण हेतुना तद्विधानस्य दुरितनिबर्हणफलाक्षेपकत्वायोगात् इत्युक्तम्। तदयुक्तम्। प्रायश्चित्तस्य पापफलकत्वायोगादित्यत आह—**अधिकारीति**। जीवनगृहदाहादिविशेषणवदिदमपि **विशेषणमधिकारिव्यावृत्तिपरं** (फल)[पर]स्वाम्याभावपरम्, न तु तस्य **फलत्वप्रतिपादनपरमित्यर्थः**। निष्पन्नस्य गृहदाहादेः प्राप्यत्वेन निवर्त्यत्वेन वा फलत्वायोगात् तद्विधे(र)[रितरा]धिकाराभावपरत्वेऽपि प्रकृते निवर्त्यत्वेन फलत्वसंभवात् नाधिकाराभावपरत्वमिति वैषम्यं दर्शयन्नाह—

P. 953-3 **युक्तमित्यादिना**।

---

१. टीकायां 'क्षीयते ? उत न क्षीयत इति संशयः' इति पाठः।

**निष्पादयितुमित्युपलक्षणम्। निवर्तयितुमित्यपि द्रष्टव्यम्। अधिकार-** P. 953-4 **व्यावृत्त्यर्थत्वमिति।** [न तु] प्राप्यत्वेन निवर्त्यत्वेन वा [गृहदाहस्य फलत्व-परत्वं](गृहदाहाधिकारव्यावृत्त्यर्थत्वं) तद्विधेरित्यर्थः। न त्वधिकार एव तत्र नास्तीति। तत्रापि 'नास्यापरं गृहान् दहती'ति भाविगृहदाहाभावस्य फलत्वाव-गमात्, प्रत्यवायपरिहारफलकत्वाद्वा। अन्यथा विधीयमानाया इष्टेरिष्टसाधनता-बोधकलिङ्प्रत्ययविरोधादिति द्रष्टव्यम्।

वैधर्म्यदृष्टान्तमेव स्पष्टयति—**यथा मोक्षेति।** 'ब्रह्मविदाप्नोति परम्' 'तरति शोकमात्मवि'दित्यादिश्रुतेरित्यर्थः। **नैवमिति।** 'क्षीयन्ते चास्य कर्माणि' इत्यस्य कर्ममात्रपरत्वेन दुरितपरत्वाभावात् संशयतुल्ययोगक्षेमतया अनन्तरं कर्मानुष्ठानाभावेन भाविकर्मासंस्पर्शपरत्वेन ब्रह्मज्ञानस्य दुरितक्षयहेतुत्व-प्रतिपादकत्वाभावादिति भावः। ब्रह्मज्ञानस्य दुरितक्षयहेतुत्वे श्रुत्यभावेऽपि लिङ्गं प्रमाणमित्याशयेन शङ्कते—**नन्विति। कथमिति।** अकर्त्रभोक्तृब्रह्म- P. 953 6 भावस्यैव मोक्षत्वादिति भावः। मोक्षस्य यथोक्तरूपत्वमसिद्धमिति परिहरति—**अत आहेति।** योगर्धिपक्षादस्य पक्षस्य भेदं दर्शयति—**एकेन**[1] **शरीरेणेति।**

**एकपुरुषसंबन्धेति** (सत्त्वेति)। 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवैवंविदि पापं कर्म न श्लिष्यत' इति विद्यापापक्षययोरेकस्मिन् पुरुषे सद्भावनिर्देशेत्यर्थः। **अर्थवादे**[2] **लिङ्गस्येति।** अर्थवादस्य श्रौतेऽर्थे P. 953-10 मुख्यतात्पर्याभावेन तत्समुत्थस्य लिङ्गस्य दुर्बलतया स्वार्थपरनिषेधसमुत्थेन लिङ्गेन बाधो युक्त इति भावः। **टीकायां—तस्य तत्रौदासीन्यादिति।** अन्यथा—

> कर्मनाशाजलस्पर्शात् करतोयातिलङ्घनात्।
> गण्डकीबाहुतरणात् धर्मः क्षरति कीर्तनात्॥

इत्यादिशास्त्राणामप्रामाण्यापत्तेरिति भावः। प्रत्युत शास्त्रमप्यसति प्रतिबन्धे कर्मफलं प्रसूते इत्येव बोधयति। अन्यथा ज्योतिष्टोमादिकर्मणामविलम्बेन स्वर्गादिजनकत्वापत्तेरित्याशयेनाह **टीकायां—यदीति।**

---

१. कल्पतरौ 'एकेन शरीरेण विषमकर्मफलभोगो नोपपन्नः' इति शोधनीयम्।

२. कल्पतरौ 'यथोक्तन्यायबलात् स्थिते' इति पाठः।

P. 953-12 उत्पत्तिशिष्टफलावरोधे फलान्तरमनुपपन्नमित्याशयेन शंकते—**नन्विति**। उभयोरप्युत्पन्नशिष्टत्वान्न विरोध इति स्फोरयितुं वाक्यद्वयं दर्शयति—**तद्यथेति**। **उभयसंयोगादित्येव** चारितार्थ्ये, **अविशेषपदस्य** किं प्रयोजनमित्यत आह—**प्रबलदुर्बलेति**। **एकेनैकस्येति**। एकेन प्रबलेनान्यस्येत्यर्थः। **स्वभावशब्देन** सामर्थ्यं विवक्षितमित्याशयेनाह—**पापमिति**। **इत्याहेति**। इत्याशयेनाहेत्यर्थः। एवं स्वरूपपर्यालोचनया पापस्य निर्गुणविद्याबाध्यत्वमुक्त्वा, पुष्करपलाशश्रुतिबलादपि तदाह—**न्यायसिद्ध इति**।

अर्थवादलिङ्गस्य दौर्बल्यमुक्तं निरस्यति—**उक्तविद्यासामर्थ्येति**। ननु विरोधाभावस्योक्तत्वाद्बलीयस्त्ववर्णनं व्यर्थमित्यत आह—**सत्यपि विरोध इति**। अभ्युपेत्यवादोऽयमिति भावः। **नैकविधेति** न नञ्समासः। किं तु नशब्दस्येत्याशयेनाह—**अनेकविधेत्यर्थ इति**।

P. 954-1 **अत आहुरिति** टीकापाठं दृष्ट्वा व्याचष्टे—**भाष्यकारा इति**। **अत एवेति**। भोगासक्तिराहित्यादेवेत्यर्थः। **सप्तजन्मादीति**। ब्रह्महत्यादिदुरितविशेषफलानां क्षयरोगादीनामित्यर्थः। **गतायुषेति**[2]। अल्पशिष्टायुषेत्यर्थः। 'विपाको जात्यायुर्भोगा' इति पातञ्जलसूत्रोक्तरीत्या शरीरायुर्भोगानां त्रयाणामपि कर्मसाध्यतया तन्नाशकत्वेन, फलप्रदेषु कर्मसु फलं प्रदाय क्षीणशक्तिषु सत्स्वेव साक्षात्कारोदयेन तस्यामवस्थायामवशिष्टायुरल्पमेवेति भावः।

॥ इति तदधिगमाधिकरणम् ॥

---

## ॥ अथ इतरासंश्लेषाधिकरणम् ॥

### सू०॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

**पुण्यातिदेशस्येति**[3]। ब्रह्मज्ञाने सत्यघस्य क्षये यो न्यायः तस्य पुण्ये P. 955-3 अतिदेशस्येत्यर्थः। अधर्मस्य कार्यतया हेतुसापेक्षत्वात् कथं? **स्वाभाविकत्व-**

---

१. कल्पतरौ 'अवगमे एकेन एकस्य बाधः' इति पाठः।

२. कल्पतरौ 'शतायुषा' इत्येतत् 'गतायुषा' इति शोध्यम्।

३. कल्पतरौ 'अस्यातिदेशस्य' इति पाठः दृश्यते।

मित्यतो व्याचष्टे—**शास्त्रोपदेशेति**। तर्हि तत्र किं कारणमित्यपेक्षायामुक्तं टीकायां—**रागादिनिबन्धनत्वेनेति**। **प्रथमं निरस्येति**। धर्मो ज्ञाननिवर्त्यः, तद्विरुद्धत्वादित्यत्र ज्ञानाज्ञानयोरिव परस्परविरुद्धस्वभावत्वाभावेन हेतोरसिद्धिः, इत्येवं निरस्येत्यर्थः। न ह्यज्ञानस्येव तत्कार्यस्यापि ज्ञानेन विरोधः केन चिदभ्युपेयते। 'यतो ज्ञानमज्ञानस्यैव निवर्तक'मिति न्यायादिति भावः। P. 955-4

**द्वितीयं निरस्यतीति**। धर्मस्य ज्ञानेन निवर्त्यत्वाभ्युपगमोऽपि तदनिवर्त्यत्वबोधकप्रमाणाभावाद्वा आश्रीयते? आहत्य तन्निवर्त्यत्वबोधकशास्त्राद्वा? नाद्यः। लिङ्गस्यैव तत्र प्रमाणत्वादित्येवं प्रथमकल्पं **पाप्मनश्चेत्यादिना निरस्यतीत्यर्थः**। द्वितीयमाशंक्य तदुत्तरटीकया परिहरति—**सर्वे पाप्मान इत्यादिना**। 'उभे ह्येवैष' इति श्रुतौ सुकृतस्य विद्वन्निवर्त्यत्वश्रवणेऽपि, विद्यानिवर्त्यत्वमाहत्य न श्रुतमिति, 'सर्वे पाप्मान' इति कर्मणां ज्ञाननिवर्त्यत्वबोधकशास्त्रे पाप्मविशेषणानुरोधात्, 'नाभुक्तं क्षीयत' इतिं शास्त्रानुरोधाच्च, ज्ञानभोगाभ्यां पापपुण्ये तरतीत्येवं श्रुत्यर्थ इति **परिहारटीका**भिप्रायं प्रकटयन्नपेक्षितं च पूरयन्नाह—**उभे पुण्यपापे इत्यादिना**। P. 954-5

ज्ञानसुकृतयोः तमःप्रकाशवद्विरुद्धस्वभावतया निवर्त्यनिवर्तकभावाभावेऽपि ज्ञानस्य सुकृतसामग्रीविघटकतया तन्मूलोच्छेदकत्वस्वभावकृतं विरोधमादाय सिद्धान्तयतीत्याह—**ज्ञानसुकृतयोरिति**। **वैयर्थ्यं स्यादिति**। फलोपधानबोधकत्वभङ्गादिति भावः। प्रतिबन्धके असत्येव फलोपधानबोधकत्वात्, यस्य नास्ति प्रतिबन्धकम् तं प्रति सफलो विधिरित्याशयेन परिहरति—**अत आहेति**। **तथाभूतार्थकानीति**। लिषया पुण्यस्यापि निवृत्तिबोधकानीत्यर्थः। पाप्मशब्दः पुण्यस्यापि लक्षक इति भावः। निकृष्टफलत्वगुणयोगेन पाप्मशब्दस्य पुण्यपापयोः लक्षणा। निरूढा चे[यमि]त्याशयेनाह—**टीकायां—दृष्टप्रयोगश्चेति**। P. 956-1

॥ इति इतरासंश्लेषाधिकरणम् ॥

---

१. कल्पतरौ 'ज्ञानान्निवृत्त्यवगमात् इत्याशङ्क्य तेषां' इति पाठः।

२. कल्पतरौ 'यथाश्रुतार्थानि' इति दृश्यते। 'यथाभूतार्थानि' इति पाठान्तरं परिमलादवगम्यते।

## ॥ अथ अनारब्धकार्याधिकरणम् ॥

### सू०॥ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

अपवादसङ्गतिमाह—उत्सृष्ट इति श्लोकेन। आद्यं पक्षं दूषयति—
F· 956-7 अत आहेति। यथा कुलालेति। कुलालकराभिघाते निवृत्ते, तन्निवृत्त्या तन्निमित्तके चक्रभ्रमणे प्राथमिके निवृत्तेऽपि, तज्जन्यवेगाख्यसंस्कारवशात् यथा भ्रमणपरम्परानुवृत्तिः, एवं प्राचीने कर्मणि निवृत्तेऽपि तत्संस्कारवशात् तदुत्तरकर्मानुवृत्तिरित्येतन्नेत्यर्थः। मायायामिति मायाशब्दस्तत्कार्यकर्मपरः। पुण्यापुण्येति। पुण्यं च अपुण्यं च संस्कारश्चेति विग्रहः। यत्संस्कारात्मना, कार्यविशेषात्मना, अनुवर्तते, तद्वस्त्वेव, सत्यमेवेति व्याप्तेर्न व्यभिचारः। रज्जुसर्पभ्रमानन्तरभाविनां भयकम्पादिकार्याणां रज्जुसर्पज्ञानसंस्का-
P. 956-9 ररूपतया तस्य पूर्वपक्षिमते सत्यत्वादिति परिहारतात्पर्यमाह—रज्जुसर्पेति।

अत्र तु न मायेति टीकया मायाया वस्तुसत्त्वं प्रतिषिध्यते। तत्र मायाशब्दो भ्रमपरः, उत्तरत्र मायान्तरपक्षस्य निषेधादित्याशयेनाह—न[3] मायेति भ्रमनिषेध इति। तर्हि मायायाः कथं निषेध इत्याशङ्क्य, कार्यनिषेधे कारणनिषेधः सामर्थ्यसिद्ध इत्याह—अर्थादिति। भ्रमोपादानभूता माया आदिशब्दगृहीताः तद्विलासाश्च निषिद्धा भवन्तीत्यर्थः। मायासंस्कारजन्येति। तथा च, तज्जन्यसंस्कार इति टीकायां तच्छब्देन न मायेति पूर्ववाक्ये भ्रमपरेण मायाशब्देनार्थादुपात्ता माया परामृश्यते। संस्कारशब्दश्च तज्जन्यमायान्तरपर इति भावः।

---

१. कल्पतरौ 'एवमत्र निवृत्तायामपि' इति पाठः। टीकायां 'पुण्यपापयोश्च' इत्यत्र चकारोऽधिकः।

२. टीकायां 'अनिवृत्तेः उपपत्तेः।' इति पाठः। 'न तद्गोचर इति' इत्यस्मादूर्ध्वं 'तुच्छमायानिर्मितानां सर्वेषां' इति कोशान्तरे अधिकं दृश्यते।

३. कल्पतरौ 'वैषम्यमाह—अत्र त्विति।' इति पाठः।

४. आदिशब्दो मूले न दृश्यते।

५. कल्पतरौ 'न तज्जन्यसंस्कार इत्यनेन' इति, 'निषिध्यते। किमनुवर्तेत इत्युक्त्वा' इति च पाठः।

ननु न तद्गोचर इत्यत्र तच्छब्देन स्वरसतो मायाया एव परामर्शात् तद्गोचरस्य, तद्विषयस्य चात्मनो ज्ञानादूर्ध्वमप्यनुवृत्तेः कथं निषेधः इत्याशंक्य, कार्यकारणयोरभेदोपचारेण भ्रमरूपस्वकार्यरूपतामापन्ना माया तच्छब्देन परामृश्यते, इत्याशयेनाह—मायात्मकेति। ज्ञानादूर्ध्वमिति। टीकागतेन P. 957-3 अत्र तु इत्यनेन ज्ञाने सतीत्यर्थकेन सतिसप्तमीबलादयमर्थो लब्ध इति द्रष्टव्यम्। किमनुवर्ततेत्यनेनैव सिद्धे, न संस्कारेति पुनरुक्तमित्याशङ्क्य, तस्यैव स्पष्टीकरणार्थं तद्वाक्यमित्याशयेनाह—किमनुवर्ततेत्युक्त्वेति।

संस्कारशेषाननुवृत्तौ तुच्छत्वं हेतुरुक्तः। कर्माभावे को हेतुरित्यत आह—अत एवेति। प्रतीक्षाशब्दो लक्षणया अवस्थानपर इत्याशयेनाह—तत्पर्यन्तमिति। षष्ठ्येकवचनमिति। ष्णा इति धातोः शत्रन्तस्य रूपमिति भावः। एवमपि कथं वाक्यार्थ इत्याशंक्य, चिरशब्दस्य भावप्राधान्यमाश्रित्य वाक्यार्थं दर्शयति—स्नानादीति। टीकायां अवधिभेदः क्षिप्रता चेत्यु- P. 957-5 भयविधाने वाक्यं भिद्येत यस्मात्तस्मात् क्षिप्रतामात्रपरेत्यर्थः।

सत्यपि कारणे प्रतिबन्धवशात् कार्यानुत्पत्तिं दृष्टान्तवशेन प्रकटीकुर्वन्, सत्यपि साक्षात्कारे अविद्यालेशस्य प्रतिबन्धादनिवृत्तिं प्रकटयितुं प्रतिबन्धककल्पनायां प्रमाणं च दर्शयन्, सिद्धान्तटीकाभिप्रायमाह—यथा खल्विति। ब्रह्मसाक्षात्कारस्य नित्यमेव भवितुं युक्तत्वे हेतुगर्भं विशेषणद्वयं स्वयंप्रकाशत्वं प्रत्यगात्मत्वं च। आच्छादिकेति। ब्रह्मभावाद्याच्छादिकेत्यर्थः। तत्साक्षात्कारेति। श्रुतिस्मृतिप्रतीतब्रह्मसाक्षात्कारवतामित्यर्थः।

न चैकदेशेनेति। निवृत्ताया अविद्याया एकदेशेनानुवृत्त्यसंभव इति नेत्यर्थः। शाब्दबोधेनेति। 'मधुक्षीरद्राक्षामधुरिमप्रभृतिसकलमधुरिमव्यावृत्तो- P. 957-10 त्कर्षशाली सुधायां मधुरिमास्ती'ति वाक्येन तदर्थपरिच्छेदे तदज्ञाननिवृत्तावपि यावत्साक्षात्कारं कीदृशः स मधुरिमेति जिज्ञासादर्शनादज्ञानं नापैतीत्यनुभवसिद्धम्। न च तत्र पुरुषाश्रितस्याज्ञानस्य निवृत्तावपि विषयाश्रितमज्ञानं तथानुभूयत इति वाच्यम्। आश्रयविषययोर्भिन्नभिन्नाज्ञानकल्पने मानाभावात्।

---

१. अत्र टीकायां 'स्नातो भुञ्जतश्चेति' इति, 'चिरता चेति इति प्राप्ते' इति च पाठः।

तस्मादेकमेवाज्ञानमेकदेशेन निवृत्तमप्येकदेशान्तरेण अनुवर्तत इत्येव कल्पनीयमिति प्रकृतेऽपि शाब्दज्ञानेनेव साक्षात्कारेणाप्येकदेशस्य निवृत्तावेकदेशान्तरस्यानुवृत्तिरविरुद्धा ।

तथा चाहुरभियुक्ताः —

शास्त्रेण नश्येत् परमार्थदृष्टिः कार्यक्षमं नश्यति चापरोक्ष्यात् ।
प्रारब्धनाशात् प्रतिभासनाशः एवं त्रिधा नश्यति चात्ममाया ॥ इति ।

परोक्षं ब्रह्मविज्ञानं शाब्दं देशिकपूर्वकम् ।
बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत् ॥

इति चेति भावः । **तत्रेति** । अनारब्धविपाककर्मविषये प्रतिबन्धकसद्भावकल्पकप्रमाणाभावेन **तत्कृतप्रतिबन्धाभावादित्यर्थः** । **न त्वारब्धविपाकं** इत्युत्तरवाक्ये द्रागित्यस्यानुषङ्गमाश्रित्याह—**शीघ्रेणेति** । उक्तमर्थं विशदयति—

P. 957-13 **न द्रागित्येवेति**[1] । **वृत्तिः** व्यापार उद्भूतत्वं फलौन्मुख्यमिति सूचयितुमाह—**फलारम्भायेति** । टीकायां—**विगलितेति** । **निखिलाः क्लेशाः** अविद्यास्मितारागद्वेषाभिनिवेशाख्याः, **तेषां जातं**[2] वृन्दमावरणं अविद्याया आवरणशक्त्यंशः, तदुभयं **विगलितं** येषां इत्यर्थः । **परितः प्रद्योतमानेनेत्यनेन** बुद्धिसत्त्वस्या-

P 958-2 खण्डब्रह्माकारः परिणामो विवक्षित इत्याशयेनाह—**ब्रह्मज्ञानाकारेणेति** ।

**कल्पमन्वन्तरादीति पाठ**माश्रित्य **कल्पशब्दार्थ**माह—**अवान्तरकल्प इति** । ब्रह्मणो दिनमित्यर्थः । **महाकल्पेति पाठे** तु ब्रह्मणः शतसंवत्सरपरिमितमायुर्महाकल्प इति ध्येयम् । **एते** हिरण्यगर्भप्रभृतयो देवा **महाधियो न ब्रह्मविदः**[3], **अल्पपुण्यमेधसः** अल्पपुण्यप्रज्ञा **मनुष्या ब्रह्मविद इति न श्रद्धातुमर्हमिति टीकार्थः** ।

**ननु भाष्यकारैर्न तावदनाश्रित्यारब्धकार्यं कर्माशयमित्यादिना** ज्ञानोत्पत्तेर्देहद्वारा तदारम्भककर्माश्रयत्वादारब्धकार्यस्य च कर्मणः प्रवृत्तवेगस्य

---

१. कल्पतरौ 'द्रागित्येव न निवर्तयति' इति पाठः ।

२. टीकायां 'जाल'मिति पाठो दृश्यते ।

३. टीकायां 'न ब्रह्मविदः । ब्रह्मविदश्च' इति पाठः ।

कुलालचक्रस्येव मध्ये प्रतिबन्धासंभवात्, तद्रक्षणार्थं देहादिप्रतीक्षणमिति युक्ति-रुक्ता। सा टीकाकारैः **तदेतदभिसन्धायेत्यादिना** स्वोक्तयुक्तिपर्यवसानमेव प्रापिता।

तत्र **यथाश्रुतभाष्यरीत्या** स्वतन्त्रयुक्तित्वसंभवे, किमित्यन्यत्र पर्यवसान-प्रापणमित्याशङ्क्य, ज्ञानोत्पत्त्यर्थं देहतदारम्भककर्मापेक्षायामपि, ज्ञाने जाते अज्ञान-बाधेन तयोर्निवृत्तिरवश्यंभाविनी, उपादाननाशे तत्कार्यस्थित्ययोगादित्याशङ्कायां, हिरण्यगर्भप्रभृतीनां ज्ञानोत्पत्त्यनन्तरमपि श्रुतिस्मृतिषु देहस्थित्युपलम्भात्, तदुपयोगितया देहतदारम्भककर्मोपादानाज्ञानलेशानुवृत्तिरवश्यं कल्पनीयेति टीको-क्तयुक्तेरपेक्षणीयतया, स्वतन्त्रयुक्तित्वासंभवात्, तत्रैव पर्यवसानं प्रापितेत्याशये-नाह—**उपजीव्याया इति। अन्यत्रेति।** आत्मातिरिक्तवस्तुनीत्यर्थः।

ननु द्विचन्द्रभ्रमस्य सोपाधिकत्वाद्यावदुपाधि तदनुवृत्तिर्युक्ता, सत्यपि चन्द्रैकत्वसाक्षात्कारे उपाधिना प्रतिबन्धेन ततस्तन्निवृत्तेरयोगादित्याशङ्क्य, सोपा-धिकत्वमप्रयोजकम्। भ्रमत्वाविशेषेण निरुपाधिकभ्रमस्यापि विरोधिना सहानुवृत्तौ बाधकाभावात्। इहापि प्रारब्धकर्मप्रतिबन्धेन तन्निवृत्त्ययोगादित्यभिप्रायमाह—**यथा प्रतिबिम्बेति।** एवमपि बाधितस्य चिरकालानुवृत्तिरयुक्तेति शङ्कते—**नन्विति।** सांप्रतिकस्य द्विचन्द्रभ्रमस्यापि कञ्चित्कालमनुवृत्तावनादिकालनिरूढ-स्याविद्यादेरधिककालानुवृत्तिः कैमुतिकन्यायसिद्धा श्रुत्यनुमतत्वादपर्यनुयोज्या चेति परिहरति—**अत आहेति।** P. 958-5

**भाष्ये** अविद्यालेशवशात् कञ्चित्कालमिति वक्तव्ये, **संस्कारवशा-दिति संस्कारशब्दप्रयोगात्** स्वजन्यसंस्कारात्मना कर्मणामनुवृत्तिरिति पक्षोऽपि समीचीन इति सूच्यत इति दर्शयितुम्, कर्मणां स्वरूपेणानुवृत्तिरिति पक्षे, **अविद्यालेशवाची संस्कारशब्द इति (पदं) वदन्, न च ज्ञानकार्या इति टीकाया** अनवसरदुःस्थत्वं परिहरति—**भाष्य इत्यादिना। सत्यज्ञानेति।** रज्जुसर्पज्ञानस्यापि स्वरूपेण सत्यत्वादिति भावः। P. 959 3

उत्तरत्र **मात्रशब्दप्रयोगादत्रापि सोऽर्थो** विवक्षित इत्याशयेनाह—**मिथ्यार्थेनेति**[1]**।** किं मिथ्याभूतयोर्वास्तवः कार्यकारणभावो न संभवति ? उता- P. 959.3

---

१. कल्पतरौ 'मिथ्यार्थेनाविशेषिते'ति पाठः।

P. 959-7 वास्तवोऽपीति ? नाद्यः, इष्टापत्तेरित्याह—कार्यकारणभावोऽपीति । नान्त्य इत्याह—स्वप्नहस्तीति । तकारलोप इति । 'लोपस्त आत्मनेपदेष्वि'ति सूत्रेण छान्दसे तलोपे, 'अतो गुण' इति पररूपे, विमोक्ष्ये संपत्स्य इति च रूपमिति भावः ।

॥ इति अनारब्धकार्याधिकरणम् ॥

---

## ॥ अथ अग्निहोत्राद्यधिकरणम् ॥

### सू०॥ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

### सू०॥ अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

P. 959-10 उत्पन्नेति । उत्पन्नविद्यातो जन्म यस्य कर्मक्षयस्येत्यर्थः । तस्यापवाद इति । विद्यावत्पुरुषविषये अजनितफलानामेव कर्मणां क्षय इति यदुक्तं, तस्य प्रारब्धकर्मस्विव नित्याग्निहोत्रादिकर्मस्वप्यपवादः प्रतिपाद्यत इत्यर्थः । विद्यया विनाशात्तदनन्तरभाविकार्यजनकत्वासंभवेऽपि, विद्याजनकत्वसंभवात् तदर्थमनुष्ठाने, न विरोध इत्याशयेन शङ्कते—नेन्विति । योगमारुरुक्षुणेति । श्रवणादिकमनुतिष्ठासतेत्यर्थः । अग्निहोत्रादिकर्म न विद्याजनकम्, विरोधिजातीयत्वात् । यद्यद्विरोधिजातीयं न तत्तज्जनकम्, यथा प्रदीपविरोधितमोजातीयं तमोऽन्तरं न प्रदीपजनकमिति परिहरति—तदुच्यत इत्यादिना । विनाशादिति सिद्धवन्निर्देशानुपपत्तिरित्यत आह—विनंष्टुमिति । तदजनकत्वे तद्विरोधिजातीयत्वं न प्रयोजकम्, किन्तु तद्विरोधित्वमेव, लाघवात् । प्रकृते च नास्ति विरोध इत्याशयेन शङ्कते—ननु विरुध्यन्तामिति । एककार्यकरत्वमसिद्धमिति परिहरति—तत्राहेति ।

P. 959-16

---

१. कल्पतरौ 'उत्पन्नविद्याजन्मे'ति आभोगानुसारी पाठः ।

२. कल्पतरौ 'तत्र कथमनुष्ठेयत्वं' इति, 'विद्यया विनाशादिति' इति च पाठः ।

३. कल्पतरौ 'तस्यापीतरपुण्यवद्विद्यया विनाशादिति' इति प्रतीकधारणम् ।

पूर्वोत्तरत्वं किमपेक्षयेत्यत आह—**विद्याजन्मन इति**। **विगलितनि-** P. 959-10
**खिलेत्यादि**विशेषणसूचितं प्रकटयति—**पूर्वस्येति**। तर्हि कर्मोपयोगप्रतिपादकस्य विविदिषावाक्यस्य का गतिरित्यत आह—**प्रमाणस्येति**। किं विविदिषावाक्येन यज्ञादीनां मोक्षसाधनत्वमवगम्यते? किं वा ज्ञानसाधनानां मोक्षोपयोगमात्रं? नाद्यः, अश्रवणादित्याह—**यज्ञादेरिति**[1]। द्वितीयमुत्थापयति—**किन्त्विति**। अनन्यथासिद्धं प्रमाणमन्तरेण विरोधिनोर्जन्यजनकत्वासम्भवान्न ज्ञानद्वाराऽपि नित्यकर्मणां मोक्षोपयोग इति परिहरति—**ब्रह्मज्ञानस्येत्यादिना**। विनिगमनाविरहात् ब्रह्मज्ञानस्य यज्ञादेश्च द्वयोरपि स्तुतिरित्याशयेनाह—**यज्ञादीनां**[2] **चेति**। तथा च **टीकायां वाशब्दश्चार्थ** इति भावः।

ननु वर्तमानापदेशानामपि 'यदाग्नेयोऽष्टाकपालो भवती'त्यादीनां विधायकत्वदर्शनादप्रयोजकं वर्तमानापदेशत्वमित्याशङ्क्य, यदाग्नेयादिवाक्येषु विधियोग्यार्थसद्भावाद्विधायकत्वेऽपि, प्रकृते तदभावान्न विधायकत्वमिति सूचयितुं तद्ग्रहणमित्याशयेनाह—**अर्थवादत्वेति**। **टीकायामारादुपकारकाणामिति**। दूर P. 960-2
एव स्थित्वा ज्ञानद्वारा मोक्षोपयोगिनामित्यर्थः। **पूर्वपक्षनिदानमिति**। विरोधिनोर्न कार्यकारणभाव इत्येवंरूपमित्यर्थः। अमुमपि हेतुं सूत्रारूढं करोति—**अनेनेति**। तर्हि **सौत्रस्य तच्छब्दस्य** प्रकृतपरामर्शित्वभङ्ग इत्यत आह—**अत्र**[3] **चेति**। पूर्वोक्तहेतूपजीवनसूचनार्थत्वात् **तथा चेत्यंशस्य, विद्यालक्षणेत्यादेरेव तत्कार्यायेति** सूत्रपदव्याख्यानार्थत्वात्, तदेव गृह्णाति—**विद्यालक्षणेतीति**।

**तदेवेति**। **विद्यारूपमेव ज्ञानं कार्यमित्येवमर्थे कर्मधारय** इत्यर्थः। ननु **विद्यालक्षणेत्यादिटीकायाः** कथं **सौत्रतत्कार्यायेतिपदव्याख्यानार्थत्वम्**? **सौत्रपदस्य टीकोक्तार्थ**प्रतिपादनासामर्थ्यादित्याशङ्क्य, तत्सूचितार्थकथनार्थतया **टीकायास्तद्व्याख्यानार्थत्वमित्याशयेनाह—तस्या इत्येतावतीति**। **अग्नि-** P. 960-7
**होत्रादि तु तस्या** (स्मा) इत्येवं सूत्रकरणेऽपि **तच्छब्देन तदधिगम इति**

---

१. कल्पतरौ 'यज्ञादे'रित्यतः पूर्वं 'यज्ञादिति' इति प्रामादिकमशुद्धम्।

२. कल्पतरौ 'विशिष्टसाधनसाध्यत्वनिर्देशात् स्तुतिः' इति पाठः। टीकायां कल्पतरौ च 'मुक्तिसाधनयज्ञादि' इति पाठः।

३. कल्पतरौ 'अर्थात् प्रकृतं' इति पाठः।

सूत्रोक्तस्याधिगमस्य परामर्शे, कर्मणां ज्ञानोत्पादनद्वारा मोक्षोपयोगस्य सिद्धत्वात्, कार्यग्रहणं व्यर्थं सत् न्यायसूचनार्थं भवतीत्यर्थः। अग्निहोत्रादि तु तस्मै कार्यायेत्युक्ते कर्तुमर्हायेतीत्यवगमात् तदनुगुणो लोकसिद्धो न्यायः सूचित इति भावः।

ननु तदनेनाभिसन्धिनेति टीकया स्वोक्तेऽर्थे भाष्यावतारणमयुक्तम्। ज्ञानस्य यत् कार्यं तदेवास्यापि कार्यमिति पूर्वभाष्यविरोधात्। इत्याशङ्क्य, तत्कार्यपदस्य षष्ठीतत्पुरुषे कर्मधारये च नार्थभेद इत्याशयेन टीकेत्याह—तस्य कार्यमित्यपीति। सगुणपरत्वेनापि वर्णयतीति। अत एव चेत्यादिभाष्यव्याख्यानेन सगुणासु त्वित्यादिभाष्यस्यापि व्याख्यातप्रायत्वादिति भावः।

सगुणब्रह्मसाक्षात्कारानन्तरभावि नित्यं कर्म तत्फलजनकं न वेति संशये, P. 960-10 पूर्वपक्षमाह—अत्र च वर्णक इति। अग्निहोत्रादिलय इति। अग्निहोत्रादेर्विद्याफलजनकत्वाभावादिति भावः। नित्यकर्मणां सगुणविद्याफलजनकत्वाभावः किमयोग्यत्वात्? किं वा तत्र प्रमाणाभावात्? अथवा विधूननश्रवणविरोधात्? नाद्य इत्याह—सगुणविद्येति। निर्गुणविद्याफलस्य ब्रह्मभावस्य नित्यसिद्धतया कर्मजन्यत्वासम्भवेऽपि, सगुणविद्याफलस्य ब्रह्मलोकादेर्जन्यत्वसंभवादित्यर्थः। न P. 960-11 द्वितीय इत्याह—यक्ष्यमाण इति। प्राचीनशालप्रभृतीन् प्रति वैश्वानरविदः केकयराजस्य वचनमेतत्। तत्र कर्मणो विद्याफले समुच्चयोऽवगम्यते। अन्यथा तस्य निष्फलत्वापत्तेः। पितृलोकादिफलस्य तदयोग्यत्वादिति भावः।

---

१. कल्पतरौ 'पारंपर्याश्रयणान्नार्थभेदः' इति पाठः।

२. कल्पतरौ 'सगुणपरत्वेनापि वर्णयति—यत एवेति।' इति वर्तते। यत एवेति टीकाग्रन्थश्च, अत एव चेत्यादिभाष्यव्याख्यारूपः। सगुणासु तु इत्यादिभाष्यस्य च व्याख्या टीकायां न कृता स्फुटत्वात्। अतः, यत एवेत्यादिटीकाग्रन्थमेव सगुणास्विति भाष्यस्यापि व्याख्यारूपमभिप्रेत्य सगुणपरत्वेनापि वर्णयति यत एवेत्युक्तं कल्पतराविति भावः। वस्तुतस्तु, सगुणपरत्वेनापि वर्णयति भाष्यकारः सगुणासु तु इति, इति टीकानैरपेक्ष्येण भाष्यव्याख्या कल्पतरौ क्रियते इति उचितमिति भाति। समीचीनकल्पतरुकोशगवेषणे कदाचिदेवमपि पाठो दृश्येत। लेखकप्रमादेन बहुव्याकुलीभावेषु इदमप्येकमुदाहरणमिति पण्डितैरालोचनीयम्।

न तृतीय इत्याह—**सुकृतशब्दस्य चेति**। दुष्कृतशब्दसमभिव्याहारेण P. 960 11 **सुकृतशब्दस्य** फलजनककर्मविषयत्वस्यैव न्याय्यत्वादिति भावः। न चैवं 'सुहृदस्साधुकृत्या'मिति सुहृत्संक्रमणश्रुतिविरोधः। सुहृदभावे(ऽपि) विधूननम्, तत्सद्भावे तत्र सङ्क्रमणमिति द्वयोरपि श्रुत्योरुपपत्तेः। साक्षात्कारात् प्राचीन-कर्मविषयत्वे बाधकाभावाच्च। न च साक्षात्कारेण तद्विनाशः, सगुणसाक्षात्कारस्य कर्मादिनिवर्तकत्वे मानाभावादिति ध्येयम्। अस्मिन् पक्षे कथं **सौत्रो हेतुः** इत्यत आह—**तस्येत्यादि**।

॥ इति अग्निहोत्राद्यधिकरणम् ॥

---

## ॥ अथ विद्यायुक्तकर्मवीर्यवत्तरत्वाधिकरणम् ॥

### सू०॥ यदेव विद्ययेति हि ॥ १८ ॥

प्रसङ्गसङ्गतिमाह—**पूर्वोक्तेति**। ननु 'तन्निर्धारणानियम' इत्यत्र P. 961-3 कर्मफले कर्माङ्गव्यपाश्रयोपास्त्यनियम एवोक्तः न तु विद्याफले इत्यत आह—**स्वर्गादाविवेति**। कर्मणा स्वर्गादौ जनयितव्ये विज्ञानेन (विनापि) प्रतिबन्धा भाववद्विद्यया फले जनयितव्येऽपि प्रतिबन्धाभावसंभवेन तुल्यन्यायतया(गतार्थ-त्वात् विद्वत्परत्वं) प्रकृते यज्ञादेर्विशेषपरत्वे किन्नियामकमित्याशङ्क्य, निषेधबला-दित्याशयेनाह—**विद्यायुक्तेति**। **विद्याविहीननिषेध इति**। विद्याविहीनस्य कर्मणः फलजनकत्वनिषेध इत्यर्थः। **विधिविरोध इति**। 'यज्ञेन विविदिषन्ती'ति विधिविरोध इत्यर्थः।

**अन्ये त्वाहुरिति**। (भट्ट)भास्करेणैतत्सूत्रं त्यक्तम्। तत्र **तदीया उपपत्तिमाहुरित्यर्थः**। **तदैवेति**[2]। 'अन्तरा चापि तु तद्दृष्टे'रित्यधिकरण- P 962-4 न्यायेन विधुरादिकृता अपि जपादिक्रिया विद्यार्थत्वं यदा यान्ति, तदैवोपास्तिहीनेष्वाश्रमकर्मसु का कृथेत्ययमर्थः सिद्ध इत्यर्थः। (स्नात-

---

१. „ अत्र आभोगे कुण्डलितग्रन्थभागे कियानप्यंशः त्रुटितः इति भाति। उप-लभ्यमानकोशे न दृश्यते। शुद्धः कोशो न लभ्यते।

२, 'तदैवोपास्तिहीनेषु' इति पाठः इति भाति।

केनेत्विति ।[1]) यज्ञाद्यनधिकारिणो जप्यादिना, शूद्रस्य शुश्रूषामात्रेणैव सिद्धिरस्तीत्येतावता तदधिकारिणोऽङ्गविकलमपि यज्ञादि न फलाय कल्पत इत्ययमर्थः कथं सिध्यतीत्याशयेन परिहरति—[2]नैवं भ्रमितव्यमिति । प्रकृते तु शक्तत्वादस्त्यधिकार इति इत्याशयेनाह—विद्योपेतेष्विति । तत्त्यागादिति । ल्यब्लोपे पञ्चमी । तत्त्यक्त्वेत्यर्थः । अन्यकारिण इति । विद्योपेतं कर्म त्यक्त्वा, विद्याविहीनकर्मकारिण इत्यर्थः । विद्या । साक्षात्कारः ।

P. 962-5

ननु विद्याविहीनस्य तत्सहितस्य चेत्युभयविधस्यापि कर्मणो विद्याजनकत्वाविशेषे विद्योपेतेष्वशक्तस्य विद्याविहीनं कर्म किमिति न विद्याजनकमित्यत आह—एवमिति । प्रभुरिति । मुख्यकल्पस्यानुष्ठानसमर्थ इत्यर्थः । इति विचारितमिति ।

'प्रभुः प्रथमकल्पेऽपि योऽनुकल्पं निषेवते ।
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥'

इति मानवे धर्मशास्त्रे विचारितमित्यर्थः ।

यदि विद्योपेतविद्याविहीनयोः कर्मणोरेककार्यकरत्वं तदा, 'प्रभुः प्रथमकल्पस्ये'ति न्यायेन विद्योपेते शक्तस्य विद्याविहीनान्न फलं सिध्येत् । तत्तु नास्ति, विद्यायाः कर्मगतातिशयजनकत्वबोधनमुखेन फलातिशयहेतुत्वबोधनात् । तथा च, विद्यायुक्तं कर्म वीर्यवदित्येवं फलजनकत्वमात्रबोधकशास्त्राभावेन प्रत्युत 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेदे'ति विद्याविहीनस्यापि कर्मणः फलजनकत्वबोधनेन तस्य फलाजनकत्वप्रयुक्तनिन्दाकल्पनानवकाशेन निषेधोन्नयनानवकाशान्न विद्योपेतस्यैव साक्षात्कारजनकत्वमिति नियम इति सिद्धान्तटीकाभिप्रायं दर्शयन्नाह—यदि विद्यायुक्तमिति ।[3]

P. 963-1

विधिबललब्धमिति । विद्यायुक्तस्य कर्मणो वीर्यवत्त्वातिशयबोधकविधिसामर्थ्यलब्धमित्यर्थः । विद्यायुक्तस्य कर्मणः फलजनकत्वमात्रमेव यदि

---

१. प्रतीकधारणस्य फलं नास्ति । अतः कुण्डलितम् ।

२. कल्पतरौ 'नैवं नेतव्यम्' इति वर्तते । तदेवं शोधनीयम् ।

३. कल्पतरौ 'इतरस्यार्थादवीर्यत्वेन' इति, 'अभ्यनुज्ञायते अतो न' इति च पाठः ।

प्रतिपाद्यम्, तर्हि तरप्प्रत्ययप्रयोगो निरर्थक एव स्यात्। अतो विद्यायुक्तैः कर्मभिः, साक्षात्कारे जनयितव्ये प्रबलकर्मप्रयुक्तप्रतिबन्धाभावरूपातिशयभेदं विद्यायां दर्शयितुं तरप्प्रत्यय इति, विद्याविहीनस्यापि कर्मणो वीर्यवत्त्वावगमेन फलजनकत्वावश्यंभावात्, असति प्रबलप्रतिबन्धे विद्याविहीनादपि कर्मणः साक्षात्कारः उदेतुं अर्हतीति भावः। 'य एवं विद्वान् जुहोती'ति भाष्योदाहृत-श्रुतेरर्थमाह—पयसि सर्वमिति। P. 963-2

॥ इति विद्यायुक्तकर्मवीर्यवत्तरत्वाधिकरणम् ॥

---

## ॥ अथ इतरक्षेपणाधिकरणम् ॥

### सू०॥ भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १९ ॥

अग्निहोत्रादि त्वित्यादिविचारस्य प्रासङ्गिकत्वात् व्यवहितेन सङ्गतिमाहेत्याशयेनाह—व्यवहितेति। नञा। 'अनारब्धकार्ये' इति समासान्तर्गतेन। 'क्षीयन्ते चास्य कर्माणि' इत्यविशेषश्रवणात् प्रारब्धकर्मणोऽपि विद्ययैव लयो युक्त इत्याशयेन शङ्कते—ननु विद्ययैवेति। 'तस्य तावदेव चिर'मिति श्रुत्यन्तरानुरोधादविशेषश्रवणं प्रारब्धकर्मव्यतिरिक्तपरमित्याशयेन परिहरति—अत आहेति। नन्विह पुनरनुपक्रमणेऽपि तत्रत्यनञ्महिमलब्धस्यैवार्थस्य पुनरनेन सूत्रेण कथनात् पौनरुक्त्यं दुष्परिहरमित्याशङ्क्य, शङ्कान्तरनिराकरणार्थत्वादस्य न वैयर्थ्यमित्याशयेनाह—अगतार्थत्वमिति। P. 964-1

प्रारब्धकर्मेति। येषां विद्यायोनिशरीरावसानं प्रारब्धं, तेषां तच्छरीरान्तेऽनन्तरं मोक्षेऽपि, येषामनेकशरीरानुयायि प्रारब्धं, तेषां न मोक्षः संभवति। जन्मान्तरस्य पूर्वसंस्कारप्रमोषकतया शरीरान्तरे विद्याविहीनैः क्रियमाणानां कर्मणां बन्धहेतुत्वेन ततो जन्मपरम्पराया एव प्राप्तेरिति भावः। येषामनेकशरीरानुयायि प्रारब्धं न तेषामपि मोक्षविरोधः। शरीरान्तरेऽपि विद्यासंस्कारानुवृत्त्या तदानीमनुष्ठितानामबन्धकत्वात्। P. 964-3

---

१. कल्पतरौ 'तत्र नञा आरब्धफलं कर्म' इति पाठः।

तथा चाहुः—'असक्तोऽद्विषंश्च भुङ्क्ते' इति। न च जन्मान्तरं संस्कार-प्रमोषकम्, आगमविरोधेन हिरण्यगर्भप्रभृतीनामाधिकारिकपुरुषाणां संस्कार-प्रमोषकल्पनाऽयोगेन तद्दृष्टान्तेन, 'यावन्न विमोक्ष्ये अथ संपत्स्ये' इत्यविशेषेण सर्वेषामप्युत्पन्नसाक्षात्काराणां प्रारब्धकर्मफलभोगानन्तरं मोक्षश्रवणेन च, तत्रापि संस्काराप्रमोषकल्पनमित्याशयेन परिहरति—आधिकारिकाणां इत्यादिना। P. 965-1

॥ इति इतरक्षेपणाधिकरणम् ॥

इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डभट्टमहोपाध्यायतनूभवेन
श्रीमन्नारयणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशगृह्यमाणेन श्रीलक्ष्मी-
नृसिंहचरणारविन्दचञ्चरीकेण श्रीलक्ष्मीनृसिंहेन
विरचितायां कल्पवृक्षप्रदीपिकायां
आभोगाख्यायां चतुर्थाध्यायस्य
प्रथमः पादः॥

———

॥ श्रीः ॥

# ॥ चतुर्थाध्यायस्य द्वितीयः पादः ॥

## ॥ अथ वागधिकरणम् ॥

### सू०॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

### सू०॥ अत एव च सर्वाण्यनु ॥ २ ॥

**अर्चिरादिगतिप्राप्यस्येति** । तथा च, देवयानमार्गादपरविद्याफल- P. 966-1
प्राप्त्यर्थमुत्क्रान्तेरावश्यकत्वादिति **टीकार्थो** बोद्धव्यः । इदमुपलक्षणम् ।
निर्गुणविद्याफले निषेधार्थमपि तन्निरूपणमित्याह—**व्यापीति** । इहैव ब्रह्मभाव-
संभवात् नोत्क्रान्त्या क्वचित् गमनप्रसक्तिरिति सूचयितुं **व्यापीति** विशेषणम् ।
**अधिकारशब्दस्य** प्रकरणार्थकत्वभ्रमं वारयति—**विद्यासंबन्ध इति** । **अस्य**
उत्क्रान्तिनिरूपणस्य विद्याफलप्राप्त्यनुपयोगेन **विद्यासम्बन्धः कथमित्यर्थः** ।
उत्क्रान्तिनिषेधस्य परविद्याविषयत्वात् अपरविद्याविदो नोत्क्रमणविरोध इति
परिहरति—**टीकायामत आहेति** । **टीकायां—वृत्त्यध्याहारे** वृत्तिशब्दाध्या-
हारे इत्यर्थः । **तत्त्वशब्देन** धर्मिण एव ग्रहणे हेतुमाह—**धर्मिणो हीति** । P. 966-3

**किं विशिष्यादित्यनुषङ्ग इति** । तथा चेह सूत्रे यदि वाचो धर्मिण
एव लयं सूत्रकारो विवक्षेत्, परत्र 'अविभागो वचनात्' इत्यधिकरणे अवि-
भागग्रहणं व्यर्थं स्यात् । अतः तद्विशेषणमहिम्ना इह सूत्रे वाक्शब्देन तद्वृ-
त्तिमेव विवक्षतीति निश्चीयत इति टीकार्थ इति भावः ।

इह 'वाङ्मनसि संपद्यत' इत्यादिश्रुत्युक्ता संपत्तिर्लय एव । न तु
सम्बन्धमात्रं, 'सता सोम्य तदा संपन्नो भवती'ति श्रुत्युक्तायाः संपत्तेः 'स्वमपीतो
भवती'ति लयार्थकेनापीतिना विवरणदर्शनात् । वाचो लयश्च न मनसि संभवति ।
विकारस्य प्रकृतावेव लयौचित्यात् । अतो लोकसिद्धवाग्वृत्त्युपशममात्रानुवादकं

---

१. कल्पतरौ 'अनुत्क्रम्य' इति पाठः ।

P. 967.1 वाक्यमिति **सिद्धान्तभाष्याभिप्रायमाहे**त्याह—**यथासिद्धेति**। **न हेतुः स्यादिति**। वृत्तिविहीनस्य मनसस्सुषुप्तौ कार्यजनकत्वादर्शनादिति भावः।

आशयमजानानः शङ्कते—**नन्विति**। आशयमुद्घाटयति—**अत आहेति**। ननु तुल्यन्यायतया वाच इव चक्षुरादीनामपि मनसि वृत्तिलय इत्यस्यार्थस्य सिद्धेः 'अत एवे'त्युत्तरसूत्रं व्यर्थं ? इत्यत आह—**वाङ्मनसीति**। **तद्व्याचष्ट इति**। तात्पर्यार्थकथनेन **व्याचष्ट** इत्यर्थः। **अनुशब्दस्य व्याख्येति**[2]। गच्छन्तीति पदाध्याहारमभिप्रेत्य प्रयुक्तेन सूत्रगतेनानुशब्देनानुगतेर्लाभादिति भावः। 'तस्मादुपशान्ततेजा' इत्यादिश्रुतिं व्याचष्टे—**उपशान्ततेजा इत्यादिना**। **प्राणमायातीति**। इन्द्रियैस्सह मुख्यप्राणं जीव आयातीत्यर्थः।

॥ इति वागधिकरणम् ॥

---

## ॥ अथ मनोऽधिकरणम् ॥

### सू० ॥ तन्मनः प्राण उत्तरात् ॥ ३ ॥

**टीकाकारेण**[3] सङ्गतिसंशयप्रदर्शकभाष्यप्रहाणेन पूर्वपक्षभाष्यव्याख्याने को हेतुरित्यत आह—**अतिदेशोऽयमिति**। अव्यवहितत्वात्प्राणस्यात्मत्व एव हेतुरुच्यत इति भ्रमं निवारयितुमाह—**प्राणमनसोरिति**। **एतावतेति**। तत्प्रकृत्योः प्रकृतिविकारभावमात्रेण एतयोः प्रकृतिविकारभावाभावादिति भावः।

P. 967-6

प्रकृत्योः प्रकृतिविकारभावे तदभिन्नयोर्विकृत्योरपि कथञ्चित्प्रकृतिविकारभावोऽवर्जनीय इति **परिहारटीकाभिप्रायमाह**—**अपामन्नेति**। **आद्यं निरस्येति**। प्रकृतिव्यतिरेकेण पारमार्थिकस्य विकारस्याभावान्न तयोः प्रकृति-

P. 968 2

---

१. टीकायां 'आगमप्रभवयुक्तिविरोधाच्च' अत्र चकारोऽधिकः।

२. कल्पतरौ 'वाच्या' इत्येतत् 'व्याख्या' इति शोध्यम्।

३. टीकायां—'विकारस्य तत्त्वलयः' इति, 'तदा हि मनः' इति च पाठः।

विकारभावः संभवति। कल्पितयोस्तु यत्र कल्पनं तेन सह प्रकृतिविकार-भावेऽपि परस्परं प्रकृतिविकारभावस्य लोकविरुद्धत्वेन सोऽपि न संभवतीत्येवं निरस्येत्यर्थः। अतिप्रसङ्गमेव विशदयति—**एवं हीति**। P. ९68-3

॥ इति मनोऽधिकरणम् ॥

---

## ॥ अथ अध्यक्षाधिकरणम् ॥

**सू०॥ सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥**

**सू०॥ भूतेषु तच्छ्रुतेः ॥ ५ ॥**

**सू०॥ नैकस्मिन् दर्शयतो हि ॥ ६ ॥**

प्रसङ्गसङ्गतिमाह—**मनः प्राण इति वाक्यमिति**। **स्वयमेव वक्ष्य-तीति**। उपगमश्रुतिमाहेत्यादिना भाष्यावतरणव्याजेन प्रकटीकरिष्यतीति अर्थः। हेत्वन्तरकथनपरत्वाभावात् **तेजसि समापन्नेत्यादेरनन्वयमाशंक्याह—तेजोद्वारेणेत्येतदिति**। 'वाङ्मनसि संपद्यत' इत्यादिपूर्वोत्तरसन्दर्भैकरूप्याय 'प्राणस्तेजसी'त्यत्र तेजसि प्राणवृत्तिलयस्य मुख्यत्वावश्यंभावात् तदनुरोधेनोपगमनादिश्रुतिसामर्थ्यलभ्यः प्राणस्य जीवे वृत्तिलय औपचारिको व्याख्येय इत्याशयेनाह—**प्राणवृत्तिलयाधारस्येति**[1]। P. 963-5

ननु **टीकायां** प्राणस्य तेजसि, तेजसो जीवे च, वृत्तिलयो नोक्त इत्यत आह—**समापन्नेतीति**। समापन्नेत्यनेन वृत्तेर्लय एव निर्दिष्ट इत्यर्थः। उभयोरपि श्रुत्योर्मुख्यार्थत्वसंभवे, नान्यतरश्रुतेरुपचरितार्थत्वं युक्तम्। प्राणस्य जीवद्वारा तेजस्सङ्क्रमणेऽपि 'प्राणस्तेजसी'ति श्रुतेर्मुख्यत्वानपायात्। स्रुघ्नात् मथुरां गत्वा मथुरातः पाटलिपुत्रं गच्छत्यपि, स्रुघ्नात् पाटलिपुत्रं गच्छतीति व्यवहारस्य मुख्यत्वदर्शनादित्येवमभिप्रायेण, सिद्धान्तं दर्शयितुं—**स प्रकृत इत्यादि-टीका**। P 969-2

---

१. कल्पतरौ 'प्राणवृत्तिलयाधारस्य तेजसः जीवे वृत्तिलयात्' इति शोधनीयम्।

P. 969-2 तत्रोपगमश्रुतेरर्थमाह—यथा [राजानं] यात्रायामुद्यतमित्यादिना। 'तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसस्सूतग्रामण्योऽभिसमायन्त्येवमेवेममात्मान'मित्यादिरुपगमश्रुतिः। तत्र वैश्याच्छूद्रायामुत्पन्ना उग्राः[1]। प्रत्येनसः तस्करादिनिग्रहे नियुक्ताः। क्षत्रियात् ब्राह्मण्यामुत्पन्नास्सूताः। ग्रामण्यो ग्रामाधिकारे नियुक्ताः। इमं दृष्टान्तवाक्यार्थं भाष्योदाहृतश्रुतिगतैवंशब्दार्थकथनाय दर्शयितुं यथा यात्रायामित्यादिकमुक्तमिति द्रष्टव्यम्। एतदित्यनुरोधादग्रे ऊर्ध्वोच्छ्वासीति भावप्रधानो निर्देश इत्याशयेनाह—ऊर्ध्वोच्छ्वासित्वमिति।

P. 970-2 उपगमानुगमयोर्भेदं विविनक्ति—संमुखमित्यादिना। न [2]विरोध इति। 'सविज्ञानो भवती'ति श्रुतौ विज्ञानशब्दो भावव्युत्पन्नः करणव्युत्पन्नश्च तन्त्रेण निर्दिष्टः। तत्र भावव्युत्पन्न 'आप्रायणा'दित्यत्र विवृतः। इह तु, तमंशं सिद्धत्वात् परित्यज्य, करणव्युत्पन्नः शब्द इन्द्रियग्रामवचन इति (दर्शयन्) [दर्शितम्। तथा च] जीवस्य प्रकाशकरणग्रामोभयसाहित्यं 'सविज्ञान' इति श्रुत्यर्थः तस्मिन्नपीतकरणग्रामस्य लीनवृत्तिकरणग्रामस्येत्यादिभाष्येण दर्शित इत्येवं टीकायामुक्तमिति न विरोध इत्यर्थः।

समभिव्याहृतानां पदानां संभूयैकार्थप्रतिपादकत्वस्यौत्सर्गिकतया यत्र लक्षणादिना वाक्यार्थनिर्वाहो नास्ति, तत्रैवाध्याहारेण निर्वाहो 'द्वार'मित्यादौ, प्रकृते च तेजश्शब्दस्य तदुपहिते जीवे लक्षणयैव 'प्राणस्तेजसी'ति वाक्यार्थनिर्वाहान्नाध्याहारप्रसक्तिरित्याशयेन भाष्यमाक्षिपति-तदनुपपन्नमिवेति। भाष्ये अधिकशब्दोऽश्रौतत्वलक्षक इत्याशयेन परिहरति—अत आहेति। अन्वयानुपपत्त्यभावात् कथं लक्षणेत्याशङ्क्य 'यष्टीः प्रवेशये'त्यादाविव तात्पर्यानुपपत्त्या लक्षणेत्याशयेनाह—लक्षणास्वीकार इति। किं तच्छ्रुत्यन्तरं ? इत्यत आह—प्राणानामिति।

P. 970-5 ननु[3] तस्येति। उपवर्णितस्य श्रुत्यन्तरस्य तेजोद्वारेण जीवात्मनि समापन्नवृत्तिः प्राण इत्येवमर्थकत्वेनान्यथासिद्धत्वान्न तदनुरोधेन प्राणस्य जीवात्मनि

---

१. कल्पतरौ 'उद्यत'मिति पाठः।

२. कल्पतरौ 'कर्मफलप्रकाशवचन' इति पाठः।

३. टीकायां 'न च तेजसस्तत्रापि' इत्यत्र अपिशब्दोऽधिकः।

लयः सिध्यतीत्यर्थः। प्राणस्य तेजस्येव लयः, तेजसस्तु जीवे लय उच्यत इति वदन् प्रष्टव्यः। किं तेजसः स्वरूपेणैव जीवे लय उच्यते? किं वा तद्वृत्तेः? आद्येऽपि, किं क्वचित्साक्षादेव सिद्धस्तेजोलयो जीवात्मन्युपचर्यते? व्यवधानेन सिद्धो वा? नाद्य इत्याह—**व्यवधानादेवेति। न तद्द्वारेणेति।** साक्षात्स्वरूपलयद्वारेण तेजसो लयो नात्मन्युपचरितुं शक्य इत्यर्थः। P. 970-7

न द्वितीय इत्याह—**व्यवधानाश्रयणे चेति।** जीववत् घटादेरपि परमात्मविकारत्वादिति भावः। द्वितीयं निराकरोति—**तेजोवृत्तिलयस्त्विति।** न तावज्जीवसत्तादशायां जीवे तेजोवृत्तिलये प्रत्यक्षादिकं प्रमाणमस्ति, देहोष्मनिवृत्तौ जीवनादर्शनात्। नापि वेदः। 'वाङ्मनसी'त्यादौ वृत्तिलयप्रतिपादकसन्दर्भे 'तेजो जीव' इति पर्वान्तराश्रवणात्। कल्पने च प्रमाणाभावात्। उपगमादिश्रुत्यनुरोधेन मध्ये निवेशनीयस्य जीवस्य तेजश्शब्दलक्षणयाप्युपपत्तेः। तदेतदाह—**न कुतश्चित् प्रमाणादिति।**

**परिवारशब्देन भूतसूक्ष्मशब्दस्य** प्रथमं कर्मधारयः, ततो देहबीजशब्दस्य, ततस्तेजस्सहचरितशब्दस्येत्याशयेनाह—**तेजस्सहचरितश्चासावित्यादिना। सोऽध्यक्ष इत्युपक्रमादिति। सोऽध्यक्ष इति** सिद्धान्तप्रतिज्ञासूत्रभागव्याख्यानावसरे भाष्य एव तथोपक्रमादित्यर्थः। P 970-8

ननु न प्रणसंयुक्तस्याध्यक्षस्येति भाष्ये, तेजसि स्थितिं दर्शयतीत्यस्यानुषङ्गे, अध्यक्षस्य तेजस्यवस्थानं वारितं स्यात्। तच्च न युक्तम्। तस्य पूर्वमनुक्तत्वेन तत्प्रतिक्षेपेण शङ्काऽयोगादित्यतो भाष्यं योजयन्नाह—**चोद्यभाष्य इति। तां सूचयतीति।** अध्यक्षस्य तेजस्साहचर्याभावोक्त्या भूतान्तराणां तेजस्साहचर्येण लक्षणया तेजश्शब्देन ग्रहणप्रकटनादिति। **भाष्ये अन्तरालशब्दप्रयोगात्** प्राणतेजसोर्मध्ये अध्यक्षः प्रक्षिप्यत इति भ्रमः स्यात्। तेजश्शब्दस्य लक्षणया तदुपहितपरत्वसंभवे मध्ये प्रक्षेपवैयर्थ्यादित्यतो **भाष्यभावं** P. 971-4

---

१. कल्पतरौ व्यवधानादेवेति पृथग्वाक्यम्। अनिलाकाशव्यवधानादेव परमात्मन्यपि तेजोलयः इत्यर्थः।

२. कल्पतरौ 'तेजोवृत्तिलयस्तु' इति शोधनीयम्। टीकायां 'परिवाराध्यक्षः' इति पाठः।

३. कल्पतरौ 'इयता सूचितेति' इति पाठः।

P. 971-4 दर्शयन्नाह—परिहारभाष्य इति । तथा च भाष्ये उपहितप्राप्तिनान्तरीयकतया उपाधिप्राप्तिरित्येतावता अन्तरालत्वोक्तिः इति द्रष्टव्यम् ।

अत्रैवेति टीकासूचितमर्थं प्रकटयन्नाह—दृष्टान्त इति । प्राप्त्येयोग इति । प्राप्यदेशसम्बन्ध इत्यर्थः । न विवक्षित इत्यनन्तरं किन्त्वित्यध्याहार्यम् । प्राण एकस्मिन्नेवेति । प्राणावस्थानाश्रयभूतं सूक्ष्मं नैकात्मकं, तत्कार्यस्य स्थूलस्यानेकात्मकत्वादित्येवं हेतुसाध्ययोरुभयोः पक्षावृत्तित्वाद्वैयधिकरण्यमित्यर्थः । कार्यानेकात्मकत्वेनेति । स्थूलशरीरमनेकप्रकृतिकं, अनेकात्मकत्वात्, इत्येवं तत्कारणस्य सूक्ष्मशरीरस्यानेकात्मकत्वमनुमाय, तदनन्तरमनेकात्मकत्वेन हेतुना एकात्मकत्वाभावोऽनुमेय इत्यर्थः ।

॥ इति अध्यक्षाधिकरणम् ॥

---

## ॥ अथ आसृत्युपक्रमाधिकरणम् ॥

### सू०॥ समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

P. 972-3 प्रसङ्गसङ्गतिमाह—निरूपितायाा इति । दहरादिविद्यावतामुत्क्रान्तेः सामर्थ्यसिद्धत्वात् पूर्वपक्षानुन्मेष इति शङ्कते—नन्विति । दहरादिविद्याफलस्य देशान्तरीयत्वमसिद्धम् । ब्रह्मभावस्यामृतत्वस्य देशान्तरीयत्वाभावात् । तथा च देशान्तरीयफलकत्वप्रयुक्तस्य तद्विद्यावतामुत्क्रान्तिकल्पकस्य सामर्थ्यस्याभावा-P. 972-5 दुपपद्यते पूर्वपक्ष इति परिहृति—अत आहेति । ननु अत्रेत्यस्य सर्वनामत्वात् बुद्धिस्थपरामर्शित्वं वक्तव्यम् । न च तत्संभवति । सूत्रे भाष्ये वा अमृतत्वप्राप्तिश्रुतेः इत्येतदन्वययोग्यस्य कस्य चिदभावादित्याशङ्क्य, सूत्रगता-

---

१. कल्पतरौ 'अध्यक्षं प्राप्य पूर्वं, पुनः व्यापारान्तरात्' इति पाठः । भाष्ये 'अन्तरालेऽपि' इत्यपिशब्दोऽधिकः ।

२. कल्पतरौ 'प्राप्त्यंशः' इति दृश्यते ।

३. कल्पतरौ 'अपि तु' इति वर्तते ।

४. कल्पतरौ 'कार्यस्यानेकात्मकत्वादिति च' इति पाठः । टीकायां 'कर्माश्रयता प्रतीयते' इति पाठः ।

मृतत्वपदसूचितस्य दहरविद्यावाक्यस्य विषयतया बुद्धिस्थस्य, तेन परामर्श इत्याशयेन **टीकावाक्यार्थमाह—अत्राधिकरणे इति ।** P. 972-5

**परविद्याफलत्वादिति ।** सविलासाविद्यादाहपूर्वकस्य ब्रह्मभावस्यामृतत्वस्य तत्त्वसाक्षात्कारैकसाध्यत्वादिति भावः । **उत्क्रान्तिः निषिध्यत इति ।** 'न तस्य प्राणा उत्क्रामन्ती'ति श्रवणादिति भावः । इह प्रकरणे परविद्याया अनिर्देशेन 'तयोर्ध्वमायन्निति' विस्पष्टोत्क्रान्तिश्रवणानुरोधेन च क्रममुक्त्यभिप्रायेणैवामृतत्वश्रवणस्य नेयत्वान्न तद्बलेन पूर्वपक्षसंभव इत्यभिप्रेत्याह—**वस्तुतस्त्विति ।** अन्वानग्रहणेन **द्योतितमिति** पूर्वेणान्वयः ।

ननु **भूताश्रयविशिष्टा** हीत्यादिभाष्ये **उत्क्रान्तिरविदुष** एवेत्यत्र लिङ्गस्य प्रमाणत्वेनोपन्यस्तत्वाद्दुर्बलप्रकरणावष्टम्भेन कथं शङ्केत्याशङ्क्य, दुर्बलत्वेऽपि प्रकरणस्य निरवकाशतया तदनुरोधेन शरीरारम्भहेतुभूतसमाश्रयणलिङ्गं क्रममुक्तिफलकविद्यावत्पुरुषविषयतया नेयमित्याशयेनाह—**टीकायां—चोदयतीति ।** प्रकरणस्य निरवकाशत्वमसिद्धं, प्रतिपिपादयिषितब्रह्मभावानुगुण्येन जीवस्य ब्रह्मभावयोग्यतां दर्शयितुमुत्क्रान्तिकालभाविब्रह्मसंपत्तिप्रदर्शनाय सिद्धार्थानुवादपरत्वात् इत्याशयेन परिहरति इत्यभिप्रेत्याह **टीकायां—परिहरतीति ।** P. 972-8

ननु सिद्धार्थानुवादो निरर्थकः । श्रुतिप्रामाण्यबलादेव श्रुतिबोधिते जीवब्रह्मैक्ये अप्रामाण्यशङ्कानुदयेन योग्यताप्रदर्शनवैफल्यात् । अत एव **दृष्टान्तोऽप्यसङ्गतः ।** उक्तयुक्त्या स्वपितिनामनिर्वचनादेरपि वैफल्यादित्याशङ्क्य, श्रुतिबोधितेऽर्थे असंभावनादेः संभावितत्वेन तन्निरासेन दृढप्रत्ययार्थं सिद्धार्थकीर्तनमित्याशयेनाह **टीकायां—परविद्ययैवेति । टीकायां—तत्सधर्मा इति ।** तया अमृतत्वप्राप्त्यवस्थया समानो धर्मो विक्षेपाभावलक्षणो यासां 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' इत्यादिश्रुत्युक्तानां सुषुप्त्यादिकालीनसत्त्संपत्त्याद्यवस्थानां ता इत्यर्थः । **टीकायां—तद्विधर्मा इति ।** तया अमृतत्वप्राप्त्यवस्थया विलक्षणो विक्षेपादियोगित्वलक्षणो धर्मो यासां जाग्रदादिकालीनावस्थानां ता इत्यर्थः । P. 972-9

[ननु टीकायां] [1]अविदुषो विशेषत्वेनोत्क्रान्तिर्न विधीयते । तथा सति हि विद्याप्रकरणव्याघातो भवेदिति(दित्याशङ्क्य) योऽर्थः प्रतिपाद्यते, स न युक्तः। **विद्याप्रकरणाद्विदुष एवोत्क्रान्तिः इति शङ्काया एव** प्रवृत्तत्वेनाविदुषामुत्क्रान्तिविधानस्यानाशङ्कितत्वेन तन्निषेधे अप्रसक्तप्रतिषेधापत्तेरित्याशङ्क्य, **न स्वापादिवदित्यादिना परिहारभाष्येण** [विद्याप्रकरणे] स्वापादिवदुत्क्रान्तेरप्यनुवाद एव न तु विधानं, इत्युक्ते, तदुपरि, विधानमेव किं न स्यादित्याशङ्कायां, किमविदुषः प्रति विधानम्? विदुषः प्रति वा? इति विकल्पं मनसि निधाय, प्रथमकल्पं प्रकरणविरोधेन निरसितुं, **न तु विदुष इत्यादिटीका।** **अपि तु विद्यामित्यादिटीकया** च द्वितीयकल्पनिराकरणं सूचितम् । **अपि तु विद्यां प्रतिपादयितुं** इत्यनेन मोक्षफलकपरविद्याप्रतिपादनोक्त्या विदुषः प्रत्युत्क्रान्तिविधिपरत्वे ब्रह्मभावलक्षणामृतत्वफलविरोधसूचनादित्यभिप्रेत्याह— **येन**[2] **हेतुनेत्यादिना ।**

P. 973-4 **प्रतिज्ञाविशेषणत्वेनेति ।** मनआदिषु वागादिसंपत्तिरूपाया उत्क्रान्तेरविदुष इव विदुषः फलपर्यन्त[मविशिष्ट]त्वाभावेन कियत्पर्यन्तं साम्यमिति

---

१. अत्र आभोगे अर्थस्फुटत्वाय परिमलवाक्यमनूद्यते–'ननु 'न तु विदुषस्सकाशा'दित्यादिना 'व्याघातो भवे'दित्यन्तेन टीकाग्रन्थेन विदुषस्सकाशादविदुषां विशेषवत्त्वमुत्क्रान्तिर्न विधीयते । तथा सति विद्याप्रकरणव्याघातस्स्यादित्युच्यते । अयमप्रसक्तप्रतिषेधः । विद्याप्रकरणात् विदुषः खलूत्क्रान्तिशङ्का प्रवृत्ता । अत आह–येन हेतुनेति' इति परिमलवाक्यम् ।

२. अत्र कल्पतरौ 'अनेन 'न तु विदुष' इति भाष्यं व्याख्यातं' इत्युक्तया 'न तु विदुषस्सकाशात्' इत्यादिटीकया भाष्यार्थ उच्यते इति प्रतिपादितम् । टीकोक्तोऽर्थो न भाष्यस्वरससिद्धः । अन्यथैव भाष्यादर्थोऽवगम्यते । तथा हि—भाष्ये विदुष इति षष्ठ्यन्तं पदम् । विशेषवन्त इति पदस्य विशेष्यं पूर्ववाक्यादनुषक्तं स्वापादय इति पदम् । तथा च, यथा विदुषः स्वापादयः विशेषवन्तो न विधीयन्ते, एवमुत्क्रान्तिरपि न विधीयते । अपि तु स्वापादिवदेव उत्क्रान्तिरपि यथाप्राप्तैवानुकीर्त्यते । इत्येव भाष्यात् स्वरसतोऽवगम्यते । उपपन्नश्चायमेवार्थः । टीकारीत्या विदुष इति पञ्चम्यन्तम् । विशेषवन्त इति पदं प्रति अविद्वांस इति पदमध्याहर्तव्यं विशेष्यतया । स च परमः क्लेशः । इत्ययमर्थः भगवत्पादभक्तैस्सहृदयैः पण्डितैरवश्यं विज्ञेयः । इति सविनयमावेद्यते । भाष्ये उपक्रमे 'किं वा विशेषवती' इत्यत्र विद्वद्व्यावृत्तत्वं विशेष इति बोध्यम् ।

प्रथममवधेरपेक्षणादिति भावः। **एतदेवेति**। अध्याहारादावृत्तेर्लघुत्वादिति भावः। **सृतिस्सरणमिति टीकया** देवयानपितृयाणमार्गद्वयसाधारण्येन **सृतिशब्द-व्याख्यानात्, आङश्च** अभिविध्यर्थकत्वसंभवात्, **मार्गावसानपर्यन्तं व्यापारात्** इत्येवं हेतुं व्याख्याय, प्रकृताभिप्रायेण **टीकायां देवयानेन पथे-त्यादिकमुक्तम्**। तद्व्याचष्टे—**ब्रह्मलोक(प्राप्तेरि)[प्राप्ती]त्यादिना। विद्या-नुष्ठानप्रारम्भस्य फलपर्यन्तत्वादिति** पूर्वेणान्वयः। P. 973 6

**वास्तव इति। अथवेत्यादिना** स्वेनोक्त इत्यर्थः। **सगुणेति**। लोकविशेषे तत्प्राप्तेरेव भोगोपयोगित्वादिति भावः। **तस्मादिति टीकापदस्या-नन्वयमाशङ्क्याह—उपक्रमेतीति। उत्क्रान्तिविशेषमेवाह—मूर्धन्यनाड्येति**। मूर्धानमभिनिस्सृतया हृदयनाड्येत्यर्थः। **भुक्त्वेत्येवमर्थत्वापातादिति**। उप-पूर्वस्य वसतेरभोजनार्थकत्वेन **अनुपोष्येत्यस्य** भोजनार्थकत्वावश्यंभावादिति भावः। **अतो व्याचष्टे इति**। उपपूर्वस्य 'उष दाह' इत्यस्य 'यदनुपोष्य प्रयायात्' 'वेदिमुपौषती'त्यादौ दाहार्थकत्वदर्शनादिति भावः। P. 973-9

॥ इति आसृत्युपक्रमाधिकरणम् ॥

---

## ॥ अथ आपीतेस्संसारव्यपदेशाधिकरणम् ॥

**सू०॥ तदाऽऽपीतेस्संसारव्यपदेशात् ॥ ८ ॥**

**सू०॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥**

**सू०॥ नोपमर्देनातः ॥ १० ॥**

**सू०॥ अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥**

---

१. कल्पतरौ 'आसृत्युपक्रमादित्येतदेव, इति शोधनीयम्। टीकायां 'आकार्य-ब्रह्मलोकप्राप्तेः अयं विद्योपक्रम आरंभः प्रयत्न इति यावत् तस्मात्' इत्येतदनन्तरं वाक्य-समाप्तिः। 'प्रेप्सते पुरुषाय' इति पाठः।

२. कल्पतरौ 'मुक्त्वा' इत्येतत् 'भुक्त्वा' इति शोधनीयम्। भाष्ये 'आपे-क्षिकममृतत्वं प्रेप्सते संभवति तत्र सृत्युपक्रमः' इत्यत्र तत्रेति त्रल् सार्वविभक्तिकः तस्मै आपेक्षिकामृतत्वाय इत्यर्थः।

P. 974-1 **उत्क्रान्तिसामर्थ्यादेवेति।** भूतसूक्ष्माद्युपाधिमन्तरेण व्यापकस्य जीवस्य स्वरूपेणोत्क्रान्त्यसंभवादिति भावः। **स एवाद्यापि न सिद्ध इति।** यद्यपि 'स एव कर्मानुस्मृतिशब्दविधिभ्यः' इत्यधिकरणे सुषुप्तस्य सत्संपत्तिः सावशेषेति समर्थितत्वात् तेन न्यायेन प्रायणकालीनापि सत्सम्पत्तिः सावशेषेति सिध्यति, तथापि सुप्तोत्थितस्य पूर्वानुष्ठितस्मरणादिवत् प्रेत्य पुनश्शरीरं परिगृह्णतः तद्दर्शनात् अनेकदिनसाध्यकर्मविधिवत् अनेकजन्मसाध्यकर्मविध्यदर्शनाच्च स न्यायो नात्र स्पष्ट इति भावः। **सङ्गतिरिति।** निर्वाहकत्वसङ्गतिरित्यर्थः। **प्रयोजनमुक्तमिति।** उत्क्रान्तिसिद्धिलक्षणप्रयोजनमुक्तप्रायमित्यर्थः।

ननु यदि वागादिवृत्तिलयनिरूपणमुत्क्रान्तिसिद्ध्यर्थम्, तर्हि 'प्राणः तेजसि' इति श्रुतिस्वारस्यानुरोधेन प्राणवृत्तेस्तेजसि लयेऽपि प्रयोजनीभूतोत्क्रान्तिसिद्धेः, 'सोऽध्यक्षे तदुपगमादिभ्यः' इत्यधिकरणे प्राणस्य जीवे वृत्तिलयनिरूपणं P. 975-1 व्यर्थमित्यत आह—**यस्त्विति।** यथाश्रुति तेजस्येव सिद्धेऽपि वृत्तिलये तल्लक्षिते[अध्यक्षे]जीवे वृत्तिलय उक्त इत्यर्थः। **हेतुगर्भविशेषणं इति।** ततश्चानुमानद्वयेऽपि रूपवत्त्वात् इति हेतुशरीरे प्रविष्टमिति भावः। **अनेकशब्दो बहुत्ववाचीति।** अन्यथा एकभिन्नपरमाणुद्वयारब्धे द्व्यणुके व्यभिचारानिवारणादिति भावः।

**चक्षुस्स्पर्शनाभ्यामिति।** चक्षुस्स्पर्शनजन्योपलब्धिविषयत्वयोग्यं इत्यर्थः। **प्रतिहन्येतेति।** प्रतिबन्धयोग्यक्रियाकं स्यादित्यर्थः। तेन चक्षुस्स्पर्शनानुपलब्धेऽङ्कुरादौ जालसूर्यमरीचिस्थे अप्रतिहते त्र्यणुकादौ च साध्ययोरपि सत्त्वान्न हेत्वोर्व्यभिचार इति द्रष्टव्यम्। **महत्त्वे सतीति। रूपग्रहणं** स्पर्शस्याप्युपलक्षणम्। तेन चाक्षुषत्वे, महत्त्वे सत्युद्भूतरूपवत्त्वं हेतुः। स्पार्शनत्वे च, महत्त्वे सत्युद्भूतस्पर्शरूपवत्त्वम्। तथा च न प्रभायां व्यभिचार इति भावः।

**यत्तु,** प्रभा तेजसो रूपं, तदनुमेयं तदाश्रयद्रव्यमिति मतेनैतदिति न व्यभिचार इति परिमले उक्तं, **तदयुक्तम्।** तत्रैव व्यभिचारात्। अनेकदेशव्यापिप्रभानुरोधेन तदाश्रयद्रव्यस्य महत्त्वावश्यंभावात्। गुणानामाश्रयव्यतिरिक्तप्रदेशे P. 975-4 अवस्थानाभावस्य संप्रतिपन्नत्वादिति ध्येयम्। **महत्त्वेत्यादि** प्रथमसाध्याभि-

१. कल्पतरौ 'सावशेषस्तेजआदिलयः' इति पाठः।

प्रायेण। द्व्यणुकवायुद्रव्ययोऽपि कुड्याद्यावृते अप्रवेशेन प्रतिहत्या द्वितीयसाध्यस्य तत्र सत्त्वात्, इति द्रष्टव्यम्। **प्रथमसूत्रार्थेनेति**। अध्याहृतस्यावतिष्ठत इत्यस्यार्थेनावस्थानेनेत्यर्थः। **आकाङ्क्षार्थमिति**। **अवतिष्ठते** चेत्यवस्थानस्य समुच्चितत्वकथने, केन समुच्चय इति सूत्रान्तराकाङ्क्षोत्थानादिति भावः। **भिन्नक्रम इतीति**। इत्यादिनेति भावः। P. 975-4

**चक्षुष्यनैकान्तिकत्वमिति**। यदि यथाश्रुतं महत्त्वे सति रूपवत्त्वं, महत्त्वे सति स्पर्शवत्त्वं च हेतुः, तदा **चक्षुष्यनैकान्तिकत्वमाहेत्यर्थः**। उद्भूतत्वविशेषणे च, स्वरूपासिद्धिं **स्वरूपमेवेत्यादिदार्ष्टान्तिकटीकाव्याख्यानेन** दर्शयति—**तस्य लिङ्गशरीरस्येति**। **चाक्षुषस्येति**। सम्बन्धसामान्यतद्धितेन प्रकृतिविकृतिभावसम्बन्धकथनात् चाक्षुषशब्देन चक्षुःप्रकृतिभूतं तेज उच्यत इत्याशयेनाह—**चक्षुराकारेति**। **दृष्टान्तं साधयतीति**। ननु चक्षुष उद्भूतरूपस्पर्शदर्शनात् कथमनुद्भूतरूपस्पर्शत्वमित्याशङ्क्य(प्रसन्नान्धस्य)[अन्धस्य]रूपाद्यनुपलम्भेन गोलकातिरिक्तमेव चक्षुरिन्द्रियं, तच्च तज्जनकादृष्टवशादनुद्भूतरूपस्पर्शम्। तस्य कर्मणः तादृक्स्वभावत्वमित्याशयेन साधयतीत्यर्थः। P. 975-6

**स्वरूपतस्सौक्ष्म्यं इति**। अनुद्भूतरूपस्पर्शत्वेन(स्वच्छ)सूक्ष्मतारूपमित्यर्थः। **परिमाणतस्सौक्ष्म्यमिति** पाठं दृष्ट्वा व्याचष्टे—**अस्ति लिङ्गशरीरस्येति शेष इति**। **सूक्ष्ममिति पाठे तु** लिङ्गशरीरमिति शेषो बोध्यः। अपेक्षितहेतुसमर्पणेन दृष्टान्तं विशदयन्नाह—**यथा त्रसरेणव इति**। **टीकायां—प्रमाणतस्तथोपलब्धेरिति व्याचष्ट इति**। **सूत्रभागमिति शेषः**। **सूक्ष्मत्वेनेति**। सूत्रनिर्दिष्टेनेत्यर्थः। **अस्वच्छत्वमुपाधिमिति**। यद्यपि कुड्यादिप्रतिहते प्रभादावस्वच्छत्वाभावेन साध्याव्यापकत्वमुपाधेः, तथापि यावन्मूर्तप्रतिहननीयत्वं साध्यं, तस्यैव विवादविषयत्वात्, तच्च न प्रभादाविति न साध्याव्यापक- P. 976-4

१. कल्पतरौ 'चक्षुष्यनैकान्तिकत्वमुक्तहेत्वोराह' इति शोध्यम्।

२. सूत्रे 'प्रमाणतश्च' इत्यत्र चकारः स्वरूपसमुच्चयार्थः। तथा च स्वरूपतः प्रमाणतश्च (परिमाणतश्च) सूक्ष्मं इत्यर्थः। एवं च टीकायां 'जालसूर्यमरीचिभ्योऽन्यत्र प्रमाणतः सौक्ष्म्यात्।' इति पाठः। लेखकप्रमादात् सौक्ष्म्यादित्यंशः गळितः, नोपलभ्यन्ते इत्यध्याहारादिभिः कल्पतरौ भामतीयोजना क्रियते। इति वक्तुमुचितम्। तथापि प्रमाणतः इति पदस्यावृत्त्या प्रमाणतं उपलब्धेरित्यपि अन्वेतुं शक्यते इति आभोगाशयो भाति।

P. 976-6 त्वमिति भावः । **नोपमृद्यत इति शेष इति** । भाष्यगतं नोपमृद्यत इति पदद्वयं टीकावाक्यस्य शेष इत्यर्थः ।

स्थूलदेहातिरिक्तसूक्ष्मदेहसाधकत्वेनोष्मप्रत्यक्षस्यैवोपन्यस्तत्वादुपपत्तेरि-त्यस्य युक्तिपरत्वे अनन्वय इत्यतः उक्तं **टीकायामुपपत्तिः प्राप्तिरिति** । तत्र देशान्तरसंयोगरूपा प्राप्तिरिह न साधनीयेत्यतो व्याचष्टे—**लाभ इति** । सद्भाव इत्यर्थः । **दृष्टश्रुताभ्यामित्यादिटीकोक्तं** सूक्ष्मशरीरसद्भावे प्रमाणं

P. 976-6 प्रकटयति—**दृष्टमित्यादिना** । ज्ञातं ज्ञानम् । **श्रवणमिति** । 'कर्णौ पिधाय निनदमिव शृणोती'ति श्रुतिनिर्दिष्टमित्यर्थः । यद्यपि ज्योतिरधिकरणे पिहितकर्णपुटेन श्रूयमाण आन्तरः शब्दो जाठराग्नेरित्युक्तम् । तथापि तद्द्वारा तदीयोष्मद्वारा[च]लिङ्गशरीरस्फोरकत्वमपि तस्याविरुद्धमिति तदप्युपन्यस्तमिति द्रष्टव्यम् ।

॥ इति आपीतेस्संसारव्यपदेशाधिकरणम् ॥

---

## ॥ अथ प्रतिषेधाधिकरणम् ॥

सू०॥ प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

सू०॥ स्पष्टो ह्येकेषाम् ॥ १३ ॥

सू०॥ स्मर्यते च ॥ १४ ॥

P. 977-1 **भाष्य[1] एवोक्तेति** । अधिकरणतात्पर्यकथनपरेण भाष्येण सङ्गतेरपि सूचनादिति भावः । **स जीवात्मा तथोक्त इति** । भोगायतनत्वसम्बन्धेन शरीरस्य तदीयत्वादिति भावः । **टीकायां—तदा सर्वनाम्नेति** । तच्छब्देन सर्वनाम्नेत्यर्थः । **कथं तस्येति** । लिङ्गशरीरध्वंसमन्तरा मोक्षायोगादिति भावः । हिरण्यगर्भप्राप्त्यनन्तरं लिङ्गशरीरध्वंसादुपपद्यते मोक्ष इति परिहरति—

P. 977-2 **अत आहेति** । **टीकायां—स पुनरिति** । सलिङ्गो लिङ्गशरीरसहितो जीवो

---

१. भाष्ये 'प्रतिषेधति ।' इति वाक्यसमाप्तिः ।

२. टीकायां 'प्राणोपलक्षितसूक्ष्मशरीरस्य' इति पाठः ।

**हिरण्यगर्भपर्यन्तं संसारमण्डलं ब्रह्मनाड्या** ब्रह्मप्राप्तिमार्गभूतया सुषुम्नाख्यया नाड्या तद्द्वारा निर्गमनेन **अतिक्रम्य परस्मिन्निर्विशेषे ब्रह्मणि लीयंत** इत्यर्थः ।

**सिद्धान्ते इत्यर्थ इति** । 'यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्त्याहो नेति' इति पृष्टयोः पक्षयोः 'नेति होवाच याज्ञवल्क्य' इत्युक्तरूपे सिद्धान्तपक्ष इत्यर्थः । ननु **संसारिण एवेत्ययुक्तम्** । प्रश्नप्रतिवचनयोर्विद्वद्विषयत्वस्य सिद्धान्त्यभिमतत्वादित्याशङ्क्य, विदुषो हिरण्यगर्भलोकप्राप्त्यनन्तरं मुक्तिरिति पूर्वपक्षनिराकरणार्थं विदुष एव संसारमण्डलवर्तित्वावस्थाप्रदर्शनार्थं तद्विशेषणमित्याशयेन व्याचष्टे—**यदुक्तमित्यादिना** । P. 977-2

**नन्वेवम(प्य)स्तु अविदुष इत्यादिशङ्का** न पूर्वपक्षिणः । अविदुष इव विदुषोऽप्युत्क्रान्तिरस्तीत्येव तदभिमतत्वादित्यतः **तटस्थशङ्केति** व्याचष्टे—**मध्ये कश्चिदिति** । नन्वविदुष एवेत्यत्र को हेतुः? प्रदेशान्तरस्थेन वाक्येन विदुषोऽप्युत्क्रान्तिप्रतिषेधादनुत्क्रान्तिसिद्धेः । शङ्कायाः फलं वा किम्? इत्यतः शङ्कातात्पर्यमाह—**बृहदारण्यके हीत्यादिना** । P. 978-1

आर्तभागप्रश्नगतोत्क्रान्तिप्रतिषेधोऽपि विद्वद्विषय एव, पूर्वसन्दर्भे 'अग्निर्वै मृत्युः सोऽपामन्नं' इत्यादिना मृत्योरपि मृत्युसंभावनार्थं दृष्टान्तप्रदर्शनपूर्वकं, **'यदिदं सर्वं मृत्योरन्न'मित्यादिना परदेवतायाः प्रस्तुतत्वेन, तदभिज्ञस्य विदुष एव बुद्धिस्थत्वात्**, 'यत्रायं पुरुष' इति पुरुषशब्दस्य विदुष्यप्यविरोधात् । न च 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येती'ति उत्तरसन्दर्भस्याविद्वद्विषयत्वात् तदनुरोधेनार्तभागप्रश्नगतोत्क्रान्तिप्रतिषेधोऽविद्वद्विषय एव किं न स्यादिति वाच्यम् । पूर्वसन्दर्भानुरोधेनोत्तरवाक्यार्थनिर्णयस्यैव न्याय्यत्वादित्याशयेन परिहारतात्पर्यं दर्शयन्नाह—**आर्तभागप्रश्नेऽपीति**[3] । P. 978-4

ननु 'स उच्छ्वयत्याध्मायती'त्यादिश्रुत्यनुरोधेन 'न तस्मा'दिति श्रुतिगतस्य तच्छब्दस्य देहिपरामर्शकस्य लक्षणया देहपरत्वमिति किमित्याश्रीयते?

---

१. भेदाभेदिमतमिदमिति शास्त्रदर्पणे उक्तम् ।

२. टीकायां 'देह्यपादानस्य उत्क्रमणस्य' इति पाठः । उपरि 'नन्वेवमस्त्वविदुषस्संसारिणः' इति पाठः ।

३. कल्पतरौ 'यदिदं सर्वं मृत्योरन्नं' इति पाठः ।

एतच्छ्रुत्यनुरोधेन 'स उच्छ्वयती'तिश्रुतिगतस्यैव तच्छब्दस्य देहपरामर्शकस्य देहिपरत्वमेव किमिति नाश्रीयत इत्यत आह—उत्क्रान्त्यवधेरिति । उच्छ्वयनं वायुना पूरणम्, आदिशब्देन 'आध्मायती'त्यादिश्रुत्युक्तं शब्दायनादिकं गृह्यते। अन्यथा नेतुमिति । जीवे नेतुमशक्यत्वात् स इत्यस्याभेदोपचारेण न देहिपरत्वमिति, तदनुरोधेन 'न तस्मा'दित्यत्रैवोपचारः समाश्रित इत्यर्थः । (P 979-1)

षष्ठीपाठे च उपचाराभावस्यैवाव्यवधानेन निर्दिष्टत्वात् तत्रैव युक्त्यन्तरमुच्यत इति भ्रमं वारयति—पञ्चमीपाठ इति । अन्यदिति स्वरूपकीर्तनार्थम्, स्वव्यतिरिक्तं गन्तव्यं यस्य त्रिविधपरिच्छेदरहितब्रह्मविदो नास्तीत्यर्थः । मार्गशब्दः साधनलक्षक इत्याशयेनाह—ब्रह्मप्राप्तीति । ज्ञाननिष्ठा अपि सन्तो देवा मुह्यन्तीत्युक्ते अतिशयो लभ्यत इति मनसि निधाय देवा अपीत्यपिशब्दस्य पदैषिण इत्यनेन योजना दर्शितेत्याशयेनाह—इत्युक्तेऽर्थे इति । (P. 980-1)

॥ इति प्रतिषेधाधिकरणम् ॥

---

## ॥ अथ कलाप्रलयाधिकरणम् ॥

### सू०॥ तानि परे तथा ह्याह ॥ १५ ॥

(P. 980-3) भाष्य एव विशदा इति । तथा च, तानि पुनरित्यनेन भाष्येण येषां प्राणानामुत्क्रान्तिर्निरूपिता, तेषामेव लयो निरूप्यत इति सूचनात्,

---

१. कल्पतरौ 'उच्छ्वयनादिनिर्देशस्य' इति पाठः ।

२. कल्पतरौ 'न्यायद्वयमाह—अपिचद्वयेन।' इति शोधनीयम् । भाष्ये 'मूर्ध्नो वा अन्येभ्यो वा शरीर' इति पाठः ।

३. भाष्योदाहृतोऽयं श्लोकः भारते मोक्षधर्मपर्वणि वर्तते। अनन्तरश्लोकोऽपि तत्रैव। अस्य श्लोकस्य 'अपदस्य प्राप्यपद(मार्ग)शून्यस्य ब्रह्मविदः पदैषिणः देवा अपि मार्गं न जानन्ति। तदभावादिति योजना' इत्यानन्दगिरीयादिषु उक्तोऽर्थ एव ब्रह्मविदो मार्गाभावरूपभाष्योक्तार्थबोधकत्वात् साधुः। न तु टीकाकल्पतर्वादृतोऽर्थः। तत्र तदर्थाप्रतीतेः। कल्पतरौ 'अपदः तस्य' इति. 'किमु अतन्निष्ठाः' इति च शोधनीयमिति भाति ।

प्रसङ्गसङ्गत्या आद्याधिकरणप्रवृत्तिरिति भावः। **करणलयवचने सतीति।** P. 980-3 'यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ती'ति पुरुषे करणलयप्रतिपादनादिति भावः। **[1]प्रतिष्ठाविलयनश्रुती इति।** प्रतिष्ठाशब्दनिर्दिष्टप्रातिस्विकस्वस्वप्रकृत्येकीभावश्रुतिरात्यन्तिकतया पुरुषे लयप्रतिपादकश्रुतिश्चेत्यर्थः।

**मनं एकमिति।** तथा च प्राणशब्दोदितानि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि ज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि, मनश्च, तथा चैकादश, सूक्ष्माणि भूतानि भूतसूक्ष्मरूपाणि च पञ्चेति **पूर्वटीकार्थ** इति भावः। **इतरा तु विद्वत्प्रतिपत्त्यपेक्षेत्युत्तरभाष्यानुरोधेन, सा खलु व्यवहारापेक्षेति पूर्वभाष्ये** व्यवहारशब्दो व्यवहरतीति व्युत्पत्त्या **लौकिकपुरुषपर** इति आशयेनाह **टीकायां व्यवहारो लौकिक इति।** फलितमर्थं दर्शयितुं **सांव्यवहारिकेति टीका।** तत्र प्रत्यभिलापादिसंव्यवहारफलकं प्रमाणं दर्शयन्नाह—**सांव्यवहारिकेति।** घ्राणं पार्थिवं, गन्धवत्त्वादित्याद्यनुमानेनेत्यर्थः। P. 980-8

**असाधारणानामिति।** तत्तज्जीवासाधारणानामपि सर्वसाधारणेषु भूतेषु लयः। तदीयसूक्ष्मरूपस्य तस्मिन्नेव लयौचित्यादिति भावः। **ब्रह्मणि बाधः इत्यर्थ इति।** तथा च प्रत्यक्षादिप्रमाणगम्यो लौकिको लय एकीभावरूपः प्रतिष्ठाश्रुत्यर्थः। तत्त्वावेदकवेदान्तगम्यस्तु बाधरूप इति विषयभेदादविप्रतिपत्तिः श्रुत्योरिति भावः।

'यथेमा नद्य' इत्यादिदृष्टान्तश्रुत्यर्थं सङ्ग्रहेण दर्शयन्, भाष्योदाहृतश्रुतेरर्थमाह—**यथा नद्य इति।** **उत्तराधिकरणे** व्याख्येयांशस्यातिमन्दत्वात्, P. 980-9 **एतदधिकरणो**दाहृतवाक्यानन्तरवाक्यतया बुद्धिस्थत्वाच्च, तद्द्वयोरपि वाक्ययोर्मिलितयोरेव आत्यन्तिकलयप्रतिपादकत्वमिति स्फोरणार्थमुत्तराधिकरण-

---

१. कल्पतरौ 'प्रतिष्ठयो'रित्यादिः पाठः दृश्यते। तत्र 'विलयनश्रुतिगताः' इत्येतत् 'विलयनश्रुती गताः' इति शोधनीयम्। आभोगे पाठान्तरं धृतं पाठद्वयमेकार्थकमिति परिमले उक्तम्। प्राणादिनामान्तषोडशकलासु प्रश्नपठितासु नामवर्जिताः पञ्चदशकलाः। इति श्रुतिबलात् ज्ञायते। भामत्यामन्यथा उक्तम्।

P. 980-10 भाष्योदाहृतमपि 'मिद्येते चासा'मित्यादिवाक्यमिहैव व्याचष्टे— आसां कलानामित्यादिना । पूर्ववाक्ये कलानामस्तमयश्रुत्यैव नामरूपलयस्योक्तत्वादस्मिन् वाक्ये नामरूपग्रहणं तच्छक्तिपरमित्याशयेनाह— शक्त्यात्मके अपीति ।

॥ इति कलाप्रलयाधिकरणम् ॥

---

## ॥ अथ कलाऽविभागाधिकरणम् ॥

### सू०॥ अविभागो वचनात् ॥ १६ ॥

पूर्वाधिकरणसिद्ध एव कलाप्रलये विशेषचिन्तनात् सङ्गतिरिति सूचयितुं भाष्ये स पुनरित्युक्तमिति द्रष्टव्यम् । पूर्वपक्षानुत्थितिमाह— टीकायां— निमित्तापाय इत्यादिना । ननु विदुषः कलाप्रलयः सावशेषो भवितुमर्हति, प्रलयत्वादितरप्रलयवत्, इत्यनुमानेन प्रवृत्तायाः शङ्कायाः केनापनय इत्यत P. 981-1 आह— श्रुतिविरोधेनेति । तथा च प्रबलश्रुतिविरोधादनुमानं बाधितं, मूलोच्छेदराहित्यरूपोपाधिग्रस्तं चेति भावः ।

॥ इति कलाऽविभागाधिकरणम् ॥

---

## ॥ अथ तदोकोऽधिकरणम् ॥

### सू०॥ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥

समाप्ता प्रासङ्गिकी कथेत्यादिभाष्येण कण्ठत एवास्याधिकरणस्यावसरलक्षणा सङ्गतिरुक्तेति बोध्यम् । टीकायामविदुषश्चेति च्छेदः । विद्यासामान्यरहितस्येत्यर्थः । टीकायां— मूर्धादिभ्य इत्यादिशब्देन चक्षुरादिद्वारान्तराणि गृह्यन्ते । तदोकोऽग्रज्वलनं तत्प्रकाशितद्वार इति सूत्रभागस्य विद्वदविद्वत्साधारण्यं भाष्योक्तं स्पष्टीकुर्वन् सूत्रार्थकथनेन सिद्धान्तमाह—

**टीकायां–तस्योपसंहृतेत्यादिना । उच्चिक्रमिषतः** उत्क्रमितुमिच्छतः । **तस्य** P. 981-6 **प्रज्वलनं यज्ज्ञान**[1]**मिति टीकया सौत्रज्वलनपदं ज्ञानपरत्वेन** व्याख्यातम् । तच्च किं विषयकमित्याशङ्क्याह—**कर्मवशादिति । टीकायां–गत्यै उपदिष्टेति** । मूर्धन्यनाडी तया गत्यर्थमेवोपदिष्टा । अन्यथा तदुपदेशवैयर्थ्यादिति भावः ।

**कर्मणि षष्ठीति** । 'अधीगर्थदयेशां कर्मणि' इति विधानादित्यर्थः । **कथं तया ब्रह्मलोकप्राप्तिरिति । ब्रह्मलोकशब्दः** अर्चिर्लोकपरः । 'आतिवाहिकास्तल्लिङ्गात्' इति न्यायेन तत आरभ्यातिवाहिकैरेव विद्युल्लोकपर्यन्तं नयनेन, P. 982-1 तदनन्तरममानवपुरुषेणैव च ब्रह्मलोकं प्रति नयनेन तावत्पर्यन्तं मूर्धन्यनाडीव्याप्तेः प्रयोजनाभावादिति ध्येयम् । नाडीनां सिराणां शरीरमात्रनिष्ठत्वात् कथं मूर्धन्यनाड्या आदित्यमण्डलानुप्रवेश इत्याशङ्कां निराकर्तुं **टीकायां रश्मिभिरेकीभूतेत्युक्तम्** । नाडीसम्बद्धानां रश्मीनामादित्यसम्बन्धात् तद्द्वारा ब्रह्मनाड्या आदित्यमण्डलानुप्रवेश इति तदर्थः । तत्र रश्मीनां नाडीसम्बन्धे किं प्रमाणमित्यत आह—**ता आसु नाडीष्विति** ।

**टीकायां–तयैवान्तकाल इति** । अन्यथा तदनुशीलनवैफल्यादिति भावः । **नानागतय इति** । ततश्च शतसंख्याका मूर्धन्यनाडीव्यतिरिक्ता P. 982-2 हृदयस्य नाड्यः तिर्यङ्मुखत्वाधोमुखत्वादिप्रकारेण नानागतयः सत्यः तत्तत्कर्मफलभोगार्थोत्क्रमण एव भवन्ति, नामृतत्वाय भवन्तीति 'विष्वङ्ङन्या उत्क्रमणे भवन्ती'ति श्रुत्यर्थ इति भावः ।

॥ इति तदोकोऽधिकरणम् ॥

---

१. टीकायां 'तस्य प्रज्वलनं यत् ज्ञान'मिति पाठ इति ज्ञायते । 'तत्प्रकाशितद्वारः प्रकाशितविनिष्क्रमद्वारः' इति पाठः ।

## ॥ अथ रश्म्यधिकरणम् ॥

### सू०॥ रश्म्यनुसारी ॥ १८ ॥

### सू०॥ निशि नेति चेन्न संबन्धस्य यावद्देह-भावित्वाद्दर्शयति च ॥ १९ ॥

प्रकृतायामुत्क्रान्तावेव विशेषचिन्तनात् सङ्गतिरिति शताधिकया P. 982-3 **नाड्या निष्क्रामन्निति भाष्येण** सूचितमिति द्रष्टव्यम् । **सूत्रं योजयतीति** । उत्तरसूत्रे 'निशि नेति चे'दिति शङ्कादर्शनेन तत्सामर्थ्यलब्धं **रात्रावहनि चेति** पदद्वयं गृहीत्वा **सूत्रं योजयती**त्यर्थः । यथोक्तप्रतिज्ञायाम**विशेषश्रवणं** भाष्योक्तं न हेतुः, रात्रौ रश्म्यभावस्य लोकसिद्धत्वादित्यत आह—**सिद्धान्ते हेतुस्त्विति** ।

तापादिकार्यान्यथानुपपत्तिप्रसूतार्थापत्तिर्निशि रश्मिसद्भावे प्रमाण-मित्याह—**निश्यपीति** । अस्य हेतोः **सौत्रत्वं** दर्शयितुमाह—**अनेनेति** । **टीकोदाहृतश्रुतिपाठो** भाष्योदाहृतश्रुतिपाठविरोधीत्यत आह—**व्या-** P. 983-1 **ख्यानपूर्वकमिति** । 'सलिलमये शशिनि रवेर्दीधितयो मूर्च्छिताः प्रति-फलंती'त्यादिज्योतिश्शास्त्रबलेन चन्द्रमसो जलविकारत्वावगमात् तस्य स्वतः प्रकाशो बाधित इत्याशयेन परिहरति—**तत्राहेति** ।

'निशि नेति चे'दिति सूत्रावयवसामर्थ्यलब्धान् पूर्वपक्षप्रकारान् निरा-कर्तुं—**यदि च रात्रावित्यादिभाष्यम्** । तद्व्याख्यानार्थं, **ये त्वाहुरित्यादि-टीका** । तत्र तृतीयप्रकारनिरासे, **यावत्तावदुपबन्धेन निरपेक्षगतिश्रवण-**विरोधो हेतुरुक्तः । स न युक्तः । **यावत्तावच्छब्दयोः** साकल्याद्यर्थकत्वेन नैरपेक्ष्यार्थकत्वाभावादित्यतस्तात्पर्यमाह—**स यावत् क्षिप्येन्मन इत्यादिना** । 'अथ यत्रैतदस्माच्छरीरादुत्क्रामती'ति श्रुतिं व्याचष्टे—**अथ विशेषेति** । 'अह-P. 983 6 रेवैतद्रात्रौ विदधाती'ति श्रुतिं व्याचष्टे—**यद्रात्रौ ताप इति** ।

॥ इति रश्म्यधिकरणम् ॥

---

1. टीकायां 'यावद्देहभावी हि' 'चन्द्रातपः संगृह्यते' 'सौरीणां भासां' इति पाठः।

## ॥ अथ दक्षिणायनाधिकरणम् ॥

सू०॥ अतश्चायनेऽपि दक्षिणे ॥ २० ॥

सू०॥ योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥

पूर्वोक्तहेतूपजीवनात् **सङ्गतिः भाष्य एव स्पष्टा**। **टीकायां पूर्वपक्षबीजमिति**। दक्षिणायने म्रियमाणो विद्वान् विद्याफलं प्राप्नोति, न वेति सन्देहे न प्राप्नोतीति पूर्वपक्षे, **हेतुमाहेत्यर्थः**। **टीकायामपनोदमाहेति**। अपनोदप्रकारमाहेत्यर्थः। **प्राशस्त्यप्रसिद्धेरिति**। आचारमूलिकायाः प्राशस्त्यप्रसिद्धेः, सूत्रगतातश्शब्दपरामृष्टश्रुत्यनुमतप्रतीक्षानुपपत्त्यादिहेतुबलाद् विद्वद्विषयत्वेन सङ्कोच इति भावः। **द्वितीयाबहुवचनमिति**। ग्राहयतेर्द्विकर्मकत्वादिति भावः। **न्यायादिति**। न्यायमूलकस्मरणादित्यर्थः। P. 984-1

**टीकायां—अपि त्विति**। स्वस्थानात् स्थानान्तरप्रापिका उत्तरायणादिलोकाभिमानिनीर्देवताः **प्रतिपादयती**'त्यातिवाहकास्तल्लिङ्गात्' इत्यत्र वक्ष्यति भाष्यकार इत्यर्थः। योगसांख्ययोः स्मार्तत्वोक्तिमहिमलब्धं हेतुमाह—**टीकायां—प्रत्यासत्तेरिति**। **स्मार्तेन कालभेदविनियोगेन स्मार्तत्वप्रत्यासत्त्या** योगसांख्यविहितोपासनाया एव बुद्धिस्थत्वादिति भावः। **उच्यत इत्यादिभाष्यं** व्याख्यातुमत्र **यदीत्यादिटीका**। तत्र श्रुतावर्चिरादीनामेव निर्दिष्टत्वेन कथमग्निर्ज्योतिरित्यादिटीकेत्यत आह—**अग्निरर्चिर्देवतेति**। **ज्योतिरादित्यदेवतेति**। यद्यपि श्रुतौ 'संवत्सरादादित्य'मित्यहरादिभ्यः पश्चादादित्यदेवता निर्दिष्टा, स्मृतौ च ततः पूर्वमिति विरोधः। तथापि स्मृतौ पाठक्रमो न विवक्षितः किं त्वार्थ इति न विरोध इति भावः। P. 984-7

**विषयव्यवस्थां** प्रकटयति—**स्मार्तकालविधेरिति**। **निर्गुणस्य** सत्त्वादिगुणरहितस्य **पुरुषमात्रस्य** चेतनमात्रस्य सतः पुरुषस्य **गुणकार्येभ्यो** बुद्ध्यादिभ्यो यो **विवेकः** पृथग्भावः, यश्च तादृग्रूपावस्थानात्मककैवल्योपायभूतः P. 984-3

चित्तवृत्तिनिरोधः, तदात्मकौ यौ सांख्ययोगौ सांख्ययोगशास्त्रोक्तावर्थौ P. 985-1 तद्विषयत्वेनेत्यर्थः । टीकायामातिवाहिक्य एवेति । श्रुत्यानुगुण्याय 'यत्र काले त्वनावृत्ति'मित्यादिस्मृतेरप्यातिवाहिकदेवतापरत्वादिति भावः ।

॥ इति दक्षिणायनाधिकरणम् ॥

इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डभट्टमहोपाध्यायतनूभवेन
श्रीमन्नारायणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशगृह्यमाणेन
लक्ष्मीनृसिंहचरणारविन्दचञ्चरीकेण लक्ष्मीनृसिंहेन
विरचितायां कल्पवृक्षप्रदीपिकायां
आभोगाख्यायां चतुर्थाध्यायस्य
द्वितीयः पादः ॥

॥ श्रीः ॥

॥ श्रीलक्ष्मीनृसिंहाय मङ्गलम् ॥

# ॥ चतुर्थस्याध्यायस्य तृतीयः पादः ॥

## ॥ अथ अर्चिराद्यधिकरणम् ॥

### सू०॥ अर्चिरादिना तत्प्रथितेः ॥ १ ॥

**भिन्नप्रकरणत्वादित्यादि**पूर्वपक्षभाष्यं व्याख्यातुं, **भिन्नप्रकरणस्थत्वादित्यादि**टीका । तत्र **श्लोके** मार्गशब्देन विषयप्रदर्शकभाष्यनिर्दिष्टा मार्गा उच्यन्त इत्याशयेनाह—**अर्चिराद्य इति । भिन्ना एवैते पन्थान इति** पूर्वपक्षोपसंहारभाष्यानुरोधेन **श्लोकेऽप्यनपेक्षा इति** सावधारणमित्यभिप्रेत्याह—**नत्वनेकेति** । आद्यं हेतुं विद्यैक्यविषयत्वेन प्रश्नपूर्वकं योजयति—**कुतः? यत्र विद्यैक्येऽपीति । गतिविशेषणे इति ।** मार्गस्य विशेषणे पर्वभिर्भेद इत्यर्थः । **देवलोकादाविति** । देवलोकादौ विशेषणे भेद इत्यर्थः । **छान्दोग्ये** 'मासेभ्यः संवत्सर'मिति मासानन्तरं संवत्सरो निर्दिष्टः । **बृहदारण्यके तु** तस्यामेव विद्यायां 'मासेभ्यो देवलोक'मिति देवलोको निर्दिष्ट इति भावः । **तत्र भिन्नेति** । तादृशविद्याविषये **भिन्नप्रकरणस्थत्वादित्ययं** हेतुः मार्गभेदसाधकत्वेन **टीकायामुक्त** इत्यर्थः ।

86-1

अवशिष्टान् हेतून् भिन्नविद्याविषयत्वेन योजयति—**विद्याभेदे त्विति । योगेत इति** । इत्यादिहेतुत्रयमित्यर्थः । **एतद्व्याचष्ट इति** । त्वराया मार्गभेदसाधकत्वं कथमित्याशङ्क्य, क्वचिद्वेगवत्त्वश्रवणं अन्यत्र तदभावं सूचयति, तथा च तादृशश्रुत्युपदिष्टयोर्मार्गयोर्भेदावगतिरित्येवं **व्याचष्ट** इत्यर्थः ।

P. 986-3

---

१. अत्र कल्पतरौ मध्ये 'भिन्नप्रकरणस्थत्वादिभिः' इति वर्तते । कल्पतरौ 'गतिविशेषणे भेदः' इति, 'देवलोकादौ' इति च पाठः । टीकायां—'क्रमपरमपेक्ष्य' 'अथैतैरेव' 'तस्मात परस्परानपेक्षाः' इति पाठाः ।

२. कल्पतरौ 'भिन्नोपासनशेषत्वादिभिः' इति वर्तते ।

P. 986-5 **सिद्धान्तश्लोकं** प्रतीकत आदाय योजयति—**एकत्वेऽपीत्यादिना**। **अवच्छेदैः**। भागैः। **गुणानामिति**। गुणानुरोधेन प्रधानभेदकल्पनाया अयुक्तत्वादिति भावः। **एकत्वेऽपीत्यनेन** सूचितं पूर्वपक्षहेत्वन्यथाकरणं प्रकटयति—**भिन्नप्रकरणस्थत्वमित्यादिना**। **सपर्वा हीत्यादिटीकायाः** श्लोकव्याख्यानान्तर्भावं प्रकटयति—**एकमार्गस्येति**। भागभागिशब्दप्रयोगसूचितमवयवभेदस्य नावयविभेदप्रयोजकत्वमिति हेत्वन्तरं दर्शयितुमाह—**अवयविभेदकल्पनेति**।

**तत्राहेति**। **अनन्यापेक्षतामस्यावधारयति** इति वक्तव्यमित्युक्ते, तर्हि तथैवास्त्विति शङ्कायां, प्रवृत्तेन **न चैकं वाक्यमित्यादिटीकावाक्येन पूर्वपक्षश्लोकोक्तस्य अवधृतेरित्यस्यापि** निराकरणादिति भावः। **अर्चिराद्यनपेक्षतामित्यर्थ इति**। तथा च, **टीकायामितरस्येत्यस्य** अर्चिराद्यपेक्षया

P. 987-2 **इतरस्य** रश्म्यादिमार्गस्येत्यर्थ इति भावः। **रश्मीनां असम्बन्धेति**। **मार्गस्य रश्म्यसम्बन्धव्यवच्छेदमनुवदतीत्यर्थः**।

अनुवादस्य प्रयोजनमाह—**निशायामिति**। तथा च श्रुता'वेतैरेव रश्मिभि'रित्येवकारस्य, एतै रश्मिभिरूर्ध्व आक्रमत एवेत्युत्तरत्रान्वय इति भावः। क्षैप्र्यं क्षिप्रता शैघ्र्यमिति यावत्। **टीकायां—गन्तव्यभेदादपीति**। गन्तव्यभेदमपेक्ष्यापि त्वराश्रवणोपपत्तिरित्यर्थः। स्वर्गादिकं प्रति गमनमपेक्ष्य ब्रह्मलोकं प्रति गमनस्य क्षिप्रत्वमुपपादयति—**तत्र हीति**। **न त्वत्रेति** प्रतिज्ञायां हेतुमाह—

P. 987-6 **आप्रायणादिति**। ततश्च 'यं यं वापि स्मरन् भावं' इति शास्त्रानुरोधेन, ब्रह्मविषयेण चरमप्रत्ययेनास्य 'हृदयं प्रद्योतते, तेन प्रद्योतेनैष आत्मा निष्क्रामती'ति श्रुत्यनुरोधेन च प्रतिबन्धाभावेन ब्रह्मप्राप्तेरविलम्बादिति भावः।

---

१. कल्पतरौ 'एकमार्गस्यानेकपर्वसंभवं' इति पाठः। टीकायां 'युज्यन्तां' 'भिन्दन्त्विति संदेहे अभेदेऽपि' इति पाठः। 'अवधारयति' इत्यस्य निर्धारयतीत्यर्थः।

२. टीकायां 'अन्यानपेक्षा'मिति दृश्यते।

३. टीकायां 'तस्य चानपेक्षता'मिति दृश्यते। तदा तस्य इतरानपेक्षतामित्यर्थः।

४. कल्पतरौ 'न खल्विति रश्मिभिरिति' इत्यत्र 'न खल्विति' इति अधिकमशुद्धम्। 'मार्गेऽनुवदति' इति पाठः।

५. मूले क्षैप्र्यमिति न दृश्यते।

**शङ्कोत्तरमिव भातीति।** **अर्चिरादिना तत्प्रथितेरित्युक्तमित्युपसंहा-** P. 987-8 रादिति. भावः। **अपिशब्दो न सङ्गच्छेतेति।** **अतोऽपीत्यपिशब्दस्य** युक्त्यन्तरत्वद्योतकत्वादिति भावः। **व्याचष्टे इति।** तथा च भूयोऽनुग्रहन्याय-सूचनार्थमेव सूत्रे तथा निर्देशः कृतः इति भाष्याभिप्राय इति व्याचष्ट इत्यर्थः।

'ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ती'ति श्रुतिं व्याचष्टे—**ते उपासका इति।** पराशब्देन चतुर्युगसहस्रद्वयात्मकदिनमानसिद्धः संवत्सर उच्यत इत्याशयेनाह—**परा दीर्घास्समा इति।** **तस्य परास्समा वसन्तीति।** तदायुः-पर्यन्तं तत्र वास इति भावः। भाष्ये दण्डायमानतया श्रुतिपाठादेकैव तावती श्रुतिरिति भ्रमं वारयन् व्याचष्टे—**तस्मिन् वसन्तीत्यन्येत्यादिना।**

॥ इति अर्चिराद्यधिकरणम् ॥

---

## ॥ अथ वाय्वधिकरणम् ॥

### सू०॥ वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

परोक्तं संशयबीजं दूषयितुं स्वयं संशयबीजमाह—**अत्रेति।** 'यदा P. 987-12 वै पुरुषोऽस्माल्लोकात् प्रैति, मृत्वा गच्छति, स वायुमागच्छति, तस्मै स तत्र विजिहीते, आगन्तारं पुरुषमुद्दिश्य वायुस्सच्छिद्रो भवति, रथचक्रस्य मध्ये खं यथा तिष्ठति तथा छिद्रं संपाद्य तिष्ठतीत्यर्थः। तेन स ऊर्ध्व आक्रमते' तेन-छिद्रेण स आगतः पुरुषः ऊर्ध्वं आक्रमते इत्यर्थः।

अस्यां श्रुतौ **तेनेत्यस्य** ऊर्ध्वाक्रमणमात्रेण सम्बन्धादादित्यसम्बन्धे वाय्वादित्यगमनयोः पौर्वापर्याप्रतिपत्त्या श्रौतक्रमाभावेन पाठक्रमाद्वायुवरुणयोरेव पौर्वापर्यमिति **पूर्वपक्षकोटेः** उन्मेषः। **तेनेत्यस्य** 'स आदित्यमागच्छती'त्युत्त-रवाक्यश्रुतादित्यसम्बन्धे वाय्वादित्यगमनयोर्निमित्तनैमित्तिकभावावगमेन पौर्वा-

---

१. प्रकटार्थविवरणे रामानन्दीये च 'उत्तरमार्गैक्येऽपि अर्चिरादिनेति विशेषणे को हेतुरित्यत आह—भूयांसीति।' इति शङ्कोत्तरत्वेनैव व्याख्यातम्। आनन्दगिरीये एवमेव व्याख्याय अपिशब्दबलात् भामत्युक्तार्थोऽपि उक्तः।

२. परः प्रकटार्थविवरणकारः।

पर्यप्रतिपत्त्या, श्रौतक्रमविरोधे च पाठक्रमाप्रसक्तेः, वाय्वादित्ययोः एव पौर्वापर्यमिति **सिद्धान्तकोटेः** उन्मेषात् संशय इत्यर्थः ।

P. 987-13 **पाठक्रमार्थक्रमाभ्यामिति** । [यद्यपि पाठक्रमश्रुतिक्रमाभ्यामिति] वक्तव्यं **तेनेति** तृतीयाश्रुतेः पौर्वापर्यगर्भकरणत्ववाचिन्याः पौर्वापर्यरूपे क्रमेऽपि श्रुतित्वात् । तथैव च **सिद्धान्ते** वक्ष्यमाणत्वात्, तथापि शक्तिरूपं करणत्वं तृतीयार्थः । तच्च न पौर्वापर्यगर्भमिति तदभिप्रायेण **केषांचिन्मतं** प्रवृत्तमिति भावः । प्रसङ्गसंङ्गतिमाह—**पूर्वत्रेति** । **अर्चिरात्मकाग्न्यानन्तर्यप्रत्यभिज्ञानादिति** । शाखान्तरप्राप्तो वायुरर्चिरादिषु क्वचित् निवेशनीयस्सन् शाखान्तरश्रुतस्वस्थानरूपाग्न्यानन्तर्यदेशप्रत्यभिज्ञानात् तत्रैव निवेशनीय इति भावः । प्रबलप्रमाणाभावस्थले दुर्बलस्यापि प्रवृत्तिरप्रतिहतेति परिहरति— **इत्याशङ्क्याहेति** । 'तस्मै स' इति श्रुतिमर्थतो दर्शयन्नाह—**स वायुरिति** । **विगमय्य** । विरलीकृत्य । श्रुत्या वाय्वादित्ययोः पौर्वापर्यावगतिरसिद्धेति परिहरति—**अत आहेति** ।

(P. 988 2 — margin reference at "प्रत्यभिज्ञानादिति")

तेनेत्यनेन वायुकृतावकाशस्यादित्यगमनं प्रति हेतुत्वबोधने पौर्वापर्यलक्षणः क्रमोऽपि बोधित एवेत्याशंक्य, तेनेत्यस्यादित्यगमनं प्रति हेतुत्वबोधकत्वमेवासिद्धमित्याह—**तेनेति** । **श्रुतिरिति** । **कथमादित्यगमनमात्रेति** । अस्यां श्रुतावादित्यगमनं वायुदत्तावकाशहेतुकमेव प्रतीयते, न केवलं, तेनेत्यस्य तत्राप्यन्वयादिति भावः । क्रियाकाङ्क्षस्य तेनेत्यस्य सन्निहितेनैव नैराकाङ्क्ष्यात् नादित्यगमनापेक्षेति परिहरति—**अत आहेति** ।

(P. 988-7 — margin reference at "सिद्धमित्याह")

आदित्यगमनस्य तेनेत्याकाङ्क्षत्वात् तदनुरोधेन तेनेत्यस्याप्याकाङ्क्षामुत्थाप्य तत्र सम्बन्धः कल्पनीय इत्याशयेन शङ्कते—**नन्वादित्यप्राप्तेरिति** । ब्रह्मलोकप्रापकोपासनाबलादर्चिरादिमार्गेण ब्रह्मलोकं प्रति गच्छतो वायुकृतावरणप्रयुक्तगमनप्रतिघातस्य वायुदत्तावकाशेन निवृत्तौ पूर्ववदेव गच्छतः स्वत एव मार्गमध्यस्थितादित्यगमनसिद्धेः न आदित्यगमनस्य प्रातिस्विकतया वायुदत्तावकाशापेक्षेति परिहारटीकाभिप्रायमाह—**छिद्रेणेति** ।

(P. 988-10 — margin reference at "काशापेक्षेति")

---

1. दृष्टान्तसंगतिरिति तु युज्यते । कल्पतरौ 'छिद्रं करोति' 'द्वितीयार्धं व्याचष्टे—स वायुमिति' 'वायुदत्तच्छिद्रस्य' इति पाठः । टीकायां 'अग्निवायुवरुणादिक्रमे'ति पाठः । अन्ते 'संवत्सरात्पराञ्चं' इति पाठः ।

ननु **कौषीतकीशाखायां** पठितो वायुरर्चिरादिषु क्वचिन्निवेशनीयस्सन्नपि **कौषीतकीशाखानुसारेण**ार्चिरनन्तरं द्वितीयपर्वतया किमिति निवेश्यते? 'यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छती'ति बृहदारण्यकश्रुत्यनुसारेण प्रथमपर्वतया अर्चिषः पूर्वमेव किमिति न निवेश्यते? इत्याशङ्कां निराकर्तुं **तत्राग्निलोकं इत्यादिटीका।** तत्र **क्वचिदित्यस्यार्थमाह—वरुणलोकादा**- P. 988-10 **वित्यर्थ इति** । तथा च, **कौषीतकीशाखाया** वरुणेन्द्रप्रजापतिलोकादिषु क्लृप्तक्रमत्वात् बृहदारण्यकश्रुतेश्च क्वचिदप्यक्लृप्तक्रमत्वात् कौषीतिकीश्रुतिपाठानुरोधेनैव क्रमनियम इति भावः।

**अत्रोर्ध्वादित्यलोकशब्दयोरिति** । ऊर्ध्वशब्दस्योर्ध्वदेशसामान्यवा- P. 989-1 चितया तद्विशेषापेक्षत्वात्, अर्चिरादिमार्गेण गच्छत उपासकस्य च संपिण्डितकरणग्रामतया स्वत ऊर्ध्वदेशाक्रमणासंभवेनातिवाहकाधीने तदाक्रमणे, 'स वायुवायुमागच्छती'ति वायुलोकगमनसामर्थ्यलब्धाया वायुलोकाभिमानिन्या देवताया लोकान्तरप्राप्तिपर्यन्तमातिवाहिकत्वावश्यंभावेन यत्किञ्चिदूर्ध्वदेशमात्रपर्यन्तमातिवाहिकत्वायोगात् ऊर्ध्वशब्दस्य 'स आदित्यमागच्छती'त्युत्तरवाक्यश्रुतादित्यपर्यवसाने, 'तेन स ऊर्ध्व आक्रमत' इति श्रुतेः तेन वायुदत्तेन छिद्रेण स उपासक ऊर्ध्वस्सन्नादित्यलोकपर्यन्तोर्ध्वदेशगामी सन् आक्रमते ऊर्ध्वदेशमिति तात्पर्यात् वायुलोकादित्यलोकगमनयोः क्रमः श्रौत इति तेन पाठक्रमबाध इति मनसि निधाय सिद्धान्तयतीत्यर्थः।

**छान्दोग्यवाजसनेयकयोस्त्वेकत्रेति** भाष्यं व्याख्यातुं **वाजसनेयिनामित्यादिटीका, तत्रोभयपाठ** इत्येतद्व्याचष्टे—**उभयोरिति। अश्रुतस्थलेऽपीति।** यत्र यदश्रुतं तस्य **तत्रापि पाठे कर्तव्ये सतीत्यर्थः। कालत्वसाम्यादित्यर्थ इति।** तथा च बुद्धिसन्निधानाभावान्मासानन्तरं न देवलोकस्य विवक्षणमिति भावः। **वायुः क्व निवेशनीय इति।** 'तेन स ऊर्ध्व P. 989-5 आक्रमते स आदित्य'मिति श्रुतिसिद्धवाय्वादित्यनैरन्तर्याय वायोरादित्यादव्यवहितपूर्वत्वावश्यंभावे, 'देवलोकादादित्य'मिति श्रुतिसिद्धदेवलोकादित्यनैरन्तर्याय देवलोकस्याप्यादित्यादव्यवहितपूर्वत्वावश्यंभावेन विनिगमनाविरहादिति भावः।

'देवलोकादादित्य'मित्यस्य क्रमार्थत्वेनाप्युपपत्तेः, 'मासेभ्यो देवलोक'-मिति श्रुतिसिद्धस्य माससामीप्यस्यानेकव्यवधाने बाधापत्तेश्च, तदबाधाय संवत्सरानन्तरमेव देवलोके निविष्टे, वायुर्देवलोकादित्ययोः मध्ये निवेशनीय इति परिहार-

P. ९८९-5 टीकाभिप्रायमाह—**तेन स ऊर्ध्व आक्रमत इत्यादिना**। **संवत्सरादित्यस्य स्थान इति** टीकायां स्थानशब्दः प्रदेशपर इत्याशयेनाह—**एतस्योपरीति**। एतस्य संवत्सरादित्यस्य उपरि देवलोकमिति पठित्वा देवलोकाद्वायुमिति पठितव्यमित्यर्थः।

**अधिकावाप इति**। अधिकस्य देवलोकस्य कथं? प्रक्षेपः। तथात्वे सूत्रासामञ्जस्यादित्यर्थः। श्रुत्यनुरोधित्वात् सूत्रस्य तदनुरोधेन सूत्रं नेयमिति परिहरति—**तत्राहेति**। ननु कथं वाचकत्वं? वायुशब्दस्य लक्षणीये देवलोके शक्त्यभावादित्यत आह—**बोधकमेवेत्यर्थ इति**। बोधकत्वं च लक्षणयेत्याशयेनाह—**अत्र सूत्र इति**। **कथं तर्हि भाष्य इति**। यदि सूत्रे वायुशब्दो देवलोकोपलक्षक इति संवत्सरदेवलोकवाय्वादित्यानां क्रमः सूत्रकाराभिमतः, तदा कथं सौत्रस्य वायुशब्दस्य वायुपरत्वमेवाङ्गीकृत्य, वायोः संवत्सरात् परत्वमादित्यादर्वाक्त्वं च सूत्रकारोक्ततया अनूदितमित्यर्थः।

P. ९८९-9 **छान्दोग्यपाठमात्रापेक्षयेति**। तत्र 'संवत्सरादादित्य'मित्येव श्रवणान्मध्ये वायुमात्रस्य निवेशे वायोः संवत्सरात्परत्वमादित्या[दर्वाक्त्वं च सिध्यति। छान्दोग्यपाठमात्रमपेक्ष्य सूत्रं प्रवृत्तमित्यभिप्रेत्य भाष्ये तथोक्तम्। यदि वाजसनेयकप्राप्तो देवलोकोऽपि सूत्रार्थत्वेन नीयते, तदा देवलोकसहितवायोः अब्दादित्या]न्तरालवर्तित्वं सूत्रकाराभिमतम्। तथा च सूत्रे वायुशब्दस्य देवलोकसहितवायौ, लक्षणेति भावः। **उक्तेऽर्थे इति**। तथापीत्यादिटीकोक्तेऽर्थे वायुमब्दादिति त्वित्यादिभाष्यं संवादयतीत्यर्थः।

**प्रजापतिर्विराडिति**। समष्टिस्थूलाभिमानी विराट्। समष्टिसूक्ष्म-

P. ९९०-3 शरीराभिमानी हिरण्यगर्भ इति भेदः। **शुक्लपक्षात् सकाशादिति**। यद्यपि 'अर्चिषोऽह'रित्यादयः पञ्चम्यस्तृतीयार्था इति आतिवाहिकाधिकरणे स्थास्यति

---

१. कल्पतरौ पूर्वं 'संवत्सराद्देवलोकं देवलोकाद्वायुम्' इति पाठः।

तथाप्यापाततः ' प्रतीयमानमर्थमादायावधिपरत्वेन व्याख्यानमिति द्रष्टव्यम्। **यान् षण्मासानिति** द्वितीया ' कालाध्वनोरत्यन्तसंयोग ' इति सूत्रविहितेति सूचयितुमाह—**येषु षण्मासेष्विति**। श्रुत्यपेक्षितं कर्तारं अध्याहरन्नाह— **आदित्य इति**। P. 990.4

॥ इति वाय्वधिकरणम् ॥

---

## ॥ अथ तडिदधिकरणम् ॥

### सू०॥ तडितोऽधि वरुणस्सम्बन्धात् ॥ ३ ॥

वरुणादीनां पाठक्रमादेव स्थानविशेषनिवेशसिद्धेः पूर्वपक्षाभावादधिकरणवैयर्थ्यमाशङ्क्याह—**स वायुलोकमित्यादिना**। **तेनादित्यमिति श्रुतिविरोधादिति**। ' तेन स ऊर्ध्व आक्रमते स आदित्य'मिति श्रुतौ, **तेन आदित्यमित्याभ्यां पदाभ्यां** वायुदत्तावकाशस्य आदित्यस्य च नैरन्तर्यप्रतिपादनमुखेन वाय्वादित्यनैरन्तर्यप्रतिपादकश्रुतिविरोध इत्यर्थः। ननु पठितस्य वरुणादेः यत्र क्वचिन्निवेशावश्यंभावात्, अर्चिरादिपर्वमध्य एव क्वचिन्निवेशोऽस्तु ' अन्ते तु बादरायण ' इति न्यायेन तटित उपरि वा निवेशोऽस्त्वित्यत आह—**अतो नामीषामिति**। P. 990.7

न तावदर्चिरादिमार्गे निवेशः। ' अर्चिषोऽह'रित्यादिश्रुतिविरोधादेव। नाप्यन्ते, विद्युदनन्तरदेशस्यामानवपुरुषावरोधात्। तथा च वरुणादीनामर्चिरहरादिमार्गे निवेशासंभवात्, **कौषीतकिशाखोक्तं** मार्गान्तरमिति **पादाद्याधिकरणोक्तमार्गैक्याक्षेपः**। मार्गैक्यनियमे भग्ने, ' यदा वै पुरुष ' इत्यादिबृहदारण्यकश्रुत्युक्तमपि मार्गान्तरमिति तत्र श्रुतो वायु'र्देवलोकादादित्य'मिति श्रौतक्रमविरोधेन तयोर्मध्ये न निवेशनीय इति **समनन्तराधिकरणोक्तवायुनिवेशस्याप्याक्षेप** इति भावः।

**तत्सम्बन्धादिति**। अमानवपुरुषस्य च विद्युदव्यवहितानन्तर्ये प्रमाणाभावाद्वरुणादिव्यवधानेऽपि न दोष इति भावः। **तटित उपरीति**। तथा च तटिज्ज्ञाप्यजलाधिपतित्वं सम्बन्ध इति भावः। **श्लोके तथाशब्दस्य तथास-** P. 990.9

P. 990 9 तीत्यर्थकत्वेन वरुणस्य तटिदव्यवहितानन्तर्यपरामर्शित्वमित्याशयेनाह—**तथा सतीन्द्रादिरिति** । श्रुत्यन्तराभिप्रायेण न्यायमुपन्यस्य, कौषतकीश्रुत्यभिप्रायेण पाठं प्रमाणमुपन्यस्यतीत्याशयेनाह—**न केवलमिति** ।

**तत्र किमिति** । उभयेषामपि होमानां प्रधानयागस्विष्टकृदन्तरालकालत्वेनैककालत्वात् किं पूर्वमुपहोमा अनुष्ठेयाः ? उत नारिष्ठा इति संशये सतीत्यर्थः। **प्रधानशब्दगृहीतत्वादिति** । कल्प्यस्यापि प्रकृतिवच्छब्दस्य प्रधान(विधिशेषत्वेन)[विशेषणत्वेन]तदन्तर्भूतत्वादिति भावः । **आकाङ्क्षां परिकल्प्येति** । सन्निधिपतितानामुपहोमानामाकाङ्क्षया प्रधानस्याप्याकाङ्क्षां परिकल्प्येत्यर्थः ।

॥ इति तडिदधिकरणम् ॥

---

## ॥ अथ आतिवाहिकाधिकरणम् ॥

सू०॥ आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

सू०॥ उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥

सू०॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥

P. 991-3 प्रकरणसङ्गतिमाह—**अर्चिरादीनामिति** । **पूर्वाधिकरणेन** साकं प्रसङ्गसङ्गतिं सूचयन् पूर्वपक्षमाहेत्याशयेनाह—**सम्बन्धादिति** । **न चैषां त्वावधिकानामिवेति** टीकायां अर्चिरादीनां मार्गचिह्नसारूप्यवदावधिकसारूप्यं नास्तीति पूर्ववैषम्यद्योतनार्थं **तुशब्द** इति मनसि निधायावधिकशब्दार्थमाह—**अवधिष्विति** । पूर्वपूर्वसीमावधिषु स्थित्वा स्वसीमातिक्रमणेन P. 991-6 सीमान्तरप्रापका इत्यर्थः । **वोढृत्वगमनहेतुत्वेति** । **वोढृत्वेन गमनहेतुत्व-**

---

१. कल्पतरावेवमेव शोध्यम् ।

२. टीकायां 'ज्वलनादिष्वचेतनेषु' इति, 'हेतुत्वमुच्येत' इति च पाठः ।

३. कल्पतरौ 'भोक्तृगमनहेतुत्वप्रतीतेः' इति पाठो दृश्यते । तदाभोगानुसारेण शोध्यम् । कल्पतरौ उपरि 'वोढा न श्रूयेत अन्यत एव' इति पाठः ।

प्रतीतेरित्यर्थः। अन्यथा हेतुपञ्चमीविरोध इति भावः। हेतुपञ्चमीत्वमसिद्धमिति परिहरति—**तत्राहेति**। P. 991 6

**टीकायां'अर्चिष'** इत्यादिपञ्चमीभिर्वियुज्यमानवस्त्ववधित्वलक्षणमपादानत्वमेव प्रतीयते न हेतुत्वमित्यत्र युक्तिं दर्शयितुं **नागुण** इत्यादिकमुक्तम्। तद्विशदयति—**हेतावित्यधिकार इत्यादिना**। **हेतावित्यस्मिन्ननुवर्तमाने सतीत्यर्थः**। **टीकायां** प्रायदर्शनादर्चिरादीनामपि वोढृत्वमित्याशङ्क्य, विशयाभावात्प्रायदर्शनमकिञ्चित्करमिति परिहरति—**न चामानवस्येत्यादिना**।

**टीकायां—न तदर्थस्तदेवाच्य इति**।[1] यस्य वचनस्य योऽर्थस्स तदवाच्ये सञ्चारयितुं नोचितः, अव्यवस्थापत्तेरित्यर्थः। उत्तरवाक्यविरोधादपि नार्चिरादीनां वोढृत्वमिति युक्त्यन्तरं आहेत्याशयेनाह—**यद्यर्चिरादय इति**। **अन्यत एवेति**। त्वदभिमतविद्युदभिमानिदेवतात एवेत्यर्थः। लोकरीतिमेव पुरस्कृत्य सिद्धान्तयतीत्याशयेनाह—**चेतनस्येति**। पक्षिहतमीनादौ तथा दर्शनात् इति भावः। **सङ्कुचितकरणानामित्यर्थ इति**। सङ्कीभूतकरणानामित्यर्थ इत्यर्थः। P. 992-2
कार्यजननानुकूलतत्तत्स्थानस्थितिरहितकरणानामिति यावत्।

**शमीशब्दः** प्रसिद्धार्थ इति मत्वा **कारस्करशब्दार्थ**माह—**कारस्कर इति**। **मेरुमभित इति**। मेरुसन्निहितदिक्चतुष्टयगतेत्यर्थः। **चैतन्यसंभव** इत्यस्य **न चैतेभ्य** इत्यादिवाक्यशेषतां दर्शयितुं पदत्रयमुपादत्ते—**सति श्रुतानामिति**। **टीका**पेक्षितं हेतुमाह—**धर्ममात्रकल्पनेति**। **यत** इति शेषः। **टीकायां—व्यवस्थित एवेति**। स्थित एवेत्यर्थः। अमानवपुरुषवोढृत्वदर्शनस्य प्रायदर्शनतया निर्णायकत्वाभावेऽपि, लिङ्गदर्शनतया दृढीकरणार्थत्वमवर्जनीयमित्याशयेनाह—**न्यायसिद्ध इति**। P. 992-4

---

१. टीकायां 'न तदवाच्ये' इति दृश्यते आभोगानुसारेण न तदर्थस्तदवाच्ये' इति शोधनीयम्।

२. टीकायां 'तस्यात्यन्तसाधारणतया लोकपालग्रहादीनामकिंचित्करत्वात्' इत्यत्र 'अकिंचित्करत्वप्रसंगात्' इति पाठान्तरम्। अत्र अकिंचित्करत्वापाते परमेश्वरस्यात्यन्तसाधारण्यं न हेतूभवितुमर्हति। किं तु अयमर्थः—परमेश्वरस्यात्यन्तसाधारणतया असाधारण्येन नेतृत्वं न भवति, तथा अभ्युपगमे च लोकपालादीनामकिंचित्करत्वापात इति भाति।

P. 992-5 **अमूर्तवृत्तीति** । अमूर्ता आकाशादयः, तद्वृत्तयः शब्दबुद्ध्यादयः । **तद्वृत्तिर्या अपरजातिः** यत्किञ्चिज्जातिव्याप्यजातिः गुणत्वं तदाधारेषु रूपादिष्वित्यर्थः । अत्रामूर्तवृत्तिवृत्तीति विशेषणं द्रव्यत्वकर्मत्वे आदाय द्रव्यकर्मणोरतिव्याप्तिवारणाय । **अपरजातीति** विशेषणं सत्तामादाय तयोरेवातिव्याप्तिवारणाय । प्रयोगानुरोधेन 'विभाषा गुण' इति सूत्रे लोकसिद्धो द्रव्योपसर्जनात्मक एव गुणो गृह्यते न तु वैशेषिकपरिभाषामात्रसिद्ध इति परिहरति— **तत्राहेति** । अर्चिरादीनां तन्मार्गप्रविष्टपुरुषविशेषणत्वेनाश्रुतत्वात् कथं द्रव्योपसर्जनत्वलक्षणं वा गुणत्वमित्याशङ्क्य, तेषां अर्थादुपसर्जनत्वमस्तीत्याशयेनाह—**गन्तृनिति** ।

अपि चोपक्रमे 'तेऽर्चिषमभिसंभवन्ति' इति भाष्यमर्थत उपादत्ते— .992-7 **टीकायामपि च तेऽर्चिषमिति** । **श्लोकं व्याचष्टे इति** । दृष्टान्तैकथनेन विशदयतीत्यर्थः । **अनेतृत्वमिति** । अनेतृत्वरूपं वैलक्षण्यं वाच्यमित्यर्थः । ततश्च वरुणादीनामातिवाहिकत्वभङ्ग इति भावः । वरुणादीनां अमानवपुरुषेण तुल्यकक्षतया वोढृत्वाभावात् न वैयर्थ्यमित्याशयेन परिहरति—**अत आहेति** ।

सहकारिणो वा किमर्थमपेक्ष्यन्त इत्याशङ्क्य, ब्रह्मलोकस्य कतिपयजनमात्रगम्यतया तन्मार्गस्य दुर्ज्ञानत्वात्, उपासकेन ब्रह्मलोकपर्यन्तस्य मार्गस्यापि उपासनाकाले चिन्तितत्वेन तेन वशीकृतानां वरुणादीनां तद्गमनानुकूल्याचरणावश्यंभावाच्च, तेषामवर्जनीयं सहकारित्वमिति निराकुर्वन्, **न वैषम्यं वोढृत्वेनेति टीकया** वोढृत्वेन निमित्तेनावैषम्योक्त्या सूचितं निमित्तान्तरेण वैषम्यं सहकारित्वेनेति च प्रकटीकुर्वन्, तात्पर्यमाह—**अमानव इत्यादिना** । **नयनेऽपीत्य-** P. 993-1 पिशब्द एवकारार्थः । नयने सहकारिण एवेत्यर्थः ।

॥ इति आतिवाहिकाधिकरणम् ॥

---

१. टीकायां 'पदं कण्वादि' इत्यत्र 'पदं कठादि' इति पाठान्तरम् ।

२. टीकायां 'भवन्तीति च वैषम्यं न वोढृत्वे' इति पाठो दृश्यते । आभोगानुसारेण 'भवन्तीति च न वैषम्यं वोढृत्वेन' इति पाठः ।

## ॥ अथ कार्याधिकरणम् ॥

सू०॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

सू०॥ विशेषितत्वाच्च ॥ ८ ॥

सू०॥ सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

सू०॥ कार्यात्यये तु तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥

सू०॥ स्मृतेश्च ॥ ११ ॥

सू०॥ परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

सू०॥ दर्शनाच्च ॥ १३ ॥

सू०॥ न च कार्ये प्रतिपत्त्यभिसंधिः ॥ १४ ॥

**टीकायां—यथार्थक्रममिति**। अर्थक्रममनतिक्रम्येत्यर्थः। सिद्धान्तोपमर्द्यस्य पूर्वपक्षस्य प्राथम्यावश्यंभावादिति भावः। एवं तर्हि **सूत्रकारेण** सिद्धान्तसूत्रणं कथमादौ प्रणीतमित्याशङ्क्य, निरूपितया गत्या तत्प्राप्यस्य बुद्धिस्थत्वात्, प्रथमावगतेनापि सिद्धान्तेन चरमावगतपूर्वपक्षोपमर्दस्य कथञ्चित् ज्ञातुं शक्यत्वाच्च, तथा प्रणीतमित्याशयेनाह—**गतिनिरूपणानन्तरमिति**। **पूर्वपक्षयतीति**। P.994.1 **सूत्रानुकारित्वात्** भाष्यस्य तदपि **सूत्रक्रमेणैव** प्रवृत्तमिति मनसि निधाय, तत्रापि आर्थमेव क्रममाश्रित्य भाष्योक्तपूर्वपक्षमाचष्टे इत्यर्थः।

**अवयवानामप्राप्तानां पुनः प्राप्तेरिति**। कोऽभिप्रायः? किमवयवानामवच्छेदकत्वमाश्रित्य भिन्ना[वयवा]वच्छेदेनावयविन एवाप्राप्तस्य प्राप्तिरुच्यते? किं वा अवयवानाम्?। नाद्यः। तथात्वे ब्रह्मण्यपि भिन्नप्रदेशावच्छेदेन प्राप्त्यप्राप्तिसंभवादिति मनसि निधाय, द्वितीयं **टीकया** परिहरति—**इत्याशङ्क्याहेति**। P.994-8

---

१. टीकायां उपक्रमे 'मुख्यमिति मुख्ये सति संभवे' इति पाठः। 'न्यग्रोधेन युज्येत, इत्यतः परं 'न्यग्रोधावयवस्य तदवयवयोगात्' इत्यस्य स्थाने 'तदवयवस्य न्यग्रोधावयवेन योगात्' इति पाठान्तरम्। ततः परं 'तदनेन क्रमेण' 'स्वयं प्रकाशमिति यावत् प्राप्तस्य' इति पाठः। कल्पतरौ 'कारणवाचिशब्दस्य कार्ये उपचार' इति पाठः। 'कुतः? तदवयवस्य' इति पाठः।

न्यग्रोधावयवस्य तदवयवयोगादिति बहुधा टीकापाठो दृश्यते। आचार्यस्तु P. 994-5 तदवयवस्य न्यग्रोधावयवयोगादिति पाठं दृष्ट्वा व्याचष्टे—तदवयवस्येति। टीकायामेवं दृश्यमानानामपीति। परिदृश्यमानानां न्यग्रोधावयवानामपि न संयोगः। उक्तन्यायेन तदवयवानां न्यग्रोधावयवावयवानामेव संयोगा-दित्यर्थः।

ननु श्रुत्यन्तरे 'ब्रह्मलोकान् गमयति' 'ते तेषु ब्रह्मलोकेषु' इति श्रवणात् कथं ब्रह्मशब्दस्य परत्वमित्यत आह—टीकायां—ब्रह्मलोकेष्वितीति। जातिवाचकत्वाभावेन 'जात्याख्यायामेकस्मिन् बहुवचन'मित्यस्याप्रसक्तेः, निरव-यवे ब्रह्मण्यवयवबहुत्वाभिप्रायेणापि नेतुमशक्यत्वात्, न केवला प्रकृतिः प्रयोक्तव्येति वचनेन केवलायाः प्रकृतेः प्रयोगायोगात्, उत्सर्गत एकवचने प्रयोक्तव्ये व्यत्ययेन प्रयोगसाधुत्वार्थं बहुवचनं प्रयुक्तमिति भावः।

नन्वेवमपि देशविशेषवाचिनो लोकशब्दस्य कथं निर्वाह इत्यत आह—टीकायां लोकशब्दश्चेति। प्रथमश्रुतब्रह्मशब्दस्वारस्यानुरोधेन, न्याय-सिद्धकर्मधारयप्राबल्यानुरोधेन च, लोकशब्दो भावे घञन्त इत्येवाश्रीयते नतु कर्मणि इति भावः। नन्वेवं सति 'प्रजापतेः सभां वेश्म प्रपद्ये' इत्यादि-कार्यब्रह्मलोकगमनप्रतिपादकश्रुतीनां का गतिरित्याशङ्कां, तेन मार्गेण परं ब्रह्म प्राप्नुवतस्तद्गमनावश्यंभावात् तत्प्रतिपादकत्वं तासां श्रुतीनामविरुद्धमिति परिहर-न्नाह टीकायां—तस्मादिति। विद्याः उपासनाविशेषाः। कर्माणि नित्य-नैमित्तिकानि।

टीकायां—न तु गतिमिति। लिङ्गशरीरप्रविलयेन विना च न निरुपाधिक-स्वरूपप्राप्तिलक्षणमोक्ष इति तदर्थं तत्र गमनमावश्यकमिति भावः। स्वप्रकाश-ब्रह्मप्राप्तिमन्तरेण च न लिङ्गशरीरप्रविलय इत्यत्र श्रुतिमुदाहरति—टीकायामत एव च श्रुतिरिति। प्राणाद्याः षोडशकलाः, पुरुषायणाः पुरुषाधीनाः, पुरुषं उत्तमपुरुषं जगत्कारणं ब्रह्मशब्दवाच्यं वैकुण्ठलोकवासिनं भक्तानुग्रहार्थपरिगृहीत-दिव्यमङ्गलविग्रहं नारायणं प्राप्यास्तं गच्छन्तीत्यर्थः। 'स एनान् ब्रह्म गमय-ती'ति श्रुतिमितिशब्दं च गृहीत्वा सूत्रं योजयति टीकायां—तदनेनेति।

टीकायां तत्त्वदर्शी त्विति। श्रुतिन्यायोभयसंमतार्थप्रतिपादकत्वादिति भावः। पूर्वपठितसूत्रभाष्यार्थं प्राप्तावसरत्वादिदानीं दर्शयतीति आशयेनाह—

**सिद्धान्तं सङ्गृह्णातीति।** **श्लोकं** व्याचष्टे—**अर्चिरादीति। जगदात्मत्वे-नेति।** P. 994-7 परस्य ब्रह्मणः सर्वात्मत्वेन जीवेन स्वात्मभूतस्य ब्रह्मणो नित्यमेव प्राप्तत्वेन पुनः प्राप्तुमनर्हत्वादित्यर्थः। अनर्हत्वमसिद्धमिति शङ्कते—**नन्विति।** उपाधिविगमे औपाधिकस्यापि(शब्द)[अंश]भेदस्याभावान्न कथञ्चिदपि गतिः संभवतीति परिहरति—**विद्ययेति।**

**अप्राप्तस्य** वानरेणाप्राप्तस्येत्यर्थः। ननु न्यग्रोधावयविन एकत्वात् तस्य च मूलस्थेन वानरेण प्राप्तत्वात् कथमप्राप्तत्वमित्यत आह—**अवयवान्तरोपहितस्येति।** उपाधिभेदे तदुपहितस्यापि भेद इति भावः। आशयमजानानः शङ्कते—**ननु तर्हीति।** उपाधिकृतं भेदमाश्रित्य न्यग्रोधावयविन्येव संयोगाभ्युपगमान्नाप्रत्यक्षत्वदोषप्रसक्तिरिति स्वाशयमाविष्कुर्वन्नेव, तर्हि ब्रह्मण्यपि तादृशं भेदमाश्रित्य प्राप्त्यप्राप्ती स्तामित्याशङ्क्य, सर्वोपाधिप्रत्यस्तमये सति ब्रह्मणि न तादृशोऽपि भेद इति वैषम्यमाह—**काल्पनिकेति। टीकायां—अविद्याया अनिर्वचनीयं विजृम्भितं** कार्यमित्यर्थः। **टीकायां—न विद्वानिति।** विद्वानन्तःकरणादिकमहमित्यादिरूपेण **नाभिमन्यते।** तथा च न तदुपाधिको भेद इत्यर्थः।

ननु विदुषोऽप्यविद्यालेशानुवृत्त्या देहधारणवत्तत्कृतं भेदमाश्रित्य प्राप्त्यप्राप्ती अपि किं न स्यातामिति शङ्कते—**ननु ज्ञानेति।** विरोधिन्यां विद्यायां P. 994 12 सत्यामप्यविद्यालेशानुवृत्तेः प्रमाणैकसमधिगम्यतया, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' 'भूयश्चान्ते विश्वमायानिवृत्तिः' इत्यादिश्रुत्यनुरोधेन लेशानुवृत्तेर्देहधारणमात्रोपयोगेऽपि, पारलौकिकफलोपभोगोपयोगित्वे मानाभावः।

न च 'पुरुषं प्राप्यास्ते गच्छन्ती'ति श्रुत्यनुरोधात् तत्कल्पनम्। 'यथेमा नद्यस्स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे समुद्र इत्येवं प्रोच्यते एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवती'ति प्रश्नोपनिषच्छ्रुतौ समुद्रोदकस्यैव मेघैर्निपीय वर्षणेनोपाधिना नद्यादिभेदं प्राप्तस्य पुनः समुद्रप्रवेशेन समुद्रभावो नामरूपप्रत्यस्तमयश्च, तथा पुरुषशब्दवाच्याज्जीवात्मस्वरूपात् भेदेन कल्पितानां तदीयतात्त्विकस्वरूपपरिद्रष्टुः तद्दर्शनेनाविद्यानाशे तन्मूलानां नाशेन तासामधिष्ठानस्वरूपप्राप्त्या

नामरूपप्रत्यस्तमयप्रतिपादनेन तस्याः श्रुतेर्लोकान्तरगतपुरुषप्राप्त्यनन्तरं लिङ्गशरीरप्रत्यस्तमयप्रतिपादकत्वाभावात्। ब्रह्मशब्दवाच्यस्य त्रिविधपरिच्छेदरहितस्वरूपस्य लोकविशेषावस्थानायोगाच्च। तथा च न काल्पनिकभेदाश्रयणेनापि प्राप्त्यप्राप्त्योरुपपत्तिरित्याशयेन परिहरति—**टीकायां—नेति**।

अयं परिहाराशयः सुज्ञानत्वादाचार्येण न विशदीकृतः। न्यायैरेव सिद्धा-
P. 994-13 न्तसिद्धेः किमर्थं श्रुत्युपन्यास इत्यत आह—**अमृतत्वादीति**। न्यायानाममृतत्वादिलिङ्गैरदार्ढ्यशङ्कायां तद्दार्ढ्यसंपादनार्थं **टीकायां** श्रुत्युपन्यास इति भावः। **अभिसन्धिः** श्रुतेरित्यन्तस्यैकान्वयमाह—**नोपायान्तरेति**। **टीकायां—विद्याब्रह्मप्राप्त्योरिति**। ब्रह्मविद्यातत्प्राप्त्योः इत्यर्थः। **लिङ्गाभासमिति**। 'अणुः पन्था विततः पुराणो मां स्पृष्टोऽनुवित्तो मयैव। तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः॥' इति श्रुतिः।

अस्या अयमर्थः—अणुः सूक्ष्मः दुर्विज्ञानः। विततो विस्तीर्णः विस्पष्ट इत्यर्थः। पन्थाः सच्चिदानन्दब्रह्मप्राप्त्युपायः, पुराणः चिरन्तनः श्रुतिसिद्धः। मां स्पृष्टः मां स्पृष्टवान् मया लब्ध इत्यर्थः। मया अनुवित्तः फलपर्यवसायिनीं परिपाकदशां असंभावनादिकलङ्करहित्यं नीतः। **मयेति शब्दो** मन्त्रद्रष्टृपरामर्शी। तेन मार्गेण धीराः प्रज्ञावन्तोऽन्येऽपि ब्रह्मविदः, इतः स्थूलसूक्ष्मकारणात्मकाच्छरीरात्। ऊर्ध्वाः पृथग्भूताः सन्तः। तथा च श्रुतिः—'तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण तं विद्याच्छुक्रममृत'मिति। स्वर्गं निरतिशयानन्दरूपं लोकं स्वप्रकाशं स्वरूपमपियन्तीति।

अस्यां श्रुतौ **तेन इत ऊर्ध्वा** इत्यादीनि पदानि यथाश्रुतार्थानि गृहीत्वा इमां श्रुतिं स्वमतसाधकत्वेनोद्घुष्य स्वव्यतिरिक्तानन्यानपि श्रुतितात्पर्यानभिज्ञान् **मोहयन् अनेन** गन्तव्यगन्तृविभागाभावप्रतिपादकश्रुत्युपबृंहितन्यायप्रतिपादकेन टीकावाक्येनानुकम्प्यते। नित्यप्राप्तस्य गमनेन प्राप्त्ययोगेन, विद्यायाश्च स्वविरोध्यविद्यानिवर्तने विलम्बहेत्वभावेन, लोकरीतिमनुसृत्य श्रुतिषु ज्ञानादेः

१. टीकायां—'तथा विद्याब्रह्मप्राप्त्योः' इति, 'आत्मानमेवावेदहं ब्रह्मास्मीति तस्मात् तत्सर्वं' इति च शोध्यम्। कल्पतरौ 'विशदाः श्रुतीः॥ ब्रह्मैव सन्नित्यादिना। इति पाठः। ब्रह्मैव सन्नित्यादिना श्रुतीर्वक्ति। इत्यन्वयः।

२. ऊर्ध्वं इति श्रुतिपाठः।

पथ्यादित्वेन रूपणात् न गमनादौ तात्पर्यमित्येवं श्रुत्यर्थस्फोरणेनानुकम्प्यत इत्यर्थः ।

पारलौकिकफलकेषु व्यापारेषु श्रद्धावत एवाधिकारात् कथञ्चिच्छाया-मात्रेणानुवर्तमानानां रागद्वेषादिसांसारिकधर्माणां शरीरधारणादिमात्रोपयुक्तभिक्षा-शनादिप्रवृत्त्युपयोगित्वेऽपि न मार्गचिन्तनादिप्रवृत्त्युपयोगित्वमिति परिहरति— **तत्राहेति**। **टीकायां—तत्रेति**। अर्चिरादिमार्गे। तच्चिन्तन इत्यर्थः। **टीकायां— यादृच्छिकप्रवृत्तेरिति** पञ्चम्यन्तम्। **अविदुषस्त्विति**। अविदुषस्तत इत्यर्थः। विद्योत्पत्तेः पूर्वमिति यावत्। **टीकायां श्राद्धस्येति**। श्रद्धावत इत्यर्थः। P. 995-2

**टीकायां किमियमिति इदंशब्देन** अर्चिरादिमार्गभावनोच्यते। 'अणुः पन्था' इत्यादिश्रौतमार्गान्तरस्य श्रवणात् कथं तदभाव इत्याशङ्क्य, अविद्याया विद्यैकनिवर्त्यत्वन्यायेनोपोद्बलितबहुश्रुत्यनुरोधेन 'अणुः पन्था' इत्यादेः ज्ञानरूपमार्गपरत्वमेवेति न मार्गान्तरप्रसक्तिरित्याशयेनाह— **तमेव विदित्वेत्यनेनेति**। **टीकायां—तया सहेति**। परविद्यया सह वर्तमानाया मार्गभावनायाः द्वैताद्वैतगोचरतया मिथो विरोधेन सह कार्यजनकत्वासंभवा-दित्यर्थः। श्रवणमेव दर्शयति **टीकायां—स एनानिति**। अर्चिरादिमार्ग-भावनया तन्मार्गप्रविष्टानमानवः पुरुषो ब्रह्म गमयतीति श्रवणेन मार्गभावनायाः ब्रह्मप्राप्त्युपायत्वावगमादिति भावः। P 995-7

कार्यब्रह्मणः परिपूर्णात् कारणस्वरूपाद्विच्छेदाभावेन न देशतः सामीप्यं संभवतीत्याशङ्क्य, संश्लेषविशेष एव **सामीप्यशब्देन** विवक्षित इत्याशयेनाह— **कार्यस्येति**। लिङ्गानां श्रुतिबाधकत्वमयुक्तमिति शङ्कते— **नन्विति**। अनेक-लिङ्गोपोद्बलितश्रुत्यन्तरवशादेव ब्रह्मश्रुतेर्नयनमिति परिहरति— **लोकादीति**। **टीकायां—तथा चेति**। एवं सत्येव कार्यब्रह्मलोकसम्बन्धितया **लोकेष्विति बहुवचनोपपत्तिरित्यर्थः**। बहुवचनस्य मुख्यतयैवोपपत्तिरुक्तेति मन्वानः शङ्कते— **नन्विति**। लक्षणया तदुपपत्तिः उक्ता, न मुख्यतयेति परिहरति— **अत आहेति**। P. 996.

---

१. टीकायां 'श्राद्धस्य' इति प्रतीको न दृश्यते। 'तत्रापि स्यात्तस्य प्रवृत्ति'रित्येव पाठो दृश्यते। 'स्यात्तस्य' इति लेखकप्रमादागतं, तस्य स्थाने 'श्राद्धस्य' इति पाठः इति ऊह्यते। अथ वा 'स्यात्तस्य श्राद्धस्य' इति पाठः अस्तु।

तर्हि निर्विशेषेऽपि बहुवचनमुपचारेण प्रवर्ततामित्याशङ्क्य, सन्निकृष्टलक्षणासम्भवे विप्रकृष्टलक्षणा जघन्या। अत एव 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूया'दित्यत्र दीक्षणीयाशब्देन सन्निकृष्टत्वात् तदवान्तरापूर्वमेव लक्ष्यते, न तु परमापूर्वमित्युक्तमित्याशयेनाह—**अवयवद्वारेणेति**।

P. 996-3

ननु प्रथमश्रुतब्रह्मपदस्वारस्यानुरोधेन निर्विशेषब्रह्मस्वरूपे अवगते, तदनन्तरश्रुतं बहुवचनं विप्रकृष्टलक्षणयापि नीयमानन्न दुष्यतीत्याशंक्य, बहुवचनप्रकृतिभूतब्रह्मलोकपदमपि सन्निकृष्टलक्षणामेवोपोद्बलयतीति आशयेनाह—**टीकायां—लोकपदं चेति**। इलावृतं मेरुसन्निहितं वर्षम्। **टीकायां—न कथञ्चिदेवेति**। योगेन प्रकाशमानतायां न कथञ्चिदेव व्याख्यातं भवति, रूढिविरोधान्न कथञ्चिदपि व्याख्यातुं शक्यमिति भावः।

निर्गुणविद्याशालिनां गतिर्नास्तीति वदन् प्रष्टव्यः। किं निर्गुणस्य ब्रह्मणो व्यापकत्वेनेहैव तत्संभवात्? किं वा तेषामिहैव तद्भावश्रवणात्? नाद्यः, सगुणस्यापि ब्रह्मणो यावदविद्याप्रदेशं सत्त्वेन व्यापकत्वात् इत्याह—**यदि निर्गुणायामिति**। ननु सगुणस्य ब्रह्मणो व्यापित्वेन तत्प्राप्तेरिहैव संभवेऽपि, तदुपासकस्य तदीयातिशयितज्ञानानन्दाविर्भावाय तल्लोकगमनं स्यादित्यत आह—**तद्गुणानां चेति**। गुणानां गुणितादात्म्येन गुणिभावप्राप्तौ तद्गुणप्राप्तेरावश्यकत्वादिति भावः।

P. 996 4

नान्त्य इत्याह—**उपासकानामपीति**। निर्गुणविद्याशालिनां 'ब्रह्म वेद ब्रह्मैव भवती'ति इहैव तद्भावश्रवणवत्, सगुणब्रह्मोपासकानामपि 'यस्य स्यादद्धे'त्यादिश्रवणात्, उपासनाया अन्तकाले उपास्यसाक्षात्काराक्षेपकत्वाच्च, तेषामपि तद्भावप्राप्तिरिहैव संभवतीति नापेक्षेत्यर्थः। निर्गुणविद्यायां गतिश्रुतिं दर्शयति—**परप्रकरणेऽपीति**। उपक्रमे 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्य'मिति श्रवणादिति भावः।

P. 996-6

---

१. टीकायां 'लोकत्वं' इत्येतत् 'लोकपदं' इति शोधनीयम्। 'भोगभूमिभागे' इत्यपि शोध्यम्। कल्पतरौ 'परस्मिंस्तु विप्रकृष्टः। अवयवानामपि' इति शोधनीयम्।

२. मुण्डके 'सूर्यद्वारेण' इत्यादिगत्युपदेशः निर्गुणविदं प्रतीति पूर्वपक्षिणो भावः। एतत् कल्पतरावेवोक्तम्, 'अधिगम्यत' इत्यपि गत्युपदेश इति आभोगे।

त्कारानन्तरमेव भावो युक्त इति भावः। **न निर्गुणं वस्त्वस्तीत्यत्र** च वस्तु-
P. 996-13 शब्दः पदार्थमात्रपरो द्रव्यपरो वा ? नाद्य इत्याह—**सत्तादेरिति**। द्वितीय-
मुत्थापयति—**न निर्गुणमिति**। **असिद्धेरित्युपलक्षणम्। साध्याविशेषादित्यपि**
द्रष्टव्यम्। **असिद्धेरेवेति**। ब्रह्मणः स्वसमानसत्ताककार्यारम्भकत्वरूपपरिणा-
मित्वानभ्युपगमादिति भावः।

**सत्तादेरिति**। सत्तादिजातावन्यापोहरूपत्वं बौद्धाः कल्पयन्ति। नैयायि-
कास्तु—मानसम्बन्धत्वं, प्रमाणसन्निकर्षत्वं कल्पयन्ति। सामान्यस्य प्रत्यासत्ति-
त्वाभ्युपगमात्। तत्र च विवर्ताधिष्ठानत्वरूपद्रव्यत्वस्य सत्त्वेन सगुणत्वस्याभावा-
द्व्यभिचार इत्यर्थः। **आदिशब्दाभ्याम**ालोकाभावे अन्धकारे नीलरूपाद्यारोपस्य
नैयायिकैरभ्युपगमात्, तेजोरूपे प्रभादौ चलनाद्यारोपस्य टीकाकारैः अभ्युपगमात्,
क्रियानिचये वेगत्वारोपस्य मीमांसकैरभ्युपगमाच्च, तत्र व्यभिचार इति भावः।

यदुक्तं सगुणब्रह्मोपासकानामपि इहैवोपास्याविर्भावान्न गत्यपेक्षेति,
तत्राह—**उपासकानां त्विति**। तत्र प्रमाणं दृष्टान्तव्याजेनाह—**अन्त्यकाल
इवेति**। अन्त्यकाले तृणजलूकादृष्टान्तेन भाविकर्मफलस्य यथाप्रतिभासमात्रं
'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते' इत्यादिश्रुत्योच्यते। तथैव सगुणब्रह्मोपा-
सनाख्यकर्मविशेषसाध्यस्य ब्रह्मलोकफलस्यापि 'यस्य स्यादद्धे'त्यादिश्रुत्युक्तः
P. 996-15 साक्षात्कारः प्रतिभासमात्रमित्यर्थः। विपक्षे दण्डमप्याह—**यदि त्विति**। सगुण-
ब्रह्मोपासकानुभवितव्यसालोक्यसार्ष्टिसामीप्यसारूप्यात्मकगौणमुक्तिस्वरूपपर्यालो-
चनायामपि प्रदेशविशेषप्राप्तिरत्यावश्यकीत्युपसंहारव्याजेनाह—**तस्मादिति**।

यदुक्तं निर्गुणप्रकरणेऽपि गतिः श्रूयत इति। तत्राह—**नान्य इति**।
श्रुतिषु ज्ञानव्यतिरिक्तमोक्षमार्गनिषेधात्, ज्ञानस्य च स्वोत्पत्त्यनन्तरमेव अज्ञान-
निवर्तकत्वस्वाभाव्येन विलम्बाप्रसक्तेः, गतेरुपयोगाभावाच्च, सगुणविद्यास्थले
उत्कर्ष इति भावः।

किञ्च, 'ब्रह्म वेद ब्रह्मैव भवति' 'तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मा-
त्तत्सर्वमभवत्' 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' 'न तस्य प्राणा

१. कल्पतरौ 'न निर्गुणं वस्त्वस्तीति च दुर्भणम्' इति पाठः।
२. कल्पतरौ 'मानसंबन्धत्वे'ति शोधनीयम्।

उत्क्रामन्ति अत्रैव समवनीयन्ते ' ' ब्रह्मैव सन् ब्रह्माप्येति ' ' यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् ' इत्यादिश्रुतिभिः,

' ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ '
' ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ॥ '

इत्यादिस्मृतिभिः, 'कार्यं बादरिरस्य गत्युपपत्ते'रिति सूत्रेण परब्रह्मप्राप्तौ गत्यनुपपत्तिप्रकटनेन, प्रकाशोदये सति तमोनिवृत्तौ, शुक्त्याद्यधिष्ठानतत्त्वसाक्षात्कारे सति तदज्ञानतत्कार्याणां निवृत्तौ च विलम्बादर्शनेन लोकरीत्यापि च, ज्ञानसमकालमेव स्वरूपावारकाज्ञाननिवृत्त्या स्वस्वरूपप्राप्त्यवगमात्, ज्ञानानन्तरमर्चिरादिगत्या प्रदेशविशेषप्राप्त्यनन्तरमेव मुक्तिरित्येतत् अत्यन्तासङ्गतमिति न किञ्चिदेतदित्याशयेनाह—इति दिगिति । P. 996-16

भाष्ये ' न तु परस्मिन् ब्रह्मणि गन्तृत्वं गन्तव्यत्वं गतिर्वाऽवकल्पते । सर्वगतत्वा'दिति परब्रह्मविषये गन्तृत्वाद्यभावं सर्वगतत्वेन हेतुना प्रसाध्य, तत्रैव हेत्वन्तरमुक्तं प्रत्यगात्मत्वाच्च गन्तृणामिति । तदनुपपन्नम्, गन्तृगन्तव्यत्वाद्यनुपपत्तिः गन्तव्यस्य गन्तृदेशावस्थानेन वा स्यात्, गन्तृगन्तव्ययोरभेदेन वा ? तत्र गन्तॄणां प्रत्यगात्मत्वकीर्तनं नोपयुज्यते, असाधकत्वादित्याशङ्क्य, गन्तॄणां ब्रह्मभावप्रतिपादनपरत्वेन तत् भाष्यं व्याख्यातुं प्रतिप्रत्यश्चतीत्यादिटीका ।

तत्र जीवे प्रसिद्धस्य प्रत्यक्छब्दस्य कथं ब्रह्मपरत्वेन व्याख्यानमित्याशङ्क्य, गन्तॄणामात्मत्वाच्चेत्येतावत्येवं वक्तव्ये, अधिकतया उच्चारितः प्रत्यक्छब्दो नैरर्थक्यपरिहाराय ब्रह्मपरत्वेन व्याख्यायत इत्याशयेनाह—प्रत्यगिति । प्रतीत्यनेन योग्यतया प्रतिपदार्थं इत्ययमर्थो लभ्यत इति वदन्, भाष्यार्थं विशदयति—प्रतिभावमिति । तथा च प्रतीचो ब्रह्मणो गन्तॄणां आत्मत्वात् P. 996-17 जीवस्वरूपत्वादिति भाष्यपदानामन्वय इति भावः ।

ननु लोकश्रुतिरिति । भावव्युत्पत्त्या लोको लोकनं प्रकाशः, तथा च, ब्रह्मैव लोक इति कर्मधारय इत्याह—स एवेति । लोकशब्दापेक्षया स इति पुंलिङ्गनिर्देशः । इतिः हेतौ । अतो हेतोः ब्रह्मणि यौगिकी । तथा च, कथं गौणत्वमित्यर्थः । अवयवार्थे गुणशब्दो गौण इत्याशयमाह—योगरूप P. 996-18

इति। **टीकायां मनोमयत्वादीनामविशुद्धत्वे कार्यत्वं** हेतुरुक्तः। स चाविद्यादावभावादव्यापक इत्याशङ्क्य, कार्यत्वेन सत्त्वरजस्तमोगुणात्मत्वमुपलक्ष्यते, तच्चाविद्यादावपीत्याशयेनाह—**गुणत्रयेति।**

P. 997-1

अर्चिरादिगतेः कार्यब्रह्मविषयत्वे निराकर्तव्ये, प्रतिपत्तेस्तद्विषयत्वनिराकरणं सूत्रभाष्ययोरसङ्गतं इत्यतो व्याचष्टे **टीकायां—प्रतिपत्तिर्गतिरित्यादिना।** 'तस्य नाम महद्यशः' इति श्रुतिं योजयति—**टीकायां यस्य ब्रह्मण इति।**

'आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म।' इति परब्रह्मणः प्रकृतत्वे, **'प्रजापतेस्सभां वेश्म प्रपद्ये' इत्यादेः पूर्ववाक्यविच्छेदेन कार्यब्रह्मपरत्वं न विरुध्यत इत्युक्तं भाष्ये,** तत्र प्रकरणविरोधात् कथं वाक्यविच्छेद इत्याशङ्क्य, श्रुतिवाक्याभ्यां प्रकरणस्य बाध इति भाष्याभिप्राय इत्याशयेनाह **टीकायां—श्रुतिवाक्ये बलीयसी प्रकरणादिति। श्रुतिः प्रजापतिशब्दः। वाक्यं सभादिप्रतिपादकपदसन्दर्भः। सगुणेऽपि च ब्रह्मणि सर्वात्मत्वसङ्कीर्तनं अवकल्पत इत्युक्तं भाष्ये।** तत्र तस्य परिच्छिन्नत्वात् कथमवकल्पनमित्याशंक्य, सगुणेऽपि ब्रह्मणि स्वाधिष्ठानरूपेण सर्वात्मत्वं चेदस्ति, किमु वक्तव्यं निर्विशेषे ब्रह्मणीति, प्रकृतपरब्रह्मप्रशंसार्थमित्याशयेनाह **टीकायां—प्रशंसार्थमित्यर्थ इति।**

**भाष्ये गतस्यापीत्यादिशङ्का** न युक्ता, गतगमनस्यौपचारिकत्वात्, श्रुतितात्पर्यविषयभूतायाः अर्चिरादिगतेश्च मुख्यत्वावश्यंभावात्, अत आभासत्वमित्यत आह **टीकायां—चोदयतीति।** आभासत्वं प्रतीकग्रहणेनैव परिहरति **टीकायाम्—ननु गतस्यापि पारमार्थिकीति।** देशान्तरोपाधिकत्वात् गतगमनस्य कथं पारमार्थिकत्वमित्याशङ्क्य, औपाधिकस्यापि पारमार्थिकत्वं दृश्यत इत्याशयेनाह **टीकायां—न्यग्रोधेति।** ननु विशेषप्रतिषेधेन वास्तवोपाध्यभावेऽपि, काल्प-

---

१. 'सामीप्यात्तु' इति सूत्रभाष्ये 'अन्यत्र क्वचिन्नित्यता संभवति' इति पाठान्तरम्। 'तेषामिह न पुनरावृत्तिरिति' इति, 'अमृतत्वमेति' इति चेति। अत्र' इति च पाठः। भाष्योक्तं 'ब्रह्मणा सह ते सर्वे' इति वचनं कूर्मपुराणे पूर्वखण्डे वर्तते। 'गतस्यापि गन्तव्यता देशान्तरविशिष्टस्य दृष्टा' इति, 'प्रतिषिद्धसर्वविशेषत्वात् ब्रह्मणः' इति च पाठः।

निकोपाधिसंभवात् कथं परिहार इत्यत आह **टीकायां—परिहरतीति**। किमिह P. 998-1 निर्विशेषे ब्रह्मणि पारमार्थिकं गन्तव्यत्वमुच्यते? काल्पनिकं वा? नाद्य इत्याह—**टीकायां—यथा तथा वेति**। न द्वितीय इत्याह **टीकायां—काल्पनिकेति**। ब्रह्मणः काल्पनिकोपाधिना पृथग्भावे काल्पनिकत्वावश्यंभावादिति भावः।

उत्पत्त्यादिहेतु(त्व)भावकथनस्य प्रयोजनमाह **टीकायां—न हीति**। परिणामित्वसाधनस्य प्रयोजनमाह **टीकायां—तथा चेति**। एवं च प्रदेशविशेषे परिमाणविशेषेणावस्थितस्य ब्रह्मणः पारमार्थिकमेव गन्तव्यत्वमुपपद्यत इति भावः। विशेषनिराकरणश्रुतीनामनन्यार्थत्वं श्रुत्युपपत्तिभ्यां प्रकटयति **टीकायां—विशेषनिराकरणमित्यादिना**। **टीकायां—तद्विजिज्ञासस्व इति च श्रुतिः इति**। 'शाखाग्रं चन्द्रमास्तं पश्ये'त्यादि(योगि)[प्रयोगवत्] जगदुपलक्षितस्य ब्रह्मण एव जिज्ञास्यत्वश्रवणादिति भावः।

**गतिकल्पनायां चेति** चशब्दः किमर्थ इत्याशयेनाह—**टीकायामपि चेयं गतिरिति**। विकारावयवपक्षयोरप्यन्यत्वावलम्बित्वादन्यो **वेति** कथं पक्षान्तरत्वेन कथनमित्याशङ्क्य, **टीकायां** व्याख्यातं **अन्यानन्यत्वाश्रयाविति**। तद्विशदयति **भाष्ये—विकल्पितात्रिति**। **विकारपक्षेऽप्येतदिति**। P. 999-1 अस्त्वेवं विकल्पः, ततः किमिति, **'यद्येव'**मित्यादिभाष्येण पृष्ट्वा, **'उच्यत'** **इत्यादिभाष्येणा**वयवपक्षे गमनानुपपत्तिं तद्भावानुपपत्तिं च दूषणद्वयमुक्त्वा, **विकारपक्षेऽपीदं** दूषणद्वयं तुल्यमित्युक्त्वा, तद्व्याख्यातम्—**विकारेणापीत्यादिभाष्येण, तद्विशदयतीत्यर्थः**।

**टीकायां—मृदात्मतया स्वभावेनेति** च समानाधिकरणे तृतीये। **टीकायां—सह विकारावयवैरिति**। विकाराणामवयवानां च विकार्यवयव्यभेदादिति भावः। अत्यन्ताभेदोऽसिद्ध इत्याशयेन शङ्कते—**ननु विकारिण इति। अथान्य एवं जीव इत्येतदन्तमिति। जीवो ब्रह्मण इत्येतदन्तमित्यर्थः।** **अतो भेष्यानुपपत्तिरिति**। मुख्यैकत्वस्यैवाभ्युपगमादिति भावः। P 999 5

---

१. टीकायां—'अथ कस्मादात्यन्तिकमनन्यत्वं न विकल्प्यते' इति पाठः।

२. कल्पतरौ 'अथान्य एव जीवो ब्रह्मण इत्येतदन्त'मित्येव पाठो दृश्यते।

१. कल्पतरौ 'भेदाभेदेप्येकत्वं मुख्यमेव' इति शोधनीयम्। नञ्पदमशुद्धम्।

P. 999-6 **प्रमिते चेति ।** सच्चिदानन्दाखण्डब्रह्मविलक्षणतयैव जीवस्यानुभवा'ज्जीवो ब्रह्मे'ति च व्यपदेशभेदात् जीवब्रह्मणोः **प्रमिते भेद** इत्यर्थः । **अयुतसिद्धतयेति ।** अंशांशिनोरयुतसिद्ध्यभ्युपगमादिति भावः ।

परिणामपक्षस्य प्रागनुपन्यासाद्विकारपरः **परिणामशब्दः** इत्याह—**विकारः परिणाम इति ।** नित्यसिद्धस्य मोक्षस्य प्रतिबन्धापगमव्यतिरेकेण विशिष्टसाधनसाध्यत्वाभावं दृष्टान्तेनोपपादयति **टीकायां—यथा हीत्यादिना । टीकायां विशेषणादिभिरिति ।** लङ्घनौषधपानादिभिरित्यर्थः । **टीकायां—प्रशान्तोऽपीति । प्रशान्तोऽपि पुनर्भवति इति** नेत्यन्वयः । **टीकाया-मारोग्यमिव स्वभावसिद्धो मोक्ष** इत्यन्वयः ।

नन्वेवमपि सञ्चितकर्मफलोपभोगाय शरीरपरिग्रहः स्यात् इत्याशङ्क्य, **सञ्चितानां पुण्यकर्मणामेतच्छरीरारम्भेण नाशान्न शरीरारम्भकत्वम् । पाप-कर्मणां तु** नित्यनैमित्तिकैरिदानीमनुष्ठितैः कर्मभिः नाशात् न शरीरारम्भकत्व-

P. 1000-4 मित्याशयेनाह **टीकायामुपात्तेति ।** प्रत्यवायशब्दो दुःखपरः । **टीकायां—निषिद्धान्याचरेदिति ।** तथा चेदानीमनुष्ठितदुरितफलोपभोगार्थमपि न शरीरपरिग्रहप्रसक्तिः इति भावः ।

किं प्रमाणबलादुक्ताचारस्य मोक्षहेतुत्वमुच्यते ? किं वा यथोक्तयुक्ति-बलात् ? नाद्य इत्याह **टीकायां—शास्त्रं खल्वित्यादिना । मोक्षमाणस्य** मुमुक्षोः । न द्वितीय इत्याह **टीकायां—न चात्रेति । टीकायां—कर्मा-शयस्य ।** कर्मवासनायाः, सञ्चितकर्मण इति यावत् । प्रेरणार्थकस्य क्षपधातोः नाशे लक्षणेत्याशयेनाह—**नाशयितुमिति । विरोधाभावं** विपक्षदण्डकथनेन प्रकटयति **टीकायां—यदि[1] हीत्यादिना । चातुर्वर्ण्ये ।** चतुर्षु वर्णेषु । **चातुराश्रम्ये ।** चतुर्ष्वाश्रमेषु ।

**अभ्युच्चयमात्रत्वे** हेतुमाह—**नित्यनैमित्तिकानामिति ।** 'धर्मेण पापमपनुदती'त्यादिशास्त्रात् पापध्वंसः, पापानुत्पत्तिर्वा फलमित्यर्थः । **फलान्त-**

P. 998-8 **रवत्त्व इति ।** प्रधानानां स्वातन्त्र्येण फलान्तरवत्त्वे काम्यत्वप्रसङ्गादित्यर्थः ।

---

१. टीकायां 'चोदयति—स्यादेतत्-नित्येति' इति पाठः ।

नित्येष्वपि दर्शपूर्णमासादिषु वर्चःपुष्ट्यादिकं अङ्गभूतान्वाधानप्रस्तरयागादिफलं, न प्रधानफलम्। एतदभिप्रायेणैव आपस्तम्बस्मृतिरपीति भावः।

न चासतीत्यादिभाष्यतात्पर्यमन्वयकथनेन प्रकटयति टीकायां—P 1000-10 सम्यग्दर्शी हीत्यादिना। प्रमादादुपनते अपि काम्यनिषिद्धे तेनैव सम्यग्दर्शनेन क्षपयति फलोत्पादनासमर्थे करोति। श्रद्धारूपाङ्गराहित्येन काम्यकर्मणः फलाजनकत्वात्। 'परोक्षं ब्रह्मविज्ञानं सर्वाघौघनिबर्हण'मिति शास्त्रानुरोधेन निषिद्धकर्मणो नाशाच्चेति भावः। टीकायां—ज्ञानपरिपाके च नकरोत्येवेति। द्वैतप्रपञ्चस्य सत्त्वास्फुरणादिति भावः। टीकायां—प्रमादादिति। रागौत्कट्यादित्यर्थः। टीकायां—न क्षपयितुं क्षमत इति। अश्रद्धासम्यग्दर्शनयोरभावादिति भावः।

तत्प्रतिबन्धादिति। तयोः क्रियाभोगशक्त्योः सम्यग्दर्शनेन प्रतिबन्धादित्यर्थः। ताभ्यमिति। कर्तृत्वभोक्तृत्वाभ्यां तच्छक्तिनिर्देश इत्यर्थः। पूर्वत्र व्याख्याबीजं सूचयन्नाह—समाक्षिप्तेति। परेण स्वभावत्वानुक्तेः अनुक्तोपालम्भ इत्यतो विकल्प्य व्याचष्टे—सशक्तिके इत्यादिना। P. 1000-3 स्वभावाविति। आत्मस्वभावावित्यर्थः। स चेति। समवाय इत्यर्थः। अपनेतुमिति पाठः स्पष्टार्थः। अवरोपयितुमिति पाठं व्याचष्टे—निवर्तयितुमित्यर्थ इति। स्वभावात् भावस्य पृथक्करणासंभवे विनाशप्रसङ्गो हेतुरुक्तो भावस्य विनाशप्रसङ्गादिति टीकायाम्। तमुपपादयति—स्वरूपाभाव इति। स्वभावस्य भावस्वरूपतया तदभावे भावस्य नाशो युक्त एव इति भावः।

न चेति चशब्दः किमर्थ इत्याशयेनाह—क्रियाभोगयोरिति। सतोऽपि कालभेदेनासत्त्वसंभवात् कथं टीकेत्यतो व्याचष्टे—क्रियाभोगयोस्सत्त्वमिति। भावस्य किं सत्त्वमनागन्तुकस्वभावः? आगन्तुकस्वभावो वा? धर्मो वा? नाद्य इत्याह—असत्त्वं न स्यादिति। न द्वितीय इत्याह—कालभेदेनेति। बभञ्जे इति। भग्ना जातेत्यर्थः। तृतीयं निराकरोति—धर्मश्चेदिति। धर्मधर्मिणोः संयोगसमवायाद्यसंभवस्य तत्र तत्र वर्णितत्वा- P. 1001-3 दिति भावः।

१. टीकायां 'ते चेदात्मनः स्वभावाववधारिते' इति पाठः।

P. 1001-3 **टीकायामप्रकाशितभाव इति ।** **समारोपितंस्य त्विंत्यादिनोक्तं भावमप्रकाशयन्नेवेत्यर्थः ।** **यथोक्तमेवेत्यस्य समाधत्त** इत्यनेनान्वयायोगादध्याहरति—**विकल्पमकृत्वेत्यर्थः इति ।** स्वभावास्वभावविकल्पमकृत्वा यथाश्रुतशङ्कां परिहृत्य, पुनरथापि स्यादिति परिचोद्य, तच्च नेत्यादिना स्वाशयप्रकाशनेन समाधत्ते भाष्यकार इति टीकाशय इति भावः । शालिबीजदृष्टान्तं विघटयति—**नित्यत्वादात्मन इत्यादिना । अल्पकालस्थायित्वादिति ।** नित्यस्य तु शक्तिमतः कदाचिच्छक्तिरुद्भूताऽपि भवेदिति भावः ।

**प्राचीनेष्विति । जिज्ञासासमन्वयवाक्यान्वयाद्यधिकरणेष्वित्यर्थः । टीकायामतिदृढिम्न इति ।** जीवस्य सच्चिदानन्दाखण्डब्रह्मभावे असंभावनादिशङ्कानिरासेन दृढनिश्चयायेत्यर्थः । 'एष ब्रह्मलोकस्सम्राडिति होवाचे'ति श्रुतिं व्याचष्टे—**एषं ब्रह्मलोक इत्यादिना । 'न च कार्ये प्रतिपत्त्यभिसन्धि'रिति सूत्रस्य** गतेः कार्यब्रह्मविषयत्वशङ्कानिराकरणार्थत्वात्, तत्सूत्रव्याख्यानारम्भभाष्ये पूर्वोक्तस्वतन्त्रयुक्तिसमुच्चयार्थोऽपिचशब्दो नोपपद्यत इत्यतस्त-

P. 1002-3 द्भाष्यं, तत्सूत्रप्रयोजनकथनेन व्याख्याबीजं सूचयन्, व्याचष्टे—**न च कार्ये इति इत्यादिना ।**

**सभा[दि]निर्देशादिति ।** गतिप्रतिपादिकायां 'प्रजापतेः सभां वेश्म' इत्यादिश्रुतौ **सभानिर्देशादित्यर्थः । समुच्चयार्थत्वमेव** प्रकटयति—**एतच्छङ्केति । यथोक्तशङ्कानिराकरणरूपा, या उपपत्तिस्तत्साहित्यमित्यर्थः । उपपत्तीनामिति ।** ब्रह्मशब्दमुख्यत्वं, 'तयोर्ध्वमाय'न्निति दर्शनं, 'सोऽध्वनः पारमाप्नोती'ति दर्शनं, **चोपपत्तयस्तासामित्यर्थः । अपि चशब्द आहेत्यन्वयः ।** । यद्यपीदं भाष्यं तदानीमेव व्याख्येयं, तथापि अवसरालाभादिदानीं तत्सूत्रभाष्योदाहृत'यशोऽहं भवामि ब्राह्मणाना'मितिश्रुतिव्याख्यानावसरे व्याख्यायत इति ध्येयम् ।

P. 1002-4 **यशःप्रकाश आत्मेति ।** यशोनामकपरब्रह्मप्रकाशरूपो ब्राह्मणादीनां य आत्मा स भवामीत्यर्थः । 'न तस्य प्रतिमा अस्ति यस्य नाम महद्यश' इति श्रुतिं

---

१. टीकायां 'अनिर्वचनीयस्यातत्स्वभावस्य' इति पाठः ।

२. कल्पतरौ 'संबोधनम् । तत्र च' इति पाठः । 'समुच्चयार्थः एतच्छङ्कानिराकरणोपपत्तिसाहित्यं प्राचीनोपपत्तीनामाह ।' इति वाक्यसमाप्तिः ।

व्याचष्टे—तस्य ब्रह्मण इति। 'तदपराजिता पूः ब्रह्मणः प्रभुविमितं हिरण्मयं P. 1002-5 वेश्म' इति श्रुतिं व्याचष्टे—तत्त्रेति। 'एतं ह वाव न तपति किमहं साधु नाकरवम्। किमहं पापमकरवमिति' इति श्रुतिं व्याचष्टे—एतं ब्रह्मविदमित्यादिना। किमहं साधुनेति। साधु कर्म किं नाकरवमित्यर्थः। न तापयतीति। स्वफलोपभोगक्लेशं न संपादयति, ज्ञानेन पुण्यपापयोर्नाशादिति भावः। 'यत्रैतच्छुङ्गमुत्पतित'मिति श्रुतौ शुङ्गशब्दार्थमाह—शुङ्गं कार्यमिति। तथा च, 'नेदममूलं भविष्यती'त्यादिभाष्ये इत्याद्युपन्यस्य उदर्के अन्ते सत एव 'सदेव सोम्ये'त्युपक्रान्तस्य सत्स्वरूपस्यैकस्य जगन्मूलस्य विज्ञेयत्वं दर्शयतीत्यर्थः। भाष्ये 'तद्ब्रह्म' इति चेति। जगन्मूलस्य विज्ञेयत्वं दर्शयतीत्यन्वयः।

भाष्ये जात्यन्तरसञ्चितानीष्टानिष्टविपाकानीति। जन्मान्तरसञ्चितानि सुखदुःखफलकानीत्यर्थः। भाष्ये—विरुद्धफलानामिति। ऐहिकामुष्मिकस्वर्गनरकपशुपक्षिमृगमनुष्यादिशरीरोपभोग्यफलानामित्यर्थः। भाष्ये—सांप्रतेनेति। संप्रतितनेन वर्तमानशरीरसाध्येनेत्यर्थः। भाष्ये—श्रुतिस्मृतिभ्य इति। कर्मशेषसद्भावनिश्चयाच्चेति पूर्वेणान्वयः।

भाष्ये तद्यथाऽऽम्रे इति। फलोद्देशेन निमित्तेन निर्मितेऽपि आम्रे P. 1000 14 छायागन्धावनुद्देश्यावपि यथा निष्पद्येते, एवं नित्यनैमित्तिकादिषु प्रत्यवायपरिहाराद्युद्देशेनानुष्ठीयमानेषु कीर्तिपूजादयः ऐहिकाः, स्वर्गादय आमुष्मिकाश्चार्था अनुद्देश्या अपि, क्रियमाणकर्मस्वभावादनूत्पद्यन्ते इत्यर्थः। भाष्ये-अप्रतिबुद्धविषय इति। अनुत्पन्नब्रह्मात्मैक्यसाक्षात्कारपुरुषविषय इत्यर्थः। भाष्ये स्वसंवेद्येनेति। स्वप्रकाशेन स्वरूपत्वादव्यवहितेन स्वास्थ्येन सच्चिदानन्दात्मकस्वरूपावस्थानेन प्ररोचनसिद्धेरित्यर्थः। फलानुभवकाले न कथञ्चिदपि प्ररोचनापेक्षेति भावः। गत्यनुचिन्तनस्य गतिसिद्ध्यर्थत्वात् परब्रह्मविदो गत्यनुचिन्तनमपि निरर्थकमेवेत्याशयेनाह भाष्ये—नच नित्यसिद्धेति।

प्रश्नस्योत्तरमाह भाष्ये—बाढं द्वे इति। भाष्ये यत्राविद्या इत्यत्र, यत्र नामरूपादि इत्यत्र च यत्रेति प्रथमान्तम्, यत् ब्रह्मोपदिश्यत इत्यर्थः। अस्थिरपक्षप्रदर्शनस्य प्रयोजनमाह भाष्ये—प्रज्ञाविकासायेति। P. 1002 5 एवं पूर्वोत्तरभाष्यतद्गतश्रुतीनां स्पष्टार्थकत्वान्न तत्र व्याख्यानापेक्षेति मनसि

P. 1002-8 निधाय, 'नान्यः पन्था विद्यतेऽयनाय' इति श्रुतिगतमयनपदं व्याचष्टे—**अयनायेति**। मोक्षाय ज्ञानादन्यत् साधनं नास्तीति श्रुत्यर्थ इति भावः।

॥ इति कार्याधिकरणम् ॥

---

## ॥ अथ अप्रतीकालंबनाधिकरणम् ॥

सू०॥ अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च ॥ १५ ॥

सू०॥ विशेषं च दर्शयति ॥ १६ ॥

प्रसङ्गसङ्गतिमाह—**गन्तव्यविशेषेति**। प्रतीकोपासकानां ब्रह्मलोकगमनमनुचितमिति वदन् प्रष्टव्यः, किं 'तं यथा यथोपासत' इति शास्त्रात्? किं वा तेषामर्चिरादिगतौ प्रमाणाभावात्? यद्वा गत्यसंभवात्? अथ वा प्रतीकोपासका न ब्रह्मलोकभाजः, अब्रह्मोपासकत्वात् वृष्ट्यादिफलकपञ्चविधसामाद्युपासकवत्, इत्यनुमानात्? नाद्य इत्याह—**इत्याशङ्क्याहेति**।[1] 'तं यथा यथोपासते स तथैव भवतीति'ति शास्त्रं ब्रह्मलोकप्रापण एव समर्थम्। न त्वब्रह्मोपासकानां ब्रह्मलोकनिवारणेऽपीति भावः।

द्वितीयं निराकर्तुं **अनियमस्सर्वेषामित्यत्रेति टीका**। तदभिप्रायं प्रकटयति—**स एनान् ब्रह्मेत्यादिना**। **ब्रह्मलोकं प्रयास्यन्तीति**। 'स एना'नित्येतच्छब्दस्य विद्युल्लोकगामिपरामर्शितया पञ्चाग्निविद्योपासकानामिव 'ये चामी अरण्ये श्रद्धातप इत्युपासत' इति श्रद्धातपःपूर्वकब्रह्माब्रह्मोपासकानामपि परामर्शात् तेषामपि ब्रह्मलोकगमनमवर्जनीयमिति भावः। तृतीयं **न चैषामिति** निराकृत्य, चतुर्थं निराकर्तुं **न च ब्रह्मक्रतव एवेत्यादिटीका**। **अतत्क्रतूनामिति टीकया** हेतोः व्यभिचारमुक्त्वा, स्वरूपासिद्धिमपि दर्शयितुं **नचैष इत्यादिटीका**। तत्र चशब्दः किञ्चार्थ इत्याशयेनाह—**अब्रह्मोपासकत्वं चेति**।[2]

P. 1003-2 / P. 1003-4 (margin references)

---

१. अत्र भाष्ये 'अविशेषेणैवैषा' इति पाठः।

२. कल्पतरौ "ब्रह्मलोकगमनमाशङ्क्येतेत्यत आह' इति पाठो दृश्यते। आभोगटीकायां 'गमनमित्याशङ्क्याह' इति पाठः। 'अब्रह्मक्रतव' इति शोधनीयम्।

**सत्यपि ब्रह्मेत्यनुगम** इत्यस्य पूर्वेणान्वयः। **ब्रह्मेत्यनुचिन्तने सत्यपीति** तदर्थः। ब्रह्मण एव नामरूपतयोपासनं कुतो न भवेत्? इत्यत आह—**ब्रह्मशब्दस्येतीति**। इतिशब्दशिरस्कत्वे, शब्दस्य स्वरूपपरतया तदर्थस्य ब्रह्मणोऽप्रधानत्वादित्यर्थः। नामादिषु ब्रह्मबुद्धिकरणे नास्ति प्रमाणमिति शङ्कते—**ननु भवेत्विति**। इतिशब्दशिरस्कब्रह्मपदघटितं वाक्यमेव प्रमाणमिति परिहारतात्पर्यमाह—**अत्रापीति**। 'नाम ब्रह्म' 'मनो ब्रह्मे'त्यादिप्रकारेण नामादिषु प्रक्षिप्यमाणस्य ब्रह्मशब्दस्य ब्रह्मतादात्म्यबुद्धिजनकतया तत्र ब्रह्मधीप्रक्षेपसिद्धिरिति।

(P. 1003-10)

यत्र कतिपयगुणविशिष्टतयैव ब्रह्मण उपासनं विहितं, तत्र ब्रह्मविभूत्येकदेशविशिष्टतयैव ब्रह्मण उपास्यत्वात् भवतु तत्रोपास्यगुणतारतम्यानुरोधेन सालोक्यादिफलतारतम्यम्, प्रकृते तु ब्रह्मविभूत्येकदेशस्य चिन्त्यत्वे प्रमाणाभावेन कृत्स्नब्रह्मविभूतिविशिष्टस्यैव नामादिषु सर्वत्रोपास्यत्वान्न फलतारतम्योपपत्तिरिति परिहारटीकाभिप्रायमाह—**ब्रह्मलोकावयविन इति**।

(P. 1004-2)

**न नयतीति** नयतेर्गत्युपसर्जनकव्यापारवाचित्वेन, प्रतीकोपासकानामर्चिरादिमार्गगमनस्यैवाभावेन तदनुकूलव्यापाराचरणं अमानवपुरुषस्य दूरापास्तमिति भावः। **विकारालम्बनानिति**। कार्यब्रह्मोपासकानित्यर्थः। **सामान्यवचनाश्रयस्येति**। ब्रह्मोपासकतदितरसाधारण्येन अर्चिरादिगतिप्रापकस्य 'ये चामी' इत्यस्य सामान्यवचनतया, तदाश्रयस्यानियमन्यायस्य, ब्रह्मोपासकसामस्त्यपरत्वेनाप्युपपत्तेरिति अर्थः।

(P. 1004-4)

**परिमलकृतस्तु**—'ये चामी' इत्यस्य सामान्यविषयत्वेऽपि, 'ये चामी तेऽर्चिष'मिति यत्तच्छब्दयोः प्रतीकोपासकाविषयत्वं वक्तुमशक्यम्। पितृयाणतृतीयस्थानरहितानां तेषां अर्चिरादिगत्यवश्यंभावात्। तेषामपि ब्रह्मस्पृगुपासनाकर्तृत्वेन 'सत्यमुपासत' इति शब्दविषयत्वोपपत्तेश्च। 'स एना'तित्यत्र त्वेतच्छब्दस्य प्रतीकोपासका विषयत्वं वक्तुं शक्यम्, प्रकरणवतां पञ्चाग्निविदामेव तेन परामर्शात्, तदभिप्राया **सामान्यवचनस्य प्रतीकोपासकाति-**

---

१. कल्पतरौ प्रतीकधारणे 'किं तु नामादिविशेष्यं' इति शोधनीयम्। टीकायामपि शोध्यम्।

२. कल्पतरौ 'अर्थान्तरविषयस्य प्रत्ययस्य' इति पाठः।

रिक्तविषयत्वोक्तिर्भविष्यति। 'ये चामी' इत्यस्य सामान्य(वचन) विषयत्वादिति ग्रन्थे ये चामीग्रहणं प्रदेशोपलक्षकम् सत् 'स एना'नित्येतत्परं भविष्यति। एवं च, प्रतीकोपासकानामर्चिरादिमार्गे विद्युल्लोकपर्यन्ता गतिः समाना। अमानवपुरुषस्तु तान् न नयतीति विशेषः।

अत एव 'अप्रतीकालम्बनान्नयती'ति सूत्रे नयन एव विशेष उक्तो नार्चिरादिगतौ। भाष्ये यदनियमन्यायस्य प्रतीकोपासनातिरिक्तविषयत्वमुक्तं तदपि ब्रह्मप्राप्त्यंशमात्रविषयं, नार्चिरादिगतिविषयमपि। अनियमाधिकरण एव भाष्यकारैरर्चिरादिगतेः सर्वविद्यासाधारण्यसमर्थनात्। 'अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूक'मिति च देवयानपितृयाणमार्गद्वय-भ्रष्टानां कष्टाधोगतिश्रवणात्। तत्रापि प्रागुक्तरीत्या ब्रह्मस्पृगुपासनाविशेषादेषां देवयानप्राप्तिः। देवयानपितृयाणयोर्मध्ये विद्यारूपाद्विशेषात् देवयानप्राप्तिरिति न्यायस्य प्रतीकोपासनास्वपि तुल्यत्वात्।

**शास्त्रदर्पणे त्वाचार्यैः** 'स एना'नित्यस्य प्रतीकोपासकाविषयत्वे न्याया-न्तरमुक्तम्। प्रतीकभाजां तु 'ये चामी अरण्य' इत्यनेन पञ्चाग्निविद्भिः समं मार्गे समुच्चयेऽप्यप्राधान्यात् 'स एना'नित्येतच्छब्देनापरामर्शात् न ब्रह्मप्राप्तिः। एतच्छब्दस्य प्राधान्येन प्रकृतपरामर्शकत्वात् पञ्चाग्निविदामेव परामर्श इत्युपपत्तेः। नहि प्रकरणाम्नातस्य कस्यचित् केनचिद्धेतुना प्रकृताप्रकृतसाधारण्यं जातमित्ये-तावता अन्यस्यापि प्रकरणाम्नातस्य तदुभयसाधारण्यनियमोऽस्ति।

ज्योतिष्टोमप्रकरणाम्नातस्य 'उपांशु यजुषे'ति यजुर्वेदविहितकर्माङ्गस्वर-विशेषविधानस्य याजुर्वेदिकसकलकर्मसाधारण्येऽपि दीक्षणीयाप्रभृत्यङ्गविधानस्य ज्योतिष्टोममात्रासाधारण्यवदुपपत्तेः। अहंग्रहोपासकानां ब्रह्मप्राप्तेस्तत्क्रतुन्यायत एव सिद्ध्या 'स एना'निति वचनानपेक्षणात्। तदपेक्षणेऽपि 'एष देवपथो ब्रह्म-पथ' इति उपकोसलविद्यागतवाक्येन तत्सिद्धेश्च। सर्वथापि प्रतीकोपासकानां नार्चिरादिमार्गात् पर्युदासः। किं तु ब्रह्मप्राप्तेरेवेति सिद्धमित्याहुः।

**तच्चिन्त्यम्।** प्रतीकोपासकानामर्चिरादिमार्गप्रवेशे मानाभावात्। किं वचनबलाद् तेषामर्चिरादिमार्गप्रवेशः? किं वा न्यायबलात्? नाद्यः, 'ये चेमेऽरण्य' इति वाक्यस्य सामान्यविषयस्य 'तं यथा यथोपासते स तथैव

भवति' 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' 'यस्य स्यादद्धा'

'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥'

इत्यादिश्रुतिस्मृत्यनुरोधेन ब्रह्मोपासकपरत्वात् ।

'ये चामी अरण्ये श्रद्धां सत्यमित्युपासत' इति वाजसनेयिशाखायां ब्रह्मोपासकानामेव अर्चिरादिगतिश्रवणाच्च । तत्र सत्यशब्दस्य ब्रह्मपरत्वात् । तथा चा'नियमस्सर्वेषा'मित्यधिकरणे भाष्यं—तत्र श्रद्धालवो ये सत्यं ब्रह्मोपासत इति व्याख्येयम् । सत्यशब्दस्य ब्रह्मण्यसकृत्प्रयुक्तत्वात्' इति । अथैष [ज्योतिरथैष विश्व]ज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत' इत्यत्र ज्योतिरादिसंज्ञान्तरश्रवणात् अर्थान्तरकलुषितायां बुद्धावनन्तरश्रुतेनैतच्छब्देन पूर्ववाक्यनिर्दिष्टानां ज्योतिरादीनामेव परामर्शवत्, प्रकृतेऽपि ('तद्य इत्थं विदुः) ['ते य एवमेतद्विदुः] ये चामी, तेऽर्चिष'मिति तच्छब्देन समुच्चितरूपावगमात् अर्थान्तरकलुषितायां बुद्धौ प्रकरणविच्छेदे जाते, पूर्ववाक्यनिर्दिष्टानामुभयेषामपि 'स एना' नित्येतच्छब्देन परामर्शौचित्याच्च । अत एव छान्दोग्यभाष्ये 'चन्द्रमसो विद्युतं, तत् तत्रस्थान् तान् पुरुषः कश्चि'दित्यादिना विद्युल्लोकगतानामविशेषेणैव ब्रह्मलोकप्राप्तिरुक्ता ।

एतेन प्रतीकभाजां पञ्चाग्निविद्भिः समं मार्गे समुच्चयेऽपि पञ्चाग्निविदां प्रकरणवत्त्वेन प्राधान्यात् तेषामेवैतच्छब्देन परामर्श इति निरस्तम् । वाक्यस्य प्रकरणापेक्षया प्राबल्येन पूर्ववाक्ये निर्दिष्टानामेव प्राधान्यात् । एतच्छब्देन प्रकृतानामपि परामर्शेन प्रकरणस्याप्यनुग्रहात् । समुच्चितानामेव स्वातन्त्र्येण निर्दिष्टतया तेषामेव सर्वनामश्रुत्या परामर्शौचित्याच्च ।

किञ्च किं प्रतीकभाजां ब्रह्मलोकप्राप्तिरेव नेत्युच्यते ? उत मार्गान्तरेण तत्प्राप्तिरिति ? नाद्यः । 'यावन्नाम्नो गतम्' 'यावद्वाचो गतम् तत्रास्य यथा कामचारो भवति' इति सर्वेष्वपि लोकेषु भोगप्रतिपादकश्रुतिव्याकोपप्रसङ्गात् ।

---

१. अत्र आभोगे कश्चन भागः त्रुटित इति ज्ञायते । 'किं वा न्यायबला'दित्युक्तद्वितीयविकल्पनिराकरणग्रन्थभागाभावात् ।

न द्वितीयः । धूमार्चिरादिमार्गद्वयभ्रष्टानां कष्टगतिश्रवणेन मार्गान्तरेण ब्रह्मलोकप्राप्त्ययोगात् । न च तेषां विद्युल्लोकपर्यन्तं गतानां स्वत एव ब्रह्मलोकगमनम् , न त्वमानवपुरुषाधीनमिति वाच्यम् । 'तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयती'ति श्रुतिपर्यालोचनायां अमानवपुरुषेण विना विद्युल्लोकगतानां ब्रह्मलोकगमने सामर्थ्याभावावगमात् । इतो गतानां संपिण्डितकरणतया अर्चिरादिमार्गेऽप्यातिवाहिकापेक्षणे, विद्युल्लोकानन्तरं विरजानद्यतिक्रमपूर्वकं ब्रह्मलोकगमने सहायापेक्षायाः कैमुतिकन्यायसिद्धत्वाच्च ।

एतेनाहंग्रहोपासकानां ब्रह्मप्राप्तेः तत्क्रतुन्यायत एव सिद्धया 'स एनान्' इति वचनानर्थक्यमिति निरस्तम् । प्रापकेण विना तत्प्राप्त्ययोगात् । अन्यथा अर्चिरादिगतेरपि वैफल्यात् । 'एष देवपथो ब्रह्मपथ' इत्यपि अर्चिरादिमार्गस्य ब्रह्मगमयितृत्वेन अधिगतैरर्चिरादिभिः देवैरुपलक्षितत्वावगमात् , गन्तव्यब्रह्मोपलक्षितत्वेन ब्रह्मपथत्वावगमाच्च । यदप्युक्त'मेष देवपथो ब्रह्मपथ' इत्युपकोसलविद्यागतवाक्येनैव ब्रह्मप्राप्तिसिद्धेः, 'स एना'निति वचनानर्थक्यमिति । तदप्यत एव निरस्तं वेदितव्यम् ।

तस्मात् पञ्चाग्निविदां प्राधान्येन (वाक्य)ब्रह्मोपासकानां च भवत्यर्चिरादिगत्या ब्रह्मप्राप्तिः । नामादिप्रतीकोपासकानां तु विमानादिना तत्तल्लोकसञ्चारेणैव तत्र तत्र भोगो, नार्चिरादिगतिर्न वा तया ब्रह्मप्राप्तिः । नापि तत्तादात्म्येन तत्सदृशो भोग इति सिद्धम् ।

॥ इति अप्रतीकालंबनाधिकरणम् ॥

इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डुभट्टमहोपाध्यायतनूभवेन
श्रीमन्नारायणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशगृह्यमाणेन
लक्ष्मीनृसिंहचरणारविन्दचञ्चरीकेण लक्ष्मीनृसिंहेन
विरचितायां कल्पवृक्षप्रदीपिकायां
आभोगाख्यायां चतुर्थाध्यायस्य
तृतीयः पादः ॥

॥ श्रीः ॥

# ॥ चतुर्थस्याध्यायस्य चतुर्थः पादः ॥

## ॥ अथ संपद्याविर्भावाधिकरणम् ॥

सू०॥ संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

सू०॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥

सू०॥ आत्मा प्रकरणात् ॥ ३ ॥

पादत्रयनिरूपितार्थशेषनिरूपणार्थत्वादस्य पादस्य युक्तं अवसरसङ्गत्या P. 1005-1 अन्ते निवेशनमित्याशयेनाह--**आद्ये पाद इत्यादिना । निरूपितेति ।** 'तदधिगम उत्तरपूर्वाघयो'रित्यादिना बन्धककर्मासम्बन्धप्रतिपादनादिति भावः । **तद्विदोरिति ।** सगुणनिर्गुणब्रह्मविदोरित्यर्थः । **निर्गुणविद्याफलैकदेशान्तरेति ।** 'तरति शोकमात्मवित्' 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।' 'ब्रह्मविदाप्नोति परं' 'ब्रह्म वेद ब्रह्मैव भवति ।' इत्यादिश्रुतिबलात् बन्धनिवृत्तिः ब्रह्मभावश्चेति द्वयमपि निर्गुणब्रह्मविद्यायाः फलम् । तत्रैकदेशो बन्धनिवृत्तिः **प्रथमे पादे** निरूपिता । एकदेशान्तरं ब्रह्मभावोऽ**स्मिन् पादे** निरूप्यत इति भावः ।

प्रागभूतस्येत्यादिश्लोकमपेक्षितपूरणेन व्याचष्टे---**संपद्यशब्दादित्यादिना । कर्तृत्वं प्रतीयत इति । संपद्यशब्दे** क्त्वाप्रत्ययस्य, **निष्पद्यत इति शब्दे** लकारस्य च कर्तरि विहितत्वादिति भावः । **आत्मातिरिक्तरूपान्त-** P. 1005-6 **रेति ।** विषयसंपर्कजन्यसुखविशिष्टरूपोद्भव इत्यर्थः । **प्रागभूतस्येत्येतदिति । प्रागिति** विशेषणव्यावर्त्यस्यात्यन्तासतोऽपि नोत्पत्तिरित्यमुमर्थं प्रकटयन् **व्याचष्टे** इत्यर्थः । **'न सतो यत्' इति श्लोकगतयच्छब्दापेक्षितं** तच्छब्दं दर्श-

---

१. आभोगरीत्या कल्पतरौ 'संपद्यशब्दात् अभिनिष्पद्यत इति शब्दाच्च' इति पाठ इति ज्ञायते ।

यन्, व्यतिरेकोक्तेः अन्वये पर्यवसानमाह—अतः **प्रागिति** । **व्याप्ति-** P. 1004-7 **मुक्त्वेति** । यद्यदभिनिष्पद्यते, तत्प्रागसदिति लोके व्याप्तिमुक्त्वा, प्रकृते व्यापकाभावेन व्याप्याभावं योजयतीत्यर्थः ।

अथ वा यदत्यन्तं सत् यच्चात्यन्तमसत् तन्न निष्पद्यत इति लोके व्याप्तिमुक्त्वा, प्रकृते व्याप्यसद्भावेन व्यापकसद्भावं योजयतीत्यर्थः । बन्धाभावः किमात्मैव ? तदतिरिक्तो वा ? नाद्यः । प्रागुक्तदोषादिति मनसि निधाय, द्वितीयं निराकरोति—**अत आहेति** । टीकोक्तं तर्कं विशदयति—**यद्युत्पद्येतेति** । **अनयोरिति** । फलत्वकार्यत्वयोः व्याप्यव्यापकभावं व्यतिरेकमुखेनोपपादयतीत्यर्थः । कामनाविषयस्यैव फलतया कामनायाश्च साध्यविषयत्वस्वाभाव्यादसति कार्यत्वे न फलत्वं संभवतीति भावः ।

अनुवाद्यत्वसिद्ध्यर्थमात्मीयत्वस्य स्वभावसिद्धत्वं दर्शयन्नाह—**यद्रूपा-** P. 1005 11 **न्तरमिति**[२] । नन्वर्थसिद्धात्मीयत्ववाचकस्य स्वशब्दस्य कथञ्चिदप्यर्थवत्त्वासंभवात् संभवत्यर्थवत्त्वे हीति टीकानुपपत्तिरित्यत आह—**स्वशब्दस्येति** । अनुवादकत्वनिषेधव्याजेनात्मवचनत्वं स्वशब्दस्याहेत्यर्थः ।

नन्वेकस्यात्मस्वरूपस्य बन्धसदसद्भावाभ्यां द्वैरूप्येऽपि, नित्यसिद्धस्यात्मस्वरूपस्य कथं निष्पद्यत इति व्यपदेश इत्यत आह—**निवृत्तबन्धमिति** । बन्धध्वंसस्य विशेषणत्वात् तद्गताभिनिष्पत्तिः विशिष्टे उपचर्यत इति भावः । अतुच्छत्वं स्यादिति वदन् प्रष्टव्यः । किं तुच्छत्वं भवद्भिरङ्गीकृतं, तन्न स्यादिति? किं वा न्यायसिद्धं तुच्छत्वं, तन्न स्यादिति ? आद्येऽपि, तुच्छत्वमसत्त्वं ? अनिर्वचनीयत्वं वा ? नाद्यः । व्यावहारिकप्रमाणसिद्धोत्पत्तिशालिनो बन्धविमोकस्यापि घटादिवद्व्यावहारिकसत्तायोगितया असत्त्वानभ्युपगमादिति वक्तुं **सत इव घटादेरित्यादिटीका** । तदभिप्रायं दर्शयन्नाह—**स इष्ट (कल्प) प्रसङ्ग** P. 1005-14 **इति** ।

---

१. भाष्ये 'अन्यथा हि स्वशब्देन विशेषणं' इति पाठः । इतिपदमधिकमशुद्धम् । टीकायां 'अत्यन्तं सतोऽसतो वा' इति पाठः ।

२. कल्पतरौ 'केनचिदिति' इति प्रतीकधारणस्थाने 'स्वेनेतीति' इति प्रतीकधारणमुचितमिति भाति ।

आद्यकल्पद्वितीयं निराकर्तुं **विचारासहतयेति टीका** । सत्त्वासत्त्वादिना **विचारासहतया** बन्धध्वंसस्य या **असिद्धिः** तत्त्वावेदकप्रमाणेन तात्पर्येण प्रतिपादितत्वाभावेन तात्त्विकत्वासिद्धिः, सा **उभयत्र घटादौ** बन्धध्वंसे च P. 1006-2 **तुल्या । नैतावता** निष्पत्त्यसंभव इति तदर्थः । द्वितीयं निराकरोति **टीकायां—न ह्यसदिति** । न [अर्थ] स्वरूपस्याप्यभावस्य व्यावहारिकप्रमाणसिद्धोत्पत्त्यादियोगितया नासत्त्वमिति तत्र तत्रोक्तमिति भावः ।

**पूर्वत्र त्वन्धो भवतीत्यादिभाष्यस्य पूर्वभाष्यासाङ्गत्यात् तद्व्याख्यानटीकानुपपत्तिरित्यतः तद्भाष्यं पूर्वभाष्येण** सङ्गमयन्नाह—**निवृत्तबन्धादित्यादिना । अन्धग्रहणेन** कथं स्वप्नावस्थाप्रदर्शनमित्यत आह **टीकायां—बाह्येन्द्रियेति** । तथा च आन्ध्यबाधिर्यमूकत्वादेरुपलक्षणमिति भावः । उदाहृतश्रुतौ **'अन्धो भवती'ति** स्थाने **'बन्धो भवती'ति** पाठान्तरं दृष्ट्वा P.1005-16 [व्याचष्टे] **बन्धो भवतीति । बन्धप्रदर्शनमिति ।** अवस्थात्रयकालुष्यरूपबन्धप्रदर्शनमित्यर्थः । **अस्मिन् पाठे अपि रोदिती वेत्यनेन** जाग्रत्स्वप्नयोः उभयोरपि [निर्देशः] दुःखशोकात्मत्वाविशेषादिति द्रष्टव्यम् । एवं च सत्यस्मिन्नपि पाठे **अवस्थात्रयकलुषितेनेति** भाष्यस्य न विरोधः ।

---

१. अत्र भाष्ये अन्धो भवतीति जाग्रदवस्था । स्थूलशरीरधर्मस्यात्मन्यारोपात् । रोदितीव इति स्वप्नावस्था । छान्दोग्ये स्वप्नावस्थादोषनिरूपणसमय एव इन्द्रेण तथा निर्देशात् । तथैव छान्दोग्यभाष्येऽपि व्याख्यातम् । अत्रापि भाष्ये क्रमेणैवावस्थात्रयकालुष्यं कीर्त्यते । एवं च छान्दोग्योपनिषत्तद्भाष्यप्रकृतभाष्यविरुद्धमेव टीकायां वैपरीत्येन व्याख्यातं चिन्त्योपपत्तिकम् । टीकायां—'रोदितीव इति जाग्रदवस्था' 'विनाशमेवापीत इति' इति पाठः । कल्पतरौ 'बद्धो भवतीति पाठान्तरे रोदितीवेत्यादिना बन्धप्रदर्शनम्' इत्युक्तम् । तस्यायमर्थः—भाष्ये 'पूर्वत्र तु बद्धो भवति' इति सामान्यतो बन्ध उक्तः । 'अपि रोदितीव' इत्यादिना बन्धस्य विशेषतः प्रदर्शनं क्रियते । तस्मिन् पाठे जाग्रदवस्थाकालुष्यमुपलक्षणीयम् । 'अन्धो भवतीति' इति पाठ एव अवस्थात्रयकालुष्यमपि विशिष्य उक्तं भवति । अतः स एव विशिष्टः पाठः । उदाहृतश्रुतावन्धो भवतीति स्थाने अयं पाठ इति आभोगोक्तिस्तु असमीचीना अविद्यमानं श्रुतिपाठं दृष्ट्वा न कल्पतरुकृता तथा व्याख्यातम् । अपि तु—'बद्धो भवति' इति भाष्यकारीयवचनरूपमेव पाठं दृष्ट्वा व्याख्यातम् । तत्रापि बन्धो भवतीति न पाठः । अपितु बद्धो भवतीति । एवं च महतामपि प्रमादा भवन्ति इत्यत्र एतत्स्थलमेकमुदाहरणम् । पण्डिताः परिशीलयन्तु ।" इति सविनयं प्रार्थये ।

[एवंकारश्च इत्रार्थे] नावधारण इति टीकापाठं स्पष्टत्वादुपेक्ष्य, अनवधारणं इति टीकापाठं व्याचष्टे—अनवधारण इति। सूत्रारम्भमाक्षिपतीति। निरसनीयशङ्कानुपपत्त्येति भावः। आरम्भमुपपादयन्निति। आरम्भोपपादनार्थं शङ्कामाहेत्यर्थः। निरसनीयशङ्काप्रदर्शनेनारम्भमुपपादयतीति यावत्। अध्याहारे हेतुं दर्शयन्नाह—नन्विति। क्त्वाप्रत्ययसामर्थ्यादिति। ज्योतिस्स्वरूपं प्राप्तस्य तत्परित्यागमन्तरा स्वरूपाभिनिष्पत्त्ययोगादिति भावः। P. 1006-7

ननु कथं ज्योतिरुपसंपत्तिप्रतिपादनस्य वैयर्थ्यम्। अर्चिश्शब्दपर्यायेण ज्योतिश्शब्देनार्चिरादिमार्गोपलक्षणेन तत्संपत्तेरवश्यवक्तव्यत्वात् इत्यत आह—यदि हीति। अर्चिरादिमार्गस्येति। 'न तस्य प्राणा उत्क्रामन्ति' इत्यादिश्रुत्यनुरोधेन निर्विशेषब्रह्मविदो गतेर्वारितत्वादित्यर्थः। वाक्यादिति हेतुमिति। श्लोके प्रथमनिर्दिष्टमपि प्रक्रमादिति हेतुं स्पष्टत्वादुपेक्ष्य, चरमनिर्दिष्टं वाक्यादिति हेतुं व्याचष्ट इत्यर्थः।

ननु ज्योतिश्श्रुत्या भौतिके ज्योतिष्यवगम्यमाने कथं परं ज्योतिरिति पदद्वयसमभिव्याहारात्मकेन वाक्येनात्मावगम इत्यत आह—आनर्थक्येति। P. 1007-1 कथमानर्थक्यप्रतिहतिरित्यत आह—आनर्थक्यप्रतिहतिश्चेति। निर्गुणब्रह्मविदो गत्यभावेन ज्योतिश्शब्दमुख्यार्थादित्यसंपत्त्यभिधानवैफल्यात् स्तुतेरप्यनर्थकप्रायत्वात् ज्योतिश्शब्दस्य मुख्यार्थत्वे तद्वाक्यानर्थक्यापत्तेः निरूढलक्षणया ब्रह्मपरत्वमित्येवमानर्थक्यप्रतिहतिर्ज्योतिर्दर्शनादित्यत्र वर्णितेत्यर्थः।

तर्हि तत एव सिद्धत्वादिदमधिकरणं व्यर्थमित्यत आह—अत एवेति। श्लोकगतं प्रक्रमादिति हेतुं दर्शयितुं प्रकरणं चोक्तमिति टीका। तां व्याचष्टे—प्रकरणं चेति। एवमपि, क्त्वाश्रुतिविरोधः कथं समाधेय इति शङ्कते—ननु यदीति। किं ज्योतिरुपसंपत्तिस्वरूपाभिनिष्पत्त्योः पौर्वापर्याभावात् उपसंपद्येति क्त्वाश्रुतिविरोधः? किं वा तयोः भेदाभावात्? नाद्यः। पौर्वापर्याभावस्थलेऽपि क्त्वाप्रत्ययदर्शनेन तस्य तन्नैयत्याभावादित्याशयेनाह (इत्याशङ्क्य)—परिहरतीति। न द्वितीयः, पौर्वापर्यांशस्येव भेदांशस्यापि यथोक्तोप- P. 1016-7

P. 1007-4 पत्तिबलात् त्यागे बाधकाभावादित्याशयेनाह—**एकैकालयोरपीत्यादिना** । एवं च सति फलितमर्थमाह—**तथा चेति** ।

॥ इति[2] संपद्याविर्भावाधिकरणम् ॥

---

## ॥ अथ अविभागेन दृष्टत्वाधिकरणम् ॥

### सू०॥ अविभागेन दृष्टत्वात् ॥ ४ ॥

**पूर्वस्मिन्नधिकरणे** स्वरूपाभिनिष्पत्तिर्ब्रह्मभाव इति सिद्धं कृत्वा ज्योतिरुपसंपत्तिर्विचारिता । इदानीं स्वरूपाभिनिष्पत्तेः ब्रह्मभावरूपत्वमेव शङ्कापरिहाराभ्यां समर्थ्यत इति **निर्वाहकत्वं सङ्गतिरित्याशयेनाह—स्वरूपावस्थितस्यापीति** । **योगानामिवेति** । अर्शआद्यच्प्रत्ययान्तस्सन्नत्र **योगशब्दो** योगिपरः । तथा च **योगशास्त्र**प्रवर्तकानां **पतञ्जलिप्रभृतीनां** मते 'तदा द्रष्टुः स्वरूपेऽवस्थान'मिति **सूत्रोक्त**रीत्या मुक्तिदशायां स्वरूपेणावस्थितानामपि P. 1007-8 यथा परमेश्वरादन्यता, एवमत्राप्यस्त्वित्याशङ्क्यत इत्यर्थः । **पुनरुक्तिमिति** । वाक्यान्वयाद्यधिकरणैरित्यर्थः ।

ननु तत्त्वमस्यादिवाक्यैरभ्यासेन जीवस्य ब्रह्मभावप्रतिपादनात् कथं 'स तत्र पर्येती'त्यादिवाक्यबोधिताधाराधेयभावाद्यनुरोधेन भेदेनावस्थानं नियन्तुं शक्यत इत्यतः **पूर्वपक्षटीका**भिप्रायमाह—**तत्त्वमस्यादिवाक्यादिति** । 'उत तमादेशमप्राक्ष्य' इति ज्ञातव्यवस्तुप्रश्नोपक्रमात् 'सदेव सोम्येद'मित्यादिना ज्ञेयवस्तुस्वरूपस्यैव कथनात्, 'तद्धास्य विजज्ञा'विति ज्ञानेनैवोपसंहारात्, तन्मध्यवर्तितत्त्वमस्यादिवाक्यमपि मुक्तिसाधनज्ञानोत्पत्तिपरं, 'स तत्र पर्येती'त्यादिवाक्यं तु फलपरम् । ततश्च साधनवाक्यात् फलवाक्यस्य प्रधानवाक्यत्वेन प्राबल्यात् तदनुसारेण तत्त्वमस्यादिवाक्यमौपचारिकाभेदपरं, अभेद-

---

१. कल्पतरौ 'अविवक्षितपूर्वकालभावोऽतो न तद्बलात्' इति पाठः ।

२. अत्राधिकरणे भाष्ये 'प्रथमसूत्रविवरणे' 'तस्यैवात्मीयत्वोपपत्तेः' इत्यत्र एवकारस्य आत्मीयत्वस्यैवोपपत्तेरित्यन्वयः । द्वितीयसूत्रविवरणे 'तदपि पूर्वावस्थापेक्षम्' इत्यस्य 'तदपि नापूर्वावस्थापेक्षम्' इति पाठान्तरम् ।

## ॥ अथ ब्राह्माधिकरणम् ॥

**सू०॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥**

**सू०॥ चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥**

**सू०॥ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥**

पूर्वाधिकरणोक्तस्य निर्विशेषब्रह्मभावस्य शङ्कापरिहाराभ्यां समर्थनादिहापि P. 1008-3 निर्वाहकत्वं सङ्गतिरित्याशयेनाह—**ब्रह्मात्मतामिति**। **सौत्रहेतुं व्याचष्टे इति**। उपन्यासादिस्वरूपस्य तद्भेदस्य च भाष्ये अस्पष्टत्वात् स्वयं व्याचष्टे इत्यर्थः। प्रकृतानुगुण्येनाह—**ब्रह्मैश्वर्यस्येत्यर्थ इति**। 'य आत्मे'त्यादिवाक्यस्य ज्ञातनिर्देशकत्वं कथमित्यतः तदुपपादयन्, उद्दिश्यते अत्रेति व्युत्पत्त्या उद्देश-शब्दो वाक्यपर इत्याशयेनाह—**य आत्मेति हीत्यादिना**। उद्देशस्य विधि-शेषत्वात् तदभावे कथमुद्देशस्य बोधकत्वमित्यत आह—**उद्देशापेक्षितश्चेति**। **आदिशब्दार्थमिति**। सूत्रगतादिशब्दार्थं विधिं व्यपदेशं च क्रमेण दर्शयन् व्याचष्ट इत्यर्थः।

ननु 'स तत्र पर्येती'त्यादेर्विधित्वेनोदाहरणमयुक्तम्। तत्र विधिप्रत्यया-P. 1008-6 भावात्, फलस्य विध्यनर्हत्वाच्चेत्यत आह—**विधिमेव दर्शयतीति**। न प्रवर्त-नाबोधकवाक्यत्वं[विधित्वम्] तत्त्वमस्यादिवाक्याव्याप्तेः।[1] किं तु तत्तात्पर्येण प्रयोजनवदर्थप्रतिपादकवाक्यत्वं। तच्च 'स तत्र पर्येती'त्यादिवाक्यस्यापि अस्तीति भावः। **उद्देशव्यपदेशाभ्यां** भेदं प्रकटयन्नाह—**यच्छब्देति**। **टीकायां** 'सर्वज्ञः सर्वेश्वरः' इति च **व्यपदेशस्योदाहरणद्वयमुक्तम्**। तत्र प्रथमोदाहरणे विधेयान्तरं प्रदर्श्य द्वितीयोदाहरणेऽपि तत्प्रदर्शयति—**यद्यपि चैष इति**। P. 1008-9 **तथापीति**। तथा च, जीवस्वरूपनिर्धारणे तस्य विधेयान्तराभावेनानुद्देशत्वात् प्रयोजनवदर्थप्रतिपादकत्वाभावेन विधित्वाभावाच्च व्यपदेशत्वं सिद्धमिति भावः।

---

1. कल्पतरौ 'व्याचष्टे उपन्यास उद्देश' इति पाठः। टीकायां 'जक्षत् क्रीडन् रममाण' इति पाठः।

सर्वज्ञत्वसर्वेश्वरत्वादेरप्रतिपाद्यत्वं कथमित्यत आह **टीकायां–सिद्ध-वद्व्यपदेशादिति ।** अनुद्दिष्टस्याविहितस्य चार्थस्य कथं प्रामाणिकत्वमिति शङ्कते—**कथं तर्हीति । जीव इति ।** व्यपदेशेनापि सर्वज्ञत्वसर्वेश्वरत्वादेः P.1008-10 ब्रह्मधर्मत्वेनैव कथनादिति भावः । कण्ठतो जीवधर्मत्वेन प्रतिपादनाभावेऽपि सामर्थ्यात् तद्धर्मत्वसिद्धिरिति परिहरति—**अत आहेति ।** प्रकृते अवयवार्थ-कथनात्मकनिर्वचनाभावादाह—**तेषामिति । तात्पर्यकथनमिति ।** तात्पर्येण कथनमित्यर्थः ।

**अयं अर्थ** इतीदंशब्देन भावाभावात्मकैरित्युत्तरवक्ष्यमाणश्लोक-प्रतिपाद्योऽर्थः परामृश्यत इति दर्शयन् वाक्यार्थमाह—**तस्मादिति ।** तन्निर्वचन-सामर्थ्यादित्यर्थः[1] । सामर्थ्यमेव प्रकटयति—**इतरथेति । पराग्भूतं** परात्मपरमे-श्वरधर्मभूतं **यदैश्वर्यं** ईश्वरभावः सर्वेश्वरत्वादिधर्मः । **तत्कथनस्य** मुक्तजीव-स्वरूपप्रतिपादने अनुपयोगापत्तेरित्यर्थः । **सौत्रीं प्रतिज्ञामिति ।** पादाद्याधि-P. 1008.12 करणमारभ्य प्रतिपादितायाः स्वरूपाभिनिष्पत्तेः **ब्राह्मेणेत्यनेन** ब्रह्मसम्बन्धित्वेन श्रुतसत्यसङ्कल्पत्वादिरूपाभिनिष्पत्तित्व**प्रतिज्ञानादिति** भावः ।

**श्लोकं** व्याचष्टे—**यो मुक्त इति ।** भावात्मकानां धर्माणामद्वैताविघा-तकत्वे **टीकायां** धर्मिणस्सकाशात् भेदाभावो हेतुरुक्तः । अभावात्मकानां धर्म्य-भेदायोगेन **टीकोक्त**हेत्वयोगात् स्वयं हेतुं दर्शयन्नाह—**अवस्तुत्वादिति ।** शशशृङ्गाद्यसत्प्रतियोगिकस्य अभावस्य असत्त्ववत्, मिथ्याभूतपाप्मादिप्रतियोगि-कस्याभावस्य मिथ्यात्वावश्यंभावादिति भावः । **श्लोके अनेकाकारतैकस्य** नेत्यन्तं **प्रतिज्ञा**परत्वेन व्याचष्टे—**एकस्यात्मन इति ।** धर्माणां धर्मिरूपत्वे **श्लोकोक्तं** दूषणं न लगतीत्याशङ्क्य, तदुपलक्षणपरतया विकल्पपूर्वकं योजयति—**एकस्यानेकाकारतां वदन्नित्यादिना ।**

सिद्धान्ते आत्मनोऽनेकाकारत्वाभ्युपगमात् कथं तन्निषेध इत्यतः **श्लोकं** व्याचष्टे **टीकायां–न ह्येकस्येति । टीकायामात्मरूपव[दिति ।** आत्मस्व-P. 1009-2

---

१. टीकायां 'तन्निर्वचनसामर्थ्यादयमर्थः प्रतीयते' इत्यत्र वाक्यसमाप्तिः ।

२. तात्पर्यतः कथनमिति कल्पतरौ पाठो व्याख्यानानपेक्षो दृश्यते ।

३. कल्पतरौ 'पराग्भूतैश्वर्यकथनस्य' इति पाठो ज्ञायते ।

P. 1009-4 रूपव]दित्यर्थः । **टीकायां—तेषामप्यभेदेति** । परस्परमप्यभेदप्रसङ्गादित्यर्थः । **सदद्वैतेति** । परमार्थसतो यदद्वैतं परमार्थसद्द्वितीयराहित्यं तद्व्विघात-कत्वमित्यर्थः । अभावरूपधर्माणामवस्तुत्वादेव न परमार्थसद्ब्रह्मधर्मत्वमिति परि-हरति—**अत आहेति** । **एतेनेत्यं**नेन पूर्वटीकानिर्दिष्टो ब्रह्मणस्तात्त्विक-धर्मयोगित्वासम्भवः परामृश्यत इति भङ्ग्यन्तरेण दर्शयन्नाह—**भेदाभेदनिषे-धादित्यादिना** । **भावरूपत्व इति** । परमार्थसद्रूपत्व इत्यर्थः ।

**विकल्परूपा इति** । विकल्पेन रूप्यन्ते विषयीक्रियन्त इत्यर्थः । 'शब्द-ज्ञानानुपाती वस्तुशून्यो विकल्प' इति **योगसूत्रोक्त**विकल्पाख्यवृत्तिविषया इति P. 1009-5 यावत् । तथा च शशशृङ्गादिवदलीका इति भावः । **तुच्छत्वाभ्युपगमप्रयुक्तं न मृष्यत इति** । ब्रह्मणस्सर्वेश्वरत्वादिधर्मवत्त्वचिन्मात्ररूपवत्त्वप्रतिपादकश्रुत्योः व्यावहारिकपारमार्थिकदृष्टिभ्यामविरोधसंभवेनैकस्या अपि श्रुतेर्निरालम्बनत्वकल्प-नायोगादिति भावः । **कलयापीति** । एकदेशेनापीत्यर्थः ।

**औडुलोमिमतं** कस्मिन्नंशे स्वीकृतमित्याशङ्क्य, सर्वेश्वरत्वादिधर्माणाम-तात्त्विकत्वमात्रं स्वीकृतम्, न तु तुच्छत्वमित्याशयमाह—**धर्माणामिति** । धर्माणामित्यादिरर्थो **मृष्यन्नभिहितं** मतमित्य[त्राभिहितमित्य]नेनाभिहित इत्यर्थः । अतिशौण्डीर्यामर्षणेन फलितमर्थमाह—**बाधितमिति** । **टीकायां—** P.1009-12 **येन तच्छब्दा इति** । 'राहोः शिर' इत्यत्र राहोः शिरोमात्रत्वेन षष्ठ्यर्थ-सम्बन्धस्यालीकार्थप्रतिपादकत्वेन अवास्तवत्वम्, तद्वत् सत्यकामादिशब्दा अपीत्यर्थः ।

**॥ इति ब्राह्माधिकरणम् ॥**

---

१. कल्पतरौ 'एतेनेति' इति प्रतीकधारणम् ।

२. 'चितितन्मात्रेणे'ति सूत्रस्यायमर्थः—चितिरूपं यत् तन्मात्रं निर्विशेषचैतन्यं, तेनैव अभिनिष्पद्यते । निर्विशेषसाक्षात्कारफलस्य तदात्मकत्वात् निवृत्ताज्ञानतत्कार्यपूर्णा-नन्दैकरसचिन्मात्रात्मकत्वात्, इति ।

३. कल्पतरौ प्रतीकोऽयं न दृश्यते ।

## ॥ अथ संकल्पाधिकरणम् ॥

### सू०॥ सङ्कल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

### सू०॥ अत एव चानन्याधिपतिः ॥ ९ ॥

शिष्यबुद्धिसौकर्यार्थमवशिष्टानामधिकरणानां तात्पर्यार्थमाह—**इत उपरीति** । **प्रसङ्गसङ्गतिमाह—पूर्वत्रेति । एकोपाधाविति । एकस्मिन् पित्रादिसमुत्थाने सङ्कल्पातिरिक्तसाधनभावाभावयोः [आपततोः] (आपाततो) विरोधात्** व्यवस्थोच्यत इत्यर्थः । लोकप्रमाणादनुमानात् श्रुतेर्बाध इति कथं पूर्वः पक्ष इत्याशङ्क्य, श्रुतेर्लोकोपजीवितया तदुपजीव्यजातीयस्य लोकप्रमाणस्य प्राबल्याद्युक्तमनुमानस्यापि श्रुतिबाधकत्वमित्याशयेनाह—**पूर्वपक्षयतीति । लोके** इति टीकासूचितमनुमानमाह—**विमता इति** । पित्रादय इत्यर्थः । **प्रयत्नादीति । आदिपदेन चेष्टा गृह्यते** । यद्यपि प्रयत्नजन्यत्वमात्रसाधनेऽपि पूर्वपक्षः सिध्यति । तथापि, सङ्कल्पादित्रितयजन्यत्वमुद्देश्यमिति तथा साध्यं निर्दिष्टमिति ध्येयम् ।

P. 1010-3

P. 1010-5

एतेन प्रयत्ने चादृष्टाद्वारकत्वं विशेषणम् । तेनोपासनाकालकर्तव्यासनबन्धाद्युपयोगिप्रयत्नजन्यत्वेन नार्थान्तरमिति **परिमलोक्तं चिन्त्यम् । लोके हि कश्चित् कश्चिदर्थं चिकीर्षुः प्रयतते, प्रयतमानः समीहते । समीहमानस्तमर्थमाप्नोतीति क्रमो दृष्टः, नतु इच्छानन्तरमेवेष्यमाणमुपतिष्ठत इति टीका**नुरोधेन संकल्पानन्तरभावीति [प्रयत्नविशेषणेन तन्निरासादिति] ध्येयम् ।

**भोगसाधनत्वादिति** । न च सकलभोक्तृभोगसाधनेषु महाभूतेषु साध्याभावात् व्यभिचार इति वाच्यम् । स्रष्टृभोगसाधनत्वस्य हेतुत्वेन दोषाभावात् । यत्त्वत्र **परिमलोक्तं**—एवमपि परमेश्वरस्य महाभूतस्रष्टृतया तद्भोगसाधनेषु महाभूतेषु व्यभिचारः । परमेश्वरस्यापि भूतभौतिकसाध्यभोगसद्भावस्य 'भोगमात्रसाम्यलिङ्गाच्चे'ति सूत्रे वक्ष्यमाणत्वादिति चेन्न । 'तत्तेजोऽसृजते'त्याद्याख्यातोक्तेन

P 1010-5

---

१. कल्पतरौ 'आपातत' इत्येतत् 'आपततो'रिति शोधनीयम् ।

२. कल्पतरौ 'पूर्वपक्षयति—यत्नानपेक्ष इति' इति शोधनीयम् ।

'तदात्मानं स्वयमकुरुत' इत्यादिधातूक्तेन च पारमेश्वरेण यत्नेन साध्यत्वस्य तेजःप्रभृतिष्वपि सत्त्वेन साध्यस्यापि सत्त्वादिति ।

**तत् चिन्त्यम्** । यत्तावदुक्तं साध्यस्यापि सत्त्वान्न व्यभिचार इति, तदयुक्तम्, परमेश्वरस्य प्रयत्नसद्भावे मानाभावात् । तथात्वे सर्वस्यापि प्रपञ्चस्य निःश्वसितत्वप्रतिपादकश्रुतिविरोधात् । उदाहृतधात्वाख्यातयोश्च 'तत् सदासीत्' 'तन्नामरूपाभ्यामेव व्याक्रियत' 'तदैक्षत' 'सङ्कल्पं करोति' 'यत्नं करोती'त्यादिवदौपचारिकत्वात् । अन्यथा 'कुलालो घटं करोति' इत्यादिप्रयोगानुगुण्याय लीलापरिगृहीतशरीरतच्चेष्टादिजन्यत्वस्याप्यभ्युपगमापत्तेः । पुरुषसूक्तादिषु परमेश्वरशरीरजन्यत्वस्यापि भूतेषु श्रवणात् ।

यदि च शरीरादिकमन्तरेणापि विचित्रशक्तिमायासहायेन वियदादिसृष्टिसंभवात् तत्र तत्र श्रुतिषु 'यत्तदद्रेश्य'मित्यादिषु शरीरादिरहितस्यैव भूतयोनित्वश्रवणाच्च, पुरुषसूक्तादिषु शरीरादिप्रतिपादनं प्रतिपत्तिसौकर्याद्यर्थमिति मतम्, तदा 'आत्मन आकाशः संभूतः' 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' 'स ईक्षाञ्चक्रे स प्राणमसृजत' 'स ईक्षत लोकान्नु सृजा इती'त्यादिबहुश्रुत्यनुरोधेन विनापि [प्रयत्नं] सङ्कल्पमात्रेण वियदादिस्रष्टृत्वसंभवाच्च, क्वचित् प्रयत्नजन्यत्वश्रवणं प्रतिपत्तिसौकर्यार्थं, तदंशे तात्पर्याभाव इति वा कल्प्यमिति तुल्यम् ।

तथा च 'निःश्वसितमस्य वेदा' इत्यादिश्लोकव्याख्यानावसरे ग्रन्थः—**जगद्विवर्ताधिष्ठानत्वेन ब्रह्मणः सर्वकर्तृत्वमुक्त्वा सर्वज्ञत्वं ज्ञानपदसूचितं वेदकर्तृत्वादिना साधयति—निःश्वसितमिति । ईक्षणमात्रेण सृष्टत्वात् भूतानि वीक्षितं, हिरण्यगर्भद्वारा साध्यं चराचरं वीक्षणाधिकप्रयत्नसाध्यस्मितसाम्यात् स्मितमिति ।**

एवं **शास्त्रयोनित्वाधिकरणभाष्य**स्वारस्यादपि परमेश्वरस्य प्रयत्नेन विनैव प्रपञ्चस्रष्टृत्वमवगम्यते । यत्त्वत्र **टीकायामप्रयत्नेनैवेति । ईषत्प्रयत्नेन । यथा अलवणा यवागूरिति** इति व्याख्यानं, तत्प्रयत्नशब्दस्य व्यापारसामान्यपरत्वमाश्रित्याप्रयत्नशब्देन व्यापारमात्रं वार्यत इति मनसि निधाय, न त्वात्मधर्मयत्नाभिप्रायेण, तस्येषत्त्वाधिकत्वयोरसंभवात् । अत एव **तट्टीका**व्याख्यानग्रन्थः—**ईक्षणादिप्रयत्नापेक्षणादप्रयत्नशब्दः सौकर्यापेक्ष इत्याह**—

ईषदितीति। तथा च, तस्मिन् सूत्रे परिमलग्रन्थोऽपि नामरूपात्मकस्य सर्वस्यापि प्रपञ्चस्य निःश्वसितवत् अप्रयत्नसाध्यब्रह्मकार्यत्वोक्तेरिति। तथा च साध्यस्यापि सत्त्वान्न व्यभिचार इति चिन्त्यम्।

नापि व्यभिचारप्रसक्तिः। स्रष्टृभोगसाधनत्वस्य हेतोस्तत्राभावात्। तथा हि—न तावत् परमेश्वरस्य भोगोऽस्ति। सुखदुःखानुभवो हि भोगः। सुखदुःखे च धर्माधर्मजन्ये। धर्माधर्मौ च जीवस्य धर्मौ 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' इत्यादिश्रुतेः। 'न कर्मणा वर्धते नो कनीयान्' 'स एष सर्वेभ्यः पाप्मभ्यः उदितः'। 'अन्यत्र धर्मादन्यत्राधर्मा'दित्यादिश्रुतिभिः परमेश्वरस्य कर्मसम्बन्धवारणाच्च।

एवं 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति जीवस्यैव भोक्तृत्वं श्रूयते, न परमात्मनः(परस्तादि)[अनश्नन्नि]त्यादिना तस्य सर्वसाक्षित्वश्रवणेन सुखदुःखयोरौदासीन्यावगमात्। अन्यथा सुखानुभववद्दुःखानुभवस्याप्यापत्तौ तस्य जीवविशेषत्वापत्तेः। तथा च पातञ्जलसूत्रम्। 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर' इति। तत्र विपाकशब्दनिर्दिष्टो भोगोऽपि परमेश्वरे वार्यत इति। तथा च तत्रत्यं सूत्रं 'विपाको जात्यायुर्भोगा' इति। न चाप्तकामस्य स्वभोगार्थं व्यापारः संभवति। इच्छामन्तरा भोग्यसंपादने प्रवृत्त्ययोगात्।

तथा च 'न प्रयोजनवत्त्वा'दिति सूत्रे भाष्यम्—चेतनो हि लोके बुद्धिपूर्वकारी पुरुषः प्रवर्तमानो न मन्दोपक्रमामपि तावत्प्रवृत्तिमात्मप्रयोजनानुपयोगिनीमारभमाणो दृष्टः। किमुत गुरुतरसंरंभामिति, यदीयमपि प्रवृत्तिश्चेतनस्य परमात्मन आत्मप्रयोजनोपयोगिनी परिकल्प्येत, नित्यतृप्तत्वं परमात्मनः श्रूयमाणं बाध्येतेति च।

एवं लोकवत्तु लीलाकैवल्यमिति सूत्रे भाष्यं—एवमीश्वरस्याप्यनपेक्ष्य किञ्चित्प्रयोजनान्तरं स्वभावादेव केवलं लीलारूपा प्रवृत्तिर्भविष्यति। न हीश्वरस्य प्रयोजनान्तरं निरूप्यमाणं न्यायेन श्रुतितो वा संभवति। न च स्वभावः पर्यनुयोक्तुं शक्यत इति। यदि नाम लोके लीलास्वपि किञ्चित् सूक्ष्मं प्रयोजनमुत्प्रेक्ष्येत, तथाऽपि नैवात्र किञ्चित् प्रयोजनमुत्प्रेक्षितुं शक्यते। आप्तकामश्रुतेरिति च।

एवं **न प्रयोजनवत्त्वादिति सूत्रे भाष्यान्तरमपि**। ‘तथापीश्वरस्य कारणत्वं न संभवति, प्रयोजनवत्त्वात् विचित्रसृष्टेः, ईश्वरस्य च प्रयोजनाभावात्। बुद्धिपूर्वकारिणामारम्भे द्विविधं हि प्रयोजनम्। स्वार्थः, परार्थो वा। न हि परस्य ब्रह्मणः स्वभावत एवावाप्तसमस्तकामस्य जगत्सर्गेण किञ्चन प्रयोजनमनवाप्तमवाप्यते नापि परार्थं’ इत्यादि।

**न च भोगमात्रसाम्यलिङ्गाच्चेति सूत्रात्** परमेश्वरस्य भोगसिद्धिः। स्रक्चन्दनवनितादिसंपर्कजन्यसुखानुभवे लोकप्रसिद्ध्यनुरोधेन रूढस्य भोगशब्दस्य नित्ये स्वरूपानन्दे गौणत्वात्। आनन्दानुभवमात्र एव मुक्तानां परमेश्वरसाम्यप्रतिपादनात्। तथा च **भाष्यान्तरं**—‘ब्रह्मयाथात्म्यानुभवरूपभोगमात्रे मुक्तस्य ब्रह्मसाम्यप्रतिपादनाच्चे’ति। यत्र क्वचित्परमेश्वरस्य भोगप्रतिपादनसत्त्वे, तदपि परमेश्वरस्यांशावतारविषयम्। न तु जगत्स्रष्टृविषयम्। तस्य भोगाभावसाधनात्। तस्मात्, परमेश्वरस्य भोगोऽस्तीति, तत्साधनं वियदादीति च, न श्लिष्यते।

सङ्कल्पेन भोगसाधनस्यैव उपस्थापयितव्यत्वात् वस्तुशब्दः तत्पर इत्याशयेनाह—**वस्तुशब्देनेति**। **मुक्तसङ्कल्पस्येति**। सगुणमुक्तसङ्कल्पस्येत्यर्थः। **सापेक्षत्वानुमानमिति**। प्रागुपन्यस्तमेवानुमानं सङ्कल्पस्य प्रयत्नसापेक्षत्वपर्यवसानात् **सापेक्षत्वानुमानमित्युक्तम्**। अथ वा, मुक्तसङ्कल्पो यत्नसापेक्षः, संकल्पत्वात् लौकिकसङ्कल्पवत्, इत्यनुमानमित्यर्थः। अन्यपरत्वान्न श्रुतिरनुमानं बाधितुं शक्नोतीति परिहरति—**अत आहेति**। **लाघवादिति**। चेष्टानपेक्षत्वादिति भावः। **असत्त्वमिवेति**। औपचारिकमसत्त्वमित्यर्थः। न तु प्रयत्नाभावस्तत्रोक्तः। कर्मोपासनादिसाधनान्तरस्यावश्यकतया संकल्पव्यतिरिक्तसाधनमात्रवारणस्य कर्तुमशक्यत्वादिति भावः।

P. 1010-6

कामिन्यां साध्याभावं सूचयति—**संकल्पमात्राभिव्यक्तेति**। **कामिनीशब्देन** हेतुसद्भावः सूचित इति ध्येयम्। **आशङ्क्याहेति**। **आदावाशङ्क्य** तदनन्तरं **परिहारमाहेत्यर्थः**। **टीकासूचितं** व्यभिचारपरिहारं स्पष्टयति—

P. 1011-1

---

१. भाष्यान्तरमिदं श्रीरामानुजाचार्याणाम्। तदुक्तिश्च सगुणमात्रमभ्युपगम्य निर्गुणं ब्रह्मापलपतामपि परेषां भाष्ये ब्रह्मणो भोगो निराकृत इति प्रदर्शयितुम्।

२. इदमपि रामानुजाचार्याणामेव।

३. कल्पतरौ ‘भोगसाधनं विवक्षित’मिति पाठः।

**सत्ताप्रयुक्तेति।** प्रसिद्धमणिमालादीनां स्त्रीवस्तुसाध्यत्वाभावादाह—**कण्ठे कृत** P. 1011-2 **इति।** पारवश्यप्रयुक्तकण्ठाश्लेषकालोत्पन्नो हस्तद्वयनखक्षतसमूह इत्यर्थः। **टीकायामनुमानबाध इति।** अत्र श्रुतावनुमानकृतो बाधो नेत्यर्थः। **विपरीतमिति।** उपजीव्यजातीयत्वाविशेषादिति भावः। प्रमित्युत्पत्तावनपेक्षणादप्रयोजकमनुमानमित्याशयमाह—**पदपदार्थेति।**

[1]ननु श्रुतेरन्यपरत्वान्नानुमानबाधकत्वमित्यत आह—**विद्यारहितेति।** [2]विद्याप्रभावशालिनां प्रयत्नादिनिरपेक्षसङ्कल्पमात्रेणैव पित्रादिसृष्ट्युपपत्तेः यथाश्रुतार्थपरैव श्रुतिः। **एवकारेण च** पुरुषधर्मसङ्कल्पसजातीयतदनन्तरभाविप्रयत्नचेष्टादेरेव वारणान्न सङ्कल्पव्यतिरिक्तसाधनमात्रवारणप्रसक्तिरिति श्रुतेः अन्यपरत्वप्रसक्त्यभावादनुमानमविद्वद्विषयमिति सोपाधिकमिति भावः।

**को हीत्यादिटीकाभिप्रायमाह—अगस्त्यो हीति।** तावत्समुद्रो- P. 1011-4 दकपानानुगुणप्रयत्नानपेक्षसङ्कल्पेनेत्यर्थः। तेन मुखसंयोजननिगरणानुकूलप्रयत्नसापेक्षतया कथं **सङ्कल्पमात्रेणेति मात्रशब्द** इति शङ्काया नावकाशः। **निवासयामासेति।** प्राणिनिवासवन्तमकरोच्छशाद[3] इति अर्थः। **स इवेति।** दण्डकारण्यमपि शशादवत् सृजतीत्यर्थः। **निवासयतीति।** निवासवन्तं करोतीति विग्रहे, मत्वन्ताण्णिचि, विन्मतोर्लुगिति मतुपो लुकि, रूपमिति ध्येयम्। **प्रयत्नाद्यनपेक्षेति।** तदुचितप्रयत्नाद्यनपेक्षेत्यर्थः। **योगसामर्थ्येति।** विद्या- P. 1011-7 प्रभावेत्यर्थः।

॥ इति सङ्कल्पा[4]धिकरणम् ॥

---

१. टीकायां 'एवं प्राप्तेऽभिधीयते' इति शोधनीयम्। कल्पतरौ 'प्रमाणान्तरेत्यादिना' इति पाठः।

२. कल्पतरौ 'विद्यारहितसृष्टत्वमुपाधि'मिति शोधनीयम्।

३. टीकायां 'स इव' इत्यस्य स्थाने 'शशाद इव' इति पाठः। कल्पतरौ 'शशादो निवासयामास। कस्त्वन्यो योगप्रभावादृते' इति, 'स इव दण्डकारण्यमपि सृजति निवासयति च' इति च पाठ इति ज्ञायते। अन्यथा कल्पतरोरनन्वयात्। कल्पतरौ 'एष' इत्यस्य, अन्य इत्यर्थः।

४. अत्र भाष्ये प्रथमसूत्रेविवरणे 'निमित्तान्तरमितीष्यते' इत्यत्र इतिपदमधिकम्।

## ॥ अथ अभावाधिकरणम् ॥

सू०॥ अभावं बादरिराह ह्येवम् ॥ १० ॥

सू०॥ भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

सू०॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

सू०॥ तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥

सू०॥ भावे जाग्रद्वत् ॥ १४ ॥

P. 1012-1 **दृष्टान्तसङ्गतिं** दर्शयन्नाह—**पूर्वत्रेति** । टीकायां—**देहेन्द्रियवियोगः स्यादिति** । देहेन्द्रियाभावः स्यादित्यर्थः । श्रुत्यन्तरविरोधान्मनसेति विशेषणस्य नान्ययोगव्यवच्छेदकत्वमित्याशयेन शङ्कते—**नन्विति** । अन्यथासिद्धत्वात् न श्रुत्यन्तरं विशेषणस्वरसप्राप्तान्ययोगव्यवच्छेदभञ्जकमित्याशयेन परिहरति—**अत आहेति** । **ऋद्धिशब्दो विद्यापर** इति दर्शयन्नन्यथासिद्धिमेव प्रकटयति—**बुद्धिप्रभावेति**[1] । एकवचनश्रुतिविरोधात् उक्तान्यथासिद्धिरयुक्तेति शङ्कते—**ननु मनोभेदेति** । 'स एकधा भवती'त्यादेः स्वार्थपरत्वस्यैवाभावान्न 'मनसे'ति श्रुतिबाधकत्वमिति परिहरति—**अत आहेति** ।

P. 1012 6 **देवताधिकरणन्यायेन** आलम्बनपरत्वमप्यवर्जनीयमित्यत आह—**अत्र हेतुमाहेति** । निर्गुणब्रह्मविदि अनेकधाभावस्य प्रमाणबाधितत्वान्न देवताधिकरणन्यायप्रवृत्तिरिति मनसि निधाय, परिहारतात्पर्यमाह—**निर्गुणायामिति** । **टीकोक्तं सामञ्जस्यं** दर्शयति—**परैरिति** । विलोकनभाषणविलासपरिहासकेलीपरिरम्भादिरूपेण विहारेणेत्यर्थः । **न पुष्कलेति** । कथञ्चित्सुखानुभवमात्रसंभवेऽपि, स्रक्चन्दनवनितादिसंपर्कजन्यः **पुष्कलो भोगो** नेत्यर्थः ।

P,1012-11 **अर्थसंभवमेव** प्रकटयति—**भूमविद्योपक्रम इति** । **अभूमविद्येति**[2] । अपकृष्टभूमविद्येत्यर्थः । **इत्यर्थसंभव इति**[3] । सावधिकभूमविद्यायां विद्यमानेनै-

---

१. कल्पतरौ 'योगप्रभावे'ति पाठः ।

२. अनेन कल्पतरौ 'अभूमविद्यागतः भूमविद्यायामपि' इति पाठ इति ज्ञायते ।

३. कल्पतरौ 'प्रशंसार्थमुच्यत इत्यर्थसंभवे' इति पाठः ।

वानेकधाभावेनं निरवधिकभूमविद्यायाः स्तुतिरित्येवं तत्कीर्तनस्य सप्रयोजनत्वसंभवे निष्प्रयोजनस्तुतिमात्रत्वमनर्थकमित्यर्थः। धनुर्धरत्वविशेषणस्यायोगव्यवच्छेदकत्वमेवेति दर्शयितुमन्ययोगव्यवच्छेदकत्वाभावं दर्शयति—**चैत्र इति**। P. 1012-12 तर्हि किं विशेषणमयोगव्यवच्छेदकम्? किं वा अन्ययोगव्यवच्छेदकमित्यत आह—**यस्य हीति**। विशेष्ये अन्वयोऽनियत इत्यर्थः। मात्रपदमहिमलब्धं विशेषणान्तरस्य विशेष्यान्वयाभावं न गमयेदित्यमुमर्थमनुभवेन दर्शयति—**न हि चैत्र इति**।

यस्य हि प्राप्तिर्नियता विशेष्ये, तद्विशेषणमन्ययोगव्यवच्छेदकं इत्यर्थादुक्तप्रायमिति मत्वा **मनसेति** विशेषणस्य कामरमणे विशेष्ये नित्यप्राप्तिं दर्शयन्नाह—**प्रकृते त्विति**। **टीकायामैश्वर्यशालिन इति**। ब्राह्मलौकिकैश्वर्यशालिनो विदुष इत्यर्थः। **दृष्टान्तमिति**। **सूत्रोक्तं द्वादशाहवदिति दृष्टान्तमित्यर्थः**।

**आसनोपेयिभ्यामिति**। आसनमित्यनेन तदर्थको धातुर्लक्ष्यते। तेनो-P. 1013-1 पासनार्थकोपपूर्वकासिधातुचोदिते, नातिव्याप्तिः। उपपूर्वादिण् गताविति धातोः धातुनिर्देशार्थे इक्प्रत्यये धात्विकारस्येयङादेशे उपेयीति रूपम्। यद्यपीयङपवादार्थतया 'इणो य'णिति यणादेशविधानात् उपयीति भवितव्यम्, तथापि 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत' इति परिभाषाश्रयणादियङादेशो 'इ गता'विति धातोर्वा रूपमिति बोध्यम्। **उपयीति पाठश्चेदस्ति स सुगमः**।

फलितमर्थमाह—**आसनोपेयीति**। अन्यतरवत्त्वमित्यर्थः। **तस्यैवेति**। तथा च यजतिचोदनावत्त्वे सत्यहर्गणत्वमहीनस्य लक्षणमिति भावः। आसिचोदनं स्वयमुदाहरन्नाह—**सप्तदशावरा इति**। **सत्रलक्षणान्तराभिधानमिति**। अनियतसंख्यबहुकर्तृकक्रतुत्वमित्यर्थः। **इदं चेति**। यजतिचोदनावत्त्वं P. 1013-4 चेत्यर्थः। **सूत्रयोः** प्रयोजनं दर्शयन्, तद्व्याख्यानटीकामवतारयति—**स**

---

१. कल्पतरौ ''तत् विशेषणासंबन्धव्यवच्छेदकं' इति पाठः। टीकायां 'नास्ति शंका मनोऽयोगस्य' इति पाठः'

२. कल्पतरौ 'अन्यतरत्वमि'त्येतत् अन्यतरवत्त्वमित्यर्थकमिति भावः।

३. कल्पतरौ 'उपायिचोदनेनेति' इति प्रतीकधारणं शोध्यम्।

P. 1013-7 **शरीरंत्वमिति** । संप्रतीत्येतद्व्याचष्टे—**इदानीमिति** । उद्विवृणोति—**शरीरेति** । अत्र **शरीराभावो** जागररूपव्यावहारिकशरीराभावो विवक्षितः। स्वप्नदृष्टान्तबलेन दृश्यानां पित्रादीनामिव द्रष्टुरुपासकस्यापि वासनामयप्रातिभासिकशरीरावश्यंभावादिति द्रष्टव्यम् ।

उपपत्तेरुपपद्यमानसापेक्षत्वात् तदाकाङ्क्षायामुत्तरटीकेति आशयेनावतारयति—**कस्यां इति** । श्रुतिं मनसि निधाय तस्याः स्त्रीत्वात् प्रश्ने स्त्रीलिङ्गनिर्देशः । **तामिति** । उपपद्यमानामित्यर्थः । विदुषो ब्रह्मलोके सूक्ष्मभोगे सत्येव 'मनसैता'निति श्रुतेरुपपत्तिरित्यमुमर्थं व्यतिरेकमुखेन दर्शयितुं **यदि पुनरित्यादिटीका** । तदर्थोपजीवनेन च **भावे जाग्रद्वदिति** सूत्रं व्याख्यातुं **सशरीरस्य त्विति टीका** । तामवतारयति—**शरीरादौ सतीति** । **स्थूल इति** । स्पष्ट इत्यर्थः । दृढतरव्यवहारानुगुणो दन्तक्षतमणिमालायोगी चेति यावत् ।

P. 1014-2 इह पूर्वत्रैव श्रुत्युपपत्तेरभावादाह—**देहादीति** । तथा च 'एकधा भवती'त्यादिश्रुत्याञ्जस्यसिद्धशरीराद्युपादानस्यैवं सत्येवोपपत्तेरित्यर्थ इति भावः ।

॥ इति अभावाधि[3]करणम् ॥

---

## ॥ अथ प्रदीपाधिकरणम् ॥

**सू०॥ प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥**

**सू०॥ स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥**

भाष्यसूचितां सङ्गतिं दर्शयति—**सर्गस्सङ्कल्पमात्रेणेति** । **आस्विति** । तनुष्वित्यर्थः । भाष्यगतं पूर्वपक्षमाक्षिपति—**नन्विति** । अधिष्ठात्रात्माभावेन

P. 1014-6 निरात्मकत्वमुच्यते, न तु चैतन्याभावेनेति परिहरति—**तत्राहेति** । परिच्छिन्नस्यापि जीवस्य शरीरान्तरस्रष्टृत्ववत् तदधिष्ठातृत्वमपि कुतो न भवेदिति शङ्कते—

---

1. कल्पतरौ 'सूत्रद्वयं तन्वभाव इत्यादि' इति पाठः ।
2. कल्पतरौ 'कासा इत्यशुद्धम् । 'कस्या' इति शोधनीयम् ।
3. अत्र भाष्ये 'मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' इत्येकवाक्यम् ।

**नन्विति**। अदृष्टद्वारिकायां शरीरादिसृष्टौ जीवस्य अभिव्यक्त्यनपेक्षणात् तत्संभवेऽपि, स्वव्यापारसाध्ये शरीराद्यधिष्ठातृत्वे अभिव्यक्त्यपेक्षणात् तत्राभिव्यक्तिमन्तरा तदधिष्ठातृत्वं अनुपपन्नमिति परिहारतात्पर्यमाह—**परिच्छिन्नेति**। तर्हि स्वभोगोपयोग्यात्मान्तरसृष्ट्या शरीरान्तराणां सात्मकत्वं भविष्यतीति शङ्कते—**ननु शरीरान्तरेष्विति**। P. 1014-6

**न चात्मान्तरमपीति** पाठं दृष्ट्वा व्याचष्टे—**स्रष्टुमर्हतीत्यनुषङ्ग इति**। सृज्यमानमात्मान्तरं स्रष्ट्रात्मोपाधिव्यतिरिक्तोपाधिरहितं? तत्सहितं वेति विकल्पं मनसि निधाय प्रथमं विकल्पयति—**सृज्यमानमिति**। उपाधिभेदमन्तरेणात्मभेदानभ्युपगमात् अन्यत्वपक्षोऽयुक्त इति परिहरति—**नाद्य इत्याहेति**। अभेदे कर्तृकर्मभावाभावेन फलितमर्थमाह—**स्रष्टुः स्रष्टव्यत्वेति**। **लुप्तमध्यमेति**। मध्यममाश्रयपदं लुप्तमिति भावः।

इदानीं द्वितीयं कल्पमुत्थापयति—**नन्वात्मान्तरेति**। सृज्यमानस्याधिष्ठातृत्वानुपयोगान्निरर्थकं तत्सर्जनमिति परिहरति—**तत्राहेति**। **अवच्छेदित इति**। सञ्जातावच्छेदशालीत्यर्थः। तत्राभिव्यक्तिमन्तरा तदधिष्ठातृत्वमनुपपन्नमित्यनेन, योगी शरीरान्तराणि नाधितिष्ठति। व्यवहितत्वादित्यनुमानमुक्तम्। तत्र व्यभिचारं शङ्कते—**ननु व्यवहितेति**। तदवच्छेदप्रयुक्तभोगोपयोग्यधिष्ठातृत्वाभावः साध्य इति न दोष इति परिहरति—**तथा सतीति**। तथा च प्रागुक्तरीत्या योगिनः स्वसृष्टशरीरेष्वभिव्यक्त्यसंभवात् तदधिष्ठातृत्वायोगे तत्र भोगाभावात् दारुयन्त्रतुल्यतया निरात्मकान्येव तानि शरीराणि इति भावः। P. 1014-14 P. 1014-15

शरीरत्वान्यथानुपपत्त्या योगिसृष्टशरीरेषु भोगाधिष्ठानत्वावश्यंभावे, तदनुरोधेन योगिजीवस्य तत्रापि व्यक्त्यवश्यंभावे, तेषां सात्मकतया न निरात्मक-

---

१. कल्पतरौ 'तथा तान्यधितिष्ठतु' इति पाठः।

२. विद्यमाने 'न वा आत्मान्तरं स्रष्टुमपि' इति पाठे अर्हतीत्येतावन्मात्रानुषङ्गः।

३. कल्पतरौ 'ननु आत्मसृष्टावुक्तदोषपरिहाराय अन्तःकरणानि स्रष्टव्यानि तेषु च' इत्यादिः पाठः दृश्यते 'अन्तःकरणान्तराणि सृज्यन्तां' इति च पाठान्तरं काशीमुद्रितपुस्तके अधो निवेशितम्। तत्र आत्मसृष्टावुक्तो यो दोषः तत्परिहाराय इत्यर्थः। आभोगरीत्या 'आत्मान्तरसृष्टावुक्तदोषपरिहाराय' इति पाठः। तत्रापि आत्मान्तरसृष्टौ पूर्वोक्तदोषपरिहाराय अन्तःकरणान्तरमेव सृज्यतामिति एक एवार्थः।

त्वमिति सिद्धान्तं दर्शयितुम्, भोगाधिष्ठानत्वमादौ साधयतीत्याशयेनाह—
P. 1015-1 दारुयन्त्रसमत्वमिति। योगिसृष्टशरीरस्य भोगाधिष्ठानत्वाभावे शरीरत्वं न स्यादित्यत्र, हेतोरप्रयोजकत्वमाशङ्क्य, लोकप्रसिद्धशरीरलक्षणविरोधं प्रसिद्धिविरोधं च विपक्षे बाधकतर्कमाह—यदवच्छिन्न इति।

आत्मनो भोगे शरीरावच्छेदवदन्तःकरणप्राणत्वगिन्द्रियावच्छेदस्याप्यावश्यकतया आत्मनि जायमानभोगावच्छेदकत्वं शरीरलक्षणमन्तःकरणादावतिव्याप्तमित्यत उक्तं—इन्द्रियग्राह्यमिति। शरीरावयवे अतिव्याप्तिवारणार्थमन्त्यावयवीति। शरीरत्वं न स्यादित्यापादने इष्टापत्तिं शङ्कते—तर्हीति। श्रुत्यनुमतत्वान्न योगिसृष्टस्य शरीरत्वमपह्नोतुं शक्यमिति परिहरति—तत्राहेति। ननु 'स त्रिधे'त्यादिश्रुत्या योगिनो बहुभवनमात्रमेवोक्तम्, न तु तत्सृष्टस्य शरीरत्वमित्याशंक्य, टीकातात्पर्यमाह—स एकधा भवतीति।

स इति तच्छब्दनिर्दिष्टस्य योगिन आत्मस्वरूपस्य स्वत एकस्यापि नानात्वमुपाधिभेदनिबन्धनं, उपाधिश्च शरीरमेव, तस्यैवात्मतादात्म्येनाध्यस्तस्य तद्भेदनिबन्धनत्वात्। इन्द्रियादीनामात्मतादात्म्येनाध्यस्तानामपि लोकव्यवहार-
P. 1015-4 विरोधेन तन्नानात्वनिबन्धनत्वासंभवादित्यर्थः। एकान्तःकरणेति। आजानसिद्धान्तःकरणेत्यर्थः। अधिष्ठातृत्वानुपपत्तिरिति। अनादिसिद्धान्तःकरणरहितेषु तेषु योगिनोऽभिव्यक्त्यसंभवादित्यर्थः। पृथग्जनानामाजानसिद्धान्तःकरणरहितेषु अभिव्यक्त्यसंभवेऽपि योगिनो योगप्रभावेन तत्राप्यभिव्यक्तिसंभवान्नाधिष्ठातृत्वानुपपत्तिरिति परिहरति—तत्राहेति।

ननु अन्तःकरणविकासमन्तरेण योगिनोऽपि न सर्वत्राभिव्यक्तिः संभवति। विकासश्चाखण्डाकारवृत्तिरूपो निर्विशेषात्मस्वरूपविद एव। न तु
P. 1015-5 सगुणविद इत्यत आह—सगुणविदात्मनोऽपीति[1]। न वयं अखण्डात्मस्वरूपाभिव्यक्तिं योगिनो ब्रूमः। येनाखण्डाकारा अन्तःकरणवृत्तिरपेक्ष्येत, किन्तु नानादेशवर्तिषु योगिसृष्टशरीरेषु अधिष्ठातृत्वोपयोगितया तत्राभिव्यक्तिमात्रं, तच्च तेषां शरीराणां सेन्द्रियाणां सान्तःकरणानामेव च सृष्टतया न विरुध्यते। पृथग्जनवैषम्येण योगिनो योगप्रभावादाजानसिद्धान्तःकरणव्यतिरिक्तान्तःकरणशालिष्वपि देहेष्वभिव्यक्तिसंभवादित्यर्थः।

---

१. कल्पतरौ 'सगुणविदात्मनः' इति शोध्यम्।

व्याप्तिरिति । नानादेहेष्वभिव्यक्तिरित्यर्थः । अनेन **युक्तं च तद्वि-**P. 1015-5 **भूमाविति** टीका, तत् योगिसृष्टशरीराणां भोगाधिष्ठानत्वनिर्वाह्यं शरीरत्वं, **विभौ** योगवैभवशालिनि सगुणविदि तद्विषये, **युक्तं** योगिनो योगप्रभावेन तत्राभिव्यक्त्या तदधिष्ठातृत्वसंभवात्, इत्येवं व्याख्याता । **श्लोके शरीरत्वं न जातु स्यादि-**त्यस्य प्रथमं निर्दिष्टत्वेऽपि, शरीरत्वं न स्यादित्यापादनस्य शरीरत्वनिर्णयेन विना अयोगात्तदर्थं पाठक्रममनादृत्यार्थक्रमेण **तृतीयपाद**मादौ व्याचष्ट इत्याशयेनाह—**स त्रिधेतीति** ।

**नादेहभूतभेदे**[1] इत्येतद्व्याचष्टे—**अदेहरूपे इति** । देहात्मतानापन्न-भूतविशेषे स्वाधीने अभ्युपगम्यमानेऽपि, योगिनो बहुभवनप्रतिपादिका श्रुतिः नावकल्पते । स्वनिर्मितानि यन्त्राणि चालयतोऽपि यन्त्रवाहस्य नानात्वव्यपदेशा-दर्शनादित्यर्थः । भोगाधिष्ठानत्वमात्रस्य शरीरत्वरूपत्वाभावात् **भोगाधिष्ठानत्वं च शरीरत्वमिति** टीकानुपपत्तिरित्याशङ्क्य, **भोगाधिष्ठानत्वव्याप्तं शरीरत्वमिति** टीकार्थ इत्याशयेनाह—**शरीरत्वेनेति**[2] । टीकायां—**तस्मादिति** । श्रुतिप्रमित-शरीरत्वबलायातभोगाधिष्ठानत्वाद्धेतोः योगी स्वभोगार्थं यानि सृजति तानि देहान्तराण्येवेत्यर्थः । गुरुशरीरत्वेनाप्रयोजकत्वान्न भोगाधिष्ठानत्वं शरीरत्वव्या-पकमित्याशयेन शङ्कते—**नन्विति** । P. 1015-8

अधिष्ठितत्वमात्रस्य शरीरत्वप्रयोजकत्वे दारुयन्त्रेष्वपि शरीरव्यवहारापत्तेः गुरुशरीरमपि भोगाधिष्ठानत्वमेव शरीरत्वप्रयोजकमेष्टव्यमित्यर्थः । भोगाधिष्ठानत्व-पक्षेऽपि अधिष्ठितत्वानपायात् **न चानेनाधिष्ठितानीति** टीकानुपपत्तिः इत्यतो व्याचष्टे—**अधिष्ठित**[3]**मात्राणीति** । **टीकायां—योगिनः** सगुणसाक्षात्कार-विद्यामहिम्ना **विगलितप्रायाविद्यस्य** योगवैभवसंपत्तेः तद्बलादन्यत्रापि व्याप्तिः संभवतीत्युक्तम् । तस्य प्रयोजनं दर्शयन्नाह—**नैजादिति** । फलितमाह—**युगपदित्यर्थ इति** । P. 1015-12

---

१. टीकायां 'नादेहभूतभेदे' इति पाठः ।

२. कल्पतरौ 'शरीरत्वेन यत् प्रमितं भोगाधिष्ठानत्वं तत्' इति वाक्यस्य भोगाधिष्ठानत्वप्रमापकं भोगाधिष्ठानत्वव्याप्तं शरीरत्वमिति अर्थे कथंचित् तात्पर्यं-मङ्गीकार्यम् ।

३. कल्पतरौ ' 'न चानेनाधिष्ठितानीति' इति प्रतीकधारणं शोध्यम् ।

P. 1015.14 **भेदादिति** । उत्पादकदीपात् **भेदा**दित्यर्थः । **प्रदीपस्यैक्य**मित्यत्र **प्रदीपशब्दः प्रवर्तकप्रदीपपर** इति व्याचष्टे—**यस्मादिति** । **टीकाया**-मुपचर्य(त)इत्यनन्तरं, **केषुचित्कोशेषु** तत्तद्भिन्नतैलवर्तिवर्तिनीनामिति **पाठः** । **तस्मिन् पाठे** उपचारे हेतुप्रतिपादकं तद्वाक्यमिति स्पष्टत्वादुपेक्ष्य, **न तत्त-द्भिन्नेति** नञ्स[हित](मास)पाठं व्याचष्टे—**न तत्तद्भिन्नेति** । अनलदाह्यत्वे सति अनलसाधनस्यैवेन्धनतया दाह्यतैल[वर्ति]भागभेदे तद्गतानां दीपव्यक्तीना-मपि भेदावश्यंभावान्नैक्यमित्यर्थः । ऐक्याभावस्यैव भेदतया **भेदादिति** हेतोः साध्याविशेष इत्यत आह—**भेदप्रतीतेरित्यर्थ इति** ।

**स्वकीयेति** । तत्तच्छरीराणां सेन्द्रियाणां समनस्कानामेव च सृष्टत्वा-दिति भावः । **(अत आहेति)[अतो व्याचष्टे इति]** प्रवर्तकमनस्सङ्कल्पानुवर्ति-त्वमेव योगिसृष्टानां मनोऽन्तराणामिति तत्सृष्टशरीराणामपि तथात्वमेवेति भावः । मुक्तस्यैव ब्रह्मसंपत्त्यभिधानात् तस्य नानाशरीरपरिग्रहः, तत्र चानुप्रवेशः, स्वसृष्ट-शरीरेन्द्रियादिभिर्भोगश्चेत्येतत्सर्वं श्रुतिविरोधादयुक्तमित्येवमाक्षेपार्थत्वेन **कथं पुन-रित्यादिभाष्यं** व्याख्यातुं, **संपन्नः केवल इत्यादिटीका** । तत्र, **श्रुतिविरोधा-**
P. 1016-1 **दि**त्यस्य, इत्युक्तमित्यनेनान्वयं वारयन्नाक्षिपतीत्यनेनान्वयमाह—**श्रुतिविरो-धादित्येवमिति** ।

**नपुंसकलिङ्गत्वादिति** । जलवाचकस्य नपुंसकलिङ्गत्वेनैव लोके प्रयो-
P. 1016-2 गादिति भावः । **व्याचष्ट इति** । **सलिलसदृशार्थकत्वेन व्याचष्ट इत्यर्थः** । तत्र शब्दानुपपत्तिं परिहर्तुं **सलिलप्रातिपदिकादित्यादिटीका** । तत्र सलिल-मिवाचरतीति विग्रहे, 'सर्वप्रातिपदिकेभ्य इत्येके' इति वार्तिकेनैव क्विपो वक्तव्यत्वा'दुपमानादाचार' इति क्यच्प्रत्ययविधायकसूत्रोपन्यासोऽयुक्त इत्याशङ्क्य, नायं सूत्रोपन्यासः, किन्तु 'सर्वप्रातिपदिकेभ्य' इति **वार्तिके** निर्दिष्टस्य प्रातिपदिकस्यापि उपमानवाचित्वमावश्यकम् । आचारे चार्थे क्विबिति

---

१. कल्पतरौ 'प्रतिवर्ति भेदात्' इति पाठः । टीकायां 'प्रदीपवदिति तु निदर्शनं प्रदीपैक्यं प्रदीपव्यक्तिषूपचर्य' इति पाठः । कल्पतरावपि उपचर्यते इत्येतत् उपचर्य इति शोधनीयम् । उपचर्य निदर्शनमित्यन्वयः । टीकायां 'परामर्शार्थः' इत्यस्य सर्वभाष्यपरामर्शेन लब्धोऽर्थ इत्यर्थः संपिण्डितार्थ इतिवत् । इति भाति ।

२. कल्पतरौ न तत्तद्भिन्नतैलवर्तिवर्तिनीनां' इति पाठ इति ज्ञायते ।

सूचयितु'मुपमाना'दि'त्याचार' इति पदद्वयमुपात्तमित्याशयेन व्याचष्टे—उपमानवाचिन इति। P. 1016-2

वक्तव्येन वार्तिकेन क्विप्प्रत्यये कृते इति। तेन, सूत्रेण। नन्द्यादिभ्यो ल्युप्रत्ययस्य, ग्रह्यादिभ्यो णिनिप्रत्ययस्य, पचादिभ्योऽच्प्रत्ययस्य च विधानात्, प्रकृते च क्विबन्तस्य सलिलशब्दस्य सनाद्यन्तधातोः पचादित्वादच्प्रत्यय इति भावः। सलिल इति रूपमिति। अच्प्रत्यये परतः सलिलशब्दाकारस्या'तो लोप' इति लोपे, सुबुत्पत्तौ च रूपमिति भावः। मुक्त्यभिधानं त्विति टीकां व्याचष्टे—सगुणविद्याफलेति। P. 1016-4

॥ इति प्रदीपाधिकरणम् ॥

---

## ॥ अथ जगद्व्यापाराधिकरणम् ॥

सू०॥ जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥

सू०॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥१८॥

सू०॥ विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥

सू०॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

सू०॥ भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

सू०॥ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥ २२ ॥

सूत्रभाष्यसूचितामापवादिकीं सङ्गतिं दर्शयन्नाह—मनश्शरीरेति। अत्र जगत्सर्गे उत्सृष्टं उत्सर्गतः प्राप्तं इहाधिकरणे मानवशादपोद्यत इत्यर्थः। यस्य यदधीना शक्तिस्तस्य तेन विना न कथञ्चिदपि शक्तिः। यथा मृत्पिण्डस्य दण्डचक्राद्यधीना घटजननशक्तिर्न तेन विनेति मनसि निधाय शङ्कते—नन्विति। किं यस्य यत्र यदपेक्षा, तस्य सर्वत्रापि तदपेक्षेत्येवं सामान्यव्याप्तिरभिमता? अथवा यस्य यदपेक्षमैश्वर्यं तत्तस्य तदपेक्षया न्यूनमिति विशेषविषयिणी P. 1017-1

---

१. टीकापि एवं शोधनीया।

व्याप्तिरिति विकल्पं मनसि निधाय व्यभिचाराल्न सामान्यव्याप्तिरित्याशयेन परिहरति— **अत आहेति** ।

P. 1017-2 **सिद्ध्युत्पत्तिरिति** । तथा च **श्लोके** अणिमादिवाचकस्य **सिद्धिशब्दस्य** तदुत्पत्तौ लक्षणा इति भावः । **अत्रेति** सर्वनाम्ना भाष्ये ऐश्वर्यशब्दनिर्दिष्टं जगज्जन्मादि परामृश्यते इत्याशयेनाह—**जगज्जन्मादावित्यर्थ इति** । अनेन च **साधक** उपासकः **स्वकर्तव्ये जगज्जन्मादौ निरङ्कुशः** निरपेक्ष इत्येवं **टीका** व्याख्याता । **स्वकार्य इति टीकापदस्थाने स्वभाव** इति पदं दृष्ट्वा व्याचष्टे—**स्वकार्य इति**[1] । न्यायमते घटोत्पत्तेः पूर्वं घटस्यासतः स्वजन्मनिमित्तत्वाभावेन घटो जन्मन्यपेक्षते इत्ययुक्तमित्यत आह—**भट्टवार्तिकमिति** । तथा च सत्कार्यवादित्वात् तस्य, तन्मते मृत्पिण्डादौ सूक्ष्मरूपेण विद्यमानस्य घटादेः स्वकीये स्थूलरूपे अस्ति निमित्तत्वमिति भावः ।

P. 1017-4 द्वितीयमुत्थापयति—**नन्विति** । **कारणानपेक्षमिति** । स्वकारणानपेक्षमित्यर्थः । किमैश्वर्यशब्दस्य स्वातन्त्र्यवाचित्वात् सर्वत्रापि स्वातन्त्र्यमुपजीव्य स्वातन्त्र्यात् न्यूनमित्येवमविशेषेणैश्वर्यमात्रे अयं नियमः ? किं वा लोकप्रसिद्धे नियन्तृत्वादावैश्वर्यविशेषे ? इति विकल्पं मनसि निधाय, प्रथमं दूषयति—**व्यभिचारयतीति**[2] । बुद्धिकौशलेन विद्यायां शिष्यस्य गुरुस्वातन्त्र्यादन्यूनमेव स्वातन्त्र्यं दृश्यत इति व्यभिचार इति भावः ।

P. 1017-5 द्वितीयमुत्थापयति—**नन्विति**[3] । अत्रापि व्यभिचार इत्याह—**इत्याशङ्क्याहेति** । राजाधीनराष्ट्रैकदेशैश्वर्यशालिनः सामन्ताः । ते यदा स्वामिविश्वासं परित्यज्य सामदानाद्युपायकौशलवशीकृतराजामात्यसेनापत्याद्युपेक्षालब्धदेशधनाद्यैश्वर्यशालिनो भवन्ति, तदा राज्ञा सह स्पर्धमानाः तत्समास्तं विजय-

---

१. प्रतीकोऽयं न दृश्यते। टीकायां 'कथं ब्रह्मानधीनम्? स तु स्वभावः' इति शोधनीयम्। 'स तु स्वभावः' इत्येतत् उत्तरवचनम्। तत्र 'स तु' इत्यस्य स्वकार्यजनकत्वमिति कल्पतरौ विवरणम्। एवं च 'स्वकार्य इति टीकापदस्थाने स्वभाव इति पदं दृष्ट्वा व्याचष्टे स्वकार्य इति' इत्याभोगवचनार्थो न समंजस इति भाति।

२. टीकायां 'तद्गतमैश्वर्यं तन्न्यूनम्' इति पाठः।

३. कल्पतरौ 'न तु नियन्तृत्वाद्यैश्वर्य'मिति पाठः।

मानास्तदधिका वा दृश्यन्त इति नियन्तृत्वादावपि स्वातन्त्र्यमुपजीवकस्योपजीव्यात् न्यूनं न भवतीति व्यभिचार इति भावः।

ननु श्रुतिस्मृतीतिहासपुराणेषु परमेश्वरस्य निरतिशयैश्वर्यावगमात् कथमुपासकस्य तदधिकमैश्वर्यमाशङ्क्यत इत्यत आह **टीकायां–तदिहेति** । P. 1017.8
तदित्यव्ययं तस्मादर्थे । **टीकायां तद्व्यापार इति तच्छब्देन** ततोऽधिका इत्यादितच्छब्दनिर्दिष्टः परमेश्वरः परामृश्यत इति बोध्यम् । समप्रधानभावानां मिथोऽपेक्षाभावस्योक्तत्वान्नित्यत्वादित्यादिना विदुषां परमेश्वरतन्त्रतासाधनमसङ्गतमित्याशङ्क्य, नित्यत्वादीनां समप्राधान्यनिराकरणमुखेनैव विदुषां परमेश्वरतन्त्रतासाधकत्वान्न दोष इत्याशयेनाह––**समप्राधान्यं हीति** । P. 1017.6

बहूनां समप्रधानभावाभ्युपगमस्तावन्न्यायविरुद्धः । सोऽप्यभ्युपगम्येत, विशेषनिर्णयकारणाभावे सतीत्यर्थः । प्रकृते तु, परमेश्वरस्यैव स्वातन्त्र्यं, न विदुषामिति विशेषनिर्णये वैलक्षण्यानि बहूनि कारणानि वर्तन्त इत्याशयेनाह––**अस्ति त्वत्रेति** । पूर्वपक्षे विदुषां स्वकार्ये निरङ्कुशत्वस्य साधितत्वादिहापि स्वकार्य इत्यर्थात् लभ्यत इति मनसि निधाय योजयति–**विदुषामिति** । परमेश्वराधीनतैव, न तु समप्राधान्यं, न वा स्वातन्त्र्येण प्रवृत्तिरिति भावः ।

नित्यत्वानित्यत्वकृतं वैलक्षण्यमाह––**परमेश्वरस्येति** । परमेश्वरस्येवेत्यर्थः। ईश्वरस्यैव चात्मन इत्यादाववधारणदर्शनेन प्रकृतेऽपि तदवश्यंभावादिति ध्येयम् । सापेक्षत्वनिरपेक्षत्वकृतं वैलक्षण्यं दर्शयितुम**नपेक्षत्वादिति टीका** । तत्रापि पूर्वनिर्दिष्टं हेतुरित्याशयेनाह––**अत एवेति** । जगत्कर्तृत्वाद्यैश्वर्याविष्ट-P. 1017.8
वेषेणापि परमेश्वरस्य नित्यत्वादेव स्वकारणानपेक्षत्वात्, विदुषां च विद्यामहिमलब्धैश्वर्यतया स्वकारणापेक्षत्वादित्यर्थः । एताभ्यां वैलक्षण्याभ्यां फलितं क्लृप्तसामर्थ्यत्वकल्प्यसामर्थ्यत्वलक्षणं वैलक्षण्यं परमेश्वरस्य विदुषां च साक्षादेव स्वातन्त्र्यपारतन्त्र्यसाधकं दर्शयति––**सापेक्षाणां त्वित्यादिना** ।

श्रुतत्वाश्रुतत्वकृतं, प्रकृतत्वाप्रकृतत्वकृतं, ऐकमत्यलाभालाभकृतं च वैलक्षण्यत्रयं दर्शयितुमवशिष्टं हेतुत्रयमित्याशयेनाह––**ईश्वरस्यैव चेत्यादिना** । **नित्यत्वादित्येतद्व्याचष्ट इति** । विदुषामपि नित्यत्वात् कथं नित्यत्वानित्यत्व- .1017.11

१. टीकायां–'नित्यत्वादनपेक्षत्वात्' इति, 'परमेश्वरतन्त्रता' इति च पाठः ।

कृतं वैलक्षण्यमित्याशङ्क्य, स्वरूपेण नित्यानामपि ऐश्वर्याविष्टेषेणानित्यत्वा-दुपपद्यते वैषम्यमित्याशयेन निराकुर्वन् व्याचष्ट इत्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम्। श्लोके, नैकमत्यादिति नसमास इत्यभिप्रेत्याह—नैकमत्याच्चेत्यस्य

P. 1017-12 व्याख्येति।

ब्रह्मलोकं गतानां साधकानां मध्ये सिसृक्षासञ्जिहीर्षाशालिनोः द्वयोस्सा-धकयोः किमविशेषेणेश्वरत्वं ? किं वा वैषम्येण ? न चरमः। ब्रह्मभावप्रापको-पासनाया अविशेषेण वैषम्ये हेत्वभावादिति मनसि निधाय, द्वितीयं निराकर्तुं इत्यपर्यायेणेत्यादिटीका। तत्र विपक्षे बाधकप्रदर्शनपरत्वेन नवेत्यादि-टीकां व्याचष्टे—सिसृक्षासञ्जिहीर्षयोरिति। यदि सृष्टिसमये संहारो न स्यात्। इदमुपलक्षणम्। संहारसमये वा सृष्टिर्न स्यादित्यपि द्रष्टव्यम्। एवं च सति सिसृक्षासञ्जिहीर्षयोर्द्वयोरपि साधकयोरिच्छाप्रतिहतिरीश्वरत्वव्याघाते हेतुरुपन्यस्तो भवतीति द्रष्टव्यम्।

P. 1018-2 असमत्वात् इति च्छेद इति। ततश्च, साधकानां कारणाधीनैश्वर्यत्वं विशेषो गृहीत इत्यगृह्यमाणविशेषत्वप्रयुक्तस्य समत्वस्याभावान्नित्यैश्वर्य-शालिनः परमेश्वरस्यापि साधकेभ्यो विशेषो गृह्यत इति टीकार्थ इति भावः। गृह्यमाणविशेषतयेति क्वचित्पाठः। स तु सुगम इति ध्येयम्। टीकायां 'आप्नोति स्वाराज्यं' इत्यादिप्रत्यक्षोपदेशस्य अणिमाद्यैश्वर्यमात्रविषय-त्वेन सङ्कोचे हेतुरुपन्यस्त उक्तन्यायादिति। तत्र न्यायशब्दो 'नित्यत्वा-दनपेक्षत्वात्' इत्यादिश्लोकोक्तन्यायकलापपर इत्याशयेनाह—नित्यत्वादित्या-देरित्यर्थ इति।

भाष्ये परमेश्वरस्य कल्पिताकल्पितरूपद्वयप्रतिपादकत्वेन पठितस्य मन्त्रस्य विविच्य तत्प्रतिपादकत्वप्रदर्शनार्थमेतावानस्येत्यादिटीका। तत्र

P. 1018-3 कठिनभागं व्याचष्टे—एतावानित्यादिना। विभूतिरिति। स्वपरिगृहीत-

---

१. टीकायां कल्पतरौ च नैकमत्यादिति पाठ इत्यनेनावगम्यते।

२. टीकायां 'नवोभयोरपीश्वरत्वव्याघातात्' इति पाठः। कल्पतरौ 'उभयोः स्रष्टृसंहर्त्रोरीश्वरत्वविघातादित्यर्थः' इति शोध्यम्।

३. टीकायां 'नित्यैश्वर्यशालिनः गृह्यते तेभ्यो विशेष इति स एव' इति पाठः। 'गृह्यमाणविशेषतया' इति क्वचित् पाठे नास्तीति आभोगात् ज्ञायते।

नानाकार्योपयोगी रूपभेद इत्यर्थः । सगुणब्रह्मोपासकैर्वस्तुगत्या निर्गुणं यद्रूपं तदपि प्राप्यत एवेति, कथं भाष्यटीके इत्याशङ्क्य धर्ममात्रपरे भाष्य-टीके इत्याशयेनाह—विकारावर्तित्वमिति । निर्विकारं रूपमिति क्वचि- P. 1018-5 त्पाठः । तत्रापि विकाराभावात्मकं रूपमित्यर्थः ।

अत्र केषुचित्कोशेषु तत्प्रपञ्चयतीत्यादिरधिको ग्रन्थो दृश्यते । स तु टीकाननुगुणत्वात् प्रामादिक इति ध्येयम् । अत्र टीकायां सगुणब्रह्मोपास-केन गुणगतं निरवग्रहत्वमपि प्राप्यतामिति वदतः कोऽभिप्रायः ? अनुपास्यमपि तत्प्राप्यतामिति ? किं वा उपास्यं सत् प्राप्यतामिति ? नाद्यः । 'तं यथा यथो-पासते तथैव भवति' 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य-भवती'त्यादिशास्त्रबलादुपास्यस्यैव प्राप्यत्वावगमादित्याशयेन प्रथमं कल्पं अत-त्क्रतुत्वादुपासकस्येत्यन्तया टीकया निराकृत्य, द्वितीयं निराकर्तुं अतत्क्रतुत्वं[3] P. 1019-1 चेत्यादिटीका ।

तत्रापि किं निरवग्रहत्वस्य वैधमुपासनम् ? अथ वा पुरुषबुद्ध्यधीनमिति विकल्प्य, प्रथमं निराकर्तुं [निरवग्रहत्वस्य] उपासनविधानागोचरत्वात् इति टीका । तत्र किं निरवग्रहत्वस्य कण्ठत एवोपासनविधानं ? आहो अर्थादिति विकल्प्य, क्रमेण निराकुर्वन् तात्पर्यमाह—न हि निरवग्रहेति । सा हीति । सत्यकामत्वादिगुणविधेरप्राप्तसत्यकामत्वादिगुणप्रापणेन चरितार्थत्वात्, साव-ग्रहत्वनिरवग्रहत्वसाधारण्येन प्रवृत्तस्यापि स्वारसिकत्वमात्रपुरस्कारेण न निरव-ग्रहत्वप्रापकत्वम्, तदकल्पनेऽपि विधेरनुपपत्त्यभावादिति भावः ।

द्वितीयं निराकरोति टीकायां—विध्यधीनत्वाच्चेति । उपासनानां P. 1019-2 विध्येकसमधिगम्यतया तदधीनत्वाद्धेतोः तत्र पुरुषस्वातन्त्र्याभावान्न विधिचोदि-

---

१. कल्पतरौ 'स्थितमपि विकारावर्तित्वं न प्राप्यते' इति पाठः ।

२. तत् प्रपञ्चयतीत्यादिः कल्पतरुग्रन्थः टीकानुगुण एव । टीकायां हि 'अत-त्क्रतुत्वादुपासकस्य' इत्यतः परं 'तत्त्वोपासनासु हि पुरुषक्रतुत्वम् । तथा तद्गुणोपास-नया वस्तुतः स्थितमपि निरवग्रहत्वं नाप्यते । उपासकस्य तदक्रतुत्वं च' इति टीका-ग्रन्थानुपूर्वी । मुद्रितग्रन्थे आनुपूर्विभेदोऽपि इत्थमेव शोध्यः । परिमलेऽपि टीका-वाक्यव्याख्यानरूपमिदं कल्पतरुवाक्यमित्युक्तम् । अतः आभोगोक्तिरेव प्रामादिकी । इति बोध्यम् ।

३. टीकायां 'तदक्रतुत्वं' इति दृश्यते ।

तोपास्यन्यतिरेकेण लेशमात्रेणाप्यधिकमुपास्यम् । प्रक्षेप्तुमशक्यमिति भावः। विपक्षे दण्डमाह **टीकायां—स्वातन्त्र्ये वेति।** अविहितोपासनातः पारलौकिकफलाभावा-दहोरात्रं तत्रैव व्यग्रतया ऐहिकफलादपि प्रच्युतेः प्रतिहतिरिति भावः ।

P. 10.9-3 **सौत्रचशब्दं** व्याचष्टे **टीकायां—न केवलमिति।** भाष्यटीक-योरिहेश्वरशब्दो हिरण्यगर्भपरः। आप्तकामस्य परमेश्वरस्य भोगासंभवेन तस्यैव भोगसंभवात्। तथा च **पत्युरसामञ्जस्यादिति सूत्रभाष्यं—स्वार्थवत्त्वादीश्वरस्यानीश्वरत्वप्रसङ्गादिति ।** **करणवच्चेदिति सूत्रे च भाष्यं—करणग्रामसाम्ये चाभ्युपगम्यमाने संसारिणामिव ईश्वरस्यापि भोगादयः प्रसज्येरन्निति।** तस्मिन्नेव सूत्रे पूर्वोत्तरव्याख्यानयोः भाष्यगतयोः भेदप्रदर्शनार्थं **टीकापि—भोगादिप्रसङ्गेनानीश्वरत्वं पूर्वमापादितम्। संप्रति तु शरीरित्वेन भोगादिप्रसङ्गादनीश्वरत्वमुक्तमिति विशेष इति।** भोगमात्रस्यादृष्टजन्यत्वनियमेन तद्रहितपरमेश्वरस्य भोगायोगाच्च। हिरण्यगर्भस्य तु कर्मोपासनातिशयजन्यैश्वर्यतया नित्यसिद्धैश्वर्यत्वाभावेन कर्मोपासनाजन्या-दृष्टनिमित्तकभोगोपपत्तिः ।

**टीकायां** 'तमाहापो वै खलु मीयन्ते लोकोऽसा'विति श्रुतिरप्छब्दोप-लक्षितानि भूतानि किल त्वया उपास्यन्ते [लोकशब्दोपलक्षित] हिरण्य-गर्भबुद्ध्या, अतस्तत्रापि हिरण्यगर्भस्यैव भूतकृतो भोग इत्येवं व्याख्याता। अस्मिन् पक्षे अस्यां श्रुतौ हिरण्यगर्भभोगाप्रतिपादनात्, **भोगमात्रमेव एषा-मनादिसिद्धेनेश्वरेण समानमिति श्रूयत इति** भाष्यासामञ्जस्यमित्यतो P. 1020-1 भङ्ग्यन्तरेण श्रुतिं व्याचष्टे—**तं ब्रह्मलोकगतमित्यादिना।** स्वकीयभोग्य-कीर्तनसामर्थ्यलब्धमर्थमाह—**तवापीति।**

अस्मिन्नेवार्थे श्रुत्यन्तरमुदाहृतं **भाष्ये—यथैतामिति।** तत्र, यथा एतां हिरण्यगर्भरूपां देवतां सर्वाणि भूतान्यवन्ति, एवं हैवंविदं सर्वाणि भूतान्य-P. 1019.4 वन्तीति श्रुत्यर्थं सिद्धवत्कृत्य, अवनं रक्षणं भोजनरूपमित्याह **टीकायां—भोजय-**

---

१. 'अनादिसिद्धेनेश्वरेण' इति भाष्यं कथमुपपद्यत इत्यालोचनीयम्।

२. टीकायां एवं व्याख्यानग्रन्थभागः न दृश्यते। परिमलेऽपि टीकायामेवं व्याख्यातमित्युक्तम्। भोगमात्रसाम्यलिङ्गाच्चेति सूत्रभाष्यविवरणपरभामत्यां स ग्रन्थ-स्त्रुटित इति ज्ञायते।

P. 1019 9 मित्याह **टीकायाम्—उत्तरत्र त्विति।** **टीकायां—तद्विधानामिति।** क्रम-मुक्तिफलकदहराद्युपासनासमासादितहिरण्यगर्भैश्वर्यशालिनामित्यर्थः।

अधिकारिपुरुषतया तपोमहिम्ना वा ये सत्यलोकं प्राप्ता रेवतप्रभृतयः, ये चाश्वमेधादिना मेरुशिखरादिरूपं ब्रह्मलोकं प्राप्ताः, तेषामप्यपुनरावृत्तिरिति भ्रमं व्यावर्तयितुं **भाष्ये नाडीरश्मिसमन्वितेनेत्यादिना मार्गो ब्रह्मलोकश्च** विशेषितः। तत्र **नाडी** सुषुम्नाख्या। **रश्मयो** 'रश्म्यनुसारी'ति सूत्रोक्ताः। **तत्समन्वितेन** 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेती'ति, 'अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभि-रूर्ध्व आक्रमते' इति च देवयानस्य पथो नाडीरश्मिसम्बन्धश्रुतेः।

P 1019-14 **शास्त्रोक्तविशेषणत्वमेव** दर्शयति **भाष्ये—यस्मिन्नित्यादिना।** **अर इति ण्य इति च द्वावर्णवौ** भोगानुगुणावितस्तृतीयस्यां **दिवि यो** ब्रह्म-लोकस्तत्र वर्तेते इत्यर्थः। **यस्मिन् ऐरं** इरा अन्नं तन्मयम्। **मदीयं** मदकरं च **सरः। यस्मिन् अश्वत्थस्सोमसवनः** अमृतस्यन्दी। **यस्मिन्नपराजिता** कर्मोपासनाशून्यैः दुष्प्रापा **पूः। यस्मिंश्च प्रभुविमितं** प्रभोर्हिरण्यगर्भस्यानु-गुणम्। एवंरूपब्रह्मलोके प्रमाणं दर्शयति **भाष्ये—यश्चानेकधेति।** तं ब्रह्म-लोकं ते उपासकाः **प्राप्य भुक्तभोगास्सन्तः चन्द्रलोकादिव नावर्तन्त** इत्येवं **भाष्यस्य** स्पष्टार्थकत्वात् **टीकाकारेण** न व्याख्यातम्।

P 1020-1 द्वितीयं दूषयितुमन्तवत्त्वेऽपि **त्वैश्वर्यस्येति भाष्यम्।** तस्य नश्वरैश्वर्य-योगित्वस्य पुनरावृत्तिरहिते हिरण्यगर्भेऽपि सत्त्वेन व्यभिचारित्वात्,

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥' इति।

कर्मोपासनातिशयेन हिरण्यगर्भलोकप्राप्तानां तत्रैव कल्पपर्यन्तं भुक्तभोगानां ब्रह्मा-नुग्रहसमासादितनिष्कलङ्कतत्त्वसाक्षात्काराणां ब्रह्मणा सह मुक्तिप्रतिपादकागम-बाधितत्वाच्च न पुनरावृत्तिसाधकत्वमित्येवं स्पष्टार्थकत्वादेव तदपि **भाष्यं टीका-कारेण** न व्याख्यातम्।

प्रथमकल्पे द्वितीयं कल्पं निराकर्तुं **सम्यग्दर्शनेति भाष्यमित्याशये-**
P 1020-1 नावतारयति **टीकायां—तत्त्वमसिवाक्यार्थेति।** **तमश्शब्देन** लयलक्षण-

मूलाविद्या भ्रमरूपा चाविद्योच्यत इत्याह **टीकायां—द्विविधेति**[1] । ततश्च P 1020.1 सम्यग्दर्शनसमासादितावरणनिवृत्तिमात्राभिव्यक्तस्वरूपावस्थानलक्षणस्य निर्वाणस्य मोक्षस्य कार्यत्वाभावेन नित्यत्वसिद्धौ तदनुरोधेन मुक्तानां पुनरावृत्तिशंका दूरोत्सारितेत्याशयेनाह **टीकायां—न चैतदिति** । अविद्याद्युपाधिप्रयुक्तरूपान्तरप्रहाणेन सच्चिदानन्दाखण्डब्रह्मात्मना स्वरूपेणावस्थानलक्षणमित्यर्थः ।

सगुणब्रह्मोपासकानामपि ब्रह्मलोकं प्राप्तानां तत्रोत्पन्नसम्यग्दर्शनमहिम्ना चेदपुनरावृत्तिः, किमु वक्तव्यं निर्गुणब्रह्मोपासकानामित्याशयेनाह **भाष्ये—तदाश्रयणे-** P. 1020.4 **नैवेति** । अत्र सगुणोपासकानामेवानावृत्त्या मुक्तिस्वरूपं प्रतिपाद्यते । न निर्गुणब्रह्मोपासकानां, तेषां 'संपद्याविर्भावस्स्वेन शब्दात्' इत्यारभ्य 'संकल्पादेव तु तच्छ्रुते'रित्यतः प्राक्तनैः सूत्रैः स्वरूपावस्थानलक्षणस्य मुक्तिस्वरूपस्य प्रतिपादिततया 'ब्रह्म वेद ब्रह्मैव भवति' 'न तस्य प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते' 'ब्रह्मैव सन् ब्रह्माप्येति' इत्यादिश्रुतिशतानुरोधात् इहैव स्वरूपं प्राप्तानां गमनप्रसक्त्यभावेन पुनरावृत्तिगमनानुदयात् ।

न च ब्रह्मभावलक्षणस्यैव मोक्षस्य परमपुरुषार्थतया स एव शास्त्रान्ते **सूत्रकारेण** किमिति न प्रतिपाद्यत इति वाच्यम् । अनावृत्तिप्रतिपादनमुखेन ब्रह्मलोक एव सम्यग्दर्शनेन ब्रह्मभावापत्तिरिति परमपुरुषार्थ एव सूत्रतात्पर्यपर्यवसानात् । पूर्वमेव तस्य बहुधा प्रतिपादितत्वेन तत्र वक्तव्याभावेन सगुणमुक्तिविषये बहुवक्तव्यसद्भावेन च 'कृत्स्नभावात्तु गृहिणोपसंहार' इति न्यायेन तस्य प्रतिपादने विरोधाभावाच्च ।

अध्यायसमाप्तिस्थले सर्वत्र पदाभ्यासस्य दर्शनादिह कृत्स्नसूत्राभ्यासे को विशेष इत्यत आह **भाष्ये—अनावृत्तिः शब्दादनावृत्तिश्शब्दादिति** P 1020.4 **सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयतीति** । परमपुरुषार्थोपयोगिनां समन्वयाविरोधसाधनफलानां चतुर्णामपि साकल्येन निरूपितत्वेन वक्तव्यशेषाभावादिति भावः ।

ननु परमपुरुषार्थप्राप्त्युपायतया श्रोतृत्साहजनकत्वं कृत्यन्तराणामपि कुतो न भवेदित्यत आह—**गलितकलङ्कतां चेति** । दुर्वादिदैत्यापादितदोषनिरासेन P. 1020.4

---

१. कल्पतरावपि 'द्विधा कार्यकारणरूपा' इति टीकाव्याख्यानं अन्ते मुद्रापणीयं प्रमादात् पूर्वं मुद्रापितमिति ज्ञेयम् ।

119

निष्कलङ्कब्रह्मस्वरूपप्रतिपादकत्वात् कृतिरियं निष्कलङ्का, कृत्यन्तराणि तु नैवमिति भावः। भङ्क्त्वेत्यनेन सूचितानि साधनानि दर्शयति—युक्तीति। युक्तय एव निशितास्तीक्ष्णाः प्रतिवादिप्रवर्तितप्रतियुक्तिरहिताः खड्गधाराः ताभिरित्यर्थः। ताश्च वाचस्पतिना स्वबुद्ध्या निर्मिताः, तन्मतानुसारिभिः प्रयुक्ताश्च बोध्याः।

P. 1020-5

प्रसिद्धदैत्यानामपि वाचस्पतिना बृहस्पतिना स्वबुद्ध्या निर्मिताभिः आत्म[वश्य]तामापादिताभिः, तन्मतानुसारिभिर्देवैः प्रयुक्ताभिरेव खड्गधारादिभिर्भङ्गादिति ध्येयम्। नयरूपं मन्थानमेव दर्शयति—श्रुतिलिङ्गादीति[1]।

P. 1020-6 अमृतप्राप्तिकथनबललब्धमर्थं दर्शयति—दुग्धपयोनिधेरिति। पयोनिधिशब्दः समुद्रे रूढः। क्षीरसमुद्रादित्यर्थः। अखिला अविद्या कार्यकारणरूपा तदुपधानातिवर्तीत्यर्थः। अर्थलब्धान् प्राप्तिक्रियाकर्तॄनाह—श्रोतृभिरिति। गौरवादपीति। माहात्म्यादपीत्यर्थः। सादरमिति विशेषणलब्धमर्थं दर्शयति—

P. 1020-7 तात्पर्येणेति। अत्र श्लोके—

'चतुर्भिस्सह शिष्यैस्तु शङ्करोऽवतरिष्यति।'
'शङ्करः सविता न ना' इत्यादीनि पुराणवचनानि,
'शङ्करः शङ्करस्साक्षाद्व्यासो नारायणः स्वयम्॥

इत्यादीन्यभियुक्तवचनानि, जननमारभ्य पञ्चमेऽब्दे, नद्याकर्षणादीनि, अष्टमे मकरग्रासधिक्कारेण संन्यासपूर्वकं मुहूर्तमात्रेण त्रिशतीयोजनस्थितबदरिकाश्रमगमनम्, तत्र च वत्सरत्रयमात्रेण चतुष्षष्टिकलाभ्यासः, षोडशवत्सरमध्ये भाष्यादिग्रन्थकरणम्, वेदव्यासेन सह विवादः, वैकुण्ठकैलासादिप्रदर्शनेन मातुस्सान्तानिकलोकप्रापणम्, हिमवत्पर्वतशिखरे हनूमद्दर्शनम्, तत्रैव च वादेनादिबुद्धविजयः, लीलामात्रेण प्रपञ्चसारनिदानसप्तशतीजयमङ्गलादिग्रन्थकरणम्, दिग्विजयः, सकृच्छ्रवणमात्रेण यथानुपूर्वि पञ्चपादिकाया उच्चारणम्, लक्ष्मीनृसिंहसाक्षात्कारः, तत्स्तुतिरित्येवमादीनि अमानुषाणि भगवत्पादानां[2] चरित्राणि।

---

१. श्रुतिलिङ्गादिन्यायरूपः मन्थाः इति पाठः।

२. भगवत्पादा इति शङ्करभगवत्पादानामसाधारणं नाम। 'भगवत्पादाभिधां बिभ्रते' इत्यानन्दगिरिः।

वाचस्पतेरपि दिग्विजयः, चत्वारिंशता दिवसैः श्रीमच्छारीरकमीमांसाभाष्ये व्याख्यानम्, अचुम्बितप्रक्रियापरिकल्पनेन लीलामात्रेणैव नानाशास्त्रेषु ग्रन्थकरणम्, स्वाच्छन्द्येन परलोकगमनम्, इत्येवमादीनि मनुष्यमात्रेण सता मनसाप्यालोचयितुमशक्यानि चरित्राण्यशृण्वतां, शृण्वतामपि वा जन्मान्तरीयपापातिशयवशेन निर्भाग्यतया तत्र विश्वासरहितानां च, दुर्बुद्धिं अपाकर्तुं स्वार्थेषु को मत्सर इत्युक्तमित्याशयेनावतारयति—मामै[चै]वं मन्यध्वमिति। P. 1021-1 कृष्णरामाद्यवतारेषु तदानीन्तनाः केचिद्दैवहता इव, शङ्करभगवत्पादवाचस्पती अपि मनुष्यौ विद्वांसाविति यूयं मा मन्यध्वम्। एकस्य परमेश्वरत्वात्, अन्यस्य तद्विभूतित्वादिति भावः।

यदि वा दैवोपहत्या मनुष्यावित्येव भ्रान्तिः, तदानीमपि ज्ञानातिशयसंपन्नयोः तयोर्ग्रन्थाववश्यं स्वाभिलषितपरमपुरुषार्थलाभाय सम्यगभ्यसनीयौ, स्वप्रयोजनसाधनेषु मात्सर्यस्यायुक्तत्वात्। न हि कावेरीकृष्णागोदावरीगङ्गादिषु मात्सर्येण तत्र स्नानादिकमकुर्वाणा भवन्ति प्रेक्षावन्त इत्याशयेनाह—विशुद्धेति। P. 1021-2 विशुद्धेन[1] संप्रदायेन विमले धियौ। ते अपि तावद्युष्माकं दुर्लभे, तदुपरि सकलशास्त्रार्थक्रोडीकारेण तदुपयुक्तनानार्थसंकलनात्मकप्रकारविशेषोपेते तु ते धियौ कुत इत्यर्थः।

श्लोके शास्त्रार्थसङ्कलनं प्रकटयति—अत्र भङ्क्त्वेत्यादीति। भङ्क्त्वे- P. 1021-3 त्यादिपद्द्वयमविरोधाध्यायस्य सङ्क्षेपः। सङ्ग्रहेण तदर्थप्रतिपादकमित्यर्थः। अविद्योपधानातिगमित्यर्थसूचितार्थमादाय साधनाध्यायसङ्क्षेपत्वमुक्त्वा, वाच्यार्थमादाय फलाध्यायसङ्क्षेपत्वमाह—अविद्यानिवृत्त्या[2] चेति। न केवलं श्रवणोपयोगितयैवास्य सन्दर्भस्य परिभाव्यता। अपि तु मननोपयोगितयापीत्याशयेनाह—न केवलमिति। स्थिरीचक्र इति। कर्मणि लिट्, स्थिरीकृत इत्यर्थः। तन्निर्माणजनितेति। P. 1021-7

---

१. विशुद्धसंप्रदायश्च विमलधीश्च श्रीभगवत्पादवाचस्पतिमिश्रयोः इतरदुर्लभे इति तु वास्तवोऽर्थः इति बोध्यम्।

२. कल्पतरौ 'अविद्यानिवृत्तिवर्णनेन' इति। 'तद्धेतुविद्यासूचनात्' इति च पाठः।

३. कल्पतरौ 'अविद्यानिवृत्त्या च तुर्यस्य इति पाठस्सूच्यते।

दिने दिने च वेदान्तश्रवणाद् भक्तिसंयुतात् ।
गुरुशुश्रूषया लब्धात् कृच्छ्राशीतिफलं भवेत् ॥
यस्तु व्याकुरुते वाचं यस्तु मीमांसतेऽध्वरम् ।
तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ ॥'

इत्यादिशास्त्रात्, ग्रन्थमुखेन सर्वेषामपि पुरुषार्थनिदानविद्योपदेशात्, विद्यादाने च—

'प्रबोधयति धीयुक्ते शास्त्रज्ञे वेदवादिनि ।
विन्यसेत्तु शुभं शास्त्रं महापुण्यजिगीषया ॥
विद्यादानात्परं दानं त्रैलोक्येऽपि न विद्यते ।
येन दत्तेन चाप्नोति शिवं परमकारणम् ॥
वेदविद्यां नरो दत्वा स्वर्गे कल्पत्रयं वसेत् ।
आत्मविद्यां तु यो दद्यात्तस्य संख्या न शक्यते ॥
पुण्यस्य गदितुं सम्यगपि वर्षशतायुतैः ।
एतावच्छक्यते वक्तुं यत्कल्पायुतमुत्तमम् ॥
सत्यलोके वसेन्मर्त्यो यत्र ब्रह्मा वसेत्प्रभुः ।
तर्कविद्यां नरो दद्याद्वारुणं लोकमाप्नुयात् ।
मीमांसाया नरो दत्वा शास्त्रमिन्द्रपुरे वसेत् ॥

किं बहुना—

ययैको जीवति प्राणी कयापि किल कुत्रचित् ।
अप्रधानापि सा विद्या कुलानां शतमुद्धरेत् ॥
श्लोकं प्रहेलिकां गाथां कथां यद्वा सुभाषितम् ।
दत्वा प्रीतिकरं याति लोकमप्सरसां शुभम् ॥

इत्यादिवचनैर्महापुण्यश्रवणादिति भावः ।

फलस्य परमेश्वरे समर्पणे हेतुं तत्रेच्छाभावं सहेतुकं दर्शयति—स्वस्येति । न च स्वस्य कृतकृत्यत्वे परमेश्वरे समर्पणस्य वा किं प्रयोजनमिति वाच्यम् । पूर्ववासनानुरोधेन तथाकरणसंभवात् । 'सुहृदः साधुकृत्या'मित्यादि-

शास्त्रानुरोधेन स्वग्रन्थेषु विश्वासेन परिशीलनं ये कुर्वन्ति, तेभ्यः परमेश्वर एव तत्फलं शतगुणं दास्यतीति मनीषया तत्र समर्पणसंभवाच्च। सांख्यनिबन्धनं कालिदासकृतार्यासप्ततिव्याख्या। तस्यास्तत्त्वकौमुदी इति नाम। P. 1021-9 पातञ्जलभाष्यटीकेति। पातञ्जलस्य योगशास्त्रस्य यद्भाष्यं वेदव्यासकृतं तस्य टीका तत्त्वशारदी नामेत्यर्थः।

इयमेव भामतीति। शारीरकमीमांसाभाष्यव्याख्यानेन सर्वासां अप्युपनिषदां व्याख्यानादिति भावः। उपहारेणेति। 'यमेवैष वृणुते तेन लभ्य' P. 1021-12 इति शास्त्रानुसारेण परमेश्वरानुग्रहमहिम्नैव तत्त्वज्ञानोदयेन, तस्य गुरुतया, कृतकृत्येनापि—

'यावदायुस्त्रयो वन्द्या वेदान्तो गुरुरीश्वरः॥'

इति शास्त्रमनुसृत्य गुरुदेवतापूजाया अवश्यकर्तव्यतया, परमेश्वरस्य उपहारसमर्पणेन पूजनं युक्तमिति भावः।

'तस्माद्राजन्यो ब्राह्मणवानत्यन्यं राजन्यम्' इति श्रुत्या समीचीनं ब्राह्मणं सङ्गृह्णानस्य राज्ञः सर्वातिशायित्वश्रवणात् सर्वोत्कृष्टं श्रीमदाचार्यवाचस्पतिं तदभिलषितप्रदानेन बहुमन्यमानस्य श्रीमतो नृगस्य कैमुतिकन्यायेन सर्वातिशायितया तत्स्फोरणार्थमाचन्द्रतारकं कीर्तिस्थापनाय तन्महिमप्रकटनार्थं टीकायां नृपान्तराणामित्यादिश्लोकः। तत्र भ्रूक्षेपशब्दो लीलापरः। लीलामात्रेण P. 1020-14 कथमेतादृशकीर्तिसंपादकत्वं तस्येत्याशङ्कायामनितरसाधारण्येन दातृत्वाच्छूरत्वाच्चेति वक्तुं टीकायां—कार्तस्वरासारेत्युत्तरार्धम्। तत्रार्थिसार्थेति पाठं कार्तस्वरासारेण सुपूरितः अर्थिनां सार्थो यस्येत्येवं स्पष्टत्वादुपेक्ष्य, स्वदृष्टमर्थसार्थेति पाठं व्याचष्टे—कार्तस्वरमित्यादिना। अर्थ्यत इत्यर्थ इति व्युत्पत्तिमाश्रित्याह—काङ्क्षित इति। जनसमूहस्येति। 'सङ्घसार्थौ तु जन्तुभिः' इत्यमरकोशादिति भावः। यस्येति षष्ठ्यर्थसम्बन्धश्च अनुग्राह्यानुग्राहकभाव इत्याशयेन आह—स्वीयत्वेनेति। अपर इति। बहुव्रीहिरित्यर्थः। P.1021-14

---

१. ईश्वरकृष्णकृता सांख्यसप्तशतीति प्रसिद्धिः। कालिदासस्यैव ईश्वरकृष्ण इत्यपि नाम इति अनेन ज्ञायते।

२. कल्पतरौ 'प्रकृतत्वेन' इति दृश्यते। 'स्वीयत्वेन' इति शोधनीयम्।

